THE

# CHOWKHAMBÂ SANSKṚIT SERIES;

A COLLECTION OF RARE & EXTRAORDINARY SANSKRIT WORKS.

No's, 281, 282, 288, 295, 302, 308, 318, 323, 332, & 336.

THE

# NYAYA-DARSHANA

The Sūtras of Gautama
And
Bhāsya of Vātsyāyana
WITH TWO COMMENTARIES
(1) The Khadyota-by
Mahāmahopādhyāya Gangānātha Jha, M. A., D. LITT.
Vidyasagara
And
(2) The Bhāsyachandra-by
Raghūttama-up to Adhyāya iii, Ahnīka ii, Sūtra 17 only.
WITH NOTES BY
Pandit Ambadās Shastri
EDITED BY
Mahāmahopādhyāya Gangānatha Jha, M. A., D. LITT.
And
Pandit Dhundhirāja Shastri Nyāyopādhyāya.
FASCICULUS 1 to 10.

*PUBLISHED & SOLD BY THE SECRETARY,*
CHOWKHAMBÂ SANSKRIT SERIES OFFICE, BENARES.
AGENTS: PANDITA JYESHTHÂRAMA MUKUNDAJI. BOMBAY:
OTTO HARRASSOWITZ, LEIPZIG: GERMANY.
*Printed by Jai Krishna Das Gupta,*
*at the Vidya Vilas Press, Benares.*

1925.

चौखम्बासंस्कृतसीरीज ।
नम्बर्स २८१-२८२-२८८-२९५-३०२-३०८-
३१८-३२३-३३२-३३६ ।

# न्यायदर्शने

## वात्स्यायनभाष्यम् ।

महामहोपाध्याय. विद्यासागर. डाक्टर. एम. ए. इत्याद्युपाधि-
समलङ्कृतेन गङ्गानाथझाशर्मणा प्रणीतेन खद्योतेन

नैयायिकचूडामणिरघूत्तमविरचितेन तृतीयाध्यायद्वितीया-
ह्निकस्थसप्तदशसूत्रान्तेन भाष्यचन्द्रेण च समन्वितम् ।

हिन्दूविश्वविद्यालयदर्शनाध्यापकश्रीमदम्बादासशास्त्रिणा
कृतया भाष्यचन्द्रानुगामिन्या टिप्पण्या च स मेतम् ।

म. म. गङ्गानाथझाशर्मणा न्यायोपाध्याय पं. ढुण्ढि-
राजशास्त्रिणा च संशोधितम् ।

चौखम्बा संस्कृत सीरीज—काशी संस्कृत सीरीजाद्यनेकपुस्तकमाला
प्रकाशकेन श्रेष्ठिजयकृष्णदासगुप्तमहाशयेन स्वकीये
'विद्याविलास' यन्त्रालये मुद्रितम् ।

१९२५





हमारे यहां हर तरह की छपाई तथा जिल्दसाजी का कार्य भी होता है।

हर तरह के संस्कृत ग्रन्थ तथा भाषा भाष्य पुस्तकों के मिलने का पता—

# जयकृष्णदास-हरिदासगुप्तः

चौखम्बासंस्कृतसीरीज आफिस,

विद्याविलास प्रेस, गोपालमंदीरलेन,

बनारस सिटी।



# PREFACE

This edition of the Nyāya Sūtra and Bhāsya is based upon the following manuscripts, in addition to the four used for the edition in the 'Viziānagaram Sanskrit Series':—

(1). *Palml-eaf* manuscript–Sutra and Bhāsya–*Maithili* Character from begining to 3. 2. 42–good & correct obtained from the Shankarāchārya-matha at Puri Styled A.

(2). *Palm-leaf* manuscript–Sūtra and Bhāsya–Maithili–character from 1. 2. 4 to end–correct–obtained from the same Maṭha–Styled B.

(3). *Palm-leaf*-manuscript–Bhāsya, Adhyāya v only; very accurate; obtained from Pandit Maṇishvara Jha of Lalganj, in the district of Darbhanga; Styled C.

(4). *Palm-leaf* manuscript–Bhāsya; Adhyāya v only, correct-dated लसं 479–obtained from the same source as C–styled D.

(5). Paper–manuscript-Sūtra only–obtained from Pandit Jagadisha Mishra Nyāyopādhyāya, of Lalganj in the district of Darbhanga–Styled 'Sūtra E'

(6). Paper-manuscript-Sūtra only–obtained from the collection of Babu Govinda Dasa of Benares–Styled 'Sūtra D'

Difficulties have been felt in the past in fixing the text of the Sūtra and the Bhāsya. As regards the Sūtra, dfficulties began to be felt as early as the time of Udyanāchārya, who, in his *Parisūddhi* often speaks

of the Bhāsya setting aside all doubts regarding a certain text being a 'Sūtra'–सूत्रभ्रमं निवारयति; such remarks are found under Sūtra 2. 2. 16–17 & 3. 1. 1. and in several other places. In this edition we have been guided mainly by the Sūtra-text as fixed by Vāchaspati Mishra in his *Nyāyasūchīnibandha*; except in a few places where we felt constrained to deviate from it on the clear authority of either the *Bhāsya* or the *Vārtika*.

As regards the structure of the Bhāsya, the difficulties that have been felt in the past are mainly those of the Editors' own creation; The chief difficulty that has been felt has centred round the notion that the Bhāsya abounds in repetitions, it has been held that in all these cases the writer has quoted ( most likely from an earlier *Bhāsya* on *Vritti* ) and then added his own gloss on the passage quoted. Those who have laid stress on this view have apparently lost sight of the difinition of Bhāsya: A *Bhāsya* has been defined as सूत्रार्थों वर्ण्यते येन पदैः सूत्रानुसारिभिः स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः Here we find that the explanation of its own assertions is one of the functions of the 'Bhāsya'. Those passages therefore that have been regarded as quotations from earlier writers are only the assertions of the *Bhāsya-kāra* himself couched in aphoristic style and these assertions have been expounded in detail in the following passages. This practice was very common among our older writers. We find several such instances in the *Nyāyavārtika* itself,–to say nothing of the Mahabhasya of Pātanjali.

The University
*Allahabad*
Dec. 9. 1924.

GANGANATHA JHA.




# भूमिका

—:०:—

समुपलभ्यमानेष्वेव कतिपयेषु न्यायभाष्यपुस्तकेष्वन्यस्य संस्करणस्य किम्प्रयोजनमिति शङ्कास्थानं सम्भवति विदुषाम्॥ न्यायभाष्यस्य दुरूहतया तत्राक्षरशो व्याख्यानमपेक्षितमिति सुप्रसिद्धमेव न्यायदर्शनरसिकानाम्। मुद्रितपुस्तकसम्पादकानाञ्चैकमात्राधारपुस्तकनिर्भरत्वात्पाठभेदानाञ्चानन्त्यात् पाठस्य निर्धारणमपि कीदृक् दुस्तरमित्यपि सुप्रसिद्धमेव।

प्राचीनसंस्कृतग्रन्थसमुद्धरणदत्तचित्तैः मन्मित्रवर्यैः श्रीयुतगोविन्ददासमहाशयैः टीकैका न्यायभाष्यस्य भाष्यचन्द्रनाम्नी समुपलब्धा। दुर्लभग्रन्थञ्च प्राप्य विदुषामग्रे तस्य समर्पणमविलम्बेनैवोचितमिति विभाव्योक्तैर्महाशयैश्चौखम्भासंस्कृतपुस्तकालयाध्यक्षास्तन्मुद्रणे प्रोत्साहिताः।

वार्तिकसहितन्यायभाष्यस्याङ्गलभाषानुवादसम्पादने तात्पर्यादिषु बहुशो मुद्रितेष्वमुद्रितेषु च न्यायसूत्रव्याख्यानेषु कृतपरिश्रमेण मया बहु तदुपयोगि सङ्गृ-

हीतम् । एतदेव सर्वमत्रान्वर्थनामनि खद्योते संन्यवेशयम् ॥

न्यायभाष्यविषये बहूक्तमप्यल्पमेवेति विभाव्य श्रीमदम्बादासशास्त्रिणः टिप्पणीरपि विषमस्थलेषु प्रदर्शितवन्तः ॥

उपलब्धभाष्यचन्द्रपुस्तकस्य तृतीयाध्यायद्वितीयाह्निकसप्तदशसूत्र एव विरतिः । पुस्तकञ्चैतद्ग्रन्थकारस्वहस्तलिखितमेव प्रतिभाति । मैथिलाक्षरैर्विभिन्नवर्णाकारपत्रेषु लिखितेऽस्मिन् संशोधनादि तथा कृतमुलभ्यते यथा ग्रन्थनिर्मातारः स्वकीयग्रन्थे कुर्वन्ति । अन्वेषणे कृतेऽपि बहुत्र पुस्तकान्तरप्राप्तेराशाऽपि निरस्तैव । अत उक्तसूत्रानन्तरमस्तङ्गमिते चन्द्रे खद्योत एव यथाशक्त्युद्भासयिष्यति भाष्यपङ्क्तिगतगूढान्धतमसमिति सम्भाव्यते ।

कृतेऽपि यथासाध्यम्परिश्रमे शोधनादिषु सन्त्येव बहूनि स्खलितानीति विदुषां क्षमा प्रार्थ्यते—

श्रीगङ्गानाथशर्मणा ।




# सटीकं
# न्यायभाष्यम् ।

(भा०) प्रमाणतो ऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम् ।

## अथ खद्योतः ।

पित्रोस्तीर्थलतातीर्थनाथयोः पादपङ्कजम् ।
निधाय हृदि विश्वेशं गङ्गानाथः करोत्यमुम् ॥
सर्वं वार्तिकतात्पर्यपरिशुद्धिसमाश्रयम् ।
अर्थतः शब्दतो वापि प्रायशोऽत्र निवेशितम् ॥

'प्रमाणत'इति । अत्र शास्त्रे प्रमाणशब्दो बहुशः प्रमीयतेऽनेनेति प्रमितिकरणवाचकः । तत्र च प्रमितिरेव फलम् । क्वचित्तु प्रमितिवाचकोऽपि । यत्र पुरुषप्रयत्न एव फलम् ॥ अस्मिन् वाक्ये प्रमितिकरणवाचक एवेत्यग्रिमभाष्यादेव स्पष्टम् ॥ प्रमाणस्य च प्रवृत्तिजनकत्वमर्थज्ञानोत्पादनद्वारकमेव, न साक्षात् ॥ 'प्रवृत्तिसामर्थ्यात्' संवादिप्रवृत्तिजनकत्वात् ॥ 'अर्थवत्' अव्यभिचारि ॥

## भाष्यचन्द्रः

रामचन्द्रं नमस्कृत्य भाष्याज्ञानतमोनुदम् ।
भाष्यचन्द्रं करोम्येष रामचन्द्रोऽस्तु मे सखा ॥

आत्मानात्मपदार्थविवेकार्थं सर्वमध्यात्मदर्शनं श्रुतिस्मृतिरूपम् ।

---

(टि०) १ अनात्मपदेन शरीरेन्द्रियादि आत्मनस्तेभ्यो विवेकेन ज्ञानस्यैव तत्त्वज्ञानत्वात् । न त्वात्मनो घटादिभ्यो भेदज्ञानस्य । तस्यैव मोक्षोपायत्वात् ।

(भा०चं०)तत्र श्रोतव्यविध्यनन्तरम् मन्तव्य इति यो विधिस्तद्विषयो मननम्। तच्च हेतुभिः प्रतिसन्धानं श्रुतस्य प्रकारस्य। तत्र हेतुशास्त्रम् प्रधानम्। शास्त्रान्तराणि तु स्वस्वसिद्धान्तप्रदर्शकानि किञ्चित्किञ्चिदनुमानाङ्गप्रदर्शकानि च। साङ्गोपाङ्गानुमानप्रदर्शकन्तु श्रीमद्गौतमप्रणीतं पञ्चाध्यायिशास्त्रम्। शास्त्रञ्च साध्यसाधनभूतार्थसमुदायतत्त्वदर्शक उपदेशः।

तस्यास्य शास्त्रस्य प्रतिपाद्यं षोडशपदार्थतत्त्वम्। तच्च तत्त्वं शास्त्रभेदेन भिन्नम्भिन्नम्। वैदिकानि खल्वेतानि षड्दर्शनानि। सर्वेषां व्यावहारिकं तत्त्वं प्रमात्रादिचतुर्वर्गाधीनम्। तस्य मध्ये प्रमाणमेव प्रधानम्। तत्त्वं खलु हेयमुपादेयमुपेक्षणीयञ्चेति त्रिविधम्। तस्य हानादि प्रमाणाधीनमिति प्रमाणादिसूत्रे प्रमाणं प्रथमं निर्दिष्टम्। तस्य च सप्रयोजनत्वं दर्शयितुं शास्त्रस्य सप्रयोजनत्वं तेनैव ज्ञापयितुमिदमाह भाष्यकारः **प्रमाणत** इत्यादि। प्रमाणत इत्यस्याः पञ्चम्या-

---

(टि०) १ आत्मावाऽरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति विधिवाक्येन आत्मदर्शनमुद्दिश्य श्रवणमननादीनां विधानात्। आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमामिति स्मृत्या च आत्मसाक्षात्कारजनकत्वेन मननस्य प्रतिपादनात्। श्रवणानन्तरं मननस्य सिद्धसाधनपराहतत्वेऽपि प्रमाणसम्प्लवस्य भाष्यकारैरङ्गीकृतत्वात् मननस्यावश्यकत्वम्।

२ तत्रेति तस्मादित्यर्थे। यतः श्रुतिस्मृतिभ्यां मननस्यात्मसाक्षात्कारजनकत्वं प्रतिपादितम् तस्माद्धेतुशास्त्रं प्रधानमित्यर्थः।

३ शास्त्रं तु क्रमविशेषापन्ना पञ्चाध्यायीति केचित्।

४ यज्ज्ञानादपवर्गो यदज्ञानाच्च संसारस्तदेव तत्वं तच्चास्मिन् शास्त्रे षोडशपदार्थात्मकमेव।

५ प्रमाणत इति तसिर्वचनविभक्तिव्याप्तिप्रदर्शनार्थः। प्रमाणत इति निमित्तपञ्चमी। अस्याभिधानं वचनव्याप्त्यर्थं विभक्तिव्याप्त्यर्थं च। तत् किं सिद्धं भवति। वचनव्याप्त्या संप्लवोव्यवस्था च। प्रमाणेन प्रमाणाभ्यां प्रमाणैरितिसम्प्लवो गम्य-

(भा०) प्रमाणमन्तरेण नार्थप्रतिपत्तिः । नार्थप्रतिपत्तिमन्तरेण प्र-

---

(ख०) प्रमाणमिति ; पूर्वोक्तस्यैवार्थस्य स्पष्टीकरणम् । अत्र पौन-रुक्त्यन्नाशङ्कनीयम् । 'स्वपदानि च वर्ण्यन्ते'-इति भाष्यलक्षणात् ।

---

(भा०चं०)स्तृतीयायाश्च एकवचनद्विवचनवहुवचनान्ताज्ज्ञातव्यस्तसिल् । ततश्च विभक्तिव्याप्तिर्वचनव्याप्तिश्चोक्ता लभ्यते । विभक्तिव्याप्त्या हेतुकरणे लभ्येते । वचनव्याप्त्या प्रमाणव्यवस्थासङ्करौ लभ्येते । ततश्च प्रत्यक्षानुमानोपमानशब्दा यथायोगं तत्त्वनिरूपका इति बोध्यम् । प्रमाणसङ्करः प्रमाणव्यवस्था च तत्त्वे दर्शयिष्यते प्रमाणविभागभाष्ये ।

अर्थपदस्यात्राभिधेयसामान्यपरत्वेऽपि तद्विशेषपरत्वम् । विशेषश्च हेयोपादेयान्यतरः । **अर्थस्य प्रतिपत्तिरिति** कर्मणि षष्ठी । प्रतिपत्तिः प्रतीतिः । नन्वर्थपदं किं लाक्षणिकम् । न । अर्थ्यत इत्यर्थः । अभ्यर्थना चेच्छैव । इच्छा च द्वेधा हेयत्वोपादेयत्वप्रकाराभ्याम् । नात्र तृतीया विधाऽस्तीति ।

**प्रतिपत्ताविति** सप्तमी भावे निमित्ते वा । निमित्तात्कर्मयोगे इति योगविभागात् ।

**प्रवृत्तिः** प्रयत्नः । स च वाह्याभ्यन्तरभेदेन द्विविधः । वाह्यश्च द्विविधः । कायिको वाचिकश्च । कायिकः कायसमवेता क्रिया । वाचिकः शब्दः । आभ्यन्तरस्तु मानसः । स चात्मगुणः । तत्रैव यततेः शक्तिः । कायिकादौ लक्षणा ।

प्रवृत्तौ सामर्थ्यं **प्रवृत्तिसामर्थ्यम्** । "ननु सामर्थ्यम्प्रमाणनिष्ठं

---

(टि०) ते प्रमाणेनैवेति व्यवस्था । विभक्तिव्याप्त्या हेतुकरणभावः । प्रमाणादर्थाधिगतिर्भवतीति हेतुत्वं प्रमाणेनार्थं साधयतीति साधकतमत्वात् करणार्थं इति वार्तिकम ।

१ प्रमाणं अर्थवत् प्रवृत्ति सामर्थ्यात् । अस्मिन् प्रयोगे प्रवृ-

(भा०)वृत्तिसामर्थ्यम् । प्रमाणेन खल्वयं ज्ञाता ऽर्थमुपलभ्य तमर्थ-

---

(भा० चं०) वाच्यम्, साध्यसमानाधिकरणत्वात् । अर्थवत्त्वं हि प्रमाणे साध्यम् । कथं तत् प्रवृत्तिनिष्ठमिति" चेन्न, विवक्षानवबोधात् । विषय-सप्तमीयम् । सामर्थ्यं हि फलवत् करणम् । करणञ्चेह व्यापारः । समर्थय-तीति समर्थम्, तस्य भावः **सामर्थ्यम्** । विषयत्वञ्च साध्यत्वम् । तच्च द्विविधम्, प्रतिपाद्यत्वञ्चोत्पाद्यत्वञ्चेति । इह परं ग्राह्यम् ।

यद्वा प्रवृत्तेः सामर्थ्यमिति षष्ठीसमासः । षष्ठी चेह कर्म्मणि । प्रवृत्तिं हि समर्थयति प्रमाणम् । समर्थयतीति कोऽर्थः । समर्थां करो-तीत्यर्थः । अर्थेन सङ्गता अर्थं वा सङ्गता 'समर्था' । अर्थश्च प्रयोजनम् । तथाच प्रमाणमर्थवत्, समर्थप्रवृत्तिजनकत्वादिति वाक्यार्थः ।

प्रमाणव्यापारं दर्शयति **अर्थप्रतिपत्ताविति** । अर्थप्रमया प्रवृत्तिं समर्थयति प्रमाणमिति भावः ।

तादिदं प्रमाद्वारकं प्रवृत्तिसामर्थ्यं प्रमाणस्य व्यतिरेकेण दर्श-यति **प्रमाणमिति** । **अन्तरेण** विना । प्रमाणाभावे सतीत्यर्थः । **नार्थप्रतिपत्ति**र्नाभिष्टप्रतीतिः । ताञ्च विना तदभावे **न प्रवृत्ति-सामर्थ्यम्** प्रमाणस्येति शेषः।"ननु प्रवृत्तिं प्रति इच्छा कारणम् । कथं प्रमामात्रेण समर्था प्रवृत्तिः"–इत्यत इच्छाद्वारेण प्रमायास्तद्धेतुत्व-माह **प्रमाणेन खल्विति** । खलुरयं भिन्नक्रमो ज्ञेयः । **ज्ञाता** प्रमाता

---

(टि०) त्तिसामर्थ्यादिति हेतुवाक्यं । प्रवृत्तौ सामर्थ्यमित्येवं विगृह्यते यदि तदा प्रवृत्तिनिष्ठं सामर्थ्यमिति लभ्यते । तच्च न प्रमाणनिष्ठमिति कथं तस्य हेतुत्वमिति चेन्नाधिकरणार्थेयं सप्तमी अपि तु विषय सप्तमी । तच्च विषयत्वमुत्पाद्यत्वरूपं प्रकृते विवक्षितं तथाच स फल-प्रवृत्तिजनकत्वमिति पर्यवसन्नम् । तच्चप्रमाणनिष्ठमिति न साध्यहे-त्वोर्वैयधिकरण्यमिति भावः ।

१ प्रवृत्तिजनकतायामवान्तरव्यापारः प्रमाणजन्याऽर्थ प्रतिपत्तिः ।

(भा०) मभीप्सति जिहासति वा। तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते। सामर्थ्यं पुनरस्याः फलेनाभिसम्बन्धः।

---

(ख०) 'समीहा' यत्नः।

---

(भा० चं०) ऽयं सर्वः स्वप्रसिद्धः प्रमाणेन **अर्थमुपलभ्य तमर्थमभीप्सति** खलु आप्तुमिच्छत्येव **जिहासति** हातुमिच्छति **वा**। वाकारश्चार्थे। **तम्** उपादेयत्वेन प्रसिद्धं हेयत्वेन प्रसिद्धञ्च।

इच्छानन्तरम् प्रवृत्तिद्वयमाह **तस्येप्साजिहासेति**। तस्य प्रमातुः। ईप्साप्रयुक्तस्य प्रयत्नः प्रवृत्तिः। जिहासाप्रयुक्तस्य प्रयत्नो निवृत्तिः। तदुभयीं प्रवृत्तिसंज्ञयोवाच भाष्यकारः। का प्रवृत्तिरित्याकांक्षायामाह **समीहेति**। समीहा क्रिया व्यापार इति यावत्। स च त्रिविध इत्युक्तम्। 'ईह' चेष्टायाम्। चेष्टेयं प्राणिधर्म्मः। हितप्राप्त्यहितहान्यर्थतया सा द्विधा। प्राणी च प्राणादिसङ्घातविशिष्टश्चेतनः। स च मनसा वचसा कायेन प्रवर्तते इति द्वितीयसूत्रे भाष्यकृन्निरूपयिष्यति। तस्मात्त्रिविधापि क्रिया व्यापारापरपर्य्याया 'समीहा'—'प्रवृत्ति'-शब्दाभ्यामुच्यते। यद्यपि क्रियाशब्दो ऽयमुत्पत्त्यनुकूलव्यापारवाची तथाप्युत्पत्तिं विहाय व्यापारमात्रे ऽप्युच्यते धीरैरिति ध्येयम्।

**'आप्तिः'** स्वसम्बन्धः। **'हानिः'** स्वासम्बन्धः। ईप्सति स्वेन सम्बन्धमिच्छति। जिहासति स्वेनासम्बन्धमिच्छति।

समर्थं प्रमाणं समर्था प्रवृत्तिः। तत्र प्रमाणसामर्थ्यं वर्णितमस्माभिः। तदेव प्रमाप्रमात्रोरपि सामर्थ्यमिति ज्ञापयिष्यति। इह त्विदानीं प्रवृत्तिसामर्थ्यमाह भाष्यकारः **सामर्थ्यं पुनरिति**। पुनःशब्दः प्रमाणसामर्थ्यं व्यावर्तयति। **अस्यास्तुसामर्थ्यं फलेनाभिसम्बन्धः**। फलसाधकत्वमित्यर्थः।

फलञ्चोपदेयप्राप्तिर्हेयहानिश्च। तदिदं फलद्वयं दर्शयति

(भा०) समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जहाति वा।

अर्थस्तु सुखं सुखहेतुश्च दुःखं दुःखहेतुश्च। सो ऽयं प्रमाणा-

(ख०) 'प्रमाणार्थः, प्रमाणगम्योऽर्थः।

(भा० चं०) **समीहमान इति**। **तमर्थमभीप्सन्** समीहमानः प्राप्नोति। **जिहासन्** समीहमानो जहाति। वाशब्दो[1] यथायोग्य-ज्ञापनार्थः। **समीहमान** उपायमनुतिष्ठन्। उपायः कृतिः। समीहा व्यापारः। स्वोत्पत्तिकर्मकत्वाद्धातुद्वयमिदमकर्मकमिति ज्ञेयम्। एतेन जीवति-म्रियते-रोदिति-निद्राति-जागर्ति-प्रभृतयो व्याख्याताः। तथो-पादेयोपादानं हेयहानिञ्च करोत्युपायेनेत्यर्थः।

प्रवृत्तियोग्यमर्थं चतुर्धा विभजते **अर्थस्त्विति**। स्पष्टम्।

चतुर्वर्गो ऽयं साध्यसाधनरूपो ऽव्यवस्थित इत्याह **सोऽयं**[2] **प्रमाणार्थोऽपरिसंख्येयइति**। प्रमाणेनार्य्यते अर्थ्यते वेति 'अर्थः'। प्रमाणेनोपादेयतावच्छेदकरूपेण हेयतावच्छेदकरूपेण वा ऽर्य्यते प्रतीयत इति प्रमाणार्थः। तथा अर्थ्यते इति वा प्रमाणार्थः। 'ऋ' गतौ। 'अर्थ' उपयाच्ञायाम्। गतिर्ज्ञानं उपयाच्ञा इच्छा। इच्छा च द्वयीत्युक्तम्। **अपरिसंख्येयः** परिच्छेत्तुमशक्यः। शक्यार्थे कृत्यविधानात्। ननु चतुर्धाविभज्यापरिसंख्येयत्ववचनं व्याघात

(टि०) १ क्रमिकान्वयद्योतनार्थः।

२ सोयं प्रमाणार्थोऽपरिसंख्येयः। अत्रवार्तिकम्। इयानयंप्रमाण-विषय इति नपरिसंख्यातुं शक्यं आनन्त्यात् न उभयस्यापिपरि-संख्याततत्वात्। एतावानयं प्रमाणार्थो यत्सुखदुःखे तद्धेतुश्चेति तच्चो-भयं परिसंख्यातम्। अतोनयुक्तमानन्त्यात् न परिसंख्यातुंशक्यं प्रा-णभृद्भेदस्य चापरिसंख्येयत्वादपरिसंख्येयः प्रमाणार्थ इत्यसम्बद्धमु-क्तमिति। प्रमाणेप्रयोजनमपरिसंख्येयमित्ययं वाक्यार्थः। कथम्। स एवार्थः कस्य चित्सुखहेतुर्भवतिकस्यचित दुःखहेतुरिति।

(भा०) र्थो ऽपरिसंख्येयः प्राणभृद्भेदस्यापरिसंख्येयत्वात्।

(भा०चं०) इति चेन्न। भावानवबोधात्। **प्राणभृद्भेदस्यापरिसंख्येयत्वात्** अनियतरूपत्वादित्यर्थः। ननु किमेतावता। यत्तत् शृणु। प्राणभृद्भेदः प्राणिनां विशेषः। तस्मात्। अयमर्थः। प्राणिनो हि विचित्रकर्म्मवन्तः। तेन यत्सुखसाधनमेकस्य तन्नापरस्य। यथा कोमलपल्लवं छागादेः प्रियं भक्ष्यम् तदेव क्रमेलकस्याप्रियं दुःखसाधनत्वात्। कण्टकितपल्लवः तस्य प्रियं सुखसाधनत्वात्। छागादेस्तु दुःखसाधनत्वादप्रियम्। एवं सुखसाधनत्वान्मनुष्यविशेषस्य मधुरादि सुखसाधनं कस्यचित्। तदेवान्यस्य दुःखसाधनम्। एवं कलत्रादि एकस्यैव सहकारिविशेषसहितं सुखसाधनं दुःखसाधनञ्चेत्यनुसन्धेयम्। सोऽयं प्राणभृद्विशेषः सुखदुःखसाधनत्वाव्यवस्थायां हेतुः प्रयोजकः। तथाहि विवेकवैराग्यादियुक्तः पुरुषः पूर्वपरिगृहीतकलत्रादि परित्यजति परिव्राजकोऽपि उद्बुद्धपापविशेषो रागवान् मठादि परिगृह्णाति। तदिदं प्रमाणस्यार्थवत्त्वं प्रमात्राद्यर्थवत्त्वप्रयोजकमित्याह **अर्थवति चेति**।

**अर्थवन्ति** प्रयोजनवन्ति। अर्थवांश्च अर्थवच्चार्थवती चेति विग्रहादेकशेषः। शिष्यः पृच्छति **कस्मादिति**। तस्यायमाशयः। प्रमां प्रति कारणत्वे प्रमातृप्रमाणप्रमेयानामविशेषे प्रमाणस्यैव कथं प्रमात्रादित्रिवर्गप्रयोजनवत्तायाः सप्रयोजनवत्ता हेतुरिति।

उत्तरमाह **अन्यतमापाये इति**।

अन्यतमशब्दोऽयं यद्यपि प्रमात्रादिसाधारणस्तथापि प्रमाणप्रकरणात् तत्परो ज्ञातव्यः। प्रमाणापाये अर्थस्येष्टस्य उपादेयप्राप्तिरूपस्य हेयहानिरूपस्य चानुपपत्तेरसिद्धेरित्यर्थः। प्रमात्रादिचतुर्वर्गल-

(टि०) १ प्रमाता—प्रमेयं—प्रमितिरिति।

(भा०) अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति। कस्मात्। अन्यतमापाये ऽर्थस्यानुपपत्तेः। तत्र यस्ये-प्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता। स येनार्थं प्रमिणोति तत्प्रमाणम्। योऽर्थः प्रमीयते तत्प्रमेयम्। यदर्थविज्ञानं सा प्र-

---

(ख०)'अर्थवति' समर्थे सम्यगर्थे अर्थाव्यभिचारिणीति यावत्। अथवा शक्ते ॥ 'अर्थवन्ति' समर्थानिसम्यगर्थानि। अथवा शक्तानि ॥ 'अन्यतमेति'—अन्यतमस्य साधकतमस्य प्रमाणस्येति यावत्, अन्यतमार्थः साधकतमार्थो द्रष्टव्य इति वार्तिकम् ॥ अथवा प्रमाणप्रमातृप्रमितिप्रमेयाणाम् 'अन्यतमस्य'—प्रमाणस्य प्रमातुः प्रमितेः प्रमेयस्य वा—'अपाये' अभावे 'अर्थस्य' प्रवृत्तिरूपस्य 'अनुपपत्तेः' असम्भवात्।

---

(भा०चं०) क्षणमाह "**तत्रेति**। प्रमात्रादिचतुर्वर्गे इत्यर्थः। **प्रयुक्तस्य** प्रेरितस्य प्रवर्त्यमानस्य **प्रवृत्तिः** त्रिविधा क्रिया पूर्वोक्ता। **स प्रमाता** प्रमाकर्ता। अयं भावः। चेतनो हि प्रमाकरणेन प्रमां कृत्वा हेयमुपादेयं वा हातुं उपादातुं वेच्छति। तथेच्छा च मनसा वचसा कायेन वा व्याप्रियते। तेन उपादेयमुपादत्ते हेयं जहाति। तदिदं लौकिका वदन्ति जानाति इच्छति वदति यतते चेष्टत इति। क्रियावर्गस्यास्य प्रयोजनोद्देश्यकत्वात् व्यापारवत्त्वम्। तदपेक्षया प्रयोजनस्य फलत्वम्। स प्रमाता येन करणेन प्रमिणोति तत् प्रमाणम् प्रमाकरणमित्यर्थः। करणाधिकरणयोश्चेति ल्युट्। क्रियते ऽनेनेति करणं न तु कृतिः। प्रमेयं प्रमाकर्म कर्तुरीप्सिततमं कर्म्मेति बोध्यम्। **यदर्थविज्ञानमिति** अर्थे अर्थस्य वा विज्ञानमर्थविज्ञानम्। व्युपसर्गो याथार्थ्यं विशेषमाह। ज्ञानपदं अनुभवपरम्। तेन यथार्थानुभव इत्युक्तम्। **सा प्रमितिरिति**।

(भा०) मितिः । चतसृषु चैवं विधास्वर्थतत्त्वं परिसमाप्यते ।

"किं पुनस्तत्त्वम् ?"

---

(भा०च०) [1]विधेयलिङ्गग्राहित्वं विवक्षया चतुर्वर्गलक्षणज्ञापने प्रयोजनं दर्शयति । **चतस्रष्विति** । एवं ईदृशीषु विधासु प्रकारेषु **अर्थ-तत्त्वं** अर्थस्वरूपम् [2]**परिसमाप्यते** उपादीयते हीयते उपेक्ष्यते वा यथासम्भवम् । अर्थपदमत्रार्य्यमाणपरम् । प्रमाणेनहि त्रिविधं प्रमेयमर्य्यते । किञ्चिदुपादेयं किञ्चिद्धेयं किञ्चिदुपेक्षणीयमिति । उपेक्ष्यं प्रवृत्त्यविषयः । अप्रयोजनत्वात् ॥ प्रमात्रादिचतुर्वर्गप्रयोजन-मिह त्रयम् । प्राप्यप्राप्तिर्हेयहानिरुपेक्ष्योपेक्षणं तथा । प्रवृत्त्यविषयत्वेन नोपेक्ष्यस्य प्रयोजनम् । प्रमात्रादेरिति प्राहुः प्रयोजनविदो जनाः ॥ अर्थतत्वे संशयानः शिष्यः पृच्छति **किं पुनस्तत्त्वमिति** । तस्यायमाशयः । नानासिद्धान्तविषयेयु नानासिद्धान्तः श्रूयते । ब्रह्मा-द्वैतवादिनः सदेव तत्त्वं वदन्ति । शून्याद्वैतवादिनस्त्वसदेव तत्त्वं वदन्ति । सांख्यादयस्तु चतुर्विंशतिविधं तत्त्वमित्यादि वदन्ति । ततः संशयः किमिह तत्त्वपदेनोच्यत इति । उत्तरमाह **सतश्चेत्येव-मादि** । अयमाशयः । न वयमेकतत्त्ववादिनः यज्जगद्बाधेन चिन्मात्रं शून्यमात्रं वा तत्त्वं ब्रूमः । नवा धर्म्मिमात्र-चतुर्विंशत्यादितत्त्ववादिनः । किन्तु धर्मं धर्म्मिणञ्च भावभवितारौ तत्त्वं ब्रूम इति । तथाहि **तत्त्वमित्युदे-**

---

(टि०) १ अनेन लिङ्गेन प्रमात्रादयो ज्ञातव्या इत्येवं प्रमात्रादिलक्षण-ज्ञापनप्रयोजनमिति भावः ।

२ तत्त्वपरिसमाप्तिर्विनियोगयोग्यता । उपेक्ष्यतावा यासाववि-संवादिता साऽवधारितार्थस्य विनियोगयोग्यता सुखसाधनन्दुःख-साधनं वाऽयमर्थ इति ज्ञात्वा विनियोगः समाप्तिस्तुच्याप्तिस्तत्प्रतिष-धश्चेतिवार्तिकम् ।

(भा०) सतश्च सद्भावोऽसतश्चासद्भावः । सत्सदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति । असच्चासदिति गृह्यमाणं

---

(ख०) सतश्चेति । सदसती'तत्' । तस्य 'भावः'प्रमाणविषयता 'तत्त्वम्' । विधायकप्रमाणविषयता 'सद्भावः' । प्रतिषेधप्रमाणविषयता'असद्भावः' ॥

---

(भा०च०)श्यम् । **सतश्च सद्भावोऽसतश्चासद्भाव** इति विधेयम् । चोऽवधारणे । **सदिति** प्रमितं धर्म्मिणमाह । **भाव** इति विशेषणमाह । विशेषणञ्च भिन्नमभिन्नञ्चेति द्विविधम् । भिन्नं भावरूपम् । तच्च विधिरूपं निषेधरूपञ्च । विधिरूपं **सत एव सद्भाव इति** । निषेधरूपम**सत एवासद्भाव** इति । सदसती पदे सत्यासत्यपरे । सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वतीति पञ्चकमेकार्थम् । तद्विपरीतमसदादि पञ्चकम् । एतेषां प्रकृतिप्रत्ययविभागेनार्थं दर्शयामः । ततो भाष्यकृद्विवक्षितं तत्त्वं शिष्यस्य प्रकटीभविष्यतीति । असभुविभूसत्तायामिति पर्य्यायौ धातू ! तयोर्हि भावभवितारौ शब्दौ । 'अस्ति' 'भवति' वा 'सन्' 'भविता'वा पर्य्यायाविमौ । 'भूतिः' 'सत्ता' 'भाव' इति पर्य्यायाः । सन्सत्ता कर्त्ताभविता भावकर्त्ता कर्त्ता चेहप्रकाशकः । तेन स्वभावप्रकाशकइति द्वयोरर्थः । अथोदाहरणम् । यथा 'घटः सन्' स्वभावद्वयं प्रकाशयतीत्यर्थः । 'घटः पटोऽसन्' स्वस्मिन् पटासत्त्वं प्रकाशयतीत्यर्थः । पटासत्त्वं च पटतादात्म्याभावः । ताविमौ स्वतादात्म्यान्यातादाम्यरूपौ घटस्य 'तत्त्वम्' । ताभ्यां प्रमितो घटः तच्छब्देन परामृश्यते । एवमतादात्म्यमसत्त्वमिवात्यन्ताभावादित्रयमसत्त्वं बोध्यम् । तथा च भावरूपमभावरूपं च तत्त्वं सर्वं व्याख्यातम् । तदिदं तत्त्वं प्रथमसूत्रे उदिष्टम् । वैशेषिके तु शास्त्रे चतुर्थसूत्रे । धर्म्मिरूपं तत्त्वं दर्शयति । **सत्सदिति** । सत् घटादिकम् । अयं घटः सन्नित्यादिरूपेण

(भा०) यथाभूतमविपरीतं तत्त्वं भवति ।

कथमुत्तरस्य प्रमाणेनोपलब्धिरिति १ ।

सत्युपलभ्यमाने तदनुपलब्धेः प्रदीपवत् । यथा दर्शकेन दीपेन

---

(भा०च०) गृह्यमाणं तत्त्वं भवतीत्यन्वयः । तस्य पर्य्यायौ **यथाभूतमविपरीतमिति** । **यथेति** स्वभावमाह **भूत**मित्याविर्भूतमाह । आविःप्रादुरादय उपसर्गवत्तात्पर्य्यद्योतकाः । अतो धातोरर्थः प्रकृते प्रमा विषयः क्तार्थः । तथाच स्वभावेन प्रमितमित्यर्थः । विपरीतं परभावेनेतमित्यर्थः । इण् गतौ । सर्वे गत्यर्था ज्ञानार्था इति स्मृतेः । भवतेर्ज्ञानार्थत्वञ्च भुवः प्रभवइति सूत्रे, हिमवतो गङ्गा प्रभवतीत्युदाहरणे प्रभवति प्रथमं दृश्यत इति विवरणेन दर्शितं वृद्धैः । एवमसदित्यादिवाक्यं व्याख्येयम् । इदं उत्तरं तत्त्वं समाप्यत इत्यत्र सम्बध्यते । व्यवहाराय तु भावरूपमपि तत्त्वं दर्शितम् ।

इत्थञ्च प्रमाणस्य कृत्यं दर्शितम् । असतः प्रमाणग्राह्यत्वे शङ्कमानः शिष्यः पृच्छति **कथमुत्तरस्येति** । अयमाशयो भाष्यकृत्तात्पर्य्यमनवगन्तुः । असत् किल शशविषाणकल्पम् । तन्न प्रमाणसम्बन्धमर्हति । तथाच कथं प्रमाणमसदवगमयतीति स्वतात्पर्य्यं प्रकटयति । **सत्युपलभ्यमाने इत्यादिना** । न वयमसत्ख्यातिवादिनः । यत् प्रमाणासम्बन्धमसत्कथं प्रकाश्येतेत्याक्षेपः सम्भवेत् । अपितु सदेव कथञ्चिदसदिति ब्रूमः । तथा च नानुपपन्नमिति दर्शयति **तदनुपलब्धेः प्रदीपवदिति** । सति विद्यमाने वस्तुनि गृह्यमाणे प्रमीयमाणे सति प्रमाणात्तदनुपलब्धिः । तस्यासतोऽनुपलब्धिःसहकारिणा यत्र तत्तदनुपलब्धिप्रमाणं तस्मादसतः उपलब्धिरित्यन्वयः । यद्वा तस्यासतो ऽनुपलब्धिः तदनुपलब्धिस्तस्याः सहकारिण्या हेतोः प्रमाणे-

---

(टि०) १ यद्यथाभूतं तत्ज्ञापनमेव प्रमाणकार्यं तेदवदर्शितम् ।

(भा०) दृश्ये गृह्यमाणे तादिव यन्न गृह्यते,तन्नास्ति—यद्यभविष्य-दिदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति—एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते तन्नास्ति—यद्यभविष्यदिदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति । तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति ।

(ख०) सत उपलब्धावेव यतो ऽसतोऽप्युपलब्धिः, अत एवा-सतोऽपि प्रमाणेनैवोपलब्धिः । केवलमयमेव सदसतोर्भेदो यत् सत् स्व-तन्त्रमेव प्रमाणस्य विषयः, असत्तु प्रतिषेधमुखेनैव प्रमाणस्य विषयः ॥

कथं सदुपलब्धिद्वारा प्रतिषेधमुखेनासत उपलब्धिरिति प्रदीप-दृष्टान्तेन विशदयति ॥

(भा०च०) नासदुपलब्धिरित्यन्वयः । अनुपलब्धेः साहाय्ये दृष्टान्तमाह **प्रदीपवदिति** । प्रदीपादिव । दृष्टान्तं विवृणोति **यथेति** । दर्शयतीति दर्शकः पश्यत्प्रयोजकइत्यर्थः । तेन दृश्ये भूतलादौ गृह्यमाणे सन्निकर्षेण प्रमीयमाणे सति तदिव दृश्यमानभूतलादीव यद्धटादि न गृह्यते तन्नास्ति तत्र स्वभावकर्तृ स्वसत्तां न प्रकाशयतीत्यर्थः । अत्रार्थे ऽनुकूलतर्क-माह **यद्यभविष्यदित्यादि** । इदमिव भूतलादीव **व्यज्ञास्यत** स्वविशेषेण स्वभावाख्येनाज्ञास्यत । निगमयति **विज्ञानाभावान्ना-स्तीति** । विद्यमानाविद्यमानरूपसदसद्ग्रहणं दृष्टान्तीकृत्य सत्यास-त्यरूपसदसद्ग्रहणं कर्तुं शक्यमिति दर्शयति । **एवं प्रमाणेन सति गृह्यमाणे इति** । सति आत्मादौ प्रमेये गृह्यमाणे स्वभावेन ज्ञायमाने तदिवात्मादीव यद्देहादिकं न गृह्यते इदमहमस्मीति न प्रमीयते तन्नास्ति

(टि०) १ यत्प्रमाणं सतः प्रकाशकं तदेव प्रतियोगिसत्त्वप्रसं-जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताविशिष्टानुपलब्धिसहकृतं अ-सदपि प्रकाशयतीति प्रमाणत्वेनाभिमतस्य सदसत्प्रकाशकत्वमिति भावः ।

(भा०) सच्च खलु षोडशधा व्यूढमुपदेक्ष्यते। तासां खल्वासां सद्विधानाम्—

(ख०) न पुनरसदुपदेक्ष्यते, तस्य सदधीनप्रकाशत्वात् ॥

सद्भेदानामनन्तानाम् प्रमाणादिगङ्गावालुकादीनाम्मध्ये प्रमाणादीनामेव तत्त्वज्ञानान्निःश्रेयसाधिगमः, न पुनर्गङ्गाबालुकादीनामिति, प्रमाणादय एवात्र शास्त्रे लक्षिताः परीक्षिताश्च ॥

(भा०च०) तदात्मादिकं नभवतीत्यर्थः। तर्कस्तु पूर्ववज्ज्ञातव्यः। तदिदं प्रमाणकार्यं सत्यासत्यस्वस्वभावप्रकाशनमुपसंहरति **तदेवमिति**। **सतः** सत्यस्य **प्रकाशकं** प्रमापकम्। **असदपि** असत्यमपि **प्रकाशयति** प्रकाशमानं करोति। तदिदं सर्वं वस्तु स्वपरात्मना सदसदात्मकं यद्यपि तथापि सदात्मना शास्त्रकारेणोपदेष्टव्यमित्याह **सच्च खल्विति**। **षोडशधा** षोडशभिः प्रकारैर्व्यूढमनन्तमपि व्यूहीकृतम् संगृहीतम् प्रधानत्वात् एकस्मिन् शास्त्रे यथा कुसूले धान्यराशिः। **उपदेक्ष्यते** उपकाराय हिताय ज्ञापयिष्यते। उद्देशलक्षणपरीक्षाभिरिति शेषः। सूत्रे षष्ठ्यन्तपदं विशेषणपदं स्वाभीष्टार्थप्रकाशकमुपादत्ते **तासामित्यादित्रयम्**। **तासां** षोडशानामेव आसां मया व्युत्पादयिष्यमाणानां **सद्विधानां** सतः प्रकाराणां सतोविशेषाणामेकया सत्तया साहितस्य विधा विशेषाः। यथा द्रव्यत्वेन सामान्येन द्रव्यपदं नवानां संग्राहकं पृथिवीत्वादिना सामान्येन घटादीनामनन्तानां संग्राहकं पृथिवीपदम्, एवं सत्तया सामान्येन षोडशानां संग्राहकं सत्पदमिति ध्येयम्। यद्यपि घटः सन्नित्यादौ सत्पदं घटादीनां स्वभावाख्यसत्ताबोधकं तथापि प्रमाणादिषु विशेष्यीभूतं सत्प-

---

(टि०) १ न हि गङ्गावालुकादयः सद्भेदाः सन्तोपि निरूपणार्हा अनुअनुपयोगात्।

(सूत्र०१) प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसि-
द्धान्तावयवतर्कनिर्णयवादजल्पवित-
ण्डाहेत्वाभासच्छलजातिनिग्रहस्था-
नानां तत्त्वज्ञानान्निःश्रेयसाधिगमः ॥ १ ॥

(भा०) निर्देशे यथावचनं विग्रहः। चार्थे द्वन्द्वसमासः। प्रमाणादीनां

(ख०) यदेव निर्देशे वक्ष्यमाणे लक्षणे वचनभेदोपादाने प्रयोजनं तदेवेहाप्युद्देशे। अतोऽत्रापि समासस्य विग्रहे वचनभेदोऽनुसरणीयः। 'चार्थे द्वन्द्वसमास'इति वाक्यं 'निर्देशे यथावचनं विग्रह' इत्येतस्मात् प्रागेव येजियति वार्तिककारः।

(भा०च०) दमेकेन सत्त्वेन विना समानं भवितुं नार्हति। नच घटादिष्विव विशिष्टसत्ताबोधकमेवास्तु किमतिरिक्तसत्तयेति वाच्यम्। तदपेक्षया षोडशानां विधात्वानुपपत्तेः। एकेन सामान्येन विनापि विधात्वे द्रव्यादिपदानामप्येकसामान्यासिध्यापत्तेः। ननु किं तत् सत्त्वं सामान्यमेव। किमिदं समानप्रतीतिहेतुर्धर्म्मःसो ऽयमखण्डोपाधिरित्युच्यते। '**निर्देशे** इति। 'उपोद्धातः पदच्छेदः पदार्थः पदविग्रहः। आक्षेपश्च समाधिश्च व्याख्या षोढा प्रकीर्तिता' इति वृद्धवैदिकपरंपरासिद्धान् व्याख्याप्रकारान् सूचयति। निर्देशो विभागलक्षणसूत्रम्। प्रमाणानि-प्रमेयमित्यादि वक्ष्यमाणसूत्रेषु द्रष्टव्यम्। **यथावचनमिति**। लिङ्गस्याप्युपलक्षणम्। वचनमनुलङ्घ्य विग्रहः कार्य इति शेषः। विशिष्यलिङ्गवचनाभ्यां गृह्यतेऽनेनेति **विग्रहः**। यथा नवकम्बलोऽयमिति समासः तत्र नवसंख्याककम्बलवान् उत नवैककम्बलवानिति विशेष-

(टि०) १ सर्वपदार्थ प्रधानो द्वन्द्व इति वार्तिकम् किमुक्तं भवति। सर्व एते प्रमाणा दयोश्रयो इति।

(भा०) तत्त्वमिति शैषिकी षष्ठी । 'तत्त्वस्य ज्ञानं' "निःश्रेयसस्या-

---

(ख०) 'शैषिकी । यत्र न कारकार्थौ विवक्ष्यते स 'शेषः' । सम्बन्धसामान्यमित्यर्थः ।

---

(भा०च०) ज्ञापकाभावात्संशयः । विग्रहे पुनर्नवः कम्बलोऽस्य, नव कम्बला अस्येति वैतद्रूपे लिङ्गसंख्यादिकः पदपदार्थयोर्विशेषो गृह्यते इति विग्रहः । तथाऽत्र सूत्रे षष्ठ्यन्तसूत्रपदसमासे सन्देहः । किमत्र सर्वपदो द्वन्द्व उत किञ्चित्पदो द्वन्द्व इति नास्ति सन्देहः । तत्त्वस्य प्रतिपदार्थसम्बन्धानुरोधादित्याह **चार्थेनि** । चार्थ इतरेतरयोगोऽत्र विवक्षितः । वहुवचनयोगात् । इतरेतरयोगः परस्परसहकारित्वम् । तदुक्तं पदसंस्कारे भगवद्भाष्यकारैः । प्लक्षश्च न्यग्रोधश्चेत्युक्ते बुध्यत एव प्लक्षस्य सहायो न्यग्रोधः न्यग्रोधस्य सहायः प्लक्ष इति । **शैषिकी षष्ठीनि** । कारकाणामविवक्षा शेष इति वार्तिकम्[1] । अयम्भावः । तत्त्वमिति तेषां भावः । भावश्च विशेषणम् विशेषणञ्च विशिष्टीकरणम् । विशिष्टिश्च तदितरव्यावर्तनाभेदबोधनमिति यावत् । तथाच भवितारः प्रमाणादयः पदार्थाविशेष्यास्तेषां तत्त्वमित्युक्ते कर्म्मणि षष्ठी प्राप्नोति । सा चात्र न विवक्षिता परभावस्याप्राप्त्यापत्तेः । भावो हि द्विविधः । साधारणोऽसाधारणश्च । साधारणः सत्त्वाभिधेयत्वादिः । असाधारणः प्रमाणत्वप्रमेयत्वादिः । तस्य सर्वस्य ज्ञानमिह विवक्षितम् । नतु विशेषकमात्रज्ञानमिति । ज्ञानपदमिह करणसाधनम्[2] प्रकृतशास्त्रपरम् । ज्ञप्तिमात्रपरत्वे शास्त्रस्यास्य प्रयोजनाभिधेयसम्बन्धाभिधानानुप-

---

(टि०) १ यत्र न कारकं कारकार्थौ वा विवक्ष्यते स शेषः । तद्यथा ब्राह्मणस्य कमण्डलुरिति ।

२ ज्ञायते अनेनेति ज्ञानमिति व्युत्पत्या ज्ञानपदं शास्त्रपरमित्यर्थः ।

(भा०) धिगम" इति कर्मणि षष्ठ्यौ ।

त एतावन्तो विद्यमानार्थाः । येषामविपरीतज्ञानार्थमिहो-

(भा०च०)पत्तेः । प्रयोजनाभिधेयसम्बन्धप्रकरणञ्च द्विसूत्रमिदम् । श्रोतृ-प्रवृत्त्यङ्गं ह्येतत् । **कर्म्मणि षष्ठ्याविति** । कर्म्मषष्ठीं विना तत्त्व-ज्ञानयोः प्रतिपाद्यप्रतिपादकभावो न बुध्येत । सम्बन्धान्तरे ऽपि षष्ठीस-म्भवात् । निःश्रेयसस्याधिगम इति कर्म्मणि षष्ठींविना अधिगन्तुः क्रियया प्राप्तुमिष्टतमं निःश्रेयसमिति न बुध्येत । अत्रेदं भाव्यम्—शास्त्रात् षोडशपदार्थानां प्रमाता निःश्रेयसमधिगच्छति इति । अत्र हि सूत्रे प्रमात्रादिचतुर्वर्गः हेयादिचतुर्वर्गश्च प्रतिपद्यते । प्रमाता अर्थात् । प्रमा-णादित्रिवर्गः शब्दादेव प्रमेयम् । तत्त्वप्रमा तत्त्वज्ञानं प्रमाणं शास्त्रं प्रमाता मुमुक्षुः । **हेयं** मुमुक्षणीयं एकविंशतिविधं दुःखं । **हानं** तज्ज्ञानम् । हानोपायः प्रकृतशास्त्रम् । निःश्रेयसमधिगन्तव्यम् । एभ्यो ऽतिरिक्ता अर्था न सन्तीत्याह । **एतावन्त इति** । विद्यमाना वेदेन ज्ञायमाना अर्था अभिधेयाः । विद्यमानाश्च ते अर्थाश्चेति **विद्यमानार्थाः** । वेदसंज्ञाया अन्वर्थतया तदर्था अनुमिताः श्रुताश्च 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महा-त्मनः' इति तेषां सामान्यविशेषाभ्यामियत्तामनवधारयतामास्तिकानां तत्वजिज्ञासूनां कृपालूनां इत्यत आह । **येषामिति** । अविपरी-तज्ञानं । तदर्थमिति नपुंसकं क्रियाविशेषणत्वात् । उपदेशः साकल्ये-

(टि०) १ एतत् प्रयोजनादिकं उक्तं च सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते शास्त्रादौ तेन वक्तव्यः सम्बन्धः स प्रयोजनः तेनादि-वाक्याद्विज्ञायसाभिधेयं प्रयोजनं । तत्सम्भावनयाकार्यस्तच्छद्ध-श्रवणादरः । यच्च श्रोतृप्रवृत्यगं तद्वक्तुं युक्तमादितः । न च प्रयोज ज्ञानादन्यदस्ति प्रवर्तकम् । अर्थाक्षिप्तस्तु सम्बन्धः फलशास्त्राभि-धेयः तन्निर्देशेन सिद्धत्वान्न स्वकण्ठेन कथ्यते इति ।

(भा०) पदेशः। सोऽयमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः । तच्चैतदुत्तर-

---

(भा०च०) न कथनम् सूत्रकारस्येति शेषः। सूत्रकारो हि भगवानक्षपादः तत्त्वसाक्षात्कारी। अतः परमदयालुः ततश्च यथाभूतार्थजिज्ञापयिषुस्तस्य किलोपदेशोऽयं प्रमाणमिति भावः । एकेन सूत्रेण महावाक्यरूपेण कथितोऽयमखिलशास्त्रार्थः कथं सम्यग्ज्ञातव्य इत्यत आह **सोऽयमिति** । उद्दिष्टो नाममात्रैः कथितः तन्त्रस्यार्थस्तन्त्रार्थः । तन्त्रं नाम साध्यसाधकभावापन्नानेकार्थ उपदेशः । **अनवयवेन वेदितव्यः**(१) । अनेकदेशेन पूर्णशास्त्रेण वेदितव्यः प्रमातव्यः । उद्देशो लक्षणं परीक्षा चेति शास्त्रस्य त्रयोऽवयवाः । तत्रैकावयवेन ज्ञापितस्तन्त्रार्थो लक्षणपरीक्षावयवाभ्यां वेदितव्य इत्यर्थः । यद्यपि सामान्येन प्रमाणादीनां तत्त्वज्ञानं निःश्रेयसाधिगमकमित्युक्तं तथापि(२) साक्षात्कारायात्मादितत्त्वज्ञानमेवेत्याह **आत्मादेः खल्विति** । आत्मादेरेवेत्यर्थः । प्रत्ययस्य प्रमातुमिष्टतमस्य कर्मणि यद्विधानात् । कर्तुरीप्सिततमं कर्मेति स्मृतेश्च । तथाच श्रुतिः आत्मा वा अरे ! द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इति । ता इमाश्चतस्रो वृत्तयो दृष्टिप्रधानाः । आत्मा च प्रियतमः । नरा अरे ! सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं

---

(टि०) (१) शास्त्रस्यावयवभूत उद्देशः अनवयवेन सामस्त्येन प्रथमसूत्रेणैव ज्ञातव्य इति भावः ।

(२) यद्यपि सर्वेषामेव प्रमाणादिपदार्थानां तत्त्वज्ञानं निःश्रेयसप्रयोजकमेवोपन्यस्तम् तथापि तत्र आत्मादिप्रमेयतत्त्वज्ञानमेव साक्षान्मोक्षोपयोगीति भावः ।

(भा०) सूत्रेणानूद्यत इति । हेयं तस्य निर्वर्तकं, हानमात्यन्तिकं,

---

( ख० ) हेयं—हानं—हानोपायः—अधिगन्तव्यः—इत्येवम्भेदाच्च-त्वारि अर्थपदानि सम्यक् बुद्ध्वा निःश्रेयसमधिगच्छतीति ॥ एतदेव सविस्तरं द्वितीयसूत्रे वर्ण्यते ॥

'हेयं' दुःखम् । अविद्यातृष्णे धर्माधर्मौ ॥ 'हानं' हेयस्य हानिकरणं तत्त्वज्ञानम् । तस्य 'उपायः' शास्त्रम् । 'अधिगन्तव्यः' मोक्षः ।

---

(भा०च०) भवतीति श्रुतेः । अत एवोक्तमात्मादेरिति । आदिः प्रधानम् । ननु सूत्रकृदेव कथं साक्षान्नोपादिशदित्यत आह **तच्चैतदिति** । उत्तर-सूत्रेण द्वितीयसूत्रेण । तत्रापायशब्दो दर्शनान्तचतुर्विध(१)ज्ञानवाची । तच्च चतुर्विधज्ञानम् श्रुत्येकवाक्यतया आत्मविषयकमेव । अनूद्यत इति श्रुत्यपेक्षया प्रथमसूत्रापेक्षया वेति ज्ञेयम् । हेयं हानिः खल्वनिः-श्रेयसं (हेयं) मिथ्याज्ञानादिपञ्चकम्(२) दुरुच्छेदं समूलकाषं कषितुं महाकान्तारमिव महोपायेन विना झटिति न शक्यम् किन्तु विवेक-वैराग्यपरिपाकेनैव शक्यम् इत्यभिप्रायेणाह हेयादिचतुर्वर्गं **हेय-मिति** । हातुमिष्टतमं हेयं दुःखं तस्य निर्वर्तकं निष्पादकं जन्मादि-चतुष्टयम् बीजाङ्कुरन्यायेन एतत्सहितं दुःखं हेयमभिप्रेतम् । इदमे-कम् । हानमात्यन्तिकम् तत्त्वज्ञानं करणव्युत्पत्तेः । आत्यन्तिकमिति क्रियाविशेषणमात्यन्तिकी दुःखहानिर्हि मुक्तिरिति । तस्य हानस्यो-पायः प्राप्तिकरणं शास्त्रम् । उपैत्यनेनेति व्युत्पत्तेः । अधिगन्तव्यो मोक्षः । अधिगन्तुमिष्टतमः । अधिगतिः प्राप्तिः । इति चतुर्वर्गः । किमर्थ-

---

(टि०) (१) श्रवणमनननिदिध्यासनदर्शनरूपम् ।
(२) मिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखरूपम् ।

(भा०) तस्योपायोऽधिगन्तव्य इत्येतानि चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयसमधिगच्छति।

"तत्र संशयादीनां पृथग्वचनमनर्थकम्। संशयादयो यथा-

---

(भा०च०)मेतद्विशदीकृत्योच्यत इत्यत आह **एतानि चत्वारीति**। अर्थपदानि। अर्थवति च प्रमाणे प्रमाता प्रमेयं प्रमितिरिति वाक्ये यदर्थ इति वर्णयुगमुक्तं तत्पदं येषां तान्यर्थपदानि। सम्यग्बुद्ध्वेत्यस्यायमभिप्रायः लाभपूजाख्यातिकामा खल्विदं शास्त्रमधीयते जल्पवितण्डाभ्यां किल ते दिग्विजयमिच्छन्ति न तेषां रागिणां सम्यग्बोधो भवति। ये तु खल्विदं श्रवणमननाभ्यां सम्पूर्णमवगत्य वेदान्तिभिः सह वादकथां कृत्वा तत्त्वज्ञानविवृद्धिं प्राप्तास्त एव सम्यग्बोधिनः। स्फुटमिदं चतुर्थे द्वितीयाह्निके भविष्यतीति। अधिगच्छतीत्येकवचनमधिकारिवैरल्यप्रतिपादकम्। ननु प्रमाणप्रमेयाभ्यामेव शास्त्रं चरितार्थं प्रमाणेन खल्वात्मादिप्रमेयवृन्दं परिच्छिद्य प्रमाताऽसौ हेयोपादेयतया विभज्य हेयहानिरूपमुपादेयमुपादास्यते किमन्येषां संशयादीनां पृथक्कृत्यप्रदर्शनेनेत्याशङ्कां निराकर्त्तुं तामुत्थापयति तत्र संशयादीनामिति। तत्र प्रथमसूत्रे शास्त्रावयवे उद्देशरूपे संशयादिनिग्रहस्थानान्तानां पृथक्पृथक्पदैर्वचनं प्रतिपादनमनर्थकं निष्प्रयोजनम् कुत इत्यत आह **संशयादय इति**। प्रमाणेषु लिङ्गविधया किञ्चिदर्थसाधकत्वेनान्तर्भवन्तः अन्तर्भावमभेदं प्राप्नुवन्तः न व्यतिरिच्यन्ते न भिद्यन्ते न पृथक्कृत्य वक्तुं युज्यन्ते। एवं प्रमेयेष्वपि अर्द्धमङ्गीकृत्य परिहरति सत्यमित्यादिना। इमाः प्रसिद्धा विद्याः शास्त्राणि तत्त्वानि विदन्ति आभिरिति व्युत्पत्तेः पृथक्प्रस्थानाः विभिन्नव्यापाराः प्राणभृतां चेतनानामनुग्रहाय उपकाराय उपदिश्यन्ते शिक्ष्यन्ते शास्त्रकारिभिराचार्य्यैरिति शेषः।

(भा०) सम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति" ।

सत्यमेतत् । इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते । यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या । तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः । तेषां पृथग्वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्यात्, यथोपनिषदः ।

---

(ख०) 'पृथक्प्रस्थानाः' विविधप्रकारेण नानाविषयप्रतिपादिकाः ।
यद्यपि संशयादयः यथासम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भावयितुं शक्यन्ते तथापि शास्त्रस्यास्य नानाविषयप्रतिपादकत्वसूचनाय तेषां पृथगुपन्यासः ॥

---

(भा०च०) कास्ता इत्यत आह यासामिति । यासां त्रयी वार्त्ता दण्डनीतिरान्वीक्षिकी चेति चतस्रस्तासां चतसृणां पूरणी चतुर्थी । तत्र त्रयी ब्राह्मणप्रधाना वार्त्ता वैश्यप्रधाना दण्डनीती राजप्रधाना तासामुपकारिकेयमान्वीक्षिकी धर्मार्थकाममोक्षानुकूला सर्वैरुपेया । तत्राग्निहोत्राहवनीयादिप्रस्थाना त्रयी । हलशकटक्षेत्रादिप्रस्थाना वार्त्ता । स्वाम्यमात्यदुर्गगजतुरगादिशत्रुमित्रोदासीनादिपदार्थप्रस्थाना दण्डनीतिः । संशयादिभेदानुविधायिन्यान्वीक्षिकी इति वार्त्तिकम् । (१)प्रस्थानं ज्ञापनाख्यो व्यापारः । तेषु प्रस्थानं यस्या इति विग्रहः । तथा चाक्षेपसमाधाने एवं वर्त्तेते । संशयादयः पृथक् न वक्तव्याः प्रमाणान्तर्भावादिति चेन्न विद्याप्रकारज्ञापनार्थत्वादिति । संशयादिप्रकारमन्तरेण अध्यात्मविद्यामात्रमियं स्यात् । ततः किं स्यात् ? अध्यात्मविद्यामात्रत्वादुपनिषद्विद्यावत्त्रैय्यामेवान्तर्भावादिति विद्याचतुष्कं निवर्त्तेत ।

---

(टि०) (१) प्रस्थानभेदः प्रतिपाद्यविषयभेद इति केचित् ।

(भा०) तस्मात् संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते ।

तत्र नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते, किं तर्हि ? संशयितेऽर्थे । यथोक्तं—'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः'(अ० १ आ० १ सू० ४१) इति । विमर्शः–संशयः । पक्षप्रतिपक्षौ–न्यायप्रवृत्तिः । अर्थावधारणं–निर्णयस्तत्त्वज्ञान-

---

(ख०) संशयादीनाम्पदार्थानां न्यायविद्यान्तर्गतत्वम्प्रदर्शयितुमुपक्रमते तत्रेति ।

यस्मात् कारणात् संशयः सर्वन्यायप्रवृत्तेर्मूलम् ।

---

(भा०च०) तस्मात् पृथगुक्ताः सूत्रकारेणेत्याशयेनोपसंहरति **तस्मादिति**। संशयादिभिरिति प्रकारे तृतीया। पृथगुक्तेरित्यर्थः। प्रस्थाप्यते व्यापार्यते व्याप्रियते न्यायविद्या तत्त्वज्ञानं करोति तां तत्त्वज्ञानं कारयति सूत्रकार इत्यर्थः । पृथक्प्रदर्शनस्य फलमाह **तत्रेति** । तत्र संशयादौ संशयोऽनवधारणात्मकः प्रत्ययः। अनुपलब्धे अनिर्णीते न्यायो न प्रवर्त्तते । निर्णीतेऽपि न्यायो न प्रवर्त्तते। ननु व्याघातः, इति शङ्कां व्यावर्त्तयति । **किं तर्हि संशयितेऽर्थे इति**(१)। अयमर्थः पक्षतावच्छेदकधर्मेण निर्णीते साध्यधर्मेण संशयिते धर्मिणि न्यायः प्रवर्त्तते। न्यायोऽत्र वादकथा बोध्या जल्पवितण्डारूपस्य न्यायस्य संशयानपेक्षणादिति । संशयस्य न्यायप्रवर्त्तकत्वं सूत्रकृद्वचनेन प्रतिपादयति **यथोक्तमिति**। विमृश्य संशय्य काभ्यां पक्षप्रतिपक्षाभ्यां साधयितुं बाधितुमिष्टाभ्यां धर्माभ्याम् विशेषणेऽत्र तृतीया । अर्थावधारणं निर्णयः । पक्ष्यत इति पक्षः तद्विपरीतः प्रतिपक्षः । **न्यायप्रवृत्तिरिति** । न्यायः कथा प्रवर्त्तते अनयेति न्यायप्रवृत्तिः । **तत्त्वज्ञानमिति** । तस्य संशयविषयस्य ध-

---

(टि०) (१) तत्र नानुपलब्धेऽर्थे न निर्णीते प्रवर्तते ।
किन्तु संशयिते न्यायस्तदङ्ग तेन संशयः ॥

(भा०) मिति । स चायं किंस्विदिति वस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः प्रमेयेऽन्तर्भवन्नेवमर्थं पृथगुच्यते ।

अथ प्रयोजनम् । येन प्रयुक्तः प्रवर्तते, तत् प्रयोजनम् ।

---

(भा०च०) र्मिणो भावः प्रकारः स हि प्रक्रियते प्रतिपक्षाद्भिद्यते तेन तस्य वा ज्ञानं स्वधर्मिविषयं तत्त्वज्ञानम् । संशयलक्षणं संशयप्रयोजनं च प्रतिपाद्योपसंहरति **सचायमिति । किंस्विदिति** किंस्यादित्यर्थे । वस्तुनोः प्रकारयोः विमर्शमात्रं ज्ञानमात्रं सामान्योक्तं विवृणोति । **अनवधारणमिति** । एवमर्थं तत्त्वनिर्णयार्थं क्रियाविशेषणमिदम् । **अथेति** । प्रयुङ्क्ते प्रवर्त्तते येन तत्प्रयोजनम् । प्रयुक्तः प्रेरितः । येनेति हेतुकर्तृत्वं विवक्षितम् । तच्चेष्यमाणत्वेनेत्याह यमिति । कर्म-धात्वर्थ-व्यापारमारभते करोति । उद्देश्योद्देशकभावेन प्राणिनो व्याप्ताः सम्बद्धाः । कर्म्माणि व्यापाराः । साध्यसाधनसम्बन्धेन विद्याः शास्त्राणि तथा प्रतिपाद्यप्रतिपादकभावेनापि । **तदिति** । तत्प्रयोजनमाश्रयोऽनुकूलो यस्य स तदाश्रयः । प्रवर्त्तते उत्पद्यते । **प्रमाणैरिति** । प्रमाणैरनुमानादिभिरर्थस्य परीक्षणं परिशोधनं न्यायो न्ययनं निश्चयः । कुतर्कजं परीक्षणं व्यावर्त्तयति **प्रत्यक्षागमाश्रितमिति** । प्रत्यक्षागमाविरुद्धमित्यर्थः । अनुमानमनुमितिः । सान्वीक्षा । शब्दद्वयस्य यौगिकत्वं दर्शयति । प्रत्यक्षागमाभ्यामनु पश्चात् ईक्षणमन्वीक्षणम् । पश्चान्मितिरनुमितिः । अयं भावः । श्रुतिस्मृतिकारैः सर्वज्ञैः स्वयं दृष्टोऽर्थः आगमेन प्रदर्श्यते । ततः श्रुत्वा स्मृत्वा च प्रमाता एडमूकतां विहाय वावदूकतामासाद्य जल्पवितण्डाभ्यां सद्विद्याविद्वेषिणः परिभूय तान् सन्दिग्धीकृत्योपदिशति । तेषामपि स्वस्य चानेन क्रमेण पश्चादीक्षणं भवतीति । तयाऽनुमित्या तामुद्दिश्य प्रवर्त्तते व्याप्रियते इत्यान्वीक्षिकी

(भा०) यमर्थमभीप्सन् जिहासन् वा कर्मारभते, तेनानेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः, तदाश्रयश्च न्यायः प्रवर्तते। कः पुनरयं न्यायः ?। प्रमाणैरर्थपरीक्षणं न्यायः। प्रत्यक्षागमाश्रितमनुमानम्। साऽन्वीक्षा। प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षण-

---

(ख०) प्रयोजनमुद्दिश्यैव यतो न्यायः प्रवर्तते अत एव प्रयोजनं न्यायस्य मूलम्।

प्रमाणैरिति। समस्तप्रमाणव्यापारादर्थाधिगतिर्न्याय इति वार्त्तिकम्॥ प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः 'प्रमाणानि' तैः 'अर्थस्य' लिङ्गस्य परीक्षणं 'न्याय' इति तात्पर्यटीका।

---

(भा०च०) "कारकात् क्रियायुक्ते" इति सारस्वतसूत्रादिकः "शेषे" इति पाणिनीयसूत्रात् ठक्। तस्या नामान्तरे आह **न्यायविद्येति**। न्यायाय विद्या न्यायविद्या तथा न्यायशास्त्रमिति। न्यायस्तत्त्वनिर्णयः। ननु युक्तिशास्त्रमिदं यस्य यस्य युक्ता प्रतिभा तेन तेन तथा तथा अर्थः कल्पनीयो यथेष्टं तया तया युक्तिप्रतिभयेति शङ्क्यम् निराकरोति **यत्पुनरिति**। स्पष्टम्। अत्र वार्त्तिकम्। यदि ह्यनुमानादधिगतोऽर्थः प्रत्यक्षागमाभ्यामनुसन्धीयते अथ स्फुटतरः प्रत्ययो भवति। यत्र पुनरेतानि प्रमाणानीतरेतरमप्रतिसंहितानि व्यावृत्तानि प्रयुज्यन्ते न्यायविप्लवोऽसौ लाभपूजाख्यातिकामस्तीर्थप्रतिरूपकः प्रवादो वर्ण्यते यत्पुनरनुमानं प्रत्यक्षागमविरोधि न्यायाभासः स इति। प्रत्यक्षविरुद्धन्तावत् वह्निरनुष्णः कृतकत्वात् घटादिवदिति। कः पुनरस्यानुमानस्य विरोधः। अनुमानाविषये प्रयोगः। नायमनुमानविषयकः प्रयोगः। नायमनुमानस्य विषयः यस्मिन् विषये एतत्प्रयुज्यते सः प्रत्यक्षेणापहृत इति। अपरे पुनः अश्रा-

(भा०) मन्वीक्षा। तया प्रवर्त्तत इत्यान्वीक्षिकी-न्यायविद्या-न्यायशास्त्रम्। यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स इति। तत्र वादजल्पौ सप्रयोजनौ। वितण्डा तु परीक्ष्यते। वितण्डया प्रव-

---

( ख० ) प्रत्यक्षेति--उपमानमप्युपलक्षयतीति तात्पर्यटीका। सप्रयोजनाविति। तत्त्वज्ञानमेव वादस्य प्रयोजनम्। विजयश्च जल्पस्य। तत्रेति। तेनानेन प्रयोजनेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ता इत्युक्तम्प्राक्॥ तत्र प्रतिपदार्थम्प्रयोजनं दर्शयितुमुपक्रमते।

---

(भा०च०) णः शब्द इति प्रत्यक्षविरोधं वर्णयन्ति तैस्तु न प्रत्यक्षविषयो ज्ञातः नानुमानविषय इति। किं कारणम्? इन्द्रियवृत्तीनामतीन्द्रियत्वात्। श्रावणत्वं चेन्द्रियवृत्तिः। सा कथं प्रत्यक्षविषयो भविष्यति। आगमविरुद्धन्तु शुचि नरशिरःकपालं प्राण्यङ्गत्वात् शङ्खशुक्तिवदिति। कथमिदमागमविरुद्धं शुचि नरशिरःकपालमिति वदता शुच्यर्थो वाच्यः किमुक्तं भवति शुचीति यदि स्प्रष्टुः प्रत्यवायाभावः स कस्येति वाच्यं यद्यात्मन इति ब्रूयात् तदागमानुष्ठानादेवमेतत्। अथ त्रयीविदामिति ब्रूयात् तत्तस्यानभ्युपगमाद्विरोध इति। प्रयोजनेन सर्वे कर्त्तारः सर्वाणि कर्माणि व्याप्तानीत्युक्तम्। कथकानां च तिस्रः कथाः कर्म्माणि च भवन्ति कर्म्म च कर्त्तुः सप्रयोजनमुद्दिश्यैव भवति वादकथया जल्पकथया वा तत्त्वनिर्णयः स्वपक्षपालनं वा प्रयोजनमस्ति वितण्डायां तु द्वयमपि नेक्ष्यते वैतण्डिकस्य स्वपक्षस्थापनाभावात् तत्त्वनिर्णयाभावाच्च प्रयोजनाभावः प्रतिभाति। वितण्डाप्रवृत्त्या च प्रयोजनं प्रतिभाति प्रवृत्तेः सप्रयोजनत्वनियमात् तथा च प्रयोजनवत्त्वेन वितण्डाप्रवृत्तिः संशयिताऽतस्तत्परीक्षां प्रवर्त्तयितुमिदमाह **तत्र वादेति**। तत्र कर्म्मसु मध्ये। परीक्ष्यते परितः सर्वतः प्रकारैरीक्षणं कार्य्यते

(भा०) र्तमानो वैतण्डिकः । स प्रयोजनमनुयुक्तो यदि प्रतिपद्यते सोऽस्य पक्षः सोऽस्य सिद्धान्त इति वैताण्डिकत्वं जहाति । अथ न प्रतिपद्यते नायं लौकिको न परीक्षक इत्यापद्यते । अथापि परपक्ष-

---

(ख०) स प्रयोजनमित्यादि । वितण्डायां सर्वथा प्रयोजनाभाव एव प्रतिभाति । वैतण्डिकत्वहानिभयाद्वैतण्डिकः स्वपक्षन्नैवोपस्थापयति । न चैतावता तस्य स्वपक्षो नास्त्येवेति शङ्कनीयम् । यथाहुर्वार्तिककाराः । न दूषणमात्रं वितण्डा किन्त्वभ्युपेत्य पक्षं यो न स्थापयति स वैतण्डिक इति । तत्र–परसाधनदूषणेनास्य स्वपक्षः सिध्यतु मा वा सैत्सीत् स तु स्वपक्षसिद्ध्यैव प्रयोजनेन परसाधनमाहन्तीति भाव–इति टीकाकृतः ॥

---

(भा०चं०) इत्यर्थः । प्रयोजकणिजन्तस्य प्रयोगोऽयं ज्ञेयः–वितण्डां करोतीति वैताण्डिक इत्याह **वितण्डेति** । प्रवर्त्तमानः प्रवृत्तिं कुर्वाणः । वितण्डयेत्यभेदे तृतीया(१), तस्य च प्रवृत्तावन्वयः, प्रवृत्तिश्च व्यापारः पूर्ववत्तद्धितार्थोऽनुसन्धेयः । तं प्रति भवद्भिः प्रयोजनं प्रष्टव्यमित्याशयेनाह **स इति** । अनुयुक्तः पृष्टः । द्विकर्म्मकाविमौ धातू । प्रच्छ–ज्ञीप्सायाम् युजिर्–योगे अनुपूर्वः । धातूनामनेकार्थत्वमुपसर्गद्योत्यमिति यदि प्रतिपद्यते स्वीकरोति । प्रक्ष्यत इति पक्षः परिग्रहः परिग्रहकर्म, कर्मणि घञ् ज्ञातव्यः । पक्ष–परिग्रहे इति धातुश्चौरादिकः । परिग्रहणं स्वीकारः । सोऽस्य सिद्धान्तः प्रामाणिकत्वेनाभ्युपगतोऽर्थः । अत स्थाप्यः पक्षोऽस्तीति वैतण्डिकत्वं जहाति । वैतण्डिकस्य स्थाप्यः पक्षो नास्तीति प्रसिद्धेः । वैतण्डिकत्वं वितण्डाकुशलत्वम् । एतद्भिया यदि न प्रतिपद्यते तदा न लौकिको न वा परीक्षक इत्यापद्यते । लोकसामान्यमनतीतो लौकिकः ।

---

(टि०) (१) इदं चैकदेशान्वयमनुसृत्य ।

(भा०) प्रतिषेधज्ञापनं प्रयोजनं ब्रवीति एतदपि तादृगेव । यो ज्ञापयति यो जानाति येन ज्ञाप्यते यच्च ज्ञाप्यते एतच्च प्रतिपद्यते यदि तदा वैतण्डिकत्वं जहाति । अथ न प्रतिपद्यते परपक्षप्रतिषेधज्ञापनं प्रयोजनमित्येतदस्य वाक्यमनर्थकं भवति । वाक्यसमूहश्च स्थापनाहीनो वितण्डा । तस्य यद्यभिधेयं प्रति-

---

(ख०) 'यो ज्ञापयतीति' वैतण्डिकम्परामृशति, 'यो जानाती'ति तस्य प्रतिपक्षीभूतम्पुरुषम्, 'येन ज्ञाप्यत' इति वैतण्डिकेनोपन्यस्तं हेतुजातम्, 'यच्च ज्ञाप्यत' इति प्रतिपक्षनिरसनम् ॥ एतच्चतुर्वर्गं यदि वैतण्डिकोऽभ्युपगच्छति तदाऽस्यैवाभ्युपगमस्य तस्य स्वपक्षत्वन्ततश्च तस्य वैताण्डिकत्वहानिः ।

(ख०) तस्येति वाक्यसमूहस्येत्यर्थः ।

---

(भा०चं) परीक्षकः कारुणिकः प्रामाणिक इत्यर्थः । करणेन प्रमाणेन प्रवर्त्तते, करणे साधुः करणम् वेद करणेन जानाति वेत्याद्यर्थे तद्धितोऽनुसन्धेयः । परीक्षकः कारुणिक इत्यमरः । करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपीत्यप्यमरः । साधकमुत्पादकं प्रतिपादकञ्चेति साधयतेर्द्विधाऽर्थत्वादवधेयम् । एतद्धिया परपक्षप्रतिषेधज्ञापनं ममेति ब्रवीति तथापि पूर्वदशापत्तिरित्याह **एतदपि तादृगेवेति** । दूषणान्तरमाह **यो ज्ञापयतीति** । ज्ञापयितृ–ज्ञातृ–ज्ञान–ज्ञेयचतुर्वर्गस्य प्रामाणिकत्वेनाभ्युपगमे स्थाप्यपक्षकत्वाद्वैतण्डिकत्वं जहातीति भावः । दूषणान्तरमाह **वाक्यमिति** । स्वप्रयुक्तवाक्यस्य निरभिधेयत्वे वितण्डात्वं नश्यति । तडि–आघाते इति चौरादिकः । वितण्डयति विमतं पक्षं खण्डयति यया सा वितण्डा, वितण्डनं वा वितण्डा, वितण्डा हि परपक्षप्रतिषेधना तस्या अभिधेयानङ्गीकारे वाक्यस्याभिधायकत्वा-

(भा०) पद्यते सोऽस्य पक्षः स्थापनीयो भवति । अथ न प्रतिपद्यते प्रलापमात्रमनर्थकं भवति, वितण्डात्वं निवर्तत इति ।

अथ दृष्टान्तः प्रत्यक्षविषयोऽर्थः-यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते । स च प्रमेयम् । तस्य पृथग्वचनं च तदाश्रयावनुमानागमौ । तस्मिन् सति स्यातामनुमानागमावसति

---

(ख०) यत्रेति । अत्र च यो दृष्टान्तस्स एवम्, न तु य एवं स दृष्टान्तः-इति तात्पर्यकृतः ।

(ख०) स चेति । सोऽयन्दृष्टान्तः प्रमेयम्, उपलब्धिविषयत्वात्-इति वार्तिकम् । तस्येति । दृष्टान्तस्य प्रमेयत्वेऽपि प्रमेयात् पृथगुपन्यासः कृतो यतस्तदाश्रयावेवानुमानागमाविति योजना ।

---

(भा०चं) भावादुन्मत्तप्रलापमात्रत्वमिति(१) ॥

प्रसङ्गप्राप्तां वितण्डां परीक्ष्य क्रमप्राप्तं दृष्टान्तं पृथग्वचनप्रयोजनदर्शनाय निरूपयति । **अथ दृष्टान्त इति** । निरूप्यत इति शेषः । अति बन्धने इति धातुः । बन्धनञ्च सम्बन्धः स चेह साध्यसाधनयोः स्वाभाविको विवक्षितः । यः प्रतिबन्ध इत्युच्यते । अन्त्येते साध्यसाधने यस्मिन् पक्षे सपक्षे च सोऽन्तः । दृष्टश्चासावन्तश्चेति दृष्टान्तः । पक्षव्यावृत्तये दृष्ट इति विशेषणं निश्चितार्थम् । कर्म्मणि क्तोऽतीतार्थे । धातुप्रत्ययौ व्याचष्टे प्रत्यक्षविषय इति । प्रत्यक्षमिह भाक्तम् प्रमाणमात्रपरम् । अर्थः साध्यसाधनधर्म्मी दृष्टिकल्पना लौकिकेति(२) । लौकिका लोकसामान्यमनतीता परीक्षकाः साङ्गप्रमा-

---

(टि०) (१) एतावता सन्दर्भेण वितण्डायामपि प्रयोजनव्याप्तिः प्रदर्शिता अन्यथा प्रयोजनस्वरूपोपदर्शनानन्तरं दृष्टान्ते व्याख्यातव्ये तदुल्लङ्घनेन वितण्डापरीक्षाया अनवसरप्राप्ततया तदुपन्यासः सन्दर्भविरुद्धः स्यात् ।

(२) भाष्ये प्रत्यक्षविषयोर्थ इति दृष्टान्तलक्षणमुक्त्वा पुनर्यत्र लौ-

(भा०) च न स्याताम् । तदाश्रया च न्यायप्रवृत्तिः । दृष्टान्तविरोधेन च परपक्षप्रतिषेधो वचनीयो भवति दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति । नास्तिकश्च दृष्टान्तमभ्युपगच्छन्नास्तिकत्वं

(ख०) दृष्टान्तविरोधेनेति । सर्ववादिप्रसिद्धो दृष्टान्तस्तद्विरुद्धस्य परपक्षस्य तद्विरोधेनैव प्रतिक्षेपो भवति ।

(ख०) नास्तिक इति । दृष्टान्तोपन्यासे पूर्वदृष्टव्यक्तीनान्तद्गत-धर्माणाञ्च प्रदर्शनम्भवति । तच्चेत्क्षणभङ्गवादिना क्रियते तदा तेनैव तस्य वदतो व्याघातः ।

(भा०चं०) णनिरूपकाः । न व्याहन्यते विप्रतिपत्त्या न बाध्यते । स च प्रमेयम् प्रमेयाभिन्नः । तस्य पृथग्वचनप्रयोजनमाह **तदाश्रया-वित्यादिना** । आश्रयोऽनुकूलः स आश्रयो ययोस्तौ । आगमः उप-देशः । यथा च आत्मानमधिकृत्य श्रुतिः–आकाशवत् सर्वगतश्च नि-त्य इति । न्यायः पञ्चावयववाक्यम् । न्याये प्रवृत्तिः न्यायप्र-वृत्तिः । दृष्टान्तविरोधः । दृष्टान्ते साध्यसाधनसम्बन्धबाधः तेन पर-पक्षस्य पराभिमतसाध्यस्य प्रतिषेधोऽभावः वचनीयः प्रतिपाद-यितुं शक्यः । शक्यार्थे कृत्यविधानात् । दृष्टान्तेन समा-धिः सादृश्यप्रदर्शनम् पक्षस्योपसंहार इति यावत् । सं सम्यक् आधीयतेऽनेनेति व्युत्पत्तेः, करणे किः, तेन साधनीयः प्रज्ञाप-नीयः । नास्तिको वेदप्रामाण्यानभ्युपगन्ता । अस्ति नास्ति दिष्टं मतिरिति सूत्राट्ठक् । नास्तिको वेदनिन्दक इति स्मृतेः । अभ्युप-गच्छन् स्वीकुर्वन् । नास्तिकत्वमनुमानागमादिप्रमाणानभ्युपगन्तृत्वं

(टि०) किकपरीक्षकाणामित्याद्युपन्यासः किमर्थमिति चेत् पूर्वलक्षणे यो यः प्रत्यक्षविषयः स दृष्टान्तः इत्युक्ते अदृष्टान्तस्यापि प्रत्यक्ष-विषयत्वात् नापि यो दृष्टान्तः स सर्वः प्रत्यक्षविषयः आगमादिवि-षयस्यापि दृष्टान्तत्वात् इति व्यभिचारं मनसि निधाय तथेत्युक्तम् ।

(भा०) जहाति। अनभ्युपगच्छन् किंसाधनः परमुपालभेतेति। निरुक्तेन च दृष्टान्तेन शक्यमभिधातुम्—'साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम् (अ० १ आ० १ सू० ३६)। तद्विपर्ययाद्विपरीतम्'(अ० १ आ १ सू० ३७) इति।

अस्त्ययमित्यनुज्ञायमानोऽर्थः सिद्धान्तः। स च प्रमेयम्। तस्य पृथग्वचनम्-सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्तन्ते, नातोऽन्यथेति।

---

(भा०चं०) जहाति स्वासम्बन्धीकरोति। आस्तिकत्वमापद्यत इति भावः। किं साधनमुपसंहारबीजम् यस्य स किंसाधनः। परं परपक्षम् उपालभेत प्रतिषेधेत। दृष्टान्तस्योपसंहारबीजतां दर्शयितुमाह **निरुक्तेन चेति**। अभिधातुमभिधानं कर्तुम्। यादृगभिधानं विवक्षितं तन्निरूपकं सूत्रमाह **साध्यसाधर्म्येति**। साध्यो धर्म्मी धर्म्मश्च इह पूर्व्वोग्राह्यः साध्येन साधर्म्यं हेतुमत्त्वं तस्मात् तत्प्रदर्श्य तस्य पक्षस्य धार्म्मिणो धर्म्मः साध्यरूपपक्षस्तं भावयितुं शीलमस्येति तद्धर्म्मभावी दृष्टान्तो दृष्टान्तवचनम्। व्याप्यव्यापकयोः सामानाधिकरण्यं प्रतिपद्यतेऽनेनेति उदाहरणम्। अन्वयदृष्टान्तमुक्त्वा व्यतिरेकिणं तमाह **तद्विपर्य्ययेति**। तस्य साध्यसाधर्म्म्यस्य विपर्य्ययात् वैधर्म्म्यात् विपरीतमतद्धर्म्मभावी दृष्टान्त उदाहरणम्। एवमुदाहृत्यावधारितव्याप्तिको हेतुर्द्विविधोऽपि पक्षेऽयं तथा न तथेति वोपसंह्रियते इत्युपसंहारबीजत्वमस्येति भावः।

दृष्टान्तस्य पृथग्वचनप्रयोजनमुक्त्वा सिद्धान्तस्य तदाह **अस्त्ययमित्यादिना**। अस्ति प्रमाणविषय इत्यनुज्ञायमानोऽनु प्रमाणजन्यप्रतीत्यनन्तरं ज्ञायमानः स्वीक्रियमाणः। एवमेवेतीष्यमाणो वा। सिद्धान्तभेदेषु सिद्धान्तविशेषेषु। सन्ति ह्यास्तिकनास्तिकदर्शनेषु द्वादश-

(भा०) साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः समूहमपेक्ष्यावयवा उच्यन्ते । तेषु प्रमाणसमवायः । आगमः प्रतिज्ञा । हेतुरनुमानम् । उदाहरणं

---

(ख०) तेष्विति । अवयवेषु सर्वेषाम्प्रमाणानामेकत्रीभावः । उक्तमेव प्रपञ्चयति आगम इति । प्रतिज्ञा शब्दप्रमाणरूपः, हेतुरनुमानरूप इत्यादि ।

---

(भा०चं०)विधेषु सिद्धान्तभेदाः। चार्वाक–सौम–सौगत–जिना–ऽऽर्हत–दिगम्बराः षड् बाह्याः सिद्धान्ताः । नैयायिक–वैशेषिक–साङ्ख्य–पातञ्जल–जैमिनीय–बादरायणीयाः षड् वैदिकसिद्धान्ताः । आत्मानात्मधर्म्मिषु धर्म्मविशेषा एव ते धर्म्मिषु तत्प्रयुक्तं सिद्धान्तभिन्नत्वम् । धर्म्मेष्वेवैते प्रतिवादिनो प्रतिपद्यन्ते न धर्म्मिष्विति ध्येयम् । **सत्स्विति** । तेषु सत्सु ज्ञायमानेषु प्रवर्त्तन्ते व्याप्रियन्ते ।

अवयवानां पृथग्वचनप्रयोजनमाह **साधनीयस्यार्थस्येत्यादिना** । साधनीयस्य पञ्चभिरवयवैर्ज्ञापनीयस्य अर्थस्य साध्यधर्म्मविशिष्टस्य साध्यस्य धर्म्मिणः, साध्यधर्म्मिविशिष्टस्य साध्यधर्म्मस्य वा; सिद्धिः प्रमितिः यावति यत्सङ्ख्याके शब्दसमूहे वैषयिकसप्तमीयमधिकरणविशेषार्था। वैषयिक इति विषय्युच्यते विषयी चेहोत्पादकः विषयश्चोत्पाद्यः । परिसमाप्यते निष्पद्यते कर्मकर्त्तरिप्रयोगोऽयम् । वार्त्तिककृतस्तु–सिद्धिः पदार्थस्य तथात्वम् तथात्वमित्यस्य तत्त्वमित्यर्थः । परिसमाप्तिश्चान्यथा व्याचक्षते । का परिसमाप्तिः ? विशेषप्रत्यय इति । एतस्मिन् पक्षे विषयी ज्ञापकः । समाख्याशब्दैरभिधायावयवानां लक्षणमाह । **तेष्विति** । प्रतिज्ञादिसंज्ञकेषु मध्ये प्रतिज्ञा आगमः । आगमः शब्दप्रमाणम् । आगम इवागमः । कोऽयमिवार्थः ? आगमादिगतार्थस्य प्रतिपादकत्वम् ।

**(भा०) प्रत्यक्षम् । उपनयनमुपमानम् । सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति । सोऽयं परमो न्याय इति । एतेन वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति । तदाश्रया च तत्त्वव्यवस्था । ते चैतेऽवयवाः शब्दविशेषाः सन्तः प्रमेयेऽन्तर्भूता एवमर्थं पृथगुच्यन्त इति ।**

---

(ख०) परम इति । परमत्वं विप्रतिपन्नपुरुषम्प्रति प्रतिपादकत्वम् । एकैकशः प्रवृत्तानि प्रमाणानि विप्रतिपन्नम्पुरुषन्नैव विश्वासयन्ति । एकवाक्यतापन्नानि तु सर्वथा प्रतिपादयन्त्येव विप्रतिपन्नानपीत्येष परम इत्यर्थः ।

(ख०) तत्त्वव्यवस्थेति । विप्रतिपत्तिविषयेषु निश्चयात्मकं ज्ञानमवयववाक्याज्जायत इत्यर्थः ।

(ख०) एवमर्थमिति । उक्तहेतुभ्य इत्यर्थः ।

---

**(भा०चं०) यथाऽऽगमस्तमर्थं प्रतिपादयति तथा प्रतिज्ञापीति । ननु कथं विप्रतिपन्नस्य तादृशी प्रतिपत्तिः। विपरीतं जानतो न साध्यप्रतिपत्तिः सम्भवतीति चेन्न ।**

**अत्यन्तासत्यपि ह्यर्थे बुद्धिं शब्दः करोति हि ।**

**इति न्यायात् । अन्यथा तस्य हेत्वाकाङ्क्षां विना हेतुवचनानुपपत्तेः । प्रमाणस्य साङ्गस्य हेतोः समवायो यस्मिन् सः प्रमाणसमवायः । समवायः सम्बन्धः । हेतुर्हेतुसंज्ञकं वचनं पञ्चम्यन्तं पदम् । हेतुर्व्याप्यो धर्म्मः यदेव लिङ्गमुच्यते । अनुमीयतेऽनेनेति अनुमानम् । हेतुपदमिदमौपचारिकं ज्ञेयम् तथाऽनुमानपदमपि । अत्र वार्त्तिकम् । यत्तु द्वितीयं लिङ्गदर्शनम् तत्सम्बन्धः स्मृतिव्यक्तिहेतुभावात् हेतुरित्युच्यते इति । प्रत्यक्षमिव प्रत्यक्षं प्रतिवादिना दृष्टार्थस्य पुनरुपदर्शनात् । उदाह्रियतेऽनेनेति उदाहरणम् । उत् उत्कृष्टम् अविप्रतिपन्नं**

(भा०) तर्को न प्रमाणसङ्गृहीतो, न प्रमाणान्तरम्, प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते । तस्योदाहरणम् । किमिदं जन्म कृतकेन हेतुना निर्वर्त्यते, आहो स्विदकृतकेन, अथाकस्मिकम् ? एवमविज्ञातेऽर्थे कारणोपपत्त्या ऊहः प्रवर्तते । यदि कृतकेन हेतुना निर्वर्त्यते, हेतूच्छेदादुपपन्नोऽयं जन्मोच्छेदः । अथा-

---

(ख०) अविज्ञात इति संशयित इत्यर्थः । कारणोपपत्त्येति । सम्भावितकारणानान्तत्कार्याणाञ्च विचारेणेत्यर्थः ।

---

(भा०चं०) साध्यसाधनप्रतिबन्धाधिकरणमाद्रियते पुनः प्रतिपद्यतेऽनेनेत्युदाहरणम् । यथा प्रत्यक्षे न विप्रतिपद्यते एवमुदाहरणेऽपीति । उप उपमानेन नीयते प्रतिपाद्यतेऽनेनेत्युपनयः । उपमानमिवोपमानं यथा तथेत्युपमानैकदेशे उपमानोपचारात् । उपमानं खलु यथा तथेत्युपदेशोपयोगे सति प्रत्यक्षागमस्मृतिपूर्व्वकं सामान्यज्ञानम् तत्रोपमानैकदेशे उपमानमित्युपचरन्ति भाष्यकाराः । सर्वेषां प्रतिज्ञादीनां चतुर्णाम् एकार्थसमवाय एकार्थप्रतिपादकत्वं तस्मिन्निमित्ते सामर्थ्यप्रदर्शनम् सामर्थ्यप्रदर्शकं वचनम् । नितरां गम्यते प्रतिज्ञार्थोऽनेनेति निगमनम् । किं पुनः सामर्थ्यम् ? इतरेतरबोधितापेक्षत्वम् । इदं चाग्रे प्रतिपादयिष्यामः । **सोयं परमो न्याय** इति । कः पुनः परमपदार्थः ? विप्रतिपन्नपुरुषप्रतिपादकत्वम् । एवमर्थं वादादिप्रवृत्तये तत्त्वव्यवस्थायै ।

तर्कस्य पृथग्वचनप्रयोजनं वक्तुं तत्स्वरूपं प्रदर्शयति । न प्रमाणसङ्गृहीतः । सङ्ग्रहोऽभेदः । प्रमाणेषु सङ्गृहीतः प्रमाणसङ्गृहीतः चतुर्विधप्रमाणेष्वभिन्नो नेत्यर्थः । तर्हि पञ्चमं प्रमाणं भवत्वित्यत आह न प्रमाणान्तरमिति । प्रमेयपरिच्छेदकत्वाभावान्नोभयमित्यर्थः । तर्हि स कुत्रोपयुज्यतेऽयमित्यत आह प्र-

(भा०) कृतकेन हेतुना, ततो हेतूच्छेदस्याशक्यत्वादनुपपन्नो जन्मोच्छेदः । अथाऽऽकस्मिकम्, अतोऽकस्मान्निर्वर्त्यमानं न पुनर्निर्वत्स्यतीति निवृत्तिकारणं नोपपद्यते, तेन जन्मानुच्छेद इति । एतस्मिंस्तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि प्रवर्तमानानि तर्केणानुगृह्यन्ते, तत्त्वज्ञानविषयस्य विभागात्

---

(ख०) अशक्यत्वादिति । यदकृतकन्तान्नित्यम् अकृतकश्च हेतुरत एव नित्योऽशक्यसमुच्छेद इति यावत् ।

प्रवर्तमानानीति । संशयितविषये व्यापृतानि प्रमाणानि जन्मनः कर्मनिमित्तत्वं बोधयन्ति । अस्मिंश्च बोधनाव्यापारे तानि तर्केणानुगृहीतानीति ।

विभागादिति । सम्भावितप्रकाराणां यथाक्रममुपन्यासादित्यर्थः ।

---

(भा०चं०)माणानामनुग्राहक इति । चक्षुषो दीप इव प्रमायां साध्यायां सहकारीति भावः । तदेवोपपादयति किञ्चिदित्यादिना । अपूर्वशरीरेन्द्रियादिप्राप्तिर्जन्म । निर्वर्त्यते । निष्पाद्यते । कारणेति । करोतीति कारणं ज्ञापकं प्रमाणमिति यावत् । हेतुकारणबीजादयः शब्दा उत्पत्तिज्ञप्तिस्थितिहेतुवाचका इति तत्र तत्र दर्शयिष्यामः । कारणोपपत्त्या ज्ञापकप्राप्त्या सहायेन सहकृतः ऊहश्चिन्ताविशेषः तं दर्शयति यदि कृतकेनेत्यादिना । यदिशब्दः पक्षान्तरे पक्षान्तरे चेत्यादिचेत्यनुशासनात् । पक्षान्तरं पक्षविशेषसम्भावना । विपरीतलक्षणया पक्षनिश्चयेऽपि प्रयुज्यते यदि वेदाः प्रमाणं स्युरित्यादौ । तर्कोऽयं वाक्यविशेषस्तज्जन्यज्ञानं वा । कृतकेन कार्येण करोतिरुत्पादनाख्यव्यापारार्थः । उपपन्नः प्रमाणप्राप्तः । निःशेषनिवृत्तिरुच्छेदः । निर्वत्स्यति निवर्त्तिष्यते तर्कस्य विषये विभज्य

(भा०) तत्त्वज्ञानाय कल्पते तर्क इति । सोऽयमित्थम्भूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय चार्थस्य भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोऽपीति ।

निर्णयस्तत्त्वज्ञानं प्रमाणानां फलम्, तदवसानो वादः । तस्य पालनार्थं जल्पवितण्डे । तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति । सोऽयं निर्णयः प्रमेयान्तर्भूत एवमर्थं पृथगुद्दिष्ट इति ।

---

(ख०) प्रमाणानामिति । अनेन पञ्चावयववाक्यमुपलक्षयति । तत्र सतर्काणाम्प्रमाणानां समवायात् । परमार्थतस्तु तर्कपूर्वकस्तत्त्वनिश्चयो विनिर्णय इति । प्रत्यक्षादीनामपि तर्कसहायानां निर्णयफलत्वमिति वाचस्पतिमिश्राः ।

---

(भा०चं०)दर्शिते (१)कर्म्म धर्म्माधर्म्मरूपं निमित्तं यस्य जन्मनस्तत्तथा । अनुगृह्णन्ते साहाय्यवन्ति क्रियन्ते गुणदोषप्रदर्शनं साहाय्यम् सहाय-कर्म्मगुणवचनब्राह्मणादिभ्यः कर्म्मणि चेति ष्यञ् । तत्त्वमबाधितः प्रकारस्तस्य तेन वा ज्ञानं तत्त्वज्ञानं तस्मै कल्पते उत्सहते उत्पद्यते न तु साक्षात्साधयत्यप्रमाणत्वादित्युक्तम् । (२)साधनाय । स्थापनाय । स्थितज्ञापनाय । उपालम्भनाय । प्रतिषेधनाय । अस्थितज्ञापनाय । सत्त्वासत्त्वज्ञानानुकूलव्यापारौ ते । फलं कार्य्यं प्रयोजनं वा तेनावसानं निष्पत्तिर्यस्य स तदवसानः । तस्य तत्त्वज्ञानस्य पालनं बाधकहेतु-निवारणम् साधकहेतुधारणञ्च । लोकयात्रा लोकव्यवहारस्तां वहतः सफलीकुरुतः ।

---

(टि०) (१) यद्येकं निमित्तं स्याद्वैचित्र्यं न भवेत् न ह्यभिन्नात् कारणात् कार्यवैचित्र्यं सुपपद्यते तस्याकस्मिकत्वप्रसङ्गात् । अतः कर्मण एव जन्महेतुत्वं युक्तम् ।

(२) कथायां प्रमाणसहितेन तर्केण नापूर्वः पक्षः स्थाप्यते खण्ड्यते वा किन्तु स्थितस्यैव ज्ञापनम् अस्थितस्य वेति भावः ।

(भा०) वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो वाक्यसमूहः पृथगुद्दिष्ट उपलक्षणार्थम्। उपलक्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति। तद्विशेषौ जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्तम् (अ० ४ आ० २ सू० ५०)।

---

(ख०) तद्विशेषाविति। विशेषोऽङ्गाधिक्यमङ्गहानिश्च। छलजातिनिग्रहस्थानप्रयोगादधिको जल्पः। स प्रतिपक्षस्थापनाहीनस्तु वितण्डा। विषयभेदाच्च भेदः। शिष्यादिविषयो वादः शिष्यमाणविषये जल्पवितण्डे इति वार्तिककाराः॥

---

(भा०चं०) वादस्य पृथग्वचनप्रयोजनाय तं लक्षयति **वादः खल्विति**। नानाऽनेको द्वाविति यावत् द्विप्रवक्तृकः। अधिकरणमधिकृतोऽर्थस्तेन तेन प्रकारेणैको धर्म्मी तत्तत्प्रकारवति साधनं साधनवचनं यस्मिन् स तथा। अन्यतरस्यान्यतरद्वाधिकरणमन्यतराधिकरणं तस्य निर्णयः तत्सत्त्वविषयकतद्विरोधिप्रकारासत्त्वविषयकः प्रत्ययस्तस्मिन् सति अवसानं समाप्तिर्यस्य स तथा। वाक्यसमूहः सतर्कपञ्चावयववाक्यम्। उपलक्षणं ज्ञानम् लक्ष दर्शनाङ्कनयोरित्येष धातुः। अर्थशब्देन नित्यचतुर्थीसमासो वाच्यलिङ्गता च तस्य। अर्थशब्दोऽयमिष्यमाणपरः। इदं चेह क्रियाविशेषणम्। तथा च वादस्य ज्ञानाय इष्यमाणाभिन्न उपदेश इत्यर्थः। चतुर्थी सम्बन्धे। उपलक्षितेन ज्ञातेन निर्णयार्थो प्रवृत्तिस्तत्त्वज्ञानाय भवतीति। भवति उत्पद्यते। जल्पवितण्डयोर्लक्षणं तत्तत्सूत्रभाष्यसमये दर्शयिष्याम इत्याशयेनाह **तद्विशेषाविति**। तत्त्वं सिद्धान्ताविशेषभूतः प्रकारः तस्याध्यवसायो निश्चयः प्रामाणिकत्वेनाभ्युपगतः प्रत्यय एव आत्मा नित्यो ज्ञानाश्रयो विभुरित्यादिरूपः। संरक्षणं पालनं प्रतिवादिप्र-

(भा०) निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति। जल्पवितण्डयोस्तु निग्रहस्थानानीति। छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थमिति। उपलक्षितानां स्ववाक्ये परिवर्जनं, छलजाति निग्रहस्थानानां परवाक्ये

---

(ख०) 'चोदनीया' इत्यत्र 'देशनीया'इति वार्तिकसम्मतः पाठः प्रतिभाति॥

हेत्वाभासानाम्पृथगुपदेशकारणे भाष्यसम्मते वार्तिककारस्यारुचिः प्रतिभाति। सैषाऽरुचिरेकदेशिवर्णितभाष्यतात्पर्येण भाष्य एवेति तात्पर्यकृतः परिशुद्धिकाराश्च। तात्पर्यकृतां सम्मतम्भाष्यार्थं इत्थंरूपः। हेत्वाभासोद्भावनस्य वादस्य च तत्त्वनिर्णय एव मुख्यम्प्रयोजनम् न वादिविजयः। एकस्मिन्वादे सर्वेषान्निग्रहस्थानानामुद्भावनन्नैव सम्भवति। हेत्वाभासाश्चेदृशानि निग्रहस्थानानि यानि वादे सर्वथोद्भावनार्हाणि भवन्ति। अत एवैषाम्पृथगुपदेश इति। एवञ्च वादे सर्वथोद्भावनीयत्वेनैव रूपेणैषाम्पृथगुद्देशार्हता, न तु पृथगुद्देशार्हत्वस्य वादोद्भावनीयत्वेन नान्तरीयकत्वम्—यथैकदेशिनोद्भावितमिति परिशुद्धिकृतः॥

---

(भा०चं०) युक्तकुहेतूत्पादनं तदर्थं तस्मै प्रयोजनाय इति। इत्युक्तम् सूत्रकृतेति शेषः। तथा च सूत्रम् तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवदिति। तयोः पृथग्वचनमुपलक्षणार्थमित्यनुवर्त्तनीयम्।

हेत्वाभासाश्च निग्रहस्थानमिति पञ्चमेऽध्याये सूत्रकृतोक्तम्। तथापि ततः पृथक्कृत्य वचनप्रयोजनमाह निग्रहस्थानेभ्य इति। अत्र वार्तिकम्। अन्यतमलिङ्गधर्म्मानुविधानेन वर्त्तमाना अहेतवः सन्तो हेतुवदवभासन्ते इति हेत्वाभासाः तेऽत्र निग्रहस्थानम्। निग्रहस्थानत्वप्राप्तानां पुनस्तेषां पृथगुपदेशो वादे नोदनीयत्वा-

(भा०) पर्य्यनुयोगः । जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः, स्वयं च सुकरः प्रयोग इति ।

---

(ख०) सुकरः प्रयोग इति । परेण जातौ प्रयुक्तायां प्राश्निकान् ब्रवीति जातिरनेन प्रयुक्तेति । त एनम्पर्यनुयुञ्जीरन् कथञ्जातिः कतमा जातिरतो जात्यभिज्ञः शक्नोति वक्तुमेवं जातिरियं च जातिरिति सुकरः प्रयोग इति वार्तिककृतः । सुकरः प्रयोगः जात्युत्तरस्य ज्ञानं ज्ञापनञ्चे-त्युभयरूपः स्ववाक्ये तत्परिवर्जनरूपश्च ।

इतीति । तदेतन्निर्गलितार्थः । संशयादयः पदार्थाः प्रमाणे प्रमेये चान्तर्भवन्तोऽपि विद्याप्रस्थानभेदज्ञापनार्थम्पृथगुद्दिष्टा इति ।

---

(भा०चं०) दिति । यस्मात् किलैते वादे देश्यन्ते ततः पृथगुपदेश्यन्त इति । न । उभयथाप्यसम्बन्धात् न वादे देशनीयत्वं पृथगु-पदेशाविनाभावि । न पृथगुपदेशो वादे देशनीयत्वाविनाभावी । न तावत् यः पृथगुपदिश्यते स वादे देश्यत इति । सर्वे पदार्थाः वादे देशनीयाः प्रसज्यन्त इति । किं कारणम् ? सर्वे पृथगुपदिष्टा इति । अथ ये वादे देश्यन्ते ते पृथगुपदिश्यन्ते इति । तदपि न अनेकान्त-त्वात् न तावन्निग्रहस्थानेभ्यो न्यूनाधिकयोः पृथगुपदेशः । अथ च ते वादे पृथगुपदिश्येते । तस्माद्वादे देशनीयत्वादेषां पृथगुपदेश इति यत् किञ्चिदेतत् । एतदेव तु न्याय्यं पृथगुपदेशप्रयोजनं विद्या-प्रस्थानज्ञापनार्थत्वादिति स्थितम् । चोदनीया ज्ञानपूर्वकं न प्रयो-क्तव्या अज्ञानेन प्रयुक्ता अपि निग्रहस्थानत्वेन न देश्याः जिगीषा-भावात् । पर्यनुयोगः परिवर्जनीयत्वात् प्रतिषेधः त्वया व्यर्थमिदं-मुक्तमिति वचनम् एतज्ज्ञानाय पृथक् वचनम् । वचनविघातोऽर्थवि-कल्पोपपत्त्या छलम् । साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः । विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ।

(भा०) सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना–
प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता ॥

---

(ख०) प्रदीप इति । प्रकाशकत्वात् । उपाय इति । क्रियत इति कर्म विषयः शास्त्राणाम् । तस्यैव शास्त्रैः कृतत्वात् विषयत्वेन परिगृहीतत्वात् । अत्रैव न्यायशास्त्रे प्रकाशितान् अर्थान् इतरा विद्या विषयत्वेन परिगृह्णन्तीत्यर्थः ।

आश्रय इति । सर्वासां विद्यानां पुरुषप्रवर्तना 'धर्माः' तेषामाश्रय इति तात्पर्यकृतः । एवंधर्मद्वारेण विद्यानामेवाश्रय इत्यर्थः । सर्वाणीतराणि शास्त्राणि द्रव्यगुणकर्माण्युपाश्रित्यैव विधिनिषेधानुपन्यस्यन्ति द्रव्यादयश्च पदार्था न्यायशास्त्रादेव तत्त्वतोऽधिगम्यन्त इति भावः ।

---

(भा०चं०) पदार्थान् समर्थ्य शिष्यप्ररोचनाय तत्प्रतिपादकं शास्त्रमिदं स्तौति सेयमान्वीक्षिकीति । विभज्यमाना प्रकरणाह्निकाध्यायार्थैर्व्याख्यायमाना । इतरशास्त्रभेदेन च ज्ञाप्यमाना । विद्यानामष्टादशानां चतुर्वेदी–चतुरुपवेदी(१)–षडङ्गी–चतुरुपाङ्गी–रूपानां प्रदीप इव प्रदीपः स्वपरप्रकाशिका । प्रमाणादिप्रतिपादितमर्थवृन्दमितरा विद्याः प्रतिपद्यन्ते इति । किमितरासु विद्यासु प्रमाणादयो न सन्ति ? न सन्तीत्याह । कथं न सन्ति ? अनधिकारात् । न ता विद्याः प्रमाणादिपरिज्ञानायाधिक्रियन्ते । प्रमाणादिप्रकाशितेऽर्थे ताः प्रवर्तन्त इति । कर्म्मणां लौकिकानाम् धर्म्माणां वैदिककर्म्मणां यज्ञादीनां सर्वविद्यातदर्थानामुपकारिका (२)राजभृत्यवदिति

---

(टि०) (१) उपवेदाः धनुर्वेदादयः=उपाङ्गानि मीमांसादीनि ।
(२) यथा राजभृत्यः सकलविद्यातत्प्रयोजनार्थसम्प्राप्तावुपयुक्तो भवति तद्वदित्यर्थः ।

(भा०) तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदि-

---

(ख०) तदिदमिति । व्युत्पाद्याश्चेत् प्रमाणादयः सर्वविद्योपयोगिनो न तर्ह्यात्यन्तिकी दुःखनिवृत्तिरान्वीक्षिक्याः फलं निःश्रेयसपदादवगम्येत। व्युत्पाद्यस्वभावपर्यालोचनया हि तद्गम्येत। स च विद्यान्तरसाधारण इति विद्यान्तराधिगम्येन निःश्रेयसेन सङ्करप्रसङ्ग इत्यत आह तदिदमिति। इति तात्पर्यकृतः। न सर्वं सर्वत्र व्युत्पाद्यते। सर्वासां क्रियाणामियमान्वीक्षिकी 'आश्रयो' भवति स्वयञ्च केषुचिद्विषयेष्वाश्रिता भवति इति परिशुद्धिकाराः। पुरुषप्रवर्तनारूपायां क्रियायामितरा विद्या उपकरोतीयमिति भावः। एवं यस्मिन् शास्त्रे यो विषयः प्रधानतया वर्णितः स तत एवाधिगन्तव्य इत्याशयवानेवाह यथाविद्यमिति।

---

(भा०चं०) वाक्यार्थः। तदिदमष्टादशविद्यास्थानजं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं तत्तच्छास्त्राभिमतनिःश्रेयसप्राप्त्यर्थं यथाविद्यं वेदितव्यम्। विद्यायां विद्यायां पृथक् वेदितव्यम्। अत्र वार्तिकम्। सर्वाविद्याश्चतस्रष्वन्तर्भाव्य तत्तत्तत्त्वज्ञानप्रयोजने पृथक् प्रदर्शयति। सर्वासु विद्यासु तत्त्वज्ञानमस्ति निःश्रेयसाधिगमश्चेति। तत्र त्रय्यां तावत् किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगमश्चेति। तत्त्वज्ञानन्तावदग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानमनुपहतादिपरिज्ञानञ्च निःश्रेयसाधिगमः स्वर्गप्राप्तिः। तथा ह्यत्र स्वर्गः फलं श्रूयते इति। अथ वार्तायां किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति। भूम्यादिपरिज्ञानं तत्त्वज्ञानं भूमिः कण्टकाद्यनुपहतेत्येतदादि तत्त्वज्ञानम् शस्याधिगमश्च निःश्रेयसप्राप्तिरिति तत्फलत्वात्। दण्डनीत्यां किं तत्त्वज्ञानम् कश्च निःश्रेयसाधिगम इति। साम-दान-भेद-दण्डानां यथाकालं यथादेशं यथाशक्ति विनियोगविषयं तत्त्वज्ञानम् निःश्रेयसाधिगमः पृथिविजय

(भा०चं०) इति। इह त्वाध्यात्मविद्यायामात्मज्ञानं तत्त्वज्ञानम् तत्त्वज्ञानान्निःश्रेयसाधिगमोऽपवर्गप्राप्तिः। यत् प्रमाणादितत्त्वज्ञानान्निःश्रेयसं न तद्विवक्षितमिति केचित्। मदमानादिनिमित्तत्वाद्वादादिपरिज्ञानस्य नाभिमतसम्बन्धो निःश्रेयसेन न चानभिसम्बन्धं प्रतिपादयतीत्ययुक्तमुक्तं प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इतीत्याहुः। तन्न सूत्रार्थापरिज्ञानात्। सूत्रार्थं न व्यज्ञासीः। यत एवं प्रत्यवस्थितः क एवं सूत्रार्थं वर्णयति प्रमाणादिपदार्थानां तत्त्वज्ञानान्निःश्रेयसमिति। अपि तु यत्परिज्ञानान्निःश्रेयसं तदुत्तरसूत्रे वक्ष्यामः। उक्तन्त्वात्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसमिति। यच्चेदमुच्यते मदमानादिनिमित्तं वादादय इति। एतच्च न असति भावात् सति चाभावात् इति। असति वादादिज्ञाने सनकादीनां(१) रागादयो भवन्ति सति च तत्त्वविदां न भवन्तीति। तस्मान्न वादादिपरिज्ञानं रागादिनिमित्तमिति॥

प्रमाणादिक्रमनिर्देशसङ्गतिरुच्यते। तत्र प्रमाणस्य सकलतत्त्वप्रमापकत्वात् प्रथममुद्देशः। प्रमाणसापेक्षत्वात् तदनन्तरमन्यापेक्षया उद्भासिततमत्वात् इतरतः पूर्वं प्रमेयस्य। प्रमाणानामपि निर्णये कर्तव्यपूर्वोत्तराङ्गत्वेन संशयप्रयोजनयोरेवापेक्षणात् संशयस्य पूर्वमुद्देशोऽनन्तरं प्रयोजनस्य। प्रमाणानामपि प्रत्यायने दृष्टान्तस्य मूलत्वात् दृष्टान्तस्य। दृष्टान्तधर्म्मः पक्ष उपसंहृतः सिद्धान्तमवस्थापयतीति दृष्टान्तानन्तरं सिद्धान्तस्य। अवयवाः सर्वे सिद्धान्तदृष्टान्तसिद्धिसाधका इति सिद्धान्तानन्तरमवयवोद्देशः। अवयवानां तर्कापेक्षत्वात्तदनन्तरं तर्कस्य। ततो निर्णयस्य ज्ञानं ततस्तदनन्तरं तस्य। निर्णयमुद्दिश्य वादे प्रवृत्तिरिति निर्णयानन्तरं वादस्य। समत्सरकर्तव्यस्य निर्मत्सरकर्तव्यवादान्निकृष्टत्वेन वादानन्तरं जल्पस्य। जल्पादर्द्धभागहानिर्वितण्डायामिति तदनन्तरं वितण्डायाः।

(टि०) (१) सनको मदादिप्रधानो दासः।

(भा०) तव्यम् । इह त्वध्यात्मविद्यायामात्मादितत्त्वज्ञानं तत्त्वज्ञानम् । निःश्रेयसाधिगमोऽपवर्गप्राप्तिः ॥ १ ॥

तत् खलु निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति ? नेत्युच्यते । किं तर्हि ? तत्त्वज्ञानात्—

---

(ख०) तत् खल्विति । प्रथमसूत्रेण शास्त्रस्योद्देश्यमपवर्गमुपवर्ण्य द्वितीयसूत्रेणापवर्गेण सह शास्त्रनिरूपितविषयाणां सम्बन्धम्प्रदर्शयति ।

---

(भा०चं०)यद्वा आस्तिकानां परमसिद्धान्तमद्वैतं ज्ञापयितुं जल्पकगर्वध्वंसाय वितण्डा मुख्येति तदनन्तरं तस्याः । वितण्डया सर्वे हेतवः आभासीक्रियन्त इति तदनन्तरं हेत्वाभासानाम् । वैतण्डिकेन खण्ड्यमानो जल्पकश्छलेनापि प्रत्यवतिष्ठते इति तदनन्तरं छलस्य । पुरुषाशक्तिलिङ्गत्वाविशेषेऽपि असदुत्तरत्वाविशेषेऽपि निरनुयोग्यानुयोगत्वाविशेषेऽपि छलजात्योर्जातेरत्यन्तासदुत्तरत्वं स्वव्याघातकत्वादिति छलानन्तरं जातीनाम् । परिशेषादन्ते निग्रहस्थानानामिति(१) ॥ १ ॥

बहुजन्मविपक्षेण सम्यग्योगेन योगिनः ।
द्रष्टुमर्हन्ति यतयः शून्यागारेषु यत्पदम् ॥

इत्येवमर्थम् द्वितीयसूत्राभिप्रेतं प्रकाशयितुं संशयसमाधानाभ्यां सूत्रमवतारयति । **तत् खल्विति** । किं शब्दः संशये । तत्त्वज्ञानं (२)चतुर्विधम् तत्र तुरीयमात्मतत्त्वप्रत्यक्षं तदनन्तरं वा श्रवणाद्यनन्तरं वाऽव्यवहितमेव निःश्रेयसं भवति तद्विलम्बेनेति संशयः ।

---

(१) वादावसानहेतुत्वान्निग्रहस्थानानामन्ते निर्देश इति तात्पर्यम् ।
(२) चतुर्विधन्तत्त्वज्ञानं पूर्वोक्तमेव अग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानादिरूपम् ।

(सू०)दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः ॥ २ ॥

(भा०)तत्रात्माद्यपवर्गपर्यन्तं प्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्त्तते। आत्मनि तावत् नास्तीति, अनात्मनि आत्मेति, दुःखे सुखमिति, अनित्ये नित्यमिति, अत्राणे त्राणमिति, सभये

---

(ख०) अपायादित्यत्राभावादिति क्वाचित्कः पाठः।

अनेकप्रकारकमिति। सर्वत्र चात्रातस्मिंस्तद्बुद्धिरिति विपर्ययलक्षणमनुगतम्।

---

(भा०चं०)(१)अतत्त्वज्ञानानामनेकविधत्वात् प्रमेयस्यापि द्वादशविधतया तद्विषयेऽज्ञाने क्रमेणैव नष्टे जीवन्मुक्तिपरममुक्तिभेदेन द्विविधं निःश्रेयसं क्रमेणैव भवतीत्याशयवानाह नेति। उच्यते अर्थतः कथ्यते। पृच्छति किं तर्हीति। उच्यत इत्यनुषङ्गः। तत्त्वज्ञानाच्चतुर्विधाद्विवर्धमानात् भवतीत्यनुषङ्गः। तत्र (२)तत्त्वज्ञाननाश्येषु द्वादशविधप्रमेयविषयेषु अज्ञानेषु प्रमाणादिविषयकाज्ञानेषु मध्ये। (३)वर्त्तते प्रमाणसम्बन्धो वृत्तिः। प्रमीयत इत्यर्थः। शून्यवादिकल्पितमज्ञानं दर्शयति **नास्तीति**। मिथ्याज्ञानं वर्त्तत इत्यनुषङ्गः। चार्वाकादिमते तु देहादिभिन्नो नित्यो विभुः केवल आत्मा नास्तीति। **अनात्मनि** देहादौ। दुःखयतीति दुःखम् सुखयतीति सुखम्। **अनित्ये** देहादौ। अ-

---

(१) वक्ष्यमाणमिथ्याज्ञानानाम्।

(२) चतुर्विधतत्त्वज्ञानेषु श्रेष्ठ्यं प्राप्तात् आत्मतत्त्वज्ञानादपवर्गरूपनिःश्रेयसप्राप्तिरिति भावः।

(३) वर्तते इत्यत्र न वृत्तिशब्दार्थो वर्तनम् अपितु विषयः तथा च प्रमेयविषयमिथ्याज्ञानमिति तात्पर्यकाराः।

(भा०)निर्भयमिति, जुगुप्सिते अभिमतमिति, हातव्ये अप्रतिहातव्यमिति, प्रवृत्तौ नाऽस्ति कर्म नाऽस्ति कर्म फलमिति, दोषेषु नायं दोषनिमित्तः संसार इति, प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा यः प्रेयात् प्रेत्य च भवेदिति, अनिमित्तं जन्म, अनिमित्तो जन्मोपरम इत्यादिमान् प्रेत्यभावः अनन्तश्चेति, नैमित्तिकः सन्नकर्मनिमित्तः प्रेत्यभाव इति, देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः

---

(भा०चं०)**त्राणे** कलत्रपुत्रक्षेत्रगृहादौ। **सभये** धनसम्पदादौ। **जुगुप्सिते**ऽस्थिमांसशोणितविण्मूत्रादिमये स्वशरीरपरशरीरादौ। **अभिमतं** प्रशस्तमिति। **हातव्ये** जन्मादौ संसारेऽप्रतिहातव्यमुपादातव्यमिति। **प्रवृत्तौ** पुण्यपापाख्ये कर्म्मणि अदृष्टे। **कर्म्म फलमिति**। कर्म्मेति भिन्नपदम्। फलं फलदमित्यर्थः। फलयतीति—व्युत्पत्तेः। तथा च स्वर्गनरकादिफलजनकं कर्म्म नास्तीति तदर्थः। **दोषेषु** रागद्वेषमोहेषु। दोषा निमित्तानि यस्य सः **दोषनिमित्तः** दोषाभिन्ननिमित्तवान् संसारो न भवतीत्यर्थः। **प्रेत्यभावे** मृत्वा जन्मनि। जन्तुर्जनिकर्त्ता जीवः प्राणी। जीव प्राणधारणे। जीवतीति जीवः प्राणधारक इत्यर्थः। सत्त्वं शरीरेन्द्रियादिबलं विद्यते यस्य स सत्त्वः। अर्शआदित्वादच्। आत्मा नित्यत्वे सति ज्ञानवान्। तदुक्तम्।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानयम्।
यच्चास्य सन्ततो भावस्तेनात्मा परिकीर्त्तितः॥ इति।

प्रेयात् म्रियेत प्राणान् जह्यात्। भवेत् जायेत अपूर्व्वशरीरेन्द्रियादि प्राप्नुयात्। जनिरियं चेतनस्या**निमित्तं** धर्म्माधर्म्मादिनिमित्तशून्यम् **अनिमित्त**स्तत्त्वज्ञानानिमित्तकः। **जन्मोपरमो**ऽत्यन्तजन्यभावः। **आदिमान्न** त्वनादिः **अनन्तो**ऽनवधिकः मोक्षो नास्तीत्यर्थः। नै-

(भा०चं०)मित्तिकः स्वभावादिनिमित्तः सन् न तु कर्म्मनिमित्तः। प्रेत्य प्रायनान्तरं भावो जन्म स चैककर्तृकः स चैकस्मिन् कर्त्तरि सति भवति स। तु नास्ति देहादेरेवात्मत्वात्। प्रेत्येति क्त्वो ल्यप्। क्त्वा च पूर्वकालाख्य-क्रियाविशेषणं वक्ति। अधीत्य विचारयति स्नात्वा विवहति पर्वी कृत्वा यजति भुक्त्वा व्रजतीत्यादौ सर्वत्र तत्तत्क्रियापूर्वकतत्तत्क्रियाकर्त्तत्यव-गतेः। कश्चित्तु आनन्तर्य्यं क्त्वाप्रत्ययार्थमाह। स प्रष्टव्यः। किमिदमान-न्तर्य्यं नाम तद्वाच्यम्। यत्तूच्येत पूर्वाक्रियाध्वंसाधिकरणक्षणवृत्ति-त्वमानन्तर्य्यम्। किमिदमानन्तर्यपदस्य शक्यमुत लक्ष्यं तद्वाच्यम्। यद्युच्येत शक्यमुत्तरानन्तर्य्यं न तु पूर्वानन्तर्यम्। तन्न। तथाहि।

"अनन्तरं तु द्विविधं पूर्व्वमुत्तरमेव च।
तयोरविनिगम्यत्वादुभयोः शक्तिरिष्यते॥
लाघवं गौरवं वाऽपि द्वयोरपि समं यतः।
ततो मुनिवचस्त्यक्त्वा वृथा गर्व्वात् परिग्रहः॥ इति।

भोजनपूर्वकं गमनमित्यपेक्षया भोजनोत्तरगमनमिति लघ्वि-ति चेत्। न भोजनादुत्तरं भोजनपूर्ववदिति द्वयोस्तुल्य-त्वात्। भोजनप्रतियोगिकध्वंसाधिकरणकालवृत्ति गमनम् भो-जनाधिकरणकालवृत्तिप्रागभावप्रतियोगि गमनमित्यनुभवयोर्विषयाः कियन्तस्ते द्रष्टव्याः। उत्तरत्वस्याप्यन्वयः प्रकृत्यर्थेऽवश्यं व-क्तव्यः। स च पूर्व्वकालत्वमेव तदेव चेच्छास्त्रोक्तं प्रत्ययशक्यम् कि-मत्राधिकपाण्डित्येनेति ध्येयम्। तस्मात् समानकर्तृकयोः पूर्वकाले क्त्वेति यथाश्रुतमेव शास्त्रार्थोऽस्तु। अस्त्विदं प्रकृतमनुसरामः। त-स्यात्मनो देहादिव्यतिरिक्तत्वेऽपि क्षणिकविज्ञानस्वरूपत्वात् शून्यत्वा-द्वा। निरात्मको यथोक्तस्वरूपशून्यः। भ्यामन्तपदं चतुर्थ्यन्तं ज्ञेय-म्। वेदनाः हर्षशोकविषादाः। प्रतिसन्धानं त्यक्तजातीयप्राप्तिः। भिष्मो भयहेतुः खलु निश्चितम्। बहुभद्रं सर्वं मङ्गलं लुप्यते उच्छिद्यते। सर्वेषां

(भा०)प्रेत्यभाव इति, अपवर्गे भीष्मः खल्वयं सर्वकार्य्योपरमः, सर्वविप्रयोगेऽपवर्गे बहु भद्रकं लुप्यत इति कथं बुद्धिमान्सर्वसुखोच्छेदमचैतन्यममुमपवर्गं रोचयेदिति ।

एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः, प्रतिकूलेषु द्वेषः । रागद्वेषाधिकाराच्चासूयेर्ष्यामायालोभादयो दोषा भवन्ति ।

---

(ख०) अधिकारादिति तद्वशादित्यर्थः ।

---

(भा०चं०)सुखानां ससाधनानां छेदो यत्र स तथा । तं रोचयेत् रोचनं रुचिं कुर्य्यात् । रुचिः स्पृहायां दीप्तौ च । बालाय रोचते मोदकः तं रोचयेत् ।

अनुकूलेषु इष्टसाधनेषु राग ईप्सा । प्रतिकूलेष्वनिष्टसाधनेषु द्वेषो जिहासा । रागद्वेषाभ्यामधिकृतत्वाद्विषयीकरणादित्यर्थः । असूया गुणेषु दोषारोपः ईर्ष्या सपत्नान्तरस्य प्रिययोगजिहासा । माया दम्भः—अन्योद्देश्यककर्म्मणः अन्योद्देश्यकत्वज्ञापनम् । अन्यायेन परद्रव्यप्राप्तीच्छा लोभः । आदिना मात्सर्य्यादिपरिग्रहो ज्ञेयः । अतद्गुणसंविज्ञानोऽयं बहुव्रीहिः । सर्वेषां भवन्तीत्यत्रान्वयात् ।

प्रयुक्तः प्रेरितः । शरीरेणेति करणे तृतीया । प्रवर्त्तमानश्चेष्टां कुर्वाणः । हिंसा मारणा । स्तेयं चोरणा—चौर्य्यम् । प्रतिषिद्धमैथुनं परदारागमनादि । आचरति करोतीति शारीरी प्रवृत्तिस्त्रिधा । अपेयपानादिकमपि निषिद्धमैथुनाङ्गतया तदन्तर्भूतं ज्ञेयमिति । वाचेत्यभेदे तृतीया । यद्वा उच्यतेऽनेनेति वाक् कण्ठताल्वाद्यवयवः । तदा करणे तृतीया । अनृतं मिथ्यावचनम् । परुषं दुःखदं वचनम् । सूचना दण्डकर्तृषु परापकाराय दण्डनप्रयोजकतत्कार्य्यकथनम् । असम्बद्धम् असम्बद्धार्थवचनम् । इति चतुर्द्धा वाचिकी प्रवृत्तिः । मनसेति—करणे तृतीया ।

(भा०)दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनाऽसम्बद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति । सेयं पापात्मिका प्रवृत्तिरधर्माय । अथ शुभा—शरीरेण दानं परित्राणं परिचरणं च, वाचा सत्यं हितं प्रियं स्वाध्यायश्चेति, मनसा दयामस्पृहां श्रद्धां चेति । सेयं धर्माय ।

---

(ख०) 'परिचरणम्' परिचर्या गुरूणां शुश्रूषेति यावत् । सेयमिति प्रवृत्तिरित्यर्थः ।

---

(भा०चं०)द्रोहो जिघांसा अपकारो वा । नास्तिक्यं नास्ति परलोकश्रुतिः तदर्थो वा धर्म्माधर्म्मादिरिति बुद्धिः । सा हि नास्तिकस्य भावः । इति मानसी त्रिधा प्रवृत्तिः । पापमात्मा स्वरूपं यस्याः सा पापात्मिका अधर्म्माय दुरदृष्टाय । अथ शुभा । अथ अनन्तरं शुभा पुण्यात्मिका प्रवृत्तिर्निरूप्यत इति शेषः । दानं आचरतीत्यनुषज्यान्वयः । दानं स्वस्वत्त्वध्वंसानुकूला क्रिया । सा यद्यपि मनसा वाचापि भवति तथापि देहाभिमानिनां कायिकी प्रधानामित्यभिमेत्य शरीरेणेत्युक्तम् । सा वैधी अवैधी चेति द्विविधा । मन्त्रादिपूर्विका वैधी तदन्याऽवैधी । परित्राणं गोब्राह्मणादीनां रक्षणं मारणवर्जनम् । सापि द्विधा कायिकी वाचिकी चेति । वाचिक्यपि कण्ठताल्वाद्यवयवकायजन्येति शरीरेणेत्युक्तम् । कायिकी दण्डादिभिरनिष्टवारणम् । परिचरणं तीर्थाद्यटनं परिसेवनं गुर्वादीनाम् । सत्यमृतं यथार्थवचनम् । हितमुपकारकं वचनम् । प्रियं प्रीतिकरं वचनम् । स्वाध्यायः साङ्गवेदाध्ययनम् । इति चतुर्विधा वाचिकी प्रवृत्तिः । दया निरुपाधिकपरदुःखप्रहाणेच्छा । अस्पृहा लोभत्यागः । श्रद्धां शास्त्रे शास्त्रार्थे वा दृढप्रत्ययः । धर्म्माय शुभादृष्टाय ।

सूत्रस्थप्रवृत्तिपदं व्याचष्टे यदर्थं दशविधा प्रवृत्तिर्निरूपिता ।

(भा०)अत्र प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ। यथाऽन्नसाधनाः प्राणाः 'अन्नं वै प्राणिनः प्राणा' इति।

सेयं प्रवृत्तिः कुत्सितस्याभिपूजितस्य च जन्मनः कारणम्। जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः।

तस्मिन् सति दुःखम्। तत्पुनः प्रतिकूलवेदनीयम्-बाधना-पीडा-ताप इति।

---

(भा०चं०)**अत्र प्रवृत्तीति**। अत्र सूत्रे-दुःखादिसूत्रे। प्रमेयसूत्रस्थप्रवृत्तिपदं तु क्रियापरमेवेत्यत्रेति विशेषणम्। तथा च प्रवृत्तिलक्षणं सूत्रम् प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति। प्रवृत्ती विहितनिषिद्धक्रिये साधनं ययोस्तौ प्रवृत्तिसाधनौ। भक्त्यभक्त्येति शेषः। भक्तिदृष्टान्तं दर्शयति **यथेति**। अन्नं साधनं स्थापकं येषान्ते अन्नसाधनाः अन्नं प्राणा इत्यन्तसाध्या इत्यर्थः। साध्यत्वमिह स्थाप्यत्वम्। उत्पत्तिसाधनस्य भाक्तस्य स्थितिसाधनं भाक्तं दृष्टान्तः।

**सेयमिति**। व्यापारव्यापारिरूपेत्यर्थः। अयमभिप्रायः। कायिक्यादिक्रियायास्तत्कालप्रध्वंसिन्याः कालान्तरभाविजन्मनः कारणत्वं न सम्भवतीति द्वारभूतमदृष्टं कारणं तस्य कल्प्यत इति। कुत्सितस्य निन्दितस्य। अभिपूजितस्य प्रशस्तस्य। यथाक्रमं धर्म्माधर्म्मौ कारणमित्यर्थः। अत्राधर्म्मश्च धर्म्मश्चेति विग्रहः। अधर्म्मप्रतिषेधेन विना धर्म्मः कर्त्तुं न शक्यत इत्यधर्म्मस्य पूर्वं निरूपणम्। निकायः सजातीयकुलानां प्रादुर्भावः प्राप्तिः।

**तस्मिन्सतीति**। अधिकरणसप्तमीयम्। अधिकरणं च षड्विधमित्येके चतुर्विधमित्यन्ये। षड्विधे वैषयिकमेकम्। वैषयिकं विषयि तच्च जनकं ज्ञापकञ्चेत्युक्तम्। इह जनकमुपा-

(भा०)त इमे मिथ्याज्ञानादयो दुःखान्ता धर्मा अविच्छेदेनैव प्रवर्तमानाः संसार इति ।

यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति, दोषापाये प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्माऽपैति, जन्मापाये दुःखमपैति, दुःखापाये च आत्यन्तिकोऽपवर्गो निःश्रेयसमिति ।

---

(ख०) मिथ्याज्ञानादय इति । मिथ्याज्ञानादीनां सौत्रः क्रमो भाष्यकारेण त्यक्तः भाष्यकारोक्तश्च क्रमो वार्तिककारेण परावर्तितः । अयञ्च क्रमानिश्चय इष्ट एव । यत उक्तेषु सर्वेषु परस्परं कार्यकारणभावः सुश्लिष्टो वर्वते । तद्यथा मिथ्याज्ञानं दुःखस्य कारणम् दुःखञ्च मिथ्याज्ञानस्येति प्रत्यात्मवेदनीयमेतत् ।

---

(भा०चं०)देयम् । तथा च जन्माभिन्नजनकजन्यं दुःखमित्यर्थः । दुःखलक्षणमाह **तत्पुनरिति** । प्रतिकूलमहितं तेन प्रकारेण वेदनीयं ज्ञेयम् । शिष्यव्यवहारस्वाच्छन्द्याय दुःखपर्य्यायानाह बाधनेत्यादि । बाधा व्यथेत्यपि द्रष्टव्यम् । आध्यात्मिकमाधिभौतिकमाधिदैविकञ्चेति तत्त्रिधा ।

**धर्म्मा** आत्मधर्म्माः । **प्रवर्त्तमाना** जायमानाः व्याप्रियमाणा वा । संसरत्यनेनेति संसारः मिथ्याज्ञानदोषप्रवृत्तयः । संसरणं जन्ममरणे । संसरत्यस्मै इति संसारो दुःखं क्रियाकारकद्वयस्य संज्ञेयम् । एवञ्च कार्य्यकारणभावः पञ्चानां दर्शितो भवति ।

**अपैति** अपचयं स्वरूपहानिं प्राप्नोति । **दुःखापाय** इति । सामानाधिकरण्ये सप्तमी । सामानाधिकरण्यं च एकधर्म्मिणि निष्ठा । कालसप्तमी वा । यस्य च भावेन भावलक्षणमिति सू-

(भा०) तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्य्ययेण व्याख्यातम् । आत्मनि तावदस्तीति, अनात्मन्यनात्मेति । एवं दुःखेनित्येत्राणे सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम् । प्रवृत्तावस्ति कर्म्मास्ति कर्मफलमिति । दोषेषु दोषनिमित्तोऽयं संसार इति । प्रेत्यभावे खल्वस्ति जन्तुर्जीवः सत्त्वः आत्मा वा यः प्रेत्य भवेदिति, निमित्तवज्जन्म, निमित्तवान् जन्मोपरम इत्यनादिः प्रेत्यभावोऽपवर्गान्त इति, नैमित्तिकः सन् प्रेत्यभावः प्रवृत्तिनिमित्त इति, सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां

---

(भा०चं०) त्रात् । आत्यन्तिकोऽपवर्ग आत्यन्तिकी दुःखनिवृत्तिः(१) । तथा च पूर्व्वपूर्व्वदुःखाभावसमानाधिकरणात्यन्तिकदुःखहानिरित्यर्थः । अन्तं मध्यमतिक्रान्तः अत्यन्तः अत्यन्त एवात्यन्तिकः । अथवा अन्तः शेषः पाश्चात्यः अतिशयितोऽन्तोऽत्यन्तः अत्यन्त एवात्यन्तिकः । नितरां श्रेयो निःश्रेयसम् । स्वःश्रेयसमसाधारणं निःश्रेयसमिति विवक्षितम् ।

**विपर्य्ययो** वैपरीत्यम् । तृतीयाऽत्र प्रकारे । दोषाणामन्यत्तमोहाख्यज्ञानाभिन्नं मिथ्याज्ञानशब्देन विवक्षितम् । अतोऽभेदे कार्य्यकारणभावविरोध इति नाशङ्कनीयम् । किं मूलमिति चेत् । अविद्याऽहम्मतिः स्त्रियामिति पर्य्यायोक्तमिथ्याज्ञानं मूलम् । देहकलत्रादौ ममेतिमतिर्मोहः । मम बलवदनिष्टाननुबन्धीष्टहेतुरिदं देहं कलत्रं गृहधनादीति निश्चयो मोहः । एवं परलोकेऽपि वेदबोधितभोग्यपदार्थविषयापीदृशी मतिर्मोह एवावसातव्यः । तस्यापि बलवदनिष्टसंसारान-

---

(१) स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंस इत्यर्थः ।

(भा०) प्रवर्त्तत इति । अपवर्गे शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः, बहु च कृच्छ्रं घोरं पापकं लुप्यत इति कथं बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखासंविदमपवर्गं न रोचयेदिति । तद्यथा मधुविषसम्पृक्तान्नमनादेयमित्येवं सुखं दुःखानुषक्तमनादेयमिति ॥ २ ॥

---

(ख०) तद्यथेति । सर्वोपरमोऽपवर्ग इत्युक्तन्तत्र कथं सुखस्याप्युपरम इष्ट इति दर्शयति दुःखानुषक्तमिति । अनुषङ्गोऽविनाभावः, यत्रैकन्तत्रेतरदिति । समाननिमित्तता वाऽनुषङ्गः, यान्येव सुखसाधनानि तान्येव दुःखसाधनानीति । समानाधारता वाऽनुषङ्गः, यत्र सुखन्तत्र दुःखमिति । समानोपलभ्यता वाऽनुषङ्गः, येन सुखमुपलभ्यते तेन दुःखमित्यादि वार्तिके स्पष्टम् ।

---

(भा०चं०)तिक्रान्तत्वात् । शान्तो निर्भयः सर्वोपरम इति पूर्वस्वपदव्याख्यानात् । कृच्छ्रमभद्रं मुमुक्षूणां हि रागिमङ्गलं सर्वममङ्गलमिति । पापकं पापजनकं पापमनिष्टं करोतीति व्युत्पत्तेः । बुद्धिमानात्मविवेकेन विरक्तिमान् । सर्व्वदुःखासंविच्चासावपवर्गश्चेति तम् । असंवित् तद्विषयसर्वज्ञानाभावः । जीवन्मुक्तस्यापि महामुनेः परदुःखालोचनया दुःखमुदितमस्त्येवेति न सात्यन्तिकी दुःखनिवृत्तिः । अणिमाद्यैश्वर्य्यवन्तोऽपि जीवन्मुक्ताः सोद्वेगास्तत्रतत्र शास्त्रे वर्णिता अतस्तेऽपि नात्यन्तमपवृक्ता इति ध्येयम् । एतादृशोऽप्यपवर्गः सुषुप्तिवदिष्टः संभवतीति निश्चेतव्यम् । अत्र रागिणामनधिकारः। "न ह वै सशरीरस्य प्रियाप्रिययोरपहतिरस्ति । अशरीरं वा वसन्तं प्रियाप्रिये न स्पृशत" इत्यादिश्रुतिसमूहमालोच्य सर्वस्मिन्नपि सुखे विरागः कार्य्य इत्याह तद्यथेति । सुखं ब्राह्मवैष्णवशैवपर्यन्तं परमैश्वर्य्ययशःप्रभृतिजं

प्रमाणसामान्यलक्षणम् ।

(भा०) त्रिविधा चाऽस्य शास्त्रस्य प्रवृत्तिः-उद्देशो

---

(ख०) त्रिविधेत्यादि । अत्र तात्पर्यकृतः—तदेवम्प्रमाणादिपदार्थतत्त्वज्ञानस्य निःश्रेयससम्बन्ध उक्तः परीक्षितश्च । तत्रैतत्स्यात–'स्वपदेभ्यः प्रमाणादयः पदार्थास्तत्त्वतो ज्ञाता यथायथम्मिथ्याज्ञाननिवृत्तिक्रमेणापवर्ग उपयोक्ष्यन्ते कृतमुपरितनेन प्रबन्धेन' इति । अत उक्तम्भाष्यकृता त्रिविधेत्यादि ॥ न नामधेयमात्रात्प्रमाणादीनान्तत्त्वज्ञानम्भवत्यपि तु लक्षणपरीक्षाभ्यामित्यस्त्युपयोगः प्रबन्धस्योत्तरस्येति भाष्यार्थः ॥ इति ।

---

(भा०चं०) दुःखानुषङ्गं तेषामपि परस्परं पराजयादिदुःखं पुराणादौ दृष्टमिति । अन्ततो मरणदुःखमप्यपरिहार्य्यम् ।

ब्रह्माण्डावलयो ग्रस्ता निगीर्णा रुद्रकोटयः ।
भुक्तानि विष्णुवृन्दानि धनशक्ता वयं विभो ॥

इति कालवचनात् ।

कालः पचति भूतानि सर्वाण्येवात्मनात्मनि ।
यस्मिंस्तु पच्यते कालस्तं न वेदेह कश्चन ॥

इतिस्मृतेश्च ॥ २ ॥

इति भाष्यचन्द्रे प्रयोजनाभिधेयसम्बन्धप्रकरणद्विसूत्रीभाष्यचन्द्रिका ॥ * ॥

तदिदं हेयोपादेयभूतं संसारतदपवर्गरूपं प्रमेयं कतिभिः प्रमाणैः प्रमातव्यमित्याकाङ्क्षायां तृतीयसूत्रमवतारयति त्रिविधा चेति । तिस्रो विधाः प्रकारा यस्याः सा त्रिविधा । अस्य प्रकृतस्य शास्त्रस्य पञ्चाध्याय्याः प्रवृत्तिर्व्यापारः । व्यापारश्च फलव्याप्य इति निदि-

(भा०) लक्षणं परीक्षा चेति । तत्र नामधेयेन पदार्थमात्रस्याभिधानमुद्देशः । तत्रोद्दिष्टस्य तत्त्वव्यवच्छेदको धर्म्मो लक्षणम् । लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा ।

तत्रोद्दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते, यथा प्रमाणानां

---

(ख०)ननु तृतीयसूत्रम्प्रमाणविभागनिरूपणपरमित्युक्तम् । अनुक्ते तु प्रमाणलक्षणे तद्विभागवचनस्य नावसर इत्यत आह तत्रोद्दिष्टस्येति । सर्वत्र विभागवचनात्प्राक् लक्षणाभिधानमिति न नियमः । क्वचिदत्र शास्त्रे उद्देशविभागानन्तरमेव लक्षणमुक्तम् । यथा प्रमाणानाम्प्रमेयस्य च । क्वचित्तु लक्षणानन्तरमेव विभागवचनम्, यथा छलस्य ॥

तृतीये तु सूत्रे प्रमाणानां स्वरूपमपि सूत्रस्थेन प्रमाणानीति पदेन सूचितमेव । स्वरूपसूचनमेव च लक्षणमतोऽत्र लक्षणानुक्तिमूलक आक्षेपो निर्मूलक एव ॥

---

(भा०चं०) ध्यासनसाक्षात्कारावान्तरफलम् शास्त्रापेक्षया । मोक्षापेक्षया तु व्यापार एव शिष्यस्य पुरुषस्य वेति ज्ञेयम् । **तत्र** तिसृषु प्रवृत्तिषु मध्ये । **नामधेयेनेति** प्रकारे तृतीया । **अभिधानं** प्रत्ययः । **उद्दिष्टस्य** नाम्ना प्रत्यायितस्य तत्त्वव्यवच्छेदकः स्वरूपभेदकः **धर्म्मो** भाव इति लक्षणपदस्य करणव्युत्पन्नस्य व्याख्यानम् । विषयपदमिदं विषयिपरम् तेन प्रवृत्त्यभेदो न विरुद्धः । **लक्षितस्य** लक्षणेन बोधितस्य । **उपपद्यते** प्रमाणं प्राप्नोति **नवा** प्रमाणं न प्राप्नोति इति संशय्य इति शेषः । प्रमाणैरनुमानादिभिरवधारणं निर्णयः । **परितो** व्याप्त्यादिशङ्कां परिवर्ज्य ईक्षणं **परीक्षा** । इति ज्ञानत्रयी त्रिविधा प्रवृत्तिः शास्त्रस्य शास्त्रकर्तृका शास्त्रकरणिका वा तेन शास्त्रमपि त्रिविधं ज्ञेयम् । एवञ्च विभागस्य चतुर्विधत्वमापद्यत इति

(भा०) प्रमेयस्य च । उद्दिष्टस्य लक्षितस्य च विभागवचनम्, यथा छलस्य 'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्'-'तत्त्रिविधम्- (अ० १ आ० २ सू० १०-११) इति।

अथोद्दिष्टस्य विभागवचनम्—

(सू०) प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

(भा०) अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम्। वृत्तिस्तु

---

(ख०) अथोद्दिष्टस्येति । पूर्वत्रोद्दिष्टानाम्प्रमाणानां विभाग आगामिना सूत्रेणोच्यत इत्यर्थः ।

अक्षस्याक्षस्येति । प्रतिगतमक्षम्प्रत्यक्षमिति प्रादिसमासः । भाष्यन्तु फलितार्थकथनपरामिति वार्तिकम् ॥ तत्र तात्पर्यकृतः । इदञ्च व्युत्पत्तिनिमित्तमात्रम् । प्रवृत्तिनिमित्तत्वे हीन्द्रियगतेषु गुणसामान्यादिषु व्यभिचारः। अर्थसाक्षात्कारिज्ञानजनकत्वन्तु प्रवृत्तिनिमित्तम् ॥ वृत्तिरिति व्यापारः । स तु व्यापार उच्यते यः कारकैः फले जनयितव्ये चरमभावी धर्मभेदः फलोत्पादानुकूलोऽपेक्ष्यते । यथा पटे जनयितव्ये तन्तुभिश्चरमभाविनः संयोगभेदाः, स्वर्गे जनयितव्ये यागेनापूर्वमात्मधर्मः । तथेहापि इन्द्रियादिना प्रमाणेन प्रमायाम्फले प्रवृत्तेन तदुत्पादनानुकूलः सन्निकर्षो ज्ञानं वा चरमभावी धर्मभेदोऽपेक्ष्यत इति भवति 'व्यापारः' ।

---

(भा०चं०)नाशङ्कनीयम्। तस्योद्देशान्तर्भावात्। विशेषनामभिः प्रतिपादनं हि विभाग इति विभागद्वैविध्यम् दर्शयति **तत्रेत्यादिना।** **तत्र** त्रिसृषु विधासु **उद्दिष्टस्य** लक्षितस्येति शेषः। **प्रविभक्तस्य** अनेन उद्दिष्टालक्षितविभाग उक्तः। इयमेका विधा विभागस्य। **लक्षणमुच्यते** इत्यनेन उद्दिष्टालक्षितविभक्तस्य लक्षणमित्येका विधा लक्षणस्य। उ-

(भा०) सन्निकर्षो ज्ञानं वा । यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः, यदा ज्ञानं तदा हानोपादानोपेक्षाबुद्धयः फलम् ।

---

(ख०) सन्निकर्ष इति—वृत्त्यर्थ इति शेषः । प्रमितिरिति-फलमित्यनुषज्यते ।

हानेति—हानादिकारणीभूता बुद्धिरित्यर्थः ।

---

(भा०चं०) **उद्दिष्टस्य लक्षितस्य** चेत्यनेन सामान्योद्देशपूर्वकं सामान्यलक्षणमिति द्वितीया विधा लक्षणस्य । सामान्योद्देशपूर्वको विभाग इति द्वितीया विधा विभागस्य । इदं तु सूत्रं सामान्योद्देशपूर्वकं विभागवचनम् । ननु सामान्योद्देशपूर्वकविशेषोद्देशवत्(१) सामान्यलक्षणपूर्वकं विशेषलक्षणं वक्तुमुचितम् तत् कस्य हेतोर्नोच्यत इति चेत् । न सामान्यलक्षणस्यापि सूचितत्वात् । समाख्याशब्दानामवयववृत्तिप्रतिसन्धानेन तल्लाभात् । तच्च भाष्यकारो दर्शयिष्यति ।

**अक्षस्याक्षस्येति** वीप्सेयं षडिन्द्रियलाभार्था । **प्रतिविषयमि**त्यव्ययीभावः । घ्राणरसनत्वक्चक्षुःश्रोत्रमनसां विषयेषु वृत्तिः सम्बन्धो बुद्धिर्वा । (२)कृदाभिहितो भावो द्रव्यवत् प्रकाशत इति न्यायात् वृत्तमक्षमपि ग्राह्यम् । वृत्तिवृत्तिमतोः करणत्वमाह **यदेति** । सन्निकृष्यत इति **सन्निकर्षः** कर्मणि घञ् । सन्निकर्षणं वा सन्निकर्षः । **ज्ञानं** निर्विकल्पकं सविकल्पकं वा । **प्रमिति**स्तस्मिंस्तदिति । द्वयोर्लक्षणन्तु अबाधितार्थविषयकानुभवत्व-

---

(१) विभागवदित्यर्थः ।

(२) यथा कृदभिहितद्रव्ये प्रत्ययस्तथा द्रव्यसमभिव्याहृतकृदभिहितभावेपीत्यर्थः । तथाच इन्द्रियार्थसन्निकर्षवत् इन्द्रियमपि प्रत्यक्षप्रमाणम् ।

(भा०) अनुमानम्-मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानम्।

उपमानम्—सामीप्यज्ञानम्—यथा गौरेवं गवय इति। सामीप्यं तु सामान्ययोगः।

---

(ख०) मितेनेति। अनेन विशेषणेन हेत्वाभासानान्निरासः॥ अर्थस्येति-साध्यस्येत्यर्थः, अर्थ्यते साध्यते यदिति व्युत्पत्तेः।

---

(भा०चं०) म्। प्रमितिः फलमिति योजना। यदा ज्ञानमिति। ज्ञानं(१) निर्विकल्पकम् तथा च प्रत्यक्षपदेन आवृत्त्या प्रमाणपदेनान्वयो ज्ञेयः। ततश्च त्रिविधं प्रत्यक्षप्रमाणम्। इन्द्रियेन्द्रियार्थसन्निकर्षज्ञानभेदात्। हीयतेऽनेनेति **हानम्**। उपादीयतेऽनेनेत्युपादानम्। तद्द्वयमिन्नज्ञानमुपेक्षा। हानमनिष्टसाधनताज्ञानम्। उपादानमिष्टसाधनताज्ञानम्। इष्टानिष्टे प्रियाप्रिये।

मीयतेऽनेनेति **मानम्**। **मितेन** व्याप्यतया पक्षसत्तया च प्रमितेन **लिङ्गेन** हेतुना लिङ्गिनो ज्ञाप्यस्यार्थस्य धर्मिणो धर्मस्य धर्मधर्मिसम्बन्धस्य वा **पश्चात्** प्रत्यक्षानन्तरम् तदिदं क्रियाविशेषणम्। अत्र लिङ्गमनुमानमिति—पक्षेऽभेदे तृतीया लिङ्गज्ञानमनुमानमिति—पक्षे हेतोस्तृतीया। तच्च ज्ञानं चतुर्विधम् चतुर्विधमपि करणमित्युत्सर्गः। तथाहि प्रथमं दृष्टान्ते द्वयोर्व्याप्तिदर्शनम् ततः पक्षे केवलहेतुदर्शनम् ततो व्याप्तिस्मरणम् ततः परामर्श इति।

समाप्यते सममीक्ष्यत इति समीपम् पृषोदरादित्वात् साधु। तस्य भावः सामीप्यम् सादृश्यं तेन ज्ञानम्। सामीप्यपदं व्याचष्टे **सामान्येति**। समानस्य सदृशस्य भावः सामान्यं तदेव योगः सम्बन्धः।

---

(१) निर्विकल्पकेत्युपलक्षणम् सविकल्पकस्यापि हानादिबुद्धिं प्रति करणत्वात्।

(भा०) शब्दः—शब्द्यतेऽनेनार्थ इत्यभिधीयते ज्ञाप्यते ।
उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्याद्
बोद्धव्यम् । प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः ।
तद्विशेषसमाख्याया अपि तथैव व्याख्यानम् ।

किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्तेऽथ प्रतिप्रमेयं व्यवतिष्ठन्ते इति ?

---

(ख०) विशेषसमाख्याया इति । उपलब्धिसाधनत्वं यथा प्रमाणसामान्याभिधानेनाभिधीयते तथैवानुमानादिविशेषाभिधानैरपीत्यत्रैव दर्शितम् ।

अभिसम्प्लवन्त इति । एकैकस्मिन् प्रमेये बहूनाम्प्रमाणानां व्यापार एकैकस्य वेत्यर्थः ।

---

(भा०चं०) तथाच यथा गौरेवं गवय इति श्रुतवतः प्रत्यक्षेण गवये गोसामीप्ययोगज्ञानं श्रुतवाक्यार्थस्मृतिसहकृतमुपमानं प्रमाणमित्यन्वयः ।

शब्द शब्दक्रियायाम् । शब्दक्रिया तु वाक्यार्थबोधः सा क्रियते येन विभक्त्यन्तसमूहेन स शब्दः प्रमाणमित्यन्वयः । समाख्याशब्दसूचितं लक्षणं प्रकटयति । **उपलब्धीति** । उपलब्धिः प्रमितिः शब्दानामुत्सर्गतः साधनार्थपरत्वात् साध्यते क्रियतेऽनेनेति साधनं करणम् । **निर्वचनं** विभज्य प्रकृतिप्रत्ययविभागेन वचनम् तदेव सामर्थ्यम् शक्तिः तस्माद्बोद्धव्यम् सामान्यलक्षणमिति शेषः । शब्दान्तरोक्तमनुवदति **प्रमीयते** इति । प्रत्यक्षादिपदत्रितयस्यापि निर्वचनमेवमेव कार्यमित्याह **तद्विशेषेति** । **तथैव** करणव्युत्पत्त्यैव अक्ष व्याप्तौ प्रत्यक्ष्यतेऽनेनेति प्रत्यक्षमित्यादि ।

प्रमाणव्यवस्थां प्रमाणसम्प्लवं च दर्शयति **किं पुनरिति** । उत्तरमाह । **उभयथेति** । दर्शनं प्रमितिरस्माकमिति शेषः । प्रमाण-

(भा०) उभयथा दर्शनम्-'अस्त्यात्मा' इत्याप्तोपदेशात्प्रतीयते । तत्रानुमानम्—'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्'(अ० १ आ० १ सू० १०)इति । प्रत्यक्षम्-युञ्जानस्य योगसमाधिजमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति । अग्निराप्तोपदेशात्प्रतीयते 'अत्राग्निः'इति । प्रत्यासीदता धूमदर्शनेनानुमीयते, प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते । व्यवस्था पुनः—'अग्निहोत्रं जुहुयात्स्वर्गकामः'इति । लौकिकस्य स्वर्गे न लिङ्गदर्शनन्न प्रत्यक्षम् । स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम् । तत्र न प्रत्यक्षन्नागमः । पाणौ प्रत्यक्षत उपलभ्यमाने नानुमानन्नागम इति ।

---

(ख०) अस्त्यात्मेति । आत्मा अग्निश्चेति प्रमाणसम्प्लवोदाहरणे, अग्निहोत्रञ्जुहुयात्स्वर्गकाम इत्यादि प्रमाणव्यवस्थायाः ।

---

(भा०चं०) त्रयसम्प्लवं दर्शयति **अस्तीति** । **युञ्जानस्य** आत्मनि मनोयोगविशेषं कुर्वतः । योगश्च समाधिश्च योगसमाधी तत्र श्रुतेऽनुमिते आत्मनि प्रत्यक्षमिति योजना । अध्यात्मप्रमाणसम्प्लवं प्रदर्श्य बाह्ये दर्शयति दृष्टाय **अग्निरिति** । पर्वतेऽस्तीति शेषः उभयत्र । प्रत्यासीदता पर्वतसमीपं गच्छता अनुमीयते पर्वतेऽग्निरस्तीति ह्यनुषङ्गः । **प्रत्यासन्नेन** प्रत्यक्षाय पर्वतमारूढेन **प्रत्यक्षतः** पूर्वोक्तत्रितयात् उपलभ्यतेऽयमत्राग्निरस्तीति शेषः । **व्यवस्था** स्पष्टा । परशङ्कां विहायावस्था व्यवस्था ।

मुमुक्षोरात्मदर्शनोत्कण्ठां विधातुं प्रत्यक्षप्राधान्यमाह **सा चेयमिति** । प्रत्यक्षं परं प्रधानं यस्याः सा प्रत्यक्षपरा । चतुर्विधमज्ञानं चतुर्विधज्ञाननिवर्त्यमाह **जिज्ञासितमिति** । आप्तजिज्ञासानिवृत्ता-

(भा०)सा चेयं प्रमितिः प्रत्यक्षपरा। जिज्ञासितमर्थमाप्तोपदेशात्प्रतिपद्यमानो लिङ्गदर्शनेनापि बुभुत्सते, लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते, उपलब्धेऽर्थे जिज्ञासा निवर्त्तते। पूर्वोक्तमुदाहरणम् 'अग्निः'इति। प्रमातुः प्रमाणानां सङ्करोऽभिसंप्लवः, असङ्करो व्यवस्थेति ॥ ३ ॥

इति त्रिसूत्रीभाष्यम्।

---

(३)प्रत्यक्षलक्षणम्।

(भा०) अथ विभक्तानां लक्षणमिति—

(सू०) इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

---

(ख०) प्रत्यक्षपरेति। प्रत्यक्षमेव परम् प्रधानमस्याः। प्रत्यक्षस्य परता च तदनन्तरमेव जिज्ञासाया निवृत्तेः।

अत्र द्वितीये सूत्रे यत इत्यध्याहृत्य यत्तदोर्नित्याभिसम्बन्धात् तत्प्रत्यक्षमिति प्रमाणवाचि पदं योजनीयम।

---

(भा०चं०)वुदाहरणमाह पूर्वोक्तमिति। सम्प्लवव्यवस्थे व्याचष्टे प्रमातुरित्यादिना। सङ्करोऽनेकमेलनमेकत्र।

इति न्यायभाष्यचन्द्रे त्रिसूत्रीभाष्यचन्द्रिका॥

शरणीकरणीयो मे करुणावरुणालयः।
यो वर्णपदवाक्यार्थस्वरूपेण व्यवस्थितः॥

अथ प्रमाणानां विशेषलक्षणमुच्यते इन्द्रियार्थेत्यादिचतुस्सूत्र्या। षट्पदमिदं सूत्रम्। (१)अर्थे सन्निकर्षो यस्य त-

---

(१) एतादृशव्युत्पत्या इन्द्रियस्यापि प्रत्यक्षज्ञानकरणत्वं सूचितम्।

( भा० ) इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं तत् प्रत्यक्षम्।

"न तर्हीदानीमिदं भवति, आत्मा मनसा संयुज्यते,

(ख०) नं तर्हीति। "लक्षणघटकसूत्राक्षरानुसारेण इन्द्रियार्थयोरेव सन्निकर्षः प्रत्यक्षे आवश्यकः। एतच्च न सङ्गच्छते नैयायिकसिद्धान्तेन येनात्ममनसोरिन्द्रियमनसोश्च सन्निकर्षावश्यकतयाऽभ्युपगतौ"इति पूर्वपक्षाशयः।

(भा०चं०) दर्थसन्निकर्षम्। अर्थसन्निकर्षश्च तदिन्द्रियञ्चेति इन्द्रियार्थसन्निकर्षम् तस्मादुत्पन्नं यत्तत्तथा। एतावन्मात्रं प्रत्यक्षमित्युक्ते सुखादावतिव्याप्तिरत आह **ज्ञानमिति**। संशयादावतिव्याप्तिवारणायाऽव्य**भिचारीति**। व्यभिचारित्वमतद्विषयकत्वम्। तद्विपरीतमव्यभिचारित्वम्। तद्विभजतेऽ**व्यपदेश्यम् व्यवसायात्मकमिति**। नाम द्रव्यगुणकर्मसामान्यैर्विशेषैरपदिश्यते धर्मो यैस्ते व्यपदेशाः तेषु भवं सम्बद्धं व्यपदेश्यम्। तद्विपरीतमव्यपदेश्यम्–निर्विकल्पकम् इदमेव नाम जात्यादियोजनहीनमित्युच्यते। ननु व्यपदेशे भवं जातमित्येव कुतो नोच्यते इति चेन्न नाम्नोऽकारणत्वात्। संज्ञाशब्दस्यार्थप्रत्यक्षेऽव्याप्रियमाणत्वात्। (१)**प्रतिषेत्स्यति** च भाष्यकारः संज्ञायाः कारणत्वम्। व्यवसायो विशेषणविशेष्यभावावगाहि। व्यवसाय आत्माऽभिन्नविशेषणं यस्य तद्व्यवसायात्मकम्। **प्रत्यक्षं** प्रत्यक्षणं साक्षात्कृतिरिति यावत्। प्रत्यक्षप्रमाया लक्षणमिदम्। नन्वप्रकृतमिदं कथमुच्यत इति चेत् न क्रियाविशेषितकारकलक्षणस्य उद्दिष्टत्वात्। अन्यथा का प्रत्यक्षप्रमेति प्रश्नो न निवर्तेत। ननु तथापि जिज्ञासा(२)**निवृत्त्यनु**-

---

(१) यदिदमनुपयुक्ते शब्दार्थसम्बन्धे इत्यादिभाष्यग्रन्थेनेत्यर्थः।

(२) किं प्रमाणमिति–जिज्ञासानिवृत्यनुपपत्तिरित्यर्थः।

(भा०) मन इन्द्रियेण, इन्द्रियमर्थेनेति" ।

नेदं कारणावधारणम्—एतावत्प्रत्यक्षे कारणमिति, किन्तु विशिष्टकारणवचनामिति । यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते, यत्तु समानमनुमानादिज्ञानस्य न तन्निवर्त्तते इति ।

---

(ख०) नेदमिति । सकलानाम्प्रत्यक्षताप्रयोजकानाम्परिगणनार्थं नेदं सूत्रङ्किन्तु यत्किञ्चित्प्रत्यक्षस्यान्यप्रमाणेभ्यो ० यावर्तकन्तान्निरूपणार्थमेव ॥

---

(भा०चं०) पपत्तिरिति चेन्न यतस्तादित्यध्याहृत्य प्रमाणमित्यनुषक्तेनान्वयोपपत्तेरिति सूत्रव्याख्यानस्यैका विधा। भाष्यकारस्तु अन्यथा व्याचष्टे। इन्द्रियस्येति कर्तरि षष्ठी । अर्थेनेति सहार्थे तृतीया । यद्वा अर्थस्य कारकत्वविवक्षया कर्तरि तृतीया । इन्द्रियस्येति कर्मणि षष्ठी । इन्द्रियं यथार्थं सन्निकर्षति तथार्थोऽपीन्द्रियमिति । एवञ्चोभयकृतिसाध्यत्वं प्रत्यक्षस्य बोधितम् भवति । सन्निकर्षः कृतिरुत्पादना इन्द्रियार्थावुत्पादकौ उत्पाद्यम्—प्रत्यक्षम् ।

इन्द्रियसूत्रे मनसोऽग्रहणात् मनसोऽनिन्द्रियत्वमाशङ्क्य इदमाह । न तर्हीति । एतावदेव प्रत्यक्षकारणमित्यवधारणपरम् सूत्रमिति भ्रान्तः शङ्कते नतर्हीति । मनसेति कर्तरि तृतीया। तत्कृतिश्च चलनम् । इन्द्रियेणेति सहार्थे तृतीया । संयुज्यते इत्यनुषज्य कर्मकर्तरि प्रयोगो ज्ञेयः । ननु 'इन्द्रियेणेति' कर्तृतृतीयास्त्विति चेन्न इन्द्रियकृतेरभावात् एवमर्थेनेत्यत्रापि ।

उत्तरमाह नेदमिति । विशिष्टमसाधारणं यत्कारणम् तद्वचनमिदं सूत्रम् । इन्द्रियार्थसन्निकर्षलक्षणम् प्रत्यक्षज्ञप्तेर्ज्ञायतासम्बन्धेन तद्विशिष्टप्रमाप्रत्यक्षं प्रमाणस्य ल-

(भा०) "मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः"।

भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त इति।

---

(ख०) मनस इति। एवमपीन्द्रियमनसोस्संयोगस्यापि प्रत्यक्षमात्रेऽपेक्षितत्वात्तद्व्यावर्तकत्वेन स वक्तव्यो भवति लक्षणसूत्रे—इति पूर्वपक्षाशयः।

भिद्यमानस्येति। एतद्वाक्यं वार्तिककारेण द्विधा व्याख्यातम्॥ (१)यथेन्द्रियार्थसंयोगः प्रत्यक्षस्य व्यावर्तकस्तथैवेन्द्रियमनस्संयोगोऽपीति विविच्य यत्किञ्चिदेकं व्यावर्तकं सूत्रकारेणोक्तम्। यत्किञ्चिद्व्यावर्तकोल्लेखेनैव लक्षणाभिधानस्य सम्पन्नत्वाद्द्वितीयविशेषणं व्यावर्तकमपि नोक्तम्। समानत्वादित्यनेन पदेनैतदेवाभिप्रेतम्॥ एतदेव प्रथमं व्याख्यानम्॥ (२)द्वितीयश्च यथा। इन्द्रियार्थयोरेव संयोग एकम्प्रत्यक्षमपरस्मात्प्रत्यक्षाद्व्यावर्तयति। इन्द्रियमनसोस्तु संयोगस्तत्तदिन्द्रियजसकलप्रत्यक्षसाधारणः। अत एव साधारणत्वात् 'समानत्वात्' अयन्नोक्त इति। अपरश्चार्थः 'समानत्वात्' इत्येतस्य वार्तिककारेणोक्तः—आत्ममनस्संयोगोऽतीन्द्रियाधार

---

(भा०चं०) क्षणम् करणतासम्बन्धेनेत्यभिप्रायः। अप्रयोजकत्वादात्मनो योगो न गृह्यत इत्याह **यत्तु समानमिति**। समानं साधारणं व्यभिचारीत्यर्थः।

नन्वसाधारणत्वं चेद्ग्रहणप्रयोजकम् तर्हि इन्द्रियमनोयोगोऽपि गृह्यतामित्याह **मनस इति**। **वक्तव्यो** वक्तुमुचितः अर्हार्थे कृत्यविधानात्। उत्तरमाह **समानत्वान्नोक्त** इति। समानत्वादलक्षणत्वादलक्षणत्वञ्च मानसे व्यभिचारात्। प्रत्यक्षज्ञानस्य चेति षष्ठी चानादरे। अनादरश्चेह त्यागः।

(भा०) "यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः, अर्थसम्प्र-

---

(ख०) एवमिन्द्रियमनस्संयोगोऽपीति । अथवा—यथाऽऽत्मनस्संयोगो विषयावृत्तिस्तथेन्द्रियमनस्संयोगोऽपि ॥ अथवा—यथाऽऽत्ममनस्संयोगो मनोवृत्तिस्तथेन्द्रियमनस्संयोगोऽपि ॥ एवञ्च(१) अन्यतराभिधानेन चरितार्थत्वात् । अथवा (२)इन्द्रियमनस्संयोगस्यात्ममनस्संयोगस्य सामान्यादनभिधानमात्ममनस्संयोगस्य सूत्रे ॥ इत्यादिवार्तिके स्पष्टम् ॥ द्वितीयमेव व्याख्यानन्तात्पर्ये धृतम् ॥

यावदर्थमिति । अर्था हि सर्वदा सर्वथा सर्वत्र नामधेयेनान्विताः । नास्ति सोऽर्थो यः कदाचिन्नामधेयेन वियुज्यते । तदनेन नामधेयतादात्म्यमर्थानाम् । अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येनावगम्यन्ते—'गौरित्यर्थः' 'अश्व इत्यर्थ' इति । तथा चार्थानान्नामधेयात्मकत्वात्तद्गोचरमालोचनमपि नामगोचरमित्यर्थवन्नामधेयेन व्यपदिश्यमानं शाब्दम्प्रसज्यते । तथा च नाविकल्पकं शब्दरहितमस्तीति तात्पर्यं शङ्काकृतः । तस्य निराकरणमव्यपदेश्यमिति ॥

अत्र च व्याख्याने शाब्दमित्यस्य पदस्यार्थोऽन्यथाकृत्वा व्याख्यातस्तात्पर्यकृता—"न शब्दप्रमाणकतया शाब्दमपि तु शब्दे जातं शाब्दम् । शब्दश्चास्य विषयत्वेन जनकः"—इत्यादिना । एवमर्थकरणञ्च नामजात्यादिसहितस्य सविकल्पस्य प्रत्यक्षलक्षणेऽन्तर्भावदृष्ट्येत्यवधेयम् ॥

नामज्ञानसहिततयोक्तं ज्ञानमैन्द्रियकमतस्तद्बहिष्करणायैवाऽव्यपदेश्यपदमित्येवार्थः साक्षाद् भाष्याक्षरेभ्यो गम्यते ॥ परन्त्वेतन्न सङ्गच्छते नैयायिकसिद्धान्तेनेत्येतस्मादेव तात्पर्यकृताऽन्यथा व्याख्यातम् ।

(भा०)त्ययाच्च व्यवहारः। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं 'रूपम्' इति वा 'रसः' इत्येवं वा भवति। रूपरसशब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानं-'रूपमिति जानीते' 'रस इति जानीते'। नामधेयशब्देन व्यपदिश्यमानं सच्छाब्दं प्रसज्यते"।

अत आह अव्यपदेश्यमिति। यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानं न तन्नामधेयशब्देन व्यपदिश्यते। गृहीतेऽपि च

---

(ख०) न तन्नामधेयेति—नकारो मुद्रितपुस्तकेऽवर्तमानोऽपि तात्पर्यानुसारेणात्र धृतः॥

---

(भा०चं०) शब्दार्थयोरभेदादर्थजमिव प्रत्यक्षं शब्दजमिव(१) भवतीति निराकर्तुं सूत्रकृत्प्रयुक्तमव्यपदेश्यमिति विशेषणं व्याचक्षाणो भाष्यकारस्तदनूद्य दूषयति । **यावदर्थमित्यादिना** । यावदर्थं सर्वार्थेषु तादात्म्येन व्याप्ता नामधेयशब्दा वर्तन्त इति शेषः । तैर्हेतुभिरर्थसम्प्रत्ययः । तैस्सह वा । तत्र ज्ञापकमाह **अर्थसम्प्रत्ययादित्यादि रस इतिजानीते** इत्यन्तम् । रूपमिति वा रस इति वेत्यस्यायमभिप्रायः । इदं ज्ञानम् शब्दार्थयोरभेदमवगाहत इति नह्यत्र भेदः प्रतीयते इति च । रूपरसशब्दाः रूपरसादयः शब्दाः विषयनामधेयम् विषयाभिन्नम् नामधेयमित्यर्थः। तदुक्तं सर्वसिद्धान्तसङ्ग्रहे ।

शब्दस्यार्थस्य सम्बन्धस्तादात्म्यं शाब्दिकैर्मतम् ।
अतः शब्दात्मकं विश्वं शब्दब्रह्मविदां मते ॥ इति ।

---

(१) विषयतया शब्दजं शब्दविषयकं शाब्दमित्यर्थः, शब्दश्चास्य विषयत्वेन जनकोऽर्थतादात्म्यात् ।

(भा०) शब्दार्थसम्बन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते तदा तत् पूर्वस्मादर्थज्ञानान्न विशिष्यते, तदर्थ-

---

(ख०) न विशिष्यत इति–तात्पर्यसम्मतः पाठः ॥ यत्र नामापि ज्ञातं तत्र वस्तुज्ञानन्तु तदवस्थमेव। यथाऽज्ञाते नाम्नि तथैव ज्ञातेऽपि वस्तुनो ज्ञानमित्यर्थः।

---

(भा०चं०) व्यासोऽप्याह

अकारादिक्षकारान्तवर्णरूपव्यवस्थितः।
पुराणपुरुषोऽनादिः शब्दब्रह्मेति कीर्तितः ॥ इति।

आश्वलायनोऽप्याह

या वर्णपदवाक्यार्थस्वरूपेण विवर्तते।
अनादिनिधनानन्ता सा मां पातु सरस्वती ॥ इति।

रूपरसशब्दाः विषयनामधेयमिति लिङ्गवचनभेदः सामानाधिकरण्येऽनुपपन्नामिति नाशङ्कनीयम् वेदाः प्रमाणमितिवत् साधुत्वात्। **तेन** रूपधेयाभिन्नेन नामधेयेन **व्यपदिश्यते** प्रतिपाद्यते। **शाब्दं** विषयविधया शब्दजन्यं **प्रसज्यते** प्रमाणेन संबध्यते न्याय्यमिति यावत्। तदिदं गौतमोऽभिप्रायेण प्रत्याचष्टे इत्यर्थः। **अव्यपदेश्यं** न व्यपदेशजन्यम् नामरूपयोर्भेदादित्याभिप्रायः। भेदमुपपादयति **यदिदमिति**। **अनुपयुक्ते** अगृहीते **अर्थज्ञान**-मर्थमात्रज्ञानम्। **तादृगेव भवतीति**। अगृहीतसम्बन्धकविषयज्ञानमिव भवति। नन्वगृहीतनामार्थशङ्कितकेऽर्थेऽपि तादृगेव ज्ञानं चेत् तत्संज्ञयोल्लिखेत ज्ञाता इति चेन्नेत्याह **तस्यार्थेति**। अयमर्थः। गृहीतसङ्केतकोऽपि पुरुषस्तमर्थं दृष्ट्वा उद्बुद्धसंस्कारः संज्ञां स्मरति ततः परबोधनाय तया संज्ञया ज्ञानमुल्लिखति मम रूपामिति ज्ञानं जातमित्यादि। नैतावता उल्लेखेन शब्दार्थयोरभेदः।

(भा०)विज्ञानं तादृगेव भवति । तस्य त्वर्थज्ञानस्यान्यः समाख्याशब्दो नास्तीति, येन प्रतीयमानं व्यवहाराय कल्पेत । न चाप्रतीयमानेन व्यवहारः । तस्माज्ज्ञेयस्यार्थस्य संज्ञाशब्देनेतिकरणयुक्तेन निर्दिश्यते-'रूपमिति ज्ञानं' 'रस इति ज्ञानमिति' । तदेवमर्थभानकाले स न समाख्याशब्दो व्याप्रियते व्यवहारकाले तु व्याप्रियते । तस्मादशाब्दमर्थज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिति ।

---

(ख०) तस्य त्विति । तस्य त्वित्यारभ्य कल्पेतेत्यन्तं वाक्यम्मुद्रितपुस्तकेऽनुपलब्धमपि गृहीतम् । अनेन विना नचाप्रतीयमानेनेत्यादिवाक्यस्यासम्बद्धत्वात्, तात्पर्यपरिगृहीतत्वाच्च ।

तस्मादित्येव पाठः सम्यक्तरः तात्पर्यपरिगृहीतश्च ।

---

(भा०चं०) संज्ञाशब्दोऽयं हि त्रयाणां भवति स्वस्य स्वार्थस्य स्वार्थज्ञानस्येति । तदुक्तं साङ्ख्ये-'घट'इतिशब्दः 'घट'इत्यर्थो 'घट' इति ज्ञानमिति । तथा चागृहीतसङ्केतकस्य संज्ञास्मरणाभावान्नोल्लिखतीति । **अन्यः समाख्याशब्द** अर्थनामधेयादन्यो नास्ति येनान्येन **व्यवहाराय कल्पेत** समर्थं भवेत् । प्रतीयमानं ज्ञानं न च शब्दार्थयोः सङ्केतग्रहं विनार्थमेव न पश्यति तथासति अन्ध इव इममर्थं पश्यामीत्यपि नोल्लिखेत् । **अप्रतीयमानेन** संज्ञाशब्देन **व्यवहारः** प्रत्यायनम् । **तस्मात्** संज्ञाशब्दात् **ज्ञेयस्य** प्रतिपत्तुं योग्यस्य इतिकरणमितिशब्दः । तद्युक्तेन संज्ञाशब्देन **निर्दिश्यते** प्रत्याय्यते संज्ञेयं ज्ञानमिति शेषः । तदाकारं दर्शयति **रूपमिति ज्ञानमिति** । तस्मात् संज्ञेयभेदात् संज्ञाशब्दो न प्रत्यक्षे कारणमित्युपसंहरति तदेवमिति । अर्थविज्ञानकाले संज्ञेयप्रत्यक्षकाले व्याप्रियते प्रवर्त्तते न प्रत्यक्षे इति शेषः । व्यापारो हीन्द्रियार्थसन्निकर्षस्तेन न करोति रूपादिसंज्ञाव्यव-

(भा०) ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते । तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते । तच्च प्रत्यक्षं प्रसज्यत इत्यत आह अव्यभिचारीति । यदतस्मिंस्तदिति तद् व्यभिचारि, यत्तु तस्मिंस्तदिति तदव्यभिचारि प्रत्यक्षमिति ।

दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा रेणुरिति वा । तदेतदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्र-

---

( ख० ) अव्यभिचारीति विशेषणम्प्रत्यक्षलक्षण एवावश्यकम् । प्रमाणान्तरेषु तु व्यभिचारस्साक्षात्परम्परया वा तन्मूलभूते प्रत्यक्ष एवेति ध्येयम् ॥

अनवधारणज्ञानमिति । संशयात्मकं ज्ञानमिति यावत् ।

---

(भा०चं०) हारकाले व्याप्रियते शाब्दबोधकाले व्याप्रियते शाब्दबोधं जनयतीत्यर्थः । (१) तस्माद्व्यापारेणाकारणत्वादशाब्दं शब्दाजन्यम् अर्थज्ञानं प्रत्यक्षम् इन्द्रियार्थसन्निकर्षोत्पन्नम् इन्द्रियार्थव्यापारमात्रजन्यम् ॥

भूमेरुत्थितो भौमः तेन संसृष्टा वेगेन मिलिताः अतः स्पन्दमानाः ।

विशेषापेक्षं तयोर्विशेषादर्शनाविशेषस्मरणजन्यं तद्विमर्शमात्रं न पूर्वं न मानसमेव ।

---

(टि०) (१) यादिदमनुपयुक्ते शब्दार्थसम्बन्धे इति भाष्यस्यायमभिप्रायः । ज्ञानं च विषयभेदानुविधायि यथा चाक्षुषं विज्ञानं रूपे एव नियतं न शब्दे प्रवर्तते । तथा श्रौत्रं शब्दे एव नियतं न रूपे । यदि रूपादि शब्दात्मकमेव भवेत् तर्हि शब्दग्राहि ज्ञानं रूपादावपि प्रवर्तेत । अप्रवर्तमानं रूपादीनां शब्दात्मतां विधुरयति । अन्यच्च रूपादीनां शब्दात्मकत्वे तेषामपि श्रोत्रग्राह्यत्वादन्धोऽपि रूपं गृह्णीयात् । तस्माच्छब्दात्मकता ज्ञानार्थयोर्न युक्तिसहेति ।

(भा०) त्यक्षं प्रसज्यत इत्यत आह व्यवसायात्मकमिति। न चैतन्मन्तव्यम् "आत्ममनःसन्निकर्षजमेवाऽनवधारणज्ञानमिति"। चक्षुषा ह्ययमर्थं पश्यन्नावधारयति। यथा चेन्द्रियेणोपलब्धमर्थं मनसोपलभते, एवमिन्द्रियेणानवधारयन्मनसा नावधारयति। यच्चैतदिन्द्रियानवधारणपूर्वकं मनसाऽनवधारणं तद्विशेषापेक्षं

---

(ख०) व्यवसायात्मकमिति। वस्तुतो निर्विकल्पकमेव ज्ञानं प्रत्यक्षत्वेन सूत्रभाष्याभ्यामिष्टमिति प्रतिभाति। तथा च कल्पनापोढमभ्रान्तमिति बौद्धाचार्यधृतमेव लक्षणं सूत्रभाष्यसम्मतमिति तदक्षरतात्पर्यम्। वाचस्पतिमिश्रास्तु सविकल्पकमपि ज्ञानं सौत्रलक्षणेऽन्तर्भावयितुं यतन्ते। 'अव्यभिचारिपदेनैव संशयज्ञाने निरस्ते सविकल्पकप्रत्यक्षावरोधार्थमुपादीयमानं व्यवसायात्मकपदं साक्षात् सविकल्पकस्य वाचकमिति'। भाष्यकारेण वार्तिककारेण च सविकल्पकज्ञानस्य चर्चाऽपि नैव कृतेत्यत्रातिस्फुटत्वाच्छिष्यैर्गम्यत एवेति भाष्यवार्तिकाभ्यामव्याख्यातमिति, स्वकृतव्याख्यानं सविकल्पकान्तर्भावनपरं त्रिलोचनगुरून्नीतमार्गानुसारीति वाचस्पतिमिश्राः।

चक्षुषेति। अनेन चैतत्सूचितं यत् सर्वे संशया नेन्द्रियव्यापारनिरपेक्षाः, यद्यपि कतिपये केवलमानसव्यापारजन्या एवेति।

मनसोपलभत इति! चक्षुस्सहायेनेति शेषः।

यच्चैतदिति। अनयोर्मनोमात्रजन्येन्द्रियसन्निकर्षजन्ययोः संशयज्ञानयोर्मध्ये इन्द्रियानवधारणपूर्वकं यत् इन्द्रियसन्निकर्षरूपविशेषसापेक्षं तद् विमर्शमात्रम्। स एव संशयः केवलमित्यर्थः। स एवात्र संशयत्वेन गृह्यते, न तु पूर्वम्, मनोमात्रजन्यमनवधारणज्ञानमिति यावत्। एवञ्च बहूनां संशयज्ञानानामिन्द्रियजन्यत्वे तेषां व्युदासाय विशेषणान्तरमपेक्षितमासीत्।

(भा०) विमर्शमात्रं संशयो न पूर्वमिति । सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण व्यवसायः, पश्चान्मनसाऽनुव्यवसायः, उपहतेन्द्रियाणामनुव्यवसायाभावादिति ।

"आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम् । अनिन्द्रियार्थसन्निकर्षजं हि तदिति" ।

इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात् । भौतिकानीन्द्रियाणि नियतविषयाणि, सगु-

---

( ख० ) अनुव्यवसायाभावादिति । अन्धबधिरादीनामनुव्यवसायाभावात् तत्पूर्वं व्यवसायोत्पत्तौ चक्षुराद्यपेक्षणीयम् । तथा च संशयज्ञानोत्पादेऽपीन्द्रियार्थसन्निकर्षोऽपेक्षणीयः ।

आत्मादिष्विति । आत्मादिज्ञानेषु सुखादिज्ञानेषु चेत्यर्थः । स्वतः सुखस्येन्द्रियार्थजत्वेऽपि न प्रत्यक्षता । सा हि सुखज्ञानस्यैव भवितुमर्हति ।

इन्द्रियस्येति । तत्त्वतो मनस इन्द्रियत्वेऽपि तस्य तेभ्यः पृथगुद्देशे तस्य भिन्नधर्मवत्त्वमेव कारणम् ।

---

(भा०चं०) तर्हि मानसप्रत्यक्ष लक्षणमिदमव्याप्तमित्याशङ्कते आत्मादिष्विति । इन्द्रियजमिति । मनसोऽनिन्द्रियत्वादिति शेषः । अनिन्द्रियं मनः इन्द्रियवर्गे सूत्रकृताऽजानतत्वात् ।

समाधत्ते इन्द्रियस्य वै इति । वै शब्दोऽवधारणे इन्द्रियस्यैव सत इन्द्रियतादात्म्यवतः स्वभावः सत्ता । पृथगुपदेश इन्द्रियवर्गेऽनुपदिश्य प्रमेयवर्गे उपदेशः । धर्मभेदात् धर्मविशेषज्ञानमुद्दिश्य तदाह भौतिकानीति । भौतिकानि भूतप्रकृतिकानि तथा च सूत्रम् "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य" इति । 'जनिकर्तुःप्रकृतिरिति' पाणिनीसूत्रेण प्रकृतेरपादानसंज्ञया प-

(भा०) णानां चैषामिन्द्रियभाव इति । मनस्त्वभौतिकं सर्वविषयं च । नास्य सगुणस्येन्द्रियभाव इति । सति चेन्द्रियार्थसन्निकर्षे सन्निधिमसन्निधिं चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्यामः

---

( ख० ) सगुणानामिति । घ्राणादीनि यथा स्वस्वगुणेन गन्धादिना बाह्यं गन्धादि बोधयन्ति नैवम्मन इति । वार्तिके त्वेकमेव मनस इन्द्रियेभ्यो वैधर्म्यमभ्युपगतम् । तच्च मनसस्सर्वविषयत्वमिन्द्रियाणाम्प्रतिनियतविषयत्वमिति ।

सति चेति । इन्द्रियार्थसन्निकर्षे सत्यपि यद्युगपज्ज्ञानन्नोत्पद्यते यत्र मनसोऽसन्निधिरेव कारणम् । मनसस्सन्निधिमसन्निधिं वा कारणं वक्ष्याम इति सम्बन्धः ।

---

(भा०चं०) श्चमी । प्रकृतिविकृतिभावश्चेह समवायिसमवेततयाऽवयवावयविभावः । ननु नेदं श्रोत्रे सम्बध्यते तस्याकाशात्मकतया एकतया च प्रकृतिविकृतित्वाऽभावादिति चेत्सत्यम् । गौणस्य तस्य श्रोत्रे विवक्षातः प्रयोगो ज्ञातव्यो भाक्तः । भेदान्तरं दर्शयति **नियतविषयाणीति** । भेदान्तरञ्चाह **सगुणानामिति** । स्वविषयसमानगुणानामित्यर्थः । मनसो नैवमित्याह **मनस्त्विति** । **अत्र वार्त्तिकम्** । यत्तु सूत्रे मनसोऽनभिधानं तद्वैधर्म्यात् । वैधर्म्यञ्च सर्वविषयत्वासर्वविषयत्वे । सर्वविषयं मनोऽसर्वविषयाणीन्द्रियाणीति । सर्वविषयं तु मनः स्मृतिकारणसंयोगाश्रयत्वादात्मवत् । सुखग्राहकसंयोगाश्रयत्वादात्मवत् । समस्तेन्द्रियाधिष्ठातृत्वाच्च आत्मवत् । भौतिकाभौतिकत्वे तु न वैधर्म्यं विबोधात् नहि भौतिकं मनो नाऽप्यभौतिकमिति । कार्यधर्मावेतौ भौतिकत्वाऽभौतिकत्वे नच कार्यं मनः, तस्मान्न भौतिकं नाऽप्यभौतिकमिति । श्रोत्रे चाऽसम्भवः । यदि भौतिकत्वाभौतिकत्वे लक्षणाद्वैधर्म्यादपरिपाठः सूत्रे मनसः तर्हि श्रौत्रमपि

(भा०)(अ० १ आ० १ सू० १६) इति । मनसश्चेन्द्रियभावात्तन्न वाच्यं लक्षणान्तरमिति । तन्त्रान्तरसमाचाराच्चैतत्प्रत्येतव्य-मिति । परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः ।

व्याख्यातं प्रत्यक्षम् ॥ ४ ॥

---

( ख० ) न वाच्यं लक्षणान्तरमिति । आत्मसुखादिज्ञानाना-मन्तर्भावायेति शेषः ।

परमतमिति । बौद्धनैयायिकेन दिङ्नागेन प्रमाणसमुच्चयनाम्नि ग्रन्थे वाक्यमिदमाक्षिप्तम्—अप्रतिषेधस्यैव पराभिमतसिद्धान्तानुमति-सूचकत्वे चक्षुरादीनामिन्द्रियाणामपि तथैवानुमतत्वसम्भवे तेषाम्पृथ-गुपन्यासोऽनर्थक एवेति वदता ।

---

(भा०चं०) सूत्रे न पठितव्यम् नहि श्रोत्रं भौतिकम् नाप्यभौतिकमिति । स्वार्थे प्रत्ययविधानमिति चेन्न वैयर्थ्यात् । स्यादेषा बुद्धिः स्वार्थिक एष प्रत्ययो भूतमेव भौतिकमिति । तच्च न प्रत्ययवैधर्म्यात् । नहि भौतिकमित्यनेन कश्चिदाकाशे तद्धितार्थो लभ्यते तस्मादिदं स्वार्थे प्रत्ययविधानमिति । यत्पुनरेतत्पृथगभिधानं नास्तीति न नास्ति युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति पृथगुच्यते तेन च प्रतिपादितं मनसः करणत्वमिति । सगुणानामिन्द्रियभावो वैधर्म्यमित्येतदप्ययुक्त-म् । श्रोत्रानभिधानप्रसङ्गात् तस्मात्सर्वविषयत्वात्सर्वविषयत्वमेव वैधर्म्यमित्येवं ज्यायः । सन्निधिः संयोगः स चान्यत्रासन्निधिः अव्यापकत्वान्मनसः । तन्त्रान्तरं वैशेषिकतन्त्रादि । तन्त्रसमाचारा-न्मनस इन्द्रियत्वेन प्रतिपादनात् । एतन्मनस इन्द्रियत्वम् । ननु स्वतन्त्रेऽनुक्तं परतन्त्रोक्तं कथं ग्राह्यमित्यत आह । **परमतमिति** । अप्रतिषिद्धं स्वतन्त्रे अनिषिद्धम् । अनुमतं तन्त्रकारेणेति शेषः । तन्त्रयुक्तिः तन्त्राणां परस्परं तत्तदर्थे एकवाक्यत्वमविप्रतिपत्तिः

(भा०चं०) सम्वाद इति यावत्। सम्मतिरित्यर्थः। अत्र वार्तिकम्। तन्त्रान्तरसमाचाराच्च तन्त्रान्तरे मन इन्द्रियत्वेन पठ्यते तच्चेह न प्रतिषिध्यते अप्रतिषेधादुपात्तं तदिति । न शेषाभिधानवैयर्थ्यात्। शेषाण्यपीन्द्रियाणि तैः परिपठितानीति तान्यपि न वक्तव्यानीति। यद्यप्रतिषेधादुपादानं स्यादिति । न तन्त्रयुक्त्यनवबोधात् न भवता तन्त्रयुक्तिः परिज्ञायते, परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः। न च यस्य स्वमतपरिग्रहो नास्ति यस्य स्वमतं परमतं वा भिद्यते भवता च परमतानुरोधेन सर्वं स्वमतं निवार्यत इति तन्निवारणात् स्वमतं परमतमित्येव नेष्यते तस्मादस्ति मन इन्द्रियम्। तदुपपन्नमिन्द्रियार्थ-सन्निकर्षोत्पन्नं सुखादिज्ञानमिति व्यापकलक्षणम्। किमिदं प्रत्यक्षल-क्षणं समस्तमसमस्तं वेति सन्देहः। कुतः ? उभयथा दर्शनात् स-मस्तं लक्षणं भवति व्यस्तञ्चेति। इच्छाद्वेषयत्नसुखदुःखादीन्यात्मनो लिङ्गमिति व्यस्तलक्षणमेकशः प्रतिपादकम्। तथा समानानेकधर्मोपपत्ते-रित्यादि व्यस्तम्। समस्तं पुनः वचनविघातोऽर्थविकल्पोपपत्त्या छल-मिति समस्तेनानेन छलं लक्ष्यते । प्रसिद्धसाधर्म्यात्साध्यसाधनमुप-मानमिति लक्षणं चेदम्। अतः सन्देहः किं समस्तमुतासमस्तमिति। समस्तमित्याह यस्मादेकशोऽनुमानसुखशाब्दविपर्ययसंशयादीनि निव-र्त्यन्त इति। यदि इन्द्रियार्थसन्निकर्षोत्पन्नमित्याद्येकशः पदमभिधीयते योऽयमेकेन पदेन सङ्गृहीतोर्थः स प्रत्यक्षं स्यादिति तेन पूर्वोक्तानामनु-मानादीनां प्रत्यक्षत्वप्रसङ्गः स्यादिति। एवं द्वयोः पदयोरुपादाने पदद्व-योपात्तस्य प्रत्यक्षत्वप्रसङ्गः। एवं त्रयाणां पदानामुपादाने तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः। एवं चतुर्णां पदानामुपादाने तैरुपात्तस्य प्रत्यक्षत्व-प्रसङ्गः। तस्मादेकद्वित्रिचतुष्पदपर्युदासात् पञ्चपदपरिग्रहेण त्रिंशत्कोटी-र्व्युदस्य समस्तं लक्षणमुच्यते। तत्रैकपदपरिग्रहेण तावत्पञ्च कोटयः, द्विपदपरिग्रहेण दश, त्रिपदपरिग्रहेणापि दशैव, चतुःपदपरिग्रहेण पञ्च।

(४)अनुमानलक्षणम् ।

## अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतोदृष्टं च ॥ ५ ॥

---

(भा०चं०) एकत्रिंशत्तमी पुनः समस्तपरिग्रहेणोपात्तेति। कस्माद्विशेषविधिप्रतिषेधयोः शेषविधिप्रतिषेधविध्यभ्यनुज्ञाविषयत्वात्। अयं खलु विशेषविधिः प्रवर्तमानः शेषं प्रतिषेधयति । यथा दक्षिणेनाक्ष्णा पश्यतीति। विशेषप्रतिषेधश्च शेषाभ्यनुज्ञाविषयो भवति। यथा वामेनाक्ष्णा न पश्यतीति। तथेहाप्येकदेशाभ्युपगमे शेषप्रतिषेधः शेषविधानं वा गम्यते इति व्यवस्थितं प्रत्यक्षमिति। व्याख्यातं प्रत्यक्षमिति भाष्यमनुपपन्नं प्रकृतस्य प्रत्यक्षप्रमाणस्याव्याख्यानात्। ननु प्रत्यक्षपदं प्रमापरमिति चेन्न। प्रतिज्ञया सहानेकवाक्यतापत्तेः। तथा हि प्रतिज्ञा अथ विभक्तानां लक्षणमिति । सूत्रमप्यनुपपन्नम्। प्रकृतस्य प्रत्यक्षप्रमाकरणस्याव्याख्यानात् प्रमाणमुद्दिश्य विभज्य प्रमालक्षणकरणादिति चेन्न सूत्रभाष्याभिप्रायानवबोधनात्। तथाहि प्रमाविशिष्टं करणमुद्दिष्टम् प्रमाविशेषविशिष्टकरणं च विभक्तम् ततश्च विशेष्यवद्विशेषणमप्युद्दिष्टं विभक्तं च। अत उभयलक्षणं न्याय्यम्। तत्र प्रोपसर्गविशेषणेनैव सामान्यलक्षणमुभयोः कृतं वेदितव्यम्। विशेषलक्षणं त्ववशिष्टम् । तत्र प्रमाणमिव लक्षणेन प्रमाणानि लक्षितानि भवन्तीति सूत्रभाष्ययोरभिप्रायः । तच्चास्माभिर्भाष्यव्याख्यानावसरे व्याख्यातमिति। इति प्रत्यक्षभाष्यचन्द्रिका ॥

अथ तत्पूर्वमित्यादिसूत्रम्। अथानुमानं निरूप्यत इत्यन्वयः । अथेत्यस्यानन्तरमर्थः । कस्मादनन्तरं प्रत्यक्षनिरूपणात् । कस्येदं विशेषणम्। अध्याहृतक्रियायाः तथाच प्रत्यक्षानन्तरवर्तमाननिरूपणकर्मानुमितिरित्यर्थः। **अयमभिप्रायः** महाविषयं महाप्रमाणमनुमानं

**(भा०) तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनञ्चाभिसम्बध्यते । लिङ्गलिङ्गिनोः सम्बद्धयो-**

---

( ख० ) अत्र सूत्रे अथेत्यानन्तर्ये । उक्तम्प्रत्यक्षमनुमानस्य हेतुः इदानीमनुमानं हेतुमद् व्युत्पाद्यत इत्यर्थः । इति तात्पर्यम् ।

तत्पूर्वकमिति । (१)'तानि'–(२)'ते'–(३)'तत्'–पूर्वं यस्येति 'तत्पूर्वकम्' । (१)यदा तानीति विग्रहस्तदा समस्तप्रमाणाभिसम्बन्धात् सर्वप्रमाणपूर्वकत्वमनुमानस्य वर्णितम्भवति । पारम्पर्येण पुनस्तत् प्रत्यक्ष एव व्यवतिष्ठते इति तत्पूर्वकत्वमुक्तम्भवति ॥ (२)यदापि विवेकात् 'ते पूर्वे यस्येति'–ते द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य तदिदन्तत्पूर्वकम्प्रत्यक्षमिति । ते च द्वे प्रत्यक्षे लिङ्गलिङ्गिसम्बन्धदर्शनमाद्यम्प्रत्यक्षम्, लिङ्गदर्शनं द्वितीयम् । बुभुत्सावतो द्वितीयात् लिङ्गदर्शनात् स्मृतिः, स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनम् । तदिदमन्तिमम्प्रत्यक्षं पूर्वाभ्याम्प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूपम् 'अनुमानम्' भवति ॥ (३)यदा पुनः 'तत् पूर्वं यस्य' तदिदन्तत्पूर्वकमिति–तदा भेदस्याविवक्षितत्वात् लिङ्गलिङ्गसम्बन्धदर्शनानन्तरं लिङ्गदर्शनसम्बन्धस्मृतिभिः लिङ्गपरामर्शो विशिष्यते ॥ इत्यादि वार्तिकेऽनुसन्धेयम् ।

तत्पूर्वं यस्येत्येतावन्मात्रे विग्रहेऽनुमानजन्येऽनुमानेऽव्याप्तिरतिव्याप्तिश्च प्रत्यक्षजन्येषु स्मरणसंशयादिज्ञानेष्वित्येव वीजं वार्तिकोक्तत्रिविधविग्रहोपन्यासस्य ॥

अत्र च वार्तिके अनुमितिज्ञानानुमितिकरणयोः (अनुमानपदाभिधेययोः) विवेकः स्पष्टीकृतः ।

---

(भा०चं०) मया निरूप्यम् भवद्भिः सावधानैर्भवितव्यमिति । एवं सावधानीकृत्यलक्षणमाह **तत्पूर्वकमिति** । अत्रानुमानमुद्देश्यं त-

(भा०चं०) त्पूर्वकमिति लक्षणम् अभेदे लक्ष्यलक्षणभावः भेदे तु तत्पूर्वकत्वं लक्षणम् । (१)तानि प्रत्यक्षाणि व्याप्तिदर्शनादीनि त्रीणि पूर्वाणि यस्य तत्तथा । यद्वा पूर्वपदमिदं करणपरम् । तद्व्याप्यदर्शनं व्याप्तिस्मृतिपरामर्शाभ्यां करणं यत्र तदनुमानमनुमितिः । यद्वा तत्पदं तदीयपरं तच्च व्याप्तिदर्शनजन्यस्मरणम् तत्पूर्वं करणं यस्य तत्तथा । अत्र परामर्शो व्यापारो ज्ञेयः । ये तु परामर्शमेव करणं वदन्ति ते करणतत्त्वानभिज्ञाः । करणत्वं हि कारकत्वव्याप्यम्, कारकत्वं च व्यापारकारणत्वम्, तदभावे करणत्वानुपपत्तेः । एतत्सर्वमभिप्रेत्य भाष्यकारो व्याचष्टे तत्पूर्वकमित्यनेनेति । लिङ्गलिङ्गिनोः सम्बन्धो व्याप्तिः तस्य दर्शनम्, दृष्टान्ते लिङ्गदर्शनम् पक्षे, एतदुभयमपि सम्बध्यते अभिसम्बद्धत्वेन प्रतिपद्यते

---

(टि०) (१) अत्र तात्पर्यटीकाकाराः । स्यादेतदतिव्यापकमेतत्तत्पूर्वकत्वं तदिति प्रत्यक्षं परामृशत्यानन्तर्यात्, तथा च प्रत्यक्षपूर्वकत्वमनुमानस्येवागमस्मृतिसंशयविपर्यासानामप्यस्तीति तान्यप्यनुमानं प्रसज्येरन् । अनुमानादिपूर्वकं चानुमानं न प्रत्यक्षपूर्वकमिति नानुमानं स्यादनुमानलक्षणेनाव्यापनात् । तस्मादव्याप्त्यतिव्याप्तिभ्यामलक्षण मेतदित्यत आह । तत्पूर्वकमिति । तत्पूर्वकमित्यावृत्या विग्रहत्रयप्रदर्शनम् । तत्र प्रथमे विग्रहे तानीत्यनन्तरं सूत्रमुल्लङ्घ्य विभागसूत्रगताः प्रत्यक्षादयः सम्बन्धनीयाः योग्यत्वात् । तदनेन लक्षणस्याव्याप्तिः परिहृता । तदिदमाह यदातानीति । नन्वेवं प्रत्यक्षपूर्वकमिति भाष्यविरोध इत्यत आह पारम्पर्येणेति । पारम्पर्येण हि प्रत्यक्षपूर्वकत्वमुक्तं भाष्यकृता तस्मान्न विरोध इति । अतिव्याप्तिनिरासाय द्वितीयं विग्रहं विवृणोति यदापीति । ते इति विग्रहे अनन्तरसूत्रगतमेव प्रत्यक्षपदं सम्बध्यते तथाच द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्य तदिदं तत्पूर्वकं प्रत्यक्षम् तत्तु स्वविषये प्रत्यक्षमप्यनुमेयार्थप्रत्ययं कुर्वदनुमानम् । तदिदं तदित्युच्यते ।

(भा०) दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते। स्मृत्या लिङ्गदर्शनेन चाप्रत्यक्षोऽर्थोऽनुमीयते।

पूर्ववदिति। यत्र कारणेन कार्यमनुमीयते। यथा मेघोन्न-

---

(ख०) अप्रत्यक्षोऽर्थोऽनुमीयत इति। अग्निधूमौ सहितौ पश्यतीत्येकम्प्रत्यक्षमग्निसम्बद्धधूमस्य महानसादौ। पुनः पर्वते धूमम्पश्यतीति द्वितीयम्प्रत्यक्षम्। पूर्वदृष्टसम्बन्धसहकृतेन चानेनाप्रत्यक्षस्याग्नेरनुमानम्॥

पूर्ववदिति। 'पूर्वम्' कारणं, कार्यात्। तत् यस्यास्ति विषयतया परामर्शज्ञानस्य अनुमितिकरणभूतस्य—अनुमानस्य तत् 'पूर्ववत्' इत्यर्थः।

---

(भा०चं०) विषयशब्देन विषयिकीर्तनात्। कथमभिसम्बद्ध इत्यत आह। **लिङ्गलिङ्गिनोः सम्बद्धयोरिति**। दर्शनेन अन्यतरदर्शनेन तद्बोधकेन। लिङ्गस्मृतिर्लिङ्गे व्याप्तिस्मृतिः अभिसम्बध्यते उत्पाद्यतया ज्ञायते। स्मृत्या जनितेन लिङ्गदर्शनेन लिङ्गपरामर्शेण व्यापारेणानुमीयत इत्यन्वयः। अत्र तृतीयासहकारिहेतौ गौणकरणे वा।

**पूर्ववदितीति**। पूर्वं कारणं स्वगतधर्मविशेषेण परामृश्यमाणं विद्यते यस्य तत् पूर्ववत् इदमाह **यत्र कारणेनेति**। कारणेन स्वगतलिङ्गपरामर्शविषयेण। हेतुतृतीयेयम्। उदाहरति **यथेति**। उन्नतिरुत्कर्षः स च गम्भीरध्वानवत्त्वाचिरप्रभाचमत्कारवत्त्ववर्तुलबलाकात्वरूपः। अनुमानप्रयोगस्तु इमे मेघाः वृष्टिमन्तः उन्नतिमत्त्वात् वृष्टिमन्मेघवदिति। **शेषवत्** कार्यलिङ्गकम्। प्रयोगस्तु नदीयमुपरिवृष्टिमद्देशसम्बन्धिनी शीघ्रतरस्रोतस्त्वे सति फेनफलकाष्ठादिवहने सति पूर्वोदकविपरीतोदकपूर्णत्वात् वृष्टिमत्पूर्णनदीवदिति। भविष्यत्ता भूतता चेति कालस्याविवक्षितत्वाद्यः कश्चित् कालो ग्राह्यः। सामान्यतः सामा-

(भा०) त्या 'भविष्यति वृष्टिरिति'। शेषवत्तत् यत्र कार्येण कारणमनुमीयते। पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोनुमीयते 'भूता वृष्टिरिति'। सामान्यतोदृष्टम्-व्रज्यापूर्वकमन्यत्र दृष्टस्यान्यत्र दर्शनमिति, तथा चादित्यस्य, तस्मादस्त्यप्रत्यक्षाप्यादित्यस्य व्रज्येति।

अथ वा पूर्ववदिति यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनान्यतरस्याप्रत्यक्षस्यानुमानम् यथा 'धूमेनाग्निरिति'।

---

( ख० ) शेषवदिति। 'शेषः' कार्यम्, कारणापेक्षया। अयमेव विषयो यस्यानुमानस्य तत् 'शेषवत्'। आदित्यस्य व्रज्येति। अत्र 'देशान्तरप्राप्तिमानादित्यः—द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धात् अनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात्, सण्यादिवत्' इत्यनुमित्याकारो वार्तिकसम्मतः।

अथ वेति। पूर्ववदित्यादिपदानां त्रयाणामर्थान्तरमाह।

---

(भा०चं०) न्येन कार्यकारणभिन्नेन लिङ्गेन विशिष्टं दृष्टं दर्शनं हेतुतया विद्यते यस्मिंस्तत्सामान्यतोदृष्टम्। यथा बलाकया सलिलानुमानमिति। **व्रज्यापूर्वकमिति**। व्रज्या गमनम् अन्यत्र देशे दृष्टस्य धर्मिणो मूर्तस्य तदन्यत्र दर्शनम्, प्रयोगस्तु आदित्यो व्रज्यावान् पूर्वदृष्टान्यदेशे दृश्यमानत्वात् स्वप्नदृष्टपूर्वकाशीदृष्टपुरुषवत्।

प्रकारान्तरेण व्याचष्टे **पूर्ववदिति**। **यत्रेति**। यत्रानुमितौ यथा पूर्वपूर्वौ व्याप्यव्यापकावनतिक्रम्य प्रत्यक्षं भूतं ययोर्व्याप्यव्यापकभावेन दृष्टान्ते तयोरन्यतरदर्शनेनानुमानमनुमितिकरणं भवतीति शेषः। स्वार्थानुमितौ लिङ्गं परार्थानुमितौ लिङ्गवचनमिति बोध्यम्। तत्पूर्ववत्। **शेषवन्नामेति**। शिष्यत इति शेषः स्वविषयतया विद्यते यस्य तच्छेषवत् परिशेषणं परिशेषः निषेधशिष्टे ज्ञानम्। प्रसक्तप्रतिषेधप्रसक्ताना-

**(भा०) शेषवन्नाम परिशेषः। स च प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः। यथा सदनित्यमेवमादिना द्रव्यगुणकर्मणामविशेषेण 'सामान्यविशेषसमवायेभ्यो विभक्तस्य**

---

( ख० ) शेषवन्नामेति। 'प्रसक्तानां' सम्भाव्यमानाम्मध्ये केषाञ्चि'त्प्रतिषेधे' सति–'अन्यत्र' उक्तेभ्यः सम्भाव्यमानेभ्यः कुत्रापि–'अप्रसङ्गात्' असम्भाव्यमानत्वात्'–शिष्यमाणे'–उक्तेषु सम्भाव्यमानेषु उक्तप्रतिषेधानन्तरं यत् परिशिष्टम् तत्र–'सम्प्रत्ययः' ज्ञानम्॥

यथोक्तदृष्टान्ते–शब्दः सन् अनित्यश्चेति निश्चयात् शब्दो द्रव्यं गुणः कर्म वा भवितुमर्हति–अतोऽत्र द्रव्यगुणकर्माणि 'प्रसक्तानि'। तेषाञ्च मध्ये भाष्योक्तहेतुभिः द्रव्यत्वस्य कर्मत्वस्य च प्रतिषेधः। अतः गुणत्वमेव 'शिष्यमाणम्' तत्र 'सम्प्रत्ययः'–शब्दो गुण एवेत्याकारकं ज्ञानं जायते॥

---

(भा०चं०) मन्यतमान्यतमप्रतिषेधे प्रमाणेन बाधने सति शिष्यमाणेऽवशिष्टेऽन्यतमे सम्प्रत्ययोऽनुमितिः(१) सदनित्यमेवमादिना। धर्मप्रधानो निर्देशोऽयम्। अविशेषेणाव्यावर्तकेन सन्देहबीजेन सामान्यादिनिर्भञ्जकेन। एकद्रव्यं समवायिकारणं यस्य तत्त्वात्। शब्दान्तरस्य हेतुत्वात्। शब्दहेतुतामात्रं कर्मणोपीत्यन्तरपदोपादानम्। यस्तु शिष्यते न प्रतिषिध्यते सोयमिति सम्प्रत्ययाकारः। शब्दो गुणो भवितुमर्हति प्रसक्तेषु द्रव्यगुणकर्मस्वितरप्रतिषेधकप्रमाणपरिशिष्यमाणत्वात्। यन्नैवं तन्नैवं यथाकर्म। **सामान्यतो दृष्टं नाम** अत्र नञ्श्लेषः सामान्यतः सामान्येन लिङ्गेन सामान्यरूपेण साध्यसिद्धिः तत्र विशेषतो दर्शनादीषद्दृष्टमदृष्टमित्युच्यते। दृष्टमिति भावक्तान्तम्।

---

(टि०)(१) अद्रव्यं द्रव्यं यथा परमाण्वादयः। अनेकद्रव्यं द्रव्यं यथा घटादयः। अद्रव्यं एकद्रव्यं द्रव्यं न भवतीति शब्दस्य गुणत्वप्रतिपत्तिः।

(भा०)शब्दस्य तस्मिन् द्रव्यकर्मगुणसंशये-न द्रव्यम् एकद्रव्यत्वात्, न कर्म शब्दान्तरहेतुत्वात्–यस्तु शिष्यते सोऽयमिति शब्दस्य

---

( ख० ) एकद्रव्यत्वादिति । एकद्रव्यसमवेतत्वादित्यर्थः । शब्दः एकस्मिन्नेव द्रव्ये–आकाशे–समवैति । द्रव्याणि तु परमाणुरूपाणि कुत्रापि न समवयन्त्यतोऽद्रव्याण्येव । परमाण्वतिरिक्तानि च द्रव्याण्यनेकपरमाणुसमवेतानि । अत एकद्रव्यसमवेतत्वात् शब्दो न द्रव्यम् ।

शब्दान्तरहेतुत्वादिति । समानजातीयारम्भकत्वादित्यर्थः । शब्दः शब्दान्तरं जनयति—कर्म तु विजातीयमेव कार्यं जनयतीत्यतः शब्दो न कर्म ॥

अस्मिन् शेषवदुदाहरणे वाचस्पतिमिश्राणामरुचिः । तैरुक्तम्–"इदन्तु परिशेषस्योदाहरणं नादरणीयम् । व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति । एष पुनरन्वयव्यतिरेकी । द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वात् विपक्षे सामान्यादावभावात् ॥ तस्मात् आत्मतन्त्रतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यम्" इति ॥

इच्छादयो गुणत्वाद् द्रव्यसमवेताः । इच्छाद्याधारत्वेन द्रव्याणि 'प्रसक्तानि'–तेषाम्मध्ये पृथिव्यादीनाम्प्रतिषेधात्, आत्मैव 'शिष्यमाणः' । तत्र यः 'सम्प्रत्ययः' इच्छाद्याधारत्वेन ज्ञानम् स 'परिशेषः' ॥

---

(भा०चं०) लिङ्गलिङ्गिनोः सम्बन्धे विशेषरूपेण व्याप्तौ अत्र प्रत्यक्षे क्वचिदपि दृष्टान्ते दृष्टे केनचिदर्थेन सामान्यदृष्टान्तेन लिङ्गस्य लिङ्गसमानाधिकरणस्य । सामान्यात्साधर्म्यादप्रत्यक्षः दृष्टान्तेपि विशेषेणादृष्टः सामान्येन दृष्टः लिङ्गी साध्यो गम्यते अनुमीयते । लिङ्गं हि द्विविधं तादात्म्येन हेतुमान् भेदेन हेतुश्चेति । उदाहरति य-

(भा०) गुणत्वप्रतिपत्तिः । सामान्यतोदृष्टं नाम-यत्राप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते । यथेच्छादिभिरात्मा । इच्छादयो गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मेति ।

---

(ख०)सामान्यादिति । सादृश्यादित्यर्थः । यथा दृष्टांते 'द्रव्यसंस्थानत्वम्' इच्छादिगुणानामप्रत्यक्षाणां रूपादिगुणानां च प्रत्यक्षाणां सादृश्यम् ।

इच्छादय इति । इच्छादीनां गुणत्वेन केवलपारतन्त्र्यसाधनं सामान्यतोदृष्टानुमानेन-आत्मपरतन्त्रता तु तेषां शेषवताऽनुमानेनेति विवेकः।

तद्यदिति । यद् द्रव्यमिति शेषः ॥

पूर्ववदादिस्वरूपमन्यथाऽपि वर्णितं वार्तिके । तद्यथा । पूर्ववदित्यत्र 'पूर्वम्' नाम साध्यम् । अतः पूर्ववदित्यस्य साध्यवत्--साध्येवृत्तीत्यर्थः ॥ शेषवदित्यत्र 'शेषो'नाम साध्यन्तत्समानजातीयञ्च । शेषवदित्यस्य च साध्यन्तत्सजातीयं च यस्य नित्यसम्बद्धं तदित्यर्थः । पूर्ववति साध्यमात्रे सत्त्वम्, शेषवति तु साध्ये तत्समानजातीये च सत्त्वमित्येतावन्मात्रो भेदः । यच्चान्यत्र कुत्रापि सामान्यस्थलेषु-पक्षातिरिक्तेषु- 'अदृष्टम्' तत् 'सामान्यतोऽदृष्टम्' इति ॥

अत्र पूर्ववदनुमानम्-अबाधितम् असत्प्रतिपक्षितम् साध्यसमानाधिकरणं च । एतत् त्रयं सर्वानुमानसाधारणम् । तच्चानुमानं त्रिविधम्-(१)शेषवत्-(२)सामान्यतोदृष्टं-(३)शेषवत्सामान्यतोदृष्टभेदात् । तत्र(१)शेषवत् साध्ये तत्समानजातीये च सत् । (२) सामान्यतोऽदृष्टम्--पक्षादन्यत्र अदृष्टम् । (३) शेषवत्सामान्यतोदृष्टञ्च पूर्वोक्तोभयलक्षणसमन्वितम् । इत्यादितात्पर्ये स्पष्टम् ।

विभागवचनादिति । 'त्रिविधमिति' विभागवचनादेव त्रिवि-

(भा०) विभागवचनादेव त्रिविधमिति सिद्धे त्रिविधवचनं महतो

---

(ख०) धे पूर्ववदादौ सिद्धे किमर्थम्पूर्ववदाद्युपादानं सूत्रेणेत्याक्षेपार्थः । इति तात्पर्यम् । किन्तु–पूर्ववदादिपरिगणनादेव त्रैविध्ये स्पष्टं प्रदर्शिते किमिति त्रिविधमिति पदेनेत्येवाक्षेपार्थः सम्यक्तरः प्रतिभाति ।

महत इत्यादि । 'महतः' त्रिविधस्य, 'महाविषयस्य' अतीतानागतवर्तमानविषयस्य, 'न्यायस्य' अनुमानस्य, 'लघीयसा सूत्रेण' पूर्ववदित्यादिना यथावस्थितेन, 'उपदेशात्' वर्णितत्वात्–एतदेव लाघवं (नानाविधानामनुमानानामेकसूत्रेण सूचनम्) सूत्रकारः परमिष्टम्मेने । अत इतोऽप्यधिकं सूत्रलाघवं (पूर्ववदित्यादित्यागरूपम्) स नेष्टम्मेने– इत्यर्थः ॥

---

(भा०चं०)थेच्छादिभिरिति । आत्मा गम्यते इति शेषः । इच्छादिविशेषणतया आत्मा गम्यत इति भावः । तदित्याह **इच्छादयो गुणा इति** । द्रव्यं संस्थानमधिकरणं येषां ते तथा । परिशेषाद्विशेष्यासिद्धिमाह । **तच्छेषाभिनि** । **अत्र वार्तिकम्** । परतन्त्रा इच्छादयो गुणत्वाद्रूपवत् । पारतन्त्र्यप्रतिपत्तिरस्मादनुमानात् । आत्मतन्त्रताप्रतिपत्तिस्तु परिशेषात् आत्मसंवेद्यत्वात् बाह्यकरणाप्रत्यक्षत्वाच्च । न पृथिव्यादिषु पृथिव्यादिगुणाः आत्मपरात्मप्रत्यक्षा बाह्यकरणप्रत्यक्षाश्च । आत्माऽबाह्यकरणप्रत्यक्षाश्चेच्छादयः, तस्मान्न पृथिव्यादिष्वाकाशान्तेषु, न दिक्कालमनस्सु तद्गुणानां तद्वदतीन्द्रियत्वात् न च द्रव्यान्तरं शिष्यते आत्मा शेषः । तस्मात्तत्तन्त्रा इति । तत्तन्त्रास्तु स्वतन्त्राः आत्मकर्तृका इति यावत् ।

परमुत्कृष्टं वाक्यलाघवं मन्यमानस्य सूत्रकारस्यास्मिन् त्रिविधपदपरित्यागरूपे वाक्यलाघवे विषयेऽनादरो हेयताबुद्धिरुपेक्षा वा ।

(भा०) महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः। तथा चायमित्थम्भूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते च्छले शब्दादिषु च बहुलं समाचारः शास्त्र इति।

सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्। कस्मात्? त्रैकाल्यग्रहणात्। त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते–भविष्यतीत्यनुमीयते भवतीति चाभूदिति च, असच्च खल्वतीतमनागतं चेति॥ ५॥

(५) उपमाननिरूपणम्।

(भा०) अथोपमानम्।

(सू०) प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्॥ ६॥

---

(ख०) सद्विषयमिति। 'सत्' वर्तमानम्, 'असत्' अतीतमनागतं च।

ज्ञानतत्करणयोरुभयत्र प्रमाणनाम्नां प्रयोगोऽत्रापि स्फुटः। इन्द्रियार्थसन्निकर्षजं ज्ञानम्प्रत्यक्षत्वेन वर्णितम् अत्र पुनः साध्यस्य

---

(भा०चं०) न केवलमिहैवायमनादरः किन्त्वन्यत्रापीत्याह **तथा चायमि**ति। विकल्पेन वैचित्र्येण प्रवृत्तो जातः। सिद्धान्तादिपदं तत्तत्सूत्रपरम्। बहुलमिति क्रियाविशेषणम्। सम्यगाचारः कृतिर्यस्यानादरस्य स तथा।

(१) अपरितुष्यन् अपरथापि द्वैविध्यं व्याचष्टे **सद्विषयञ्चे-त्यादिना**। त्रिकाल्यां भवं त्रैकाल्यम्। सदसद्विषयकत्वेन द्वैधाशङ्कामसतो द्वैविध्येन परिहरति **असच्चेति**। इतिपदमनुमानसमाप्त्यर्थम्॥ ५॥

---

(टि०) (१) लक्षणभेदप्रयुक्तं प्रत्यक्षाद्भेदमुपपाद्य विषयभेदप्रयुक्तो भेदः सदसद्विषयपदेन प्रदर्शित इत्याशयः

(भा०) प्रज्ञातेन सामान्यात्प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा गौरेवं गवय इति।

किं पुनरत्रोपमानेन क्रियते ? यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षतस्तमर्थं प्रतिपद्यत इति।

---

(ख०) (ज्ञानस्य) साधनं (करणम्) एवोपमानत्वेन दर्शितम् ॥

बौद्धनैयायिको दिङ्नागः स्वकीये प्रमाणसमुच्चयनाम्नि ग्रन्थे उपमानम्प्रत्यक्ष एवान्तर्भावयति।

'प्रज्ञातेन' प्रसिद्धेन (गवा) 'साधर्म्यात्' सादृश्यात् 'प्रज्ञापनीयस्य' संज्ञासंज्ञिसम्बन्धस्य 'प्रज्ञापनम्' ज्ञानकरणमिति यावत् ॥ वार्तिककाराः प्रसिद्धसाधर्म्यादित्यत्र बहुव्रीहिसमासमप्यभिप्रयन्ति। तत्र च प्रसिद्धं साधर्म्यं यस्य तस्मादिति विग्रहः ॥ परन्तु भाष्योक्तस्तत्पुरुषोऽप्येतेषान्नानभिमतः ॥ अत्र कर्मधारयोऽप्यभीष्ट इति परिशुद्धिकृतः, साधर्म्ये प्रसिद्धत्वस्यावश्यकत्वात्।

---

(भा०चं०) अथोपमानं निरूप्यते। **प्रसिद्धसाधर्म्यात्साध्यसाधनमुपमानम्।** प्रसिद्धो गवादिरर्थस्तत्र साधर्म्यं सादृश्यं तस्माज्ज्ञायमानात् उपदेशेन प्रत्यक्षेण च साध्यस्य प्रज्ञापनीयस्य गवयादिपदवाच्यत्वस्य साधनं ज्ञानं उपमानमुपमितिः। साधनमिति फलपरं पदम्। भाष्ये तु प्रज्ञातेन प्रमितेन सामान्यात्सादृश्यात्तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्यामिति सूत्रेण तृतीया। प्रज्ञापनं प्रमापणं प्रमैव पदस्यास्य फलपरत्वात्। एवं गवय इत्यत्रेतिपदं वाक्यजवाक्यार्थज्ञानपरम्। तात्पर्यमजानन् शङ्कते **किम्पुनरिति**। उपमानमुपमितिकरणम् उपमितिः सादृश्यप्रतीतिः सा च वाक्येनैव(१) जाय-

---

(टि०) (१) भाष्यकृता तु उपमितेः प्रत्यक्षान्तर्भाव एव शंकाकृदभिप्रायविषय इति प्रदर्शितम् वाक्येनैव जायते इति तु भाष्यस्थगवयइतिपदस्वारस्यादभिहितम्।

(भा०) समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह। यथा गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्ममर्थमिन्द्रियार्थसन्निकर्षा-

---

(ख०) अत्रोपमाननिरूपणे भाष्यमतस्य वार्तिकतात्पर्यमतात् भेदो लक्ष्यते॥ उपमितिज्ञानविषये ज्ञानस्वरूपे वा न कोऽपि भेदः। उभयानुसारेणापि संज्ञासंज्ञिसम्बन्ध एवोपमितिविषयः। 'अयमर्थो गवयपदवाच्य' इति च तत्स्वरूपम्॥ उपमितिकरणस्वरूपे तु वैलक्षण्यं लक्ष्यते। उभयपदार्थगतसादृश्यमेवोपमितिकरणमित्यत्राप्यैकमत्यम्। किन्तु गवयदर्शनसमये गोसदृशो गवय इत्यतिदेशवाक्ये यत्सादृश्यमुक्तन्तदेवोपमितेः करणमिति भाष्यमतम्प्रतिभाति। यतोऽत्र तद्वाक्यमेवोपमाननाम्नोक्तम्॥ वार्तिकतात्पर्यानुसारेण तु गवयदर्शनानन्तरं यत् तस्मिन् गोसादृश्यं दृश्यते तदेवोक्तातिदेशवाक्यस्मरणसहकृतमुपमितिकरणम्॥ तथा च वार्तिकम्–'आगमाहितसंस्कारस्मृत्यपेक्षं सादृश्यज्ञानमुपमानमिति'। अत्र तात्पर्यम्–'पिण्डस्य हि गवयशब्दवाच्यताम् पुरुषोऽतिदेशवाक्यस्मरणसहकारिणः प्रत्यक्षात् गवयगताद् गोसादृश्यात् प्रजानन् तेन प्रज्ञाप्यते' इति॥ तत्र–'सादृश्यस्यैव प्रज्ञायमानस्य करणत्वमभिप्रैतीति' परिशुद्धिकाराः॥ यद्यपि तात्पर्यकाराः यथा गौरित्यादिभाष्यस्यार्थम्–'यादृशं सादृश्यं गवये प्रत्यक्षत उपलभ्यते तदतिदेशवाक्यद्वारा पूर्वमवगतमेवेति'–वर्णयन्ति, तथाऽपि एतद्वाक्यस्यैव भाष्य उपमानत्वेनोक्तत्वात्सामञ्जस्यन्दुर्घटम्प्रतिभाति॥ स्मर्यमाणातिदेशवाक्यमात्रमूलकत्वे उपमानस्य स्मृतितुल्यमेव प्रामाण्यं

---

(भा०चं०)ते। अथ यथा गौरेवं गवय इतिप्रत्यक्षेणैव जायते, तथाच ताभ्यामिदं नातिरिच्यत इति शङ्कितुराशयः। समाधत्ते यदाखल्विति। अयं वाक्यार्थश्रोता समानधर्मं सादृश्यं प्रतिपद्यते प्रत्यक्षीकृत्य स्मरति। इति शब्दो हेतौ। उपमानार्थमुपमानफलमित्याह सूत्रकार इति शेषः॥६॥

(भा०) दुपलभमानोऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति। यथा मुद्गस्तथा मुद्गपर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात्संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाहरति । एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति ॥ ६ ॥

(६) शब्दनिरूपणम् ।

( भा० ) अथ शब्दः।

(सू०) आप्तोपदेशः शब्दः ॥ ७ ॥

---

( ख० ) स्यादित्यत्र ध्येयम् ॥

एकवाक्यतायां यत्नोऽपि तात्पर्ये कृतः—"प्रसिद्धिसाधर्म्यादित्यत्र प्रसिद्धिरुभयी, श्रुतिमयी प्रत्यक्षमयी च। श्रुतिमयी यथा गौरेवं गवय- इति। प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टेऽयमीदृशः पिण्ड इति"। इति। परन्तु समनन्तरमेवोक्तम्—तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासम्बन्धप्रतिपत्तिहेतुरिति। तेन च प्रत्यक्षदृष्टस्यैव सादृश्यस्योपमितिकरणत्वमिति स्फुटम् ।

आप्तोपदेश इत्यत्र—उपदिश्यतेऽनेनेत्युपदेशो वाक्यज्ञानम् तदर्थज्ञानं वाऽभिधीयते। तत्र वाक्यज्ञानप्रामाण्यपक्षे तदर्थज्ञानं फलम्, पदार्थस्मृत्यादयस्त्वन्तरालिका इतिकर्तव्यता । तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम् ॥ परप्रयोजनवचनमात्रवाच्युपदेशपदमित्यादि तात्पर्ये स्पष्टम् ॥

---

(भा०चं०)अथ शब्दो निरूप्यते। आप्तोपदेशः शब्दः। आप्तस्योपदेशः आप्तोपदेशः कर्तरि षष्ठी। 'शब्दनं' शाब्दी बुद्धिः। भावे घञ्। (शाब्दज्ञानरूपे) आप्तशब्दस्य प्रवृत्तिनिमित्तं दर्शयति भाष्यकारः आ-

(भा०) आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याऽऽप्तिः, तया वर्तते इत्याप्तः।

ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्त्तन्ते इति।

---

(ख०) साक्षात्कृतधर्मेति। सुदृढेन प्रमाणेनावधारिता अर्था येनेत्यर्थः। यथादृष्टस्येति मत्सरितया विपरीतोपदेशो निवारितः। चिख्यापयिषयेति अकृपाऽलसकारिते प्रत्युक्ते।

उपदेष्टेति। स्थानकरणपाटववानित्यर्थः।

ऋषीति। दर्शनादेव ऋषित्वम्। तेन साक्षात्कृतत्रैकाल्यवृत्तिप्रमेयमात्रोऽत्राभिप्रेतः॥ आरात् यातः पातकेभ्य इति 'आर्यः'। म्लेच्छश्च प्रसिद्ध एव। म्लेच्छा अपि कुत्रचित् पान्थानां सर्वस्वमपहृत्य नगरपथम्पृष्टा यथार्थमेव पन्थानम्प्रदर्शयन्ति। भवति चात्र तेषामपि 'आप्तत्वम्'। लोभादिहेतुशून्यत्वमेव चात्राप्तत्वे मूलम्॥ अतश्च 'आप्तं दोषक्षयं विदुरिति' परोक्तमाप्तलक्षणमव्याप्तिदुष्टम्॥ आप्ताः पुनर्द्विविधाः सर्वज्ञा असर्वज्ञाश्च। सर्वज्ञानाम्प्रामाण्यन्तदस्तित्वबोधकप्रमाणैरेव निर्णीतम् सर्वज्ञेषु रागद्वेषादीनामप्रामाण्यकारणानामसम्भवात्॥ असर्वज्ञानाम्पुनः प्रामाण्यं कारणत्रये निर्भरम्। उपदेशविषयस्य यथार्थज्ञानं यथार्थज्ञानचिख्यापयिषा वचनादिकरणपाटवमित्येवं रूपं कारणत्रयमत्रापेक्षितम्॥ भूयोदर्शनादेवैतादृशत्वम्पुरुषविशेषस्य निश्चेतुं शक्यते॥

---

(भा०चं०) स खल्विति। साक्षात्कृतः साक्षात् दृष्टो धर्मस्तत्त्वं येन स साक्षात्कृतधर्मा। धर्मादनिच्केवलात्। तत्प्रवृत्तिप्रकारमाह यथेति। यथानारोपितरूपेण दृष्टस्य निश्चितस्य यथा चिख्यापयिषयेत्यन्वयः।

(भा०) एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, नातोऽन्यथेति ॥ ७ ॥

(सू०) स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

(भा०) यस्येह दृश्यतेऽर्थः स दृष्टार्थः। यस्यामुत्र प्रतीयते सोऽदृष्टार्थः। एवमृषिलौकिकवाक्यानां विभाग इति ।

---

(ख०) एभिरिति । प्रत्यक्षानुमानोपमानशब्दैरित्यर्थः ।

---

(भा०चं०) चिख्यापयिषाशब्देन जिज्ञापयिषा तया प्रयुक्तः प्रवर्त्तितः उपदेष्टा यथोपदेशकर्ता । अर्थस्य धर्मिणो आप्तिः प्राप्तिः भावे क्तिः, वर्तते प्रवर्तते यः स आप्तः, शेषे इति सूत्रेणाण्प्रत्ययः । आप्तिकरणकप्रवृत्तिकर्तेत्यर्थः ।

लौकिकालौकिकवाक्यजप्रमाव्याप्तमिदं लक्षणम् इति दर्शयति ऋष्येति । ऋषयोऽलौकिका दिव्यदृष्टयः आर्याः शास्त्रजप्रमावन्तो म्लेच्छा व्यावहारिकप्रमावन्तः तेषां तद्वाक्यजज्ञानानां समानं लक्षणम् । सर्वेषाम् ऋष्यार्यम्लेछप्रयोज्यानां सर्वेषां व्यवहर्तॄणां व्यवहारप्रवृत्तिः प्रवर्तते समर्था भवति ।

चतुर्विधप्रमाणजन्यप्रवृत्तिः सफला भवतीत्युपसंहरति । **एवमिति**। एवमुक्तप्रकारैः विशेषणे तृतीयेयम् । तिर्यञ्चः क्षुद्रप्राणिनः । अन्यथा विपरीतप्रकारैः ॥ ७ ॥

अनेकविधमपि शब्दं द्विधा विभजते नियमार्थम् । **स द्विविधो दृष्टादृष्टार्थत्वात्** । उपदेष्ट्रा दृष्टो अर्थो यस्य स दृष्टार्थः । तेन न दृष्टो अनुमितो अर्थो यस्य स अदृष्टार्थः । स चासौ सचेति स तथा । तस्य भावस्तस्मात् द्रष्टृकर्तृ-

(भा०) "किमर्थम्पुनरिदमुच्यते" ।

स न मन्येत दृष्टार्थ एवाप्तोपदेशः प्रमाणम्, अर्थस्यावधारणादिति, अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति ॥ ८ ॥

इति प्रमाणभाष्यम् ।

---

( ख० ) अनुमानादिति । आप्तप्रणीतत्वलिङ्गानुमितप्रामाण्य–शब्दैकविषय–स्वर्गादिसम्बन्धादीनामनुमानविषयता ॥ दृष्टार्थमात्रविषयस्य शब्दस्य प्रामाण्ये वेदानाम्प्रामाण्यं परित्यक्तं स्यात् । यतश्चाप्तप्रणीतत्वलिङ्गानुमितिप्रामाण्यानामेव शब्दानामत्र व्यापार इष्टस्तत ऐतिह्यमात्रस्य न प्रामाण्यम्, न चानिर्णीतप्रामाण्यानां वेदातिरिक्तागमानाम् ॥ अदृष्टार्थविषयः शब्द इत्यत्र स्वर्गादीनामदृष्टत्वमेव सर्व्वथेति न मन्तव्यम् । यत एतान्यपि ऋषीणाम्भवन्त्येव प्रत्यक्षाणि । अतः 'अनुमितप्रामाण्यशब्दगोचरोऽयम्' इत्येवादृष्टार्थपदस्य तात्पर्यम् ।

दृष्टार्थादृष्टार्थपदे वार्तिककारेण वक्तृविशेषणत्वेनापि व्याख्याते ॥

---

(भा०चं०) कत्वात् अनुमातृकर्तृकत्वाच्चेत्यर्थः । भाष्यकारस्त्वन्यथा व्याचष्टे(१) **यस्येति** । इह जन्मनि दृश्यते प्राप्यते ऽपदेश्येनेत्यर्थः । अर्थः शब्दबोधितसाधनसाध्यम् । अमुत्रान्यजन्मनि प्रतीयते प्राप्यते । ऋषिवाक्यानि वेदादीनि लौकिकवाक्यानि आर्यम्लेछोक्तानि । ऋषिर्द्विविधो नित्यसर्वज्ञः अनित्यसर्वज्ञश्चेति ।

विभागप्रयोजनमाह **सनमन्येतेति** । स लौकिकः पुरुषः रक्तो द्विष्टो मूढश्चेति । स न मन्येत न जानीयात् । अस्यायमभिप्रायः । स्वर्गकामो यजेतेत्यादिवाक्यार्थं श्रुत्वा नास्तिक्यं जह्यात् । अर्वाक्दृशोऽस्य स्वर्गादावनुमानमाहा**दृष्टार्थोपीति** । वेदः सप्रयोजनः लौ-

---

**(टि०) (१) अदृष्टार्थोपि प्रमाणमर्थस्यानुमानादिति–अग्रिमभाष्येण ज्ञायते भाष्यकारस्य दृष्टार्थत्वं प्रत्यक्षविषयार्थत्वमदृष्टार्थत्वमनुमेयार्थत्वं संमतम् ।**

### (७) अथ प्रमेयपरिगणनम् ।

( भा० ) किं पुनरनेन प्रमाणेनार्थजातं प्रमातव्यमिति तदुच्यते-

(सू०) आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोष-प्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥

(भा०) तत्राऽऽत्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्वज्ञः सर्वानुभावी। तस्य भोगायतनं शरीरम् । भोगसाधनानीन्द्रियाणि । भोक्तव्या इन्द्रियार्थाः । भोगो बुद्धिः । सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमन्तःकरणं मनः । शरीरेन्द्रियार्थबुद्धिसुखवे-

---

(ख०) सर्वस्य द्रष्टेति । सुखदुःखसाधनस्येति यावत् । सर्वस्य भोक्तेति । सुखदुःखस्येति यावत् ।

सर्वज्ञः इति । यतः सुखदुःखसाधनं सर्वं सर्वं च सुखदुःखं जानात्यतः 'सर्वज्ञः' इति ।

सर्वानुभावीति । 'अनुभवः' प्राप्तिः । प्राप्तिं विना च सर्वज्ञत्वासम्भवः ॥ सुखदुःखाद्यनुभावकत्वेनैवात्मनो हेयत्वम्, स्वरूपतस्तस्य सर्वथोपादेयत्वमेवेत्यस्य प्रमेमान्तरेभ्यो विशेषः शरीरादीनि सर्वथा हेयान्येवापवर्गस्तु सर्वथोपादेय एव ॥

---

(भा०चं०)किंप्रमाणवदिति । वेदः प्रमाणमाप्तोक्तत्वात् सम्मतवत्॥८॥

॥ इतिश्रीभाष्यचन्द्रे प्रमाणप्रकरणभाष्यचन्द्रिका ॥

अथ प्रमेयप्रकरणमवतारयति **किम्पुनरिति** । अर्थजातमर्थसमूहः प्रमातव्यं प्रमातुमीप्सिततमम् ॥ **आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्** ॥ अत्रोद्देश्यविधेयभावो द्विविधः । विशेषणविशेष्यभावे कामाकामचारात् । तुरवधारणे अधिकसङ्ख्याव्यावृत्त्यर्थो । प्रमेयं प्रत्येकमभिसम्बध्यते द्वन्द्वान्ते श्रवणात् । आत्मा पूज्यतमत्वात् पूर्वोक्तः 'आत्मा वा अरे द्रष्टव्य' इत्यादि-

(भा०) दनानां निर्वृत्तिकारणं प्रवृत्तिः, दोषाश्च । नास्येदं शरीरमपूर्वमनुत्तरं च, पूर्वशरीराणामादिर्नास्ति उत्तरेषामपवर्गोऽन्त इति प्रेत्यभावः । ससाधनसुखदुःखोपभोगः फलम् । दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम् । किं तर्हि ? जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गात् दुःखेना-

(ख०) निर्वृत्तिकारणमिति । 'निर्वृत्तिः' सम्पादनम् ।

अपूर्वमिति । अविद्यमानं पूर्वं शरीरं यस्य तत् 'अपूर्वं शरीरम्' । एवम् अविद्यमानमुत्तरं शरीरं यस्य तत् 'अनुत्तरं शरीरम्' । उभयमप्येतदत्र निरस्यति । विद्यमानाच्छरीरात्प्रागनन्तरञ्चात्मनः शरीरान्तराण्यवश्यम्भावीन्याऽऽपवर्गम् ॥

जन्मन एवेति । ससुखसाधनस्य दुःखानुषङ्गाद् दुःखेनाविप्रयोगाद् विविधबाधनायोगात् इदं (सुखम्) जन्मन एव (आदितः स्वभावादेव) दुःखमेवेति समाधिभावनमुपदिश्यते–इति सम्बन्धः ।

(भा.चं.) श्रुतेः। अपवर्गस्य दशप्रमेयहानिरूपत्वात्पश्चान्निर्देशः। सर्वस्य प्रमाणादिषोडशतत्त्वस्य निदिध्यासनेन द्रष्टुं योग्यः। प्रमेयवर्गस्य सर्वस्य हेयोपादेयविभागेन भोक्ता भोक्तुं शक्तः । सर्वज्ञः ध्यानपरिपाकेन सर्वतत्त्वसाक्षात्करणयोग्यः । जीवन्मुक्तः सन् शिष्यान्प्रति सर्वतत्त्वानुभावनयोग्यः । तस्य तादृशस्य भोगायतनम् शरीरम् भोगस्यावच्छेदकतयाऽधिकरणम्, शीर्यत्वात् शरीरम् भोगसाधनानि भोगकरणानि, साधयतेः कृत्यर्थत्वात् । इन्द्रियाणामर्था इन्द्रियार्थाः । अर्थ्यमाणत्वादर्थाः । भोक्तव्याः भोगयोग्याः। बुद्धिः साक्षात्कारः । मनस इन्द्रियत्वेपि पृथक् ग्रहणप्रयोजनमाह सर्वेति । न प्रभवन्ति न प्रभूणि असमर्थानीत्यर्थः । सर्वे बाह्याभ्यन्तरभेदभिन्ना विषया यस्य तत्तथा । करणं ज्ञप्तिसाधनम् । मन्यते सर्वमनेनेति मनः। संसारजिहासोर्हेयस्य नवविधस्य(१) कार्यकारणभावं दर्शयति शरी-

(टि०) (१) शरीरेन्द्रियादिरूपस्य ।

(भा०) विप्रयोगाद्विविधबाधनायोगाद्दुःखमिति समाधिभावनमुपदिश्यते । समाहितो भावयति भावयन्निर्विद्यते निर्विण्णस्य वैराग्यं विरक्तस्यापवर्ग इति । जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाणमपवर्ग इति ।

---

(भा०चं०) रेति। वेदना हर्षभयशोकादयः। निर्वृत्तिः निष्पत्तिः। कारणं कारकम्। प्रवृत्तिर्दशविधा पूर्वोक्ता। दोषा रागद्वेषमोहाः। रागद्वेषमोहैः प्रवृत्तिर्जन्यते प्रवृत्त्या धर्माधर्मरूपा प्रवृत्तिर्जन्यते तया शरीरयोजनात् तस्या अपि सुखदुःखे प्रति कारकत्वम्। शरीरादिव्यापारेण भावपूर्वकप्रायणे नियमो नास्तीति सूत्रकृदभिप्रायं भाष्यकृदाह । **नास्येत्यादिना** । उत्तरेषां प्रसक्तानां शरीराणामपवर्गोऽन्तो विनाश इति हेतोः प्रेत्यभावः प्रायणपूर्वकभावः न तु भावपूर्वकं प्रायणम्। साधनं कारकस्रक्चन्दनवनितादि धूलिताडननिद्रादि च । तत्सहिते सुखदुःखे तयोरुपभोगः साक्षात्कृतिरनुभवः। फलं प्रयोजनम्। ननु सर्वलोकानुभवसिद्धस्य सुखस्य प्रमेयवर्गे यदनुपादानं तत्किमपह्नवाय ? न चापह्नवः शक्यः अनुकूलवेदनीयत्वेन सर्वमातृसाक्षिकत्वात् । न चायं दुःखे सुखभ्रमः विजातीयकारणजन्यतया बाधितुमशक्यत्वात् तथा च कथमनुपादानमस्येत्याशङ्कायामाह **दुःखमिति** । दुःखमिति पदं न सुखस्य प्रत्याख्यानार्थकम् अनुकूलवेदनीयतया तस्य प्रतीतेः। तथाच प्रतिकूलवेदनीयत्वात् स्पष्टोऽयं भेद इति न भ्रमापत्तिः। किन्तर्हि किमर्थमनुपादानम् ? भावनाविशेषार्थमित्याह **दुःखमिति**। **समाधिभावनमुपदिश्यत इति**। ससुखसाधनस्य ससाधनसुखस्य मुमुक्षोरिति शेषः। कुत इत्यत आह **दुःखानुषङ्गादिति** । हेतुत्रयम् दुःखानुषङ्गः—दुखसामानाधिकरण्यं दुखसमानभोक्तृकत्वं वा दुःखसाधनसाधनकत्वम् वा । दुखेनाविप्रयोगः अविमोचनम् । आध्यात्मिकादिविविधबाधनायोगः । निर्वेद आत्मनि दोषदर्शनेन धिक्कारः । प्रबन्धोऽविच्छेदेनोत्पत्तिः ।

(भा०) अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम् तद्भेदेन चापरिसङ्ख्येयम् ॥

अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार इत्यत एत-दुपदिष्टं विशेषेणेति ॥ ९ ॥

## (८) आत्मनिरूपणम् ।

तत्रात्मा तावत्प्रत्यक्षतो न गृह्यते । स किमाप्तोपदेशमात्रा-

---

(ख०) आत्मा प्रत्यक्षतो न गृह्यत इति । अत्र तात्पर्यम्—अहमिति ज्ञानं गौराद्याकारशरीरावभासं न शक्यं घटादिवद् रागात्मनि प्रमाण-यितुमिति भावः ॥ तत्र परिशुद्धिः—आत्ममनःप्रत्यक्षत्वेऽस्वसंवेदन-म्मानसम्, तत्कथमात्मनि प्रत्यक्षप्रतिषेधकं भाष्यमित्यत आह—अह-मिति । यद्यप्ययम् (अहमिति प्रत्ययः) सवस्तुकस्तथाऽपि शरीरप्रत्यय-सामानाधिकरण्यात् शरीरवस्तुक एवाहमिति प्रत्ययः स्यात् । अतो न शरीरातिरिक्तवस्तुनि (आत्मनि) प्रमाणयितुं शक्यते तावद्यावद्देहादि-भिन्न आत्मा प्रमाणान्तरेण न साध्यते—इति ।

आत्मनोऽप्रत्यक्षवादिमतेनैतद्व्याख्यानम् । आत्मप्रत्यक्षवादिमते तु भाष्ये निषेधकवाक्यम्परदेहात्माभिप्रायमिति तात्पर्यकाराः ।

---

(भा०चं०) **अस्त्यन्यदपीति** । अन्यथापीत्यर्थः । तथाचार्थो इन्द्रि-यार्था इत्येकः प्रकारः । अर्थः पदार्था इति द्वितीयः प्रकारः । तदवान्त-रभेदबाहुल्यात् । आत्माद्येव प्रमेयं प्रमातव्यमित्याह **अस्यात्विति**॥९॥

नित्ये आत्मनि प्रतिपत्तावनुमानं प्रमाणं दर्शयति सूत्रकृ-दित्याह भाष्यकृत् **प्रत्यक्षतो न गृह्यत इति** । परममहत्वा-दिभिर्न **गृह्यत** इत्यर्थः शरीरादिपरिच्छेदेन विपरीतग्रहात् । **इच्छा-दिसूत्रम्** । **अत्र वार्तिकम्** आत्मनः समानासमानविशेषणार्थं सूत्र-मिदमिच्छेति । आगमस्यानुमानेन प्रतिसन्धानार्थं वा आगमेन प्र-

(भा०) देव प्रतिपद्यत इति ? नेत्युच्यते । अनुमानाच्च प्रतिपत्तव्य इति । कथम् ?

(सू०) इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति ॥ १० ॥

(भा०) यज्जातीयस्यार्थस्य सन्निकर्षात्सुखमात्मोपलब्धवान् तज्जातीयमेवार्थं पश्यन्नुपादातुमिच्छति सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्भवन्ती लिङ्गमात्मनः नियतविषये हि बुद्धिभेदमात्रे न सम्भवति देहान्तरवदिति ।

---

(ख०) अनुमानाच्चेति । आप्तोपदेशाज्ज्ञाते शरीरान्तर्वर्तिन्यात्मनि तज्ज्ञानमनुमानेन दृढीक्रियते इति चकारेण ज्ञाप्यते । दृढीकरणं च सामान्यतो ज्ञातस्य प्रतिशरीरमात्मनोऽस्तित्वप्रदर्शनमिति परिशुद्धिकाराः ॥

यज्जातीयस्येत्यादि । किञ्चिद् वस्तु भूयोभूयः सुखजनकत्वेनानुभूय तादृशं वस्तु सुखमुत्पादयति यत्र यदैतदस्ति तत्र तदा सुखमस्तीति व्याप्तिन्निर्धारयति ॥ किञ्चित्कालानन्तरम्पुनस्तद्वस्तु दृष्ट्वा 'एतत्पूर्वानुभूतसुखकारणत्वेन वस्तु'इति स्मरति । ततश्चैतत्सुखमुत्पादयिष्यतीति निगमय्य तदुपादानमिच्छति ॥ अनया चेच्छया पूर्वयोर्ज्ञानयोस्तदुत्पन्ननिगमनस्य प्रतिसन्धातैवैकः कोपीच्छावानिति सूचितम्भवति । अयमेव चैक आत्मेति ॥ तथा च तात्पर्यम्—यश्चासावेकोऽनुभविता च स्मर्ता चानुमाता चेषिता च स चात्मेति ॥

---

(भा०चं०)तिपन्न आत्मा तस्यानुमानेन संवादार्थं प्रमाणसम्प्लवस्य वोदाहरणार्थम् यत्तदवोचाम प्रमाणानि सम्प्लवन्त इति तस्यायं विषयः। यज्जातीयस्यार्थस्य सन्निकर्षादिति भाष्यम् । तत्रेच्छादीनां प्रतिसन्धानमात्मास्तित्वप्रातिपादकम्। तत्रेदं विचार्यते । कथमिच्छाद्यनु-

(भा०)एवमेकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् दुःखहेतौ द्वेषः
यज्जातीयोऽस्यार्थः सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन्नादातुं प्रयतते सोऽयं प्रयत्नः एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातारमन्तरेण न स्यात् । नियतविषये बुद्धिमात्रे न सम्भवति देहान्तरवदिति । एतेन दुःखहेतौ प्रयत्नो व्याख्यातः ।

---

( ख० ) नियतविषय इति । स्यादेतत्—असत्यप्यात्मनि ज्ञातरि सत्यपि च बुद्ध्यादीनाम्भेदे तत्सन्तानाभेदेन प्रतिसन्धानव्यवस्थोत्पत्स्यत इत्यत आह नियतेति । मात्रग्रहणेन च सन्तानं सन्तानिव्यतिरिक्तमपाकरोति ॥ तदभ्युपगमे वा स एवात्मेति सिद्धन्नः समीहितमित्यादि तात्पर्ये स्पष्टम् ।

देहान्तरवदिति पदं भाष्येणैवाग्रे व्याख्यातम् ॥

---

(भा०च०)पलभ्यमानमात्मानं गमयति ? स्मृत्या सहैकविषयभावात् । यस्मादेते इच्छादयः स्मृत्या सहैकविषया भवन्ति तस्मादेककर्तृकत्वमात्मनि प्रतिपादयन्ति । न हि नानाकर्तृकाणां नानाविषयाणां नानानिमित्तानां च प्रत्ययानां प्रतिसन्धानमस्ति नहि गन्धरूपस्पर्शाः प्रतिसन्धीयन्ते, न हि भवति 'यद्रूपमद्राक्षं सोऽयं स्पर्श'इति । नापि भवति 'यमस्प्राक्षं तद्रूपं पश्यामी'ति । नापि देवदत्तदृष्टे यज्ञदत्तप्रतिसन्धानम् । नहि भवति देवदत्तो यमद्राक्षीद्यज्ञदत्तस्तमद्राक्षमिति । किं कारणम् ? बुद्धिभेदानां प्रतिनियतविषयत्वादिति । प्रतिनियतविषया बुद्धयः इतरेतरव्यावृत्तरूपा नैरात्म्यवादिनो भवन्तीति न युक्तं प्रतिसन्धानम् । तस्माद्यः प्रतिसन्धाता स आत्मेतीति । दुःखहेतौ द्वेषः जिहासा दुःखहेतौ प्रयत्नो निवृत्त्यर्थः । **आददान इति** । यद्यपि दुःखसाधनस्यादानं न सम्भवति तथापि मुमुक्ष्वभिप्रायकमिदं वेदितव्यम् । स हि दुःखसाधनमपि संन्यासमादत्ते । बहुकालान्तर्भाविनं मोक्षं वाञ्छन्तो ब्रह्मचर्याद्याचरन्तो

(भा०) सुखदुःखस्मृत्या चायं तत्साधनमाददानः सुखमुपलभते दुःखमुपलभते सुखदुःखे वेदयते। पूर्वोक्त एव हेतुः।

बुभुत्समानः खल्वयं विमृशति किंस्विदिति विमृशंश्च जानीते इदमिति। तदिदं ज्ञानं बुभुत्साविमर्शाभ्यामभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गम्। पूर्वोक्त एव हेतुरिति।

तत्र देहान्तरवदिति विभज्यते। यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते तथैकदेहविषया अपि न प्रतिसन्धीयेरन् अविशेषात्। सोऽयमेकसत्त्वस्य समाचारः स्वयं दृष्टस्य स्मरणं नान्यदृष्टस्य नादृष्टस्येति। एवं खलु नानासत्त्वानां समाचारोऽन्यदृष्टमन्यो न स्मरतीति। तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितुमित्येवमुपपन्नमस्त्यात्मेति ॥ १० ॥

---

(ख०) सुखदुःखस्मृत्येति। सुखसाधनमासाद्य सुखी भवति दुःखसाधनमासाद्य च दुःखी। एतच्च तत्तत्साधनोपनीतसुखदुःखानुभविनस्तत्तत्साधनासादकस्य चाभिन्नत्व एव सम्भवति।

दशमसूत्रस्यार्थान्तरमपि वार्तिकवर्णितम्। तद्यथा 'अवाऽन्वयेनान्यः सूत्रार्थोऽभिधीयते। रूपरसस्पर्शप्रत्ययाः एका-

---

(भा०चं०)बहु दुःखमनुभवन्ति। तदिदं क्षणिकमात्मानं जानतां भदन्तानां नोपपद्यते। वेदयतेऽनुभवति। एकसत्त्वस्यैकप्राणिनः समाचारः आचरणसमुदायः। य एवानुभवति स्वेष्टसाधनं स एवेप्सति स एवोपददाति। एवमनिष्टं जिहासति जहाति चेत्यादि। देहाद्यात्मवादिमतं निराकृत्य नानादेहेष्वेक एव आत्मेतिमतं निराकरोति। **एवं खल्विति।** नानासत्त्वानां भिन्नभिन्नवादिप्राणिनां समाचारस्तादृशव्यवहारः। अन्यथाऽन्यदृष्टमन्ये स्मरेयुरिति भावः। एतदुभयम् इच्छादीनां समान-

## (९) शरीरनिरूपणम् ।

( भा० ) तस्य भोगाधिष्ठानम्—

### (सू०) चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

( भा० ) कथं चेष्टाश्रयः ?

ईप्सितं जिहासितं वाऽर्थमधिकृत्येप्साजिहासाप्रयुक्तस्य तदुपायानुष्ठानलक्षणा समीहा चेष्टा । सा यत्र वर्त्तते तच्छरीरम् ।

---

(ख०)नेकनिमित्तकाः,स्मृत्या सह मयेति प्रतिसन्धानात्, कृतसङ्केतानां वृद्धानामेकास्मिन्नर्तकीभ्रूक्षेपे युगपदनेकप्रत्ययवत् ॥ यथा नानाकर्तृकाणां कृतसङ्केतानां नानाभूताः प्रत्यया निमित्तस्य भ्रूक्षेपस्यैकत्वात्प्रतीयन्ते तथेहापि नानाविषया निमित्तस्यैकत्वात् प्रतिसन्धास्यन्ते यन्निमित्तं स आत्मेति ॥ अथवा गुणा इच्छादयः । गुणाः परतन्त्रा भवन्तीति न्यायः । अयावद्द्रव्यभावित्वेन शरीरगुणत्वप्रतिषेधः । तत्प्रतिषेधाच्चात्मगुणत्वमिति परिशेषात्सिद्ध आत्मेति' ।

भोगेति । 'भोगः' सुखदुःखसंवित् । तदधिष्ठानं शरीरम् । तदनेन सर्वस्यानर्थसम्भारस्य परमनिदानं शरीरमतस्तदेवादौ लक्षणीयम् ॥

चेष्टेत्यादि । अत्र चेष्टाश्रयत्वेन इन्द्रियाश्रयत्वेन अर्थाश्रयत्वेन च प्रत्येकं समानजातीयेभ्यः आत्मेन्द्रियादिभ्यः प्रमेयेभ्यः असमानजातीयेभ्यः प्रमाणसंशयादिभ्यः शरीरं व्यवच्छिद्यते । इदं

---

(भा०चं०) कर्तृकत्वम् असमानकर्तृकत्वं च व्यवस्थापयितुं प्रमाणेन निर्णाययितुम् । अस्तीति सार्वकालिकी सत्तेति विवक्षिता ॥ १० ॥

**भोगाधिष्ठानं** भोगो बुद्धिस्तस्याधिष्ठानमधिकरणमवच्छेदकतया यथा पाकाधिकरणं गृहमिति । तस्येति कर्तरि षष्ठी ॥

**चेष्टेन्द्रियार्थाश्रयः शरीरम्** । चेष्टाश्रयः समवायेन इ-

(भा०) कथमिन्द्रियाश्रयः ?

यस्यानुग्रहेणानुगृहीतानि उपघाते चोपहतानि स्वविषयेषु साध्वसाधुषु वर्तन्ते स एषामाश्रयः तच्छरीरम् ।

कथमर्थाश्रयः ? यस्मिन्नायतने इन्द्रियार्थसन्निकर्षादुत्पन्नयोः सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते स एषामाश्रयः। तच्छरीरमिति ॥ ११ ॥

(१०) इन्द्रियनिरूपणम् ।

(भा०) भोगसाधनानि पुनः —

(सू०) घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥ १२ ॥

---

(ख०) सूत्रं लक्षणत्रयात्मकमिति भाष्यवार्तिकयोः स्पष्टम् । चेष्टाश्रयः इन्द्रियाश्रयः अर्थाश्रयश्चेति ॥ एकलक्षणमात्रपरकं सूत्रमिति केषाञ्चिन्मतं वार्तिककारो नानुमन्यते ॥

समीहाचेष्टेति । हिताहितप्राप्तिपरिहारार्थः स्पन्दश्चेष्टेति वार्तिकम् ॥ प्रयत्नप्रेरितस्यात्मनो व्यापारश्चेष्टेति परिशुद्धिः ।

प्रतिसंवेदनमिति पदं सुखदुःखयोरित्यस्मादेवानन्तरं द्रष्टव्यम्, आश्रय इत्यस्मादनन्तरं तस्यासम्बद्धत्वात् ।

भोगसाधनानीति । इन्द्रियस्योपनायकत्वेन (साक्षाच्छरीरमाश्रित्य प्रतिनियतविषयाद्युपनयद्वारा दुःखहेतुत्वेन) अर्थादिभ्यो वि-

---

(भा०चं०) न्द्रियाश्रयः संयोगेनार्थाश्रयः उपकारकतया । जिहासितं द्विष्टमधिकृत्य उद्दिश्य तदुपायानुष्ठानम् ईप्सितजिहासितप्राप्तिहानिकारणकरणम् तल्लक्षणा तद्रूपा । लक्षणत्रयमिदम् ॥ ११ ॥

**भोगसाधनानि** भोगकरणानि तस्येत्यनुवर्तते । तस्य भोक्तुर्भोगकरणानीन्द्रियाणीत्येकं वाक्यम् तथाच सामान्यलक्षणमुक्तं

(भा०)जिघ्रत्यनेन घ्राणं गन्धं गृह्णातीति । रसयत्यनेनेति रसनं रसं गृह्णातीति । चष्टेऽनेनेति चक्षू रूपं पश्यतीति । स्पृशत्यनेनेति स्पर्शनं त्वक्स्थानमिन्द्रियं त्वक् । तदुपचारः स्थानादिति । शृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति ।

एवं समाख्यानिर्वचनसामर्थ्याद्बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति ।

---

(ख०) शेषादिन्द्रियाणामर्थादिभ्यः पूर्वं लक्षणम् । न चाकृते सामान्यलक्षणे विशेषलक्षणं शक्यमिति भाष्यकारः प्रथममिन्द्रियाणां सामान्यलक्षणं निर्वेदोपयुक्तमाह । अनेन यच्छरीरसंयुक्तं सत् संस्कारदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति सामान्यलक्षणं सूचितम् । साक्षात्प्रतीतिसाधनमिति वक्तव्ये भोगसाधनाभिधानं निर्वेदोपयोगि । पारम्पर्येण भोगसाधनत्वं घ्राणादीनाम्, साक्षात्तत्साधनत्वम्मनस एव । सुखदुःखसाक्षात्कारस्य भोगत्वात् ।

तदुपचार इति । इन्द्रियान्तराणां नामानि तत्तद्द्वारोपलब्धविषयानुसाराणि, त्वगिन्द्रियस्य तु न तथा, तेन स्पर्शस्योपलम्भात् । अत एतन्नामप्रयोगो लक्षणयैव । त्वच्येव स्पर्शेन्द्रियस्य स्थानमित्येवच लक्षणायाम्मूलम् ।

---

(भा०चं०) भवति । समाख्या यौगिक्यः एताः संज्ञाः तासां निर्वचनं प्रकृतिप्रत्ययविभागेनार्थकथनं तस्य सामर्थ्यं योगाख्या शक्तिः तस्मात् । स्वविषयग्रहणं स्वविषयसाक्षात्कारः करणतया लक्षणं येषां तानि । नाना भिन्नभिन्ना प्रकृतिर्येषां तेषां विषयनियमो नान्यथा तथासति सर्वं सर्वं गृण्हीयात् इति । भवति प्रमीयते ॥ १२ ॥

( भा० ) भूतेभ्य इति । नानाप्रकृतीनामेषां सतां विषयनियमो नैकप्रकृतीनाम् । सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति ॥ १२ ॥

कानि पुनरिन्द्रियकारणानि ?

(सू०) पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥१३॥

---

(ख०) भूतेभ्य इतीति । पृथिव्या यो गुणविशेषो गन्धः स घ्राणेनैव गृह्यते, न रसनादिभिः । एवं रसनेनैवापां विशेषगुणो माधुर्यं गृह्यते इत्यादि । एतच्चेन्द्रियाणां नानाद्रव्यप्रकृतिकत्व एव सम्भवति नान्यथा ॥

अत्र च प्रयोगाः । (१)गन्धोपलब्धिः करणसाध्या क्रियात्वात् छिदिक्रियावत् । (२)सा च तदन्यक्रियाकरणातिरिक्तकरणनिष्पाद्या, तदन्वयव्यतिरेकाननुविधाने सति कार्यत्वात्, या क्रिया यत्करणान्वयव्यतिरेकाननुविधाने सति कार्या सा सर्वा तत्क्रियाकरणातिरिक्तकरणनिष्पाद्या, यथा पटादिक्रिया घटादिक्रियाकरणदण्डाद्यतिरिक्तकरणनिष्पाद्या, तथा चेयम्, तस्मात्तथा । (३)तच्च करणं चक्षुराद्यतिरिक्तं घ्राणं द्रव्यम्, संयोगाधारत्वात्, । (४) तच्च पार्थिवम्, द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात्, पार्थिवान्तरवत् ।

पृथिवीत्यादि न सूत्रमिति केचित् । तत्तुच्छम् । न्यायसूचीनिबन्धेऽस्य सूत्रत्वेनोल्लेखात् भाष्ये चास्योपदेशत्वेनाभिधानात् ॥

---

(भा०चं०)**कारणा**नि प्रकृतयः । संज्ञाशब्दैः विशेषसंज्ञाभिः । तदिदमुक्तं **पृथगिति** । अभेदेयं तृतीया यदोपदेशः फलं तदेयं करणे । विभक्तानां भेदेन ज्ञातानां भविष्यति प्रमास्यते ॥ १३ ॥

(भा०) संज्ञाशब्दैः पृथगुपदेशो भूतानाम्, विभक्तानां सुवचं कार्यं भविष्यतीति ॥ १३ ॥

(११) अर्थनिरूपणम् ।

(भा०) इमे तु खलु—

**(सू०) गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥ १४ ॥**

---

(ख०) इमे तु खल्विति । अनन्तेषु विषयेष्वग्रिमसूत्रोक्ता एव विषया गन्धादयस्तादृशा यदिन्द्रियगोचरत्वेन तात्त्विकरूपेण भाव्यमाना अपवर्गसहायं वैराग्यमुत्पादयन्ति अतात्त्विकरूपेण च ज्ञायमाना बन्धकारणानि भवन्ति ॥

गन्धेत्यादि सूत्रम् ॥ भाष्यकृते व्याख्याने वार्तिकतात्पर्ययोररुचिः । एतद्व्याख्यानानुसारेणात्रोक्तानाम्पञ्चानामेवेन्द्रियविषयत्वं न तदितरस्य कस्यापीति न सम्यक्–इत्येव चात्रारुचिबीजम् ॥ वार्तिकतात्पर्याभ्याञ्च व्याख्यान्तरमुपन्यस्तम् ॥ एतदनुसारेण च 'तदर्थाः' इत्यस्य 'तैः अर्थ्यमानाः, तेषां व्यापारगम्याः' इत्येवार्थः । तथाचैतत्पदमेव अर्थाभिधस्य प्रमेयस्य लक्षणम्, शिष्टन्तु सूत्रं न लक्षणम्, किन्तु तद्गतकातिपयविशेषप्रदर्शकम् । अयञ्च प्रतिपादनप्रकारो यद्यपि प्रतिवादिनम्प्रति नोचितस्तथाऽपि शिष्यान् प्रति नातीवानुचितः ॥

सूत्राक्षरानुसारेण व्याख्याने इन्द्रियगोचराणामर्थानाम्परिगणन-

---

(भा०चं०) **यथाविनियोगं** यथासम्बन्धं विषया बोध्या इति शेषः । व्यवस्थितगुणज्ञापनार्थमिदं भाष्यमिति बोध्यम् । पृथिव्यादीनां तद्गुणानां ये जात्यादिरूपविशेषास्तेषाञ्चेन्द्रियार्थत्वात् ॥ १४ ॥

( भा० ) पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्था विषया इति ॥ १४ ॥

---

(ख०) तया सूत्रन्नीयेत तत्तु न सम्यगित्येव कृत्वा कुत्रचित्सूत्रांश एवार्थरूपस्य प्रमेयस्य लक्षणम्मृग्यमाणेन वार्तिककारेणैवं व्याख्यानमुपन्यस्तम् ॥

वार्तिकानुसारेण च 'पृथिव्यादिगुणा' इत्यस्य पदस्यार्थो यथा— 'पृथिव्यादयः' पृथिवीजलाग्नयः—'गुणाश्च' गन्धादयः । गन्धादीनाम्पृथगुपादानं च शिष्यानुकम्पयेति ॥

एतद्व्याख्यानन्नातीव समीचीनम्प्रतिभाति । तथाह्यत्र पृथिव्यादिपदेन त्रीण्येव भूतानि गृह्यन्ते न पञ्चापि, यद्यपि पञ्चानामपि विशेषगुणानां समानमेवेन्द्रियगोचरत्वम् ॥ केवलं गन्धाद्यतिरिक्तानां सङ्ख्यापृथक्त्वादीनामप्रत्यक्षत्वं भाष्यव्याख्यानेन मन्येतेति व्याख्यान्तरोपन्यासप्रयोजकम् ॥ परन्तु बहूनामिन्द्रियगोचरेष्वप्यर्थेषु यावन्त एव वैराग्योत्पादकास्तावन्त एवात्रोपन्यस्ता इति ध्येयम् ॥ स्पष्टीकृतञ्चैतत् तात्पर्ये प्रागेव ॥

'पृथिव्यादीनामिति न षष्ठीसमासार्थमपि त्वर्थाभिधानमात्रमिति' तात्पर्यं वार्तिकाभिमतव्याख्यानदृष्ट्येति ध्येयम् ।

यथाविनियोगमिति । यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्रिद्व्येकनियमेन विनियुक्ताः । शब्दश्चाकाश एवेति तात्पर्यकाराः ॥ परन्तु पञ्चानां पृथिव्यादीनाम्भूतानाङ्गुणानां यथाक्रमं गन्धादीनां विनियोगानुसारेण तत्तदिन्द्रियतत्तद्गुणादिव्यापारानुसारेणैतदित्येव सम्यक्तरं प्रतिभाति ।

(१२). बुद्धिनिरूपणम् ।

(भा०) अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः चेतनस्याकर्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचक्षाणक इवेदमाह—

(सू०) बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥

(भा०) नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति

---

(ख०) अचेतनस्येति ॥ साङ्ख्यमतं "गुणास्त्रयोऽचेतनास्तद्विकारत्वाद्बुद्धेस्साऽप्यचेतना, अचेतनाऽपि सती पुरुषगतचैतन्यच्छायापत्त्या चेतनेवाभासमाना तच्चैतन्याभासेन विषयानुद्भासयति ज्ञापयति चेत्यादि"—तन्निराकरणञ्च तात्पर्येऽनुसन्धेयम् ॥

प्रत्याचक्षाणक इवेति । इवकारेण—'नेदम्प्रत्याख्यानपरं सूत्रमपि तु लक्षणपरात् सूत्रादयमर्थः प्रतीयमानोऽपेक्षितश्च नोपेक्षणीय' इति उक्तम्भवति ॥

बुद्धिरित्यादि सूत्रम् । अनेन—'एतैःपर्यायशब्दैर्योऽभिधीयते पदार्थस्सा बुद्धिरिति'—बुद्धिसामान्यलक्षणं पर्यवसितम् ॥ आत्मादयाः पदार्थाः बुद्धेः कारणानि निरूपितानि । अतः क्रमप्राप्तन्तत्कार्यं बुद्धिरूपन्निरूपयति सूत्रकारः ॥

तद्धीत्यादि साङ्ख्यमतनिराकरणम् । पुरुषगतचैतन्यस्य बुद्धौ छायापत्तिर्नैव सम्भवति । चैतन्यस्यापरिणामित्वेन तच्छायापत्तेरसम्भवात् । अतो बुद्धेरेव चैतन्यमभ्युपगन्तव्यम् । ततश्च प्रतिज्ञानम्पुरुषबुद्धिरूपचेतनद्वयस्य व्यापारोऽपेक्षितः स्यात् ॥

---

(भा०चं०) **प्रत्याचक्षाणक इव** प्रत्याख्यानमपि कुर्वन् । साङ्ख्यमतमपाकरोति **नाचेतनस्येति** । अचेतनस्य स्वनिष्ठ-

( भा० ) तद्धि चेतनं स्यात्। एकश्चायं चेतनो देहेन्द्रियसङ्घातव्यतिरिक्त इति । प्रमेयलक्षणार्थस्य वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति ॥ १५ ॥

---

(ख०) प्रमेयेति ॥ प्रमेयगणपठिताया अपि बुद्धेर्विषयत्वप्राप्तावपि विषयित्वमुपपत्त्या सिद्धमित्यर्थ इति केचित् । तन्न । तथा सति बुद्धेः प्रमेयेभ्यो बहिर्भावः सूत्रकारस्येष्टः स्यात्। बुद्धेर्व्यापारो ज्ञानमिति साङ्ख्यमतनिराकरणमेव 'अन्यार्थ' पदेन विवक्षितमिति तात्पर्यं स्पष्टम् ॥

उपपत्तिसामर्थ्यादिति । अत्रोपपत्तिपदार्थः पर्यायशब्दाभिधानेन व्याख्यातः । तेनायमर्थः । पर्यायाभिधानलक्षणाया उपपत्तेः सामर्थ्यम्—अनेकार्थत्वप्रतिक्षेपकत्वम्—तस्मादित्यादि परिशुद्धौ स्पष्टम् ॥ बुद्धिर्ज्ञानमित्युभयोः पर्यायत्वाभिधानं यत्सूत्रोपन्यस्तन्तस्यैव सामर्थ्यात् 'बुद्धेर्वृत्तिर्ज्ञानम्' इति साङ्ख्यमतमप्यनेन प्रमेयलक्षणपरेणापाततो निराकृतम्भवतीत्याशयः ॥

पर्यायशब्दाभिधानमात्रेण लक्षणाभिधानन्न पर्याप्तमिति केषाञ्चिदाक्षेपः ॥ तत्परिहारो यथा। द्वयी तावत्पदाभिधेयानाङ्गतिः । कानिचित् प्रतिव्यक्तिसङ्केतितानि—यथा पित्रा पुत्रनामकरणादौ। अपराणि तु साधारण्येन सर्वगामित्वेन सङ्केतितानि—यथा गवादिपदविषये ॥ द्वितीय-

---

(भा०चं०) चेतनाकर्तृभिन्नस्य चेतना ज्ञानं बुध्यतेऽनेनेति बुद्धिर्मनस्तस्या भवितुमाश्रयाश्रयिभावेन सम्बद्धुमर्हति युज्यते । तथासति दोषमाह **तद्धीति** । स्यादापद्येत । इष्टापत्तावनिष्टमाह **एकश्चेति** । चोवधारणे । उपपत्तौ अनेकार्थप्रतिपादनं सामर्थ्यं तस्मात् । अयम्भावः बुद्ध्यादयो हि पर्यायशब्दाः भावसाधनास्ते चैकप्रवृत्तिनिमित्तकाः तथा च यदेव तत्प्रवृत्तिनिमित्तकं तद्बुद्धेर्लक्षणम् ॥ १५ ॥

(१३) मनोनिरूपणम्।

(भा०) स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि। तेषु सत्स्वयमपि—

(सू०) युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ॥ १६ ॥

(भा०) अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति। युगपच्च खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि नोत्पद्यन्ते तेनानुमीयते अस्ति तत्तदिन्द्रियसंयोगि सहकारि निमित्तान्तरमव्यापि यस्यासन्निधेर्नो-

---

(ख०) प्रकारकपदानां विषये पर्यायाभिधानेनाप्यभिधेयज्ञानम्भवत्येव। एतदेव च लक्षणकरणस्य प्रयोजनम् ॥ प्रकृते तावदुपलब्धिज्ञानपदयोरर्थः सर्वजनप्रसिद्धोऽतो बुद्धिर्ज्ञानमित्यनर्थान्तरमिति पर्यायाभिधानेनापि काऽसौ बुद्धिरिति बुद्धिस्वरूपं ज्ञातम्भवति। तथा च बुद्धिलक्षणं सम्पन्नम्भवति ॥

गन्धादिविषयतया सुखदुःखविषयतया चेयं बुद्धिर्भाव्यमाना निर्वेदाय कल्पते ततश्चापवर्गेऽप्युपयुज्यत इति ध्येयम् ॥

स्मृतीति। भाष्यकारः क्रमप्राप्तं षष्ठप्रमेयमनोलक्षणसूत्रमवतारयन्नुत्सूत्रमन्यान्यपि लक्षणान्याह।

अनिन्द्रियनिमित्ता इति। अबाह्येन्द्रियनिमित्ता इत्यर्थः।

तत्तदिन्द्रियसंयोगीति। इन्द्रियगतरूपादिव्यावृत्त्यर्थमुक्तमिन्द्रियसंयोगीति। सहकारीत्याकाशस्य—निमित्तान्तरमित्यालोकस्य,—अव्यापीत्यात्मनः—व्यावृत्तिः ॥

मनसो विभुत्वसाधनानि पराभिमतानि कानिचित् परिशुद्धौ प्रदर्शितानि स्वरूपासिद्धत्वेन निराकृतानि च ॥ तानि यथा—(१) सर्वदा

---

(भा०चं०) मनो निरूपयितुमाह स्मृत्यनुमानेति ॥ १६ ॥

(भा०) त्पद्यते ज्ञानं सन्निधेश्चोत्पद्यत इति । मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ॥ १६ ॥

(१४) प्रवृत्तिनिरूपणम् ।

(भा०) क्रमप्राप्ता तु—

(सू०) प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति ॥ १७ ॥

मनोऽत्र बुद्धिरित्यभिप्रेतम् । बुध्यतेऽनेनेति बुद्धिः ।

सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः । तदेतत्कृतभाष्यं द्वितीयसूत्र इति ॥ १७ ॥

---

(ख०) स्पर्शरहितद्रव्यत्वात् (२) विशेषगुणशून्यद्रव्यत्वात्–(३) नित्यत्वे सत्यनारम्भकद्रव्यत्वात्–(४)ज्ञानासमवायिकारणसंयोगाधारत्वात् इति॥

क्रमेति । प्रवृत्तिलक्षणमवतारयितुं मनसोऽपि प्रवृत्तिर्दर्शनीया । न चाप्रतिपादिते मनसि सा शक्या दर्शयितुमिति मनसोऽनन्तरत्वम्बुद्धेः ।

प्रवृत्तिरिति । आरम्भः प्रवृत्तिर्द्विधा–ज्ञानहेतुः क्रियाहेतुश्च । या ज्ञानोत्पादद्वारेण पुण्यपापहेतुः सा वाक्प्रवृत्तिः । वागिति च ज्ञापकहेतूपलक्षणम् । तेन चक्षुरादिभिस्साध्वसाधुदर्शनादि सूचितम्भवति, मनसेष्टदेवताद्यनुचिन्तनञ्च ॥ क्रियाहेतुर्द्वयी–कायनिमित्ता मनोनिमित्ता च । कायो निमित्तं विषयतया यस्यास्साऽऽद्या । दानस्तेयाद्यर्थं यः प्रयत्नः स कायविषयो भवति । एवं दयाद्रोहादयो मनोविषयाः । अयं विभाग आवश्यकः । यतो नास्त्येवासौ पुरुषव्यापारो यत्र कायमनसी न निमित्तम् ॥ इति तात्पर्यपरिशुद्ध्योः स्पष्टम् ॥

---

(भा०चं०) वाग्बुद्धिशरीरैरारभ्यत इति वाग्बुद्धिशरीरारम्भः आरम्भणङ्कृतिरुत्पादनैव शरीरेणेत्यादि करणे तृतीया । कृतं भाष्यं व्याख्या यस्य तत्तथा, द्वितीयसूत्रे द्वितीयसूत्रार्थे ॥ १७ ॥

## (१४) दोषनिरूपणम्।

### (सू०) प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥

(भा०) प्रवर्तना–प्रवृत्तिहेतुत्वम्। ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा। यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति। प्रत्यात्मवेदनीया हीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्त इति?

---

(ख०) प्रवर्तनेति। प्रयोज्यव्यापारपूर्वकत्वेन प्रयोजकव्यापार-निरूपणात् प्रवृत्त्यनन्तरन्दोषलक्षणम् ॥

ज्ञातारमिति। रागद्वेषौ हि मोहप्रभवौ पुरुषं प्रवर्तमानम्प्रवर्त-यतः। तयोर्धर्मः 'प्रवर्तना'। सा च मोहैकार्थसमवाया। ताव-द्ध्ययम्पुरुषो रागादिवशः स्पन्दते यावदस्य मोहो वर्तते इति तात्पर्यम्। तत्र परिशुद्धिः। फलगोचरौ मोहरागौ मोहद्वेषौ वा तत्तत्साधनविषयौ मोहरागौ मोहद्वेषौ वा जनयन्तौ पुरुषं प्रवर्तयतः। ततः फलविषया रागद्वेषमोहाः प्रवर्तकाः, साधनविषयास्तदेकार्थसमवायिनः 'प्रव-र्तनाः' इति ॥

प्रत्यात्मेति। यत् प्रत्यात्मवेदनीयन्न तत्र लक्षणापेक्षा। लक्षणं-स्यानुमानरूपत्वात् प्रत्यात्मवेदनस्य च साक्षादनुभवरूपत्वादिति भावः।

---

(भा०चं०)**प्रवृत्तिहेतुत्वं** प्रवृत्तिकर्तृप्रयोजकत्वं स च प्रयोजकव्या पारः। रागद्वेषमोहा हि पुरुषं प्रवर्त्तयन्ति। मोहस्य रागद्वेषौ व्यापारौ तयोः प्रयत्नौ व्यापारौ फलं त्वीहाशब्दौ। इदमाह **ज्ञातारंहीति**। पुण्ये पुण्यजनके पापे पापजनके साध्ये इत्यर्थः। कीदृशं ज्ञानं कुर्वन्तं प्रवर्तयन्तीत्यत आह **यत्र मिथ्याज्ञानमिति**। यत्रात्मनि विषये वा मिथ्याज्ञानं मोहः। अहङ्काराख्यं मिथ्याज्ञानं यद्यपि मूलम् तथापि

(भा०) कर्मलक्षणाः खलु रक्तद्विष्टमूढाः रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते। तथा द्विष्टस्तथा मूढ इति। दोषा रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति ॥ १८ ॥

(१५) प्रेत्यभावनिरूपणम्।

(सू०) पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुन-

---

(ख०) कर्मलक्षणा इति। स्वरूपतः स्फुटत्वेऽपि न निर्वेदविषयतया स्फुटता। तया चेह प्रयोजनम्। प्रवर्तनावत्त्वेन चैते निर्वेदविषयाः। सा च प्रवृत्त्या कार्येण लक्ष्यते इति 'कर्मलक्षणा' इत्युक्तम्। यतः 'कर्मणा' प्रवृत्त्या प्रवर्तकरागादियुक्ताः पुरुषा लक्ष्यन्ते अतो रागादीनां प्रवर्त्तनावत्त्वमपि लक्षितम्भवति।

बह्विति। स्वरूपमात्रं रागादीनामुक्तम्भवति, न तु प्रवर्तनावत्त्वमपि तेषामिति।

पुनरुत्पत्तिरिति। शरीरादीनान्दोषपर्यन्तानां परित्यागपूर्वकः प्राप्तिलक्षणो धर्मः प्रेत्यभाव इति तदनन्तरमस्यावसर इति परिशुद्धिः ॥ अपरञ्च—दोषा एव धर्माधर्मकारणीभूतप्रवृत्तिद्वारा पुनर्जन्महेतव इति दोषानन्तरमेव प्रेत्यभावस्यावसरः ॥

सत्त्वनिकाय इति। प्राणिशरीरमित्यर्थः।

---

(भा०चं०) न साक्षात्प्रवर्तकमिति नातिप्रसङ्गः। कर्मलक्षणाः कर्मविशेषज्ञातरागादिकाः ॥ १८ ॥

पुनः शब्दोऽनन्तरार्थः, स चोत्पत्तिपदसमानाधिकरणः, स चान्यथानुपपत्त्या मरणानन्तरपरः इत्यभिप्रेत्य भाष्यकारो व्याचष्टे **मृत्वेति**। उत्पत्तिं व्याख्यातुमुपलक्षणमिदमाक्षिप्य समाधत्ते **प्रेत्येः**

(भा०) रुत्पत्तिः स प्रेत्यभावः। उत्पन्नस्य-सम्बद्धस्य। सम्बन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः। पुनरुत्पत्तिः पुनर्देहादिभिः सम्बन्धः। पुनरित्यभ्यासाभिधानम्। यत्र क्वचित्प्राणभृन्निकाये वर्त्तमानः पूर्वोपात्तान्देहादीन् जहाति तत्प्रैति। यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति। प्रेत्यभावो-मृत्वा पुनर्जन्म।

सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥ १९ ॥

---

(ख०) सम्बद्धस्येति। आत्मनो नित्यत्वात्तस्योत्पन्नत्वासम्भवात् उत्पन्नपदस्यार्थः सम्बद्ध इत्याह।

अभ्यासाभिधानमिति। अभ्यासं वदन्नेव नान्तरीयकतया पूर्वशरीरादिपरित्यागम्प्रतिपादयतीत्यर्थः ॥

यत्र क्वचिदिति प्रेत्यभावपदस्याक्षरार्थं व्याचष्टे।

प्राणभृन्निकाय इति। प्राणभृच्चासौ निकायश्चेति। प्राणसंयुक्तशरीरे—इति यावत्।

तत्प्रैतीति। एतदेव 'प्रेत्ये'तिपदस्यार्थः।

तद्भवतीति। एतदेव 'भाव' पदस्यार्थः।

जन्ममरणप्रबन्धाभ्यास इति। जन्ममरणपरम्परायाः पुनः पुनर्भवनम्।

---

(भा०चं०) नि। उत्पन्नस्येति पदं व्याचष्टे **सम्बद्धस्येति**। जडोत्पत्तिवारणायाह **सम्बन्धस्त्विति**। सम्बन्धः देहादीनामुत्पत्तिस्तु अप्राप्तिस्वरूपप्राप्तिरसतां देहिनस्तु सत एवाप्राप्ततत्प्राप्तिरित्यर्थः। मृतिरुत्पत्तिपूर्विकेति दर्शयितुमाह **पुनरित्यभ्यासाभिधानमिति**॥१९॥

## (१६) फलनिरूपणम् ।

(सू०) प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

(भा०) सुखदुःखसंवेदनं फलम् । सुखविपाकं कर्म दुःखविपाकञ्च । तत्पुनर्देहेन्द्रियविषयबुद्धिषु भवतीति सह देहादिभिः फलमभिप्रेतम् । तथा हि प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवति । तदेतत्फलमुपात्तमुपात्तं हेयं त्यक्तं त्यक्तमुपादेयमिति नास्य हानोपादानयोर्निष्ठा पर्यवसानं वास्ति ।

(ख०) प्रवृत्तीत्यादि सूत्रम् । अत्र च प्रवृत्तिजनित इति वक्तव्ये दोषग्रहणं न केवलं प्रवृत्तिम्प्रति दोषाणां हेतुभावः, अपि तु प्रवृत्तिकार्ये सुखदुःखेऽपि प्रति इति दर्शनार्थम् । दोषसलिलावसिक्तायामात्मभूमौ धर्माधर्मबीजे सुखदुःखे जनयत इति तात्पर्यम् । तत्र परिशुद्धिः । स्वरूपतः प्रवृत्तिम्प्रति दोषाणां सहकारित्वं सूत्रकार एव चतुर्थे वक्ष्यतीति ।

सूत्रे 'अर्थ'—ग्रहणं गौणमुख्यफलावरोधार्थम् । मुख्यम्फलं सुखदुःखरूपम्, गौणञ्च शरीरादिरूपमिति विवेकः ।

सह देहादिभिरिति । देहादिभिः सह सुखदुःखसंवेदनमेव फलमभिप्रेतमिति सम्बन्धः । सुखदुःखसंवेदनम्फलम् शरीरादिसम्बन्धश्च फलमित्यर्थः ॥

एतत्सर्वमिति । सुखदुःखम् शरीरादि चेत्यर्थः ।

निष्ठा पर्यवसानमिति । निष्ठेति सामान्यतोऽन्तमात्रम्परामृशति । सा च सुखादीनामप्यस्तीत्यत आह पर्यवसानमिति । 'परि'—अत्यन्तम्—'अवसानम्' परिसमाप्तिः । आत्यन्तिकी निवृत्तिरिति यावत् ।

(भा०चं०) संवेदनं स्वसम्बन्धितया दर्शनम् । विपच्यत इति विपाकः कार्यं सुखं दुःखं च विपाको यस्य तत्कर्म तथा । ननु कर्मणः सुखदुःखमात्रफलकत्वे देहादेरन्यफलत्वं स्यादित्याशङ्कायामाह

(भा०) स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति ॥२०॥

(१७) दुःखनिरूपणम् ।

(भा०) अथैतदेव—

(सू०) बाधनालक्षणं दुःखम् ॥ २१ ॥

'बाधना' पीडा ताप इति । तयाऽनुविद्धमनुषक्तमवि-

---

(ख०) उह्यते लोक इति । समस्तः संसारः प्रवर्तत इत्यर्थः ।

अथैतदेवेति । 'एतत्' शरीरादि 'एव' 'दुःखमिति'—अग्रिमेण सूत्रेण सम्बन्धः ।

नानुक्ते शरीरादौ तेषां सुखदुःखत्वं शक्यं लक्षयितुमिति तल्लक्षणेभ्यः परमिदं दुःखलक्षणम् ।

बाधनेति (सूत्रे) बाधनाविषयां बुद्धिं लक्षयति । तेन बाधना च तदनुषङ्गिणश्च शरीरादयो गौणमुख्यभावेन लक्षिता भवन्ति । सैव हि बाधनाबुद्धिर्दुःखे मुख्या शरीरादौ गौणी । दुःखानुभवे द्वयोरप्यपेक्षणीयत्वादेवं व्यवहारः ।

तयाऽनुविद्धमिति । सर्वमेतत् सुखं दुःखं शरीरादि च दुःखेनानुस्यूतं तदविनाभावि । अतः सर्वं दुःखमेव ।

---

(भा०चं०)तत्पुनरिति । हेयं अवश्यहातव्यम्, तथाच ब्राह्मणादिभिरपि नैतत्स्थापयितुं शक्यमिति भावः। त्यक्तं त्यक्तजातीयम् । निष्ठाऽत्यन्तनिवृत्तिः । पर्यवसानं व्यवस्था। अथवा वैपरीत्येन पदद्वयं तथार्थकम्। **स खलु** प्रेत्यभाविता खलु । **हानोपादानस्रोतसेति** । स्ववशीकृत्य नायकत्वसादृश्येन रूपकम्। हानोपादानेतिपदे करणल्युडन्ते प्रवृत्तिदोषपरे। लोकृ दर्शने लोकते पश्यति विपरीतामिति लोकः॥२०॥

अथेति । कार्त्स्न्यार्थे "मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ"इतिकोशात् तच्च विशेषणं तृतीयान्तम् । एतदिति शरीरा-

(भा०) निर्भागेन वर्तमानं दुःखयोगाद् दुःखमिति ।

सोऽयं सर्वं दुःखेनानुविद्धमिति पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते निर्विण्णो विरज्यते विरक्तो विमुच्यते ॥ २१ ॥

(१८) अपवर्गनिरूपणम् ।

यत्र तु निष्ठा यत्र तु पर्यवसानम् सोऽयम्—

(सू०) तदत्यन्तविमोक्षोऽपवर्गः ॥ २२ ॥

तेन–दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्गः । कथम् ? उपात्तस्य जन्मनो हानम् अन्यस्य चानुपादानम् । एतामव-

---

(ख०) तदिति(सूत्रे)अनन्तरं गौणमुख्यभेदभिन्नं 'दुःखं'सुखदुःखशरीराद्यात्मकं सर्वम्परामृशति । मुख्यं दुःखमात्रमेवाभिप्रेतमिति भ्रमो मा भूदिति जन्मनेत्याह भाष्यकारः । तथा च दुःखशब्देन जायमानाः कार्यरूपाः सर्वे शरीरादयो अभिप्रेता इत्युक्तम्भवति । अत्यन्तमिति पुनरावृत्तिराहित्यं सूचयति ।

---

(भा०चं०) दिफलान्तम्, तत्र विशेष्यस्तु प्रेत्यभावः, तथाच शरीरादिकृत्स्नविशेषणविशिष्टं जन्मैव दुःखमिति भाष्यकृदभिप्रेतम् । बाधयन्तीति बाधकाः प्रवृत्त्यादयः तेषां बाधावच्छिन्नव्यापारो बाधना तत्र व्यापारांशाविवक्षया फलमात्रपरं सूत्रस्थबाधनापदम् । बाधनालक्षणं लाञ्छनं कलङ्को यस्य तत्तथोक्तविधं जन्म । सूत्रस्थमितिपदं भावनापरम् तस्याश्च विषये जन्मन्यन्वयः । तथाच सकलविशेषणविशिष्टं जन्म दुष्कलङ्कितं दुःखतया भाव्यमित्यर्थः । जन्मदुःखं भावयतः फलमाह **सोऽयमिति** । सोऽयं जन्मदुःखभावकः प्रमाता निर्विद्यते स्वदोषमात्रदर्शी भवति ॥ २१ ॥

यत्रेत्यपवर्गो । तथाच सोऽपवर्ग इति सूत्रात्मपदेनान्वयः । दुःखेन

(भा०)स्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः । तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति ।

---

(ख०) अभयमिति पुनःसंसारभयाभावमाह । ये तु-"ब्रह्मैव नामरूपप्रपञ्चात्मना परिणमते"इत्याहुः तान् प्रत्याह—अजरमिति । परिणामो हि पूर्वधर्मिनिवृत्तौ धर्म्यन्तरोत्पादो वा स्याद् वैनाशिकानामिव, पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पादो वा स्यात् साङ्ख्यानामिव । उभयथाऽपि नोपपद्यते परिणामो ब्रह्मणः । सर्वात्मना परिणामे सर्वात्मना ब्रह्मणोऽन्यथात्वाद्विनाशप्रसङ्गः । एकदेशपरिणामे तु सावयवत्वेन घटादिवदनित्यत्वप्रसङ्गः । प्रदीपस्येव निर्वाणश्चेतसो मोक्ष इति वैनाशिकाः । तान् प्रत्याह अमृत्युपदमिति । भावरूपोऽवस्थाविशेष इत्यर्थः । तदेव स्पष्टयति ब्रह्मेति । क्षेमप्राप्तिरिति च । अतोऽभावरूपत्वम्मोक्षस्य निरस्तमिव भवति ।

---

(भा०चं०)दुःखकलङ्केन कर्त्रा जन्मना । अत्यन्तमिति क्रियाविशेषणत्वान्नपुंसकम् । मोक्ष असने इति चौरादिकः । मुच्लृ मोचने तौदादिकः । वृजी अपवर्जने इति भौवादिकः । त्रयमिदमेकार्थम् । व्यपोपसर्गद्योतितत्वात् । कथमिति प्रश्नार्थम् । उपात्तस्येत्युत्तरम् । हानं हानिरनुपादानमप्राप्तिः प्रवृत्तिसमाप्तेः । एतां मोक्षाख्यामवस्थां दशां कालिकीं क्रियामपर्यन्तामविनाशिनीमपवर्गमपवर्गसंज्ञिकां वेदयन्ते विदन्ति अपवर्गविदः मुक्तितत्त्वविदः । एतेन साकारविष्णवादिसादृश्यं सायुज्यं मुक्तिमतमपास्तं वेदितव्यम् सशरीरतया तस्य दुःखात्मकत्वात् । भावनापरिपाकवतो मुमुक्षोस्तुत्यर्थं कर्मणोऽपि कर्तृत्वविवक्षया तेन जन्मनेत्युक्तं भाष्यकृता । तदिदं कैवल्यं गुणनामभिः स्तौति तदभयमिति । नास्ति कुतो भयं येन तत्तथा । भयहेतुं वारयति अजरमिति । नास्ति जरा येन तत्तथा मृत्युर्येन

(भा०)नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते, तेनाऽभिव्यक्तेनात्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते। तेषां प्रमाणाभावादनुपपत्तिः। न प्रत्यक्षं नानुमानं नागमो वा विद्यते नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति।

नित्यस्याभिव्यक्तिः–संवेदनम्, तस्य हेतुवचनम्। नित्यस्याऽभिव्यक्तिः–संवेदनम्–ज्ञानमिति। तस्य हेतुर्वाच्यो यतस्तदुत्पद्यत इति।

सुखवन्नित्यमिति चेत् संसारस्थस्य मुक्तेनाविशेषः। यथा मुक्तः सुखेन तत्संवेदनेन च सन्नित्येनोपपन्नस्तथा संसारस्थो-

---

(ख०) नित्यमिति। विज्ञानमानन्दम्ब्रह्मेति सामानाधिकरण्यश्रुतेः ब्रह्मस्वभावं सुखम्। तथा च ब्रह्मणो नित्यत्वात्तदपि नित्यम्। आत्मन इत्यत्र च षष्ठी 'राहोः शिर'इति वन्मन्तव्या।

न प्रत्यक्षमिति। नित्यं सुखमात्मनोऽभिव्यज्यत इत्यस्य पक्षस्य साधकं न प्रत्यक्षं विद्यते नानुमानं विद्यते नागमो विद्यते इति सम्बन्धः।

सुखवन्नित्यमिति। यथा सुखन्नित्यन्तथा तस्याभिव्यक्तिरपि नित्येति प्रथमः कल्पः। तत्र च मुक्तसंसारिणोरविशेषप्रसङ्गः। सुखस्य नित्यत्वेऽपि तदभिव्यक्तिरनित्येति द्वितीयः कल्पः। तत्र तदभिव्यक्तिकारणनिरूपणानुपपत्तिः। यथा प्रदर्शितमग्रे अनित्ये हेतुवचनमित्यादि भाष्ये।

---

(भा०चं०)तत्तथा पदं प्रतिपत्तव्यं ब्रह्म ब्रह्मैव स्वातन्त्र्यात् क्षेमप्राप्तिः क्षेमं कल्याणं प्रकृष्टैः परमयोगिभिराप्यते इति प्राप्तिः कर्मधारयादेकपदम्। इति शब्दः प्रमेयप्रकरणभाष्यसमाप्त्यर्थः "इति हेतुप्रकरणप्रकाशादिसमाप्तिष्वित्यनुशासनात्"।

परमवैराग्यदृढीकरणाय पराभिमतमुक्तिं निराचष्टे **नित्यंसुखमित्यादिना**। महत्त्वं विभुपरिमाणं तदिव मोक्षदशायां व्यज्यते

(भा०) ऽपि प्रसज्यत इति, उभयस्य नित्यत्वात् ।

अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्यं यौगपद्यं गृह्यते । यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्यायेण, तस्य च नित्यसंवेदनस्य च सहभावो यौगपद्यं गृह्येत न सुखाभावो नानभिव्यक्तिरस्ति, उभयस्य नित्यत्वात् ।

अनित्यत्वे हेतुवचनम् अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम्, यत उत्पद्यते स हेतुर्वाच्यः ।

---

(ख०) नित्यत्वादिति । ततश्च मोक्षार्थप्रयासस्य वैयर्थ्यम् ।

अभ्यनुज्ञान इति । इष्टापत्तौ—उभयस्यापि नित्यत्वस्वीकारे—इत्यर्थः । धर्माधर्माभ्यां जनितयोः सुखदुःखयोरुपलब्धिकाले नित्यस्य सुखस्य नित्यस्य तज्ज्ञानस्य चास्तित्वप्रसङ्गे यौगपद्यमिति भावः ॥ नित्यसंवेदनस्येत्येव पाठः सम्यक् । तथा च 'तस्य' सुखस्य, नित्यस्य संवेदनस्य सहभाव इति सम्बन्धः । यद्यपि 'स्व'पदसन्निवेशे एतत् स्पष्टतरम्भवति तथाऽपि तथाविधपाठस्य कुत्रापि पुस्तकेऽनुपलम्भान्न तथा पाठो धृतः ।

न सुखाभाव इति । सुखेन तदभिव्यक्त्या च रहितस्य कालस्यासम्भवात् ।

---

(भा०चं०)प्रतीयते अभिव्यक्तेन अभिव्यज्यमानेन तृतीयार्थोऽभेदः सुखान्वयी सुखी प्रशस्तसुखो भवति प्रमीयते । केचन मीमांसकाः । अनुपपत्तिरसम्भवः । एतन्मतस्येति शेषः । **तस्य** संवेदनस्य हेतुवचनं कारणवचनं प्रसक्तं कर्तुमिति शेषः । **सन्** सम्बन्धः ।उभयस्य सुखसंवेदनयोः नित्यत्वात् कारणानपेक्षत्वात् । **अभ्यनुज्ञाने** च संसारिणोपि नित्यसुखसाक्षात्कारस्वीकारे । साहचर्यमेकार्थसमवायं यौगपद्यमेककालसम्बद्धम् । उत्पत्तिस्थानेषूत्पत्तिकारणेषु सत्सु । पर्यायेण क्रमेण । तस्यानित्यसुखसंवे-

(भा०) आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम्। आत्ममनःसंयोगो हेतुरिति चेत्, एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति।

धर्मस्य कारणवचनम्। यदि धर्मो निमित्तान्तरम् तस्य हेतुर्वाच्यो यत उत्पद्यत इति।

योगसमाधिजस्य कार्यावसायविरोधात्प्रक्षये संवेदननिवृत्तिः। यदि योगसमाधिजो धर्मो हेतुः तस्य कार्यावसायविरोधात्प्रक्षये संवेदनमत्यन्तं निवर्तेत।

असंवेदने चाविद्यमानेनाविशेषः। यदि धर्मक्षयात्संवेदनोपरमो नित्यं सुखं न संवेद्यत इति किं,—विद्यमानं न संवेद्यते, अथाविद्यमानमिति नानुमानं विशिष्टेऽस्तीति।

अप्रक्षयश्च धर्मस्य निरनुमानमुत्पत्तिधर्मकत्वात्। योगसमाधिजो धर्मो न क्षीयत इति नास्त्यनुमानम्। उत्पत्तिधर्मकमनित्यमिति विपर्ययस्य त्वनुमानम्। यस्य तु संवे-

---

(ख०) आत्मेति। आत्ममनःसंयोगस्य केवलस्य हेतुत्वासम्भवे तत्सहकारिभूतस्य कारणान्तरस्यावश्यकता।

धर्मस्येति। धर्म एव तदपेक्षितं निमित्तान्तरमिति पक्षं दूषयति।

निरनुमानमिति। यद्यपि निरनुमान इत्येव पाठः समीचीनः प्रतिभाति तथाऽपि कुत्रापि पुस्तके तथाविधपाठस्यानुपलम्भात् 'निरनुमानम्' इत्येव सर्वपुस्तकसम्मतः पाठोऽत्र धृतः।

उत्पत्तिधर्मेति। 'विपर्ययस्य' पराभिमतपक्षविरुद्धपक्षस्य साधकीभूतम् 'अनुमानम्' अस्ति—'यदुत्पत्तिधर्मकन्तदनित्यम्' इत्येवंरूपम्—

---

(भा०चं०) दनस्यानित्यत्वे हेतुवचनं वक्तव्यमिति शेषः। योगसमाधिजस्य धर्ममेघाख्यपुण्यस्य कार्यावसायोऽन्त्यफलोत्पत्तिः तया विरोधान्नाशा-

(भा०) दनोपरमो नास्ति तेन संवेदनहेतुर्नित्य इत्यनुमेयम् ।

नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम् । यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च संवेदनस्य तूपरमो नास्ति कारणस्य नित्यत्वात् तथा संसारस्थस्यापीति । एवं च सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति ।

शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेन्न शरीरादीनामुपभोगार्थत्वात् विपर्ययस्य चाननुमानात् । स्यान्मतम्–संसारावस्थस्य शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकः तेनाविशेषो नास्तीति । एतच्चायुक्तम् शरीरादय उपभोगार्थास्ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम् । न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति ।

इष्टाधिगमार्था प्रवृत्तिरिति चेन्न अनिष्टोपरमार्थत्वात् ।

---

(ख०) इत्यर्थः ।

यस्येति । यदि कश्चिदेवंविधः पुरुषः स्याद्यस्य सुखानुभवो नित्यः स्यात्तर्हि स वक्तुं शक्ष्यति तदनुभवस्य कारणभूतो धर्मो नित्य इति । धर्मस्य नित्यत्वे तु मुक्तसंसारिणोरविशेषप्रसङ्गः । यथोक्तम्प्राक् ।

तत्संवेदनहेतुश्चेति । नित्य इति शेषः ।

साहचर्यमिति । मोक्षस्येत्यर्थः ।

शरीरादीति । यस्माच्छरीरादयो नित्यसुखस्योपलब्धौ प्रतिबन्धका भवन्ति तस्मात्सुखमोक्षयोस्साहचर्यं न सम्भवतीत्यर्थः ।

विपर्ययस्येति । एतद्विरुद्धपक्षस्य साधकमनुमानन्नास्तीत्यर्थः ।

अविशेष इति । अभेदो मोक्षादिति यावत् ।

इष्टेति । 'मोक्षे नित्यं सुखमात्मनोऽभिव्यज्यत' इत्यत्र प्रमाणन्नास्तीति भाष्येणोक्तम्प्राक् । तत्र वेदान्ती प्रतिविधत्ते "अस्ति तत्र प्रमाण-

(भा०) इदमनुमानम्—इष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणां नोभयमनर्थकमिति । एतच्चायुक्तम् अनिष्टोपरमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति । नेष्टमनिष्टेनाननुविद्धं सम्भवतीति इष्टमप्यनिष्टं सम्पद्यते । अनिष्टहानाय घटमान इष्टमपि जहाति विवेकहानस्याशक्यत्वादिति ।

---

(ख०) मनुमानम्—या या प्रवृत्तिस्सेष्टप्राप्त्यर्थैवेत्येवंरूपम् ।"अस्यानुमानस्य तात्पर्यं यथा वर्णितं तात्पर्ये—शास्त्रेण हि मोक्षसाधने लोकः प्रवर्तनीयः, इष्टार्थी च प्रवर्तते तत्साधने, सुखं चेष्टमिति सुखात्मको मोक्ष इत्यर्थः । अनिष्टेति । न सर्वाऽपि प्रवृत्तिरिष्टाधिगमार्थैव, अनिष्टनिवृत्त्यर्थाऽपि प्रवृत्तिर्भवतीत्यर्थः ।

नेष्टमिति । किञ्चिदप्यस्मिञ्जगति सर्वथेष्टन्नास्तीत्येतदेवानिष्टोपरमार्थैव प्रवृत्तिर्भवति मुमुक्षोरित्यत्र प्रमाणम् ।

अनिष्टहानायेति । इष्टानिष्टयोस्सर्वत्र सुश्लिष्टत्वादनिष्टहानाय यः प्रवर्तते स तदनिष्टसहचरितेष्टमपि जहात्येवेत्यर्थः ।

विवेकेति । इष्टानिष्टयोः परस्परसंश्लेषस्तथा घनिष्ठो यथा तयोः पृथक्करणन्न सम्भवति । अतोऽनिष्टांशस्य हानमिष्टांशस्य रक्षणं सर्वथा दुश्शकम् ।

---

(भा०चं०) त्वक्षये सर्वक्षयेऽविशेषः स्यादिति शेषः । विशिष्टं विद्यमानं न ज्ञायते इति पक्षे इष्टाधिगमा इष्टाधिगमार्था ईप्सितप्राप्त्यर्था प्रवृत्तिर्मुमुक्षूणां शास्त्रे प्रवृत्तिर्वा प्रवर्तते अनेनेति व्युत्पत्तेश्च अनुमानमिति शेषः । तथाच प्रयोगः मोक्षशास्त्रं मुमुक्षप्रवृत्तिर्वा इष्टाधिगमार्था शास्त्रत्वात्प्रवृत्तित्वाच्च योगशास्त्रत्वात् यागीयप्रवृत्तिवत् । इदं खण्डयति नेति । विकल्पयति विविधा भवति विरुध्यते वा । इतिशब्दः पूर्वपक्षनिराकरणसमाप्त्यर्थः ॥ २२ ॥

(भा०) दृष्टातिक्रमश्च देहादिषु तुल्यः। यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः। साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति।

उपपत्तिविरुद्धमिति चेन्न समानम्। देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति समानं सुखस्यापि नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति।

आत्यन्तिकं च संसारदुःखाभावे सुखवचनादागमेऽपि सत्यविरोधः। यद्यपि कश्चिदागमः स्यात् मुक्तस्यात्यन्तिकं सुखमिति सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते। दृष्टो हि दुःखादेरभावे सुखशब्दप्रयोगो बहुलं लोक इति।

नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावो रागस्य बन्धनसमाज्ञानात्। यद्ययं मोक्षो नित्यं सुखमभिव्यज्यत इति नि-

---

(ख०) दृष्टातिक्रम इति। स्यादेतत्–"लोके क्षणिकं सुखम्परित्यज्य बुद्धिपूर्वकारी स्थायि सुखमादत्ते। स्थायितमञ्च सुखमेव मोक्ष" इति। एवन्तु शरीरेन्द्रियाद्यपि प्रतिवक्तुं शक्यम्—"क्षणिकं नश्वरशरीरादि त्यक्तुं स्थायितरन्तदासायितुं पुरुषा अभिलषन्ति–अतः स्थायितरशरीरेन्द्रियादिरूप एव मोक्ष" इति।

साधीय इति। सोल्लुण्ठवचनम्। शरीरादिरूपत्वमात्मनः परिकल्प्य सुष्ठु साधितो वेदान्ताभिमतमैकात्म्यादिसिद्धान्त इति परिहासार्थः।

अप्रहाण इति पाठः सम्यक् न 'प्रहाणे' इति।

नित्यसुखे यदि मुमुक्षूणां प्रवृत्ती रागादेव भवति तर्हि रागनिवृत्तेरभावात् तत्सम्पाद्यस्य मोक्षस्याप्यनुपपत्तिरिति चेत्तत्राह नित्यसुख-

---

(भा०चं०) इति श्रीभाष्यचन्द्रे प्रमेयप्रकरणभाष्यचन्द्रिका।

(भा०) त्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेत्, नाधिगन्तुमर्हतीति । बन्धनसमाज्ञातो हि रागः । न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति ।

प्रहीणनित्यसुखरागस्याप्रतिकूलत्वम् । अथास्य नित्यसुखरागः प्रहीयते, तस्मिन्प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति यद्येवं, मुक्तस्य नित्यं सुखं भवति । अथाऽपि न भवति नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्पत इति ॥ २२ ॥

---

(ख०) रागेणेति ।

ननु मोक्षस्य दुःखनिवृत्तिरूपत्वात् तम्प्रति प्रवृत्तेर्दुखद्वेष एव कारणम्भवितुमर्हति—द्वेषश्च बन्ध एवेत्यत आह प्रहाणेति । यस्य सुखानुरागः प्रहीणः न तस्य किमपि वस्तु प्रति प्रतिकूलताबुद्धिर्द्वेषो वा । सुखप्रतिघातेष्वेव हि द्वेषो भवति ॥ प्रहीणरागो यदा मोक्षे प्रवर्तते तदा सुखं लभ्यते न वेति सन्देहेन विचारयति । अथ च निर्धूतसकलप्रतिबन्धकीभूतरागद्वेषादिकस्यं मोक्षः सम्पद्यत एव ॥ तथा च तात्पर्यकाराः—'एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्यां प्रसक्तस्य यदि नित्यं सुखं भवति, कामम्भवतु, मा वाभूत् । उभयोरपि पक्षयोः वीतरागप्रवृत्तौ मोक्षाधिगमो न विकल्पते—न सन्दिग्धो भवतीति' ।

---

(भा०चं०) अथ प्रमाणप्रमेयपरीक्षाङ्गं संशयं लक्षयन् विभजते । **समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शस्संशयः** । विमर्शः संशय इति सामान्यलक्षणम् । यद्यपि संशयसमाख्याया प्रवर्तकत्वात् शयेन समानो बोधः संशय इत्यन्वर्थपर्यालोचनेनापि लक्षणं लभ्यते तथापि लक्षणान्तरमाह **विमर्शेति** । विमर्शो ज्ञानं विरुद्धाभ्यां प्रकाराभ्यां मर्शो विमर्शः ।

( भा० ) स्थानवत एव तर्हि संशयस्य लक्षणं वाच्य-मिति तदुच्यते—

**समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्य-व्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥**

---

( ख० ) पूर्वेषाम्प्रमाणाधीनत्वात् प्रमेयस्य बुभुत्सितत्वात् ताभ्यां संशयादीनामपकर्षः । साङ्गोपाङ्गे न्याये व्युत्पाद्ये प्रकरणान्तरे-भ्यः संशयादीनामुत्कर्षः । तत्रापि सन्दिग्धे प्रयोजनादिचिन्ता न च प्रयोजनमनुसंशय इति संशयस्य प्राथम्यम् । प्रथमे चोद्देशसूत्रे प्रमे-यानन्तरं संशयस्यैवोद्दिष्ट वादस्यैवावसर इत्याह स्थानवत इति । सूत्रे तृतीयस्थानस्थितस्येति यावत् ।

समानेत्यादिसूत्रम् । अत्र 'विमर्षः संशय' इति संशयसामान्यलक्षणम् । एकस्मिन्धर्मिणि विरोधिनानार्थविमर्षो 'वि-मर्षः' 'किंस्वित्' इति ज्ञानम् । तदनेनासमानजातीयेभ्यः प्रमा-णादिभ्यः समानजातीयेभ्यश्च विपर्ययादिभ्यः संशयो व्यवच्छिन्नो भवति । समानेत्यादि तु त्रीणि विशेषलक्षणानि । तेषु विमर्षः संशय इत्यनुवर्तनीयम् । अत्र 'समानधर्मोपपत्तेः' 'अनेकधर्मोपपत्तेः' 'वि-प्रतिपत्तेः'—इति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणानि । यद्य-प्युपपत्तिशब्दः सत्तामात्रवचनस्तथापि पदान्तरसमभिव्याहारादवग-म्यते यत्सत्तामात्राभिधानेऽपि तदुपलब्धिर्विवक्षितेति । विषयविषयि-णोरभेदविवक्षया सामानाधिकरण्यम्—'उपपत्तिरुपलब्धिरिति'—इत्यादि तात्पर्ये स्पष्टम् ।

वार्तिकानुसारि चैतद्व्याख्यानम् । भाष्यमतेन त्वत्र सूत्रे पञ्च संशयभेदा लक्षिताः, न त्रय एव । 'उपलब्ध्यव्यवस्थातः' 'अनुपल-ब्ध्यव्यवस्थातः' चेत्येतद्द्वयमपि स्वतन्त्रयोरेव संशयभेदयोर्लक्षक-मिति भाष्यकारस्य मतम् । एतत्पदद्वयमुक्तसंशयभेदत्रयस्यैव विशेषण-

(भा० ) समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति। स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरं नावधारयति।

(ख० ) मिति वार्तिकतात्पर्यमतम्। भाष्यमते वार्तिकस्यारुचिः स्पष्टम्प्रदर्शिता तात्पर्ये—नो खलु समानानेकधर्मोपलब्धौ सत्यां, सत्यां च विशेषस्मृतौ, साधकबाधकप्रमाणासद्भावे संशयो भवतीति न 'उपलब्ध्यनुपलब्ध्यव्यवस्थे' पृथक् संशयकारणे—इति।

बुभुत्समान इति सूत्रस्थस्य विशेषापेक्षपदस्य विवरणम्। किंस्विदिति च विमर्शविवरणम्।

(भा०चं०) द्विवचनविग्रहो बहुत्वोपलक्षणार्थो ज्ञेयः। स च संशयः समानधर्मानेकधर्मविप्रतिपत्तिहेतुकतया त्रिविध एव इतरपदविशेषणो(१)भवतीति सूत्रार्थः। तत्र विशेषरूपानवधारणप्रत्ययः संशयः प्रत्ययोऽनवधारणात्मकश्चेति व्याघातः। प्रत्ययस्यैतदेव प्रत्ययत्वं यद्विशेषरूपानवधारणात्मकत्वं संशयश्च न तथा प्रत्ययत्वं व्याहन्ति, न स्वरूपप्रत्यायनात्। स्वरूपमस्य प्रतीयते न तु विषयस्वरूपमवधारयति अतः संशयः प्रतीयते इति प्रत्ययः इत्युच्यते इति वार्तिकम्। समानधर्मोपपत्तेरिति भाष्यम् द्वन्द्वात्परस्य प्रत्येकमन्वयमभिप्रेत्य समानस्य साधारणस्य धर्मस्योपपत्तेर्ज्ञानात्। साधारण्यमिह सादृश्यम्। विशेषमपेक्षत इति विशेषापेक्षः ईक्षतिरिह चिक्षिषापरम् तथाच अपनीय बाधित्वा अन्यतरं परमीचिक्ष्यशयतीति विशेषापेक्षपदार्थः। आरोहपरिणाहौ ऊर्ध्वत्वविशालत्वे परिमाणविशेषौ इत्येषा बुद्धिरित्येतद्बुद्धिपूर्विका अपेक्षा तत्त्वदिदृक्षा संशय-

(टि०) (१) इतरपदानि उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्श इत्येतानि पदानि विशेषणानि यत्रायमर्थः उपलब्ध्यनुपलब्ध्यव्यवस्थात इत्यनेन साधकबाधकप्रमाणाभावो दर्शितः। वस्तुतो भाष्यग्रन्थस्वारस्यात्पञ्चैव लक्षणानीति।

(भा०) तदनवधारणं ज्ञानं संशयः। समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य नोपलभ इत्येषा बुद्धिः "अपेक्षा" संशयस्य प्रवर्त्तिका वर्त्तते, तेन विशेषापेक्षो विमर्शः संशयः।

---

(ख०) अपेक्षेति। अपेक्षाशब्दो यद्यपीच्छायां वर्तते तथापीह जिघृक्षापरम्बोध्यम्, वाक्यसामर्थ्यात्। न च सा संशयस्य हेतुः संशये सति तस्याः भावात्। तस्माद्विशेषापेक्षया जिघृक्षालक्षणयेह

---

(भा०चं०) पूर्वकन्यायस्य प्रवर्त्तिका तेनापेक्षकतया न्यायप्रवर्तकत्वेन विमर्शो विचारहेतुः विमृश्यतेऽनेनेति व्युत्पत्तेः। यद्वा संशयेनापीक्ष्यत उपजीव्यत इत्यपेक्षाविशेषो विशेषस्मृतिः। विशेषोऽपेक्षा यस्य स विशेषापेक्षः विमर्शो ज्ञानम् एवं च समानधर्मप्रकारकज्ञानहेतुकं विशेषस्मृतिकारणकमुपलब्ध्यनुपलब्ध्यव्यवस्थाहेतुकं ज्ञानं संशय इत्यर्थः। विशेषपदलक्षितां तदर्थस्मृतिं विवृणोति **समानमित्यादिना**। नोपलभे इत्यन्तेन नोपलभे नानुभवामि इत्यालोच्यमाना बुद्धिः स्मृतिः। नोपलभ इत्यत्र नञ्पदं भिन्नबुद्धिपरम् धातुरनुभवपरः, तथाच नोपलभे अनुभवभिन्नां बुद्धिं करोमीत्यर्थः। पर्युदासोयं धात्वर्थस्यापि विवक्षयेति ध्येयम्। **अनेकधर्मोपपत्तेरिति**। धर्मो विशेषकः स्तस्योपपत्तिरध्यवसायः। अनेकस्येति षष्ठी सम्बन्धे कारकविवक्षायां तु तस्मादिति स्यात् तथा चानेकावधिविशिष्टकर्तृधर्मोध्यवसायादित्यर्थः। उभयथा उभयप्रकारेण विभागजत्वं विभागजविभागासमवायिकारणत्वं(१) तथाच

---

(टि०)(१) अयमभिप्रायः सामान्यतः विभागजविभागासमवायिकारणत्वं यद्यप्यङ्गुल्याकाशविभागजहस्ताकाशविभागासमवायिकारणे कायाकाशविभागेऽस्ति तथापि कारणमात्रविभागजविभागासमवायिकारणत्वादिति हेतुर्भाष्यकारेण विभागजत्वादित्यनेन सूचितः।

(भा०) अनेकधर्मोपपत्तेरिति। समानजातीयमसमानजातीयं चाऽनेकम्। तस्यानेकस्य धर्मोपपत्तेः विशेषस्योभयथा दृष्टत्वात्। समानजातीयेभ्योऽसमानजातीयेभ्यश्चार्था विशिष्यन्ते। गन्धवत्त्वात्पृथिव्यबादिभ्यो विशिष्यते गुणकर्मभ्यश्च। अस्ति च शब्दे विभागजन्यत्वं विशेषः। तस्मिन्द्रव्यं गुणः कर्म वेति सन्दे-

(ख०) विशेषयोः पुरोवर्तिनोः सादृश्यात्स्मरणे सत्यग्रहणं लक्षणीयम्। एवञ्च साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिर्विनश्यदवस्था विशेषस्मृत्या सहाविनश्यदवस्थैकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम्।

अनेकेति–द्वितीयं संशयभेदं लक्षयति। समानजातीयेति। समानजातीयमसमानजातीयकञ्च–(तस्माद् विशेषको) धर्मः॥ अथवा–समानजातीयमसमानजातीयं तस्य धर्मः–निवर्तकतया॥ पूर्वस्मिन् व्याख्याने 'तस्माद् विशेषक' इत्यनयोः पदयोरध्याहारः कल्पनीयः॥

अबादिभ्यः–द्रव्यत्वेन समानजातीयेभ्यः। 'गुणकर्मभ्यः'–अद्रव्यत्वादसमानजातीयेभ्यः॥

(भा०चं०) विभागजविभागाद्विशेषः। द्रव्यगुणकर्मभ्यस्तु सुतराम्। अयम्भावः—

(१)द्रव्ये गुणे कर्मणि वा विभागासमवायिताम्।
शब्दमात्रगतां पश्यन् संशेते गुणतत्त्ववित्॥
यस्तु निश्चितवान् धीरो विभागे तां विचारतः।
गुणत्वनिश्चयः शब्दे तस्य स्यात्तन्निदर्शनात्॥

विप्रतिपत्तेरितीति। एकार्थदर्शनं एकस्मिन् धर्मिणि

(टि०) (१) विभागासमवायितां शब्दमात्रगतां पश्यन् द्रव्ये गुणे कर्मणि गुणतत्त्ववित् संशेते इत्यन्वयः।

(भा०) हः विशेषस्योभयथा दृष्टत्वात्। किं द्रव्यस्य सतो गुण-कर्मभ्यो विशेषः, आहोस्विद्गुणस्य सत इति, अथ कर्मणः सत इति। विशेषापेक्षा 'अन्यतमस्य व्यवस्थापकं धर्मं नोपलभ' इति बुद्धिरिति।

विप्रतिपत्तेरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः, व्याघातः

---

(ख०) ननु सहचरितो समानधर्मः संशयकारणम्भवति न पुनर्विशेषो व्यावृत्त इत्यत आह–विशेषस्योभयथेति। यत् खलु सदादिरूपसम्पन्नं विशेषवत् तत्त समानजातीयेभ्योऽसमानजातीयेभ्यश्च व्यावृत्तम्। यथा पृथिवीद्रव्यमबादिद्रव्यान्तरेभ्यो गुणकर्मभ्यश्च विजातीयेभ्यो गन्धवत्त्वेन व्यावृत्तम्। तथा शब्दः सदादिरूपसम्पन्नः विभागजत्वेन विशेषेण समानासमानजातीयेभ्यो विशिष्यते। तस्माद् भवति 'द्रव्यं गुणः कर्म वा' इति संशयः॥

एतत्तु भाष्यकारीयमुपपादनम्। वार्त्तिकाभिमतमुपपादनं भिन्नप्र-कारकम्, तद्यथा। यद्यपि विभागजत्वन्न द्रव्यादौ क्वचिद् दृष्टम् तथापि तद्व्यतिरेकः प्रत्येकन्द्रव्यादौ दृष्ट इति विभागजत्वेन सदाद्यविशेषवान् शब्दः–(१) द्रव्यकर्मभ्यां व्यावर्तमानः किं 'गुणः' (२) गुणकर्मभ्यां व्यावर्तमानः किं 'द्रव्यम्', (३) गुणद्रव्याभ्यां व्यावर्तमानः किं 'कर्म' इति व्यतिरेकमुखेन तत्तत् स्मारयन् साधारणो धर्मो भवति संशयकारणम्।

विप्रतिपत्तेरिति तृतीयं संशयभेदं लक्षयति।

यद्यपि विरुद्धा प्रतिपत्तिः ज्ञानं 'विप्रतिपत्तिः' तथापि तस्य वादिप्रतिवादिगताया अत्यन्तपरोक्षत्वात् (अपरेषां) संशयकारणत्वानुप-पत्तेः स्वकार्यं प्रवादं लक्षयति। विप्रतिपत्तेर्बहुजनप्रसिद्धत्वमावश्यकम्।

---

(भा०चं०) धर्मयोः प्रकारयोरसहभूतयोः दर्शनं विप्रतिपत्तिः सा च तृतीयपुरुषस्था तस्य संशयहेतुर्न तु वादिनोः तथा च विप्रति-

(भा०) विरोधोऽसहभाव इति । अस्त्यात्मेत्येकं दर्शनम् । नास्त्यात्मेत्यपरम् । न च सद्भावासद्भावौ सहैकत्र सम्भवतः । न चान्यतरसाधको हेतुरुपलभ्यते । तत्र तत्त्वानवधारणं संशय इति ।

उपलब्ध्यव्यवस्थातः खल्वपि । सच्चोदकमुपलभ्यते तडागादिषु मरीचिषु चाविद्यमानमुदकमिति । अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यतेऽथासदिति संशयो भवति ।

अनुपलब्ध्यव्यवस्थातः । सच्च नोपलभ्यते मूलकीलकोदकादि । असच्चानुत्पन्नं निरुद्धं वा । ततः क्वचिदनुपलभ्यमाने संशयः, किं सन्नोपलभ्यते उतासदिति संशयो भवति । विशेषापेक्षा पूर्ववत् ।

---

( ख० ) उपलब्धीति—चतुर्थं संशयभेदं लक्षयति ।

अनुपलब्धीति—पञ्चमं संशयभेदं लक्षयति ।

---

(भा०चं०) पत्तिशब्दोयं विवादिप्रतिपत्तिद्वये रूढः तज्जन्यवाक्ये तज्जन्यज्ञाने च गौण इति ध्येयम् । ज्ञानस्य व्याहतिः अर्थस्य व्याहतिरेवेत्याह **व्याघातोऽसहभाव इति** । तौ विप्रतिपन्नवाक्येन दर्शयति **अस्तीति** । सहेत्यस्य व्याख्यानम् **एकत्रेति** ।

ननूभयासम्भवेऽन्यतरसिद्धिरस्तीत्यत आह **उपलभ्यत इति** । अस्तित्वेन निर्णीयते अनेनेति उपलब्धिः साधको हेतुः तस्याव्यवस्थापरामर्शः । खलु निश्चितम् । **अपीति** । अनुपलब्ध्यव्यवस्था समुच्चयार्थः सा च बाधकहेत्वपरामर्शः । उदाहरति **सच्चेति** । उपलभ्यते अस्तित्वेन प्रतीयते मरीचिषु चाविद्यमानमिति तादात्म्येनेति शेषः ।

**अनुपलब्ध्यव्यवस्थातः** नास्तित्वप्रकारकप्रमापकाभावात्

(भा०) पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे। एतावता विशेषेण पुनर्वचनम्। समानधर्माधिगमात्समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति ॥ २३ ॥

---

(ख०) अत्र भाष्यकार उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्वम्मत्वा 'समानधर्मोपपत्तेः' इत्यनेन गतार्थताम्परिहरन्नाह पूर्व इति ॥

---

(भा०चं०) मूलकीलकोदकादि आच्छादितजलम् असदविद्यमानम्। तच्च द्विविधमित्याह **अनुत्पन्नमिति**। निरुद्धं नष्टम्।

कश्चित्संशयलक्षणं पंचविधमाह तन्मतमनुवदति **पूर्व इति**। पूर्वं त्रितयम्। एतन्मते उपपत्तिपदं सम्बन्धपरम्। विप्रतिपत्तिर्यथाश्रुता पुनर्वचनं पृथग्वचनम्। तत्र त्रिविध एव संशय इति सिद्धान्तमभिप्रेत्य तन्मतं दूषयति **समानधर्माधिगमादिति**। तथा च पञ्च निमित्तान्यपि ज्ञातृस्थानीत्यर्थः। अत्र लक्षणत्रयविषये पदकृत्ये वार्तिकम् किमिदं समस्तं कारणमथासमस्तं ? समस्तमिति ब्रूमः। यदि समानधर्मोपपत्तेरिति केवलमुच्यते उपलब्धविशेषस्यापि पुंसः सामान्योपलब्धिरस्तीति तस्यापि संशयः स्यादिति। यदि पुनरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च संशयः इत्येतावन्मात्रमुच्यते अनुपलब्धसामान्यस्यापि क्वचिदुपलब्ध्यव्यवस्थास्तीति संशयः स्यादिति। विशेषापेक्ष इत्येतावति चोच्यमाने अनुपलब्धसामान्यस्यापि क्वचिद्विशेषस्मृतिरस्तीति तस्यापि संशयः स्यादिति। एवं समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति मात्रेण नौयानप्रेङ्खादिगतस्य न भवति संशयः। एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च पदद्वयेऽभिधीयमानेऽत्यन्तानुपलब्धेऽर्थे संशयः स्यादिति। समानधर्मोपपत्तेर्विशेषापेक्ष इति, चोच्यमाने सामान्यधर्म-

(भा०) स्थानवतां लक्षणमिति समानम् ।

(सू०) यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥२४॥

(ख०) अत्र सूत्रेऽर्थशब्दो गौणमुख्यप्रयोजनावबोधार्थः । तत्र मुख्यम्–सुखस्य प्राप्तिर्दुःखस्य परिहारश्च । गौणन्तु तत्साधनम् ।

(भा०चं०) दर्शने सत्यपि विशेषाकाङ्क्षायां च सत्यां उपलब्ध्यनुपलब्ध्योर्व्यवस्थानान्न भवति संशयः । यदायन्द्रष्टा दृष्टपूर्वसामान्यविशेषवन्तमर्थमुपलभते तत्र चोपलब्ध्यनुपलब्धी व्यवस्थिते भवतः । सोऽयं द्रष्टा तस्मात् स्थानाद्यदापैति ततोऽस्यापगमात् विषयविप्रकर्षान्निमित्तात् अल्पविषया विशेषा नावभासन्ते महाविषयं सामान्यमवभासते उपलब्ध्यनुपलब्धी पुनर्व्यवस्थिते भवतो विशेषार्थस्मृतिश्च नास्ति इवि न च सन्दिह्यते । तस्मादेकद्विपदपर्युदासेन समस्तलक्षणमुच्यत इति । समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्ष इति चैकपदपर्युदासः समानधर्मोपलब्धेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्चेति समानधर्मोपपत्तेर्विशेषापेक्ष इति उपलब्ध्यनुपलब्ध्यव्यवतो विशेषापेक्ष इति च द्विपदपर्युदासः कृतः समस्तपदपरिग्रहेण । यस्मात्समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः इत्याह । सूत्रकारस्तु न ज्ञापयति समस्तमेतल्लक्षणमिति । विमर्श इति । नानार्थावमर्षो विमर्शः । उभावर्थौ स्मृतवतः संशीतिः संशय इति भावसाधनम् । करणार्थो वा संशेतेऽनेनात्मा सुप्त इव भवतीति । क उपमानार्थः । अर्थावधारणमुपमानार्थः । एतेनानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति व्याख्यातम् । कोऽतिदेशार्थः । यथाद्ये पक्षे त्रिपदपरिग्रहेण एकाद्विपदपर्य्युदासस्तथानन्तरयोरपि द्रष्टव्यम् इति ॥ २३ ॥

संशयानन्तरपदार्थनिरूपणे सङ्गतिमाह **स्थानवतामिति** ।

( भा० ) यमर्थमाप्तव्यं हातव्यं वा व्यवसाय तदाप्तिहानोपाय-मनुतिष्ठति, प्रयोजनन्तद्वेदितव्यम् , प्रवृत्तिहेतुत्वात् । इममर्थमा-प्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः । एवं व्यव-सीयमानोऽर्थोऽधिक्रियत इति ॥ २४ ॥

---

( ख० ) व्यवसायेति तात्पर्यसम्मतः पाठः । सूत्रस्थस्य 'अधि-कृत्येति' पदस्य व्याख्यानं 'व्यवसाय' निश्चित्येति ।

तदाप्तीति । ससाधनौ च सुखदुःखप्राप्तिपरिहारौ 'अर्थः' । न च सुखदुःखप्राप्तिपरिहारौ स्वरूपेण प्रवृत्तिनिवृत्तिगोचराविति तदुपाय-प्रवृत्त्यैव चेतनप्रवृत्तिगोचराविति दर्शयति ।

ननु सूत्रे 'अधिकृत्ये'त्यस्ति, भाष्ये व्यवसायेति तत्कुतो नासम-ञ्जसम्-इत्यत आह व्यवसाय एवार्थस्य 'अधिकार' इति ।

---

(भा०चं०) क्रमवतामित्यर्थः । लक्षणमुच्यत इति शेषः । समानं पूर्वेण प्राप्तुं हातुं वा इष्यत इत्यर्थः । तेनोपेक्ष्यस्यार्थ्यमणत्वेनार्थत्वेपि न प्रयो-जनत्वमित्याशयेन व्याचष्टे **यमर्थमिति** । आप्तव्यं स्वसम्बन्धीकर्त्तव्य-म् । हातव्यं स्वासम्बन्धीकर्तव्यम् प्रमात्रेति शेषः । अध्यवसाय निश्चित्य अनुतिष्ठति करोति । प्रवृत्तिहेतुत्वात्प्रवृत्तिहेत्विच्छाविषयत्वात् प्रवर्त्त-काध्यवसायविषयत्वाद्वा । तस्याकारं दर्शयति **इममर्थमाप्स्या-मीति** । अधिक्रियते इत्युच्यत इति शेषः । इतीतिसूत्रभाष्यसमा-प्त्यर्थः प्रयोजनमात्रावधारणं वा तथा च द्विविधं प्रयोजनं द्विविधा इच्छा द्विविधोऽध्यवसायो द्विविधा प्रवृत्तिः प्रमातुरिति भावः । रागिणी इयम् व्यवस्था । विरागिणान्तु एकमेव प्रयोजनं हातव्याख्यम् विशिष्टप्रवृत्त्यैव विशेषणसिद्धेर्हेयहानहानोपाया अधिगन्तव्या इति भाष्यवचनभङ्ग्या प्रयोजनाधिक्यं न मन्तव्यम् ॥ २४ ॥

(सू०) लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

( भा० ) लोकसामान्यमनतीताः लौकिकाः, नैसर्गिकं वैनयिकं बुद्ध्यतिशयमप्राप्ताः । तद्विपरीताः परीक्षकाः, तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति । यथा यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि सोऽर्थो दृष्टान्तः । दृष्टान्तविरोधेन हि

---

( ख० ) संशये प्रयोजनं च सति क पुनरेतत्साध्यसम्बन्द्धं साधनमुपलभेयं यदुपादायैतत् साधयेयमिति जिज्ञासाक्रमानुरोधेन दृष्टान्तस्यायमवसरः ।

लौकिकेति लौकिकाः परीक्षकाश्च पृथग् गृह्यन्ते । तेनाकाशादेरपि दृष्टान्तत्वं सम्भवति ।

नैसर्गिकमिति स्वाभाविकप्रयत्नसिद्धमिति यावत् ।

वैनयिकमिति शास्त्रादिपरिशीलनोत्पन्नमित्यर्थः ॥

एतदुभयरहिता 'लौकिकाः'प्रतिपाद्याः उभयसहिताश्च 'परीक्षकाः' प्रतिपादका इति बोध्यम् । तदनेन वादिप्रतिवादिनावुक्तौ वेदितव्यौ ।

दृष्टान्तेति लक्षणप्रयोजनमाह ।

---

(भा०चं०) क्रमप्राप्तं दृष्टान्तं व्याचष्टे **लोकसामान्यमिति**। लोकसामान्यं मौर्ख्यं तदनतीताः शास्त्रानभ्यासाः । लौकिका इति पदे शेष इति सूत्राट्ठक् प्रत्ययो ज्ञातव्यः । विवक्षितं मौर्ख्यं प्रकटयति **नैसर्गिकमिति** । बुद्ध्यतिशयमुत्कृष्टां बुद्धिम । विनय इन्द्रियजयस्तत्र साधुर्वैनयिकस्तम् निसर्गो गुरुशुश्रूषापूर्वकशास्त्रश्रवणं तेन कृतं नैसर्गिकम् । परितः साङ्गप्रमाणैः परीक्षकास्तत्त्वनिर्णायकाः । इदमेवाह **तर्केणेति** । दृष्टान्तसमाधिना दृष्टान्तेन पक्षसाम्येन पक्षाः स्वाभिमतप्रकाराः स्थापनीया अस्तित्वेन प्रमापणीयाः । भवन्ति सिद्ध्यन्ति ।

(भा०) प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीत्यवयवेषु चोदाहरणाय कल्पत इति ॥ २५ ॥

( ६ ) न्यायाश्रयसिद्धान्तलक्षणम् ।

( भा० ) अथ सिद्धान्तः । इदमित्थम्भूतश्चेत्यभ्यनुज्ञायमानमर्थजातं 'सिद्धम्', सिद्धस्य 'संस्थितिः' सिद्धान्तः । संस्थिति-

---

(ख०) अथ सिद्धान्त इति । अत्र भाष्यकारः सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्ट अथ सिद्धान्त इत्यादिनेति तात्पर्योक्त्याधारेण—'सामान्यलक्षणसूत्रं किमप्यासीद्यद्यत्वेऽपि न क्काप्युपलभ्यते' इति केषाञ्चित् कल्पनम् । तदसमञ्जसम्, तन्त्राधिकरणेत्यादेः षड्विंशसूत्रस्य सिद्धान्तसामान्यलक्षणस्वरूपत्वात् । वस्तुतस्तु 'सूत्रपाठात् प्रागेव तात्पर्यमुपोद्घातरूपेणैव वर्णितम्' इत्येतावदेव तात्पर्योक्तेस्तात्पर्यम् ।

इदमिति सामान्यतोऽवगममाह इत्थम्भूतं चेति विशेषः ।

संस्थितिरिति । सामान्योपक्रमस्याभ्युपगमस्य प्रमाणतो विशेष-

---

(भा०चं०) उदाहरणायेति तादर्थ्ये चतुर्थी । कल्पते समर्थ इति । प्रयोजको भवतीत्यर्थः । इति पदं प्रकरणभाष्यसमाप्त्यर्थम् ॥ २५ ॥

इति भाष्यचन्द्रे पूर्वाङ्गप्रकरणभाष्यचन्द्रिका ॥

न्यायाश्रयप्रकरणं व्याख्यातुमारभते अथेति । अथेत्यारम्भार्थः । सिद्धान्तं लक्षयितुमारभते इत्यर्थः। (१)समाख्यावयवाख्यानेनैव लक्षणं दर्शयति **इदमिति** । अभ्यनुज्ञायमानं स्वीक्रियमाणम् जातपदं प्रमेयादिचतुर्वर्गाभिप्रायम् सिद्धस्य प्रामाणिकत्वेनाभ्युपगतस्य सं-

---

(टि०) ( १ ) समाख्या यौगिकः शब्दः सिद्धशब्दस्तु यौगिकः तस्यावयवाख्यानं सिद्धस्यान्त इति रूपम् ।

१७

( भा० ) रित्थम्भावव्यवस्था धर्मनियमः । स खल्वयम्—

(सू०)तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥२६॥

( भा० ) तन्त्रार्थसंस्थितिः तन्त्रसंस्थितिः । तन्त्रमितरेतरा-

---

( ख० ) पर्यन्तता परिसमाप्तिरित्यर्थः ।

तन्त्रेत्यादिसूत्रम् । तन्त्रम् अधिकरणं येषामर्थानां ते तन्त्राधिकरणाः, तेषामभ्युपगमसंस्थितिः इत्थम्भावव्यवस्था धर्मनियमः सिद्धान्तो भवतीति सूत्रार्थः । तन्त्र्यन्ते व्युत्पाद्यन्ते प्रमेयाण्यनेनेति 'तन्त्रम्' प्रमाणम् । तदेवाधिकरणमाश्रयो ज्ञापकत्वेन येषामर्थानान्ते तथोक्ताः ।

षड्विंशसूत्रान्तरस्था भाष्यपङ्क्त्यो यदि तत्सूत्रव्याख्यारूपेण गृह्यन्ते तदा तंत्रस्य संस्थितिः, अधिकरणस्य संस्थितिः अभ्युपगमस्य संस्थितिः—इत्येवंरूपः समासः प्राप्तः । तत्तु नोचितमिव प्रतिभाति । एवं सति षड्विंशसूत्रं विभागपरम्भवति । तथाच सप्तविंशस्यापि सूत्रस्य तथात्वात्पुनरुक्तता स्यात् ॥

पूर्वोक्तं सर्वं विचार्यैव तात्पर्यकारेण तन्त्रार्थसंस्थितिरित्यादिषड्विंशसप्तविंशसूत्रमध्यपठिता भाष्यपङ्क्त्यः सप्तविंशसूत्रव्याख्यारूपेण गृहीताः । उक्तं च—व्याख्यानपूर्वकमेव विभागसूत्रं(२७) पठति—तन्त्रार्थसंस्थितिरिति । तन्त्रग्रहणेन च सर्वतन्त्रप्रतितन्त्रयोरुपादानम्, तयोरपि तन्त्रत्वादिति ।

---

(भा०चं०) स्थितिः सम्यग्व्यवस्था इदमेवाह द्वाभ्यां पदाभ्याम् । धर्मः प्रकारः तस्य नियमो निश्चयः । सौत्रन्तन्त्रपदं भक्त्या तदर्थपरमाह **तन्त्रार्थेति** । तन्त्रं प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे इति कोशः । संशयवारणाय तन्त्रपदं व्याचष्टे **तन्त्रमिति** । तन्यते प्रकाश्यते अनेनेति तन्त्रमधिकरणमधिकृतं प्रकृतमिति यावत् । तमनुषक्ता अनुबद्धा तेन प्रतिबद्धा इति यावत् प्रतिबन्धो व्याप्तिः

( भा० ) भिसम्बद्धस्यार्थसमूहस्योपदेशः शास्त्रम् । अधिकरणानुषक्तार्थसंस्थितिरधिकरणसंस्थितिः । अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः, तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः ॥ २६ ॥

तन्त्रभेदात्तु खलु स चतुर्विधः—

(सू०)सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात् ॥ २७ ॥

( भा० ) तत्रैताश्चतस्रः संस्थितयोऽर्थान्तरभूताः ॥ २७ ॥

तासाम्–

(सू०)सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥

( भा० ) यथा घ्राणादीनीन्द्रियाणि गन्धादय इन्द्रियार्थाः

---

(ख०)अनवधारितेति । साक्षाच्छास्त्रे नोपात्तः । यथा मनस इन्द्रियत्वम् ।

तासामिति–संस्थितीनामिति यावत् ।

घ्राणादीनीति । यद्यपि घ्राणादिष्वपि भौतिकत्वादयो विप्रतिपत्तयस्तथाऽपीन्द्रियत्वे नास्ति विप्रतिपत्तिरिति ।

---

(भा०चं०) अर्थाः अभिधेयं तेषां संस्थितिः धर्मनियमश्च । अनवधारितस्यापरीक्षितस्य । तद्विशेषः अभ्युपगमविषयविशेषः शब्दादौ पराभिमतद्रव्यत्वादिः । तस्य क्षणिकाभ्युपगमप्रयोजनमाह **परीक्षणायेति** ॥ २६ ॥

विभागसूत्रयोजनायाभिमतपद(१)मध्याहरति **तन्त्रेति** । तत्र सूत्रे भाष्ये च अर्थान्तरभावविशेषणार्थं परस्परमित्याध्याहार्यम् तच्च पञ्चम्यन्तं बोध्यम् । तच्च क्रियाव्यतिहारप्रवृत्तिनिमित्तकम् ॥ २७ ॥

---

(टि०) (१) अभिमतपदं तन्त्रपदम् ।

(भा०) पृथिव्यादीनि भूतानि, प्रमाणैरर्थस्य ग्रहणमिति ॥ २८ ॥

(सू०) समानतन्त्रासिद्धः परतन्त्रासिद्धः प्रतितन्त्र-
सिद्धान्तः ॥ २९ ॥

(भा०) यथा नासत आत्मलाभः न सत आत्महानम्, निरतिशयाश्चेतनाः, देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेष इति साङ्ख्यानाम् । पुरुषकर्मादिनिमित्तो भूतसर्गः, कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते

---

(ख०) समानेत्यादि सूत्रम् । समानशब्द एकपर्यायः । नैयायिकानां 'समानं तन्त्रम्' न्यायशास्त्रम् ।

निरतिशया इति । अपरिणामिन इत्यर्थः । परिणामश्चोपचयापचयरूपो धर्मः ।

तत्कारण इति । प्राकृतेषु तत्कारणेषु च महदहङ्कारपञ्चतन्मात्रभूतसूक्ष्मेषु विशेषो 'ऽतिशय' इत्यर्थः ।

---

(भा०चं०) तासां संस्थितीनां मध्ये निर्धारणे षष्ठीयम् ॥ २८ ॥

समानतन्त्रसिद्ध इति सूत्रम् । सांख्यं पातञ्जलं च परस्परं समानतन्त्रं ते च न्यायवैशेषिके च परस्परं परतन्त्रम् । अविप्रतिपत्तिः समानता विप्रतिपत्तिः परता । तन्त्रं च तन्त्रं च तन्त्रे सरूपाणामेकशेष एकविभक्ताविस्येक शेषः । तयोः सिद्धोऽर्थः तस्यान्तो व्यवस्था स च परेण प्रतिषिद्ध इति यौगिकोऽर्थः । तदुदाहरति **यथेत्यादिना** । नासतः नात्यन्तमसतः । न सतो नात्यन्तं सतः । निरतिशयाः निर्विशेषाः । चेतनाः क्षेत्रज्ञाः विषयिणः । तद्विपरीतन्दर्शयति पुरुषकर्म पुरुषसमवेतं कर्म आदिशब्देन परमेश्वरादिर्ग्राह्यः । एतेन स्वतन्त्रप्रकृतिप्रतिषेध उक्तः । कर्महेतवो दोषा इत्यनेन सत्त्वादिगुणहेतुत्वे विप्रतिपत्तिर्दर्शिता । सगुणविशेषा इत्यनेन निरतिशयत्वे विप्रतिपत्तिः । उत्पाद्यते स्वरूपं

(भा०) उत्पन्नं निरुध्यत इति योगानाम् ॥ २९ ॥

(सू०) यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरण-
सिद्धान्तः ॥ ३० ॥

यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते न तैर्विना

---

(ख०) योगानामिति । प्रसिद्धयोगशास्त्रेऽसदुत्पत्तेरनभ्युपगमाद् योगशब्देनात्र वैशेषिका एवाभिप्रेता इति केचित् । तत्त्वतस्तु योगशब्देनात्र नैयायिका एवाभिप्रेताः । एतस्मिन्नर्थेऽस्य प्रयोगो बहुशो लभ्यते प्राचीनग्रन्थेषु ।

यत्सिद्धाविति सूत्रम् । यस्यार्थस्य साध्यस्य हेतोर्वा सिद्धौ–इति विषयसप्तमी । तेन–यस्मिन्नर्थे ज्ञायमाने तदनुषङ्गिणोऽर्थास्तदन्तर्भावेण गम्यन्ते सोऽर्थः साक्षादधिक्रियमाणस्तदनुषङ्गिणाञ्चाधारः–तत्सिद्धः स-पक्षो वा भवतु हेतुर्वा–अनेन रूपेण 'अधिकरणसिद्धान्तः' । पक्षस्तावत्–'विवादाध्यासितम् उपलब्धिमत्कारणम्, उत्पत्तिमत्त्वात्, वस्त्रवदिति' । अत्र हि पृथिव्यादिगतेन उत्पत्तिमत्त्वेन उपलब्धिमत्पूर्वकत्वम् तद्गतं साध्यमानं स्वसिद्ध्यन्तर्गतानुषङ्गिसर्वज्ञत्वाद्युपेतमेव सिध्यति । नान्यथेहोपलब्धिमत्पूर्वकत्वस्य सिद्धिरिति । भाष्ये हेतुप्रतिसन्धानं सिध्यत् स्वानुषङ्ग्यर्थान्तरान्वितं सिध्यतीत्युदाहृतम् ॥

अत्र परिशुद्धिः । एतद् भूषणादयो द्विधा व्याचक्षते । (१) यस्यार्थस्य सर्वज्ञत्वादिविशेषितस्य सिद्धौ क्षित्यादेः सकर्तृकत्वस्य प्रक्रियमाणस्य सिद्धिः स सर्वज्ञत्वादिविशेषोऽधिकरणसिद्धान्तः । (२) अथवा–यस्य स-

---

(भा०चं०) लभते । निरुध्यते स्वरूपं जहाति । योगो युक्तिः तर्कः प्रधानतया विद्यते येषां ते योगाः अर्शआदित्वात् अच् ॥ २९ ॥

सिद्धौ कर्तव्यायामनुषज्यन्ते अनुकूलीक्रियन्ते एतदेवाह नतै-

( भा० ) सोऽर्थः सिद्ध्यति, तेऽर्था यदधिष्ठानाः सोऽधिकरण-सिद्धान्तः । यथा देहेन्द्रियव्यतिरिक्तो ज्ञाता दर्शनस्पर्शनाभ्यामे-कार्थग्रहणादिति । अत्रानुषङ्गिणोऽर्थाः—इन्द्रियनानात्वं, नियत-विषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणम्, अनियतविषयाश्चे-तना इति । पूर्वार्थसिद्धावेतेऽर्थाः सिद्ध्यन्ति न तैर्विना सोऽर्थः सम्भवतीति ॥ ३० ॥

---

( ख० )कर्तृकत्वादेः सिद्धावन्तर्भूता अन्येऽभिप्रायक्रान्ताः सर्वज्ञत्वादयो विशेषाः सिध्यन्ति सोऽधिकरणसिद्धान्तः । तदत्र पक्षद्वयेऽपि फलतो न काश्चिद्विशेष इति ।

अत्राद्यं सिद्धान्तद्वयं वाचनिकमन्त्यद्वयं चाभिप्रायिकमिति विवेकः ।

पूर्वार्थेति । 'पूर्वः अर्थः' यः साक्षादधिकृतः, तस्य सिद्धौ अन्तर्गत इत्यर्थः ।

---

(भा०चं०) **विनेति** । यदधिष्ठाना यदङ्गभूताः । **सोऽधिकर-णेति** । अत्र तच्छब्दस्य वस्तुपरामर्शकत्वेपि विधेयसंख्याग्राहित्वं विवक्षातः । अत्र(१) विषयविषयिणोरभेदविवक्षया स इति सामानाधिक-रण्यं(२) बोध्यम् । यद्वा स इति तद्विषयक इत्यर्थः । अभ्युपगमव्यवस्था सिद्धान्त इत्युक्तं तदुदाहरति **यथेति** । अनुषाङ्गिणः सहायिनः । नि-यतविषयाणीत्यनेन सर्वविषयकात्मभेदो दर्शितः । ज्ञातुरेकस्य ज्ञानकर्तुः ॥ ३० ॥

अपरीक्षिताभ्युपगमादित्यादिसूत्रे वार्तिकम् । सूत्रेषु नोपनिबद्धः शास्त्रेषु चाभ्युपगतोर्थोऽभ्युपगमसिद्धान्तः यथा नैयायिकानां मन इन्द्रि-

---

(टि०) ( १ ) पदार्थाधिकरणसिद्धांतयोः ।
(टि०) ( २ ) सामानाधिकरण्यमभेदः ।

(सू०) अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगम-सिद्धान्तः ॥ ३१ ॥

(भा०) यत्र किञ्चिदर्थजातमपरीक्षितमभ्युपगम्यते-अस्ति द्रव्यं शब्दः, स तु नित्योऽथानित्य इति, द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते, सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति ॥ ३१ ॥

---

(ख०) अपरीक्षितेत्यादि सूत्रम् । अपरीक्षितोऽसूत्रितः (सूत्रितस्य प्रायः परीक्षासम्बन्धात्) । योऽर्थः सूत्रेषु नोपनिबद्धः शास्त्रे चाभ्युपगतः सोऽभ्युपगमसिद्धान्त इति वार्तिकम् । तदर्थश्च—असूत्रिताभ्युपगमात् हेतोः यतस्तद्विशेषपरीक्षणं क्रियते तस्माद् विशेषपरीक्षणात् ज्ञायते—असूत्रितमप्यभ्युपगतं सूत्रकारेणेति—तात्पर्यं स्पष्टम् ।

परीक्षां—विचारं-विनैव सुस्पष्टतया यः पक्षः स्वीक्रियते स एव 'अपरीक्षित' इत्येवार्थः समीचीनः प्रतिभाति । यत्र शास्त्रे सूत्राणि न सन्ति तत्रासूत्रितत्वस्याप्रसिद्धेः प्रसिद्धेश्च तत्राप्यभ्युपगमसिद्धान्तानाम् ।

परबुद्ध्यवज्ञानादिति । एतद् वार्तिककाराय न रोचते । तथा चोक्तं वार्तिके--परबुद्ध्यवज्ञानाच्च प्रवर्तत इति न युक्तम्, परावज्ञानस्यायुक्तत्वात् ।

---

(भा०चं०) यमिति । यथा नैय्यायिकानां वैशेषिकाणामपि श्रोत्रमाकाशमिति । अपरीक्षितः शास्त्रानभ्युपगत इति भाष्यकृत् । परोक्तानुवादं वार्तिककारो दूषयति स्वबुद्धीत्यादि सिद्धान्त इत्यन्तेन । तथाच वार्तिकं स्वबुद्ध्यतिशयचिख्यापयिषया परबुध्यवज्ञानाच्च प्रवर्तते इति न युक्तम् । कुतः ? परावज्ञानस्यायुक्तत्वात् । यदि तावत् परस्यासामर्थ्यं बुद्ध्वा नायं समर्थ इति प्रवर्तते तदाऽनेन न परः प्रतिपादितो भवति किन्तु विप्रतिपा-

## ( ६ ) न्यायप्रकरणम् ।

( भा० ) अथावयवाः—

(सू०)प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥३२॥

(ख०)अत्र–'अर्थापत्तेरधिकरणसिद्धान्तस्य न कोऽपि भेदः' इति केचित् । तदसत् । वाक्यार्थप्रतिपत्तौ तद्विपरीतवाक्यार्थप्रतिपत्तिरर्थापत्तिः–यथा 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यस्य दिवाभोजननिषेधः 'अर्थः', तस्मात् तद्विपरीतरात्रिभोजनविधिः 'अर्थापत्तिः'–वाक्यानुषङ्गी ( नतु तद्विरुद्धो ) योऽर्थः सोऽधिकरणसिद्धान्तः–इति भेदस्य सुस्पष्टत्वात् । अत्र-सर्वे सिद्धान्ताः साक्षात् स्वमुखेनार्थापत्त्या वाऽभिधीयन्ते तन्नास्ति प्रयोजनमत्र नानाप्रभेदविवेचनाया इति–बौद्धनैयायिकस्य दिङ्नागस्याक्षेपः । परिहृतश्चायं सविस्तरं वार्तिककारेण ।

प्रतिज्ञेत्यादि सूत्रम् । अवयवसामान्यलक्षणमन्तरेणाशक्यो विभागोद्देशस्तद्विशेषलक्षणञ्चेति केचिदाक्षिपन्ति । तत्परिहार उक्तस्तात्पर्ये–विभागपरमप्येतत् सूत्रं सूचयत्येवावयवसामान्यलक्षणम् । अवयवपदादेव सामान्यलक्षणमवगम्यते । अवयवत्वेनैकवाक्यता दर्शिता। सा च पदानाम्परासम्प्रत्यायितापेक्षिता सम्बन्धयोग्यार्थप्रत्ययेन भवति । तस्मात्तथाविधार्थप्रत्यायनमेव प्रतिज्ञादीनामवयवसामान्यलक्षणं सिद्धमिति । त्रयोऽवयवा इति मीमांसकाः । दशावयवा इति केचिन्नैयायिकाः स्वयूथ्या एव भाष्यकारेण निर्दिष्टाः । जैननैयायिकभद्र-

(भा०चं०)दितः । यश्चाज्ञः किं तस्य प्रतिपादनीयम् । अथ परिज्ञातसामर्थ्यं पुरुषमवजानाति तदपि न युक्तम् अतिशयबुद्धिमतो अवज्ञानस्यायुक्तत्वात् । तस्मान्नायं सूत्रार्थोऽशास्त्रिताभ्युपगमः सिद्धान्त इति ॥३१॥

इति न्यायविषयप्रकरणभाष्यचन्द्रिका ।

**अथेति** । न्यायप्रकरणारम्भार्थः । स प्रतीतोऽर्थो ज्ञायते

(भा०)"दशावयवानेके नैयायिका वाक्ये सञ्चक्षते। जिज्ञासा

---

(ख०) बाहुमतेनापि दशावयवाः। ते यथा। (१)प्रतिज्ञा (अहिंसा परमो धर्मः) (२)प्रतिज्ञाविभक्तिः (जैनशास्त्रानुसारेण अहिंसा धर्मः)-(३)हेतुः (अहिंसकानान्देवप्रियत्वात्)-(४)हेतुविभक्तिः (अहिंसकेभ्योऽन्ये धर्मल्लोकेषु वस्तुन्न लभन्ते)-(५) विपक्षः (याज्ञिकहिंसापरायणा अपि स्वर्गे वसन्तीति वर्ण्यते)-(६) विपक्षप्रतिषेधः (अहिंसकाः कदापि देवप्रिया न भवन्ति)-(७) दृष्टान्तः (अर्हन्तो हिंसाभयादन्नन्न पचन्ति)-(८)आशङ्का (अन्ये पुरुषा यदन्नम्पचन्ति तदन्नमर्हन्तोऽपि भुञ्जन्ति, अतस्तेऽपि हिंसादोषेण दुष्यन्त एव)-(९)आशङ्काप्रतिषेधः (अर्हदुद्देशेनैव यन्न पच्यते तद्गतहिंसादोषेण ते न दुष्यन्ति)-(१०)निगमनम्-(अतोऽहिंसा परमो धर्मः)॥

भाष्योक्तानान्दशानाम्मध्ये संशयसंशयव्युदासयोः स्थाने भद्रबाहूक्तावाशङ्काप्रतिषेधावित्येतावदेव सादृश्यमत्र।

एतन्नानामतनिराकरणार्थमेवैतत्सूत्रम्। परप्रतिपादकाः शब्दाः ये वाक्ये सम्भूयेतरेतरप्रत्ययितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति ते 'अवयवाः'। यत एते संहत्य वाक्यार्थं निष्पादयन्त्यतोऽवयवाः इत्युच्यन्ते। भाष्ये दशावयवेषूक्ता जिज्ञासादयस्तु परप्रतिपादका न भवन्ति, अतो न तेऽनुमानवाक्यस्यावयवा भवितुमर्हन्ति। अपरञ्च निश्चित एव साधयिता भवति-जिज्ञासासंशयौ तु न निश्चितौ। प्रयोजनमपि साधनादेवावगम्यते, शक्यप्राप्तिश्च। अत एते अपि नानुमानवाक्यस्यावयवौ॥

---

(भा०चं०) ज्ञाप्यते अनयेति प्रतिज्ञा। हेतुर्ज्ञापकं हिनोति ज्ञापयत्यनेनेति हेतुः, एतस्य वा कर्तृत्वविवक्षया हिनोतीति हेतुः। उत् ऊर्ध्वे पक्षव्यतिरिक्ते-प्रतिज्ञाज्ञापकयोः साध्यसाधनभावः आह्रियते स्मार्यतेऽनेनेति उदाहरणम्।

( भा० ) संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति । ते कस्मान्नोच्यन्त" इति । तत्राप्रतीयमानेऽर्थे प्रत्यक्षार्थस्य प्रवर्तिका जिज्ञासा । "अप्रतीयमानमर्थं कस्माज्जिज्ञासते" । तं तत्त्वतो ज्ञातं हास्यामि वोपादास्ये वा उपेक्षिष्ये वेति । ता एता हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थस्तदर्थमयं जिज्ञासते । सा खल्वियमसाधनमर्थस्येति । जिज्ञासाधिष्ठानं संशयश्च व्याहतधर्मोपसङ्घाता-तत्त्वज्ञाने प्रत्यासन्नः । व्याहतयोर्हि धर्मयोरन्यतरत्तत्वं भवितुमर्ह-

---

( ख० ) तत्राप्रतीयमान इति । सामान्येनावगते धर्मिणि ( पर्वते ) विशेषेण ( अग्निमत्त्वादिना ) सन्दिग्धे अग्निमत्त्वावधारणं 'प्रत्ययः' तस्य 'अर्थः' प्रयोजनम्, हानोपादानोपेक्षाबुद्धयः, तस्य 'प्रवर्तिका' उत्पादिका 'जिज्ञासा' ।

व्याहतधर्मेति । 'व्याहतयोः' विरुद्धयोः धर्मयोः उपसङ्घातो यतः

---

(भा०चं०) उप उपमानेन दृष्टान्तसादृश्येन नयति प्रापयति प्रतिज्ञातमनेनेत्युपनयः । यद्वा दृष्टान्तधर्मेणोपमितं धर्मं पक्षे नयति ज्ञापयत्यनेनेत्युपनयः । निबध्य प्रतिज्ञादिभिरवयवैरेकवाक्यीकृत्य गमयति प्रतिज्ञातमनेनेति निगमनम् । एवं समाख्याबललब्धं पञ्चावयवलक्षणमिति । विभागं व्याचष्टे । तत्राधिकसंख्यां व्यावर्तयितुं परमतमनुवदति **दशेति** । एके गौतमादन्ये नैय्यायिकाः न्यायकर्तारः । वाक्ये न्यायात्मके । प्रत्ययार्थस्य प्रत्ययो निर्णयः अर्थः प्रयोजनं यस्य तत्तथा तस्य अर्थशब्देन चतुर्थीसमासो वा विग्रहः । सादृश्यमाह **हास्यामीत्यादि** । उपेक्षा चासौ बुद्धिश्चेति उपेक्षाबुद्धिः हानं चोपादानं चोपेक्षाबुद्धिश्च ताः । अर्थः प्रयोजनम् तदर्थमिति क्रियाविशेषणम् । एतस्यानवयवत्वे हेतुमाह **असाधनमिति** । असाधनम् अज्ञापिका । अर्थस्य साध्यस्य । जिज्ञासाधिष्ठानं जिज्ञासाप्रयोजकः । प्रत्यासन्नो जिज्ञासान्याय-

(भा०) तीति। स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति। प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति। प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति। संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधे तत्त्वाभ्यनुज्ञानार्थम्। न त्वयं

---

(ख०) संशये भवति तस्मात् कारणात् अयं 'तत्त्वज्ञाने प्रत्यासन्नः' प्रमात्मकज्ञानसदृश एव स्यादतो न साधककोटौ प्रवेशमर्हतीति पूर्वमुद्रितपुस्तकस्थितपाठस्यार्थः। 'व्याहतधर्मोपसङ्घाततत्त्वज्ञाने' इति पुरीनगरस्थतालपत्रपुस्तकधृतः पाठः सम्यक्तरः प्रतिभाति। तस्यार्थो यथा—व्याहतयोः धर्मयोरुपसङ्घातो यस्मिन्नेवम्भूते 'अतत्त्वज्ञानं' प्रत्यासन्नः—मिथ्याज्ञानसदृशो भवति संशयोऽत एव न साधक इति।

प्रमातुरिति। 'शक्यम्' प्रमेयम्, तस्मिन् 'प्राप्तिः' शक्तता—प्रमाणानाम्प्रमातुश्च। सा च स्वरूपसहकारिभ्यां द्वेधा। तामिमाम्भाष्यकारोऽनया वाचोभङ्ग्या दर्शयति।

प्रतिज्ञादिवदिति। यथा प्रतिज्ञादयो युज्यन्ते न तथा शक्यप्राप्तिरित्यर्थः।

नैकदेश इति नावयवपदवाच्य इति यावत्।

संशयव्युदास इति। शब्दोऽनित्यः कृतकत्वादित्यत्रानुमाने—'यदि शब्दो नित्यः स्यात् कृतको न स्यात्' इति 'प्रतिपक्षस्य' अनित्यत्वविरुद्धनित्यत्वस्योपवर्णनम्—तदेव संशयव्युदासः। अयञ्च तर्कस्वरूपः प्रमाणान्तरस्योपोद्बलक एव केवलम्, न प्रमाणभूतानुमानवाक्यस्याङ्गभूतोऽवयवः॥

---

(भा०चं०) प्रवर्तकया निकटोपकारकः। तत्त्वं तस्य सन्दिग्धस्य धर्मिणो भावः अनारोपितं रूपम्। भवितुं आविर्भवितुम् प्रमाणविषयीभवितुमिति

(भा०) साधकवाक्यैकदेश इति। प्रकरणे तु जिज्ञासादयः समर्था अवधारणीयार्थोपकारात् । तत्त्वार्थसाधकभावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति ॥ ३२ ॥

( भा० ) तेषां तु यथाविभक्तानाम्–

---

( ख० ) प्रकरण इति । 'प्रकरणम्' कथाप्रवृत्तिः । तदुत्थापका जिज्ञासादयोऽङ्गं कथायाः । ते चोत्पन्नाः प्रकरणस्योत्थापकाः स्वरूपेणैव, न पुनः स्वज्ञानेन, येन स्वशब्दप्रतिपाद्याः सन्तः प्रकरणेऽप्यङ्गम्भवेयुः । यथा प्रतिज्ञादयः स्वज्ञानेन स्वार्थान् प्रतिपादयन्तो भवन्त्येवाङ्गानि । तस्माज्जिज्ञासादिवाचकपदप्रयोगः साधकवाक्येषु सर्वथाऽनर्थक एव ॥

जिज्ञासादय उत्पत्तिमात्रेण न्यायप्रवृत्तेरङ्गम्, नतु ज्ञप्तिमपेक्षन्ते । अतो नैषां ज्ञापकचिन्ता क्रियते । प्रतिज्ञादयस्तु ज्ञाता एव न्यायमुपकुर्वन्तः फलसिद्धावुपयुज्यन्ते । अत एतेषां ज्ञापकचिन्ता क्रियते ॥

---

(भा०चं०) यावत्। अर्हति युज्यते न ह्युभयं तत्त्वं भवितुमर्हति वस्तुनो द्यात्मकत्वापत्तेः। असाधारणमर्थस्येति व्याख्यातम्। प्रमातुरित्यादिवाक्यान्ते इति बुद्धिरित्यध्याहार्यम्। शक्यं साध्यं प्राप्यतेऽनेनेति शक्यप्राप्तिः। साधकस्य ज्ञापकस्य। भागेनैकदेशत्वेन युज्यते। व्यतिरेके दृष्टान्तः **प्रतिज्ञादिवदिति**। प्रयोजनं न्यायस्य फलं। प्रतिपक्षोपवर्णनं तर्कः। तत्प्रतिषेधे प्रतिपक्षप्रतिषेधे सति। प्रकरणे न्यायारम्भणे। परमतं दूषयित्वा पञ्चैवावयवा वाक्यस्येत्याह **तत्त्वेति**। अवयवशब्दोयमेकदेशपरो न त्वङ्गपरः। अङ्गं प्रतीकोऽवयव इति कोशात्। अव साध्यस्य अवधारणाय युवन्ति मिश्रीभवन्ति यूयन्ते मिश्रीक्रियन्ते वा इत्यवयवाः। यु मिश्रणामिश्रणयोः। अदादिकः॥ ३२ ॥ ३३ ॥

(सू०) साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

(भा०) प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा। साध्यनिर्देशः अनित्यः शब्द इति ॥ ३३ ॥

(सू०) उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥

(भा०) उदाहरणेन सामान्यात्साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः। साध्ये प्रतिसन्धाय धर्ममुदाहरणे च प्रतिसन्धाय

---

(ख०) परिग्रहवचनमिति। परिगृह्यते स्वीक्रियतेऽनेनेति 'परिग्रहः'। स च वचनं चेति 'परिग्रहवचनम्'। तेन साध्यतया स्वीक्रियमाणस्यार्थस्य वचनं प्रतिज्ञेति सूत्रार्थः।

उदाहरणेत्यादिसूत्रम्। अत्र हेतुरिति लक्ष्यनिर्देशः तस्य सामान्यलक्षणं 'साध्यसाधनम्' इति। साध्यतेऽनेनेति व्युत्पत्त्या 'कृतकत्वात्' इत्यादिकं वचनमुपलक्षितम्। हेत्वाभासाश्च न साधनमिति तत्पदेनैव ते निराकृताः।

सामान्यादिति सूत्रस्थ 'साधर्म्यात्' पदस्य व्याख्यानम्। यो धर्मः साध्ये भवति स तथाभूत एवोदाहरणेऽपीति भवति साधर्म्यम्।

साध्यस्येति साध्यसाधनपदव्याख्यानम्। धर्मिमात्रे (पक्षे) बुद्धिर्मा भूदत उक्तं धर्मस्येति। धर्मसहितस्य धर्मिण इत्यर्थः।

प्रतिसन्धायेति—उक्तमेव स्पष्टयति।

'उदाहरणसाधर्म्यात्साध्यस्य'—इत्यनेनान्वयपक्षधर्मत्वेऽन्वयव्यतिरेकपक्षधर्मत्वानि च सूचितानि; 'साध्यसाधनम्'—इत्यत्र च साध्यग्रहणेनाबाधितविषयत्वासत्प्रतिपक्षत्वे सूचिते।

---

(भा०चं०) उदाहरणेन दृष्टान्तेन। धर्म उपमा। प्रतिसन्धायेति सूत्रस्थसाधर्म्यादिति ल्यब्लोपे पञ्चमीमभिप्रेत्य। प्रज्ञापनमिति वचन-

(भा०)तस्य साधनतावचनं हेतुः । उत्पत्तिधर्मकत्वादिति । उत्प-त्तिधर्मकमनित्यं दृष्टमिति ॥ ३४ ॥

(भा०) किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते । किं तर्हि ?

(सू०) तथा वैधर्म्यात् ॥ ३५ ॥

(भा०) उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः । कथम् ? अनित्यः शब्दः–उत्पत्तिधर्मकत्वात्–अनुत्पत्तिधर्मकं नित्यं यथा आत्मादिद्रव्यमिति ॥ ३५ ॥

साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥३६॥

(भा०) साध्येन साधर्म्यं समानधर्मता । साध्यसाधर्म्या-त्कारणात्तद्धर्मभावी दृष्टान्त इति । तस्य धर्मस्तद्धर्मः । तस्य–

---

(ख०) तथेत्यादि सूत्रम्—'उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः' इति सम्बन्धः । प्रदर्शितमेतद्भाष्ये ।

अनित्य इति विजयानगरसंस्कृतग्रन्थावलीमुद्रितपुस्तकधृतः पाठो न सम्यक् ।

हेतावुक्ते नाव्याप्तोऽसौ साध्यधर्मेण हेतुभावे व्यवतिष्ठते न च व्याप्तिदर्शनमुदाहरणमन्तरेणेति हेतुलक्षणानन्तरं क्रमप्राप्तमुदाहर-णलक्षणमाह साध्येत्यादि सूत्रम् ॥

'साध्येन' धर्मिणा ( शब्देन ) 'साधर्म्यं' दृष्टान्तस्य स्थाल्यादेः (कृतकत्वम्) तद्ध्यनित्यत्वेन साध्ये (शब्दे) दृष्टान्ते च (स्थाल्यादौ)

---

(भा०चं०) विशेष्यकम् । हेतुश्च उत्पत्तिधर्मो विशेषणं यस्य तत्तथा । अनित्यत्वम् उत्पत्तिमत्वे सति नष्टत्वम् ॥ ३४ ॥

वैधर्म्याद्वैसादृश्यात् ॥ ३५ ॥

साध्यं साधनायाः कर्म । तच्च धर्मप्रधानकं धर्मिप्रधानं चेति द्विविधमाह । धर्मधर्मिणोरपि प्रज्ञापनकर्मत्वाविशेषात् तयोः परस्परं

(भा०)साध्यस्य। साध्यं च द्विविधं धर्मिविशिष्टो वा धर्मः—शब्द-

---

(ख०)समानम् । 'तस्मात्' कारणात् प्रयोजकात्—'तद्धर्मभावी'–तस्यैव साध्यस्य (शब्दस्य) 'धर्मः' धर्मान्तरम्—येन विशिष्टः शब्दः सिषाधयिषितः (अनित्यत्वेन) तत् अनित्यत्वं धर्मः, स एव भावः 'तद्भावः' (तस्य भावः 'तद्भाव' इति तु भाष्ये) । सोऽस्यास्तीति 'तद्धर्मभावी' स्थाल्यादिः अनित्यत्वधर्मवानिति यावत् । तेन तादृशा दृष्टान्तेनोपलक्षितं तद्विषयं वचनमुदाहरणम् ॥

अत्र प्रकरणे साध्यपदं पक्षपरं वेदितव्यम् ।

अत्र चाक्षेपो(वार्तिके) । "उदाहरणमित्यत्र करणकारकपरिग्रहाद् वचनं (वाक्यरूपम्) उदाहरणम्, दृष्टान्तश्चार्थः । न च अर्थवचनयोः सामानाधिकरण्यं युज्यते । न च विषाणादिमदित्यभिधानं गवा समानाधिकरणम्भवति" इति ॥

तत्रैव च तत्परिहारोऽप्युक्तः । वचनविशेषणत्वेन दृष्टान्तस्योपादानान्न स्वतन्त्रो दृष्टान्त उदाहरणम्, अपि तु साध्यसाधर्म्यात् तद्धर्मभावित्वे सति अभिधीयमान इति । दृष्टान्तानुरूपं नोदाहरणस्य वचनात्मकस्य स्वरूपतो लक्षणं सम्भवति । तस्मात् स्वाभिधायकवचनोपलक्षकत्वेन लक्षणत्वं सामानधिकरण्यम्भजते इति तात्पर्यम् ।

भाष्यवार्तिकतात्पर्याद्यनुसारिणी चैषा सूत्रव्याख्या ॥ अपरा तु व्याख्या स्पष्टतरा प्रतिभाति । 'साध्येन' धर्मेणानित्यत्वेन 'साधर्म्यात्' साधारण्यात् सामानाधिकरण्यात्—साध्यसमानाधिकरणं धर्मान्तरमुत्पत्तिधर्मकत्वमवलम्ब्य—'तद्धर्मभावी' साध्यधर्मवान् 'दृष्टान्त उदाहरणम्' इति । धर्मिरूपस्य दृष्टान्तस्य धर्मरूपेण साध्येन साधर्म्यासम्भवादे-

---

(भा०चं०) विशेषणविशेष्यभावं दर्शयति धर्मिविशिष्ट इति । कदा धर्मो विशेष्य इत्याकाङ्क्षायामाह शब्दस्यानित्यत्वमिति ।

(भा०) स्यानित्यत्वं, धर्मविशिष्टो वा धर्मी—अनित्यः शब्द इति। इहोत्तरं तद्ग्रहणेन गृह्यत इति। कस्मात्? पृथग्धर्मवचनात्। तस्य धर्मस्तद्धर्मस्तस्य भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः साध्यसाधर्म्यात्तद्धर्मभावी भवति, स चोदाहरणमिष्यते। तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम्। तच्च भूत्वा न भवति, आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं

---

(ख०) वैतद्व्याख्यानम्परित्यक्तमाचार्यैरिति प्रतिभाति। किन्तु भाष्य एवात्र उक्तमुपलभ्यते यदत्र साधर्म्यपदेन "एकस्मिन् द्वयोर्धर्मयोर्व्यवस्थानमेव" विवक्षितम्, नच सादृश्यमेव। तथा चापेक्षितं सामानाधिकरण्यं कृतकत्वानित्यत्वयोर्दृष्टान्ते सिद्धमेव।

आचार्यदेशीयानामत्र दृष्टान्तलक्षणसूत्रे नानापाठकल्पनन्तद्दूषणमार्षस्यैव लक्षणस्य व्यवस्थापनञ्च वार्तिकादनुसन्धेयम्॥

इहोत्तरमिति। धर्मविशिष्टो धर्मीत्यर्थः।

पृथगिति। यस्मात् धर्मः पृथगेवधर्मशब्देनोक्तोऽतो न स एव तत्पदेनापि व्यपदेष्टुं शक्यते।

तत्रेति। शब्दोऽनित्य उत्पत्तिधर्मकत्वादित्यस्मिन्ननुमाने।

'न भवती'त्यस्य व्याख्यानमात्मानं जहातीति निरुध्यत इति च।

---

(भा०चं०) समानाधिकरणनिर्देश्यत्वेन धर्मिविशिष्यत्वमाह **अनित्यः शब्द इति**। अत्र शब्दोऽनित्य इति विपर्ययेण बोध्यम्। प्रतिज्ञार्थस्पष्टीकरणाय पूर्वं विधेयमुक्तम्। इह सूत्रे। उत्तरं धर्मिरूपम्। तद्ग्रहणेनेति कर्मधारयः गृह्यतेऽनेनेति व्युत्पत्तेः। उत्तरग्रहणे हेतुमाह **पृथगिति**। तद्धर्मेति वचनात्। भावः सत्तासम्बन्ध इति यावत्। भवति प्रमीयते। **सचेति**। तत्पदं तद्वचनपरं प्रकरणात्। भूत्वा उत्पद्य। न भवति नश्यति। अत्र भूधातुर्नाशपरः नञ्पदं

( भा० ) साधनमनित्यत्वं साध्यम्। सोऽयमेकस्मिन्द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते। तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोति–शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति। उदाह्रियतेऽनेन धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ॥ ३६ ॥

( सू० ) तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

( भा० ) दृष्टान्त उदाहरणमिति प्रकृतम्। साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति। अनित्यः शब्द उत्पत्ति-

---

( ख० ) तद्विपर्ययादिति। अत्र वा शब्दः समुच्चये वेदितव्यः। अनित्यः शब्द इति। अत्र भाष्यकारेणान्वयव्यतिरेकी पूर्वसूत्रोदाहृतोऽत्राप्युदाहृतः, साधनधर्माभावप्रयुक्तत्वं च साध्यधर्माभावस्योक्तम् ॥ तच्चायुक्तम्। अन्वयव्यतिरेकिणि हेतौ सत्यपि वैधर्म्ये साधर्म्योदाहरणमेवोचितम्, तत्र तत्पूर्वकत्वादेव वैधर्म्यप्रतीतेः। ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगादित्यादि भाष्योक्तोदाहरणेऽरुचिम्प्रदर्श्य तात्पर्यकारेणोदाहरणान्तरं प्रदर्शितम्। तद्यथा जीव-

---

(भा०चं०) विरोधिद्योतकम्। स्वपदं व्याचष्टे **इत्यनित्यमिति**। आसन्ननष्टृत्वादित्यर्थः। ध्वंसे व्यभिचारशङ्कां वारयति **एवमनित्यत्वं साध्यमिति**। अयमाशयः नहि नष्टृत्वमात्रमनित्यत्वं किन्तूत्पत्तिविशिष्टम्। कथं तर्ह्यनित्यः प्रागभावो नित्यो ध्वंस इति व्यवहारः? भक्त्यैवेत्यवेहि। उपलभमानः प्रतिवादीति शेषः। वादी तु साध्यं निश्चितवान्। स्थाल्यादिवदिति स्थाल्यादिवदित्यनेनेत्यर्थः। अनेन हेतुना धर्मयोरनित्यत्वोत्पत्तिः धर्मद्वयं साध्यसाधनभावो व्याप्यव्यापकभावः, ज्ञापित इत्यर्थः। इति व्युत्पत्तेर्हेतोः। उदाहरणं करणव्युत्पत्त्या ॥३६॥

व्यतिरेक्युदाहरणं व्याचष्टे। पूर्वसूत्रात् पदद्वयमनुषञ्जनीयमित्याह

(भा०) धर्मकत्वात् । अनुत्पत्तिधर्मकं नित्यमात्मादि । सोऽयमात्मादिर्दृष्टान्तः । साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी योऽसौ साध्यस्य धर्मोऽनित्यत्वं स तस्मिन् न भवतीति । अत्रात्मादौ दृष्टान्त उत्पत्तिधर्मत्वस्याभावादनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति—उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति ।

साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् । वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम् । पूर्वास्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति ।

---

(भा०चं०) **दृष्टान्त इति** । साध्यसाधर्म्यादुक्तः साध्यसाधर्म्योक्तः । व्याप्तिं प्रतिसन्धाय प्रतिपादितः हेतुवाक्येनेति शेषः । सः साधर्म्योक्तहेतुः । त-स्योदाहरणमित्यन्वयः । कर्मणि षष्ठीयम् । स उदाह्रियत इत्युक्तम् । साध्यस्वधर्मासिद्धोऽपि सधर्मसहचरितधर्मद्वयव्यवस्थातः दृष्टान्त उदाह्रियते । साध्ये साधर्म्यम् प्रतिसन्धाय प्रतिवादिनः साध्ये दृष्टान्तसाधर्म्यप्रतिसन्धानम् भवत्विति । तादिदमुक्तं **साध्यसाधर्म्यादिति** । तद्धर्मभावी तस्य साध्यस्य लक्ष्यस्य धर्मिणो धर्मः साध्यो धर्मः तम् भावयितुं स्वस्मिन्नस्तीति विज्ञापयितुं शीलमस्येति सः तथा दृष्टान्तः दृष्टान्तवचनम् । ननु कथं साधर्म्यपदेन व्याप्यव्यापकभावो ज्ञेयः ? इत्थम् साहचर्ये विधीयेते धार्येते अन्वयव्यतिरेकाभ्यां यावर्थौ तौ सधर्मौ सुप्सुपेति समासः । तयोर्भावः साधर्म्यम् नियतसाहचर्यम् । समव्याप्तयोः समव्याप्तिः विषमव्याप्तयोः विषमव्याप्तिरिति । यद्वा सहैव मानं प्रमाणयोः तौ समानौ—समानौ च तौ धर्मौ चेति सधर्मौ तयोर्भावः साधर्म्यम् व्याप्यव्यापकभावः तस्मै तस्माद्वा उक्तः स साधर्म्योक्तः । तस्य हेतोरुदाहरणमित्यर्थः । कर्मणि षष्ठी शेषं

(भा०) उत्तरस्मिन् दृष्टान्ते तयोर्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकस्याभावादितरस्याभावं साध्येऽनुमिनोतीति ।

तदेतद्धेत्वाभासेषु न सम्भवतीत्यहेतवो हेत्वाभासाः ।

तादिदं हेतूदाहरणयोः साधर्म्यं परमसूक्ष्मं दुःखबोधं पण्डितरूपेवदनीयमिति ॥ ३७ ॥

( सू० ) उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥

( भा० ) 'उदाहरणापेक्षः' उदाहरणतन्त्रः उदाहरणवशः । वशः—सामर्थ्यम् । साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादिद्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टं तथा शब्द उत्पत्तिधर्मक इति साध्य-

---

( ख० ) च्छरीरं न निरात्मकम्, अप्राणित्वप्रसङ्गात्—घटादिवादिति ।

पाण्डितरूपवेदनीयमिति । प्रशस्तपण्डितवेदनीयमित्यर्थः ।

तथात्वेनोपसंहारस्य—अतथात्वेनोपसंहारस्य—इत्यर्थाभ्यामुदाहरणसूत्रमुभयमुपलक्षयति ।

अत्रापि—उदाहरणापेक्षः साध्यस्योपसंहार उपनय इति सामान्यलक्षणम् ।

---

(भा०चं०)पूर्ववत् । साध्येन पक्षेपि सिद्धयोरिति शेषः । साध्यसाधनभावं साध्यानिरूपितसाधनव्याप्तिम् । अनुमिनोति यद्युच्येत अनु पश्चान्मिनोति स्मरतीत्यर्थः । तन्न । अन्यानिष्ठव्याप्तिस्मृत्या प्रकृतपरामर्शानुपपत्तेः । तथा सति वा विद्यमानहेतुना विद्यमानसाध्यानुमित्यापत्तेः । उत्तरस्मिन् व्यतिरेकिणि धर्मयोरेकस्य यथायोग्यमन्यतरस्य साध्यस्य साधनस्य वाभावादितरस्य यथायोग्यमन्यतरस्याभावं पश्यति तयोरभावयोरेकस्याभावात् विरुद्धभावात् प्रकृतधर्मादितरस्याभावं विरुद्धधर्मं प्रकृतं साध्यम् ॥ ३७ ॥

(भा०) स्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते । साध्यवैधर्म्ययुक्ते पुनरुदाहरणे आत्मादिद्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टं न च तथा शब्द इति, अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते । तदिदमुपसंहारद्वैतमुदाहरणद्वैताद्भवति । उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्य इति ॥ ३८ ॥

( भा० ) द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसं-

---

(ख०) वेदितव्यइति । वचनात्मके उपनये लक्षणसमन्वयार्थमिति शेषः । द्विविधस्येति निगमनलक्षणावतारपरम्भाष्यम् । साधर्म्येण वैधर्म्येण

---

(भा०चं०) साध्ये पक्षे । उदाहरणापेक्षः उदाहरणं दृष्टान्तवचनं तदपेक्ष्यते उपजीवतीति उदाहरणापेक्षः । उदाहरणं तन्त्रं यस्येति बहुव्रीहिः । वसयति स्वाधीनयतीति वशं कारणम् । उदाहरणं वशं वासः यस्य स उदाहरणवशः यद्वा वश्यत इति वशः उदाहरणस्य वशः उदाहरणज्ञानजन्य इति तत्त्वम् । तत्र वशनामाह **सामर्थ्यमिति** । शक्तिरित्यर्थः कारकस्य कृतिः शक्तिरिति मन्तव्यम् । दृष्टान्तोपसंहारयोः प्रयोज्यप्रयोजकभावमुक्तं दर्शयति **साध्येति** । उदाहरणे उदाहणवचने विषयिणीत्यर्थः । तस्य स्थाल्यादिद्रव्ये विषयतयाऽन्वयः । तथा तादृशः । तादृशत्वमाह **उत्पत्तिधर्मकेति** । उपसंह्रियते उपाऽनेन संज्ञाप्यते । व्यतिरेक्युपसंहारं दर्शयति **साध्यवैधर्म्येति** । दृष्टं स्पष्टम् । विधिमुखोपसंहाराद्वैपरीत्यमाह **उपसंहारप्रतिषेधेनेति** । अनुत्पत्तेः प्रतिषेधः उत्पत्तिरेव । उपसंहारोऽयं भाक्तो बोध्यः द्वाभ्यां प्रकाराभ्यामितं द्वितं द्वितस्य भावो द्वैतं द्वैविध्यं लाघवं गौरवमितिवत् । विप्रतिपन्नस्य ज्ञानकरणमिदामित्याह **उपसंह्रियते अनेनेति** । सकारोयं संशयानस्याभ्युपसंग्राहकः । उपसंहारः उपसंहारशब्दार्थः॥ ३८ ॥

निगमने वैचित्र्यं नास्तीत्याह **समानमिति** । निगमनमि-

( भा० ) हारद्वैते च समानम्—

(सू०)हेत्वपदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥३९॥

---

(ख०)द्विविधानामपि हेतूदाहरणोपनयानां समानं निगमनलक्षणमित्यर्थः।

अवतरणस्थं 'समानम्' इति पदम् सूत्रस्थेन निगमनम् इत्यनेन सम्बध्यते।

हेत्वित्यादि सूत्रम्। यद्यपि च सिद्धनिर्देशो निगमनं, साध्य-निर्देशश्च प्रतिज्ञा, तथापि यस्यैव प्रतिज्ञायां साध्यत्वमासीत् त-स्यैव निगमने सिद्धत्वमित्यवस्थावन्तमेकमाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते। तथा च पुनर्वचनमुपपन्नमिति।

अत्र केचिदाहुः—"निगमनमसाधनाङ्गम्, प्रतिज्ञया गतार्थत्वादि-ति"। अपाकृतञ्च तन्मतं वार्तिककारेण। तद्यथा—चतुर्भिः खल्ववयवै-र्हेतोस्त्रीणि रूपाणि द्वे वा रूपे प्रतिपादिते, न त्वबाधितविषयत्वास-त्प्रतिपक्षितत्वे। पञ्चसु वा चतुर्षु वा रूपेषु हेतोरविनाभावः परिसमाप्य-ते। तस्मात् अबाधितत्वासत्प्रतिपक्षितत्वरूपद्वयसंसूचनाय निगमनमपे-क्षितम्। अन्यथा बाधने सत्प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्या-दिति। सोऽयम्प्रसङ्गः प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणमूलावयवोपप-त्तौ सत्यां प्रतिज्ञेयस्यार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिषि-ध्यते। न च प्रतिज्ञावचनादेव तत्सिद्धिः, तस्य साध्यपरत्वात्।

---

(भा०चं०) त्यस्य विशेषणमिदम्। साधर्म्येत्यादिसप्तम्यन्तयोः पक्षे इति विशेष्यम्। यथोदाहरणमुदाहरणमनतिक्रम्य उपसंह्रियते य इति शेषः तस्य च तस्मादित्यनेनान्वयः। सम्भवः सम्भवहेतुः सम्भवत्यनेनेति व्युत्पत्तेः। निश्चय एव कुतो न भवतीत्यत आह **आप्तेति**। प्रतिसन्धानात् संवादात् अयं तु नाप्तः नाप्यृषिः परतन्त्रः प्रज्ञत्वात् अतोऽस्य वाक्यार्थे संशय इति भावः। अनुमानमनुमानमिव सम्भावना-

(भा०)साधर्म्योक्ते वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। निगम्यन्ते अनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम् । निगम्यन्ते–समर्थ्यन्ते–सम्बध्यन्ते ।

तत्र साधर्म्योक्ते तावद्धेतौ वाक्यमानित्यः शब्द इति प्रतिज्ञा । उत्पत्तिधर्मकत्वादिति हेतुः । उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यमित्युदाहरणम् । तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः । तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम् । वैधर्म्योक्तेऽपि अनित्यः शब्द उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम्, न च तथानुत्पत्तिधर्मकः शब्दः, तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति ।

अवयवसमुदाये च वाक्ये सम्भूयेतरेतराभिसम्बन्धात्प्रमाणान्यर्थान् साधयन्तीति । सम्भवस्तावत्–शब्दविषया प्रति-

---

( ख० ) साधर्म्योक्ते वा वैधर्म्योक्त इति । साधर्म्यानुसारेण वैधर्म्यानुसारेण वा हेतावुक्ते सतीत्यर्थः ।

सम्भूयेति । अनुमानवाक्येऽनेकप्रमाणानि 'सम्भवन्ति' समेत्य भवन्ति–सम्मिलन्तीति यावत् । अथ च इतरेतरमभिसम्बद्धा भवन्ति ।

सम्भवेतरेतराभिसम्बन्धयोः प्रथमं सम्भवं प्रदर्शयति —सम्भव इति । 'समेत्य भवः' सम्भवः-सम्मिश्रणमिति यावत् ।

शब्देति । प्रतिज्ञावाक्यं शाब्दप्रमाणस्वभावमनुभवति । ननु प्रतिज्ञा यदि शाब्दम्प्रमाणरूपं कथन्तर्हि तत्रानुमानवाक्येन साधनापेक्षेतेत्यत आह आप्तोपदेशस्येति । 'अनृषेश्चाप्तोपदेशस्य स्वातन्त्र्यानुपपत्तेः प्रत्यक्षानुमानाभ्याम्प्रातिसन्धानादिति' सम्बन्धः । य आप्तोपदेशः सा-

(भा०)ज्ञा। आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानादनृषेश्च स्वातन्त्र्यानुपपत्तेः। अनुमानं हेतुः उदाहरणे सादृश्यप्रतिपत्तेः। तच्चोदाहरणभाष्ये व्याख्यातम्। प्रत्यक्षविषयमुदाहरणम्, दृष्टेनादृष्टसिद्धेः। उपमानमुपनयः, तथेत्युपसंहारात्, न च तथेति चोपमानधर्मप्रतिषेधे विपरीतधर्मोपसंहारसिद्धेः। सर्वेषामेकार्थ-

---

(ख०)क्षादृषिमुखान्न श्रूयते तत्र स्वतन्त्रम्प्रामाण्यन्नास्ति, तादृशस्य च साधकत्वेन प्रत्यक्षानुमानयोरस्त्येवापेक्षेति भावः।

अनुमानं हेतुरिति। साध्यसाधनयोर्व्याप्तिमुदाहरणे दृष्ट्वैव हेतोर्हेतुत्वनिश्चयः। 'उदाहरणे सादृश्यप्रतिपत्तेरनुमानं हेतुरिति' सम्बन्धः।

तच्चेति। 'सोऽयमेकस्मिन्द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते, तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोतीति' षट्त्रिंशत्सूत्रभाष्यवाक्यस्यानुसन्धानमत्र विवक्षितम्॥

दृष्टेनेति। दृष्टेन ( प्रत्यक्षेण उदाहरणेन ) अदृष्टस्य ( निगमनस्य ) सिद्धेः सुप्रसिद्धत्वादिति शेषः।

तथेत्युपसंहारादिति। 'यथा दृष्टान्तो हेतुप्रतिबद्धस्तथा पक्षोऽपीति' उपमानवाक्यमन्वयिन्यनुमाने।

नच तथेतीति–उपमानवाक्यस्वरूपं व्यतिरेकिण्यनुमाने।

सर्वेषामिति। निगमनवाक्यं सकलोक्तप्रमाणसम्प्लवसाधितमर्थं

---

(भा०चं०) त्मकानुमितिकरणत्वात्। तत्र प्रयोजकमाह **उदाहरणेति। सादृश्यप्रतिपत्तेरिति**। दृष्टान्तस्थहेतुना पक्षस्थहेतोरिति शेषः। प्रत्यक्षविषयं प्रत्यक्षो विषयो यस्य तदिवेत्यर्थः। दृढप्रमाणविषयविषयकत्वमिवार्थः। उपमानमुपमानमिवेत्यर्थः। न चात्रोपमानं गृह्यते। गृह्यते तु सादृश्यम्। उप उपमानेनेव नीयते इत्युपनयः। न तथेत्यत्र तु स भाक्तः

(भा०)प्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति ।

इतरेतराभिसम्बन्धोऽपि । असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्त्तेरन् । असति हेतौ कस्य साधनभावः प्रदर्श्येत । उदाहरणे साध्ये च कस्योपसंहारः स्यात्कस्य चापदेशात्प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति । असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत कस्य वा साधर्म्यवशादुपसंहारः प्रवर्त्तेत । उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मो नार्थं साधयेत् । निगमनाभावे चानाभि

---

( ख० ) निरूपयति ॥

प्रतिज्ञादीनामुपनयान्तानाम् 'एकोऽर्थः' स्वभावप्रतिबद्धं लिङ्गं वा अनुमेयं वा—तस्य प्रतिपत्तिः, तस्यां 'सामर्थ्यप्रदर्शनं' निगमनमिति । तदनेनैकार्थत्वं दर्शितम् ॥

प्रमाणानामनुमानवाक्ये 'सम्भवं'—सम्भूयकारित्वं—प्रदर्श्याधुना तेषामितरेतराभिसम्बन्धम्प्रदर्शयति—इतरेतराभिसम्बन्धोऽपीति । अस्तीति शेषः । द्विविधमनुमानवाक्यप्रयोजनम् । तत्रावान्तरं स्वभावप्रतिबद्धलिङ्गप्रतीतिः, परमं च साध्यप्रतीतिरिति । सम्प्रति विभागे साकाङ्क्षत्वं दर्शयति ।

---

(भा०चं०) सामर्थ्यं दृश्यतेऽनेनेति सामर्थ्यदर्शनम् । इदानीमेकैकावयवव्युदासे दोषं दर्शयति **इतरेतरेति** । इतरेतरमभिसम्बद्धं परस्परोपकारित्वमिति शेषः । अन्यथा फलानुपपत्तिरित्याह **असत्यामित्यादिना** । न प्रवर्तेरन्निति क्रियातिपत्तौ लिङ् । न व्याप्रियेरन् साधनभावो व्याप्यताव्याप्तिः उपसंहारः स्यात् प्रतीयेत । उपादीयेत प्रदर्श्येत । साधर्म्यवशात् समानधर्मास्थितिवशात् प्रवर्तेत व्याप्रियेत परामर्शं कुर्यादित्यर्थः । अनुपसंहृतः अपरामृष्टः । साधयेदनुमापयेत् ।

(भा०)व्यक्तसम्बन्धानां प्रतिज्ञादीनामेकार्थेन प्रवर्तनं तथेति प्रतिपादनं कस्येति ।

अथावयवार्थः । साध्यस्य धर्मस्य धर्मिणा सम्बन्धोपादानं प्रतिज्ञार्थः । उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य धर्मस्य साधकभाववचनं हेत्वर्थः । धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थः । साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थः । उदाहरणस्थयोर्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रति-

---

( ख० ) अथावयवार्थ इति । अवयवानाम्प्रातिस्विकमुक्तमपि प्रयोजनं शिष्यहिततया भाष्यकारः प्रतिपादयति ।

---

(भा०चं०)अनभिव्यक्तसम्बधानाम् एकार्थेन प्रकारेण प्रदर्शनं ज्ञापनम् । तद्व्याख्यानं प्रतिपादनमिति । तेन न व्यवयवं वाक्यम् । विप्रतिपन्नः प्रतिपादनसमर्थ इति भावः । व्यतिरेके दूषणं प्रदर्श्य अन्वये गुणमाह **अथेति** । अत इत्यर्थः । अर्थः फलं लभ्यत इति शेषः । अर्थोक्तस्य पुनर्वचनं शिष्यानुग्रहार्थम् । धर्मिणा पक्षेण सहेति शेषः । उपादानं ज्ञापनम् । उदाहरणेन दृष्टान्तेन समानस्य सधर्मणः । विपरीतस्य विधर्मिणः। साध्यस्य पक्षस्य । साधकभावः ज्ञापकता तेन प्रकारेण वचनं प्रतिपादनम् । धर्मयोर्लिङ्गलिङ्गिनोः । साध्यसाधनभावो व्याप्तिः । तत्प्रदर्शनं एकदृष्टान्ते सतोरिति शेषः। उपादानं ज्ञापनम् उपपादनमुपगमना विप्रतिपन्नेति शेषः । उपनयस्यार्थ उपनयार्थः । उपपत्तौ स्वीकारे साध्ये पक्षे तु विपरीतप्रसङ्गः तदनभ्युपगः तदर्थं तत्साधकम् । तदभ्युपगमकमित्यर्थः । एतादृशवाक्यार्थतत्त्वस्याग्रतो विप्रतिपन्नो मूको भवतीत्याह **तस्येति** । एतस्यामेतादृश्याम् । परितः शुद्धिः परिशुद्धिः तस्याम् । साधर्म्यवैधर्म्याभ्यां प्रतिज्ञातधर्मा-

(भा०) वैधार्थं निगमनम् ।

न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते । अव्यवस्थाप्य खलु धर्मयोः साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते । व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे साधनभूतस्य धर्मस्य हेतुत्वेनोपादानम्, न साधर्म्यमात्रस्य न वैधर्म्यमात्रस्य वेति ॥३९॥

---

( ख० ) निगमनमिति । साधने प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति सोऽयं प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिबध्यते । न च प्रतिज्ञावचनादेव तत्सिद्धम् । प्रतिज्ञा ह्यवयवान्तरसाधनसापेक्षा सन्दिग्धप्रायमेवार्थमुपन्यस्यति । निगमनम्पुनस्सकलावयवसाधितं निस्संशयमेवार्थं सिद्धस्वरूपं व्यनक्तीति महान् भेदः ॥

---

(भा०चं०) व्याप्याभ्यामिति शेषः । प्रत्यवस्थानस्य प्रतिषेधनस्य विकल्पात् द्वैविध्यात् । जातेरसदुत्तरस्य निग्रहस्थानस्य विप्रातिपत्त्यप्रतिपत्तिरूपस्य । बहुत्वं चतुर्विंशतित्वं न प्रक्रमते न प्रजायते । विप्रतिपन्नैः कर्तुं न शक्यत इत्यर्थः । पञ्चमाध्यायस्य विषयोयं कुतो न शक्यत इत्यपेक्षायामाह **अव्यवस्थाप्येति** । अव्यवस्थाप्यानङ्गीकृत्य खल्ववधारणे धर्मयोः प्रतिज्ञात्रोक्तयोः । जातिवादी प्रतिषेधहेत्वाभासवादी प्रत्यवतिष्ठते प्रतिषेधति । व्यवस्थिते परिशुद्धे प्रमिते इत्यर्थः । गृह्यमाणे वादिभ्यामिति शेषः । हेतुत्वेनोपादानं कथनम् । साधर्म्यमात्रस्य अव्याप्यसाधर्म्यस्य तथा वैधर्म्यमात्रस्य हेतुत्वेन नोपादानमित्यर्थः ॥ ३९ ॥

विप्रतिपन्नस्य शङ्कितस्य वा परिशुध्यर्थं तर्कपरिशोधनमाह

## (७) न्यायोत्तराङ्गलक्षणप्रकरणम् ।

( भा० ) अत ऊर्ध्वं तर्को लक्षणीय इति । अथेदमुच्यते—

**(सू०)अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥**

---

(ख० ) अत इति । अवयवानन्तरं तर्कस्यैवोद्देशः, प्रतिपक्षनिराकरणेन चानुमानस्योपोद्बलकश्चायमतोधुनाऽयमेव क्रमप्राप्त इति ।

कारणोपपत्तित इत्यत्र कारणोपपत्त्येति भाष्यसम्मतः पाठः प्रतिभाति । 'कारणोपपत्तिस्ततः' इति च पाठान्तरम् ।

अविज्ञातेत्यादि सूत्रम् । यस्यां प्रतिज्ञायां प्रमाणम्प्रवर्तितुमुद्यतं तद्विपर्ययाशङ्कायां तावन्न प्रवर्तते न यावदनिष्टापत्त्या विपर्ययाशङ्काऽपनीयते । तदपनय एव स्वविषये प्रमाणस्य 'सम्भव' इति 'उपपत्तिः' इति चाख्यायते ॥

यदि लाघवादरेण—'ऊहस्तर्कः' अथवा 'तत्त्वज्ञानार्थमूहस्तर्कः' इत्येतावन्मात्रमेव तर्कलक्षणमुच्येत, ततो विज्ञाततत्त्वेऽपि यदा पूर्वानुभवपरिच्छेदात्मक ऊहः क्रियते सोऽपि 'तर्कः' स्यात् । तन्निवारणार्थं 'अविज्ञाततत्त्वे'—इति निवेशितम् ॥

लक्षणेनानेन समानजातीयात् संशयादेरसमानजातीयाच्चेच्छादेर्व्यवच्छेदस्तर्कस्य । यद्यपि संशयजिज्ञासे अप्यविज्ञाततत्त्वेऽर्थे प्रवर्तेते तथाऽपि न कारणोपपत्तित इति तयोर्व्यवच्छेदः ।

---

**(भा०चं०)अत इति** । अतः अवयवनिरूपणात् ऊर्ध्वमनन्तरम् । लक्षणीयः लक्षणेन ज्ञापनीयः । इति हेतोः । अथेत्यारम्भे इदं सूत्रमित्यर्थः । अविज्ञायमानं सन्दिग्धं विप्रतिपन्नम् वा तत्त्वमभिमतप्रकारो यस्मिन् स तथा तस्मिन् अर्थे भवति विजिज्ञासा निर्णयेच्छा । जानीय निश्चिनुयाम् इमं धर्मिणं तत्त्वेनेति शेषः । अथेति हेतौ । वस्तुनो धर्मिणः व्याहृतावस-

(भा०)अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते—जानीयेममर्थमिति । अथ जिज्ञासितस्य वस्तुनो व्याहतौ धर्मौ विभागेन विमृशति—किंस्विदित्थमाहोस्विन्नेत्थमिति । विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति—सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति—कारणोपपत्त्या स्यादेवमेतन्नेतरदिति ।

---

(ख०)अविज्ञातेति 'न विशेषेण ज्ञातं'—सामान्यतो ज्ञातमिति यावत् । तथा च वार्तिकम्—'यस्मादयमाहाविज्ञाततत्त्व इति तेन ज्ञापयति सामान्यमवगतमिति । यदि पुनः सामान्यमपि नाधिगतं स्यान्न ब्रूयादविज्ञाततत्त्व इति—अविज्ञात इत्येवं ब्रूयादिति' ।

विमृशतीति । जिज्ञासापश्चाद्भावी संशयोऽत्र विवक्षितः । तर्केण तावद्द्वयोः पक्षयोरेकतरनिषेधेनैकतरः प्रमाणविषयतयाऽभ्यनुज्ञातव्य इति विषयप्रत्यासत्त्या तर्कप्रवृत्तिं प्रति साक्षादङ्गता संशयस्येत्यत्र सूचितम् ।

कारणोपपत्त्येति । 'कारणस्य' प्रमाणस्य 'उपपत्त्या' इतिकर्तव्यतया विषये विशोधिते प्रमाणमप्रत्यूहम्प्रवर्तते । उपपत्तेश्च स्वतन्त्रायां आश्रयासिद्धतया न निश्चायकत्वं सम्भवति ।

---

(भा०चं०)इमूतौ धर्मौ प्रकारौ विभागेन पृथक्कृत्य विमृशति विचारयति । एवमेतद्धर्मा । नैवं नैतद्धर्मा । नित्योऽनित्यो वेति विमृश्यमानयोः विभागेनालोच्यमानयोः कारणोपपत्त्या प्रमाणप्राप्त्या अनुजानाति अनुमतिं करोति । तां दर्शयति **सम्भवत्यस्मिन्निति** । हेतुः प्रमाणं लिङ्गमिति यावत् । स्यात् सम्भवेत् । एवमित्थभूतम् । नेतरत् प्रमाणानुपपत्तेरिति शेषः । इतीतिक्रियाविशेषणम् । निदर्शनमुदाहरणम् । उत्पत्तिरिह न सतो देहेन्द्रियादिप्राप्तिर्विवक्षिता किन्त्वसतः स्वरूपप्राप्तिः जडस्येव चार्वाकादीनिवात्मनस्तथैव प्रतिपत्तेः । अभ्यनुज्ञा स्वीकारः तत्कारणं प्रयोजकं प्रमाणमिति यावत् । उपपद्यते तर्केण सम्बध्यते । तम-

(भा०) तत्र निदर्शनम्—योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं तत्त्वतो जानीयेति जिज्ञासते । स किमुत्पत्तिधर्मकोऽनुत्पत्तिधर्मक इति विमर्शः । विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति । यद्ययमनुत्पत्तिधर्मकः ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणमुत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति स्यातां संसारापवर्गौ । उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम् । उत्पन्नः खलु ज्ञाता देहेन्द्रियबुद्धिवेदनाभिः सम्बध्यत इति नास्येदं स्वकृतस्य कर्मणः फलम् । उत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति । तदेवमेकस्यानेकशरीरयोगः शरीरवियोगश्चात्यन्तं न स्यादिति । यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति । सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते ।

---

(ख०) यद्ययमित्यादि । यद्ययमनुत्पत्तिधर्मकः तदैव कर्मणः फलमनुभवति, तदैव च दुःखेत्याद्यपवर्ग इत्यन्ते वाक्ये यावुक्तौ संसारापवर्गौ तौ स्यातामिति सम्बन्धः ।

तन्नानुजानातीत्ययमेव पाठस्तात्पर्यसम्मतः प्राचीनपुस्तके धृतश्च ।

---

(भा०चं०) नुजानात्यूरीकरोति । यदीत्यव्ययं सम्भावितहेतुमत्तापरम् । तस्य साध्यधर्मेऽन्वयः । साध्यधर्मश्च प्रतिज्ञासम्भावितः तथा चायमात्मा । यद्यनुत्पत्तिधर्मक इति वाक्यात् सम्भावितहेतुमत्तासम्भावितानुपपत्तिधर्मक इत्यन्वयधीरुत्पद्यते ततः सम्भावितानुत्पत्तिधर्मकत्वात् फलमनुभवति । कालान्तरभाविफलकर्मकानुभवकर्ता सम्भाव्यत इति शेषः । विपरीते

(भा०) "कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति" ? अनवधारणात्। अनुजानात्ययमेकतरं धर्मं कारणोपपत्त्या, न त्ववधारयति, न व्यवस्यति, न निश्चिनोति "एवमेवेदमिति

---

(ख०) कथमिति । यदि 'एवमेतन्नेतरत्' इत्येवमाकारस्तर्कस्य तर्ह्ययं तत्त्वज्ञानमेव न पुनस्तत्त्वज्ञानार्थ इत्यर्थः ।

न निश्चिनोतीति । निश्चयरूपञ्च तत्त्वज्ञानमिति । अवधारयतीत्याद्यनेकपर्यायैस्तर्कस्य निश्चयादत्यन्तभेद उक्तः ।

---

(भा०चं०) विपरीतः न ह्यनित्यः कालान्तरभावी फलमनुभवितुमर्हति अनित्यतया फलकालेऽसत्त्वादिति भावः। अनेनैव हेतुना पुनः फलद्वयमप्याह ततोऽस्य ज्ञातुः संसारापवर्गौ स्यातामित्यन्वयो बोध्यः । ततो नित्यत्वादेव । स्यातां सम्भाव्येते सम्भावनायां लिङ् । पूर्वस्य पूर्वस्य उत्तरमुत्तरमित्यनेन कार्यकारणभूतौ संसारौ दर्शितौ । तदनन्तरापाये इति निमित्ते सप्तमी विषयिणि वा । तदनन्तराभावादित्यभेदे पञ्चमी तृतीयावत्। यथा हेतौ तृतीयापञ्चम्यौ तथाऽभेदेपीति ध्येयम् । यदुक्तं विपरीते विपरीतमिति तदिदमाह **उत्पत्तिधर्मक इति** । तर्हि व्यवह्रियमाणोत्पत्तिः केत्यपेक्षायामाह **उत्पन्न इति** । उत्पद्यमान इत्यर्थः अन्यथा त्वपदव्याख्यानानुपपत्तेः। नासौ जडवदुत्पद्यते नश्यति वेत्यत आह **नास्येदमिति** । भूत्वा न भवति स्वरूपं प्राप्य जहातीति । देहादेरुत्पत्तिविनाशौ ज्ञातुस्तु नैवम् तस्य देहादिप्राप्तिपरित्यागौ जन्मविनाशाविति । तस्यापि तौ जडवदेव स्यातामिति चेन्नेत्याह **तस्येति** । तैश्च शरीरादेर्जडस्याविद्यमानस्य स्वरूपहीनस्य प्रागभाववतः। निरुद्धस्य ध्वंसवतः स्वतः स्वकृतकर्मणः स्वेन स्वतन्त्रेण ज्ञानादिसमवायिना कृतस्योत्पादितस्य कर्मणो वाक्बुद्धिशरीरारम्भस्य फलोपभोगः उक्तजन्ममरणप्राप्तिः। चेतनजन्मविनाशावुपसंहरति

(भा०) "कथं तत्त्वज्ञानार्थ इति ?"

तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद्भावितात्प्रसन्नादनन्तरं प्रमाणसामर्थ्यात्तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति।

---

( ख० ) तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणादूहाद् भावितादिति पाठस्तात्पर्यसम्मतः प्राचीनपुस्तके धृतश्च ॥ 'लक्षणानुग्रहभावितात्' 'लक्षणानुग्रहोद्भावितात्' इति च पाठान्तरम्। तत्र तु 'भावितात्'–'प्रसन्नात्'–इतिविशेषणयोर्विशेष्यस्याभावात्पूर्व एव पाठः सम्यक्।

भावितादिति। चिन्तितात् निर्मलात् अबाधितादिति यावत्। प्रमाणसामर्थ्यादिति तर्कस्य स्वातन्त्र्यमपाकरोति।

---

(भा०चं०)तदेवमिति। ततः तस्मादेवं स्थिरकर्तृकः अत्यन्तमिति शरीरयोगविशेषणं नपुंसकं क्रियाविशेषणत्वात्। अत्यन्तावियोगोऽपवर्गः न हि स्वरूपहानिरेवापवर्गः। तस्य स्वदुःखहानिरूपत्वात्। यत्र देहादौ कारणं प्रमाणमनुपपद्यमानमसत्पश्यतीति औपचारिकः प्रयोगः तथा न जानातीति। तर्को हि शब्दविशेषो ज्ञानविशेषो वेति। तर्के प्रमाणत्वमाशङ्क्य निराकरोति तत्त्वज्ञानमिति। करणपरं भावपरं वा। अनवधारणात् अनिश्चायकत्वात्। अनुजानाति सहकारितया ज्ञापयतीत्यर्थः। कारणोपपत्त्येति सहकारिणि तृतीया नावधारयति सम्भावयतीत्यर्थः। नह्यत्र विपरीतज्ञानद्योतकः। तत्त्वज्ञानार्थस्तत्त्वज्ञानोपपादकः। अर्थपदमिह प्रयोजनपरम्। न साध्यपरम्। अभ्यनुज्ञा सम्भावना तस्या लक्षणं हेतुस्तस्माद्भावितात् परिचिन्तितोपपत्त्यनुपपत्तिकात् अतः प्रसन्नात् दर्शितविषयविभागात् प्रमाणसामर्थ्यात् प्रमाणशक्तेः सहकारिणः। हेतुपञ्चमीयं प्रयोजके यथाश्रुते प्रमाणत्वापत्तेः तदिदमाह तत्त्वज्ञानार्थ इतीति। प्रतिसन्दधानः समर्थयन्। प्रमाणाभ्यनुज्ञानात् प्रमाणविषयसम्भावनाहेतुत्वात् तत्साहाय्यादित्यर्थः। वादेऽददिष्टः कर्तव्यत्वेनोपदिष्टः। इतीति तर्कलक्षण-

(भा०) सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो वादेऽपदिष्ट इति ।

अविज्ञाततत्त्वमनुजानाति—यथा सोऽर्थो भवति तस्य तथाभावस्तत्त्वमविपर्ययो याथातथ्यम् ॥ ४० ॥

( भा० ) एतस्मिंश्च तर्कविषये—

विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥ ४१ ॥

(भा०) स्थापना साधनं प्रतिषेध उपालम्भः । तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्त्तमानौ पक्षप्र-

---

( ख० ) ननु यदि तत्त्वनिश्चयसाधनम्प्रमाणमेव, न तर्कः, किमर्थन्तर्हि वादेऽस्य समावेशः प्रमाणतर्कसाधनोपलम्भइत्यादिसूत्रोक्त इत्यत आह सोऽयमिति । प्रमाणविषयविपर्ययशङ्काविघटितानि प्रमाणानि यत उपोद्बलयति तर्कस्तत एवास्य प्रमाणेन सह सन्निवेशो वाद इति भावः। 'तथाभाव'इति वार्तिकसम्मतः पाठः । 'यथाभाव' इति पाठान्तरम् ।

विमृश्येत्यादि सूत्रम् । पक्षाच्च प्रतिपक्षाच्चेति पक्षप्रतिपक्षाभ्याम् । पक्षशब्देन पक्षविषयं साधनमुच्यते, प्रतिपक्षशब्देन च पक्षविषयस्य साधनस्योपालम्भः । अस्य चोपालम्भस्य निर्णयम्प्रति कारणता पारम्पर्येणेत्यादिवार्तिके स्पष्टम् ।

---

(भा०चं०) परिसमाप्त्यर्थः ।

निर्णयमवतारयितुं तद्विषयमवतारयति । **अविज्ञातेति** । तत्वान्तो बहुव्रीहिः । अनुजानाति सम्भावयति । कथमित्यतआह **यथेति**। यत्प्रकारक इत्यर्थः । अर्थो धर्मी । भवति प्रमाणविषयः यथाभावः यो भाव इत्यर्थः । तत्पर्यायं दर्शयति तत्त्वमित्यादित्रयम् ॥ ४० ॥

एतस्मिन्नीदृशे तर्कविषये धर्मिणि निर्णय इत्यन्वयः। वादिप्रातिवादिभ्यां प्रतिज्ञातौ धर्मौ पक्षप्रतिपक्षावित्युच्येते तयोर्निर्णयहेतुत्वं नास्तीत्यन्यथा

(भा०)त्तिपक्षावित्युच्येते। तयोरन्यतरस्य निवृत्तिः एकतरस्या-वस्थानमवश्यम्भावि। यस्यावस्थानं तस्यावधारणं निर्णयः।

"नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीति। एको हि

---

(ख०) अत्र पक्षप्रतिपक्षप्रयोगाद् 'वादे संशयोऽस्ति–'इति भ्रान्त्या चोदयति नेदमिति। (१) वादी प्रतिज्ञातमर्थं हेतुतः स्थापयति। तदनन्तरं 'द्वितीयस्य' प्रतिवादिनः–'प्रतिषिद्धं' प्रतिषेधं वाद्युक्तस्य हेतोर्दूषणम्–'उद्धरति' दूषणाभासीकरोति। (२) ततो 'द्वितीयेन' प्रतिवादिना वाद्युक्तस्य हेतोः स्थापनहेतुत्वम्प्रतिषिध्यते। 'तस्यैव' वादिनः प्रतिवाद्युक्तदूषणप्रतिषेधहेतुश्च प्रतिवादिनैव 'उद्ध्रियते'। 'सः'–वादिनो वा प्रतिवादिनो वा हेतुश्चोपालम्भश्च–'निवर्तते'। तस्मिन्निवृत्ते योऽवतिष्ठते तेनैव निर्णयः। अवस्थातुं च शक्नोत्येक एव, न द्वावपि। ततश्चैकेनैव पक्षेणैव प्रतिपक्षेणैव वा निर्णयो, न द्वाभ्याम्। अतो न युक्तम्पक्षप्रतिपक्षाभ्यामिति वक्तुम्। इति चोदकस्य हृदयम्।

---

(भा०चं०)व्याचष्टे **स्थापनेत्यादिना**। अयमाशयः पक्षपरिग्रह इत्यस्यधातोर्नित्यं ज्ञापनार्थः तथाच पक्षयतेः करणघञि पक्षयतीति सिद्धम् स च साधको हेतुस्तर्कादिसहितः तद्विपरीतः प्रतिपक्षबाधको हेतुः परिगृहीतः स्थाप्यतेऽनेनेति स्थापना साधनम्। उदाहरणादिसहितो हेतुः। प्रतिषिध्यतेऽनेनेति प्रतिषेधः परपक्षनिषेधको हेतुस्तथा उपालभ्यते अनेनेत्युपालम्भः स एव तौ पक्षप्रतिपक्षाश्रयौ कर्मव्युत्पन्नपक्षतत्प्रतिकूलविषयौ व्यतिषक्तौ परस्परप्रतिषेधेन वर्तमानौ। तदिदमुक्तमनुबन्धेनेति। तयोः साध्यबाध्ययोर्निवृत्तिः असम्बन्धः। अवस्थानं सम्बन्धः। अवश्यंभावि न्याय्यमित्यर्थः। तस्यावस्थितस्यावधारणं प्रतिपक्षमवमुच्य धारणं निर्णयो निश्चयः। प्रतिषेधकस्यावधारकत्वाभावमाशङ्क्य निराकरोति **नेदमित्यादिना**। तत्र नेदमित्यादिनिर्णयेत्यन्तः

(भा०) प्रतिज्ञातमर्थं हेतुतः स्थापयति प्रतिषिद्धं चोद्धरति द्वितीयस्य । द्वितीयेन स्थापनाहेतुः प्रतिषिध्यते तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते । स निवर्त्तते । तस्य निवृत्तौ योऽवतिष्ठते तेनार्थावधारणं निर्णयः इति ।"

उभाभ्यामेवार्थावधारणमित्याह । कया युक्त्या ? एकस्य सम्भवो द्वितीयस्यासम्भवः । तावेतौ सम्भवासम्भवौ विमर्शं सह निवर्त्तयतः उभयसम्भवे । उभयासम्भवे त्वनिवृत्तो विमर्श इति ।

विमृश्येति विमर्शं कृत्वा । सोऽयं विमर्शः पक्षप्रतिपक्षाववद्योत्य न्यायं प्रवर्तयतीत्युपादीयत इति ।

---

( ख० ) अभ्युपेत्य परिहरति उभाभ्यामिति । वादिनः साधनस्य 'सम्भवः' प्रतिवादिन उपालम्भस्य 'असम्भवः' । तावेतौ सम्भवासम्भवौ 'सह' मिलित्वैव 'विमर्शं' संशयं 'निवर्तयतः', न प्रत्येकमिति ।

विमृश्येतीति–सूत्रे विमृश्येतिपदस्य प्रयोजनमाह ।

अवद्योत्येति । नियमेन विषयीकृत्येत्यर्थः ।

---

(भा०चं०) शङ्कापरः । उभाभ्यामित्यादिर्निवृत्तो विमर्श इत्यन्तो निराकरणपरः । एकः पूर्ववादी प्रतिषिद्धं प्रतिषेधकहेतुमुत्तरवादिनः गत्यर्थत्वात् कर्तरि क्तः । उद्धरति प्रतिषेधति । इतीत्येकवादिप्रक्रियासमाप्तौ । द्वितीयस्य प्रथमवादिनः । द्वितीयेनोत्तरवादिना तस्यैव प्रथमवादिन एव प्रतिषेधहेतुः स्वपक्षप्रतिषेधकहेतुः । उद्ध्रियते निराक्रियते स पूर्वस्य उत्तरस्य वा यथासम्भवं निवर्तते तस्यान्यतरस्य निवृत्तौ योऽवतिष्ठते यः सम्बध्यते तेन परामृश्यमाणेन न त्वन्येनापि तस्यानवस्थानात् ।

युक्त्या सतर्कहेतुना पक्षतर्काभ्यां युज्यत इति युक्तिः सद्धेतु-

(भा०) एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम् । यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः सम्भवतस्तत्र समुच्चयः । हेतुतोऽर्थस्य तथाभावोपपत्तेः । यथा क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः सम्भवति तत् क्रियावत्, यस्य न सम्भवति तदक्रियमिति । एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनोः कालविकल्पः । यथा तदेव द्रव्यं क्रियायुक्तं क्रियावत्, अनुत्पन्नोपरतक्रियं पुनरक्रियमिति ।

न चायं निर्णये नियमः विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधा-

---

( ख० ) अनुत्पन्नोपरतक्रियमिति । अनुत्पन्नक्रियम् उपरताक्रियं वा ।

नचेति । न मिर्णयमात्रस्येदं लक्षणमपि तु परीक्षाविषयस्यैवेत्यर्थः ।

---

(भा०चं०) स्तया । सम्भवः प्रमाणजं दर्शनम् । अवद्योत्य न्यायविषयतया सम्भाव्य प्रवर्तयति जनयति ।

**एकधर्मिस्थयो**रेकधर्मिस्थत्वेन ज्ञातयोः । धर्मिसामान्यमनेको धर्मी तस्मिन्गतौ व्यवस्थितौ व्यक्तिभेदेन कालभेदेन वा । समुच्चयः सामान्यमेलना । अर्थस्य समानधर्मिणः तथाभावोपपत्तेः विरुद्धधर्मद्वयोपपत्तेः । स्पष्टमुदाहरति **यथेति** । अनुत्पन्नोपरतक्रियं भाविनष्टकर्मकम् । अक्रियं नास्ति क्रिया यस्मिन्निति विग्रहः । एतेन कुतार्किकोहितं नास्तीति प्रत्ययविषयोऽत्यन्ताभाव एवेति मतं निरस्तम् । अनृषिवचनस्य भ्रान्तिप्रयुक्तत्वात् ।

नेदं निर्णयमात्रस्य लक्षणमित्याह **नचेति** । नियमो व्याप्तिः ।

(भा०) रणं निर्णय इति । क्विन्त्विन्द्रियार्थसन्निकर्षोत्पन्न-प्रत्यक्षेऽर्थावधारणं निर्णय इति । परीक्षाविषये तु विमृश्य-पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः । शास्त्रे वादे च वि-मर्शवर्जम् ॥ ४१ ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथमाह्निकम् ।

---

(ख०) इन्द्रियार्थेति । प्रत्यक्षाविषये 'अर्थावधारणं निर्णय' इत्येतावन्मात्रमेव निर्णयलक्षणम् ।

शास्त्र इति । ज्योतिष्टोमादीनां स्वर्गादिसम्बन्धानिर्णये आगमेन कर्तव्ये विमर्शो नास्ति । नापि वादजल्पवितण्डासु, निश्चितयोरेव वादिप्रतिवादिनोस्तत्र प्रवृत्तेः । उपलक्षणं चैतत् । स्वार्थानुमा-नेपि न विमर्शाद्यपेक्षा ।

इति महामहोपाध्यायश्रीगङ्गानाथशर्मसङ्गृहीते खद्योते प्रथमाह्निकप्रसादः ॥

---

(भा०चं०) परीक्षापूर्वकस्यैवेत्याह **परीक्षाविषय इति** । शास्त्रे उपदेशे वादे विवादे विमर्शवर्जं विमर्शवर्जनपूर्वको निर्णय इत्यर्थः॥४१॥

इति श्रीवात्स्यायनीयन्यायभाष्यचन्द्रे प्रथमाध्याये प्रथमाह्निके सप्तप्रकरणभाष्यचन्द्रिका ।



## द्वितीयाह्निकम् ।

(भा० )तिस्रः कथा भवन्ति वादो जल्पो वितण्डा चेति ।
तासाम्—

---

( ख० ) तिस्रः कथा इति । निर्णयानुकूलतया यद्यपि प्रथमाह्निक एव वादः प्राप्तस्तथाऽपि कथान्तर्गततयाऽत्रास्य लक्षणम् ॥

नानाप्रवक्तृकत्वे सति तद्विचारवस्तुविषया वाक्यसन्दब्धिः कथा । तस्यां कथायामेष नियमस्तिस्र इति । इदं च पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितम् ॥

गुर्वादिभिः सह वादः विजिगीषुणा सह जल्पवितण्डे इति विवेकः ।

---

(भा०चं०) वादजल्पवितण्डाख्यत्रिदेहं विश्वदेहगम् ।
भाष्यव्याख्यामिषेनैव शब्दब्रह्म निषेव्यते ॥

अथ कथाप्रकरणाद्द्वितीयमाह्निकं व्याचिख्यासुः भाष्यकारः कथापदनिगदेनैव कथा(१)लक्षणमुक्तमिति मन्वानः कथां विभजते तिस्रः **कथा भवन्तीति** । कथनं कथा भावे अङ्प्रत्ययः । कथ वाक्य प्रबन्धे इति धातुः । प्रकर्षाय स्वपक्षप्रसिद्धिपरपक्षप्रतिषिद्ध्यन्यतरस्यै बध्यते क्रियत इति प्रबन्धः कर्मणि घञ् ततः समानाधिकरणस्तत्पुरुषः द्वयोः पदयोरजहल्लिङ्गतयार्थाभेदेनैव कर्मधारयोपपत्तिरनुसंधेया । वितण्डायां यद्यपि स्वपक्षप्रसिद्धिर्नास्ति तथाप्युक्तद्वयान्यतरलक्षणयोगात् नातिव्याप्तिः । वाक्यपदमिह पञ्चावयवोपपन्नवाक्यपरं तेनैकैकास्मिन्नवयवे नातिव्याप्तिः । प्रबन्धमात्रे उपाध्ये वृत्तावतिप्रसङ्गवारणाय वाक्यं विशेषणम् । काव्यादावतिप्रसङ्गनिवृत्तये प्रबन्धो विशेष-

---

(टि०) १ नानाप्रवक्तृकविचारविषया वाक्यसंदब्धिः कथा इति भाष्यकारसम्मतं कथालक्षणमूहनीयम् तेन विभागस्य सामान्यधर्मज्ञानपूर्वकत्वात्तदकथनप्रयुक्ता न न्यूनतेति ।

(सू०) प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥

---

( ख० ) प्रमाणतर्कसाधनोपालम्भ इति मध्यमपदलोपी समासः। प्रमाणतर्कसाधनः प्रमाणतर्कसाधनोपालम्भश्चेत्यर्थः ।

---

(भा०चं०) णम्। एतत्प्रकर्षबोधाय भगवद्गीतासु वादः प्रवदतामहमिति भगवद्वचने प्रपदोपसन्दानम्। वदत्यनेन तत्त्वमिति वादः। जल्पति परपक्षे प्रतिषिद्धसपक्षं स्थापयत्यनेनेति जल्पः । वितण्डयति परपक्षं खण्डयत्यनेनेति वितण्डा। तिस्रः कथाः शब्दविशेषः। कथयतीति कथकः सर्वे। वाकौ द्वौ जल्पकौ द्वौ जल्पकवैतडिण्कौ द्वौ कथयतः । जल्पकस्य वैतण्डिकापेक्षाप्रयोगे वैतण्डिकत्वभावेऽपि तद्दूषणोद्धारव्यापारवत्त्वेन गौणजल्पकत्वम्। कथयति तण्डयति चौरादिकौ वदति जल्पति भौवादिकौ। एवं कथकजल्पकयोः सामान्यविशेषाणामनिर्वचनेन लक्षणमनुसन्धेयम्। तस्मिन् साति सूत्रकारो विशेषलक्षणमाह । तत्र भाष्यं तासामिति पूर्वम्। तासां कथानां मध्ये निर्धारणे षष्ठीयम्(१)।निर्धारणं च साजात्ये सत्यन्यतरस्य वैजात्येन प्रतिपादनम् ।

---

(टि०) १ यतश्च निर्द्धारणमिति सूत्रेण षष्ठीसप्तम्यौ विधीयेते। तदर्थश्च जात्यादिविशेषणविशिष्टयद्धर्मावच्छिन्नस्य तादृशविशेषणशून्यतद्धर्मावच्छिन्नव्यावृत्तत्वविशिष्टविधेयवत्तया प्रतिपादनम् तद्धर्मावच्छिन्नार्थकपदात् षष्ठीसप्तम्यौ यथा नराणां क्षत्रियः शूर इत्यत्र क्षत्रियत्वादिविशेषणविशिष्टे नरादौ तच्छून्यनरादिव्यावृत्तत्वेन शौर्यविशेषादिरूपसंबधोऽभिमत इति नरादिपदात् षष्ठी तथा तासां वादः प्रमाणतर्कसाधनोपालंभः सिद्धांताविरुद्धः पञ्चावयवोपपन्नपक्षप्रतिपक्षपरिग्रह इत्यत्रापि ।

(भा०)एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात् । अस्त्यात्मा नास्त्यात्मेति । नानाधिकरणस्थौ विरुद्धौ न पक्षप्रतिपक्षौ । यथा नित्य आत्मा अनित्या बुद्धिरिति । परिग्रहोऽभ्युपगमव्यवस्था । सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः ।

तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः । प्रमाणतर्कसाधनः

---

(ख०)यद्यपि वितण्डायामपि पक्षप्रतिपक्षपरिग्रहोऽस्ति तथापि प्रतिपक्षसाधनं नास्ति, तस्याः साधनहीनत्वात् । यद्यपि जल्पेऽपि पक्षप्रतिपक्षसाधनमस्ति तथाऽपि न प्रमाणमूलैरवयवैस्तर्केण च साधनोपालम्भाविति जल्पवितण्डाभ्यां 'प्रमाणतर्कसाधनोपालम्भ'ग्रहणेन व्यवच्छेदः ॥

प्रमाणैरेव यत्र साधनं तर्कैरेव च यत्रोपालम्भ इत्यर्थः कैश्चिद्वर्णितो न सम्यक् ॥

---

(भा०चं०) **एकेति** सूत्रपदं विगृह्णाति । एकाधिकरणस्थौ एकाधिकरणस्थत्वेन प्रतिज्ञायमानौ कथकाभ्यां विरुद्धावसहभूतौ व्यधिकरणावित्यर्थः । धर्मौ भवितुर्भावौ प्रकारावित्यर्थः । प्रत्यनीकभावात् परस्परविरोधात् पक्षप्रतिपक्षावित्यन्वयः । आस्तिकनास्तिकयोः कथकयोस्तौ दर्शयति **अस्त्यात्मेति** । आत्मेति धर्मिनिर्देशः । अस्तीति आस्तिकमतप्रकारपरिग्रहः, नास्तीति नास्तिकमतप्रकारपरिग्रहः । नित्यत्वादिप्रकार आस्तिकानां षण्णाम् । अनित्यत्वदेहाद्यभिन्नत्वप्रकारो नास्तिकानां षण्णाम् । व्यवस्था नियमः । पक्षप्रतिपक्षयोरतत्त्वं परित्यज्य तत्त्वं गृह्यते येन स पक्षप्रतिपक्षपरिग्रहः । तत्त्वबुभुत्सोर्हि कथा वादश्च । अभ्युपगमव्यवस्थेति धात्वर्थव्याख्या । आप्तोपदेशेऽतिव्याप्तिवारणार्थं विशेषणम् ।

प्रमाणेत्यादिपदं व्याचष्टे **तस्य विशेषणमिति** । अस्मिन्नित्यधिकरणविषयिकं ज्ञेयम् । यावदेको निवृत्तः निवर्त्तत इत्यर्थः ।

(भा०)प्रमाणतर्कोपालम्भः । प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति । साधनं स्थापना । उपालम्भः प्रतिषेधः । तौ साधनोपालम्भौ उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ च । यावदेको निवृत्त एकतरो व्यवस्थित इति । निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति ।

जल्पे निग्रहस्थानविनियोगाद्वादे तत्प्रतिषेधः । प्रतिषेधे क-

---

(ख०)तत्प्रतिषेध इति । वादिना प्रतिवादिना वा नोपन्यसनीयानीत्यर्थः । न हिंस्यात् सर्वाभूतानीतिवद् वादे सर्वनिग्रहस्थानप्रतिषेधे, अग्नीषोमीयम्पशुमालभेतेतिवद् सिद्धान्ताविरुद्ध इति विशेषविधिरित्यर्थः स्फुटः प्रतीयते भाष्यस्य । वार्तिककारस्तु रागतः सर्वपञ्चनखभक्षणप्राप्तिवत् उपालम्भग्रहणात् सर्वनिग्रहस्थानप्राप्तौ, पञ्च पञ्चनखा भक्ष्या इतिवत् परिसङ्ख्यानार्थं उत्तरपदारम्भ इत्याह ।

इह वादे चतुर्धा निग्रहस्थानगतिः । किञ्चिदसम्भावनीयमेव । यथा प्रतिज्ञाहानिः प्रतिज्ञासंन्यासो निरर्थकमथार्न्तरमाविज्ञातार्थमपार्थकमिति षट्कम् । किञ्चित् सम्भवदप्यनुद्भाव्यम् । यथा प्रतिज्ञान्तरं हेत्वन्तरमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमिति सप्तकम् । किञ्चिच्च कथावसानिकम् । यथा हेत्वाभासो निरनुयोज्यानुयोगश्चेति द्वयम् ।

---

(भा०चं०) व्यवस्थितो व्यवसित इत्यर्थः । निवर्त्तते नास्तित्वप्रकारेण प्रमाणेन संबध्यते । निवृत्तस्योपालम्भः इति परित्याग इत्यर्थः । साधनमङ्गीकारः ।

जल्पादिलक्षणमाह **जल्प इति** । विनियोगात् प्रयोगात् प्रयोगविधानाद्वा । वादे तत्प्रतिषेधः तस्य परित्यागः परित्यागविधिर्वा । यद्विशेषणबलात् उक्तार्थो लभ्यते तद्विशेषणम् । व्याचष्टे

(भा०) स्यचिदभ्यनुज्ञानार्थं सिद्धान्ताविरुद्ध इति वचनम् । 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' (१. २ ४७) इति हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञा वादे ।

पञ्चावयवोपपन्न इति 'हीनमन्यतमेनाप्यवयवेन न्यूनम्' 'हेतूदाहरणाधिकमधिकम्' ( ५ २ १२।१३ ) इति चैतयोरभ्यनुज्ञानार्थमिति ।

अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्। अन्यथोभावपि पक्षौ स्थापनाप्रवृत्तौ

---

( ख० ) अवयवेष्विति । पूर्वस्मिन् प्रयोजने स्थिते भाष्यकारः प्रयोजनान्तरमन्वाचिनोति । यद्यपि प्रमाणं तदनुग्राहकं च तर्कमन्तरेण पञ्चावयवोपपन्नं न भवति, तथा च पञ्चावयवोपपन्नमित्यनेनैव प्रमाणतर्कयोराक्षेपः, तथापि अनयोः प्रतिपदोक्त्यैतत्सूच्यते यत् वादिप्रतिवाद्युपन्यस्तानि साधनोपालम्भवाक्यानि परस्परसम्बद्धानि भवेयुरिति । अन्यथा यत्र वादी स्वस्थानस्थित एव प्रतिवाद्युक्तिनिरपेक्षः शब्दानित्यत्वं साधयति–प्रतिवादी च तदुक्तनिरपेक्ष एव शब्दनित्यत्वसाधकानि वाक्यानि प्रयुङ्क्ते सोऽपि वादः स्यात् ।

---

(भा०चं०) **प्रतिषेधे कस्यचिदिति** । अभ्यनुज्ञानार्थं वादकयोर्द्वयोर्वाचिकस्वीकारार्थम् । सिद्धान्तः परीक्षामुत्तीर्णः न विरुध्यते न परित्यज्यते वादिभ्यां यस्मिन् स तथा । ननु स्वसिद्धान्तपरित्यागे वादी अपसिद्धान्ती सन्निगृह्येतेत्याशङ्कां भिनत्ति **सिद्धान्तमिति** । अभ्यनुज्ञाऽभिमतत्वेनानुज्ञा तत्त्वनिष्ठत्वेन कथकयोरिति शेषः ।

**एतयोरभ्यनुज्ञानार्थमिति** । अदोषत्वज्ञानार्थमित्यर्थः परीक्षार्थमुक्तत्वात् ।

**प्रमाणतर्केति** । यद्यपि तर्कस्यावयवे स्वपरिगणनं तथापि

२२

(भा०) वाद इति स्यात्। अन्तरेणापि चावयवसम्बन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम्। तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। 'छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प' इति

---

( ख० ) अन्तरेणापीति प्रयोजनान्तरमन्वाचिनोति।
प्रमाणतर्केत्यादिविशेषणस्य प्रयोजनान्तरमन्वाचिनोति छलजातीति।

---

(भा०चं०) सतर्क एव हेतुर्भवतीति अन्तर्भावः। व्यतिषङ्गः सङ्गव्यतिहारः। जलक्रीडकयोः व्यात्युक्षावत्। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति विशेषणयोस्तात्पर्यमित्थंभूतमेके वर्णयन्ति। विशेषणद्वयमिदं निग्रहस्थानविशेषनियमनार्थम् उपालम्भपदेन सकलदोषोद्भावने प्राप्ते सिद्धान्ताविरुद्ध इत्यनेनापसिद्धान्तोद्भावनं नियम्यते पञ्चेत्यनेन न्यूनाधिकोद्भावनम् अवयवेत्यनेनावयवाभासस्य साधनविकलादेरुद्भावनम् प्रमाणतर्केत्यनेन हेत्वाभासानामुद्भावनमायाति तर्काभासानां च। एतेषामेव तत्त्वविरोधित्वात् अन्येषां कथकाशक्तिलिङ्गत्वेन कथकशक्तिजिज्ञासामात्रोपयोगिन्योर्जल्पवितण्डयोरेवोद्भाव्यत्वात्। ननु न्यूनाधिकयोः कथं तत्त्वप्रतिपत्तिविरोधित्वम् प्रमाणेन हि तत्त्वप्रतिपत्तिः तस्य चावयवन्यूनाधिकयोरविशेष एवेति। इत्थं न्यूनाधिकाभिधानप्रयोजनचिन्ताव्याकुलो तत्त्वं प्रतिपद्यत इति तयोस्तत्त्वनिर्णयविरोधित्वम्। पञ्चावयवोपपन्न इति साधनाभिप्रायमेवादूषणे पक्षधर्मतामात्रोपसंहारस्यैव कर्तव्यत्वादिति। प्रमाणतर्कसाधनेत्यस्य तात्पर्यान्तरमाह **अन्तरेणापीति**। अवयवसम्बन्धमवयवसम्बन्धप्रकाशं विनापि। प्रमाणानि प्रत्यक्षादीनि। कल्पेन प्रकारेण उपायान्तरेणेत्यर्थः। वादे वादविषये। ज्ञापयति सूत्रकार इति शेषः। ननु वादे यदि निग्रहो नास्ति जल्पे-

(भा०)वचनाद्विनिग्रहो जल्प इति मा विज्ञायि,–छलजातिनिग्रहस्थानसाधनोपालम्भ एव जल्पः प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञायि–इत्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति ॥ १ ॥

(सू०) यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥

( भा० ) यथोक्तोपपन्न इति प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः ।

---

(ख०) विनिग्रह इति । वादगतनिग्रहस्थानरहित इत्यर्थः ।

पृथक् प्रमाणेति । 'वादगतो निग्रहो न जल्पे, जल्पगतश्च निग्रहो न वादे' इति मा विज्ञायि । इष्यते हि वादगतो निग्रहो जल्पे । सोऽयमिष्टोऽर्थो प्रमाणतर्कग्रहणाल्लभ्यते ।

यथोक्तोपपन्न इति विशेषणं समस्तं वादलक्षणमतिदिशतीति भाष्यमतम् । प्रमाणतर्कसाधनोपालम्भ इत्येतावन्मात्रमतिदिश्यत इति वार्त्तिकमतम् । 'सिद्धान्ताविरुद्धः' 'पञ्चावयवोपपन्न' इति पदद्वयं वादे नियमार्थे एव, न च जल्पे नियन्तव्यं किञ्चिदस्तीत्येतदेव भाष्यमते वार्त्तिककारस्यारुचिवीजम् ।

---

(भा०चं०) पि न स्यादिति चेन्नेत्याह **छलेति** । वचनान्निग्रहस्थानवचनात् । निग्रहस्य पराभवस्य स्थानं प्रयोजकमित्यर्थः । विनिग्रहो विगतनिग्रहः । माविज्ञायि न विज्ञातव्यः ॥ १ ॥

कथकस्य विजिगीषुत्वात् जल्पं व्याचष्टे **यथोक्तेति**। वादसूत्रचतुष्कविशेषणौ पक्षप्रतिपक्षपरिग्रहौ यत्र कर्तव्यौ स तथा । वादोपीत्थम्भूत एव अतो विशेषणमाह छलेति । अस्मिन् क्रियमाणे इति

(भा०)छलजातिनिग्रहस्थानसाधनोपालम्भ इति।छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति एवंविशेषणो जल्पः।

"न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य सम्भवति । प्रतिषेधार्थतैवैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते–'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्'इति, 'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः', 'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्'( १ २ ५१–५९–६० ) इति । विशेषलक्षणेष्वपि यथास्वमिति । न चैतद्विजानीयात्प्रतिषेधार्थतयैवार्थं साधयन्तीति, छलजातिनिग्रहस्थानोपालम्भो जल्प इत्येवमप्युच्यमाने विज्ञायत एतदिति ।"

प्रमाणैः साधनोपालम्भयोश्छलजातिनिग्रहस्थानानामङ्ग-

---

( ख० )शङ्कते न खल्वित्यादि ।

परिहरति प्रमाणैरिति ।

अत्र भाष्यकारेण छलादीनां निषेधार्थतया साधनाङ्गभावमाक्षिप्य–परपक्षविघातेन स्वपक्षरक्षणादङ्गभाव इति दर्शितम् । अत्रापि वार्त्तिककारस्यारुचिः । अयुक्तोत्तराणां छलादीनां साधनाङ्गभावोऽप्यनुपपन्न एवेति तद्बीजम् । परकीयसाधनविघातार्थमेव छलादीनाम्प्रयोगो न स्वकीयसाधनाङ्गतयेत्याशयः ।

---

(भा०चं०) शेषः । एवं विशेषणवादः व्यावर्तकः । पूर्वपक्षं व्यावर्तयति **नचैतद्विजानीयादिति**। हेतुमाह **प्रतिषेधार्थतयेति** । अर्थं स्वपक्षं साधयन्ति पालयन्ति प्रतिवादिव्यस्तिकरणेनेत्याशयः ।

**अङ्गभाव इति** । प्रतिवादिदौर्बल्येन छलाद्यपरिहारे सतीति बोध्यम् । अत्र वार्तिकम् । जल्पे यथोक्तोपपन्न इति विशेषणं व्यर्थं

(भा०)भावः स्वपक्षरक्षणार्थत्वात्। न स्वतन्त्राणां साधनभावः। यत्तत्प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रहस्थानानामङ्गभावः, स्वपक्षं रक्षणार्थत्वात्। तानि हि प्रयुज्यमानानि परपक्षविघातेन स्वपक्ष रक्षन्ति। तथा चोक्तं 'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्'(४ २ ५) इति। यश्चासौ प्रमाणैः प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि प्रतिषेधविघातात्सहकारीणि भवन्ति। तदेवमङ्गीभूतानां छलादीनामुपादानं जल्पे, न स्वतन्त्राणां साधनभावः। उपालम्भे तु स्वातन्त्र्यमप्यस्तीति॥ २॥

---

(भा०चं०) निग्रहस्थाननियमस्यानभ्युपगमात्। यद्येवमुच्यते प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः छलजातिनिग्रहस्थानसाधनोपालम्भो वाद इति। न युक्तमेवं भवितुम्। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति च पदयोरुपालम्भश्रवणात् समस्तनिग्रहस्थानप्रसक्तौ नियमार्थत्वात् नियमार्थे एते पदे सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति। जल्पे च नियन्तव्यं न किञ्चिदस्ति तस्मान्नियमार्थे एते पदे नातिदेष्टव्ये इत्यतो न वक्तव्यं यथोक्तोपपन्न इति। नैष दोषः। सम्भवतोऽतिदेशात् यदत्र सम्भाव्यते तदतिदिश्यते। किं तत्सम्बध्यते? प्रमाणतर्कसाधनोपालम्भ इत्येतत्। तस्मात् यथोक्तोपपन्न इति लक्षणमात्रस्यातिदेशः। यथान्यत्र अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिरित्येनेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यातमिति न स्वरूपविशेषोऽतिदिश्यत इति अपि त्वनेकद्रव्यसमवायमात्रं स्वगतो विशेषः सामर्थ्यात् तथेहापि यत्समर्थं तदतिदिश्यते। समर्थं च लक्षणं तस्मात्तदतिदिश्यते। न नियमार्थे पदे नियन्तव्यस्याभावात्। भाष्यमिदानीं नोपपद्यते? न सूत्रपाठानुक्रमज्ञापनार्थत्वात् तस्य भाष्यस्य।

(सू०) स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

(भा०) स जल्पो वितण्डा भवति । किंविशेषणः ? प्रतिपक्षस्थापनया हीनः । यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ पक्षप्रतिपक्षावित्युक्तौ तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्त्तत इति ।

"अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा ।"

---

(ख०) स प्रतिपक्षेत्यादि सूत्रम् । पूर्ववादिपक्षापेक्षया प्रतिवादिन आत्मीयः पक्ष एव 'प्रतिपक्षः' । तस्य 'स्थापना' साधनम् । तया 'हीनः' ।

परपक्षप्रतिषेधेनेति । परपक्षस्थापनाप्रतिषेधेनेत्यर्थः ।

चोद्यभाष्यम्—अस्त्विति । स्थापनाया अभावे स्थाप्यः पक्षो नास्ति, न ह्यन्यथा (स्थापनां विना) पक्षस्य पक्षत्वमिति । ततश्च प्रतिपक्षस्थापनाहीनेत्यनेन प्रतिपक्षहीनतैवोक्ता भवतीत्याशयः ।

---

(भा०चं०) एतस्मिन् सूत्रे यदुपपन्नं लक्षणत्वेन तदतिदिश्यत इति ॥२॥

जल्प एव विशेषणभेदाद्वितण्डेत्याह **स जल्प इति** । यो वादो नाम स एव विशेषणवशाज्जल्पसंज्ञां प्राप्त इत्यर्थः । वितण्डा वितण्डासंज्ञकः । भवति ज्ञायते । किंविशेषण इति । किमुपाधिक इत्यर्थः । प्रतिपक्षस्थापनाहीनः पूर्वपक्षविपरीतपक्षपरिगृहीतः स्थित्यनुकूलव्यापारहीनः । एकतरम् एकतरमपि । प्रवर्तते प्रवृत्तिं वितण्डाख्यां करोति ।

ननु यदि क्वचिदपि स्वपक्षं न स्थापयति तर्हि वितण्डकस्य पक्ष एव नास्ति एवंसति स्वपक्षहीनो वितण्डेत्येवास्तु सूत्रमिति चोद्यं परिहरति **यद्वै खल्विति** । वै प्रसिद्धं खलु निश्चितं । प्रतिषेधलक्षणं

(भा०)यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः, न त्वसौ साध्यं कंचिदर्थं प्रतिज्ञाय स्थापयतीति। तस्माद्यथान्यासमेवास्त्विति ॥ ३ ॥

( २ ) हेत्वाभासनिरूपणम्।

( भा० ) हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः। त इमे—

---

(ख०)परिहरति यद्वै खल्विति। वैतण्डिकोऽपि हि वादी 'पारिशेष्यात् मत्पक्ष एव सेत्स्यतीति' बुद्ध्या स्वपक्षमस्थापयन् परपक्षस्थापनामाहन्ति। तस्मात् परपक्षप्रतिषेधकं वाक्यमेवास्य 'पक्ष' इत्यौपचारिको व्यपदेशः। पक्षत्वञ्चेदं योग्यतामात्रेण, नतु स्थाप्यमानतयेति तात्पर्यम्।

समाख्यानिरुक्तिवशेन हेत्वाभासानां सामान्यलक्षणम्प्रतिपादयति हेत्विति।

---

(भा०चं०) प्रतिषेधकरूपं वाक्यम्। पक्षः पक्ष्यत इति पक्षः। पक्षपरिग्रहे घञन्तः। आविष्टलिङ्गः शब्दोऽयमत एव साध्यमविप्रतिपत्तौ धर्मिणि अभिधेयं प्रतिज्ञाय प्रतिज्ञया प्रकाश्य न स्थापयति न स्थितिं करोति। तस्मात्पक्षसत्त्वात्। ननु दूषणवाक्यं यदुच्चारयति सैव स्थापना स्यादिति चेन्न सा ह्यस्तित्वानुकूलो व्यापारः स्थितेः पक्षे साध्यसत्त्वरूपत्वात्। व्यापारस्तत्प्रमापना ॥ ३ ॥

इति श्रीभाष्यचन्द्रे कथाप्रकरणभाष्यचान्द्रिका ॥

(भा०चं०) हेत्वाभाससामान्यलक्षणमाह विभागपूर्वलक्षणप्रतिपत्तये हेत्विति। हेतुलक्षणं हेतुत्वम्। तदभावात् तदत्यन्ताभावात् अहेतवोऽहेतुपदवाच्याः हेतुसामान्यात् हेतुसाम्यात् हेतुवदवभासमानाः प्रतीयमाना इति। तथाच हेत्वाभासपदस्य व्युत्पत्तिनिमित्तमेव लक्षणं सूत्रकृता

(सू० )सव्यभिचारविरुद्धप्रकरणसमसाध्यसमकाला-तीता हेत्वाभासाः ॥ ४ ॥

( भा० ) तेषाम्—

( सू० ) अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

( भा० )व्यभिचार एकत्राव्यवस्था। सह व्यभिचारेण वर्त्तते

---

(ख०) 'एकस्य'साध्यस्य साध्याभावस्य वा 'अन्ते' अधिकरणमात्रे यस्तिष्ठति स 'एकान्तः' । तदन्यः 'अनैकान्तः' । इति विवरणकाराः।

अत्र चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्यलक्षणत्वेनावस्थितौ । यस्य 'सव्यभिचार' इति हेत्वाभासविशेषसंज्ञा तस्य सव्यभिचारपदेन लक्ष्यनिर्देशोऽनैकान्तिकपदेन लक्षणम् । यस्य त्वनैकान्तिक इत्येव हेत्वाभासविशेषसंज्ञा तस्यानैकान्तिकपदेन लक्ष्यनिर्देशः सव्यभिचारपदेन लक्षणमिति विवेकः।

सव्यभिचार इति लक्षणपदं कक्षीकृत्याह व्यभिचार इति ।

---

(भा०चं०)उक्तमिति भावः। हेतुसादृश्यमिह प्रतिज्ञोत्तरप्रयोगः (१)अन्यतमलिङ्गधर्मानुविधानं वा । लिङ्गं हि त्रिविधम् अन्वयि व्यतिरेकि अन्वयव्यतिरेकि चेति । तस्यान्यतमधर्मेणानुविधानं द्विरूपस्य हेतोर्वाऽन्यतमधर्मानुविधानम् । विवक्षितसाधकत्वासाधकत्वे तु हेतुतदाभासयोर्विशेषः। किं पुनः साधकत्वमसाधकत्वं चेति ? समस्तलक्षणोपपत्तिरसमस्तलक्षणोपपत्तिश्चेति । सूत्राभिधेयप्रयोजने आह वार्तिककारः। अस्य सूत्रस्यार्थो विभागोद्देशनियमार्थमिति ॥ ४ ॥

विपरीतेष्वभिमतेभ्यः चरणं व्यभिचार इत्याह **एकत्राव्यवस्थेति**।

---

( टि० ) १ पक्षसत्त्वादयो ये लिंगधर्मास्तदनुविधानं हेतुसादृश्यम्।

(भा०) इति सव्यभिचारः। निदर्शनं-नित्यः शब्दोऽस्पर्शत्वात्, स्पर्शवान् कुम्भोऽनित्यो दृष्टो, न च तथा स्पर्शवान् शब्दः, तस्मादस्पर्शत्वान्नित्यः शब्द इति। दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ दृश्येते-स्पर्शवांश्चाणुर्नित्यश्चेति। आत्मादौ च दृष्टान्ते 'उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः' (१ १ ३४) इति अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति-अस्पर्शा बुद्धिरनित्या चेति। एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात्साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति।

नित्यत्वमप्येकोऽन्तः अनित्यत्वमप्येकोऽन्तः, एकस्मिन्नन्ते

---

( ख० )यत् खलु साध्ये साध्यजातीये तदन्यत्र च वर्तते तत् 'व्यभिचारि', तद्वृत्तित्वं 'व्यभिचारः'।

न साध्येति। स्पर्शवत्त्वानित्यत्वयोर्मध्ये साध्यसाधनसम्बन्धो नास्ति। स्पर्शवत्त्वमनित्यत्वन्न साधयति, न चानित्यत्वं स्पर्शवत्त्वमित्यर्थः।

नित्यत्वमिति। अनैकान्तिक इति लक्षणपदं कक्षीकृत्यैतत्। एक-

---

(भा०चं०) विनियतावस्था व्यवस्था साध्यधर्माभावाभावव्यवस्थेत्यर्थः। सहशब्दस्य सादेशोयं न तु समानशब्दस्येत्याह **सहेति**। नित्यः शब्द इति प्रतिज्ञापदयोरुद्देश्यविधेयभाववैपरीत्येन निर्देशः। कथं शब्दो नित्य इत्येव न्याय्यमिति चेत्सत्यम्। प्रकाराविश्लेषभ्रमवारणाय तथोक्तमिति मन्तव्यम्। अन्त्यते अभिमतधर्मो नियमेन ज्ञाप्यतेऽस्मिन्नित्यन्तः। अविरुद्धधर्मद्वयव्यवस्थिताधिकरणं तत्रैव भवः ऐकान्तिकः तद्भिन्नोऽनैकान्तिकः तदन्यत्रापि भव इत्यर्थः।

भाष्यकारस्तु अन्त्यपदेन धर्ममभिप्रेत्यैवाह **नित्यत्वमपी-**

(भा०)विद्यत इति ऐकान्तिकः, विपर्ययादनैकान्तिकः । उभयान्तव्यापकत्वादिति ॥ ५ ॥

(सू०) सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

(भा०) तं विरुणद्धीति तद्विरोधी—अभ्युपेतं सिद्धान्तं व्याहन्तीति । यथा—'सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषे-

---

(ख०) स्मिन्निति । नित्ये (साध्ये) अथ वा अनित्ये (साध्याभावे) । एकस्मिन्नन्ते यो नियतः स 'ऐकान्तिकः' । तद्विपर्ययात् 'अनैकान्तिकः' अनियतः, अन्वयेन व्यतिरेकेण वोभयपक्षगामी (साध्यसाध्याभाववृत्तिः) इति भावः । न चैवम्भूता अन्ये हेत्वाभासा इति भवति 'अनैकान्तिकत्वं' लक्षणम् ।

व्याहन्तीति । असम्भवं करोतीत्यर्थः ।

सोऽयमित्यादिवाक्यं योगसूत्रतृतीयपादगतत्रयोदशसूत्रभाष्यस्थम् । तत्रत्याक्षराणि तु—'तदेतत् त्रैलोक्यं विकार' इत्यादीनि—यथा वार्तिके धृतानि । महदहङ्कारपञ्चतन्मात्रैकादशेन्द्रियभूतसूक्ष्ममहाभूतानि 'विकारः' तस्य 'व्यक्तिः' धर्मलक्षणावस्थापरिणामः—तस्मात् 'अपैति' ।

---

(भा०चं०)न्ते । अन्त्यत इत्यन्तः कर्मणि घञ् एकस्मिन्नन्ते विद्यत इति भवार्थप्रत्ययव्याख्यानम् । भू सत्तायां विद सत्तायामिति च संकेतात् । ननु कथमाधेययोराधाराधेयभावः इति चेन्न सामानाधिकरण्येन तथा विवक्षातः उभयो द्विप्रकारश्चासावन्तश्चेति उभयान्तः साध्यसाध्याभावौ तयोर्व्यापकः सम्बधकः समानाधिकरण इत्यर्थः तद्भावात्॥५॥

तद्विरोधीति समस्तपदं विगृण्हाति तमिति । विरुणद्धि विरोधं करोति एतावता कर्तरि णिर्दर्शितः । सूत्रेऽभ्युपेत्येतिपदानन्तरं प्रयुज्यमाना इति पदमध्याहर्तव्यम् । तत्पदं व्याचष्टेऽभ्युपेत-

(भा०)धात्। अपेतोऽप्यस्ति विनाशप्रतिषेधात्'। 'न नित्यो विकार उपपद्यते' इत्येवं हेतुः 'व्यक्तेरपेतोऽपि विकारोऽस्तीति' अनेन स्वसिद्धान्तेन विरुध्यते। कथम्? व्यक्तिरात्मलाभः। अपायः प्रच्युतिः। यद्यात्मलाभात्प्रच्युतो विकारोऽस्ति, नित्यत्वप्रतिषे-

(ख०) न नित्य इति। एतदेव 'नित्यत्वप्रतिषेधात्'इत्यनेन हेतुना सूचितम्। अपेतोऽप्यस्तीत्यनेन च नित्यत्वं सूचितम्। एवमनयोर्विरोधः।

विरुद्धस्य हेत्वाभासस्य स्वरूपविषये प्राचीननवीनयोर्मतभेद इव दृश्यते। यो हेतुर्यं कञ्चिदभ्युपगतं सिद्धान्तं व्याहन्ति स 'विरुद्ध' इति भाष्यमतं स्पष्टम्। अत एव नित्यत्वप्रतिषेधो हेतुर्नित्यत्वसिद्धान्तविरो-

(भा०चं०)**मिति**। प्रतिज्ञाहेतुभ्यां प्रकाशितमित्यर्थः। विरोधिपदं व्याचष्टे **व्याहन्तीति**। अत्र (१)यत्तच्छब्दावध्याहर्तव्यौ। विकारः कार्यं परिणामाख्यं व्यक्तेरभिव्यक्तस्वरूपादपैति विश्लिष्यते तां जहातीत्यर्थः। नित्यत्वप्रतिषेधादानित्यत्वादपेतः अभिव्यक्तिरहितः तादृशोप्यस्ति स्वरूपं धारयति। विनाशप्रतिषेधात् स्वरूपहान्यभावात्। सांख्यमतमिदं दूषयति **नेति**। नित्ये सदा स्वरूपधारके विकारः रूपविनाशान्यतरः नोपपद्यते प्रमाणेन नोपयुज्यते पुरुषवदिति दृष्टान्तशेषः। विरुद्धपदं कर्मप्रत्ययान्तमिति व्याचष्टे **विरुध्यत इति**। स्वसिद्धान्तं पूर्वहेतुं व्याघ्नन् उत्तरहेतुर्न व्याहन्यत इत्यर्थः। व्याघातो नाम क्रियाव्यतिहारः। प्रश्नोत्तराभ्यां व्याघातं दर्शयति **कथमिति**। आत्मलाभः अप्राप्तस्वरूपप्राप्तिः अन्यथा कारकव्यापारानुपपत्तेः अपचये आत्मस्वरूपपरित्यागः आत्मलाभात् प्रच्युतः यद्यस्ति यदि विद्यमानस्वरूपः तर्हि न नित्यत्वप्रतिषेधो विनाशित्वं नोपपद्यते युगपद्स्वरूपसाहित्यराहित्ययोर्विरोधात् तदिदं दर्शयति **यदीति**। अस्तित्वं स्वरूपधारकत्वम्। कथेयं

(टि०) १ यः अभ्युपेतं सिद्धान्तं व्याहन्ति स विरुद्ध इत्यर्थः।

(भा०)धो नोपपद्यते । यद्व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति । नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात्प्रच्युतेरुपपत्तिः । यदात्मलाभात्प्रच्यवते तदनित्यं दृष्टम् । यदस्ति न तदात्मलाभात्प्रच्यवते । अस्तित्वं चात्मलाभात्प्रच्युतिरिति च विरुद्धावेतौ धर्मौ न सह सम्भवत इति । सोऽयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्त्तते तमेव व्याहन्तीति ॥ ६ ॥

(सू०) यस्मात्प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

( भा० )विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभावनवसितौ 'प्रक-

---

( ख० )धेन 'विरुद्ध'इति दृष्टान्तेनापि सूचितम् । यत्साध्यसाधनायोपन्यस्तो हेतुस्तद्विरुद्धमेव यः साधयति स विरुद्ध इति नवीनमतम् । तथा च–'साध्याभावव्याप्तो हेतुर्विरुद्धः, यथा शब्दोऽनित्यः कृतकत्वादिति' तर्कसङ्ग्रहे । वार्त्तिकेऽपि सूत्रस्य भाष्योक्तं व्याख्यानमुपवर्ण्य व्याख्यानान्तरमुपन्यस्तम्–'प्रतिज्ञाहेत्वोर्वा विरोधो विरुद्धो हेत्वाभास' इति । एतदेव नवीनमतस्य मूलमिवाभाति ।

अस्य हेत्वाभासस्यापसिद्धान्ताद् भेदः प्रदर्शितः परिशुद्धौ–स्वमते मानान्तरासिद्धस्यान्यथावचनमपसिद्धान्तः, वाक्यांशयोरेकार्थभावभावविषयत्वे विरोध इति ।

विमर्शाधिष्ठानाविति । 'विमर्शः' संशयः । तस्य विषयौ 'अनवसितौ' अनिर्णीतौ । तादृशयोरनिर्णीतयोरेव पक्षप्रतिपक्षशब्दवा-

---

(भा०चं०) सांख्यनैय्यायिकयोः ॥ ६ ॥

विमर्शाधिष्ठानौ संशयाधिष्ठानौ कर्माणि ल्युट् । गौणमिदं कर्मत्वम् अधिशीङ्स्थासां कर्मेतिसूत्रे । प्रभृति उत्तरं समीक्षणं निश्चिचिषा समीक्ष्यते

(भा०)रणम्' । तस्य 'चिन्ता' विमर्शात्प्रभृति प्राङ्निर्णयाद्यत्समीक्षणम् । सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्षसाम्यात् प्रकरणमनतिवर्तमानः 'प्रकरणसमो' निर्णयाय न प्रकल्पते ।

---

( ख० )च्यत्वम् । प्रक्रियते साध्यत्वेनाधिक्रियते वादिप्रतिवादिभ्यामिति 'प्रकरणम्' । तस्य प्रकरणस्य 'चिन्ता' विमर्शात् प्रभृति प्राङ्निर्णयात् समीक्षणम् आलोचनम्, जिज्ञासा । सा खलु तत्त्वानुपलब्ध्या कृता । अयं नित्यधर्मान्नित्यत्वाविनाभाविनोऽनित्यधर्माननित्यत्वाविनाभाविनो नैवोपलभमानः तत्र सन्दिग्धे । तदा जिज्ञासते । सैव नित्यधर्मानुपलब्धिरनित्यधर्मानुपलब्धिर्वा वादिना निर्णयायापदिश्यमाना प्रकरणसमो हेत्वाभासः । कुतः ? 'उभयपक्षसाम्यात्' । यथा नित्यत्वपक्षेऽनित्यधर्मानुपलब्धिस्तथाऽनित्यत्वपक्षे नित्यधर्मानुपलब्धिः । सेयं तत्त्वानुपलब्धिस्तथैवानिश्चायिका यथा 'प्रकरणम्' ।

व्युत्पत्तिमात्रं चैतत्प्रकरणसमपदस्य । प्रवृत्तिनिमित्तन्तु सत्प्रतिपक्षत्वम् । अन्यथाऽनैकान्तिकस्यापि 'प्रकरणसमत्वं' स्यात्, अनिश्चायकत्वसाम्यात् ।

---

(भा०चं०)अनेनेति व्युत्पत्तेः तथैव चिन्तापदमपि ज्ञेयम् । व्याख्यानव्याख्येययोः शब्दयोरेकार्थत्वात् यथा गच्छति गमनं करोति जानाति ज्ञानं करोतीत्यादिना तत्तत्क्रियोत्तराख्या तस्य कृत्याश्रयार्थस्य कृत्याश्रयार्थेन करोतिना व्याख्यानमिति ध्येयम् । इदं स्पष्टयति **जिज्ञासेति** । यत्कृता येन हेतुना कृता निणयार्थं निर्णयमुद्दिश्य प्रयुक्त इत्यपदिष्टपदव्याख्या । प्रकरणं प्रकरणस्य चिन्तामनतिवर्तमानो अनतिवर्तयन्नित्यर्थः प्रकरणे समः अविषमः साधकबाधकाभावादिति भावः । तदिदमाह **निर्णयाय न कल्पत इति** ।

उदाहरणमाह **प्रज्ञापनान्त्विति** । वाक्यविशेषपरं पदमिदं कर-

(भा०) प्रज्ञापनं त्वनित्यः शब्दो नित्यधर्मानुपलब्धेरित्यनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि ।

यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव । या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च सा प्रकरणं प्रवर्तयति । यथा शब्दे नित्यधर्मो नोपलभ्यते एवमनित्यधर्मोऽपि । सेयमुभयपक्षाविशेषा-

---

(ख०) प्रज्ञापनमिति । निदर्शनमित्यर्थः, प्रज्ञाप्यतेऽनेनेति व्युत्पत्त्या ।

सत्प्रतिपक्षस्यानैकान्तिकत्वशङ्कां व्यवच्छिनत्ति यत्रेति ।

संशयसम इति । संशयेन समः, अनिश्चायकत्वात् । एतदुक्तम्भवति । नहि नित्यधर्मानुपलब्धिरुभयसिद्धे नित्येऽस्ति, येन सव्यभिचारो भवेत् । नाप्यनित्यधर्मानुपलब्धिरुभयसिद्धेऽनित्येऽस्ति, येन सव्यभिचारो भवेत् । अपि तु परस्परमनयोर्नित्यधर्मानुपलब्ध्यनित्यधर्मानुपलब्ध्योः सत्प्रतिपक्षतयैव हेत्वाभासत्वमिति ।

---

(भा०चं०) णव्युत्पन्नत्वात् ।

सव्यभिचारस्य प्रकरणसमस्य च संशायकत्वाविशेषेपि को विशेष इत्यत आह **यत्रेति** । समानः प्रतिपक्षयोः सत्त्वेन दृष्टः धर्मः पक्षधर्मत्वेन दृश्यमानः तत् संशयकारणं हेतुत्वेन निश्चायकत्वेन उपादीयते प्रयोक्ष्यते न त्वयं निश्चायकः दृश्यमानव्यभिचारत्वात् इति परः संशेते तेनायं संशयसमः व्यभिचार एव । अस्मात् प्रकरणसमविशेषं दर्शयति **यात्विति** । विमर्शस्य विमष्टुः पुरुषस्य विशेषापेक्षिता विशेषदिदृक्षा उभयपक्षयोर्व्याप्यौ यौ विशेषौ तयोरनुपलब्धिः सा प्रकरणचिन्तां प्रवर्तयति करोति उत्पादयतीति यावत । उक्तं स्पष्टीकरोति **यथेति** ।

(भा०) नुपलब्धिः प्रकरणचिन्तां प्रवर्तयति। कथम्? विपर्यये हि प्रकरणनिवृत्तेः। यदि नित्यधर्मः शब्दे गृह्यते न स्यात्प्रकरणम्। यदि वा अनित्यधर्मो गृह्यते एवमपि निवर्त्तेत प्रकरणम्। सोऽयं हेतुरुभौ पक्षौ प्रवर्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते॥७॥

(सू०) साध्याविशिष्टः साध्यत्वात्साध्यसमः॥ ८॥

(भा०) द्रव्यं छायेति साध्यम्, गतिमत्त्वादिति हेतुः साध्ये-

---

(ख०) साध्येत्यादि सूत्रम्। यथा साध्येऽनिश्चितस्तथा पक्षेऽप्यनिश्चितो हेतुः 'साध्यसमः' 'असिद्ध' इति यावत्।

अनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धानां सङ्ग्रहः, तेषामसिद्धत्वेन साध्याविशिष्टत्वात्। अत्र च 'असिद्धः साध्यसमः' इति वक्तव्ये साध्याविशिष्टग्रहणमन्यतरासिद्धस्यापि सिद्धेः प्रागहेतुत्व-ज्ञापनार्थम्। अन्यथाऽत्यन्तासिद्ध एव साध्यसमो नान्यतरासिद्धः, तस्य कदाचित् सिद्धेः इति भ्रान्तिः स्यात्। साध्याविशिष्टत्वेन तु सोऽपि सङ्गृहीतः।

एवञ्चान्यतरासिद्ध एव गृहीतः स्यान्नेतरेऽसिद्धाः, तेषामत्यन्तासिद्धत्वेन साध्याविशिष्टत्वाभावात्। अत एवोक्तं साध्यत्वादिति। यदि हि साध्यन्नासिद्धम्भवेत् साध्यत्वादेव च्यवेत। न खलु सिद्धं साध्यते।

---

(भा०चं०) शिष्यः पृच्छति **कथमिति**। उत्तरं **विपर्यये हीति**। नित्यधर्मोपलब्धावनित्यधर्मोपलब्धौ वेत्यर्थः। नित्यधर्मो वाऽनित्यधर्मो नित्यत्वानित्यत्वव्याप्यधर्मः। प्रकरणनिवृत्तेः प्रकरणचिन्तानिवृत्तेः। तदिदमाह **यदीति**। गृह्यते निश्चीयते। उपसंहरति **सोयमिति**। सोयं प्रकरणसमः। न प्रकल्पते न शक्नोति॥ ७॥

**द्रव्यं छायेति**। छायेति पक्षः द्रव्यं द्रव्यत्वं वा साध्यमिति संशयः। सामानाधिकरण्येन द्रव्यमेव साध्यं तदुक्तं भाष्यकारेण "धर्म-

(भा०) नाविशिष्टः साधनीयत्वात्साध्यसमः । अयमप्यसिद्धत्वात्साध्यवत्प्रज्ञापयितव्यः । साध्यं तावदेतत्—किं पुरुषवच्छायाऽपि गच्छति, आहो स्विदावरकद्रव्ये संसर्पत्यावरणसन्तानादसन्नि-

---

( ख० ) तस्मात् साध्यत्वादेवासिद्धता । सा च कस्याचित्सर्वदा, कस्यचित्कादाचित्की इति सर्वेषामाविशिष्टत्वम् । अतो नाव्याप्तिः । नापि साध्यत्वस्यातिप्रसक्त्याऽतिव्याप्तिः, हेत्वाभाससामान्यलक्षणापेक्षित्वाद् विशेषलक्षणस्य । इति सूत्रार्थः ।

किम्पुरुषवदिति । अत्र भाष्यकारेण[१]स्वरूपासिद्धा[२]श्रयासिद्धा[३]न्यथासिद्धानां साधारणमुदाहरणमभिप्रेत्योक्तं द्रव्यं छाया गतिमत्त्वादिति । तेषां विभजनं यथा वार्त्तिके । [१]यथैव द्रव्यत्वं छायायां साध्यं तथा गतिमत्त्वमपीति स्वरूपासिद्धिः । [२]देशान्तरदर्शनाद्यदि कश्चिच्छायाया गतिमत्त्वं साधयेत्, तदाऽयं देशान्तरदर्शनमाश्रयासिद्धो हेतुः स्यात्—सत्येव द्रव्यत्वे छायाया देशान्तरे दर्शनं स्यात्, द्रव्यभावस्त्वसिद्धः । [३]उपेत्यापि देशान्तरे दर्शनं, तस्यान्यथासिद्धिः । छायाया यद्देशान्तरे दर्शनं तत् गतिमत्त्वादन्यथापि भवति । अतो नावश्यं गतिमत्त्वमेव साधयति । आवरके द्रव्येऽपसर्पति तेजसोऽसन्निधिविशिष्टं द्रव्यं यदुपलभ्यते तदेव छायेत्युच्यते—इत्यादि वार्तिके स्पष्टम् ।

---

(भा०चं०)विशिष्टो धर्मी वा साध्यः यथा शब्दोऽनित्यः कृतकत्वादिति"। धर्मिविशिष्टो धर्मो वा साध्यः शब्दस्यानित्यत्वम् कृतकत्वादिति । छाया द्रव्यमिति साध्यमिदं मीमांसकादेः नैय्यायिकादिप्रतिहेतुरयमसिद्धः । स एष आह **अयमपीति** । संशयविषयः स्वकोटिं दर्शयति **आहोस्विदिति** । आवरकद्रव्ये पुरुषशरीरादौ संसर्पति गमनं कुर्वेति । पुरुषस्य गमनकर्तृत्वेऽपि विभुद्रव्यत्वेन छायाप्रयोजकत्वं नास्ति शरीरादेरविरलमूर्तद्रव्यत्वेन छायाप्रयोजकत्वमिति ज्ञेयम् । विरलानि

(भा०) धिसन्तानोऽयं तेजसो गृह्यत इति । सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासन्निधिरेवाविच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः ॥ ८ ॥

( ख० ) तत्र परिशुद्धिः—पक्षानिश्चयादाश्रयासिद्धिः, लिङ्गस्यैवानिश्चयात् स्वरूपासिद्धिः, व्याप्तेरनिश्चयाद् व्याप्यत्वासिद्धिः । एतेषां चानिश्चयः सन्देहाद्वाऽभावनिश्चयाद्वेति ।

(भा०चं०)द्रव्याणि जलवायुतेजांसि न तेषां छायाऽस्ति कदाचिज्जलधारादेर्यदि छाया दृश्यते तदा पार्थिवसम्बन्धादेवेति मन्तव्यम्। शरीरे कृतिश्च प्रयत्नवदात्मसंयोगः । व्यापारमात्रस्य कृतित्वात् न मन्तव्यं कृतिर्यत्न एवेति । उत्पादना हि सा आवरणमात्रप्रतिषेधः प्रभाप्रतिषेधो वा । स च संयोगध्वंसस्तत्प्रागभावो वा नात्यन्ताभावः प्रकृते सम्भवति । तस्य त्रैकालिकत्वात् । प्रागभावप्रध्वंसाभावाभ्यां तस्य विरोधात् । ये तु भूतलादौ घटात्यन्ताभावं कल्पयित्वा तस्य चाविरोधं ताभ्यां कल्पयन्ति तेषां भाष्यकारादिमतविरोधात् गौरवाच्च सा कल्पना हेया । केचिच्च सामयिकमत्यन्ताभावमुत्पत्तिविनाशशालिनं कल्पयन्ति भूतले घटो नास्तीति नासीदित्यादिप्रतीतेश्च । तदपि मन्दम् यथाकालं प्रागभावप्रध्वंसाभ्यामेव प्रतीत्युपपत्तेः । ननु घटादेः प्रागभावः स्वोत्पत्त्यधिकरणेऽस्ति कथं भूतलादौ स प्रतीयतेति चेत् नाभावानवबोधात् । भावो नाम नोत्पत्तिरिहोक्ता किन्तु सम्बन्धः तस्य प्राक्कालीनः प्रतिषेधः प्रागभावः तेन संयोगप्रागभावोपि घटप्रागभाव इत्युक्तेः। इत्यलं लक्षणातिशयेनेति विरम्यते । तस्यातपादेश्च प्रतिपन्नसन्तानः समूहः घनीभूतभावो बालसूर्यातपप्रभयोर्मिलितः यो वाऽऽतपप्रतिषेध एव प्राङ्गणादौ न प्रभाप्रतिषेधः । छायावति तत्र वस्त्वन्तरस्य दर्शनात् । दीपप्रभावति गृहादौ तु प्रभाप्रतिषेधश्छाया तत्रातपासम्भवात् । प्रतिषेध-

( सू० ) कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

(भा०) कालात्ययेन युक्तो यदर्थस्यैकदेशोऽपदिश्यमानस्य

---

( ख० ) कालात्ययेनेति । यस्य अपदिश्यमानस्य हेतुत्वेनो-पन्यस्तस्य अर्थस्य धर्मिणः एकदेशः कालात्ययेन युक्तः स कालात्ययापदिष्टः कालातीत इत्युच्यते इति सम्बन्धः ॥

अस्यापि हेत्वाभासस्य विषये प्राचीननवीनयोर्भेद इवाभाति । तथाहि कालात्ययेन युक्तो यस्य हेतोरनुरूप एकदेशो हेतुविशेषणमिति यावत् स कालात्ययापदिष्टः । यथा 'नित्यः शब्दः संयोगव्यङ्ग्यत्वा-दि'त्यत्र शब्दस्योपलब्धिकाले संयोगो नास्ति । सोऽयं संयोगो हेतु-विशेषणत्वेनोपात्त उपलब्धिकालमत्येति । यस्मिन् काले शब्द उपल-भ्यते तस्मिन् काले संयोगो नास्तीति भवत्ययं कालात्ययापदिष्ट इति भाष्यवार्तिकयोः स्पष्टम् ॥ नवीनमतेन तु-यत्र प्रत्यक्षानुमानागमविरोधः 'अनुष्णोऽग्निर्द्रव्यत्वादिति' 'अश्रावणः शब्दो गुणत्वादिति' 'शुचि न-रशिरःकपालं प्राण्यङ्गत्वादिति' च सर्वः प्रमाणतो विपरीतनिर्णयेन

---

(भा०चं०)सन्तान एवासन्निधिः सन्तान इत्याह भाष्यकृत् सन्निधिर्भावः असन्निधिरभावः तेजसः प्रभातपान्यतरस्य गृह्यते साक्षात्क्रियते द्रव्येण देहादिना आवृयते असम्बन्धः क्रियते असन्निधिरसंयोगः अविच्छिन्नो घनीभूतः । एकवचनं सामान्याभिप्रायेण । यः सन्तान इत्युक्तः तदि-दमावरणं व्याचष्टे **आवरणन्निवृत्ति** । प्राप्तिरत्र संयोगः तस्य प्रतिषेधः प्रध्वंसः प्रागभावो वा ॥ ८ ॥

कालात्ययेन विशिष्टस्य हेतोः । स्वविशेषणविशेषान्यतरकाला-त्ययेन युक्तः तद्वृत्तिरित्यर्थः । यदर्थस्येति कर्मधारयो लिङ्गावोधकः । एकदेशो विशेषणं विशेष्यं वा । अपदिश्यमानस्य कथ्यमानस्य व्यक्ते

(भा०)स कालात्ययापदिष्टः कालातीत इत्युच्यते । निदर्शनम्-नित्यः शब्दः संयोगव्यङ्ग्यत्वाद् रूपवत् । प्रागूर्द्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते । तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते, दारुपरशुसंयोगेन वा । तस्मात्संयोगव्यङ्ग्यत्वान्नित्यः शब्द इत्ययमहेतुः कालात्ययापदेशात् । व्यञ्जकस्य संयोगस्य कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति । सति प्रदीपघटसंयोगे रूपस्य ग्रहणं भवति, न निवृत्ते संयोगे रूपं गृह्यते । निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले, सेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति

---

(ख०) सन्देहविशिष्टं कालमतिपततीति सोऽयं कालात्ययेनापदिश्यमानः कालातीत इति-तात्पर्यं स्पष्टम् ॥

अनयोर्मतयोरसामञ्जस्यं विभाव्य तात्पर्यकारो हठादिव भाष्यपङ्क्तिमन्यथा व्याख्यातवान् । तद्यथा-भाष्यकारः सूत्रं स्वपरमतसंश्लिष्टं व्याचष्टे । (१)कालात्ययेन संशयकालात्ययेन युक्तो यस्यार्थैकदेशः । धर्माविशिष्टो हि धर्मी हेतोरपदिश्यमानस्यार्थः । स ह्यर्थ्यते हेतुना । तस्यैकदेशः साध्यधर्मः । स हि धर्मिणि बलवता प्रमाणेन तद्विपरीतधर्मनिर्णयं कुर्वतः संशयकालमतिपातितः । स तादृशो हेतुः कालात्ययापदिष्टः कालातीत इति स्वमतेनार्थः । अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्यान्नोदाहृतम् । (२)परमते तु कालात्ययेन युक्तो यस्य हेतोरनुरूप एकदेशो हेतुविशेषणं स कालात्ययापदिष्ट इति योजना । परमतेनैव निदर्शनमाह निदर्शनमिति ॥

---

(भा०चं०)ज्ञानात् । कारकपदोत्तरभावप्रत्ययेन क्रियोच्यत इत्यभिप्रायेणेदमुक्तम् । केचित्तु सूत्रमिदमन्यथा व्याचक्षते । प्रतिज्ञोत्तरमुदाहरणादिपूर्वकालो हेतुवचनस्य तं कालमत्येति हेतुवचनं कालात्ययापदिष्टो हेत्वाभास

(भा०)न संयोगनिर्मिता भवति । कस्मात् ? कारणाभावाद्धि कार्याभाव इति । एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति ।

अवयवविपर्यासवचनं न सूत्रार्थः । कस्मात् ? ।

---

(ख०)अत्रास्य स्वपरमतविभागस्य मूलम्मृग्यम् । उक्तयोश्च मतयोः कतरद् भाष्यपङ्क्त्या स्पष्टं सूचितं कतरच्च हठादिव तत्रारोपितम्—स्वमतेनोदोहरणमनुपन्यस्य परमतेनैवोदाहरणमुपन्यस्तवान् भाष्यकार इति भाष्यकाररीत्यनुकूलन्नवेत्यत्र च—सुधिय एव प्रमाणम् । तात्पर्यमतेनार्थशब्दः पक्षपरम् भाष्यमतेन तु हेतुपरमिति विवेकः । हेतुवद् यद् आभासते तदेव हेत्वाभासनामार्हति । नवीनाभिमतविरुद्धे हेतौ हेतोराभासोऽपि नास्ति । भाष्याभिमते त्वांशिक्येवानुपपत्तिरिति भवत्येवाभासो हेतोः ॥

भाष्योक्तलक्षणे कैश्चिदाक्षिप्तम्—असिद्धाविशेषणतयाऽयं हेत्वाभासोऽसिद्ध एव स्यान्न हेत्वाभासान्तरमिति । परमैतैराक्षेप्तृभिरिदं विस्मृतं यद् भाष्यकारादिभिः प्राचीनैर्भागासिद्धो हेत्वाभासत्वेन नोद्भावितः । अथ च भागासिद्धस्यैव भाष्योक्तकालातीतेऽन्तर्भावसम्भवः ।

अत्र बौद्धनैयायिकेन सूत्रमन्यथा व्याख्याय दूषितम् । तद्यथा—प्रतिज्ञानन्तरं हि हेतोः 'कालः' । तमतीत्य हेतुः पश्चादपदिश्यमानः कालातीतो भवति । यथा अनित्यः शब्दो घटादिवदित्युक्ते—'कस्मात्' इत्यनुयुक्तो ब्रूते—'कृतकत्वात्' इति । अयमेव हेतुः 'काला-

---

(भा०चं०)इति तन्निषेधति **अवयवेति** । न सूत्रार्थः न सूत्रतात्पर्यविषयः किन्तु हेतुवचनार्थ एव । पृच्छति **कस्मादिति** । अस्यायमाशयः हेतुशब्दस्तु उभयत्र प्रयुज्यते हेतौ तद्वचने चेति । अतो हेतुवचनमपि विपरीतकाले प्रयुक्तं कालात्ययापदिष्टो हेत्वाभासो भवत्त्येवेति कथं

(भा०) यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्॥

इत्येतद्वचनाद्विपर्यासेनोक्तो हेतुरुदाहरणसाधर्म्यात्तथा वैधर्म्यात्साध्यसाधनं हेतुलक्षणं न जहाति। अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति।

'अवयवविपर्यासवचनमप्राप्तकालम्' (५ २.११) इति निग्रहस्थानमुक्तं तदेवेदं पुनरुच्यत इति। अतस्तन्न सूत्रार्थः॥९॥

---

(ख०) तीत' इति॥

एवं सूत्रार्थमुपवर्ण्य तत्राक्षेपः कृतः। कस्मादिति यः प्रश्नः स किं निराकाङ्क्षे वादिन्युद्भवत्युत साकाङ्क्षे। यदि निराकाङ्क्षे-'न्यूनम्' एवास्य निग्रहस्थानम्, न हेत्वाभासः, हेतोः सर्वथाऽप्रयोगात्। प्रयुक्तो हि हेतुर्हेत्वाभासः स्यान्नाप्रयुक्तः। अथ साकाङ्क्षे वादिनि प्रतिवादिनः प्रश्नः, तदा पश्चादपि प्रयुक्तोऽसौ हेतुरेव। न ह्यसौ तदा नं साध्याविनाभूतोऽपक्षधर्मो वा। तस्मान्न कालातीतो नाम हेत्वाभासोऽस्ति।

तदेतद् दूषणमेतद्व्याख्यानानभ्युपगमेन परिहरति-अवयवेति।

तदेवेदमिति। यद्युक्तार्थमेव सूत्रं स्यात्तदा यदेवाप्राप्तकालन्निग्रहस्थानतयोक्तन्तदेव कालातीताभिधहेत्वाभासत्वेनोक्तं स्यात्ततश्च पुनरुक्तिरेव स्यादित्यर्थः॥

---

(भा०चं०) ज्ञातव्यमर्थपरमेवेति। तत्र ज्ञापनमाह **यस्येति**। एतद्वचनात् न्यायतत्त्वविदामिति शेषः॥ ९॥

इति श्रीभाष्यचन्द्रे हेत्वाभासप्रकरणभाष्यचन्द्रिका।

## (३) छलनिरूपणम्।

(भा०) अथ छलम्—

(सू०)वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

(भा०)न सामान्यलक्षणे छलं शक्यमुदाहर्तुम् । विभागे तूदाहरणानि ॥ १० ॥

(भा०) विभागश्च—

तत्रिविधम्—वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥

(भा०)तेषाम्—

---

(ख०) अथ छलमिति । साधनवादी प्रमादी प्रतिवादी वा सदुत्तरसमाधानयोरस्फूर्तौ जिगीषुस्तदाभासमपि ब्रूयादिति तदाभासव्युत्पादनावसरः । तत्रापि जातेः स्वपक्षव्याघातापादकत्वेन जघन्यत्वात्, छलस्य च तात्पर्यतो दुष्टत्वेऽपि वचनतोऽदुष्टत्वात्, अस्फूर्तिदशायामपि तदेव प्रथमं प्रयोक्तव्यम् । तस्याप्यस्फूर्तौ जातिरिति जातेः पूर्वं छलोद्देशः ।

अर्थविकल्पेति । यथा वक्तुरभिमतस्ततो विरुद्धः 'अर्थः'—तस्य 'विकल्पः' कल्पना—सैव 'उपपत्तिः' तयेत्यर्थः ।

---

(भा०चं०) अथ छलं निरूप्यत इति शेषः। वचनं वादिवचनं विहन्ति विपरीततात्पर्यकं करोति ज्ञापयतीति यावत्। करोतेराख्यातस्यानच्श्च प्रतिपादनोत्पादनार्थकत्वं यथासम्भवं तत्र तत्र ज्ञातव्यं व्युत्पित्सुभिरिति । विहन्ति येन वचनविशेषेण परवचनं स वचनविशेषो वचनविघातच्छलम् । अर्थविकल्पस्तदर्थविशेषः तस्योपपत्तिरसम्भवः तया विभागे विशेषणज्ञापने सति तुशब्दोऽविभागं व्यावर्तयति । उदाहरणानि शक्यानीति शेषः ॥ १० ॥

विभागश्च क्रियत इति शेषः ॥ ११ ॥

( सू० )अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तर-कल्पना वाक्छलम् ॥ १२ ॥

( भा० )नवकम्बलोऽयं माणवक इति प्रयोगः। अत्र नवः कम्बलोऽस्येति वक्तुराभिप्रायः। विग्रहे तु विशेषो, न समासे। तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं नव कम्बला अस्येति तावदभिहितं भवतेति कल्पयति, कल्पयित्वा चासम्भवेन प्रतिषेधति—एकोऽस्य कम्बलः कुतो नव कम्बला इति। तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति।

अस्य प्रत्यवस्थानम्——सामान्यशब्दस्यानेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम्। नवकम्बल इत्यनेकार्थाभिधानम्—नवः कम्बलोऽस्येति नव कम्बला अस्येति। एतस्मिन्प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद्भवताऽभिहितं तच्च न सम्भवतीति। एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्त-

---

(भा०चं०)वाक् छलं समासादिवृत्तिशब्दविषयमित्याह **नवकम्बलोयमिति**। विग्रहस्थितमितिपदमर्थपरम् वक्तुरिति कर्तरि षष्ठी। अभिप्राय इति कर्मणि घञ्। विग्रहे तु विग्रह एव सप्तमीयं विषये। **अनेकार्थाभिधानमिति**। अनेकत्वं विशेषणं न तु विशेष्यं। अनेकत्वं नानात्वमर्थस्य। एकत्वनवत्वसंख्याभेदात्। तदिदं नानात्वं विशेषणविशेषणे। कथं वृत्तिशब्देन पुरुषो वाच्य इति चेत्। गौण्येत्यवेहि। छलपरिहारोपायं दर्शयति **एतस्यामिति**। मिथ्याभियोगो वक्तुरनभिमतारोपः। तन्मात्रं तद्वचनमित्यर्थः। शब्दार्थसम्बन्धः शब्दार्थयोरभिधानाभिधेयभावः(१) अभिधानाभिधेयनियमः अभिधानस्याभिधेयविषये सम्भ-

---

( टि० ) १ अभिधानाभिधेययोर्यो नियमोऽयमेवार्थोऽस्य शब्दस्य

(भा०)न्यः। यस्माद्विशेषो विज्ञायतेऽयमर्थोऽनेनाभिहित इति। स च विशेषो नाऽस्ति। तस्मान्मिथ्याभियोगमात्रमेतदिति।

प्रसिद्धश्च लोके शब्दार्थसम्बन्धोऽभिधानाभिधेयनियमनियोगः। अस्याभिधानस्यायमर्थोऽभिधेय इति समानः सामान्यशब्दस्य, विशेषो विशिष्टशब्दस्य। प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाप्रयुक्तपूर्वाः। प्रयोगश्चार्थसम्प्रत्ययार्थः। अर्थप्रत्ययाच्च व्यवहार इति। तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्या-

(ख०) यस्मादिति—वचनादिति शेषः।

अभिधानेति। अभिधानाभिधेययोर्यो 'नियमः'—अयमेवार्थोऽस्य शब्दस्य, अयं शब्दोवाचकोऽस्यैवार्थस्येति—तत्र यः पुरुषस्य 'नियोगः' अस्मादयमेव बोद्धव्य इत्याकारः।

समान इति। सामान्यशब्दस्य समानः विशेषशब्दस्य च विशेषो नियोग इति योजना।

अर्थगत्यर्थ इति। अर्थावगमार्थे—इति यावत्।

(भा०चं०) वति नियमस्तात्पर्यं वक्तुरभिप्रायस्तेन नियुज्यतेऽत्र श्रोतेति नियोगः अधिकरणे घञ्। श्रोत्रा वक्तुस्तात्पर्यमनतिक्रम्य शब्दार्थो बोद्धव्यः इति नियोजना। लोके न्यायविदीत्यर्थः। लोकते न्यायेनेति लोकः। समानोऽर्थो विशेषोऽर्थ इत्यनुषङ्गः। समानोऽविवक्षितविशेषः कथमेकविधशब्देन नानाविधोऽर्थो वाच्य इत्यत आह **प्रयुक्तेति**। पूर्वं प्रयुक्ताः प्रयुक्तपूर्वाः। सहसुपेति समासः। भूतपूर्वे चरडितिसूत्रे भगवता पाणिनिना पूर्वपदस्य पूर्वनिपातस्य प्रदर्शनात् एवं दृष्टपूर्वादिशब्दाः साधवो ज्ञेयाः। पूर्वमिति द्वितीयान्तमतीतकालवाचि काल-

(टि०)अयं शब्दो अस्यैवार्थस्येति तत्र यः पुरुषस्य नियोगो अस्मादयमेव बोद्धव्य इत्येवमाकारः इति तात्पर्यटीकाकृतः।

(भा०) सामान्यशब्दस्य प्रयोगनियमः। अजां ग्रामं नय सर्पिराहर ब्राह्मणं भोजयेति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते। सामर्थ्याद्यत्रार्थक्रियादेशना सम्भवति तत्र प्रवर्तन्ते। नार्थसामान्ये क्रियादेशना सम्भवेत्। एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः सम्भवति नवः कम्बलोऽस्येति तत्र प्रवर्तते। यस्तु न सम्भवति नव कम्बला अस्येति तत्र न प्रवर्तते। सोऽयमनुपपद्यमानार्थकल्पनया परवाक्योपालम्भस्ते न कल्पत इति ॥ १२ ॥

---

( ख० ) अर्थावयवेष्विति—अर्थविशेषेष्वित्यर्थः। विशेषो हि सामान्यस्यावयवो भवति।

न कल्पत इति। न सङ्केतकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः कञ्चिदर्थं शृङ्गग्राहिकतया बोधयति। अपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारी विशेषे वर्तते। तस्मान्नैष प्रतिपादयितुरपराधो यदविशेषशब्दैर्विशेषान्तरं प्रतिपादयति। किन्तु सङ्केतस्यैवायमपराधो यो विशेषमपहाय सामान्ये वर्तते। तस्माद्यथासङ्केतम्बोधयन्नापरा-

---

(भा०चं०) ध्वनोरत्यन्तसंयोग इत्यधिकरणे द्वितीया। अर्थे स्वस्वविवक्षितेऽर्थे प्रयुज्यन्ते आधुनिकैरिति शेषः। स्वेच्छयाऽर्थान्तरकल्पनान्यायत्वान्न कर्तव्येत्याह—**नाप्रयुक्तेति**। अर्थगत्यर्थे अर्थप्रत्ययप्रयोजनके। सामर्थ्यात् शब्दशक्तेः द्वय्यपि वृत्तिः शब्दस्य सहकारिकारणतया सामर्थ्यशक्तिपदाभ्यामुच्यत इति बोध्यम्। अर्थावयवेषु अर्थविशेषेषु। अर्थक्रिया आहरणादिरूपा देशना नियोजना। **प्रवर्तनेति**। नियोज्ये इति शेषः। सर्वोपि नियोज्यं स्वार्थं साधयतीत्याह—**एवमिति**। प्रवर्तते प्रवृत्तिं प्रमां करोति। तेन कल्पत इति पूर्ववादिकर्तृकोपालम्भः ॥ १२ ॥

(सू०)सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थक-
ल्पना सामान्यच्छलम् ॥ १३ ॥

( भा० ) अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्यु-
क्ते कश्चिदाह सम्भवति ब्राह्मणे विद्याचरणसम्पदिति । अस्य
वचनस्य विघातोऽर्थविकल्पोपपत्त्याऽसम्भूतार्थकल्पनया क्रिय-
ते—यदि ब्राह्मणे विद्याचरणसम्पत्सम्भवति व्रात्येऽपि सम्भवे-
त्, व्रात्योऽपि ब्राह्मणः, सोऽप्यस्तु विद्याचरणसम्पन्न इति ।
यद्विवक्षितमर्थमाप्नोति चात्येति च तदातिसामान्यम् । यथा
ब्राह्मणत्वं विद्याचरणसम्पदं क्वचिदाप्नोति क्वचिदत्येति । सा-
मान्यनिमित्तं छलं सामान्यच्छलमिति ।

---

(भा०चं०) विघातेति भावघञन्तम् । **असम्भूतार्थकल्पनये-
ति**। क्रियत इति क्रिया क्रियाकारकयोः पृथक्त्वप्रतिपादनात् । उपनयन-
पूर्वकगायत्रीमात्रपरिग्रहेणापि हीने । सम्भवेत् स्यात् । व्रात्योपि ब्राह्मणो
जात्येति शेषः । वक्तुरभिप्रेतो ब्राह्मणः सर्वसंस्कारगुणवान् । ब्राह्मणो हि
द्विविधो जात्या गुणेन चेति गुणश्च यथाविधिर्गर्भाधानादिः साङ्गवेदा-
ध्ययनपूर्वकस्तदर्थज्ञानानुष्ठानपर्यन्तः नैष्ठिकब्रह्मचारिणो विचारणस-
म्पत्तियोगात् । अयन्तु जातिमात्रब्राह्मणत्वमादाय दूषयति । सूत्रस्थ-
सामान्यपदं तत्परमिति व्याचष्टे । **यद्विवक्षितमर्थमित्यादि-
ना** । अर्थं विद्याचारसम्पत्तिमाप्नोति सामानाधिकरण्येन सम्बन्धेन स-
म्बध्नाति अत्येति तदभावं तेनैवाप्नोति यत्तदतिक्रान्तं व्यभिचारिसामा-
न्यमतिसामान्यम् । उदाहरति **यथेति** । क्वचिदुक्तसंस्कारवति पुरुषे ।
सामान्यनिमित्तमतिसामान्यप्रयुक्तं सामान्यं निमित्तं यस्येति विग्र-
हात् सामान्यच्छलमिति मध्यमपदलोपीसमासः ।

(भा०)अस्य च प्रत्यवस्थानम्--अविवक्षितहेतुकस्य विषयानुवादः, प्रशंसार्थत्वाद् वाक्यस्य । तदत्रासम्भूतार्थकल्पनानुपपत्तिः। यथा सम्भवन्त्यस्मिन्क्षेत्रे शालय इति—अनिराकृतमविवक्षितं च बीजजन्म—प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते । सोऽयं क्षेत्रानुवादो—नास्मिन् शालयो विधीयन्त इति । बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता । एवं सम्भवति ब्राह्मणे विद्याचरणसम्पदिति सम्पद्विषयो ब्राह्मणत्वम्, न सम्पद्धेतुः । न चात्र हेतुर्विवक्षितः । विषयानुवादस्त्वयं प्रशंसार्थत्वाद् वाक्यस्य—सति ब्राह्मणत्वे सम्पद्धेतुः समर्थ इति । विषयं च प्रशंसता वाक्येन यथा हेतुतः फलानिर्वृत्तिर्न प्रत्याख्यायते । तदेवं सति वचन-

---

( ख० ) ध्यः प्रयोक्तेति ।

विषयानुवाद इति । सम्पद्विषयस्य ब्राह्मणत्वस्यानुवाद इत्यर्थः ।

नास्मिन्निति । एतादृशम्प्रशस्तं क्षेत्रं यदत्र बीजवपनमपि विना शालयो रोहन्त्येवेत्यर्थः ।

---

(भा०चं०)प्रत्यवस्थानं निराकरणम्।अविवक्षितहेतुकस्याविवक्षितहेतुभावस्य ममेति शेषः।स्वाभिप्रायमाह-**प्रशंसार्थत्वादिति**।तत्तस्मात्। अत्र यथा विवक्षिते क्षेत्रे गुणवत्यामार्जितशालौ भूमावित्यर्थः।सम्भवन्ति शंसन्ते। अनिराकृतं न सम्भवन्तीति न प्रतिषिद्धम्। प्रवृत्तिविषयः प्रवृत्तियोग्यं क्षेत्रं विवक्षितगुणवती भूमिः। प्रशस्यते स्मर्यते निर्वृत्तिर्निष्पत्तिः सती विद्यमाना। पक्षेप्यतिदिशति। **एवं ब्राह्मण इति** । सम्पद्विषयः सम्वादनाविषयः विद्याचारसम्पादनायोग्यतावच्छेदकमित्यर्थः। न सम्पद्धेतुर्विवक्षित इति शेषः। हेतुपदमत्र ज्ञापकपरम् । यद्वा संपद्विषयो विद्याचारसम्पद्धेतुकं न तद्धेतुर्विवक्षित इति शेषः। संपद्धेतुर्विद्याचारसम्प-

(भा०)विघातोऽसम्भूतार्थकल्पनया नोपपद्यत इति ॥ १३ ॥

( सू० ) धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

( भा० ) अभिधानस्य धर्मो यथार्थप्रयोगः । धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः । तस्य निर्देशे धर्मविकल्पनिर्देशे ।

( ख० ) धर्मेत्यादि सूत्रम् । वादी स्वोक्तौ लक्ष्येऽर्थे पदम्प्रयुङ्क्ते प्रतिवादी तत्पदस्य वाच्यार्थतात्पर्येण लक्ष्यम्प्रतिषेधति । तदेतदुपचारच्छलमिति भाष्यानुसारी सूत्रार्थः । 'न तदर्थान्तरभावादिति' षोडशसूत्रवार्तिके वाक्छलोपचारच्छलयोर्भेदवर्णने —'एकत्र ( वाक्छले ) धर्मः प्रतिषिध्यते, एकत्र ( उपचारच्छले ) धर्मी' इत्युक्तम् ॥ तदनेनास्य सूत्रस्याक्षरानुसार्यन्य एवार्थः प्रतिभाति । 'धर्मविकल्पनिर्देशे'- यदा वादी धर्मपरं वचनं प्रयुङ्क्ते—'अर्थसद्भावनिषेधः' प्रतिवादी तु अर्थस्यैव धर्मिणः, न धर्मस्य, सद्भावं निषेधति—तदा 'उपचारच्छलम्' इति ।

अभिधानस्येति । 'अभिधानस्य' शब्दस्य 'धर्मः' प्रयोगः । तस्य 'विकल्पः' द्वैविध्यम् । तस्य द्विविधः प्रयोगः, प्रधानो भाक्तश्च । तत्रापि प्रधान एव 'यथार्थ' औत्सर्गिक इति भावः । तस्य तु क्वचिदपवादाद्भाक्तप्रयोगोऽप्याश्रियते ॥

तस्येति । 'तस्य' धर्मविकल्पस्य 'निर्देशे' धर्मविकल्पनिर्देशे इति सूत्रसमासविग्रहः ॥ किन्तु वाक्ये यतोऽर्थस्य निर्देशो न भवत्यतोऽत्रारुचिस्तात्पर्यकारस्य । यस्य मतेन—'धर्मविकल्पेन निर्देशे'

(भा०चं०)द्वेतुः । उपनीयवेदाध्ययनादिसमर्थः तत्फलद इत्यर्थः॥१३॥

धर्मः स्वभावः । यथार्थमर्थमनतिक्रम्य स्वार्थ एव प्रयोग इत्यर्थः । स्वार्थश्च द्विविधो गौणो मुख्यश्चेति । तत्र गौणमाह **अन्यत्र प्रयोग**

(भा०) यथा मञ्चाः क्रोशन्तीति-अर्थसद्भावेन प्रतिषेधः मञ्चस्थाः पुरुषा क्रोशन्ति न तु मञ्चाः क्रोशन्ति ।

का पुनरत्रार्थविकल्पोपपत्तिः ?

अन्यथा प्रयुक्तस्यान्यथाऽर्थकल्पनम् । भक्त्या प्रयोगे प्राधान्येन कल्पनमुपचारविषयं छलमुपचारच्छलम् । उपचारो नीतार्थः सहचरणादिनिमित्तेन, अतद्भावे तद्वदभिधानमुपचार इति ।

---

( ख० ) इत्येव विग्रहः । तत्र च 'निर्देशे' इत्यस्य 'वाक्ये' इत्यर्थः । निर्दिश्यतेऽनेनेति व्युत्पत्त्या ॥

कापुनरिति । अर्थविकल्पोपपत्तेः सर्वत्र छलेष्वावश्यकत्वम् । यथोक्तं छलसामान्यलक्षणे दशमे सूत्रे ।

ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगो हेतुः सर्वं सर्वत्र प्रयुज्येतेत्यत आह नीतार्थ इति । प्रापितार्थः इति यावत् ।

अन्यत्र दृष्टस्यान्यत्र प्रयोगः सम्बन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः

---

(भा०चं०) इति । तस्य गौणस्य निर्देशे प्रयोगे वाक्ये इति यावत् । उदाहरति **यथेति** । अत्र पुरुषमञ्चयोः सादृश्यं गुणः । वृष्टिवातादिभिरविकृतत्वं तत् । **अर्थसद्भावेनेति** । विशेषणे तृतीया । तत्कर्मकप्रतिषेध इत्यर्थः । प्रतिषेध इति करणघञन्तम् । तमुदाहरति **मञ्चस्था इति** ।

अर्थासत्त्वमाशङ्क्य पृच्छति **कापुनरिति** ।

अन्यथा गौण्या वृत्त्या प्रयुक्तस्य शब्दस्य अन्यथा मुख्यया वृत्त्यार्थकल्पनं अर्थप्रयोगकल्पनं तदिदमाह **भक्त्या इत्यादि** । उपचारविषयम् उपमया भक्त्या चार्यते उच्चार्यत इत्युपचारः स विषयो यस्य छलस्य तत्तथा । उपचारछलमिति सप्तमीतत्पुरुषः । नीतोऽन्यत्र प्रापितोऽर्थो मञ्चत्वादिर्येन स तथा । **सहचरणादिनिमित्तेनेति** । आदिपदमिदं

(भा०)अत्र समाधिः—प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरभ्यनुज्ञा प्रतिषेधो वा, न च्छन्दतः। प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोकसिद्धः। सिद्धे प्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा, न च्छन्दतः। यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा, न च्छन्दतः। अथ गुणभूतं तदा गुणभूतस्य। यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति, स्वमनीषया प्रतिषेधोऽसौ भवति न परोपालम्भ इति ॥ १४ ॥

(सू०)"वाक्छलमेवोपचारच्छलं तदविशेषात्" ॥१५॥

( ख० ) अत्र समाधिरिति—प्रतिविधानमुपचारच्छलस्येति शेषः।
छन्दतः इत्यस्य स्थाने 'छलतः' पाठः इति केचित् ॥
छन्दतः' स्वेच्छयेत्यर्थः। छद्मनेति तात्पर्यक्तः।
वाक्छलमिति सूत्रम्। परीक्षापर्वणः सन्निधानात् तदर्थं लक्षण-

(भा०चं०) सहचरणादिसूत्रस्थप्रकृतोपयुक्तानिमित्तमाह। तत्सूत्रं यथा सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यः ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावे तदुपचार इति। अत्र प्रयोगः सहचरणाद्याष्टिं भोजयेदिति १ स्थानान्मञ्चाः क्रोशन्तीति २ तादर्थ्यात् व्यूह्यमानेषु तृणविशेषेषु कटं करोतीति ३ वृत्ताद्यमो राजा कुबेरो राजेति ४ मानात् आढकं सक्तव इति ५ धारणात् तुला चन्दनमिति ६ सामीप्यात् गङ्गायां गावश्चरन्तीति ७ योगात् नीलः शाटक इति ८ साधनात् अन्नं प्राणा इति ९ आधिपत्यात् अयं पुरुषो न च कुलमिति १० । न छन्दतः न स्वेच्छया स्वमनीषया न तु न्यायेन परोपालम्भः त्वया युक्तमित्यादिरूपं वाच्यम् ॥ १४ ॥

( भा० ) "न वाक्छलादुपचारच्छलं भिद्यते, तस्याप्यर्थान्तरकल्पनाया अविशेषात् । इहापि स्थान्यर्थो गुणशब्दः, प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यत इति" ॥ १५ ॥

(सू०) न, तदर्थान्तरभावात् ॥ १६ ॥

( भा० ) न वाक्छलमेवोपचारच्छलं तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात् । कुतः ? अर्थान्तरकल्पनातः । अन्या ह्यर्थान्तरकल्पना अन्योऽर्थसद्भावप्रतिषेधः इति ॥ १६ ॥

---

( ख० ) पर्वण्यपि सूत्रकारश्छललक्षणं परीक्षितुमुपक्रमते ।

इहापीति । यथा वाक्छले नवीनार्थो नवशब्दः सङ्ख्याभेदे विकल्पितस्तथोपचारच्छलेऽपि मञ्चस्थपुरुषार्थो मञ्चशब्दो मञ्चार्थ एव कल्पित इति साम्यम् ।

अन्येति । एकत्र—उपचारच्छले—वस्तुसद्भावः प्रतिषिध्यते, अन्यत्र—वाक्छले—वस्त्वभ्यनुज्ञाय कम्बलयोगमप्यभ्युपगम्य कम्बलस्यानेकतारूपो धर्मः प्रतिषिध्यते । एकत्र धर्मः प्रतिषिध्यतेऽन्यत्र धर्मी । सोऽयमतिमहान् विशेष इति वार्तिकमतेन ॥ भाष्यमतेन तु—उपचारच्छले भाक्तमर्थं विहाय प्रधानस्यार्थस्य कल्पना, वाक्छले तु नवसंख्यात्वरूपस्यार्थस्य सर्वथा प्रतिषेध एवेति विशेषः ।

---

(भा०चं०) लाघवादत्रैवाध्याये छलपरीक्षासूत्राणि कृतानि व्याचष्टे **नेत्यादिना** भाष्येण । न भिद्यते न भेदेन ज्ञाप्यते कर्मकर्तरि प्रयोगोयं तस्योपचारछलस्य अर्थान्तरकल्पनायां भावे ल्यङ् । ण्यासश्रन्थो-युजितिसूत्रेण तद्विशेष्यम् । **अविशेषादिति** । उभयत्र समानधर्मादित्यर्थः । तस्य विशेषो भेदक इति भावः ॥ १५ ॥

समाधत्ते **वागिति** ॥ १६ ॥

(सू०)अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥१७॥

(भा०) छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते, किञ्चित्साधर्म्यात्। यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति। विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति। अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्तते त्रित्वमपि न निवर्त्स्यति ॥१७॥

(४) पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणम्।

(भा०) अत ऊर्ध्वम्--

(सू०)साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

---

(ख०) अत्र तात्पर्यम्-मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते, मञ्चा इति त्वनूद्यते। अत एव गुणे त्वन्याय्यकल्पनेति मञ्चा इत्येतदप्रधानमनूद्यतया भाक्तम्, न तु क्रोशनमेव वस्तु प्रतिषिध्यते 'नैव मञ्चाः क्रोशन्तीति' छलवाक्येन। 'नवकम्बलो देवदत्त' इति वाक्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते। तत्र न विधेयस्य वस्तुतः कम्बलस्य सद्भावः प्रतिषिध्यते, किन्तु तदेकदेशस्यानेकतायाः इति महान् भेद इति।

प्रतिषिध्यत इति—पञ्चदशसूत्रे शङ्ककेनेत्यर्थः।

साधर्म्येत्यादि सूत्रम्। व्याप्तिनिरपेक्षयत्किञ्चित्पदार्थसाधर्म्यवैधर्म्याभ्याम् 'प्रत्यवस्थानम्' अनिष्टप्रदर्शनेन दूषणाभिधानं जातिः। यद्यपि साधर्म्यवैधर्म्यान्यतरप्रदर्शनं सर्वत्र जातौ नास्ति तथाऽपि व्या-

---

(भा०चं०) किञ्चित्साधर्म्यप्रयुक्ताभेदांगीकारे दोषमाह **छलस्येति**। न निवर्तते न निवृत्त्यांगीक्रियते न निवर्त्स्यति न निवृत्याङ्गीकरिष्यते ॥१७॥

इतिश्रीन्यायपञ्चाध्यायीभाष्यचन्द्रे छलप्रकरणभाष्यचंद्रिका ॥

**अत ऊर्ध्वमिति**। पुरुषाशक्तिसामान्यलक्षणं निरूप्यत इति शेषः।

(भा०)प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते स जातिः। स च प्रसङ्गः साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति। 'उदाहरणसाधर्म्यात्साध्यसाधनं हेतु'रित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्। 'उदाहरणवैधर्म्यात्साध्यसाधनं हेतु'रित्यस्यो-

---

(ख०) स्थितिनिरपेक्षतया दूषणाभिधाने तात्पर्यमिति विवरणकाराः। अत एव-'असदुत्तरं जाति'रित्येतावन्मात्रमेव जातिलक्षणं नव्यानामिति।

न छले साधर्म्यवैधर्म्ये स्तः, न च सम्यग् दूषणं साधर्म्यवैधर्म्य-मात्रात्, अपि तु प्रयोगादिति प्रयुक्ते हेतौ तदाभासे वा, यः प्रसङ्गो 'जायते स जातिरिति'।

जात्योत्तरणन्न सर्वत्रानुचितमेव। जल्पे हि वेदप्रामाण्यविद्वांसं प्रति कुहेतुना यदा नास्तिकैरधिक्षिप्यते, सदुत्तरं चास्य सहसा न स्फुरति, तदेश्वराणाम्माभूद्वेदाप्रामाण्यशङ्केति जात्याऽपि प्रत्यवस्थेयम्। क्वचित्पुनरबुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोगः सम्भवति।

उदाहरणेति। अत्रोदाहरणग्रहणमुपलक्षणार्थम्। अनुदाहरणसा-धर्म्यवैधर्म्याभ्यामपि प्रत्यवस्थानम्भवत्येव जातिरिति वार्तिकम्।

---

(भा०चं०) प्रयुक्ते कथ्यते प्रसंगः कथनमिति शेषः। प्रसङ्गो जायते सा जातिरित्यन्वयः। क्तिप्रत्ययान्तो जातिशब्दः संज्ञायां निष्पन्नो जात्या स्त्रीलिङ्गः। प्रकृतिशब्दवदर्थपदसमानाधिकरणो जातिपदसमानाधिकरणश्च स इति सर्वनामशब्द उद्देश्यः लिङ्गविवक्षया पुल्लिङ्गः प्रयुक्तः उद्देश्य-विधेययोर्भिन्नलिङ्गयोर्विशेषणसर्वनाम्नि अन्यत्र लिङ्गकामचारादिति ज्ञेयम् प्रसज्यते आपाद्यते अनेनेति प्रसंगः पदार्थोयं शब्दविशेषो हेत्वाभासाभि-धानम्। तदिदं प्रकटयति **साधर्म्येति**। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्था-नम्। प्रत्यवतिष्ठतेऽनेनेति व्युत्पत्तेः धात्वर्थः परपक्षप्रतिषेधज्ञापनं ल्युड-र्थः करणभूतः शब्दः। एतस्य पर्यायशब्दावाह। **उपालम्भः प्र-**

(भा०)दाहरणसाधर्म्येण प्रत्यवस्थानम् । प्रत्यनीकभावाज्जायमानोऽर्थो जातिरिति ॥ १८ ॥

(सू०)विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

(भा०) विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः ।

---

(ख०) जायमान इति । जायत इति जातिरिति पदव्युत्पत्तिं दर्शयति ॥

विप्रतिपत्तिरिति सूत्रम् । निग्रहस्थानेनैव समस्तकथामुद्रणमित्यस्य पश्चादभिधानम् ॥ कथायाम्प्रवृत्तायां वादिप्रतिवादिनोरतत्त्वज्ञानज्ञापिका क्रिया निग्रहस्थानमिति सूत्रार्थः ।

विपरीतेति । सूक्ष्मविषया प्रतिपत्तिः 'विपरीता', स्थूलविषया च 'कुत्सिता' इति भेदेन निर्देशः ।

---

(भा०चं०) **निषेध इति च** । अनयोरपि व्युत्पत्त्या सिद्धिर्ज्ञेया । तत्र वैधर्म्येण साधर्म्येण च प्रत्यवस्थानं क्रमेण दर्शयति **उदाहरणेति** । उदाहरणसाधर्म्यात् साध्यसाधनहेतावुक्ते वादिना तस्य प्रतिषेधः प्रतिवादिना य उच्यते उदाहरणवैधर्म्येण हेतुना स्वोक्तिरुदाहरणवैधर्म्यप्रत्यवस्थानम् । उदाहरणवैधर्म्यात् साध्यसाधने हेतावुक्ते वादिना तस्य प्रतिषेधः प्रतिवादिना य उच्यते उदाहरणवैधर्म्येण हेतुना प्रतिषेधवचनं तत्साधर्म्यप्रत्यवस्थानम् । इतिविधा वै जातीनां सर्वासां पंचमाध्यायस्थानां ज्ञातव्या । तासां परमतप्रतिषेधार्थमेव जन्मेत्याह **प्रत्यनीकेति** । प्रत्यनीकभावः परमतप्रतिषेधकता तस्मात्तमुद्दिश्य जायमानो जन्यमानः प्रतिवादिनेति शेषः । प्रयोजककर्ता हि हेतुस्तेन प्रतिवादी हेतुत्वेन चेद्विवक्षितस्तदा तद्धेतुकजनिकर्ता इत्यवगतेः प्रतिवादी जनिकर्तृप्रयोजक इति समानसंवित्संवेद्यत्वन्यायादवगम्यते । अर्थः शब्दविशेषः । अर्थ्यते अनेनेति व्युत्पत्तेः । **जातिरितीति** । इति शब्दो लक्षणसमाप्तिद्योतनार्थः ॥ १८ ॥

(भा०) विप्रतिपद्यमानः पराजयं प्राप्नोति । निग्रहस्थानं खलु पराजयप्राप्तिः । अप्रतिपत्तिस्त्वारम्भविषयेऽप्यप्रारम्भः । परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति ।

**असमासाच्च नैते एव निग्रहस्थाने इति ॥ १९ ॥**

---

( ख० ) लाघवाय 'विप्रतिपत्त्यप्रतिपत्ती' इत्येव वक्तव्ये कस्मादसमासकरणमित्यत आह असमासादिति । विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिकं नाम जल्पे निग्रहस्थानमास्ति,तदपि ग्रन्थाधिक्येनावरुध्यत इति भावः ।

---

(भा०चं०) **विप्रतिपत्तीति** । व्युपसर्गद्योत्यं द्विविधमर्थमाह **विपरीता वेति कुत्सिता वेति** । विरुद्धप्रकारिका विपरीता विनिन्दिता कुत्सिता प्रतिपत्तिः प्रतिपत्तिज्ञापको व्यापारः । द्विविधेनापि व्यापारेण व्यापारिणः फलमाह **विप्रतिपद्यमान इति** । कथक इति शेषः । पराजयं खलीकारमुपहासमित्यर्थः । प्राप्नोति स्वव्यापारेण लभते पराजयः प्राप्यतेऽनेनेति पराजयप्राप्तिः । स्वकर्तव्याकरणमप्रतिपत्तिरित्याह आरंभविषयेऽप्रारम्भ इति । तं दर्शयति **परेणेति** । स्थापितं हेतुदृष्टान्ताभ्यामस्तित्वेन प्रमापितम् न प्रतिषेधनीति नञसौ प्रसज्यप्रतिषेधवाची न प्रतिषेधति न नास्तित्वेन प्रतिपादयति कथक इति शेषः । अत्र कर्मविशेषितकृतिमन्निषेधेन तादृशकृतिनिषेधोऽपि बोध्यः । तथा सत्यारम्भाविषयेऽप्रारम्भ इत्येकवाक्यता भवति । कर्तेहाख्यातार्थस्तस्य चेह धात्वर्थेन सह साध्यसाधनभावः सम्बधः । तदुक्तं भट्टैः—

साध्यसाधनसम्बन्धः सर्वाख्यातेषु वर्तते ।
आख्यातं सर्ववाक्ये च तेनाकाङ्क्षानिवर्तनात् ॥

इति । कर्तरि विशेषणीभूता कृतिर्न यत्नमात्रं किन्तु भावना जानाति

(भा०) किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ

(ख०) किम्पुनरिति । जातिर्निग्रहस्थानञ्च प्रत्येकमेकविधमेवोत नानाविधमिति प्रश्नार्थः ॥

दृष्टान्तवदिति । यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेद-

(भा०चं०) इच्छति चेष्टते गच्छतीत्यादौ चेतनाचेतनकर्तृता हि भावना जननो त्पादनाद्यपरपर्याया साश्रया प्रतीयते उपपद्यते चेति । यदि प्रकरणकर्त्रा केनचिन्नैय्यायिकाभासेन कृधातोराख्यातस्य च यत्नमात्रे शक्तिः कल्प्यते आख्यातार्थेन च भेदान्वयः सर्वत्रोच्यते तदा व्याकरणादिशास्त्रेषु युक्तिभ्यां स प्रतिवक्तव्यः । निषेधकर्तृवाचकातिङ्समभिव्याहृतश्च नञ् निषेधकर्त्रन्योन्याभावं कृत्यभावं प्रागभावरूपं बोधयति । अत्यन्ताभावं तु बोधयितुमिह न शक्नोति असम्भवात् । नहि कदाचित् कृत्यधिकरणे कृत्यन्ताभावो भवति विरोधात् । प्रागभावादिनैव निषेधः व्यवहारोपपत्तेः प्रागभावाधिकरणे तस्य सत्त्वे त्रैकालिकत्वं हीयते यथा रूपात्यन्ताभावकालीनः तथा कृत्यन्ताभावो निर्व्यापारे सर्वदा तादृशे । यथा कूटस्थनित्ये सांख्यमतात्मनि वैशेषिकमते परिमाण्डल्यपरिमाणे । एवञ्च घटः पटो नास्ति न भवति न विद्यते इत्यादौ क्रियापदसहिते तेन रहिते वा सविशेषणनिषेधस्य गतिर्द्रष्टव्या । **प्रतिषेधमिति** । अत्र परेणेत्यनुषज्यान्वयः । तथाच पराभिन्नकर्तृकः प्रतिषेधकर्मकमुद्धारं न करोतीत्यर्थः । प्रतिषिध्यतेऽनेनेति प्रतिषेधो हेतुविशेषः तस्योद्धारस्तस्य दूषणम् । यद्वा प्रतिषिध्यत इति प्रतिषेधः स्वसाध्यस्तं नोद्धरति प्रतिषेधकहेतुनिषेधेन न स्थापयति । जल्पकस्य द्विविधोयं व्यापार उक्तः । **असमासाच्चेति** । असमासो विग्रहस्तस्मात् एते विप्रतिपत्त्यप्रतिपत्ती एते एव न निग्रहस्थाने किन्तु अन्यान्यपि निग्रहस्थानानि सन्तीत्यर्थः ॥ १९ ॥

(भा०) सिद्धान्तवद्भेद इत्यत आह—

(सू०)तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

(भा०)तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्। तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम्। नानाकल्पो विकल्पः। विविधो वा कल्पो विकल्पः। तत्राननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम्। शेषस्तु विप्रतिपत्तिरिति।

---

( ख० )स्तथाऽपि लक्षणाभेदाभिप्रायेणाभेद उक्तः।

तद्विकल्पादिति सूत्रम्। एतेन तयोर्विभागकथने कालविलम्बः सूचितः। 'नानाकल्प' इति स्वरूपतः, 'विविध' इति प्रकारतः।

---

(भा०चं०) अभेद इति ॥ अनेकत्वप्रतिषेधः द्वन्द्वात्परः प्रत्येकमन्वेतीति। जात्यभेदो निग्रहस्थानाभेद इत्यर्थः। सिद्धान्तवत् सिद्धान्तस्येव। भेदो नानात्वम्। इत्यतः इत्यस्मिन् सार्वविभक्तिकस्तसिः। समासस्थं तत्पदं विगृह्यार्थापयति तस्येति। विकल्पात् भेदात्। नाना अनेकः विविधोऽनेकप्रकारकः पदमिदं बहुव्रीहि। कल्प्यते भेदेन ज्ञाप्यतेऽनेनेति कल्पः प्रकारः। अप्रतिपत्तिः षोढेत्याह तत्रेति। सूत्रं तु प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासंन्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थकमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानीति। शेषः षोडशविधः।

(भा०)इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः यथालक्षणं परीक्षिष्यन्त इति त्रिविधा चाऽस्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥ २० ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य
द्वितीयमाह्निकम्।

समाप्तश्चाऽयं प्रथमोऽध्यायः ।

---

(ख०) परीक्षिष्यन्त इति द्वितीयादिष्वध्यायेष्विति यावत् ।

इति खद्योते प्रथमं स्फुरणम् ।

---

महर्षिवाक्यव्याख्यानसाहसस्य प्रमार्जनम् ।
पित्रोश्चरणयोरस्य खद्योतस्य समर्पणम् ॥

---

(भा०चं०)अध्यायार्थमुपसंहरति इमे इति। परीक्षिष्यन्ते परीक्षिताः करिष्यन्ते । उद्देशलक्षणरूपौ व्यापारौ द्वौ शास्त्रस्यास्य दर्शितौ तृतीयस्तु व्यापारो दर्शयिष्यते चतुर्भिरध्यायैरिति भावः ॥ २० ॥

तन्त्रप्रतिज्ञा संसारस्तन्निवृत्तिश्च संविदा ।
उद्देशो लक्षणं चैव तत्त्वानामिह दर्शितम् ॥
रघूत्तमेन रचिता प्रथमाध्यायचन्द्रिका ।
रघूत्तमपदाम्भोजनखेन्दुमिलिता ऽस्त्वियम् ॥

## अथ द्वितीयाध्यायस्याद्यमाह्निकम् ।

### (१) संशयपरीक्षाप्रकरणम् ।

( भा० ) अत ऊर्ध्वं प्रमाणादिपरीक्षा । सा च 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय (१ १ ४१) इत्यग्रे विमर्श एव परीक्ष्यते—

"समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः" ॥ १ ॥

(भा०)"समानस्य धर्मस्याध्यवसायात्संशयो न धर्ममात्रात् ।

---

( ख० ) समानेत्यादि संशयलक्षणोक्तकारणमात्रोपलक्षणम् । अत्र पञ्चसूत्रात्मकः पूर्वपक्षः ।

समानस्येत्यादिभाष्यमसमञ्जसमिवाभाति । 'समानधर्माध्यवसायात् न संशय' इति सूत्राक्षराणां स्पष्टोऽर्थः । अतः 'समानस्य धर्म-

---

ॐ गणेशायनमः ।

(भा०चं०)स्वं परीक्ष्य परिशङ्क्य लक्षणं पक्षमक्षपदवद्व्रवक्षमः ।
लक्षणावलिपरीक्षणे वने रक्षणे मम स हि स्वपेक्षितः ॥

अथ द्वितीयाध्यायादौ परीक्षणमारभ्यते अत ऊर्ध्वमित्यादिना । त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः । तत्रोद्देशलक्षणे तु कृते ऊर्ध्वमनन्तरं परीक्षा प्रक्रियत इति शेषः । क्रमप्राप्तां प्रमाणादिपरीक्षां विहाय प्रथमं संशयपरीक्षणे हेतुमाह सा चेति । संशयपूर्वकत्वात् परीक्षणस्य संशयपरीक्षाभावे प्रमाणादिपरीक्षापि न शक्यत इत्यत आदौ संशयः परीक्ष्यत इति भावः । सूत्रकृत एतदाशयज्ञापनार्थं भाष्ये सूत्रलेखनम् । पूर्वपक्षज्ञापिकां पञ्चसूत्रीं व्याचष्टे समानेत्यादिना प्रदर्श्य ।

तत्रादौ समानधर्मोपपत्तेरिति सूत्रकृद्वचनं चतुर्द्धा विकल्प्य पूर्वपक्षि-

(ख०)स्याध्यवसायात् संशय' इति भाष्योक्तिः सूत्रविरुद्धेवाभाति। के-चिदिदमसामञ्जस्यमेवं परिहरन्ति—"अज्ञायमानस्य धर्ममात्रस्य संशय-म्प्रत्यहेतुत्वात्तदवधारणे निश्चयस्य संशयाविरोधित्वस्वाभाव्येन संशय-हेतुत्वानुपपत्तिरिति भावः"—इति। किन्त्वयमेव भावो भाष्योक्तचतुर्थ-विकल्पस्य स्पष्टः। अतस्स एव भावः प्रथमकल्पस्य न भवितुमर्हति॥

इदमसामञ्जस्यं वार्तिककारेण तथा च तात्पर्यकारेणापि लक्षितम्। अत एवेमाम्पूर्वपक्षोक्तिं वार्तिककारो यथाश्रुत्युत्थान-त्वेन निर्दिष्टवान्। तात्पर्यकारश्च—'समानधर्मोपपत्त्यादविशेषणमप-श्यतः पूर्वपक्ष' इत्युक्तवान्।

अत्र सूत्रे त्रीणि वाक्यानि। (१)प्रथमन्तावत्—'समानधर्माध्य-वसायात् न संशय' इति संशयलक्षणसूत्रस्थस्य 'समानधर्मोपपत्तेः संशय' इत्यस्य वाक्यस्य प्रतिषेधरूपम्। एतस्यैव वाक्यस्य तात्पर्य-म्भाष्यकार उक्तिचतुष्टयेनाह। संशयलक्षणसूत्रस्थमुपपत्तिपदमस्तित्वपरं मन्वानस्यैवाद्योक्तिः-धर्ममात्रस्य सत्त्वान्न संशयः किन्तु तस्याध्यवसाया-दिति। अथवेत्यादिद्वितीयोक्तिरुपपत्तिपदं ज्ञानसामान्यपरम्मन्वानस्य। पुनरथवेत्यादितृतीयोक्तिरुपपत्तिपदं निश्चयात्मकज्ञानपरम्मन्वानस्य। पुनरथवेत्यादिचतुर्थ्युक्तिस्तृतीयाया एव प्रकारान्तरेणोपवर्णनम्।(२)द्वि-तीयं सूत्रवाक्यम्—'अनेकधर्माध्यवसायान्न संशय' इति संशयलक्षणसूत्र-स्थोपपत्तिपदप्रयोगमूलकम्। अत्रापि पूर्ववत्पूर्वपक्षोक्तिचतुष्टयस्य सम्भवः। (३)तृतीयं सूत्रवाक्यम्—'अन्यतरधर्माध्यवसायान्न संशय' इति।

---

(भा०चं०) णोऽभिप्रेतं दूषणं दर्शयति समानस्येत्यादिना। अध्यवसाया-न्निश्चयात्। संशयो भवतीति शेषः। न धर्ममात्रेति। अनध्यवसीयमा-नाद्धर्मादित्यर्थः। समानधर्मोपपत्तिरितिलक्षणसूत्रस्थोपपत्तिपदं सम्ब-न्धपरमिति जानतोऽयं पूर्वपक्षः। उपपत्तिपदस्योपलब्धिपरत्वे दूषणमाह

(भा०)अथ वा समानमनयोर्द्धर्ममुपलभ इति धर्मधर्मिग्रहणे संशयाभाव इति। अथ वा समानधर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्नः। न जातु रूपस्यार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे संशय इति। अथवा नाध्यवसायादर्थावधारणादनवधारणज्ञानं संशय उपपद्यते कार्यकारणयोः सारूप्याभावादिति।

एतेनानेकधर्माध्यवसायादिति व्याख्यातम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति। ततो ह्यन्यतराव-

---

(ख०)अथ वा समानधर्माध्यवसायादिति। धर्मिणोरर्थान्तरभावाद्वा न संशयः। न ह्यन्यस्मिन्नुपलब्धेऽन्यत्र संशयः।

नाध्यवसायादिति। कार्यस्यानवधारणरूपत्वात् कारणस्यावधारणात्मकत्वन्न सम्भवति। न निश्चयोऽनिश्चयस्य जनको भवितुमर्हति।

तत इति—अवधारणात्मकादध्यवसायादित्यर्थः।

---

(भा०चं०) **अथवेति**। **अनयोरिति**। अयञ्च स च इमौ तयोरनयोः। धर्म्मसामान्यानुषङ्गः। उपलभे इति संशयहेत्वनुभवोक्तिः। तथाचेमं विशेषेण पश्यन् तं च विशेषेण स्मरन् कथं संशयीतेति भावः(१)। उपपत्तिपदस्याध्यवसायपरत्वेऽपि दूषणमाह **अथवेति**। अर्थान्तरभूत इति। अर्थान्तरं भूतं स्वरूपं यस्य स तथा तस्मिन्। अर्थान्तरमिति पञ्चमीतत्पुरुषः समासः(२)। अर्थपदञ्च प्रकृतार्थपरं तेनात्र सामान्यभेदोऽप्रसिद्ध इति न दोषप्रसक्तिः। अनुपपत्तिमुपपादयति **न जात्विति**। उपपत्तिपदस्याध्यवसायपरत्वे प्रकारान्तरेण दूषणमाह **अथवेति**। स्पष्टम्। च-

---

(टि०) १ इममिति पुरोवर्तिनिर्द्देशः तमित्यसन्निहितम्।

२ अर्थान्तरमित्यस्य प्रकृतार्थभिन्नेत्यर्थः। तेन अर्थादन्य इति व्युत्पत्तिकरणे अर्थसामान्यभेदो लब्धः स्यात् स चाप्रसिद्धः।

( भा० )धारणमेवेति" ॥ १ ॥

(सू०) "विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च" ॥ २ ॥

( भा० ) "न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा संशयः । किं तर्हि विप्रतिपत्तिमुपलभमानस्य संशयः । एवमव्यवस्थायामपीति । अथ वास्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धेः कथं संशयः स्यादिति । तथोपलब्धिरव्यवस्थिता अनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते संशयो नोपपद्यत इति" ॥ २ ॥

---

( ख० ) विप्रतिपत्तीति पूर्वपक्षसूत्रम् । अत्रापि संशयसूत्रस्थोपपत्तिपदाश्रित एव पूर्वपक्षः । तत्र प्रथमवाक्यं तत्पदमस्तित्वमात्रपरम्मन्वानस्य । अथवेत्यादिद्वितीयं तु तत्पदं ज्ञानपरम्मन्वानस्येत्यवधेयम् ।

तथोपलब्धिरिति । उपलब्धिरनिश्चितानुपलब्धिश्चानिश्चितेत्येतन्मात्रं जानतः पुरुषस्य संशयो न सम्भवति । प्रत्युतास्यामवस्थायान्तस्य तद्विषयविशेषस्य किमपि ज्ञानन्न सम्भवति ।

---

(भा०चं०) त्वारीमानि दूषणानि अनेकधर्मोपपत्तेरित्यत्राप्यतिदिशति तेनेति । समानयोर्द्वयोरेकस्मादन्योऽन्यतर इति अनेकपदस्यान्यतरार्थत्वम् । हेतुमाह **तत इति** ॥ १ ॥

विप्रतिपत्त्यव्यवस्थापदार्थावजानन् तदुत्थं संशयं दूषयति **विप्रतिपत्तीत्यादिना** । अत्र सूत्रे संशय इत्यनुषज्य भवतीति शेषो ज्ञेयः । भाष्यकारस्तु प्रतिषेधं दर्शयति **न विप्रतिपत्तीत्यादिना** । विधिकोटिं दर्शयति **विप्रतिपत्तिमुपलभमानस्येति** । संशयो भवतीति शेषः । दूषणमिदमप्यव्यवस्थायामतिदिशति **एवमिति** । उपपत्तिपदस्योपलब्धिपरत्वेऽपि दूषणमाह **अथवेति** । **इत्युपलब्धेरिति** । उपलभमानस्य । कथमित्याक्षेपे । न संशयः स्यादित्यर्थः । मतद्वयनिश्चयादिति भावः ।

(सू०) "विप्रतिपत्तौ च सम्प्रतिपत्तेः" ॥ ३ ॥

(भा०) "यां च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते सा सम्प्रतिपत्तिः। सा हि द्वयोः प्रत्यनीकधर्मविषया। तत्र यदि विप्रतिपत्तेः संशयः सम्प्रतिपत्तेरेव संशय इति" ॥ ३ ॥

(सू०) "अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः" ॥ ४ ॥

(भा०) "न संशयः। यदि तावदियमव्यवस्था ऽऽत्मन्येव

---

(ख०) याञ्चेति। अस्त्यात्मेत्येकस्य निश्चयात्मकं ज्ञानम्, नास्त्यात्मेति चापरस्य। एवञ्चात्र निश्चयात्मकमेव ज्ञानद्वयम्। तथा सति यदि संशयस्तदा निश्चयादेव संशय इत्यापततीति पूर्वपक्षिणो हृदयम्।

न संशय इति भाष्यस्य सूत्रपदैरेवान्वयः। यदि तावदिति। अव्यवस्थाया अव्यवस्थात्वं यदि निश्चितन्तदा निश्चितरूपत्वात्तस्या अव्यवस्थात्मतैव निरस्ता। अथ च तथात्वन्तस्या यद्यनिश्चितन्तर्हि तस्याः स्वरूपहानादेवाव्यवस्थात्मता सुदूरपराहतेति भावः।

---

(भा०चं०) उपलब्धिः साधकं प्रमाणम्। अव्यवस्थापक्षे नास्तीत्यर्थः अनुपलब्धिश्च बाधकम्प्रमाणञ्च तथैव। इतीति समभिव्याहृतवाक्यपरं सप्तम्यन्तं तथाचाध्यवसिते इति सप्तम्यन्तं तद्विशेषणमुपपद्यते॥ २ ॥

विप्रतिपत्तेः सम्प्रतिपत्तित्वमापाद्य संशयहेतुत्वं वारयति **विप्रतिपत्तौ चेति सूत्रम्**। न सा सम्प्रतिपत्तिः कुत इत्यत आह। **साहीति**। द्वयोर्मध्ये एकस्य प्रत्यनीकधर्मविषया स्वस्वाभिमतपरकीयविपरीतधर्म्मविषया न हि कोऽपि स्वाभिमतेऽर्थे विप्रतिपद्यते इति भावः। विप्रतिपत्तेस्तस्य तस्य पुरुषस्य स्वाभिमतप्रतिपत्तेः ॥ ३ ॥

अव्यवस्थेत्यस्मिन्सूत्रेऽनुसज्जितस्य न संशय इत्यस्य भवतीति

(भा०)व्यवस्थिता व्यवस्थानादव्यवस्था न भवतीत्यनुपपन्नः संशयः । अथाव्यवस्थाऽऽत्मनि न व्यवस्थिता एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति" ॥ ४ ॥

(सू०) "तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः" ॥ ५ ॥

(भा०) "येन कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते, तेन खल्वत्यन्तसंशयः प्रसज्यते । समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः । न ह्ययमतद्धर्मा धर्मी विमृश्यमाणो गृह्यते, सततं तु तद्धर्मा भवतीति" ॥ ५ ॥

(भा०) अस्य प्रतिषेधप्रपञ्चस्य सङ्क्षेपेणोद्धारः—

---

(ख०) तथेत्यादिपूर्वपक्षसूत्रम् । समानधर्मादीनां संशयकारणानां सातत्यान्नित्यसंशयप्रसङ्गः ।

नह्ययमिति । स्थाणुरयं पुरुषो वेति संशयानन्तरं स्थाणुरेवायमिति निश्चयात्मके ज्ञाने जातेऽपि समानधर्मादीनां ज्ञानं वर्तत एव । निश्चयज्ञानेन ते धर्मास्तद्धर्म्मज्ञानं वा नापनोद्यते। ततो यदि समानधर्मज्ञानमेव संशयकारणं तर्हि निश्चयज्ञानानन्तरमपि संशयप्रसङ्ग इति भावः ।

---

(भा०चं०) शेषः । व्यवस्था सत्ता व्यवस्थानात् स्वस्मिन्स्वस्य सत्त्वादित्यर्थः । न व्यवस्थिता न सती ॥ ४ ॥

दूषणान्तरमाह **तथेति** । कल्प्यतेऽनेनेति कल्प उपायस्तेन । **अत्यन्तसंशय इति** । विशेषणदर्शनकालेऽपि इत्यर्थः । प्रसज्यत इति कर्म्मकर्तरि प्रयोगः । प्रसक्तिमुपपादयति **अनुच्छेदादिति** । विमृश्यमाणो विचारेण विज्ञायमानः । अतद्धर्म्माऽसमानधर्मा । गृह्यते ज्ञायते । कुतो न ज्ञायते इत्यत आह **सततं त्विति** ॥ ५ ॥

परिहरति **अस्येति** । प्रतिषेधप्रपञ्चदूषणविस्तरस्य पञ्चभिः सूत्रैः

(सू०)यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥

(भा०)न संशयानुपपत्तिः,संशयानुच्छेदश्च न प्रसज्यते। कथं? यत्तावत् समानधर्माध्यवसायः संशयहेतुः न समानधर्ममात्र-

---

(ख०) यथोक्तेत्यादि सिद्धान्तसूत्रम्। यदि निर्विशेषणं समानधर्मोपपत्त्यादि संशयकारणमुच्येत तदा तदुपपत्तेः पश्चादकरणात् पूर्वमपि न कुर्यादित्यसंशयः स्यात्, अथवा पूर्वं करणात् पश्चादपि कुर्यादित्यत्यन्तसंशयः स्यात्। दूरत्वादिदोषविशेषादर्शनादिविशेषणविशिष्टमेव तु समानधर्मोपपत्त्यादि संशयकारणत्वेनेष्टमतो नोक्तप्रसङ्गप्रसङ्गः।

---

(भा०चं०) कृतस्य सङ्क्षेपेण समासोक्त्या एकसूत्रेणेत्यर्थः। उद्धारः क्रियत इति शेषः। यद्वा उद्धार इदं सूत्रमित्यर्थः। तदा सङ्क्षेपेणेति भावसाधनम्। उद्धार इति करणसाधनम्। **यथोक्तेति** सूत्रम्। यथोक्तेत्यनेन अर्थविशेषापेक्षविशेषणाज्ञानं पूर्ववादिनः प्रकटयति यथोक्ताध्यवसायादेव नासंशय इति अन्वयः। ननु यथोक्ताध्यवसायादित्येतद्दूषितमेव सत्यम् अर्थोक्तविशेषणानालोचनादित्याशयेनाह **विशेषापेक्षादिति**। तत्र विशेषापेक्ष इति संशयविशेषणमर्थोक्तहेतुविशेषणमपीति भावः। संशय उत्पद्यमाने सतीत्यर्थः। नासंशय इत्यादिसूत्रं व्याचष्टे **न संशयानुपपत्तिरिति**। तथा च प्रसज्यप्रतिषेधोऽयं ज्ञातव्यः। प्रसज्यप्रतिषेधो हि क्रियाप्रतिषेधः। नात्यन्तसंशय इति व्याचष्टे **संशयानुच्छेदश्चेति**। अनुच्छेदः अविच्छेदेनोत्पत्तिः सजातीयकुलस्य। न प्रसज्यते नापद्यते हेत्वविशेषणं विशेषापेक्ष इति मन्वानः पृच्छति **कथमिति**। समानधर्म्माध्यवसायः

( भा० )मिति । एवमेतत् । "कस्मादेवं नोच्यते इति ?" विशेषापेक्ष इति वचनात् तत्सिद्धेः । विशेषस्यापेक्षाऽऽकाङ्क्षा । सा चानुपलभ्यमाने विशेषे समर्था । न चोक्तं समानधर्मापेक्ष इति । समाने च धर्मे कथमाकाङ्क्षा न भवेद् । यद्ययं प्रत्यक्षः स्यात् । एतेन सामर्थ्येन विज्ञायते समानधर्माध्यवसायादिति ।

उपपत्तिवचनाद्वा । समानधर्मोपपत्तेरित्युच्यते । न चान्या सद्भावसंवेदनादृते समानधर्मोपपत्तिरस्ति । अनुपलभ्यमान-

---

( ख० ) न चोक्तमिति । संशयलक्षणसूत्रे विशेषापेक्षः संशय इत्युक्तम्, न समानधर्मापेक्ष इति । समानधर्मापेक्षाभावश्च समानधर्माध्यवसाये सत्येव भवितुमर्हति । एवञ्च समानधर्मापेक्षाया अनुपन्यासेनैव समानधर्माध्यवसाय उपलक्षितः । उपपत्तिपदं सत्तापरमभ्युपगम्यैवेदमुत्तरम्पूर्वपक्षस्य ।

---

(भा०चं०) विशेषापेक्षासहित इति शेषः । **न समानधर्म्ममात्रमिति** । अनुक्तोपालम्भस्त्वया कृत इति भावः । अनुक्तमेव मन्वान आह **एवमेतदिति** । उक्तमेवेत्याह **विशेषापेक्ष इति** । तत्सिद्धेः विशेषापेक्षादिहेतुविशेषणसिद्धेः अर्थोक्तमप्युक्तमेवेति भावः । सूत्रस्य द्विधार्थकत्वात् । अनुपलभ्यमाने विशेषे सति । समर्था युक्ता । विशेषापेक्षायामुक्तायां विशेषादर्शनमुक्तं भवति यथा तथा समानधर्माकांक्षायामुक्तायां समानधर्मादर्शनमुक्तं भवति सा च नोक्तेत्यतः समानधर्मदर्शनमुक्तमेवेत्याह **नचोक्तमिति** । समानधर्मशब्दस्य समानधर्माध्यवसायपरत्वेऽनुमानं दर्शयति **समाने चेन्याद्यध्यवसायादित्यन्तेन** । कथमिति हेतौ । यद्ययं प्रत्यक्षः स्यात् यदि प्रत्यक्षः सम्भवेत् इत्यर्थः । सामर्थ्येन लिङ्गेन विज्ञायतेऽनुमीयते अनुमायोच्यत इति वा ।

अथवा शाब्द एवाध्यवसाय इत्यत आह उपपत्तिवचनाद्वेति । इत्युच्यत इत्यनेन एवमेव कथं नोक्तमिति आक्षेपः समाहितः ।

( भा० )सद्भावो हि समानो धर्मोऽविद्यमानवद्भवतीति ।

विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानम् । यथा लोके धूमेनाग्निरनुमीयते इत्युक्ते धूमदर्शनेनाग्निरनुमीयत इति ज्ञायते । कथम् ? दृष्ट्वा हि धूममथाग्निमनुमिनोति नादृष्टे । न च वाक्ये दर्शनशब्दः श्रूयते, अनुजानाति च वाक्यस्यार्थ-प्रत्यायकत्वम् । तेन मन्यामहे विषयशब्देन विषयिणः प्रत्य-यस्याभिधानं बोद्धानुजानाति । एवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति ।

यथोहित्वा—"समानमनयोर्धर्ममुपलभ इति धर्मधर्मिग्रहणे संशयाभाव" इति—पूर्वदृष्टविषयमेतत् । यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं नोपलभ इति, कथं नु विशेषं पश्येयं येनान्यतरमवधारयेयमिति । न चैतत् समानधर्मोपलब्धौ

( ख० ) विषयशब्देनेति । समानधर्मो 'विषयः' तेन विषयिण-स्तज्ज्ञानस्याप्यभिधानमित्यर्थः ।

यथोहित्वेति । यदप्युक्तमित्यर्थ इति तात्पर्यकृतः ।

(भा०चं०) ननूपपत्तिशब्दः सम्बन्धपर एवास्त्विति चेन्नेत्याह **विषयशब्देनेति** ।अनुजानाति च । चोऽवधारणे व्युत्पन्न इति शेषः ।

द्वितीयदूषणमुद्धर्त्तुमनुवदति **यथेति** । यत्प्रकारकमित्यर्थः । ऊहि-त्वा वितर्क्य । संशयकारणीभूतं संशयितुरनुभवं सूत्रकृदभिप्रेतमिति शेषः । वाक्यशेष इति पदोत्तरं भवानाहेत्यध्याहृत्यान्वयः ।समाधत्ते **पूर्वदृष्टेति** । पूर्वदृष्टौ स्थाणुपुरुषादी विषयौ यस्य तत् पूर्वदृष्टविषयम् । अनयोरिति-पदार्थविषयज्ञानं न तु विशेषेण दृश्यमानं पुरोवर्तिस्मर्य्यमाणविषयमिति भावः । इदमेव प्रकटयति **यावहमिति** । अद्राक्षमिति संशयितुरु-क्तिः । कथं केनोपायेन विशेषं पश्येयमित्याकाङ्क्षोक्तिः । येन व्याप्यवि-

( भा० )धर्मधर्म्मिग्रहणमात्रेण निवर्तत इति ।

यच्चोक्तं–"नार्थान्तराध्यवसायादन्यत्र संशय" इति, यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य इति।

यत्पुनरेतत्–"कार्यकारणयोः सारूप्याभावादिति",कारणस्य भावाभावयोः कार्यस्य भावाभावौ कार्यकारणयोः सारूप्यम्। यस्योत्पादाद्यदुत्पद्यते यस्य चानुत्पादाद्यन्नोत्पद्यते तत्कारणं कार्यमितरदित्येतत्सारूप्यम्। अस्ति च संशयकारणे संशये चैतदिति।

---

(ख०)यच्चोक्तमिति। प्रथमसूत्रभाष्यगतपूर्वपक्षतृतीयहेतोरनुवादः।

सारूप्याभावादित्यनन्तरमध्यवसायादनवधारणात्मकः संशयो नोपपद्यत इति पूर्वपक्षचतुर्थहेतोरनुवादः ।

अस्ति चेति । अत्र केषाञ्चिन्मतेन द्विविधं सारूप्यम्भाष्यकारेणोक्तम्–कारणस्य भावाभावयोः कार्यस्य भावाभावावित्येकं सारूप्यम्,

---

(भा०चं०) शेषदर्शनेन अन्यतरं तत्तद्विशेषव्यापकधर्मवन्तं निश्चिनुयाम्। एतत् संशयसमानकालीनं दिदृक्षणम् मात्रपदेन विशेषाभाव उक्तः ।

एवं वाच्यः एवमुपालम्भनीयः न वयमेवं ब्रूम इति भावः । अपि तु समानधर्म्मादिविशिष्टधर्म्मदर्शनात् विशेषवति धर्म्मिण्येव संशय इति ब्रूमः ।

चतुर्थदूषणमनुवदति **कार्य्येति** । समानाध्यक्षयोः कार्य्यकारणभावो दृष्टः यथा निर्विकल्पकसविकल्पकयोः सविकल्पकतदनुव्यवसाययोः इमे तु प्रत्यक्षे भावाभावावगाहितया विसमाने इति पूर्वपक्षयितुराशयः । समाधत्ते । भावाभावयोः सतोः भावाभावौ स्त इति शेषः तथा चैककालीनभावाभावत्वं साम्यमिति भावः । सारूप्यान्तरं वक्तुं दृष्टान्तमुदाहरति **यस्योत्पादादित्यादि सारूप्यमित्यन्तम्** । तदिदं सारूप्यं संशयकारणसंशययोरप्यस्तीत्याह

( भा० )एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृत इति ।

यत्पुनरेतदुक्तं "विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशय" इति, पृथक्प्रवादयोर्व्याहतमर्थमुपलभे विशेषं च न जानामि नोपलभे येनान्यतरमवधारयेयम्, तत्कोऽत्र विशेषः स्याद्येनैकतरमवधारयेयमिति संशयो विप्रतिपत्तिजनितो ऽर्थः न शक्यो विप्रतिपत्तिसम्प्रतिपत्तिमात्रेण निवर्त्तयितुमिति । एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यामिति ।

---

(ख०)कारणस्योत्पादात्कारणमुत्पद्यते तदनुत्पादाच्च नोत्पद्यत इत्यपरम् । किन्तु द्वितीयस्य पूर्वानुवादकत्वमेव स्पष्टम्प्रतिभाति ।

वार्त्तिकमतेन तु विशेषानवधारणमात्रमेव संशयतत्कारणयोः सारूप्यम् । यद्युत्पत्तिः सारूप्यं कार्यकारणयोस्तदा नित्यद्रव्याणान्तादृशसारूप्याभावादकारणतैव स्यादित्येव भाष्यमतेऽरुचिबीजम् ।

विप्रतिपत्तिसम्प्रतिपत्तीति -विप्रतिपन्नयोर्द्वयोः पुरुषयोर्या विप्रतिपत्तिस्तस्याः सम्प्रतिपत्तिर्ज्ञानम्पार्श्वस्थस्य तृतीयस्य, तन्मात्रेणेत्यर्थः ।

---

(भा०चं०) **अस्ति चेति** । संशयकारणे समाने धर्मादर्शने संशये चेति चकारेण संशयकारणे इति संशयविशेषणमनुकृष्यते । इदमुत्तरोत्तरसंशयस्य साम्यं दर्शितं पूर्वस्य तु पूर्वमेव । वार्त्तिककारस्तु सारूप्यान्तरमाह विशेषानवधारणमुभयोः सारूप्यमिति । तस्य जनकतासम्बन्धेन संशयवत्त्वमित्यर्थः । तेनेत्याद्यतिदेशार्थः स्पष्टः । द्वितीयसूत्रेणोक्तं दूषणद्वयमनुवदति **यत्पुनरिति** । अध्यवसायपदस्य द्वन्द्वात्परस्य प्रत्येकं सम्बन्धः । विप्रतिपत्तिज्ञानवतस्तृतीयस्य तत्त्वबुभुत्सोः । संशयाकारं दर्शयति **पृथगित्यादिनाऽवधारयेयमित्यन्तेन** । संशयो विप्रतिपत्तिजनित इत्यर्थः । अर्थः प्रमाणेनार्थ्यमाण इत्यर्थः । **नेति** । तथा च स्वानुभवसिद्धस्तस्य संशयः विप्रतिपन्नयोः सम्प्रतिपन्नयां

(भा०)यत्पुनरेतत्–"प्रतिपत्तौ च सम्प्रतिपत्तेरिति"। विप्रतिपत्तिशब्दस्ययोऽर्थः तदध्यवसायो विशेषापेक्षः संशयहेतुः। तस्य च समाख्यान्तरेण न निवृत्तिः। समानेऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः। तदध्यवसायश्च विशेषापेक्षः संशयहेतुः। न चास्य सम्प्रतिपत्तिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्त्तते। तदिदमकृतबुद्धिसम्मोहनमिति।

---

(ख०)यत्पुनरिति तृतीयसूत्रगताक्षेपस्य परामर्शः।

समाख्यान्तरेणेति–विप्रतिपत्तिपदस्य प्रसिद्धोऽर्थो मतभेदस्तस्याध्यवसायाज्ज्ञानाद्विशेषापेक्षात्संशय उत्पद्यत इति निर्विवादं स्थिते विप्रतिपत्तेः 'सम्प्रतिपत्ति'रिति नामान्तरमुद्भाव्य तस्याः संशयकारणत्वन्निषेधयितुन्न शक्यते। विप्रतिपन्नयोरेकैकम्प्रति स्वमतस्य सम्प्रतिपत्तिरूपत्वेऽपि पार्श्वस्थं तृतीयम्प्रत्युभयोर्विप्रतिपत्तिरूपतैवेति हृदयम्।

---

(भा०चं०)विप्रतिपत्त्याऽनयोः विप्रतिपत्तिरस्तीति तृतीयस्य सम्प्रतिपत्तिमात्रेण वा न निवर्तयितुं शक्य इत्यर्थः। आदिशति **एवमिति**। पूर्वपक्षसूत्रस्थाव्यवस्थापदस्य व्याख्या उपलब्ध्यनुपलब्ध्यवस्थेति। उपलब्धिः साधकं प्रमाणं अनुपलब्धिर्बाधकं प्रमाणम्। तयोरन्यतरस्याव्यवस्थाऽप्राप्तिः। तां जानतः अन्यतरतत्त्वबुभुत्सोः संशयो भवति। सोऽपि तादृशाव्यवस्थाध्यवसायमात्रेण निवर्त्तयितुं न शक्यत इत्यतिदेशार्थः।

तृतीयसूत्रोक्तदूषणं परिहर्त्तुमनुवदति **यत्पुनरिति**। समानेऽधिकरणेऽभिन्ने धर्म्मिणि। सत्समैके स्युरिति कोशात्। व्याहतार्थाविति बहुव्रीहिः प्रवादविशेषणम्। तदध्यवसायस्तृतीयस्थः स च विशेषस्मृत्यपेक्षः संशयकारणम्। नचेत्यादि स्पष्टम्। पूर्वपक्षत्रयं परि-

(भा०) यत्पुनः—"अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थाया"इति, संशयहेतोरर्थस्याप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना। व्यर्था शब्दान्तरकल्पना। अव्यवस्था खलु व्यवस्था न भवत्यव्यवस्थात्मनि व्यवस्थितत्वादिति।

---

( ख० )यत्पुनरिति चतुर्थसूत्रगतपूर्वपक्षपरामर्शः ।

अव्यवस्थाखल्विति । या किल 'अव्यवस्था' इति नाम्ना प्रसिद्धा तस्याः 'अव्यवस्थात्मनि' अव्यवस्थात्वे 'व्यवस्थितत्वात्' निश्चितत्वात् सा 'व्यवस्था' न भवितुमर्हति । अतस्तस्या व्यवस्थेति यन्नामान्तरकल्पनन्तत्सर्वथा व्यर्थमेवेत्यर्थः ।

---

(भा०चं०)प्कृत्योपहसन्नुपसंहरति **तदिदमिति** । न कृता नोत्पादिता व्याकरणन्यायादिगुरुशास्त्रैः स्वबुद्धिर्येन स तथा तस्य संमोहनं सम्मोहकरणम् । भवादृशकुतार्किकवचनमिदमित्यर्थः ।

चतुर्थसूत्रोक्तं दूषणं परिहर्तुमनुवदति **यत्पुनरिति** । परिहरति **संशयहेतोरिति** । अप्रतिषेधादनभावात् । सत्त्वादित्यर्थः । ननु मया प्रतिषेधो ज्ञापित इति चेन्नेत्याह अव्यवस्थाऽभ्यनुज्ञानादिति । अभ्यनुज्ञानात् स्वीकारात् । चोऽवधारणे । ननु व्यवस्थासंज्ञकत्वेन कथमव्यस्थाया न प्रतिषेधः कथं वाऽभ्यनुज्ञा इत्यत आह **निमित्तेति** । निमित्तान्तरेण प्रवृत्ति(१)-निमित्तविशेषेण शब्दान्तरकल्पना संज्ञान्तरकल्पना(२) नेयं साज्ञिनं निषेधति यथा दण्डसंज्ञके जातिविशेषवति न दण्डयतीति व्युत्पत्त्याऽदण्डसंज्ञया स्वरूपं न निषिध्यते तथेहापीति भावः । तथा च संज्ञानिराशेयं निष्फलेत्याह **व्यर्थेति** । इष्टासाधिकेत्यर्थः । अर्थ्यत इति व्युत्पत्तेः ।

---

(टि०) १ प्रवृत्तिनिमित्तविशेषेण=स्वरूपव्यवस्थितत्वरूपेण ।
२ संज्ञान्तरकल्पना=व्यवस्थेतिनामान्तरकल्पना ।

( भा० )नानयोरुपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं विशेषापेक्षं संशयहेतुर्न भवतीति प्रतिषिध्यते, यावता चाव्यवस्थात्मनि व्यवस्थिता न तावतात्मानं जहाति, तावता ह्यनुज्ञाताऽव्यवस्था। एवमियं क्रियमाणापि शब्दान्तरकल्पना नार्थान्तरं साधयतीति।

यत्पुनरेतत्—"तथात्यन्तसंशयः तद्धर्मसातत्योपपत्तेः"इति, नायं समानधर्मादिभ्य एव संशयः। किं तर्हि ? तद्विषयाध्यवसायाद् विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति।

"अन्यतरधर्माध्यवसायाद्वा न संशय" इति। तन्न युक्तम् विशेषापेक्षो विमर्शः संशय इति वचनात्। विशेषश्चान्यतरधर्मः। नतस्मिन्नध्यवसीयमाने विशेषापेक्षा सम्भवतीति ॥ ६ ॥

---

( ख० ) अनुज्ञातेति—पूर्वपक्षिणेत्यर्थः।

---

(भा०चं०) व्यवस्थेति भावसाधनम्। खलु निश्चितं न भवत्यव्यवस्थैव न असा इत्यर्थः। तत्र हेतुमाह **आत्मनीति**। अयं भावः न हि स्वरूपसम्बद्धं वस्तु स्वरूपासम्बद्धं भवतीति। एवं च सति संशयकारणे उपलब्ध्यनुपलब्धी विशेषापेक्षे सत्यौ स्त एवेत्याह **नानयोरिति**। सदसद्विषयत्वमिति भावे उक्तेऽन्तरितो क्तो वेदितव्यः। प्रतिवादिनः संशयहेत्वभ्यनुज्ञां विशदीकृत्य दर्शयति **यावतेत्याद्यनुज्ञाताव्यवस्थेत्यन्तेन**। उपसंहरति **एवमिति**।

पञ्चममनूद्य दूषयति **यत्पुनरिति**। विशेषस्मृतिसहितादिति विशेषापेक्षपदव्याख्या। अनुक्तमूहित्वा यदुपालब्धम् तदनूद्य दूषयति अन्यतरेति। तन्न युक्तमूहितामिति शेषः। तत्र हेतुमाह **विशेषेत्यादिना**॥ ६ ॥

कथाङ्गसंशयप्रतिषेधोऽनुचित इति शिष्यान् शिक्षयन्नाह सूत्रकारः **यत्रेत्यादिसूत्रम्**। तद्याचष्टे भाष्यकृत् समाधिर्वाच्यस्त्वया स्वयं

(सू०) यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥

( भा० ) यत्रयत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा, तत्रतत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्य इति । अतः सर्वपरीक्षाव्यापित्वात् प्रथमं संशयः परीक्षित इति ॥ ७ ॥

---

( ख० ) यत्र संशय इत्यादि सूत्रम् । अस्य यथाश्रुत्यर्थो भाष्यकारेणैव स्पष्टीकृतः । परिशुद्धिकारस्तस्य तात्पर्यान्तरमपि वर्णयाञ्चकार । तद्यथा । यस्य ( पदार्थस्य ) विषये संशयस्तस्यैव परीक्षोपयुक्ता । प्रयोजनादीनां तु परीक्षा नास्ति । यतोऽस्मिन् विषये संशयो नास्ति । आगोपाङ्गनमा च पण्डितरूपेभ्योऽविवादसिद्धे सन्देहाभावात् । अथवा प्रयोजनादयोऽप्यातिदेशेन परीक्षिताः । यत्र क्वचित् संशयः स्यात् तत्रैवमुत्तरोत्तरप्रसङ्गः कर्तव्यः । उत्तरोत्तरेषु प्रयोजनादिषु परीक्षाप्रसङ्गः कर्तव्य इति भावः ॥

---

(भा०चं०) संशयो न प्रतिषेद्धव्य इति (शेषः) । अतश्च अत एव कथाङ्गत्वादेव । अयमस्याशयः—

यो विदग्धो जडो बालो यश्च बुद्धेः परङ्गतः ।
द्वावेतौ सुखमेधेते क्लिश्यत्यन्तरितो जनः ॥
यस्य संशयितं चित्तं तस्य दुःखं पदे पदे ।
असशयं परं सौख्यं यद्द्रव्यं परमात्मनः ।
तस्मादाकृष्य सिद्धान्तान् सर्वान् संशय्य सर्वथा ।
विशिष्टैर्वादकथया वत्स तत्त्वं विनिश्चिनु ॥

इति । उपदेक्ष्यति चेदं तत्त्वज्ञानविवृद्धिप्रकरणे चतुर्थे ॥ ७ ॥

इति श्रीभाष्यचन्द्रे संशयपरीक्षाप्रकरणभाष्यचान्द्रिका ॥

## (२) प्रमाणसामान्यपरीक्षा।

( भा० ) अथ प्रमाणपरीक्षा—

(सू०) "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः" ॥८॥

(भा०) "प्रत्यक्षादीनां प्रमाणत्वं नास्ति त्रैकाल्यासिद्धेः। पूर्वापरसहभावानुपपत्तेरित्यर्थः" ॥ ८ ॥

( ख० ) अथ प्रमाणेति। आर्थेन हि क्रमेण संशयपरीक्षायामुद्देशक्रमो बाधितः। प्रमाणादिषु तु तद्बाधकारणाभावादुद्देशक्रमानुरोधेन प्रमेयादिभ्यः प्राक् प्रमाणान्येव परीक्षितानि। तत्रापि प्रथमं प्रमाणसामान्यलक्षणपरीक्षा, तत्पूर्वकत्वाद्विशेषलक्षणानाम्। तत्र सामान्यलक्षणम्—'उपलब्धिसाधनम्प्रमाणमिति'। तच्चोपलब्धिसाधनत्वम्प्रत्याक्षादीनामेव।

प्रत्यक्षादीनामिति पूर्वपक्षसूत्रम्। अयमत्र पूर्वपक्षिणो माध्यमिकस्याभिसन्धिः। यद्यपि मम विश्वविचारासहत्ववादिनः प्रमाणन्नाम न किञ्चिदस्ति विचारसहम्, तथाऽपि लोकसिद्धान्येव प्रमाणानि तैरेव प्रमाणैः पर्यालोच्यमानानि विचारन्न सहन्ते। सोऽयम्प्रमा-

(भा०चं०) अथेति संशयपरीक्षानन्तरार्थः। तस्य क्रियत इत्याहृतधात्वर्थेऽभेदनान्वयः। अप्रामाण्यमित्यस्य नञः प्रसज्यप्रतिषेधार्थत्वं ज्ञापयति नास्तीति। तथाचासत्त्वेन प्रामाण्यं साध्यम् (१)। त्रैकाल्यासिद्धेरिति। त्रय एव कालास्त्रैकाल्यं तस्मिन्नसिद्धिरर्थासाधकत्वन्तत्र हेतुः पूर्वेत्यादि (२)। पूर्वस्मिन्नपरस्मिन् सह युगपद्वा भावः सत्त्वं तस्यानुपपत्तेः॥ ८ ॥

(टि०) १ प्रत्यक्षादीनि अप्रमाणानि असत्त्वादित्यनुमानाकारः। २ फलितं असत्त्वसाधकं हेतुमाह—त्रैकाल्यासिद्धेरित्यादिना कालत्रये अर्थासाधकत्वादित्यर्थः।

( भा० ) अस्य सामान्यवचनस्यार्थविभागः—

(सू०) "पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात्प्रत्यक्षोत्पत्तिः" ॥ ९ ॥

( भा० )"गन्धादिविषयं ज्ञानं प्रत्यक्षम् । तद्यदि पूर्वं, पश्चाद्गन्धादीनां सिद्धिः, नेदं गन्धादिसन्निकर्षादुत्पद्यत इति" ॥ ९ ॥

---

(ख०)णानामपराधो यानि स्वविरोधेन विलीयन्ते, न ममापराध इति । प्रयोगस्तु–प्रत्यक्षादयो न प्रमाणत्वेन व्यवहर्तव्याः, कालत्रयेऽप्यर्थाप्रतिपादकत्वात्–यदेवन्न तत् प्रमाणत्वेन व्यवह्रियते–यथा शशविषाणम्–तथा चैतत्–तस्मात्तथेति ।

पूर्वं हीत्यादि पूर्वपक्षसूत्रम् । ज्ञानं हि 'प्रमाणम्' । तद्योगात् 'प्रमेयम्' इति च 'अर्थ' इति च भवति । तद्यदि प्रमाणम्प्रमेयादर्थात् पूर्वमुत्पद्यते ततः प्रमाणात्पूर्वन्नासावर्थ इतीन्द्रियार्थेत्यादिसूत्रव्याघात इत्यर्थः ।

---

(भा०चं०)अर्थविभागोऽर्थविशेषप्रदर्शना क्रियते पूर्वपक्षिणैवेति शेषः।**पूर्वं हीत्यादिसूत्रम्** । सप्तम्यर्थे द्वितीया । प्रमाणेति करणपरं क्रियाविशिष्टकारकविशेषः । न केवला क्रिया न केवलं द्रव्यं तस्य विशिष्टस्य वेदादौ सिद्धिः तर्हि इन्द्रियार्थसन्निकर्षात् प्रत्यक्षप्रमोत्पत्तिर्न सम्भवतीति सूत्रार्थः । पूर्वं हि क्रियाविशिष्टं कारकं सिद्धमिति ।

तत्प्रत्यक्षपदं व्याचष्टे **गन्धेति** । तद्यदि पूर्वमित्यस्य सिद्धमिति शेषः । पश्चात्पाश्चिमकाले गन्धादानां सिद्धिरुत्पत्तिरित्यर्थः । **नेदमिति** । इदं प्रत्यक्षं नकारस्य क्रियान्वयः ॥ इतिशब्दः सूत्रव्याख्यानसमाप्त्यर्थः ॥ ९ ॥

**पश्चादित्यादिसूत्रम्** । पश्चादिति फलपश्चिमकालवाची प्रमाणेभ्य

(सू०) "पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः" ॥१०॥

(भा०) "असति प्रमाणे केन प्रमीयमाणोऽर्थः प्रमेयः स्यात्। प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयमित्येतत्सिध्यति" ॥१०॥

(सू०) "युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम्" ॥ ११ ॥

(भा०) "यदि प्रमाणं प्रमेयं च युगपद्भवतः एवमपि गन्धा-

---

(ख०) पश्चादित्यादि पूर्वपक्षसूत्रम्। अथ पूर्वम्प्रमेयम्पश्चात् प्रमाणन्तत्राह पश्चादिति। यद्यप्यर्थस्य स्वरूपन्न प्रमाणाधीनन्तथापि तस्य प्रमेयत्वन्तदधीनम्। तदपि चेत् प्रमाणात् पूर्वं, न प्रमाणयोगनिबन्धनं स्यादित्यर्थः।

युगपदित्यादि पूर्वपक्षसूत्रम्। यौगपद्ये दृष्टव्याघातः सूत्रव्याघातश्चेत्यर्थः।

---

(भा०चं०) इति क्रियाविशिष्टकरणवाची प्रमेयेतिक्रियाविशिष्टकर्म्मवाची। तथाचादौ प्रमाविशिष्टकरणासिद्धौ तज्जन्यप्रमेयासिद्धिरिति सूत्रार्थः। तदिदं व्याचष्टे असति **प्रमाणे इति**। केनेत्याक्षेपे किंशब्दः ॥१०॥

**युगपदित्यादि**। युगपदित्येककालवाची अव्ययः लुप्तद्वितीयान्तः समस्तोऽसमस्तो वा। सिद्धाविति भावे सप्तमी सर्वत्र(१)। प्रत्यर्थेति वीप्सायामव्ययीभावः प्रत्यर्थं नियताः प्रत्यर्थनियतास्तासां भावस्तथा तस्मात्। क्रमेण वृत्तिरुत्पत्तिर्यासां ताः क्रमवृत्तयः। तासां भावस्तथा तस्याभावो बुद्धीनां प्रत्यक्षादीनाम्। व्याचष्टे—**यदीति**। भवत इति सिद्धिपदव्याख्या(२)। तस्य उत्पद्यत इत्यर्थः। प्रत्यर्थनियतानीति

---

(टि०)१ सूत्रार्थघटकसिद्धौ इति सप्तमी भावे इत्यर्थः।
२ भवत इति तृतीयसूत्रस्थसिद्धिपदव्याख्या।

(भा०)दिष्विन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत्सम्भवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावः । या इमा बुद्धयः क्रमेणार्थेषु वर्त्तन्ते तासां क्रमवृत्तित्वं न सम्भवतीति ।

व्याघातश्च'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्'(१ १ १६)इति।

एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः । स चानुपपन्न इति । तस्मात्प्रत्यक्षादीनां प्रमाणत्वं न सम्भवतीति" ।

अस्य समाधिः—उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद्यथादर्शनं विभागवचनम् । क्र-

---

( ख० )एतावानिति । पूर्ववृत्तित्वम्–पश्चाद्भावित्वं–यौगपद्यं वा इत्येत एव त्रयः पक्षाः सम्भवन्ति प्रमाणप्रमेययोर्विषये ।

अस्य समाधिरिति गतसूत्रत्रयोद्भावितपूर्वपक्षस्य समाधानमाह । उपलब्धिहेतोरित्यादिवाक्यस्य क्वचित्सूत्रत्वेनोल्लेखः प्रामादिकः।

---

(भा०चं०) तृतीयातत्पुरुषः। युगपदिति द्वितीयान्तम्। सम्भवन्ति उत्पद्यन्ते। इतिशब्दः पञ्चम्यन्तः। इति हेतोरित्यर्थः। शेषं स्पष्टम् । इष्टापत्तौ दूषणमाह **व्याघातश्चेति** । व्याघात इति कर्मणि भावे वा प्रत्ययः। **लिङ्गमिति** । इतिशब्दः शास्त्रपरः । स च षष्ठ्यन्तः प्रथमान्तो वा । तथा च पूर्वस्य शास्त्रस्य परेण व्याहतिः । पूर्वं परेण व्याहतं वेत्यर्थः। सद्भावः सम्बन्धः कार्य्यकारणभाव इत्यर्थः । स चासौ विषयश्चेति समासः । विषयः प्रतिपाद्यः अनुपपन्नः प्रमाणेनाप्रतिपादितः । इतिशब्दः पूर्वपक्षसमाप्त्यर्थः । समाप्तमुपसंहरति **तस्मादिति** ।

अस्याक्षेपस्प समाधिः समाधानम् । उपलब्धिहेतोः प्रमाकरणस्य उपलब्धिविषयस्य कर्म्मणः। अर्थस्याभिधेयस्य यथादर्शनं यथाप्रमाणम्। विभागवचनं क्रियत इति शेषः। **आदित्यस्य प्रकाश इति** ।

(भा०)चिदुपलब्धिहेतुः पूर्वं, पश्चादुपलब्धिविषयः। यथादित्यस्य प्रकाश उत्पद्यमानानाम्। क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः। यथावस्थितानां प्रदीपः। क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतः। यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं प्रमेयं तूपलब्धिविषयः। एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथार्थो दृश्यते तथा विभज्य वचनीय इति। तत्रैकान्तेन प्रतिषेधानुपपत्तिः। सामान्येन खल्वविभज्य प्रतिषेध उक्त इति।

---

(ख०) 'उपलब्धिहेतुः' प्रमाकरणम्। 'उपलब्धिविषयः' प्रमेयः। यथादर्शनमिति यथाप्रमाणमित्यर्थः।

आदित्यस्येति। आदित्यप्रकाशश्चिरन्तनस्थायी, तदुद्भासिताः पदार्थास्तु क्रमश उत्पद्यन्ते।

खल्वविभज्येति पाठः सम्यक्। यतः पूर्वपक्षिणा 'सामान्येन' प्रमाणसामान्यप्रमेयसामान्यपरतया—'अविभज्य' पदार्थविशेषावस्थाविशेषादिवैशिष्ट्यमविचार्यैव सर्वप्रमाणप्रतिषेध उक्तः।

खलुविभज्येत्येव पाठः स्वीकृत्य भाष्यचन्द्रेण व्याख्यातः।

---

(भा०चं०) प्रकाशतेऽनेनेति प्रकाशः आलोकः। तद्ध्यालोकनकरणाङ्गत्वात् प्रमाणम्। उत्पद्यमानानां घटादिक्रियादीनाम्। अवस्थितानां उत्पद्य सतां प्रदीपयति इति प्रदीपः। प्रदीप्यतेऽनेनेति वा योगरूढोऽयं शब्दः। सह भवतो युगपत्सिध्यतः। स्तः इत्यर्थः। उदाहरति **यथा धूमेनेति**। धूमेन सता सह अग्नेः सतो ग्रहणमित्यर्थः। सोक्तपदं व्याचष्टे **प्रमाणं प्रमेयमिति**। विभज्य वचनीय इति। सूत्रकाराभिप्रायो मया प्रकटित इत्यर्थः। पूर्वपक्षिवचने व्याघातं दर्शयितुमाह **तत्रेति**। एकान्तेन साकल्येन प्रतिषेधस्य भावदुक्तस्य

(भा०)समाख्याहेतोस्त्रैकाल्ययोगात्तथाभूता समाख्या। यत्पुन-

(भा०चं०)अनुपपत्तिरसम्भवः। कथमित्यत आह **सामान्येनेत्यादि**। सामान्येन प्रामाण्यत्वसामान्येन प्रतिज्ञाय विभज्य विभागेन प्रतिषेधप्रमाकरणम् । उक्तः स्वयमिति शेषः । इति हेतोः। यस्मात् स्ववचनं प्रमाणत्वेनाभिमन्य सर्वं प्रमाणं प्रतिषिध्यते भवतेति व्याघात इति भावः ।

ननु—

शब्दैरेव प्रतीयन्ते जातिद्रव्यगुणक्रियाः ।
तत्प्रवृत्तिनिमित्तत्वाच्छब्द उक्तश्चतुर्विधः ॥

इत्याचार्य्याः । तथाच समाख्याशब्दानां चतुर्विधा भावाश्चतुर्विधा भवितारश्चार्थाः । तत्र जातिर्यथा गौर्मनुष्यो घटो दण्ड इत्यादिः। गुणो यथा गौः शुक्लः ब्राह्मणो धीर इत्यादिः । द्रव्यं यथा आढ्यो दंडी कुण्डलीत्यादि । क्रिया धात्वर्थः सा यथा कारकं करणं प्रमाणं प्रमातेत्यादिः । तथा च तत्तद्भावविशिष्टस्य भवितुः कारणत्वे उक्ते क्रियाकालेऽपि भावस्यापि वर्त्तमानत्वमवगम्यते । तेन प्रमात्रादिभ्यः प्रमेयं जायत इति अनुपपन्नं प्रमेयोत्पत्तिकाले क्रियाया अभावादित्यनुशये सत्याह **समाख्याहेतोरिति**। समाख्या संज्ञाशब्दस्तस्य हेतुः स्वप्रवृत्तिनिमित्तं ज्यात्यादित्रयं तस्य त्रैकाल्ययोगात्तथाभूता जात्यादिप्रकारिका कारकादिसंज्ञा तु क्रियाप्रकारिकापि न क्रियामात्रेण प्रयोगाय कल्पते किन्तु क्रियाशक्त्या शक्तिश्च स्वरूपसहकारिसम्बन्धाभ्यामनन्येति न्यायाचार्य्याः । तथाच प्रयोगः पाचकः स्नाति पाचकमानय पक्ष्यतीति । क्रियामात्रस्य प्रयोगहेतुत्वे व्यवहारोऽयं नोपपद्यते इत्यादि स्ववाक्याभिप्रायं व्याचष्टे **यत्पुनरित्यादि** पूर्वपक्षिवाक्यमनूद्य । असति प्रमाणे प्रमाविशिष्टकरणेऽसतीत्यर्थः । न हि प्रमेयात् पूर्वं प्रमाविशिष्टं करणं सिद्धमिति ।

(भा०) रिदम्—"पश्चात्सिद्धावसति प्रमाणे प्रमेयं न सिध्यति। प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायत" इति—प्रमाणमित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तम्। तस्य त्रैकाल्ययोगः। उपलब्धिमकार्षीदुपलब्धिं करोति उपलब्धिं करिष्यतीति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्या तथाभूता। प्रमितोऽनेनार्थः प्रमीयते प्रमास्यत इति प्रमाणम्। प्रमितं प्रमीयते प्रमास्यते इति च प्रमेयम्। एवं सति भविष्यत्यस्मिन् हेतुत उपलब्धिः, प्रमास्यतेऽयमर्थः प्रमेयमिदमित्येतत्सर्वं भवतीति।

---

(भा०चं०) प्रमीयमाणो वर्त्तमानप्रमाविशिष्टोऽर्थः। विज्ञायतेऽनुभूयते। समाधत्ते **प्रमाणमित्येतस्या इति**। समाख्यायाः समाख्याप्रयोगस्योपलब्धिहेतुत्वं प्रमाकरणत्वं प्रमोपलक्षितं करणत्वमित्यर्थः। निमित्तं प्रयोजकम्। तस्य त्रैकाल्ययोगः क्रियानिरूपिते त्रैकाल्येऽपि योगः सम्बन्धः। तदिदं दर्शयति **उपलब्धीत्यादि**। अकार्षीत् करोति करिष्यति इत्यत्र कारकविशेष्यप्रमाणप्रस्तावे कारकसामान्यग्रहणं दृष्टान्तार्थम्। विशेषमुपसंहरति **प्रमितोऽनेनेत्यादि**। प्रमीत इति अतीते क्तः प्रमीयते इति वर्त्तमाने लट् प्रमास्यत इति भविष्यति लट्। प्रमाणसंज्ञायां प्रमामुपलक्षणं दर्शयित्वा प्रमेयसंज्ञामप्याह **प्रमितमित्यादि**। प्रमितमित्यादेरिदमिति शेषः। एवं सति शक्तेः प्रवृत्तिनिमित्तत्वे सति कारकशब्दप्रयोगेष्विति शेषः। अस्मिन्नर्थे। हेतुतः कारकतः। तेन कर्त्रादेरपि परिग्रहो बोध्यः। उपलब्धिः प्रमा एतादृशेऽर्थे प्रमास्यतेऽयमर्थ इति प्रयोगः। तथा प्रमेयमिदमित्यपि प्रयोगः। इति अनेन प्रकारेण। एतदेतादृशं सर्वं कारकसंज्ञा—भवति सिध्यति करिष्यति करोत्यकार्षीदिति कारकम्। एवं करणादिकारकविशेषसंज्ञायां ज्ञेयम्।

(भा०)त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः। यश्चैवं नाभ्यनुजानीयात्तस्य पाचकमानय पक्ष्यति लावकमानय लविष्यतीति व्यवहारो नोपपद्यत इति।

"प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे"रित्येवमादिवाक्यं प्रमाणप्रतिषेधः। तत्रायं प्रष्टव्यः—अथानेन प्रतिषेधेन भवता किं क्रियत इति। किं सम्भवो निवर्त्यते अथासम्भवो ज्ञाप्यत इति? तद्यदि सम्भवो निवर्त्यते, सति सम्भवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः। अथासम्भवो ज्ञाप्यते, प्रमाणलक्षणं प्राप्तस्तर्हि

---

(ख०) प्रमाणप्रतिषेधः—आत्यन्तिक इति भावः।

सम्भवः—प्रत्यक्षादीनाम्प्रमाणानामिति शेषः।

सति सम्भव इति। यस्य सम्भवः—यन्नात्यन्तमसत्-तस्यात्यन्तिकः प्रतिषेधो नोद्भावयितुं शक्य इति हृदयम्।

अथासम्भव इति। यदि पूर्वपक्षिणः प्रतिषेधवाक्यमसम्भवस्य ज्ञापकं तदा ज्ञापकत्वसाम्यात् प्रमाणस्वभावमेव भवति। ततश्च प्रमाणप्रतिषेधे ये हेतवः पूर्वपक्षिणोद्भावितास्तैरेव तदीयप्रतिषेधवाक्यमपि प्रतिषिद्धम्भवतीति भावः।

---

(भा०चं०)कालत्रयानभ्यनुज्ञाने दोषमाह **त्रैकाल्येत्यादिना**। व्यवहारः प्रयोगः।

स्वमतमुपपाद्य तन्मतं दूषयति **प्रत्यक्षादीनामिति**। प्रमाणानां प्रतिषेधः प्रतिषिद्धिकरणं तव वाक्यमिति शेषः। तत्र तद्विषये स्वयं प्रतिकर्ता भवान्। अथेति प्रश्ने। तस्य च वाक्यार्थेऽन्वयः। वाक्यार्थश्च इति शब्देनोक्तः ततश्च इति पृच्छत इति वाक्यार्थः। संभवो निवर्त्यते प्रमाणानां स्वरूपं नाश्यते अनेन प्रतिषेधेनेत्यनुषङ्गः। असम्भवः स्वरूपनिवृत्तिः। ज्ञाप्यते प्रमाप्यते प्रमाणसत्तावादिनं प्र-

(भा०)प्रतिषेधः प्रमाणासम्भवस्योपलब्धिहेतुत्वादिति ॥ ११ ॥

"किं चातः"—

(सू०) त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः ॥ १२ ॥

(भा०)अस्य तु विभागः। पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये किं प्रतिषिध्यते। पश्चात्सिद्धौ प्रतिषेध्यासिद्धिः प्रतिषेधाभावादिति। युगपत्सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनुज्ञानादनर्थकः प्रतिषेध इति। प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रमाणत्वमिति ॥ १२ ॥

(सू०) सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

---

(भा०चं०) तीति शेषः। प्रथमं पक्षं दूषयति **तद्यदीति**। सति सम्भवे सत्यस्वरूपे सतीति शेषः। प्रतिषेधानुपपत्तिः प्रतिषेधासम्भवः। व्याघातं दर्शयितुमाह **प्रमाणलक्षणं प्राप्तस्तर्हीति**। सोऽयं प्रतिषेधस्तव स्वारूढशाखाच्छेदनमिव भातीति भावः(?) । यतः प्रमाणमादायैव प्रमाणं खण्डयसीति ॥ ११ ॥

दर्शितमपि व्याघातमजानन्निव पृच्छति **किञ्चात इति**। त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरिति सूत्रम् तद्याचष्टेऽस्य **त्विति**। तुशब्दोऽप्यर्थे। त्वदुक्तसूत्रार्थवदित्यर्थः। विभागः क्रियते इति शेषः। प्रतिषेधसिद्धौ प्रतिषिद्धिप्रमासहितकरणसिद्धौऽसत्यविद्यमाने निःस्वरूपे प्रतिषेध्ये प्रतिषिद्धिप्रमाकर्मणि। शेषं व्यक्तम् ॥ १२ ॥

व्याघातान्तरमाह **सर्वेति सूत्रम्**। तद्याचष्टे **कथमिति**।

---

(टि०) १ उपलब्धिसाधनस्यैव प्रमाणत्वात्प्रतिषेधः। प्रमाणलक्षणं प्राप्त इति। प्रमाणमङ्गीकृत्य प्रमाणप्रतिषेधकरणं स्वारूढशाखाछेदनतुल्यमिति भावः।

( भा० ) कथम् ? त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणमुपादीयते हेत्वर्थस्य साधकत्वं दृष्टान्ते दर्शयितव्यमिति । न च तर्हि प्रत्यक्षादीनामप्रामाण्यम् । अथ प्रत्यक्षादीनामप्रामाण्यम्, उपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति । सोऽयं सर्वप्रमाणैर्व्याहतो हेतुरहेतुः । 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध' ( १ २ ६ ) इति । वाक्यार्थो ह्यस्य सिद्धान्तः । स च वाक्यार्थः–प्रत्यक्षादीनि नार्थं साधयन्तीति । इदं चावयवानामुपादानमर्थस्य साधना-

---

( ख० ) वाक्यार्थ इति । 'प्रमाणानि नार्थं साधयन्ति–'इति वाक्यं पूर्वपक्षिणः सिद्धान्तप्रतिपादकम् । तत्साधनाय पञ्चावयवोपपन्नानुमानवाक्यान्युद्भावितानि । प्रत्येकञ्चैतेऽवयवाः स्वार्थप्रतिपादकाः, तत्प्रतिपादकत्वाच्चैते प्रमाणानि । एवमप्यवयववाक्यानां स्वसिद्धान्तसाधनायोद्भावने विरुद्धो नाम हेत्वाभासः ।

---

(भा०चं०)सर्वप्रमाणप्रतिषेधः कथमित्याक्षेपः । उदाहरणं दृष्टान्तवाक्यम् । हेत्वर्थस्य हेतुवाक्यप्रतिपाद्यस्य । साधकत्वं व्याप्तिः । दर्शयितव्यं प्रत्यक्षादिनेति शेषः । ततः किं स्यात्तदाह **न च तर्हीति** । अप्रामाण्यप्रतिषेधः न सम्भवति स्वयमूरीकृतत्वादिति शेषः । अनङ्गीकारे दोषमाहाथेति । अथशब्दोऽयं कात्स्न्यार्थः कृत्स्नानां स्वोक्तपरोक्तानामप्रामाण्यमित्यर्थः । एवं च सति त्वदुक्तो हेतुर्हेत्वाभास इत्याह **सोऽयमिति** । कोऽयं हेत्वाभास इत्यत आह **विरुद्ध इति** । ननु खलु कस्य सिद्धान्त एव नास्तीत्यत आह **वाक्यार्थो हीति** । सो वाक्यार्थ एवेत्यर्थः । अस्य तव दूषकस्येत्यर्थः । तं दर्शयति **स चेति** । इदं चेदं वाक्यम् । अवयवानां प्रतिज्ञादीनाम् । उपपादनं प्रतिपादनम् । अर्थस्य स्वाभिमतसाधनस्य । साधनाय परप्रतिपत्तये अथेति पक्षान्तरे नोपादीयते प्रामाणिकत्वेन न ज्ञाप्यते । प्रतिषेधकं हेतुदृष्टान्तवाक्य-

(भा०)येति । अथ नोपादीयते, अप्रदर्शितहेत्वर्थस्य दृष्टान्ते न साधकत्वमिति निषेधो नोपपद्यते हेतुत्वासिद्धेरिति ॥ १३ ॥

(सू०) तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः॥१४॥

( भा० ) प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनां प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येऽप्यवयवाश्रितानां प्रामाण्यं प्रसज्यते, अविशेषादिति । एवं च न सर्वाणि प्रमाणानि प्रतिषिध्यन्त इति । विप्रतिषेध इति वीत्ययमुपसर्गः

---

( ख० ) अप्रदर्शितेति । 'दृष्टान्ते अप्रदर्शितहेत्वर्थस्य साधकत्वमेव न' इत्यन्वयः । यस्य हेतोः हेतुभावो न प्रदर्शितस्तादृशो हेतुः किमपि साधयितुन्नार्हति । अथ वा यावद्भवतां स्वोद्भावितहेतोर्दृष्टान्ते हेतुत्वन्न प्रदर्शितन्तावत् तस्य साधकत्वन्न सम्भवति । अस्मिन् पक्षे अप्रदर्शितहेत्वर्थस्य तवेति सम्बन्धः ।

वीत्ययमुपसर्ग इति । यावदुक्तं विशेषेण सर्वेषु प्रमाणेषु प्रतिषेध इति तावदुक्तम्भवति विप्रतिषेध इति । कानिचित्प्रमाणानि प्रतिषिध्यन्ते कानिचिदभ्यनुज्ञायन्ते--स्ववाक्याश्रितान्यभ्यनुज्ञायन्ते

---

(भा०चं०)मिति शेषः । अनुपादाने दोषमाह **प्रदर्शितेति** । दृष्टान्तेऽप्रदर्शितहेत्वर्थस्य तवेति शेषेणान्वयः । न साधकत्वं न वा बाधकत्वमित्यर्थः । बाधकस्येह बाधसाधकत्वात् । अनुपपत्तौ हेतुमाह **हेतुत्वासिद्धेरिति** ॥ १३ ॥

स्ववाक्यप्रामाण्याङ्गीकारे दोषमाह **तत्प्रामाण्येति सूत्रम्** । व्याचष्टे प्रतिषेध इति । स्ववाक्य इति सप्तमी सम्बन्धे स च सम्बन्धोऽवयवान्वयी । अविशेषाद्वाक्यत्वाविशेषात् । तथा च प्रतिज्ञाहानिर्दोष इत्याह **एवञ्चेति** । सूत्रस्थं व्युपसर्गं व्याचष्टे **वीत्यय-**

(भा०)सम्प्रतिपत्त्यर्थे, न व्याघातेऽर्थाभावादिति ॥ १४ ॥

(सू०) त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धि-वत्तत्सिद्धेः ॥ १५ ॥

(भा०) "किमर्थं पुनरिदमुच्यते ?"

---

(ख०)परवाक्याश्रितानि प्रतिषिध्यन्ते। तच्च नातीवोचितम्प्रमाणप्रतिषेधकस्य माध्यमिकस्येत्यर्थः।

किमर्थमिति । एकादशसूत्रभाष्ये अस्य समाधिरित्यस्यानन्तरमुक्तम्—'उपलब्धिहेतोरित्यादि' समुद्दिश्य प्रश्नः । यत्तत्रोक्तं तदेवात्र पुनः किमर्थमुच्यत इति भावः।

एतत्प्रश्नबलेनैव पूर्वोक्तं वाक्यमुपलब्धिहेतोरित्यादिविभागवचनमित्यन्तं सूत्रत्वेनाभिप्रयन्ति केचित्। एवं सत्येवात्रत्यं त्रैकाल्याप्रतिषेधश्चेति वाक्यम्प्रति पौनरुक्त्याक्षेपः स्यादिति तेषामाशयः।

किन्त्वेतन्मतम्भाष्यस्थयैवाग्रिमपंक्त्या पूर्वोक्तनिबन्धनार्थमित्यादिरूपया पराहतम् । एकादशसूत्रभाष्ये यदुक्तं तस्य बीजमत्रत्यसूत्रमेवेति ब्रुवता भाष्यकारेण पूर्वस्य वाक्यस्यासूत्रत्वमत्रत्यस्य च सूत्रत्वं स्पष्टीकृतम् ।

---

(भा०चं०)मि नि। सम्प्रतिपत्त्यर्थेन वैशिष्ट्यार्थेन व्याघातेन व्याहतत्वेन उपादानादर्थाभावादिति । तथा सति न व्याहतप्रतिषेध इति इति विवक्षितविरोधः स्यात् ॥ १४ ॥

पूर्वापरसहभावनियमाभावः सूत्रकृदभिप्रेतो भाष्यकृता दर्शितः। इदानीन्तमेव दर्शयितुं सूत्रकृदेकां विधान्दर्शयति । **त्रैकाल्येत्यादिसूत्रेण** । त्रैकाल्याप्रतिषेधः। प्रमाणप्रमेययोः कार्यकारणभावः। सम्बन्धो विशेषणतः स्वरूपतस्तु ज्ञाप्यज्ञापकभावः । स इह त्रैकाल्यपदेनोक्तः । तस्याप्रतिषेधः सम्भव इत्यर्थः । तथाच प्रमाणप्रमेययोः कार्य-

(भा०)पूर्वोक्तनिबन्धनार्थम् । यत्तावत्पूर्वोक्तम्-"उपलब्धि-हेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथा-दर्शनं विभागवचनमिति"-तदित समुत्थानं यथा विज्ञायेत । अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे । त्रैकाल्ये चायुक्तः प्रतिषेध इति ।

तत्रैकां विधामुदाहरति शब्दादातोद्यसिद्धिवदिति । यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते । साध्यं चातोद्यं साधनं च शब्दः । अन्तर्हिते ह्यातोद्ये स्वनतोऽनुमानं भवतीति । वीणा वाद्यते वेणुः पूर्यते इति स्वनविशेषेण आतोद्यविशेषं प्रतिपद्यते । तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धि-हेतुना प्रतिपद्यत इति ।

निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदि-तव्यमिति ।

---

( ख० ) पूर्वोक्तेति । एकादशसूत्रे यदस्माभिरुक्तन्न तदुत्सूत्रमपि तु सूत्रोक्तार्थ एवेति भावः ।

इतस्समुत्थानमिति । इतः अत्रैव त्रैकाल्येत्यादि सूत्रे समुत्थानम् बीजं यस्य तत् ।

समावेशेनेति । समावेशो नियम इति वार्तिकम् ।

---

(भा०चं०) कारणभावस्सम्भवतीति प्रतिज्ञार्थः । तत्सिद्धे कार्यकारण-भावदृष्टे उदाहरणार्थं **शब्दादातोद्यसिद्धिवदिति**।यथा शब्दविशे-षात् ज्ञायमानात् आतोद्यस्य वीणादेः सिद्धिः प्रमितिः । ननु दूषक-हेतुपरिहारादि वेदप्राप्तमतः पुनरुक्तमाशंक्य पृच्छति **किमर्थमिति** । उच्यते सूत्रकारेणेति शेषः । उत्तरमाह भाष्यकृत् **पूर्वोक्तेति** । नि-बन्धनं नितराम्बन्धनम् । निश्चयस्तदर्थमुच्यत इत्यनुषङ्गः । इतः स-

(भा०) "कस्मात्पुनरिह तन्नोच्यते ?"

पूर्वोक्तमुपपाद्यत इति । सर्वथा तावदयमर्थः प्रकाशयितव्यः । स इह वा प्रकाश्येत तत्र वा न कश्चिद्विशेष इति ॥१५॥

प्रमाणं प्रमेयमिति च समाख्या समावेशेन वर्तते समाख्यानिमित्तवशात् । समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणम् उपलब्धिविषयश्च प्रमेयमिति । यदा च उपलब्धिविषयः क्वचिदुपलब्धिसाधनं भवति तदा प्रमाणं प्रमेयमिति चैकोऽर्थोऽभिधीयते ॥

अस्यार्थस्यावद्योतनार्थमिदमुच्यते—

( सू० ) प्रमेया च तुला प्रामाण्यवत् ॥ १६ ॥

(भा०) गुरुत्वपरिमाणज्ञानसाधनं तुला प्रमाणं, ज्ञानविषयो

---

(ख०)प्रमेयाचेति सूत्र पाठो वाचस्पतिमिश्रसम्मतः । तदन्वयश्च—'तुला प्रामाण्यवत् प्रमेया च' इति । तुला यथा प्रमाणं भवति तथा प्रमेया चेत्यर्थः । तुला सुवर्णादिगुरुत्वे 'प्रमाणम्' भवति । किन्तु यदाऽस्याः प्रामाण्यम्प्रति सन्देहो भवति तदा सिद्धप्रमाणभावेन तुलान्तरेण यत् परीक्षितं सुवर्णादि तेन तुलायाः प्रामाण्यन्निर्धार्यते--तत्र चेयं 'प्रमेया' भवति । एवमेव प्रत्यक्षादीनि प्रमाणान्यपि स्वगोचरविषयम्प्रति प्रमाणानि प्रमेयाणि स्वस्वज्ञानम्प्रतीति हृदयम् ॥

प्रमेयता चेति क्वचिद्वार्तिकपुस्तकेषु नवीनसूत्रव्याकर्तृभिश्च धृतः । तत्र—प्रमाणानाम्प्रमेयता च भवति, तुलाप्रामाण्यवत्—यथा

---

(भा०चं०) मुत्थानं प्राप्तिर्यस्य तत्तथा । नामावयवत्वात् तल्लोपाभावः । पूर्य्यते शब्द्यते वादकेनेति शेषः । यथोक्तम् यथा पूर्वमिति शेषः । शेषं स्पष्टम् ॥ १५ ॥

प्रमाणप्रमेयादिसंज्ञानामेकत्रापि वस्तुनि संकर इति दर्शयितुं सूत्रयति **प्रमेया च तुलेत्यादि** । तद्व्याचष्टे **गुरुत्वेत्यादि** । गुरुत्वञ्च

(भा०) गुरुद्रव्यं सुवर्णादि प्रमेयम् । यदा सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति ।

एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः । आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः । उपलब्धौ स्वात-

---

( ख० ) तुलायाः प्रामाण्यम्प्रमेयता चैवमेव प्रमाणानाममीति भावः ।

व्यवस्थाप्यत इति । शुद्धत्वेन परीक्ष्यत इत्यर्थः ।

अनवयवेनेति । कात्स्न्र्येनेत्यर्थः । उक्तः प्रमेयप्रमाणसमाख्यासमावेशः सकलशास्त्रविषयं व्याप्नोतीति भावः ।

---

(भा०चं०)तत्प्रमाणञ्चेति कर्मधारयः । प्रमाणमिह परिमाणम्(१) । यद्वा गुरुत्वस्य प्रमाणज्ञानमिति विग्रहः । तदा प्रमाणप्रमासामान्यविशेषाभ्याम् । कर्मधारयः गुरुत्वस्य कर्मणि षष्ठी । गुरुत्वप्रमाणज्ञानस्य साधनं करणम् । करणे ल्युटि विधानात् । तुलयत्यनयेति तुला । तुल दुल उन्माने । तन्मानमनुमितिविशेषः साधनं तुला प्रमाणमिति त्रितयमिदं समानाधिकरणम् । ज्ञानं ज्ञप्तिस्तुला फलं तस्य विषयः सधर्मा गुरुत्वसाध्यधर्म्माश्रयो गुरुः । एवं तुलाप्रमितप्रमेयस्य सुवर्णादेः प्रमाणसंज्ञामुपनिवेशयति यदेति । सुवर्णादिना तुलया परिमितेन । तुलान्तरमिति तुलयिष्यत्यनयेति तुला तुला च तदन्तरञ्चेति तुलान्तरम् । अविग्रहो वा षष्ठीतत्पुरुषः । तुलान्तरं तुलाविशेषः । व्यवस्थाप्यते साध्यते । प्रतिपत्ताविति निमित्तसप्तमी । तथाच तुलान्तरप्रतिपत्तौ कर्तव्यायामिति अर्थः । सुवर्णादि प्रमाणं सिद्धत्वात् । तुलान्तरं तुल्यमानं प्रमेयं साध्यत्वात् । उद्देशसूत्रभाष्योपदिष्टं स्मारयति एवमिति । प्रमेयस्य प्रमातृसंज्ञां दर्शयति आत्मेत्यादिना ।

---

(टि०) १ गुरुत्वप्रमाणज्ञानसाधनं तुलाप्रमाणमिति भाष्यपाठानुरोधेनेद व्याख्यानम् । बहुषु पुस्तकेषु गुरुत्वपरिमाणज्ञानमित्येव पाठः ।

(भा०) न्त्र्यात् प्रमाता। बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्। उपलब्धिविषयत्वात् प्रमेयम्। उभयाभावात् तु प्रमितिः। एवमर्थविशेषे समाख्यासमावेशो योज्यः। तथा च कारकशब्दा निमित्तवशात् समावेशेन वर्त्तन्त इति। वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात्कर्ता। वृक्षं पश्यतीति दर्शनेनाप्तुमिष्यमाणतमत्वात् कर्म। वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य साधकतमत्वात् करणम्। वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम्। वृक्षात्पर्णं पततीति ध्रुवमपायेऽपादानमित्यपादान-

---

(भा०चं०) प्रमेये प्रमेयवर्गे। परिपाठितः प्रोक्तृतया पठितः। प्रमेयवर्गस्य यत्सारन्तस्य ज्ञापनाय प्रमेय इत्येकवचनम् उपलब्धौ प्रमायां स्वातन्त्र्यात् कर्त्तेति स्वतन्त्रः कर्त्तेति सूत्रात्। प्रमाता प्रमाकर्त्ता। प्रमायामपि मानसंज्ञां निवेशयति **बुद्धिरिति**। बुद्धिः व्याप्तिज्ञानादि। शेषं स्पष्टम्। उभयाभावात् प्रमाणप्रमेयोभयसंज्ञया विवक्षाभावात् प्रमितिर्बुद्धिरिति शेषः। प्रमाणादिचतुर्वर्गे कृतसंज्ञान्तरदिशं संशयादावप्यतिदिशति **एवमिति**। अर्थविशेषे संशयादौ समाख्या प्रमाणादिसंज्ञा। समावेशः सम्बन्धः। योज्यः कार्यः ज्ञातव्यो वा। उपसंहरति **तथा चेति**। कारकशब्दाः सामान्यविशेषरूपाः प्रवृत्तिनिमित्तवशात्। समावेशेन संकरेण वर्तन्ते समावेशेनेति तृतीयार्थो भेदो वृत्त्यन्वयि। सामान्यविशेषाभ्याम् क्रियाकारकभावव्युत्पत्तये संज्ञासंबन्धदर्शनाय च प्रयोगान्दर्शयति **वृक्षस्तिष्ठतीत्यादिभिः**। स्थितिरिह जीवनम् देवदत्तः तिष्ठति मृतो वेति प्रयोगे तथा दर्शनात्। आख्यातार्थः कर्तेति दर्शयति **स्वातन्त्र्यादिति**। **आप्तुमिष्यमाणतमत्वादिति**। कर्तुरीप्सिततमं कर्मेति स्मृतेः। शेषं स्पष्टम्। इत्थं क्रियाकारकनिरूपणं श्रुत्वा क्रियैव कारकसंज्ञाप्रवृत्तिनिमित्तमित्यभिप्रेत्य पूर्वपक्षी प्रत्यवतिष्ठते **एवं चेत्यादिनार्हतीत्यन्तेन**। तवेति

(भा०) म्। वृक्षे वयांसि सन्तीत्याधारोऽधिकरणमित्यधिकरणम्।
एवं च सति न द्रव्यमात्रं कारकं, न क्रियामात्रम् । किं तर्हि ? क्रियासाधनं क्रियाविशेषयुक्तं कारकम् । यत्क्रियासाधनं स्वतन्त्रः स कर्ता, न द्रव्यमात्रं न क्रियामात्रम् । क्रियया व्याप्तुमिष्यमाणतमं कर्म, न द्रव्यमात्रं न क्रियामात्रम् । एवं साधकतमादिष्वपि । एवं च कारकान्वाख्यानं यथैव उपपत्तितः, एवं लक्षणतः कारकान्वाख्यानमपि न द्रव्यमात्रेण न क्रियया वा । किं तर्हि ? क्रियासाधने क्रियाविशेषयुक्त इति । कारकशब्दश्चायं प्रमाणं प्रमेयमिति । स च कारकधर्मं न हातुमर्हति ॥१६॥

---

(ख०) एवं च सतीत्यारभ्य हातुमर्हतीत्यन्तं ग्रन्थं केचित्पूर्वपक्षत्वेनाभिप्रयन्ति । तन्मतेन च 'अस्तिभोः' इत्यादि ग्रन्थस्तत्पूर्वपक्षस्य समाधानम् 'इत्येवमादिने'त्येतत्पर्यन्तम्, पुनः सेयमुपलब्धिरित्यपरः पूर्वपक्षः ।

वार्तिकतात्पर्यादिमतेन तु 'एवं चेत्यादि' हातुमर्हतीत्यन्तं सिद्धान्तिन एव वचनम् । तदनन्तरम् अस्ति भोरित्याद्यष्टादशसूत्रपर्यन्तम्पूर्वपक्षवचनम् ।

द्रव्यमात्रं कारकमिति माध्यमिकराद्धान्तः । क्रियामात्रमिति । अवान्तरक्रियामात्रमित्यर्थः ।

क्रियासाधनमिति । यत् प्रधानक्रियासाधकमवान्तरक्रियायुक्तन्तत्कारकमित्यर्थः ।

---

(भा० चं०) वैयाकरणपरिभाषितं द्रव्यं बोध्यं तेन तण्डुलादेरपि सिद्धावस्थस्य कारकत्वं बोध्यम्। **क्रियामात्रमिति** । क्रियेति फलव्यापाररूपं ज्ञेयं क्रियासाधनं क्रियाकारणम् । उपलक्षणत्ववारणायाह **क्रियाविशेषयुक्तमिति** । कारकं कारकसंज्ञाव्यवहार्यम् । अस्माकं विशेषविदुषामिति शेषः । स्वतन्त्रः स्वच्छन्दः । क्रियामात्रमिति फलव्यापारा-

(भा०) "अस्ति भोः कारकशब्दानां निमित्तवशात् समावेशः। प्रत्यक्षादीनि च प्रमाणानि उपलब्धिहेतुत्वात्, प्रमेयं चोपलब्धिविषयत्वात् । संवेद्यानि च प्रत्यक्षादीनि प्रमाणानि, प्रत्यक्षेणोपलभे अनुमानेनोपलभे उपमानेनोपलभे आगमेनोपलभे-प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं

---

( ख० ) पूर्वपक्षमुत्थापयति अस्ति भोरिति ।

उपलब्धिविषयत्वं कुत इत्यत आह प्रत्यक्षमिति ।

अयमत्र पूर्वपक्षसङ्क्षेपस्तात्पर्यकारोक्तः । अत्रैते कल्पा उपप्लवन्ते । किम्प्रत्यक्षादीनामुपलब्धिः ससाधना निस्साधना वा । यदाऽपि ससाधना तदाऽपि किमेभिरेव प्रत्यक्षादिभिराहो प्रमाणान्तरेण । यदाऽप्येभिस्तदाऽपि किन्तयैव प्रत्यक्षव्यक्त्याऽथैका व्यक्तिर्व्यक्त्यन्तरेणेति। तत्र प्रमाणान्तराभ्युपगमे विभागसूत्रव्याघातोऽनवस्थापातश्च । तत्र प्रत्यक्षादिभिः प्रत्यक्षाद्यन्तराणां ग्रहणेऽनवस्थापातः । तयैव व्यक्त्या तु ग्रहणे आत्मनि वृत्तिविरोधः । नहि तयैवासिधारया सैवासिधारा छि-

---

(भा०चं०)न्यतरपरम् । कर्मानुभयसम्भवात् । **कारकधर्म्मं न हातुमर्हतीति** । कारकधर्मं कारकस्वभावं क्रियामनन्तरेण प्रयोगविषयत्वम् ।

एवं प्रत्यवस्थितं प्रत्याह **अस्ति भो इति** । निमित्तवशात् शक्तिवशात् । **नक्रियामात्रेति** । तदिदं दर्शयत्युप**लब्धिहेतुत्वादिति** । उपलब्धि—उपलक्षितहेतुत्वादित्यर्थः । एवमग्रेऽपि बोध्यम् । संवेद्यानि संविभज्य वेद्यानि प्रत्यक्षादीनि क्रियाकारकरूपाणि । तान्येकशेषेणाह **प्रमाणानीति** । प्रमाणानि च प्रमाकरणानि च पुनः प्रमाणानि च प्रमितयश्च तानि प्रमाणानि इत्येकशेषः । सरूपाणामेकशेष एकविभक्तावित्यनुशासनात् । करणविशिष्टां क्रियां संवेद्यां प्रदर्शयति **प्रत्यक्षेणेत्यादि** । केवलां क्रियां संवेद्यामाह **प्रत्यक्षं मे इत्यादि** ।

(भा०)मे ज्ञानमिति विशेषा गृह्यन्ते। लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेणेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्येवमादिना।

सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतोऽथान्तरेण प्रमाणान्तरमसाधनेति" ॥ कश्चात्र विशेषः ?—

---

(ख०)घते। तस्मादसाधना प्रमाणोपलब्धिः। एवञ्चेत् कृतम्प्रमेयसाधनैः प्रमाणैः प्रमाणवदसाधनैवास्तु प्रमेयोपलब्धिरिति।

सिद्धान्ती पृच्छति कश्चेति।

अयमत्र सिद्धान्तः—नासाधना प्रमाणसिद्धिर्नापि प्रत्यक्षादिव्यतिरिक्तप्रमाणाभ्युपगमो येन विभागसूत्रव्याघातः स्यात्। नापि च तयैव व्यक्त्या तस्या एव ग्रहणमुपेयते येनात्मनि वृत्तिविरोधो भवेत्। अपि तु प्रत्यक्षादिजातीयेन प्रत्यक्षादिजातीयस्य ग्रहणमातिष्ठामहे। न चानवस्थाऽस्ति। किञ्चित्प्रमाणं स्वज्ञानेनान्यधीहेतुर्यथा धूमादिः, किञ्चित्पुनरज्ञातमेव बुद्धिसाधनम्, यथा चक्षुरादि। तत्र पूर्वं स्वज्ञाने चक्षुराद्यपेक्षम्। चक्षुरादि तु ज्ञानानपेक्षमेव ज्ञानसाधनमिति का-

---

(भा०चं०)अत्र प्रत्यक्षत्वादिचतुष्टयं क्रियागतं जातिविशेषः कारकगतं तु शक्तिरेव। यद्वा प्रत्यक्षेणोपलभे इत्यभेदे तृतीया। प्रत्यक्षादिपदानि प्रमापराणि तथाच पूर्ववाक्ये जातिर्विषयः। प्रत्यक्षमानुमानिकमित्यादि तत्करणकपरम्। तथा चात्रोपाधिविशेषो विषयः। **विशेषा गृह्यन्त इति**। जात्युपाधिरूपा विशेषा क्रियाकारकनिष्ठा इत्यर्थः। क्रियाणां लक्षणरूपेण विशेषेणापि संवेद्यत्वं दर्शयति **लक्षणतश्चेत्यादिना**। लक्षणत इत्यस्य विशेषणं विशेषेणेति। एवमादिनेत्यादिपदेन तत्पूर्वकमनुमानमित्यादेः परिग्रहः ॥ १६ ॥

एवं क्रियाकारकविषयिणीमुपलब्धिमाक्षेप्तुमाह पूर्वपक्षी **सेयमिति**। प्रमाणान्तरतः संवेद्यातिरिक्तप्रमाणेन। अथ शब्दोऽयं पक्षान्तरे।

(सू०) "प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तर-सिद्धिप्रसङ्गः" ॥ १७ ॥

(भा०) "यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते, येन प्रमाणेनोपलभ्यन्ते तत्प्रमाणान्तरमस्तीति प्रमाणान्तरसद्भावः प्रसज्यत इति । अनवस्थामाह तस्याप्यन्येन तस्याप्यन्येनेति । न चानवस्था शक्याऽनुज्ञातुमनुपपत्तेरिति" ॥ १७ ॥

"अस्तु तर्हि प्रमाणान्तरमन्तरेण निःसाधनेति ?—

(सू०)"तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत्प्रमेयसिद्धिः"॥१८॥

(भा०) "यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्तते, आत्माद्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यत्यविशेषात्" ॥ १८ ॥

(भा०) एवं च सर्वप्रमाणविलोप इत्यत आह —

(सू०) न, प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ॥ १९ ॥

(भा०)यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वात् दृश्यदर्शने प्रमाणम्, स च प्रत्यक्षान्तरेण चक्षुषः सन्निकर्षेण गृह्यते । प्रदीपभावाभाव-

---

(ख०)ऽनवस्था । बुभुत्सया च तदपि शक्यज्ञानम् । सा च कदाचिदेव क्वचिदिति नानवस्था । तस्मात्प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धिरिति ।

सिद्धनामवतारयति एवमिति । न प्रदीपेत्यादि सिद्धान्तसूत्रम् ।

---

(भा०चं०)अन्तरेण विना । असाधनाऽप्रमाणजा । निगूढदूषणप्रश्नस्य सुकरसमाधानकस्य उत्तरः प्रश्नः **कश्चात्र विशेष इति** । आशयं प्रकटयति सूत्रेण **प्रमाणत इत्यादिना** ॥ १७ ॥

अनवस्थायां प्रदर्शितायां द्वितीयां कोटिमवलम्बनीयामाशङ्क्य दूषयति । **तद्विनिवृत्तेरित्यादिना** ॥ १८ ॥

समाधत्ते न **प्रदीपेणेत्यादि सूत्रेण** । प्रत्यक्षाङ्गत्वात् प्रत्यक्षक्रि-

(भा०) योर्दर्शनस्य तथाभावाद्दर्शनहेतुरनुमीयते। तमसि प्रदीपमु-पाददीथा इत्याप्तोपदेशेनापि प्रतिपद्यते। एवं प्रत्यक्षादीनां यथा-दर्शनं प्रत्यक्षादिभिरेवोपलब्धिः। इन्द्रियाणि तावत् स्वविषयग्र-हणेनैवानुमीयन्ते। अर्थाः प्रत्यक्षतो गृह्यन्ते। इन्द्रियार्थसन्निक-र्षास्त्वावरणेन लिङ्गेनानुमीयन्ते। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान-

---

( ख० ) गृह्यत इति। ततश्च प्रत्यक्षगम्य इत्यर्थः।

तथाभावादिति। भावाभावादन्वयव्यतिरेकादिति यावत्।

अनुमीयत इति। ततश्च शब्दोऽनुमानगम्य इति भावः।

प्रतिपद्यत इति। ततश्चायं शब्दप्रमाणगम्य इति भावः।

इन्द्रियेति। सन्निकर्षप्रतिरोधकावरणाभावे प्रत्यक्षं जायते, तद्भावे च न जायते। एवं चावरणाभावेन सन्निकर्षानुमानम्। ततश्चावरणमेव स्वाभावद्वारा तत्र लिङ्गमिति भावः। अनुमानस्वरूपं च प्रत्यक्षमिन्द्रि-यार्थसन्निकर्षजं तादृशसन्निकर्षप्रतिरोधकावरणे सति तदभावादिति।

---

(भा०चं०) याङ्गत्वात्। प्रमाणं प्रमाकरणम्। स च प्रदीपश्च। प्रदी-पभावाभावयोरिति भावसप्तमी। दर्शनस्य प्रदीपदृष्टेः। तथाभावात् भावाभावाभ्याम्। दर्शनहेतुः स्वपरदर्शनहेतुः। प्रदीपोऽनुमीयते प्रदीपे हेतुत्वमनुमेयमित्यर्थः तद्धि इन्द्रियसम्बन्धादिरूपमिति। तमसि तमः-स्थिते विषये उपाददीथा उप उपकाराय दर्शनाय आददीथाः गृह्णीथाः। लिङ्प्रत्यये इष्टसाधनमाह। इष्टमुपादेयञ्च हेयञ्च दृष्ट्वा हेये हान्या उपादेये प्राप्त्या प्रकारेण तथाच हेयोपादेयोपाय उपात्तुः प्रदीपः प्र-तीयते आप्तोपदेशादिति भावः। दार्ष्टान्तिके दृष्टान्तार्थमतिदिशति **एवमिति**। यथादर्शनम् यथाप्रमाणं। प्रत्यक्षादिभिः प्रत्यक्षादीनामन्य-तमेन नत्वतिरिक्तेन। उपलब्धिः प्रमा। विभज्य दर्शयति **इन्द्रियाणी-त्यादिना**। स्वविषयग्रहणेनैवानन्यकार्य्यतया ज्ञायमानेनैवेत्यर्थः। अ-

(भा०) मात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद्-गृह्यते । एवं प्रमाणविशेषो विभज्य वचनीयः । यथा च दृश्यः सन् प्रदीपप्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्थां लभते, एवं प्रमेयं सत्किञ्चिदर्थजातमुपलब्धिहेतुत्वात् प्रमाणप्रमेय-व्यवस्थां लभते । सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां यथादर्शनमुप-

---

( ख० ) दृश्यदर्शनेति । 'दृश्यं'—दर्शनविषयं - 'दर्शनं'—दर्शनक-रणम्—इति वा व्यपदेशं लभत इत्यर्थः ।

एवम्प्रमेयमिति । किञ्चिद्वस्तु यदा ज्ञानस्य विषयस्तदा 'प्रमेय-मिति', यदा ज्ञानस्य हेतुः करणन्तदा प्रमाणमिति व्यपदेशं लभते ।

---

(भा०चं०) नुमीयन्ते स्वस्मिन्पक्षे । अर्था रूपरूपवदाद्या विषयाः । आवरणेन प्रसारितचक्षुषः सामग्र्यां सत्यामपि कुड्याद्यन्तरितवस्त्वदर्श-नेन कुड्यादिदर्शनसहितेन । अत्र प्रयोगः । कुड्यमिन्द्रियसन्निकृष्टम् दृश्यमानत्वात् । यन्नैवम् तन्नैवम् यथा कुड्याद्यन्तरितं वस्तु इदञ्च न तथा तस्मात्तथेति । चक्षुरिदं कुड्यसन्निकृष्टम् तत् कर्म्मकदर्शकनरूपण-त्वात् यत् यत्कर्म्मकदर्शनं करणम् तत् तत्सन्निकृष्टम् । यथा त्वक् इदञ्च तथा तस्मात्तथा । इन्द्रियाणि प्राप्यकारीणि करण-त्वात् कुठारवत् इत्यादिज्ञानमपि प्रत्यक्षेण गृह्यते इत्याह **इन्द्रियार्थे-त्यादि** । **संयोगविशेषादिति** । पुरीतदन्यदेशवद्भिन्नात्मनि मनः-संयोगादित्यर्थः । संयोगविशेषात् संयोगविशेषविशिष्टादात्मसमवायात् । चोऽवधारणे सुखादिवदिति दृष्टान्तः । गृह्यते प्रत्यक्ष्यते । न्यायमिममति-दिशति **एवं प्रमाणविशेष इति** । व्याप्तिज्ञानपरामर्शादिरनुव्यवसा येन प्रत्यक्षेण विषयीक्रियत इति भावः । सर्वस्य वस्तुजातस्य प्रमाणप्रमे-यादिव्यवस्थाम् । दृष्टान्तमनूद्योपसंहरति **यथेति** । चोऽवधारणे । दृश्यः प्रमेयम् । शब्दोयमभिन्नार्थः प्रदीपश्चासौ प्रकाशश्चेति विग्रहः । प्रदी-

(भा०)लब्धिर्न प्रमाणान्तरतो.न च प्रमाणमन्तरेण निःसाधनेति।

"तेनैव तस्याग्रहणमिति" चेद्,-न अर्थभेदस्य लक्षणसामान्यात् । "प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तम् । अन्येन ह्यन्यस्य ग्रहणं दृष्टमिति"। न, अर्थभेदस्य लक्षणसामान्यात् । प्रत्यक्षलक्षणेनानेकोऽर्थः सङ्गृहीतः । तत्र केनचित्कस्यचिद् ग्रहणमित्यदोषः । एवमनुमानादिष्वपीति । यथोद्धृतेनोदकेनाशयस्थस्य ग्रहणमिति ।

---

(ख०)अर्थभेदस्येति । तत्त्वतः प्रत्यक्षव्यक्तयो भिन्ना एव—केवलमिन्द्रियार्थसन्निकर्षजत्वादिसादृश्येन प्रत्यक्षमित्यनेन नाम्ना सङ्गृहीता व्यपदिष्टा भवन्ति । एवं च एकस्य प्रत्यक्षस्य प्रत्यक्षान्तरेण ग्रहणे न तस्यैव तेन ग्रहणम्भवति ।

उद्धृतेनेति । जलाशयादुद्धृतेन जलेन जलाशयस्थस्य जलस्यानुमानम् । तत्र यद्यपि जलेनैव जलस्यानुमानं तथाऽपि न तत्त्वतस्तेनैव तद्ग्रहणम् ।

---

(भा०चं०)पस्य प्रकाश आलोक इति वा । दृश्यान्तरेण घटादिना सहकारिणा । दृश्यदर्शनव्यवस्थाम् प्रमाणप्रमेयव्यवस्थाम् । लभते प्राप्नोति ।

अभिप्रायमजानन् शङ्कते **तेनैवेति** । स्वेनैवेत्यर्थः । स्वाभिप्रायं प्रकटयन् शङ्कां परिहरति **नार्थेति** । अर्थभेदस्य प्रमाणं व्यक्तिविशेषस्य लक्षणसामान्यात् समानलक्षणयोगात् अयुक्तमिति योजना । विवक्षितं दर्शयति **अन्येन हीति** । हिशब्दः स्वम् व्यावर्त्तयति । प्रत्यक्षादिभिरित्यनेन सामान्यवचनेन प्रत्यक्षेण प्रत्यक्षं गृह्यते अनुमानेनानुमानं गृह्यत इति प्राप्तमाशङ्क्य दूषयति नेति । विवक्षितं प्रकटयितुमाहार्थेति । प्ररूढयति **प्रत्यक्षलक्षणेनेति** । अनेकोऽर्थोऽनेका व्यक्तिः । संगृहीतः सामान्येन विवक्षितः । तत्र अनेकस्मिन्मध्ये केनचित् प्रत्यक्षादिव्यक्तिविशेषेण न तयैव व्यक्त्येत्यर्थः । अदो-

(भा०) ज्ञातृमनसोश्च दर्शनात् । अहं सुखी अहं दुःखी चेति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते । 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (१ १ १६) इति च तेनैव मनसा तस्यैवानुमानं दृश्यते ।

---

( ख० ) ज्ञातृमनसोरिति । ज्ञाता ज्ञेय इति सकर्माभिप्रायम् । नह्यन्यस्य समवेता ज्ञानक्रिया, येनात्मनः कर्मता स्यात्, अपि तु ज्ञातृस्थैव । परसमवेतफलशालि हि कर्मेत्युक्तम् । तस्मात्सुखादीनामात्मधर्माणामत्र कर्मता आत्मनस्तु प्रकाशमानता । तत्र विवक्षया ज्ञेयत्वाभिधानम् । मनस्तु यद्यपि स्वज्ञानं प्रति करणं कर्म च तथाऽपि न स्वात्मनि वृत्तिविरोधः । यदि हि ज्ञानं करणं भवेत्तदाऽऽत्माश्रयदोषप्रप्रसङ्गः । स्वसत्तया च ज्ञानं प्रति करणम् । अन्यच्चास्य ज्ञानमन्या च सत्ता । न च तत्समवेता ज्ञानक्रिया, किन्त्वात्मसमवेता । तस्माज्ज्ञेयत्वं ज्ञानसाधनत्वं च मनसो न दोषमर्हतीति हृदयम् ।

---

(भा०चं०)षोऽनात्माश्रयः(१) । सजातीयेन सजातीयान्तरस्य ग्रहणे दृष्टान्तमाह **यथेति** । उद्धृतेन अदृश्यजलकात् कूपादुन्नीतेन आशयस्थस्य उत्कूपस्थस्य ग्रहणमनुमानम् ।

अन्येन हीति हिशब्दार्थं दूषयति **ज्ञातृमनसोश्चेति** । ज्ञातुर्ज्ञात्रा मनसा च । मनसो मनसा ज्ञात्रा चेत्यर्थः । मनसश्चानुमानेऽपि करणत्वात् । तेनैव तेनापि । अथवा तेनेति कर्तरि तृतीया । तथा च तेनैव कर्त्रा तस्यैव कर्मणो ग्रहणमित्यर्थः । मनसा मनोऽनुमानं दर्शयति **युगपदित्यादिना** । तेनैव करणेन तस्यैव कर्म्मणः । अनुमानमनुमितिः । अभेद ऐक्यं ग्रहणस्येति करणे ल्युट् । ग्राह्यस्येति कर्मणि ण्यत् ।

---

(टि०) १ स्वेनैव स्वस्य ग्रहणे आत्माश्रयः स्यात् स्वज्ञाने स्वापेक्षैवात्माश्रयः प्रकृते च न तथा प्रत्यक्षेणैव प्रत्यक्षस्य ग्रहणे भवति आत्माश्रयशङ्का अत एवोक्तं भाष्ये अन्येनान्यस्य ग्रहणमिति ।

(भा०) ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य ग्राह्यस्य चाभेद इति।

"निमित्तभेदोऽत्रेति" चेत्,-समानम्। "न निमित्तान्तरेण विना ज्ञाताऽऽत्मानं जानीते। न च निमित्तान्तरेण विनामनसा मनो गृह्यत इति।" समानमेतत् प्रत्यक्षादिभिः। प्रत्यक्षादीनां ग्रहणमित्यत्राप्यर्थभेदो गृह्यत इति।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः। यदि स्यात् किंचिदर्थ-

---

(ख०) ग्राह्यस्येत्यस्य स्थानेग्राहकस्येति क्वाचित्कः पाठो न सम्यक्। अहं सुखीत्यादौ ज्ञातुर्ज्ञेयस्य चाभेदः। मनसोऽनुमाने च मन एव ग्रहणकरणम् ग्रहणविषयश्च। नचात्र ग्राहकस्य ज्ञातुस्समावेशः

---

(भा०चं०) शङ्कते **निमित्तेति**। निमित्तभेदः सहकारिविशेषः। अत्रैक्यस्य ग्राह्यग्राहकभावे नियामक इति शेषः। समाधत्ते **समानमिति**। निमित्तान्तरेण सहकार्य्यन्तरेण अर्थभेदो गृह्यते व्यक्तिविशेषो विवक्ष्यते।

ननु प्रत्यक्षादिप्रमाणे प्रमाणान्तरमेव कुतो न कल्प्यत इत्यत आह **प्रत्यक्षादीनामिति**। अविषयस्य ग्रहीतुमशक्यस्य अनुपपत्तेरसम्भवात्। यत् प्रत्यक्षादिभिर्ग्रहीतुम् न शक्यमिति स्ववाक्यव्याख्यानम्। स्यादुपादीयेतेति पदयोर्लिङ् तर्के। तदुक्तम्—लिङ्निमित्ते लिङ्क्रियातिपत्ताविति। क्रियातिपत्तिः क्रियारोपः। केनचित्तार्किकेणेति शेषः। उपपादयितुं प्रमापयितुम्। अनुपपादने हेतुमाह **प्रत्यक्षादीनामित्यादिविषय इत्यनेन**। इदं प्रमात्रादिचतुर्विधान्तर्भूतं सर्वं जगत्। सच्चतुर्विधम्। असच्चतुर्विधम्। अत्र सूत्रे वार्तिकम्। दृष्टान्तमात्रमेतत् कोऽत्र न्याय इति स वक्तव्यः। उच्यते प्रत्यक्षादीनि स्वोपलब्धौ प्रमाणान्तराप्रयोजकानि परिच्छेदसाधनत्वात्। प्रदीपवद्यथा प्रदीपः। प्रदीपपरिच्छेदसाधनं भेदोपलब्धौ न प्रमाणान्तरं प्रयोजयति। तथा प्रमाणानि तस्मात्तान्यपि प्र-

(भा०) जातं प्रत्यक्षादीनामविषयः-यत्प्रत्यक्षादिभिर्न शक्यं ग्रहीतुम्-तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत । तच्चु न शक्यं केनचिदुपपादयितुमिति । प्रत्यक्षादीनां यथादर्शनमेवेदं सच्चासच्च सर्वं विषय इति ॥ १९ ॥

केचित्तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण साध्य-साधनायोपाददते-"यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशम-न्तरेण गृह्यते तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्त इति"।

स चायम्—

---

( ख० ) असच्चेति । असतः प्रमाणविषयत्वम्प्रदर्शितमुपोद्घा-तभाष्ये प्रथमसूत्रे - असच्चासदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवतीति ॥ १९ ॥

केचित्त्वित्यादि आचार्यदेशीयानाम्मतम् । तद्यथा—प्रदीपप्रकाशो यथा न प्रकाशान्तरमपेक्षते एवम्प्रमाणान्यपि प्रमाणान्तरमनपेक्षमाणा-न्यपि सन्ति भविष्यन्तीति । 'विशेषहेतुमन्तरेण हेतुनाऽपरिगृहीत-मेव दृष्टान्तं साध्यसाधनायोपाददते'इति सम्बन्धः।

न्यायसूचीनिबन्धे क्वचिदित्यादि सूत्रत्वेनोपन्यस्तम् । उक्ता-चार्यदेशीयान् प्रत्येतदिति चोक्तं वाचस्पतिमिश्रेण तात्पर्ये । अपरे तु हेतुविशेषपरिग्रहमन्तरेण दृष्टान्तमात्रं प्रदीपप्रकाशसूत्रेणोपाददते तान् प्रतीदमुच्यत इति वार्तिकम् ।

---

(भा०चं०)योजकानीति सिद्धम् । सामान्यविशेषवत्त्वाच्च । यत् सामान्य-विशेषवत् तत् तावत् स्वोपलब्धौ न प्रत्यक्षादिव्यतिरेकिप्रमाणं प्रयो-जयति यथा प्रदीप इति । संवेद्यत्वाच्च यत् संवेद्यं तत् प्रत्यक्षादि-व्यतिरेकिप्रमाणान्तराप्रयोजकं यथा प्रदीप इति । आश्रितत्वात् । कारणत्वाद्वित्यादि । प्रदीपवदिन्द्रियादयोऽपि प्रत्यक्षाङ्गत्वात् प्रत्यक्षादिव्य-

(सू०) क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिद-नैकान्तः ॥ २० ॥

---

(ख०) सूत्रार्थस्तु—'क्वचित्' प्रदीपादौ प्रमाणान्तरस्य 'निवृत्तिद-र्शनात्—' 'क्वचित्' रूपादिप्रकाशकघटादौ प्रमाणान्तरस्य 'अनिवृत्तिदर्शनात्''—प्रमाणान्तरापेक्षादर्शनादिति यावत्—त्वदीयः प्रकाशकत्वरूपो हेतुः ( प्रत्यक्षादयः प्रमाणान्तरनिरपेक्षाः प्रकाशकत्वादि-त्यत्रानुमाने ) 'अनैकान्तः' सव्यभिचार इत्यर्थः । तथा च प्रदीपदृष्टान्तात् यथा प्रमाणान्तरनिवृत्तिः साध्यते, तथैव घटदृष्टान्तेन प्रमा-

---

(भा०चं०) तिरेकिप्रमाणान्तराप्रयोजका इति समानमिति । अत्र प्रथम-हेतुः सूत्रोक्तविशेषणाल्लब्धः । अपरे तु सूचनादिति ज्ञेयम् ॥ १९ ॥

केचित्तु ताभ्यामेव हेतुदृष्टान्ताभ्यां सर्वं प्रमाणं प्रकाशं साधयन्ति तन्मतमनूद्य दूषयितुं सूत्रमवतारयति **केचिदित्यादिना** । तु शब्दस्तार्किकाभासतासूचकः । अपरिगृहीतं उभाभ्यामपरिशोध्य गृहीतम् । अपरिशोधनं प्रकटयति **विशेषहेतुमन्तरेणेत्यादि** । विशेषहेतु-रुभय सिद्धौ व्यभिचारी तं विनेत्यर्थः । साध्यसाधनाय साध्यस्य स्वप्रकाशत्वस्य साधनाय प्रज्ञापनाय उपाददते प्रयुञ्जते । उदाहरति **सचेति** । प्रदीपप्रकाश इति हेतुगर्भविशेषणं यस्मात् प्रदीपः प्रकाशकः तस्मात् प्रदीपान्तरमन्तरेण गृह्यत इत्यर्थः । तथा प्रकाशकत्वादेव प्रमाणमन्तरेण स्वातिरिक्तप्रमाणमन्तरेण गृह्यन्त इत्यर्थः । स चोक्तविधदृष्टान्तः । अयं सूत्रकृदभिमतव्यभिचारिहेतुकः । **क्वचिन्निवृत्तीत्यादिसूत्रम्** । तस्यार्थः क्वेति विषयसप्तमी । चित्पदं पक्षविशेषपरम् । क्वचित् प्रकाशे प्रदीपादावित्यर्थः । निवृत्तिदर्शनात् प्रदीपरूपप्रकाशान्तरनिवृत्तिदर्शनात् । क्वचित् प्रकाशके घटादौ निवृत्त्यदर्शनात् प्रदीपादिरूपप्रकाशकनिवृत्त्यदर्शनात् । प्रदीपो दृष्टान्तः । प्रमाणानां घटा-

(भा०)यथा चाऽयं प्रसङ्गो निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते एवं प्रमेयसाधनायाप्युपादेयोऽविशेषहेतुत्वात्। यथा च स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेयसाधनायोपादीयते, एवं

---

( ख० ) णान्तरसापेक्षतैव किन्न साध्यत इति।

अयम्प्रसङ्ग इति। प्रमाणान्तरानपेक्षत्वप्रसङ्ग इत्यर्थः। निवृत्तिदर्शनादिति। प्रमाणान्तरस्येति शेषः।

प्रदीपे प्रदीपान्तरानपेक्षया प्रकाशकत्वदर्शनात् प्रमाणान्तरानपेक्षाण्येवालोकवत् प्रमाणानि सेत्स्यन्तीत्येवमर्थमुपादीयते प्रसङ्गः।

एवम्प्रमेयेति। प्रमेयाण्यप्यनपेक्षाण्येव सेत्स्यन्तीत्येवमर्थमुपादेयः। तथा च प्रमाणाभाव इत्यर्थः।

स्थालीति। प्रदीपदृष्टान्ताश्रयणेन प्रमाणाभावप्रसङ्गः स्थाल्या-

---

(भा०चं०) दिष्वेति न किञ्चिन्नियामकमस्तीत्यर्थः। तथाच प्रकाशकत्वं प्रकाशकारणत्वं स्वस्वातिरिक्तप्रकाशकाप्रयोजकत्वं घटादौ व्यभिचरतीति भावः। **यथाऽयमिति भाष्यम्।** अयं प्रदीपप्रकाशदृष्टान्तः। प्रसङ्गः प्रसक्तः। निवृत्तिदर्शनात्स्वस्मिन्प्रकाशकान्तरनिवृत्तिदर्शनात्। प्रमाणसाधनाय प्रमाणेषु साधनाय प्रकाशकान्तनिवृत्तेरिति शेषः(१)। तथा प्रमेयसाधनाय प्रमेयेषु घटादिषु साधनाय स्वात्तिरिक्तप्रकाशकनिवृत्तेरिति शेषः(२)। उपादेयः उपादीयतामित्यापादनम्। अविशेषहेतुत्वात् प्रकाशकत्वाविशेषात्। ननु प्रमेये स्थाल्यादौ प्रकाशकत्वे सत्यपि प्रमेयत्वसत्त्वात् न तथेत्याशङ्कायाम् प्रमाणेऽपि तुल्यमित्याह **यथा स्थाल्यादीति**। स्थाल्यादौ रूपग्रहणे स्वरूपग्राहकत्वे सत्यपि

---

( टि० ) १ प्रकाशकान्तरनिवृत्तये इति पाठः सम्यक् प्रतिभाति।
२ स्वातिरिक्तप्रकाशकनिवृत्तये इत्यपेक्षितम्।

(भा०)प्रमाणसाधनायाप्युपादेयो विशेषहेत्वभावात् । सोऽयं विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन्पक्षे उपादेयो न प्रतिपक्षे इत्यनेकान्तः । एकस्मिंश्च पक्षे दृष्टान्त उपादेयो न प्रतिपक्षे दृष्टान्त इत्यनेकान्तो विशेषहेत्वभावादिति ।

विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः । विशेषहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन्पक्षे उपसंह्रियमाणो न शक्योऽननुज्ञातुम् । एवं च सत्यनेकान्त इत्ययं प्रतिषेधो न भवति ।

---

( ख० ) दिदृष्टान्तोपादाने च प्रमाणान्तरापेक्षेति प्रदर्शितम् ।

विशेषहेत्विति । विशेषहेतुपरिग्रहमन्तरेण केवलदृष्टान्तोपादानेऽनिष्टं प्रदर्श्य ऊनविंशसूत्रभाष्यप्रदर्शितरीत्या विशेषहेतुपरिग्रहेऽनिष्टाभावं दर्शयति भाष्यकारः ।

विशेषहेत्वित्यादि वाक्यं भाष्यचन्द्रे सूत्रत्वेन स्वीकृतम् ।

---

(भा०चं०)प्रदीपप्रकाशः प्रकाशकान्तरं प्रमेयसाधनाय प्रमेयीकर्तुं प्रकाशनकर्मीकर्तुमित्यर्थः । उपादीयते स्वीक्रियते । एवं तथा प्रमाणेषु प्रकाशकत्वे सत्यपि साधनाय प्रमेयीकरणाय प्रकाशमित्यनुवर्त्तते। उपादेयः उपादातुमुचितः विशेषहेत्वभावात् प्रकाशकत्वादेव । न हि प्रकाशं प्रकाश्यं भवतीति विनिगमकमस्ति। तदिदमाह **सोऽयमिति** । सोऽयं दृष्टान्तः । अनैकान्तः इत्यन्वयः । विशेषहेतुपरिग्रहमन्तरेण विशेषहेतुपरिग्रहहीनः । एकस्मिन्पक्षे तव पूर्वपक्षिणः पक्षे । उपादेयः साध्यसाधनसमर्थः । न प्रतिपक्षे सिद्धान्तिनो मम पक्ष इति हेतोः । तदिदमनुवदति **एकस्मिन्निति** । स्पष्टम् ।

ननु त्वदभिमतदृष्टान्ते अनेकान्तं कुतो न भवेदित्याशंक्य विशेषहेतुपरिग्रहादेव नेत्याह **विशेषहेतुपरिग्रहे सति** इत्यादि ।

(भा०)"प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति" चेद्, न,संविद्विषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः। प्रत्यक्षेणार्थमुपलभे अनुमानेनार्थमुपलभे उपमानेनार्थमुपलभे आगमेनार्थमुपलभे इति, प्रत्यक्षं मे ज्ञानमानुमानिकं मे ज्ञानमौपमानिकं मे ज्ञानमागमिकं मे ज्ञानमिति—संवित्तिविषयं संवित्तिनिमित्तं चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते। सोयं तावत्येव निर्वर्त्तते। न चास्ति व्यवहारान्तरमनवस्थासाधनीयं येन प्रयुक्तोऽनवस्थामुपाददीतेति॥२०॥

---

(भा०चं०) न शक्योऽननुज्ञातुं विप्रतिपन्नेनेति शेषः। कथमित्यत आह **एवं च सतीति**। दृष्टान्तेऽङ्गीकृतहेतोः दार्ष्टान्तिके उपसंहारे क्रियमाणे इत्यर्थः। न भवति न समर्थो भवतीत्यर्थः।

प्रमाणस्य प्रमेयत्वे सिद्धे अनवस्थाशंकामनूद्य परिहरति **प्रत्यक्षादीनामित्यादि उपाददीतेत्यन्तेन**। सम्विद्विषयनिमित्तानां प्रमाकरणप्रमाकर्मव्यक्तिविशेषाणामुपलक्षितानां प्रमाणव्यक्तिं प्रति साध्यसाधनत्वे प्राप्त्या व्यवहारोपपत्तेः व्यवस्थोपपत्तेः नाव्यवस्थेत्यर्थः। इदं विशदयति **प्रत्यक्षेणेत्यादिना ह्यागमिकं मे ज्ञानमित्यन्तेन**। प्रमाणप्रमेयव्यवस्थायाःप्रयोजनमाह **संवित्तिविषयमित्यादिना**। संवित्तिनिमित्तं प्रमाणमुपलभमानस्य प्रमातुः धर्मार्थसुखापवर्गाः प्रयोजनानि यस्य व्यवहारस्य स तथा तत्प्रत्यनीकानि तेषां धर्मादीनां प्रत्यनीकानि विरुद्धानि यानि तेषां परिवर्जनं हानं प्रयोजनं यस्य स तथा व्यवहारः प्रवृत्तिः प्रमाणप्रयोजनप्रस्तावोक्ता। सोऽयं प्रवृत्तिनिवृत्तिरूपद्विविधव्यवहारः हेयोपादेयगोचरः। तावत्येव चतुर्विधप्रमाण(१)एव निर्वर्त्तते निर्वहति निष्पद्यते इति यावत्। न चास्ति व्यवहारान्तरमन-

---

(टि०) १ सत्येवेति शेषः पूरणीयः।

(३) प्रत्यक्षपरीक्षाप्रकरणम् ।

( भा० ) सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यन्ते । तत्र—

(सू०) "प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्" ॥२१॥

(भा०)आत्ममनःसन्निकर्षो हि कारणान्तरं नोक्तमिति ॥२१॥

---

( ख० ) प्रत्यक्षेति पूर्वपक्षसूत्रम् । एतत्सूत्रस्थं लक्षणपदं केचिद् व्यवच्छेदकपरं वर्णयन्ति । तन्न सम्यक् । लक्षणं हि 'असमग्रं' सकलप्रत्यक्षाव्याप्त्या वा स्यात्, अतिव्यापकत्वेऽपेक्षितविशेषणान्तरानभिधानाद्वा स्यात् । न च प्रकृते तदेकमपि सम्भवति । यथाश्रुते सूत्रे लक्षणपदेन कारणाभिधानमेव प्रतिभासते । अतो यथाप्रतिभासमेव पूर्वपक्षोत्थानम् ।

---

(भा०चं०) वस्थासाधनीयमनवस्थाप्रयोजकम् । करणेऽनीयर्बोध्यः । येन व्यवहारान्तरेण तृतीयेन प्रयुक्तः प्रेरितः तत्सिद्धीच्छायुक्तः अनवस्थामुपाददीय उपादद्यां स्वीकुर्याम् । प्रमातृप्रमेयप्रमाणप्रमितिचतुर्वर्गधर्मादिचतुर्वर्गपरिच्छेत्ताहमिति शेषः ॥ २० ॥

इति श्रीभाष्यचन्द्रे प्रमाणसामान्यलक्षणपरीक्षाभाष्यचन्द्रिका समाप्ता ॥

शिष्यावधानायाह **सामान्येनेत्यादि** । सामान्येन सामान्यलक्षणेन समानानि चत्वारि परीक्ष्य पर्यालोच्य विशेषेण विशेषलक्षणेन परीक्ष्यन्ते यूयं समाधाना भवत इति भावः । तत्र परीक्षया प्रतिज्ञातेषु प्रत्यक्षलक्षणे पूर्वपक्षसूत्रं **प्रत्यक्षलक्षणेत्यादि** । प्रत्यक्षलक्षणेऽनुपपत्तिरसम्भवः असमग्रवचनात् विशेषानुक्तेः । यो यो विशेषो नोक्तस्तं तमाह भाष्यकृत् **आत्मेत्यादिना** । आत्मा च मनश्च आत्ममनसी तयोः सन्निकर्षः परस्परमिति शेषः । हिशब्दोऽप्यर्थे कारणान्तरं कारणविशेषः ॥ २१ ॥

(भा०) न चासंयुक्ते द्रव्ये संयोगजन्यस्य गुणस्योत्पत्ति-रिति, ज्ञानोत्पत्तिदर्शनादात्ममनःसन्निकर्षः कारणम्। मनः-सन्निकर्षानपेक्षस्य चेन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वे युगपदु-त्पद्येरन् बुद्धय इति मनःसन्निकर्षोऽपि कारणम्। तादिदं सूत्रं पुरस्तात्कृतभाष्यम्—

(सू०) "नात्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः" ॥२२॥

(भा०) आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते प्रत्यक्षमि-न्द्रियार्थसन्निकर्षाभाववदिति ॥ २२ ॥

---

(ख०) न चासंयुक्तेत्यादिभाष्यं नात्ममनसोरित्याद्येकाविंशं सूत्र-मपठित्वैव व्याचष्ट इति तात्पर्यकाराः।

तदिदमिति। 'इदम्' अग्रिममेकविंशं सूत्रं 'पुरस्तात्' सूत्रपाठा-त् प्रागेव 'कृतम्' उपन्यस्तं भाष्यं नचासंयुक्त–इत्यादिरूपं यस्य तदे-वंरूपमित्यन्वयः। एकविंशस्य सूत्रस्य भाष्यं सूत्रपाठात् प्रागेवो-पन्यस्तमिति भावः।

नात्ममनसोरिति पूर्वपक्षसूत्रं, तदुपपादकतया भाष्यकारेण व्या-ख्यातत्वात्। अस्य सिद्धान्तसूत्रत्वे ज्ञानलिङ्गत्वादिति त्रयोविंशं सूत्रं तदयौगपद्येति चतुर्विंशं चानर्थकमापद्येत, पूर्वेणैव गतार्थत्वादिति परिशुद्धौ स्पष्टम्।

आत्ममनसोः सन्निकर्षाभावे यतः प्रत्यक्षन्नोत्पद्यते तत एतत्स-न्निकर्षस्य सन्निवेशः प्रत्यक्षलक्षणसूत्र आवश्यक इति सूत्रार्थः।

---

(भा०चं०)व्यतिरेकेण तस्य कारणत्वं दर्शयति न **चासंयुक्तेति**। द्रव्ये इति सामान्यग्रहणं दृष्टान्तार्थं यथा पाकाख्यसंयोगेन पृथिव्यां रूपा-दयो गुणा जायन्ते तथा मनःसन्निकर्षाख्येन संयोगेन आत्मनि ज्ञा-नादयो गुणा जायन्ते इति। आत्ममनःसन्निकर्षवदिन्द्रियार्थसन्निकर्षोपि

( भा० ) सति चेन्द्रियार्थसन्निकर्षे ज्ञानोत्पत्तिदर्शनात् कारणभावं ब्रुवतो—

(सू०) "दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः" ॥२३॥

(भा०)दिगादिषु सत्सु ज्ञानभावात्तान्यपि कारणानीति।

---

( ख० ) तदेवं सूत्राभ्याम्पूर्वपक्षिते सति—भावमात्रेणेन्द्रियसन्निकर्षादीनामेतैः कारणत्वमुक्तमिति -मन्वानः पार्श्वस्थः प्रत्यवतिष्ठते सिद्धान्तिनम्पूर्वपक्षिणं च प्रति सतिचेत्यादि कारणानीत्यन्तेन । पार्श्वस्थस्यैवेयमुक्तिर्न पूर्वपक्षिणो नापि सिद्धान्तिनः । यदि पूर्वपक्षिण उक्तिस्तदाऽऽत्ममनस्सन्निकर्षादेरकारणत्वव्युत्पादनेनासमग्रतापूर्वपक्षस्य विरोधः । यदि सिद्धान्तिन उक्तिस्तर्ह्यपसिद्धान्तः ।

ब्रुवतः—सिद्धान्तिनः पूर्वपक्षिणश्च—दिगादिष्वप्येवं प्रसङ्ग इति सूत्रेणान्वयः ।

दिगादिष्विति । न सति भावमात्रेण कारणत्वम् । तथा सत्याकाशादीनामपि कारणत्वप्रसङ्गः । पूर्वपक्ष्युपन्यस्तात्ममनस्संयोगे सिद्धान्त्युपन्यस्तेन्द्रियादिसंयोगे च कारणत्वं सति भावमात्रेणोपन्यस्तम् । अतो नैतयोरपि कारणत्वं युक्तमिति पार्श्वस्थस्य हृदयम् ।

---

(भा०चं०)कारणं तदत्रोक्तमित्याह **मनःसन्निकर्षानपेक्षस्येत्यादि**। पुरस्ताच्च प्रत्यक्षलक्षणावसरे कृतभाष्यं कृतसमाधानभाष्यमित्यर्थः।

**नात्मेत्यादि**सूत्रभाष्यं स्पष्टम् । आत्ममन सन्निकर्षाभावस्य कारणत्वप्रतिषेधाभाव इति सूत्रार्थः ॥ २२ ॥

तथासति प्रसङ्गमाह **दिगित्यादिसूत्रेण** । प्रसङ्गः कारणभावोक्तिप्रसङ्गः । दिगाष्विति भाष्यम् । ज्ञानभावात् ज्ञानोत्पत्तेः । तानि दिगादीनि चत्वारि । उत्तरमाह **अकारणभावेपीति** ।

(भा०)अकारणभावेऽपि ज्ञानोत्पत्तिर्दिगादिसन्निधेरवर्ज्जनीयत्वात् । यदाप्यकारणं दिगादीनि ज्ञानोत्पत्तौ, तदापि सत्सु दिगादिषु ज्ञानेन भवितव्यम् । न हि दिगादीनां सन्निधिः शक्यः परिवर्जयितुमिति । तत्र कारणभावे हेतुवचनमेतस्माद्धेतोर्दिगादीनि ज्ञानकारणानीति ॥ २३ ॥

"आत्ममनःसन्निकर्षस्तर्ह्युपसङ्ख्येय" इति १

(ख० ) अकारणभाव इति पार्श्वस्थोक्तः परिहारः । नान्वयमात्रात्कारणत्वनिश्चयोऽपि त्वन्वयव्यतिरेकाभ्याम् । दिगादिषु नित्यविभुषु व्यतिरेकासम्भवान्नैतेषां कारणत्वम् । सेन्द्रियशरीरवर्त्यात्ममनस्संयोगस्त्वन्वयव्यतिरेकावधारितसामर्थ्यः, सुप्तस्य प्रत्यक्षाद्यनुत्पादादिति परिहारार्थः ।

हेतुवचनमिति आवश्यकमिति शेषः । दिगादीनां कारणत्वाभ्युपगमे हेतुर्भवता पार्श्वस्थेन वक्तव्य इत्यर्थः ।

पार्श्वस्थे निरस्ते पूर्वपक्ष्याह आत्मेति । यदि भावमात्रेण न कारणत्वम्, यदि चात्ममनःसन्निकर्षस्य कारणत्वं दिगाद्यपेक्षया

(भा०चं०) नास्माभिर्दिगादेः कारणत्वमङ्गीक्रियते ज्ञानादाविति भावः । अभिप्रायं स्पष्टयति **यदाप्यकारणमिति** । यदाशब्दोयं यद्यर्थे स च पक्षान्तरवचनः यस्मिन्पक्ष इत्यर्थः । सन्निधिर्न हि शक्यः परिवर्जयितुमित्यस्य सन्निधिमात्रं न कारणताप्रयोजकमिति भावः । कारणभावे ज्ञापकं नास्तीत्याह **तत्रेति** । हेतुवचनं प्रसक्तमिति शेषः । न हि ज्ञापकं विना परस्त्वदुक्तमङ्गीकरोतीति भावः(१) । अकारणत्वात् तदनुक्तौ आत्ममनःसन्निकर्षस्य उक्तिरापतितेत्याह **आत्मेत्यादि** । उपसंख्येयो वक्तव्यः ॥ २३ ॥

(टि० ) १ ज्ञापकं विनाकारणाकारणयोरविशेषप्रसङ्गश्चस्यात् ।

( भा० ) तत्रेदमुच्यते—

(सू०) ज्ञानलिङ्गत्वादात्मनो नानवरोधः ॥ २४ ॥

(भा०) ज्ञानमात्मलिङ्गं तद्गुणत्वात् । न चासंयुक्ते द्रव्ये

---

( ख० ) स्पष्टतरं, तदाऽऽत्ममनःसन्निकर्षः प्रत्यक्षलक्षणे उपसङ्ख्येयः निवेशयितव्य इत्यर्थः । विवरणकारमतेन तु—'यदि भावमात्रेण न कारणत्वं तर्ह्यात्ममनःसन्निकर्षोऽपि 'उपसङ्ख्येयः' त्याज्य इत्यर्थः ।

तत्रेति । आत्मेत्यादिपूर्वपक्षोक्तेः समाधाने इदं ज्ञानेत्यादिसूत्रमुच्यते इति सम्बन्धः ।

वानवरोध इति न्यायसूचीनिबन्धधृतः पाठः । नावरोध इति बहुषु पुस्तकेषु धृतः । उभयथाऽपि 'नासङ्ग्रह' इत्येवार्थः पर्यवस्यति । नानवबोध इति विवरणसम्मतः पाठः, 'नान्यथासिद्धत्वमिति' च तस्यार्थः ।

तद्गुणत्वादिति । यस्मादात्माश्रितमेव ज्ञानं सिध्यति तस्मादात्मनि ज्ञानं लिङ्गमिति भाष्यार्थः ।

आत्मेत्यादिभाष्यग्रन्थमारभ्य प्रत्यक्षेत्यादिपञ्चविंशसूत्रपर्यन्त-

---

(भा०चं०) तत्र पूर्वपक्षिवचने इदमुच्यते सूत्रमिति शेषः । अवरोधः परित्यागः । नावरोधः अनवरोधः परित्याग इत्यर्थः । ज्ञानमात्मालिङ्गमित्यादिभाष्यम् । तत्र वार्तिकम् । ज्ञानमात्मनि लिङ्गमित्युक्तम् इच्छाद्वेषेत्यादिसूत्रेण तेनात्मसंयोगोऽनुक्तोप्यनुमेयः । कथं पुनर्ज्ञानमात्मनो लिङ्गं ? तद्गुणत्वात् । गुणभावासिद्धिरिति चेत् । अथ मन्यसे गुणभाव एवज्ञानस्यासिद्धः कुत आत्मगुणत्वे बोद्धव्यमिति ? न आत्मसमवायात् सुखादिवदिति । न हि द्रव्यं कर्म वा आत्मनि समवैति तस्मान्न द्रव्यं न कर्म आत्मनि तु समवायो ज्ञानस्य सुखादेरिव । कस्माज्ज्ञान-

(भा०) संयोगजस्य गुणस्योत्पत्तिरस्तीति ॥ २४ ॥

(सू०) तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २५ ॥

---

(ख०)ग्रन्थस्य व्याख्याने मतभेद उपलभ्यते । विवरणकारमतेन आत्मेत्यादिवाक्यस्य तात्पर्यम् 'आत्ममनःसन्निकर्षोऽपि त्याज्य' इति । अस्योत्तरं त्रयोविंशचतुर्विंशसूत्रयोः प्रदत्तम् । तत्र पुनः पूर्वपक्षिणः प्रश्नः-एवन्तर्हि आत्ममनःसन्निकर्षस्यापि सन्निवेश आवश्यकोऽपि प्रत्यक्षलक्षणसूत्रे कथन्नोक्त इति । अस्योत्तरे पञ्चविंशं सूत्रम् ।

वार्त्तिकाद्यभिमतमात्मेत्यादिवाक्यस्य तात्पर्यं प्रागेव प्रदर्शितम्—आत्ममनःसन्निकर्षः सन्निवेशयितव्य इति । तस्योत्तरे त्रयोविंशं सूत्रम् । आत्ममनःसन्निकर्षस्यान्यथा सूचितत्वान्न तस्य साक्षाद्वचनमावश्यकमिति तस्यार्थः । कथञ्च स सूचित इत्यस्य प्रदर्शनार्थं चतुर्विंशं सूत्रम् ।

तत्र पुनराक्षेपः—यद्यात्ममनःसन्निकर्षस्यान्यथा सूचितत्वादेव प्रत्यक्षलक्षणेऽसन्निवेशस्तर्हि तस्मादेव कारणादिन्द्रियार्थसंयोगस्यापि सन्निवेशो नातीवावश्यक इति । एतत्समाधाने पञ्चविंशं सूत्रम् ।

आत्ममनःसंयोगस्यासमावेशे व्याख्याते इन्द्रियमनःसंयोगः कस्मान्नोक्त इति प्रश्ने सूत्रं तदयौगपद्येति ।

---

(भा०चं०)मात्मगुणः न पृथिव्यादिगुणः । स्वस्वसम्वेद्यत्वात् यत् प्रत्यक्षं स्वस्वसम्वेद्यं न तत्पृथिव्यादिगुणः यथा सुखादि यच्च प्रत्यक्षं स्वपरसम्वेद्यं तत्पृथिव्यादिगुणः यथा रूपादि न चैवं ज्ञानं तस्मादात्मगुण इति । उक्तं चात्र । किमुक्तं ? न यावत् प्रत्यक्षस्य कारणं तावत्सर्वं वक्तव्यमिति । किन्तु यदसाधारणं कारणं तद्वाच्यमिति तदुक्तम् । यद्यपि आत्मलिङ्गसूत्रे ज्ञानकारणत्वमात्मनः साक्षान्नोक्तं तथाप्युपपत्तिसामर्थ्यात् ज्ञानकारणमात्मेत्यवगम्यते । न हि ज्ञानं स्वतन्त्रं क्रियात्वादेव न हि चक्षुरादि स्वतन्त्रं करणत्वादेरिति ॥ २४ ॥

(भा०) अनवरोध इति वर्तते । युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युच्यमाने सिद्ध्यत्येव मनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षो ज्ञानकारणमिति ॥ २५ ॥

**(सू०) प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥ २६ ॥**

---

(ख०)अत्र सूत्रद्वयोक्तं समाधानम् प्रौढिवादमात्रम् । सर्वेषां प्रत्यक्षकारणानां वचनन्तल्लक्षणे नातीवावश्यकमित्येव पूर्वपक्षिणः समीचीनमुत्तरमिति वार्तिकतात्पर्ययोः स्पष्टम् ।

आत्ममनःसन्निकर्षवदिन्द्रियार्थसन्निकर्षोऽप्यर्थतः प्राप्त एव । तथा सति कथमस्य समावेशः प्रत्यक्षलक्षणसूत्रे कृत इति प्रश्ने उत्तरम्—प्रत्यक्षेत्यादिसूत्रम् ।

आत्मादीनां सर्वेषामनभिधाने प्रत्यक्षन्न लक्षितं स्यात् । तल्लक्षणाय च किञ्चिद्वक्तव्यम् । तत्रेन्द्रियार्थसन्निकर्ष एव वक्तव्यः, समस्तप्रत्यक्षव्यापकत्वात्, नेतरावात्ममनःसन्निकर्ष इन्द्रियमनःसन्निकर्षश्च, अव्यापकत्वादतिव्यापकत्वाच्चेति परमः सौत्रः समाधिः ।

---

(भा०चं०) ननु इन्द्रियार्थसन्निकर्षस्येत्याद्युक्तिर्यदि तर्हीन्द्रियमनःसंयोगोपि वाच्य इत्याह **तदयौगपद्येत्यादिसूत्रम्** । अनुषङ्गमाह भाष्यकृत् **अनवरोध इतीति** । वर्ततेऽनुवर्तते । अनुवृत्तिः स्मृतिः तद्विषय अनवरोध इत्यर्थः । ननु कथमनवरोधो ज्ञातव्य इत्यत आह **युगपदित्यादि भाष्यम्** । सिद्ध्यत्येव ज्ञायत एव । मनःसन्निकर्षापेक्षः मनःसन्निकर्षसहकारकः ॥ २५ ॥

इन्द्रियमनःसन्निकर्षस्यासाधारणत्वेपि तदनुक्त्या इन्द्रियार्थसन्निकर्षोक्तौ हेतुमाह **तन्निमित्तत्वादिति**(१)। तन्निमित्तत्वात्तल्लक्षणत्वात्

---

( टि० ) १ प्रत्यक्षनिमित्तत्वादित्यपि पाठान्तरम्

(भा०) प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनः-सन्निकर्षः प्रत्यक्षस्यैवेन्द्रियार्थसन्निकर्ष इत्यसमानः । असमान-त्वात्तस्य ग्रहणम् ॥ २६ ॥

(सू०) सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्नि-कर्षनिमित्तत्वात् ॥ २७ ॥

---

( ख० ) उक्तमव्यापकत्वमतिव्यापकत्वं च प्रदर्श्यतेऽग्रिमग्रन्थे । सुप्तेत्यादि सूत्रम् । 'सुप्तं' 'व्यासक्तं' चेत्येतदुभयमपि मनोविशेषणम् । इन्द्रियार्थयोरिति । इन्द्रियार्थसन्निकर्षनिमित्त-त्वादित्येवंसमासकरणमेव सामान्यतः समुचितम् । 'इन्द्रियार्थयो'-रित्येतस्य पृथक्करणेन च समासस्यासमर्थता स्पष्टा । किन्त्वेतदसम-र्थसमासाकरणे सूत्रकारस्य तात्पर्यविशेषः—इन्द्रियार्थयोरेव पाटवल-क्षणम्प्राधान्यं यथा विज्ञायेतेति । सन्निकर्षनिमित्तत्वादिति—ज्ञानो-त्पत्तेरिति शेषः । ज्ञानोत्पत्तेः सन्निकर्षनिमित्तत्वात् 'इन्द्रियार्थसन्निक-र्षस्य ग्रहणं' ( प्रत्यक्षलक्षण सूत्रे ) इति भाष्यग्रन्थेन सम्बन्धः ।

---

(भा०चं०)निमित्तं हेतुचिन्हयोरिति कोशस्मृतेः । तथा चेन्द्रियमनः-सन्निकर्षस्यासाधारणत्वेपि व्याप्त्या नोक्तमिति भावः । तदेवाह चशब्दे-न चोवधारणे भिन्नक्रमोऽसौ इन्द्रियार्थसन्निकर्षस्यैव निमित्तत्वादि-त्यन्वयः । समाहितमुपसंहरति **प्रत्यक्षेत्यादिना** । प्रत्यक्षादयश्च-त्वारः शब्दाः ज्ञप्तिपराः शब्दनं शब्द इत्युक्तत्वात्(१) । निमित्तं का-रणमात्रम् । असमानोऽसाधारणः ॥ २६ ॥

---

(टि०) १ प्रत्यक्षानुमानेत्यादिशब्दाः करणवाचका अपि प्रकृते ज्ञा-नवाचकाः। यद्यपि व्याप्तिज्ञानादिरूपे अनुमित्यादिकरणेपि आत्ममनः-सन्निकर्षस्य कारणत्वं सम्भवति तथापि प्रत्यक्षप्रमाणस्य इन्द्रियरू-पत्वान्न तत्र आत्ममनःसन्निकर्षस्य कारणतेति प्रत्यक्षादिशब्दानां ज्ञ-प्तिपरतेत्यभिप्रायः ।

(भा०) इन्द्रियार्थसन्निकर्षस्य ग्रहणं, नात्ममनसोः सन्निकर्षस्येति। एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते । यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतः तदा प्रसुप्तस्येन्द्रियसन्निकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते।

( ख० ) सुप्तमनसामिति सौत्रं विशेषणं व्याचष्टे एकदेति। एतत् साधारणानुभवं परामृशति—यदात्वित्यादित्वनुभवविशेषं सूत्रकाराभिप्रेतमिति बोध्यम् ।

प्रणिधायेति। सङ्कल्प्येत्यर्थः। प्रदोषे सुप्तोऽर्धरात्रे मयोत्थातव्यमिति मनसि निधाय यद्यऽर्धरात्र एवावबुध्यते तदाऽस्त्येव मनस्सन्निकर्षोऽवबोधज्ञानकारणम् । यदातु तीव्रध्वनिस्पर्शाभ्यामकस्मादेवावबुध्यते तत्रावबोधज्ञाने नास्ति कोऽपि मनस्सन्निकर्षस्य व्यापार इति विवेकः।

प्रबोधज्ञानामिति। 'प्रबोधे' निद्राविच्छेदे 'ज्ञानं' द्रव्यादिस्पर्शस्येत्यर्थः।

(भा० चं०) समाधाने कृतेपि इन्द्रियार्थसन्निकर्षस्य प्राधान्यज्ञापनार्थं सूत्रमिदं **सुप्तेत्यादि** । सुप्तं(१) पुरीतत्यवच्छिन्नात्मसंयुक्तं व्यासक्तं प्रकृतान्याविष्टं मनो येषां प्रमातॄणां ते तथा तेषां चोप्यर्थे । इन्द्रियार्थेति हेतुपरम् । सूत्रशेषं स्पष्टम् । अन्वयार्थमध्याहरति भाष्यकृत् **इन्द्रियार्थेति** वाक्येन । ग्रहणं प्रत्यक्षलक्षणे कृतमिति शेषः । तदिदं प्राधान्यं दर्शयति **एकदेत्यादिना**। अयं प्रमाता प्रबोधकालं जागरणकालं प्रणिधाय सङ्कल्प्य घटिकोत्तरं जागरणं करिष्यामीति । सुप्तो निद्रितः, स्वप्नावस्थायां पुरीतति वा मनः संयोजितवान् । प्रणिधानवशात् सङ्कल्पजनितसंस्कारवशात् प्रबुध्यते जागर्ति प्रबोधत्वं नाम बहिरिन्द्रियजन्यतावच्छेदकतया सिद्धो जातिविशेषः। प्रबोधज्ञानमिति कर्मधारयः। सामान्यविशेषजाति-

(टि०) १ पुरीततः कश्चिन्नाडीविशेषः।

(भा०) तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवति, किं तर्हि, इन्द्रियार्थयोः सन्निकर्षस्य। न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति।

एकदा खल्वयं विषयान्तरासक्तमनाः सङ्कल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसा इन्द्रियं संयोज्य तद्विषयान्तरं जानीते। यदा तु खल्वस्य निःसङ्कल्पस्य निर्जिज्ञासस्य च

(ख०) सुप्तमनसामिति व्याख्याय व्यासक्तमनसामिति व्याचष्टे एकदेति। एतदपि साधारणानुभवं परामृशति।

जानीत इति। अत्र च स्पष्टो मनस्सन्निकर्षस्य व्यापारः।

---

(भा०चं०)मतोः समासः। आत्ममनसोः सन्निकर्षस्याप्राधान्ये हेतुमाह **न ह्यात्मा प्रेरयतीति**। जिज्ञासमान इत्यनेन ईश्वरव्यावृत्तिः। ईश्वरस्तु जिज्ञासमानस्य कर्मसहकृतस्तदा मनः प्रेरयत्येव। न हि चेतनानाधिष्ठितं मूर्तं शरीरादिकं स्वयं चलद्दृष्टं तस्मात्सुषुप्तमनःप्रेरकतयेश्वरः सिद्धः। यो मनसि तिष्ठन् मनसोन्तरोयं मनो न वेद यो मनोन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इति श्रुतेश्च।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।

भ्रामयन् सर्वभूतानि यन्त्रारूढानि माया॥ इति स्मृतेश्च।

तर्हि कदाऽस्य मनःप्रेरणे स्वातन्त्र्यमित्यत आह **एकदा खल्विति**। अयमीश्वरः परतन्त्रः सङ्कल्पवशात् इष्टसाधनताज्ञानादिवशात् प्रयत्नप्रेरितेन व्यापारेण प्रेरितं चालितं तेन कर्तृकरणे कृता बहुलमिति समासः। ननु कथं प्रयत्नस्य कर्तृत्वं करणत्वं वा न हि प्रयत्नः स्वतन्त्रः न वा व्यापारवान् इति चेत्सत्यम्। गौणं करणत्वं व्यापारस्यापि-तथा प्रयोग इति ? समञ्जसम्। मनसेति करणे तृतीया। चलनव्यापारस्य सत्त्वात्। आत्मनोऽप्रेरकत्वदशायामपीन्द्रियार्थसन्नि-

(भा०)व्यासक्तमनसो बाह्यविषयोपनिपातनाज् ज्ञानमुत्पद्यते तदेन्द्रियार्थसन्निकर्षस्य प्राधान्यम्। न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति ।

प्राधान्याच्चेन्द्रियार्थसन्निकर्षस्य ग्रहणं कार्यं, गुणत्वात्, नात्ममनसोः सन्निकर्षस्येति ॥ २७ ॥

(भा०) प्राधान्ये च हेत्वन्तरम्—

(सू०) तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २८ ॥

(भा०)तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः। कथम्?

---

(ख०)मनो न प्रेरयतीति—ततश्च नात्र मनस्सन्निकर्षस्य कोऽपि व्यापार इत्यर्थः ।

गुणत्वादिति । अप्राधान्यादित्यर्थः ।

प्राधान्य इति । इन्द्रियार्थसन्निकर्षस्येत्यर्थः ।

---

(भा०चं०)कर्षस्य प्राधान्यमित्याह- **यदा त्विति**। अस्य ईश्वराधीनस्य। ये आत्मनि तिष्ठन्नित्यादि श्रुतेः । धियो यो नः प्रचोदयादित्यादि श्रुतेश्च । इदमेवाह **बाह्येत्यादिना** । बाह्यविषयेषु अनिष्टेष्वपि उपनिपातनात्। ईश्वरप्रेरणयजते(१) न ह्ययं स्वयमनिष्टेषु उपनिपतति तदुक्तम्-**निर्जिज्ञासस्येति** । ईश्वरहेतुत्वमभिप्रेत्यास्य तद्वारयति **नहीत्यादिना** । हेतुः प्रेरकः । तत्प्रयोजको हेतुश्चेति स्मृतेः । गुणत्वादप्रधानत्वात् ॥ २७ ॥

प्राधान्ये इन्द्रियार्थसन्निकर्षस्येति शेषः । हेत्वन्तरं ज्ञापकान्तरं । **तस्येत्यादिसूत्रम्**(२) । **तैरित्यादिभाष्यं** । व्यपदिश्यन्ते सङ्केत्यन्ते । **तैरिति** । तन्नामभिरिरित्यर्थः । पृच्छति **कथमिति** ।

---

(टि०) १ अत्र पाठो भ्रष्ट इति भाति ।
२ तैश्चेत्यादिसूत्रमित्ययं पाठोऽपेक्षितः ।

(भा०) घ्राणेन जिघ्रति, चक्षुषा पश्यति, रसनया रसयतीति, घ्राणविज्ञानं चक्षुर्विज्ञानं रसनाविज्ञानं गन्धविज्ञानं रूपविज्ञानं रसविज्ञानमिति च। इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति। अतः प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति ॥ २८ ॥

(भा०)यदुक्तमिन्द्रियार्थसन्निकर्षग्रहणं कार्यम्, नात्ममनसोः सन्निकर्षस्येति, कस्मात्? सुप्तव्यासक्तमनसामिन्द्रियार्थयोः सन्निकर्षस्य ज्ञाननिमित्तत्वादिति। सोयम्—

(सू०) व्याहतत्वादहेतुः ॥२९॥

(भा०) यदि तावत् क्वचिदात्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वं नेष्यते, तदा 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति' व्याहन्येत। नेदानीं मनसः सन्निकर्षमिन्द्रियार्थसन्निकर्षोऽपेक्षते। मनःसंयोगानपेक्षायां च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद् व्याघात इति सर्वविज्ञानानामात्ममनसोः सन्निकर्षः

---

( ख० ) इन्द्रियविषयेति। इन्द्रियसङ्ख्यानुरोधादेव ज्ञानस्य पञ्चविधत्वमित्यर्थः।

पूर्वेण सूत्रत्रयेणेन्द्रियार्थसन्निकर्ष एव कारणं ज्ञानस्य, न त्वात्ममनस्सन्निकर्ष इन्द्रियमनस्सन्निकर्षो वेत्युक्तं सिद्धान्तनेति मन्वानः पूर्वपक्षी व्याहतत्वादित्याक्षेपसूत्रमवतारयन्नाह यदुक्तमिति।

---

(भा० चं०) उत्तरयति **घ्राणेनेत्यादि**। इन्द्रियार्थसन्निकर्षप्राधान्यप्रयोजकानि बहिरिन्द्रियाणीत्यभिप्रेत्याह-**पञ्चधेति** ॥ २८ ॥

उक्तहेतुमाक्षिप्तुमाह-**यदुक्तमित्यादि**। सोयमिति सूत्रस्थोऽहेतुविशेषः। प्राधान्यपदेन कारणत्वमेवोक्त्वा निषिद्धमित्यभिप्रेत्याह-**यदीत्यादि**। नापेक्षते न सहायीकरोति। युगपज्ज्ञानोत्पत्तिप्रसङ्गः एकदा पञ्च ज्ञानान्युत्पद्येरन्। **अथेति**। पक्षान्तरे। व्याघातभया-

(भा०) कारणमिष्यते, तदवस्थमेवेदं भवति—ज्ञानकारणत्वादात्ममनसोः सन्निकर्षस्य ग्रहणं कार्यमिति ॥ २९ ॥

(सू०) नार्थविशेषप्राबल्यात् ॥ ३० ॥

(भा०) नास्ति व्याघातः। न ह्यात्ममनःसन्निकर्षस्य ज्ञानकारणत्वं व्यभिचरति। इन्द्रियार्थसन्निकर्षस्य प्राधान्यमुपादीयते। अर्थविशेषप्राबल्याद्धि सुप्तव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः। तस्य प्राबल्यं तीव्रतापटुते। तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयं नात्ममनसोः सन्निकर्षविषयम्। तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति।

---

(ख०) ग्रहणमिति। प्रत्यक्षलक्षणसूत्रे सन्निवेश इत्यर्थः।

नार्थेत्यादि सिद्धान्तसूत्रम्।

न ह्यात्मेति। इन्द्रियार्थसन्निकर्षस्य प्राधान्यमात्रमुच्यते नचात्ममनस्संयोगस्येन्द्रियमनस्संयोगस्य वा कारणत्वम्प्रतिषिध्यते। अतो न व्याघात इत्यर्थः।

---

(भा० चं०) यदि कारणत्वमङ्गीक्रियत इत्यर्थः। तदवस्थमेव असमाहितमेव। शेषं स्पष्टम् ॥ २९ ॥

समाधत्ते **नार्थेत्यादिना**। **नास्तीत्यादि** भाष्यम्। नास्माभिर्मनःसन्निकर्षस्य कारणत्वं निषिद्धमित्याह **न हि व्यभिचरतीति**। कथमित्यत आह—**इतरस्य प्राधान्यमुपादीयत इति**। प्राबल्यं व्याचष्टे। **तीव्रतापटुतेति**। तीव्रता शब्दादिगतवैजात्यं पटुता इन्द्रियगतनिर्दोषत्वम्। नन्वर्थप्राबल्यादित्यर्थमात्रं गृहीतं कथमिन्द्रियप्राबल्यमिहोच्यते इति चेन्न अर्थपदेन विषयिणोपि(१)

---

(टि०) १ विषयिशब्देनेन्द्रियग्रहणम् अर्थपदस्य विषयपरत्वात् तद्ग्राहकाणमिन्द्रियाणां विषयिशब्देन निर्देश इति भावः।

( भा० ) "असति प्रणिधाने सङ्कल्पे चासति सुप्तव्यासक्तमनसां यदिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं तत्र मनःसंयोगोऽपि कारणमिति मनसि क्रियाकारणं वाच्यमिति" ।

यथैव ज्ञातुः खल्वयमिच्छाजनितः प्रयत्नो मनसः प्रेरक आत्मगुण एवमात्मनि गुणान्तरं सर्वस्य साधकं प्रवृत्तिदोषजनितमस्ति, येन प्रेरितं मन इन्द्रियेण सम्बध्यते । तेन ह्यप्रेर्यमाणे

---

( ख० ) पूर्वपक्षी पृच्छति असतीति । यत्र प्रयत्नादि मनःप्रेरक वर्तते तत्र मनोव्यापारः सुवचः । यत्र तु सुप्तव्यासक्तमनसां ज्ञानेषु प्रयत्नादिकं मनःप्रेरकन्नास्ति तत्र मनोव्यापारस्य किंकारणमिति प्रश्नार्थः ।

गुणान्तरमिति । अदृष्टमिति यावत् ।

---

(भा०चं०)ग्रहणात् । तथाच अर्थयोर्विशेषावर्थविशेषौ तयोः प्राबल्यमिति विग्रहो बोध्यः । इन्द्रियार्थसन्निकर्षः प्रधानं प्रबलम् ।

प्रणिधाने प्रतिसन्धाने । मनःप्रेरको जीवप्रयत्न एवेत्याशङ्क्याह - **मनसीत्यादि** ।

उत्तरमाह-**यथैवेत्यादि** । प्रयत्नः प्रेरक इति सामानाधिकरण्यं गौण्या अचेतनस्य स्वातन्त्र्याभावात् । आत्मनि जीवे गुणान्तरं कर्म धर्माधर्माख्यं सर्वस्य भोगतत्साधनसमूहस्य साधकं जनकम् प्रवृत्तिदोषजनितं जीवव्यापारवागादिदोषजनितं येन कर्मणा ईश्वराधिष्ठितेन प्रेरितं चालितम् । इन्द्रियेणेति सहार्थे तृतीया । सम्बध्यत इति कर्मणि प्रत्ययः । कर्मणः सकर्तृकत्वादीश्वरप्राप्तिः । न हि कर्मैव कर्तृ पारतन्त्र्यात् । कर्मेश्वरानङ्गीकारे दोषमाह **तेन हीति** । सर्वार्थता सर्वविषयकता अस्य भोक्तुर्मनसो वा । युक्त्यन्तरमाह **एषितव्यमित्यादिना** । चोऽवधारणे द्रव्यगुणकर्मकारणत्वं त्रिविधकार्यकारणत्वम् । अन्यथा अनिच्छायाम् । चतुर्विधानां पार्थिवा-

(भा०) मनसि संयोगाभावाज् ज्ञानानुत्पत्तौ सर्वार्थताऽस्य निवर्त्तते। एषितव्यं चाऽस्य गुणान्तरस्य द्रव्यगुणकर्मकारणत्वम्। अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततोऽन्यस्य क्रियाहेतोरसम्भवाच्छरीरेन्द्रियविषयाणामनुत्पत्तिप्रसङ्गः ॥ ३० ॥

---

(ख०) संयोगाभावादिति। अन्यस्य क्रियाहेतोरभावादित्यर्थः।

भोगोऽदृष्टस्य प्रधानम्प्रयोजनं तन्नान्तरीयकतया जन्मायुषी आक्षिपति। स्वसम्बन्धिसुखदुःखसाक्षात्कारश्च भोगः। तदायतनं च शरीरम्। अप्राप्तं च मनो न शरीरे भोगं वा भोगविषयौ सुखदुःखे वा तयोः कारणं ज्ञानं वा जनयितुमर्हति। अतो नूनं तत्प्राप्तिहेतोर्मनःकर्मणः कारणमदृष्टमेव वक्तव्यम्। अन्यथाऽस्य सर्वद्रव्यगुणकर्मकारणता न स्यात्।

सर्वार्थतेति। सर्वद्रव्यगुणकर्मकारणतेत्यर्थः।

ननु माभूत्सर्वार्थतेत्यत आह एषितव्यमिति।

भूतसूक्ष्माणामित्यणूनां विशेषणम्।

तत इति। अदृष्टादित्यर्थः।

इति प्रत्यक्षलक्षणपरीक्षा।

स्वरूपतः प्रत्यक्षलक्षणं परीक्षितम्। अथेदानीं प्रसङ्गेन विषयतः

---

(भा०चं०)दीनाम् (१)भूतसूक्ष्माणां परमकारणभूतानां मनसाञ्च तादृशानाम्। ततः परमेश्वराधिष्ठितकर्मतः। शरीराणि ब्रह्मादिकीटपर्यन्तानि इन्द्रियाण्यपि तादृशानि(२) विषयाश्च तथा चिन्त्यमानानि विस्मयजनकानीति भावः ॥ ३० ॥ ३१ ॥

---

(टि०) १ भूतसूक्ष्माणां परमाणूनामित्यर्थः।
२ तादृशानीत्यस्य पूर्वोक्त एवार्थः।

(४) प्रत्यक्षानुमानत्वपरीक्षाप्रकरणम् ।

(सू०) "प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः" ॥३१॥

( भा० ) "यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं वृक्ष इति, एतत् किल प्रत्यक्षं, तत् खल्वनुमानमेव । कस्मात् ? एकदेशग्रहणात् वृक्षस्योपलब्धेः । अर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते । न चैकदेशो वृक्षः । तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव तद्भवति" ॥

( भा० ) किं पुनर्गृह्यमाणादेकदेशादर्थान्तरमनुमेयं मन्यसे ? "अवयवसमूहपक्षे अवयवान्तराणि, द्रव्यान्तरोत्पत्तिपक्षे

---

( ख० ) परीक्ष्यते । अयमेव च प्रकरणार्थः । तत्र तत्प्रसङ्गापादनं प्रत्यक्षस्यानुमानेऽन्तर्भावं कुर्वत् पूर्वपक्षसूत्रम्—प्रत्यक्षमित्यादि । 'एकदेशस्य' पुरोवर्त्यवयवभागस्य 'ग्रहणात्' इन्द्रियसन्निकर्षादुपलब्धेः अवयविनो वृक्षस्य उपलब्धिरिति भावः ।

अयमत्र पूर्वपक्षसङ्क्षेपः । न ह्यवयवी नाम कश्चिदर्थान्तरभूतोऽवयवेभ्योऽस्ति, अपि त्ववयवा एव परमार्थसन्तः । तेषु च कतिपयानवयवान् गृहीत्वा तत्सहचरितानयवाननुमाय प्रतिसन्धानजेयं वृक्षबुद्धिः । तानेवावयवानालम्बमानाननुमायानुमानमिति प्रत्यक्षस्यानुमानेऽन्तर्भावात् विभागसूत्रेण न्यूनाधिकसङ्ख्यान्यवच्छेदो नोपपद्यत इति ॥

प्रत्यक्षमिति । सिद्धान्त्यभिमतमिति यावत् ।

सिद्धान्ती पृच्छति किम्पुनरिति ।

पूर्वपक्षी प्रत्युत्तरयति अवयवेति । द्विधा चात्र प्रतिपत्तिः ।

अवयवसमूह एवावयवी नावयवेभ्योऽर्थान्तरमिति पक्षे दृष्टेभ्योऽवयवेभ्योऽन्येऽवयवा अनुमीयन्ते । अवयवेभ्योऽर्थान्तरमेवोत्पद्यते क-

(भा०) तानि चावयवी चेति"।

अवयवसमूहपक्षे तावदेकदेशग्रहणाद् वृक्षबुद्धेरभावः। नागृह्यमाणमेकदेशान्तरं वृक्षो गृह्यमाणैकदेशवदिति। अथ "एकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसन्धानात् तत्र वृक्षबुद्धिः—" न तर्हि वृक्षबुद्धिरनुमानमेवंसति भवितुमर्हतीति। द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेयोऽस्यैकदेशसम्बद्धस्याग्रहणात्। ग्रहणे चाविशेषादनुमेयत्वाभावः। तस्माद् वृक्षबुद्धिरनुमानं न भवति ॥ ३१ ॥

---

( ख० )श्चिदवयवी नामेतिपक्षे दृष्टेभ्योऽवयवेभ्योऽन्येऽवयवा अवयवी चानुमीयते इति।

प्रथमं पक्षं दूषयन्नाह सिद्धान्ती अवयवेति। यथैव प्रत्यक्षदृष्टोऽर्वाग्भागो न 'वृक्षः' एवमनुमितौ परमध्यभागावपि न 'वृक्षः' ततश्च 'वृक्षो'ऽयमिति बुद्धेरपलाप एवेति भावः।

पूर्वपक्षिणोऽभिप्रायान्तरम्प्रकटयति अथेति। कतिपयानवयवान् गृहीत्वा तत्सहचरितानवयवाननुमाय प्रतिसन्धानजा बुद्धिरयं वृक्ष इति— इति पूर्वपक्षिणोऽभिप्रायः।

उक्तमभिप्रायं दूषयति न तर्हीति। त्वदुक्तानुसारेणावयवान्तराण्येवानुमितानि न वृक्ष इति। तथा च प्रतिज्ञाहानिरिति भावः।

द्वितीयं पक्षं दूषयति द्रव्यान्तरेति। अवयवी यद्यनुमेयस्तर्हि तेन सहावयवानां व्याप्तिसम्बन्धग्रहणमवश्यं स्वीकरणीयम्। नच सम्बद्धयोर्ग्रहणमन्तरेण सम्बन्धग्रहणं सम्भवति। तथाचोक्तव्याप्तिग्रहणकालेऽवयव्यपि गृहीतः स्यात्—इत्यभ्युपगन्तव्यम्। तादृशे चाभ्युपगमेऽवयविनः प्रत्यक्षग्रहणमभ्युपेतमेव स्यात्। ततश्च तस्य नानुमेयत्वमिति हृदयम्।

(भा०)एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते। तच्च-

(सू०) न, प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३२ ॥

(भा०) न प्रत्यक्षमनुमानम्। कस्मात्? प्रत्यक्षेणैवोपलम्भात्। यत् तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भः। न चोपलम्भो निर्विषयोऽस्ति। यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षव्यवस्थापकं भवति।

"किं पुनस्ततोऽन्यदर्थजातम्"।

अवयवी समुदायो वा। न चैकदेशग्रहणमनुमानम् भावयितुं शक्यं हेत्वभावादिति।

अन्यथापि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गः, तत्पूर्वकत्वात्। प्रत्यक्षपूर्वकमनुमानम्। सम्बद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमानं भवति। तत्र यच्च सम्बद्धयोर्लिङ्गलिङ्गिनोः

---

(ख०) उत्तरसूत्रमवतारयति एकदेशेति।

तच्चेति सूत्रगतेन 'न'इत्यनेन सम्बध्यते।

नेत्यादि सिद्धान्तसूत्रम्। तत्-प्रत्यक्षस्यानुमानत्वं-'न' सम्भवति, 'यावत्'-एकदेशभूतस्यार्थजातस्य ग्रहणम् एकदेशग्रहणादुपलब्धेरिति पूर्वसूत्रोक्ते हेतौ इष्यते—'तावत्' अपि प्रत्यक्षेणैव। अतस्तावतोऽर्थजातस्य प्रत्यक्षेणोपलम्भात्-'प्रत्यक्षमनुमानम्' इति प्रतिज्ञा एकदेशग्रहणादुपलब्धेरितिहेतुना विरुद्धेति विरुद्धो हेतुः। अथ चैकदेशग्रहणस्य प्रत्यक्षेणानभ्युपगमे प्रमाणान्तरस्य तत्रानुपपत्तेरसिद्धो हेतुः। सेयमुभयतः पाशारज्जुरित्यर्थः।

नन्वनुमानेनैवैकदेशग्रहणान्नासिद्धो हेतुरित्यत आह नचेति। एवं सत्यनवस्थाप्रसङ्गात् तादृशहेतोरभावात् एकदेशग्रहणमप्यनुमानमेवेति पक्षो न युज्यत इत्यर्थः।

(भा०)प्रत्यक्षं, यच्च लिङ्गमात्रप्रत्यक्षग्रहणं, नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति। न त्वेतदनुमानम्, इन्द्रियार्थसन्निकर्षजत्वात्। न चानुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति। सोऽयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति ॥ ३२ ॥

(सू०)न चैकदेशोपलब्धिरवयविसद्भावात् ॥ ३३ ॥

(ख० )नचैकेत्यादि सूत्रम्। तात्पर्यकारास्त्वेतत्सूत्रत्वेन न परिगृह्णन्ति, न्यायसूचीनिबन्धेऽस्यानुपलम्भात्, तदेतद्भाष्यमनुभाष्य वार्तिककारो व्याचष्ट इति व्याख्यानाच्च।

अवयविनोऽसत्त्वम्मन्यमानेन पूर्वपक्षिणा एकदेशोपलब्ध्या वृक्षबुद्धेरनुमानत्वमुक्तम्। नत्वियमेकदेशमात्रोपलब्धिरपि तु तस्य तत्सहचरितस्य चावयविनः। उपलब्धिलक्षणप्राप्तस्य तस्य सिद्धेरिति सूत्रार्थः।

(भा०चं०) ब्रह्मादिशेषपर्यन्ते(१) प्रत्यक्षग्रहणं पक्ष इति शेषः। एतदन्तरेण प्रत्यक्षद्वयम् विना अनुमानस्यानुमितेः। प्रवृत्तिरुत्पत्तिः। एतत् (२)प्रकृतिद्वयं। लक्षणभेदो लक्षणतो भेदः सिद्धः महान् परिहर्त्तुमशक्यः। आश्रयितव्योऽङ्गीकर्त्तव्यः। अनुमानमङ्गीकुर्वता त्वयेति शेषः इतीति। प्रकरणसमाप्तौ ॥ ३२ ॥

इति भाष्यचन्द्रे प्रत्यक्षलक्षणपरीक्षाभाष्यचन्द्रिका।

अथोपोद्घातिकावयविप्रकरणम्। अत्रायमाक्षेपः। ननु भवतां मते योऽवयवी सोऽस्माकं परमाणुपुञ्ज एव अस्मन्नये परमाणुप्रत्यक्षमस्ति भवन्नये नास्तीत्यस्मन्मतेऽवयविप्रत्यक्षानुपपत्तिरिति।

(टि०) १ भाष्यचन्द्रकारस्यानया व्याख्यया लिङ्गमात्रे इति सप्तम्यन्तभाष्यपाठः सम्मतः।

२ प्रकृतिद्वयमित्यस्य प्रत्यक्षद्वयमित्यर्थः।

( भा० ) न चैकदेशोपलब्धिमात्रम् । किं तर्हि, एकदेशोपलब्धिः तत्सहचरितावयव्युपलब्धिश्च । कस्मात् ? अवयविसद्भावात् । अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी । तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्नेति ।

"अकृत्स्नग्रहणादिति चेत्" न, कारणतोऽन्यस्यैकदेशस्या-

---

( ख० ) अवयवस्थानस्येति--अवयवसमानदेशस्येति यावत् ।

अनुपपन्नेति । महदनेकद्रव्यरूपाण्युपलब्धिकारणानि । तान्येकदेशवदेकदेशिन्यवयविन्यपि विद्यन्ते । तस्मादेक उपलभ्यते नैकदेशीत्ययुक्तमिति हृदयम् ।

आक्षेपभाष्यम्—अकृत्स्नेति ।

उत्तरभाष्यम्—नकारणत इति । 'कारणतः' समवायिकारणत इत्यर्थः ।

---

(भा०चं०) अत्र समाधानसूत्रं **न चेत्यादि**। एकदेशोपलब्धिविप्रतिषेधे व्याघात इत्यतस्तत्पदं व्याचष्टे नचेति।(१)मात्रान्वितेन परमाणुपुञ्जवादी पृच्छति **किन्तर्हीति** । उत्तरं स्पष्टम् । अवयव्यसत्त्वं निश्चित्य पृच्छति **कस्मादिति**। स्पष्टमुत्तरम्। सम्भवमुपपादयितुमाह **अस्ति हीत्यादि** । **अवयवस्थानस्येति** । अवयवोत्पत्तिस्थितिविनाशानां स्थानमधिकरणं यस्य स तथा तस्योपलब्धिकारणप्राप्तस्य प्रमाकरणसंवेद्यस्य ।

स्वाभिप्रायेणोपपत्तिमाह **अकृत्स्नेति**। दूषयति **न कारणत इति** । अन्यस्यावयव्यधिकरणभिन्नस्य एकदेशस्याभावादसत्त्वात् । पूर्ववादी स्वहेतुमुपपादयति **न चेत्यादि**। गृह्यन्ते प्रत्यक्षेणेति शेषः।

---

( टि० ) १ मात्रान्वितेनेति एकदेशोपलब्धिपदेनेति शेषः

(भा०)भावात् । "न चावयवाः कृत्स्ना गृह्यन्ते अवयवैरेवावयवान्तरव्यवधानाद्, नावयवी कृत्स्नो गृह्यत इति । नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति । सेयमेकदेशोपलब्धिरनिवृत्तैवेति" ।

कृत्स्नमिति वै खल्वशेषतायां सत्यां भवति, अकृत्स्नमिति

---

(ख०)आक्षेपभाष्यविवरणम्—नचावयवा इति । एकदेशग्रहणनिवृत्त्यर्थं हि त्वयाऽवयविग्रहणमास्थीयते । नचैतावता कृत्स्नग्रहणसम्भवो यत एकदेशनिवृत्तिः स्यात् । न ह्यवयविग्रहणे कृत्स्ना अवयवा गृहीता भवन्ति । नाप्यवयवी गृहीतो भवति, तस्यार्वाग्भागस्थस्य ग्रहणेऽपि मध्यमपरभागस्थस्याग्रहणादित्याक्षेपभाष्यार्थः ।

उत्तरभाष्यविवरणम्—कृत्स्नमिति । कृत्स्नमित्यनेकस्याशेषस्याभिधानमेकदेश इति चानेकत्वे सति कस्यचिदभिधानमिति वार्तिकम् ।

---

( भा०चं० ) अवयविनमभ्युपेत्यापि दूषणमाह **नावयवीत्यादि** । कृत्स्नः सर्वः । "सर्वमशेषं कृत्स्नं समनिखिलाखिलानि निःशेषमिति" कोशात् । परिसमाप्तः सर्वैरवयवैः सह समाप्तः संगृहीतः इति हेतोरेकदेशोपलब्धिरेवास्ति न भवता समीहितेति भावः । इति पूर्वपक्षवाक्यसमाप्त्यर्थः । सिद्धान्ती अकार्त्स्न्यग्रहणं समाधातुं कृत्स्नपदं व्याचष्टे **कृत्स्नमिति** । वैशब्दः सम्बोधने खल्वेवधारणे । अशेषतायां(१) सर्वतायां प्रवृत्तिनिमित्ते सति,भवति—प्रभवति—प्रवर्तत इत्यर्थः । एकव्यक्तौ न प्रयुज्यत इति भावः प्रवृत्तिनिमित्ताभावात् । **अकृत्स्नमिति । शेषे सतीति** । बुद्धिविशेषोपसंगृहीतमनेकं कृत्स्नमित्यादिशब्दैरुच्यते तस्यैकदेशः शेषः तस्मिन्सति तस्मिन्नुपयुक्ते सति काल-

---

( टि० ) १ कृत्स्नशब्दो हि अशेषतायां प्रवर्तत इति भावः । प्रवृत्तिनिमित्तमाह सर्वतायामिति ।

(भा०)शेषे सति । तच्चैतदवयवेषु बहुष्वस्ति,अव्यवधाने ग्रहणाद् व्यवधाने चाग्रहणादिति ।

अङ्ग तु भवान् पृष्टो व्याचष्टाम्–गृह्यमाणस्यावयविनः किमगृहीतं मन्यसे, येनैकदेशोपलब्धिः स्यादिति । न ह्यस्य कारणेभ्योऽन्ये एकदेशा भवन्तीति तत्रावयववृत्तं नोपपद्यत इति । इदं तस्य वृत्तम्–येषामिन्द्रियसन्निकर्षाद्ग्रहणमवयवानां तैः सह गृह्यते, येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते । न चैतत्कृतोऽस्ति भेद इति ।

---

( ख० ) तच्चैतदित्यवयविनम्परामृशति ।

येनेति । येनाग्रहणेन प्रत्यक्षमेवैकदेशस्यैवाभ्युपगतं स्यान्नावयविन इत्यर्थः । अस्येति । अवयविन इत्यर्थः ।

कारणेभ्य इति । समवायिकारणभूतेभ्योऽवयवेभ्योऽन्यत् किमप्येकदेशपदवाच्यन्नास्तीत्यर्थः ।

तत्रेति । अवयविन्यवयवस्वभाव आरोपयितुन्न युक्त इत्यर्थः ।

नचेति । अर्वाग्भागस्थस्यावयविन उपलब्धावपि परमध्यभाग-

---

(भा०चं०)सप्तमीयम् । अकृत्स्नपदं च कृत्स्नपदं बहुष्वस्ति बहूनामप्यनेकत्वात् । अस्ति सम्भवति । तेषामेव ग्रहणाग्रहणं भवत इत्याह **अव्यवधान इत्यादि** । ये व्यवधीयन्ते ते न गृह्यन्ते ये न व्यवधीयन्ते ते गृह्यन्त इत्यर्थः । अवयवी तु स्वावयवैर्न व्यधीयत इति भावः ।

समाहितमपि स्वहेतुमसमाहितं मन्यमानं प्रति पृच्छति **अङ्गेत्यादिना** । अङ्गेत्यव्ययं सम्बोधने तुशब्दोऽभिचक्रमे भवानेवेत्यर्थः । तत्रावयविनि । वृत्तं स्वभावः । न ह्यवयववृत्तमवयविनि नियोक्तुमुचितमिति भावः । अवयविवृत्तमाह **इदमित्यादिना** ।

(भा०) समुदाय्यशेषता वा समुदायो वृक्षः स्यात् तत्प्राप्तिर्वा, उभयथा ग्रहणाभावः। मूलस्कन्धशाखापलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात् प्राप्तिर्वा समुदायिनामिति। उभयथा समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यत इति। अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते। प्राप्तिग्रहणमपि नोपपद्यते प्राप्तिमतामग्रहणात्।

---

(ख०) स्थस्य नोपलब्धिरिति पूर्वपक्षोद्भावितं निराकरोति। एकभागस्थैरवयवैस्सहावयवी गृह्यतेऽपरभागस्थैश्च सह न गृह्यत इत्येतावन्मात्रेण न नानावयविसिद्धिः।

यः पुनर्मन्यतेऽवयवसमुदाय एवावयवीति तम्प्रत्याह समुदायीति। ग्रहणाभाव इति—यद्यवयवी नाम न कश्चित्स्यादिति शेषः।

---

(भा०चं०) तैः सह गृह्यते प्रत्यक्षीक्रियते तथा व्यवहितैः सह न गृह्यते, इत्युभयमवयविनो वृत्तम्। नन्वत एवास्त्येवाग्रहणमित्यत आह **नचेति**। भेदो गृहीतभेदः।

स्वपक्षे उपपत्तिं प्रदर्श्य परपक्षेऽनुपपत्तिं दर्शयितुमाह **समुदाय्यशेषतेति**। समुदायिनां परमाणूनामशेषता सर्वता अनेकतैव समुदायः स एव वृक्षादिः तत्प्राप्तिर्वा तेषां समुदायिनां प्राप्तिः परस्परसंयोगः इत्युभयथा उभयविधस्यापि वृक्षादिपदार्थस्य ग्रहणाभावः प्रत्यक्षानुपपत्तिः अतीन्द्रियत्वादिति भावः। सूक्ष्मावयवसमुदायादिपक्षं दूषयित्वा स्थूलावयवसमुदायादिपक्षं दूषयति **मूलेत्यादिना**। हेतुमाह **अवयवैरित्यादिना**। अशेषग्रहणं सर्वग्रहणं। प्राप्तिग्रहणम् सर्वेषां परस्परसम्बन्धग्रहणम्। प्राप्तिमतामशेषता-

(भा०) सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्पते न समुदायमात्रे इति ॥ ३३ ॥

(५) अवयविपरीक्षाप्रकरणम् ।

(सू०) "साध्यत्वादवयविनि सन्देहः" ॥३४॥

( भा० ) "यदुक्तमवयविसद्भावात् इति, अयमहेतुः-साध्यत्वात् । साध्यं तावदेतत्कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति ।

---

(ख०)सेयमिति । अवयवी नाम द्रव्यान्तरन्नावयवसमुदायमात्रमित्येतत्पक्ष एवोक्ता बुद्धिः सम्भवति नान्यथेत्यर्थः ।

इति प्रत्यक्षानुमानत्वपरीक्षा ।

साध्यत्वादिति पूर्वपक्षसूत्रम् । परम्प्रत्यसिद्धत्वमेवावयविनः 'साध्यत्वम्' । स खल्वेवम्मेने—"संविन्निष्ठा हि विषयव्यवस्थितिः । स एव संविदा व्यवस्थाप्यते यस्तस्या विषयः । स एव तस्या विषयो यस्तस्यामाकारमर्पयति । नच निरन्तरोत्पन्नरूपादिपरमाण्वतिरिक्तमवयवाकारं बिभ्रतीं सम्विदमीक्षामहे, किन्तु निरन्तरोत्पन्नरूपादिपरमाण्वाकाराम् । स्थौल्यं च यद्यपि न परमाणूनाम्प्रत्येकमस्ति, तथाऽपि प्रतिभासधर्मः बहुत्वादिवत् न पुनरवयविनमेकमवस्थापयितुमर्हति" इति ।

तमेवम्मानिनम्प्रत्यवयविनोऽसिद्धेर्विप्रतिपत्तिः । ततः साधकबाधकप्रमाणाभावे सति संशय इति सूत्रार्थः ।

---

(भा०चं०) प्राप्तिमताम् । अशेषता संख्याविशेषोऽनेकनिष्ठः । न हि संख्यासम्बन्धयोः पर्याप्त्यधिकरणैकदेशग्रहणे ग्रहणं सम्भवतीत्यर्थः । स्वमतस्थापनपरमतदूषणे उपसंहरति । **सेयमित्यादिना** ॥ ३३ ॥

ननु मत्पक्षे अवयवी न सिद्ध इत्याह **साध्यत्वादित्यादिसूत्रम्** । अहेतुर्मां प्रतीति शेषः । शेषं स्पष्टम् । ३४ ॥

(भा०)अनुपपादितमेतत् । एवं च सति विप्रतिपत्तिमात्रं भवति । विप्रतिपत्तेश्चावयविनि संशय इति" ॥ ३४ ॥

(सू०) सर्वाग्रहणमवयव्यसिद्धेः ॥ ३५ ॥

(भा०) यद्यवयवी नास्ति सर्वस्य ग्रहणं नोपपद्यते । "किं तत्सर्वम् ?"

द्रव्यगुणकर्मसामान्यविशेषसमवायाः ।

---

(ख०) अनुपपादितमिति—असिद्धमित्यर्थः ।

सर्वाग्रहणमिति सिद्धान्तसूत्रम् । 'सर्वस्य' द्रव्यगुणादेः 'अग्रहणं' स्यात्, यद्यवयवी न सिध्येत्, परमाणूनान्तद्गतगुणादीनां चाग्राह्यत्वात् ।

सर्वाग्रहणमित्यस्यार्थान्तरमपि वर्णितं वार्तिककारेण । तद्यथा । सर्वैः प्रमाणैरग्रहणम् । कथम् ? प्रत्यक्षस्य वर्तमानमहद्विषयत्वात् । अवयविप्रत्याख्याने च न बाह्यकरणप्रत्यक्षविषयोऽस्ति । प्रत्यक्षस्य चाभावादनुमानादेरप्यभावः । सेयं सर्वप्रमाणनिवृत्तिः । उपलभ्यन्ते चार्थाः प्रत्यक्षादिभिः प्रमाणैः । तैः सर्वैर्ग्रहणात् पश्यामोऽस्त्यवयवीति ।

तदिदं सूत्रमवयव्यनभ्युपगमे विरोधप्रदर्शनपरम् ।

नास्तीति—पूर्वपक्षमतेनेति शेषः ।

---

(भा०चं०) अवयविनि संशयानस्य सर्वव्यवहारानुपपत्तिरित्याशयेनाह **सर्वेत्यादिसूत्रम्** । नास्तीत्यनन्तरं तर्हीति पूरणीयम् । ग्रहणं व्यवहारमात्रोपलक्षणम । पृच्छति **किन्तदिति** । उत्तरं **द्रव्येत्यादि** । यद्यपि सामान्यादीनां न्यायोक्तविधयाऽनङ्गीकारः परस्य तथापि(१) व्यवहार अस्त्येवेत्यभिप्रायेण षडुक्तिः ।

---

(टि०) १ यद्यपि बौद्धैः सामान्यादिपदार्थान्तरं नाङ्गीक्रियते तथापि तथा व्यवहारमालम्ब्य भाष्योक्तिः ।

(भा०) "कथं कृत्वा ?"

परमाणुसमवस्थानं तावद् दर्शनविषयो न भवत्यतीन्द्रियत्वादणूनाम् । द्रव्यान्तरञ्चावयविभूतं दर्शनाविषयो नास्ति । दर्शनविषयस्थाश्चेमे द्रव्यादयो गृह्यन्ते । ते निरधिष्ठाना न गृह्येरन् । गृह्यन्ते तु कुम्भोऽयं श्याम एको महान् संयुक्तः स्पन्दते अस्ति मृन्मयश्चेति । सन्ति चेमे गुणादयो धर्मा इति । तेन सर्वस्य ग्रहणात्पश्यामोऽस्ति द्रव्यान्तरभूतोऽवयवीति ॥३५॥

(सू०) धारणाकर्षणोपपत्तेश्च ॥ ३६ ॥

( भा० ) अवयव्यर्थान्तरभूत इति ।

---

(ख०) निरधिष्ठाना इति । अवयव्यसत्त्वे तेषामधिष्ठानासम्भवादित्यर्थः ।

धारणेत्यादिसिद्धान्तसूत्रम् । धारणाकर्षणोपपत्तेश्च अवयवी अर्थान्तरभूत इति सूत्रभाष्ययोरन्वयः । भाष्यस्थवाक्यपूर्तिः सूत्रस्थेन चकारेण सूचितेति वार्तिककाराः ।

'अवयवी अर्थान्तरभूतः-धारणाकर्षणोपपत्तेः'-इत्येवञ्चेदमनुमानवाक्यं व्यधिकरणो हेतुः । धारणाकर्षणोपपत्तेर्हि नावयव्यधिकरणम्भ-

---

(भा० चं०) अनुपपत्तौ हेतुं पृच्छति **कथं कृत्वेति** । कथं केन हेतुना कृत्वा मत्वा अनुपपत्तिरुच्येत इति शेषः । उत्तरमाह **परमेत्यादिना** । समवस्थानं परस्परप्राप्तिः । नास्ति अङ्गीकृत इति कुम्भ इति शेषः । सामान्यविशेषयोर्ग्रहणम् । श्यामगुण इति रूपसमवाययोर्ग्रहणम् । अस्तीति संयोगसमवाययोर्ग्रहणम् । कपालभूतलयोरिति शेषः । मृण्मय इत्यनेन समवायेनोत्पत्त्याश्रयग्रहणम् । पश्याम इत्यनेन चक्षुष्मतां प्रतीतिरुक्ता ॥ ३५ ॥

प्रतीतिमपलपन्तं प्रत्याह **धारणेत्यादिसूत्रम्** । भूतशब्दः सत्यार्थे ।

(भा०) "सङ्ग्रहकारिते वै धारणाकर्षणे। सङ्ग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितमपां संयोगादामे कुम्भे, अग्निसंयोगात् पक्वे। यदि त्ववयविकारिते अभविष्यतां पांशुराशिप्रभृतिष्वप्यज्ञास्येताम् । द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसङ्गृहीतेष्वपि नाभविष्यतामिति ।"

---

( ख० ) वितुमर्हति। अतः सूत्रोक्तमनुमानं तात्पर्यकारो व्यतिरेकिरूपमेव व्याख्यातवान् । तद्यथा-योऽयं दृश्यमानो गोघटादिरवयवी (परमाणुसमूहभावेन विवादाध्यासितः) नासावनवयवी- धारणाकर्षणानुपपत्तिप्रसङ्गात्— यो योऽनवयवी तत्र तत्र धारणकर्षणे न भवतः यथा विज्ञानादौ—न चायं गोघटादिस्तथा—तस्मान्नानवयवीति ॥

धारणाकर्षणानुपपत्तिप्रसङ्गादिति व्यतिरेकित्वमाविष्कर्तुमेव तात्पर्यकृतामयमायासः । परमार्थतस्तु धारणाकर्षणवत्त्वादित्येव सूत्रोक्तहेत्वर्थ इति परिशुद्धिः।

पूर्वपक्षी सूत्रोक्तं हेतुं दूषयति 'सङ्ग्रहकारित इत्यादि नाभविष्यतामित्यन्तम् । पांशुराशावपि सिद्धान्तानुसारेणावयविनः सद्भावात् तत्रापि धारणाकर्षणे स्याताम्। जतुसङ्गृहीतेषु च तृणोपलकाष्ठादिषूपलभ्येते धारणाकर्षणे, नच तत्रावयवी द्रव्यान्तरभूत उत्पद्यते सिद्धान्तानुसारेणापि । एवञ्चोभयथापि धारणाकर्षणाभ्यान्नावयविसिद्धिरिति पूर्वपक्षसङ्क्षेपः।

---

(भा०चं०) अनारोपितपरमाणुभेदवानित्यर्थः। धारणाकर्षणोपपत्तेरित्यत्रान्वयि। धारणं नाम एकदेशसाहचर्ये सति अवयविनो देशान्तरप्राप्तिप्रतिषेधः। आकर्षणं नाम एकदेशग्रहणसाहचर्येण यदवयविनो देशान्तरप्रापणं तत्। कुत इदं ? लोकतः। अवयविनमन्तरेणापि धारणाकर्षणे उपपद्येते इत्याशयवान् प्रत्यवतिष्ठते सङ्ग्रहेत्यादिना अभविष्यता-

(भा०)"अथावयविनं प्रत्याचक्षाणको मा भूत् प्रत्यक्षलोप इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति ?"

एकमिदं द्रव्यमित्येकबुद्धेर्विषयं पर्यनुयोज्यः । किमेकबुद्धिरभिन्नार्थविषयेति आहो स्वित् भिन्नार्थविषयेति ? अभिन्नार्थविषयेति चेद्,-अर्थान्तरानुज्ञानादवयविसिद्धिः । नानार्थविषयेति चेद्,-भिन्नेष्वेकदर्शनानुपपत्तिः । अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति ॥ ३६ ॥

---

(ख०)सिद्धान्त्याचार्येणानुक्त एव परिहारे पूर्वपक्षयुक्तिभिर्विचलितहृदयः शिष्यः पृच्छति अथावयविनमिति । योयम्पूर्वपक्ष्यवयविनम्प्रतिषेधत्यणुसञ्चयमेव च प्रत्यक्षविषयत्वेन स्वीकरोति तमेवम्भूतम्प्रति को हेतुरुपन्यसितव्य इति प्रश्नार्थः ।

आचार्यः शिष्यप्रश्नोत्तरव्याजेन पूर्वपक्षम्परिहरति एकमिति । एकमिदं द्रव्यमित्यस्या बुद्धेः को विषय इति स प्रष्टव्य इत्यर्थः ।

अभिन्नार्थेति—नानेकार्थविषयेति यावत् । अस्या एकबुद्धेः किमेक एव विषय उत नाना ? एकश्चेत् स एवावयवीति सिद्धन्नः समीहितम् । नाना चेत् पूर्वपक्षिणो व्याघातः ।

---

(भा०चं०) **मित्यन्तेन** । वैशब्दोऽवधारणे । सङ्ग्रहं व्याचष्टे **संग्रहो नामेति** । अवयविकारितत्वे दोषमाह **पांसुराशीत्यादिना** । स्वपक्षे दृष्टान्तमाह **तृणोपलकाष्ठादिष्विति** ।

एवं प्रत्यवस्थाने प्रत्यवस्थाता किमनुयोक्तव्य इति शिष्यः पृच्छति **अथेत्यादिना** । अनुयोगं शिक्षयति **एकमित्यादिना** । अर्थान्तरानुज्ञानादवयवातिरिक्ताभिन्नार्थस्वीकारात् । भिन्नेषु बहुषु परमाणुषु एकदर्शनानुपपत्तिः न दृश्यते न प्रमीयते न सत्येत्यर्थः ॥ ३६ ॥

(सू०) सेनावनवद् ग्रहणमिति चेन्नातीन्द्रिय-
त्वादणूनाम् ॥ ३७ ॥

( भा० )"यथा सेनाङ्गेषु वनाङ्गेषु च दूरादगृह्यमाणपृथक्त्वेष्वेकमिदामित्युपपद्यते बुद्धिः, एवमणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदामित्युपपद्यते बुद्धिरिति"।

यथा गृह्यमाणपृथक्त्वानां सेनावनाङ्गानामारात्कारणान्तरतः पृथक्त्वस्याग्रहणं, यथा गृह्यमाणजातीनां पलाश इति वा खदिर इति वा नाराज्जातिग्रहणं भवति, यथा गृह्यमाणप्रस्पन्दानां नारात् स्पन्दग्रहणं, गृह्यमाणे चार्थजाते पृथक्त्व-

---

(ख०)गृह्यमाणेति—सामान्यतो दृश्यानामपि दूरत्वाद्यनेककारणवशात् क्वचिददर्शनमिति भावः।

गृह्यमाण इति। यत्रानेकेऽर्था दृश्यन्ते तेषाम्पृथक्त्वन्तु न दृश्यते तत्र पृथक्त्वादर्शनादेकबुद्धिर्या जायते सा भाक्तैवेत्यर्थः अणूनान्त्वदृश्यत्वान्न तत्र तादृशभाक्तप्रत्ययस्यावकाशः।

---

(भा०चं०)आक्षेपसमाधानसूत्रं **सेनेत्यादि**। व्याचष्टे **यथेति**। अङ्गेषु प्रयोजकेषु। सञ्चितेषु मिलितेषु।

आरात् दूरात् कारणान्तरतः प्रमाणान्तरतः। दृष्टान्तो भेदाग्रहे **यथेति**। भक्त्या उपचारेण कृतो भाक्तः। यथा चन्द्रभेदेन ज्ञातेऽपि मुखे चन्द्र इति प्रत्ययः कवेः उपचारो न सम्भवतीत्याह **नत्वित्यादिना**। अणूनां भाक्तप्रत्ययो न भवत्येवेत्यन्वयः। कुत इत्यत आह **अतीन्द्रियत्वादणूनामिति**। तर्हि कुत्र भाक्तप्रत्यय इत्यत आह–**गृह्यमाणपृथक्त्वानामिति**। प्रत्ययेनोपलभ्यमानपृथक्त्वेषु सेनावनाङ्गेषु कारणतो दूरस्थत्वान्निमित्ता-

( भा० )स्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति। न त्वणूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणाद्भाक्त एकप्रत्ययोऽतीन्द्रियत्वादणूनामिति ।

इदमेव च परीक्ष्यते—किमेकप्रत्ययोऽणुसञ्चयविषय आहोस्विन्नेति, अणुसञ्चय एव सेनावनाङ्गानि । न च परीक्ष्यमाणमुदाहरणमिति युक्तं, साध्यत्वादिति ।

दृष्टमिति चेन्न । तद्विषयस्य परीक्षोपपत्तेः । यदपि मन्यते-"दृष्टमिदं सेनावनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणं,

( ख० ) इदमिति। सर्वत्रावयविनमपह्नुवानस्यातीन्द्रियं वाऽणुसञ्चयमात्रमिच्छतः सेनावनाङ्गानामपि करिकुञ्जरादीनामतीन्द्रियाणुसञ्चयमात्रत्वात् दृष्टान्ताभाव इति तात्पर्यार्थः ।

साध्यत्वादिति साध्यसमत्वादित्यर्थः ।

तद्विषयस्येति । प्रत्यक्षविषयस्यैव परीक्ष्यमाणत्वान्न प्रत्यक्षमेव साधनबाधनकोटौ प्रवेशमर्हति ।

---

( भा०चं० )त्पृथक्त्वस्य भेदस्याग्रहणादप्रत्यक्षात् अभिन्नवत् प्रत्ययो भवतीति शेषः । ततो भाक्तो भवतीति भावः ।

परीक्ष्यमाणमुदाहरणं न भवति सन्दिग्धत्वादिति दूषणमाह इदमेवेति । परीक्ष्यतेऽऽवाभ्यामिति शेषः । अणुसञ्चय एवेत्यत्र त्वन्मते इति शेषः । मन्मते तु सेनावनाङ्गानि अवयविन इति शेषः । अतः परीक्ष्यमाणं तदपि नोदाहरणं युक्तमित्यन्वयः । मां प्रति तदसिद्धं साध्यत्वात् ।

शङ्कते दृष्टमिति । उभयवादिसिद्धं दर्शनमस्तीत्यर्थः । विप्रतिपद्यते नेति । परीक्षाया उपपत्तिः परीक्षोपपत्तिः । संशय उपपद्यते प्रवर्ततेऽनेनेति व्युत्पत्तेः । सङ्ग्रहवाक्यं विगृह्य दर्शयति यदपीत्या-

( भा० ) न च दृष्टं शक्यं प्रत्याख्यातुमिति"।–तच्च नैवम् तद्विषयस्य परीक्षोपपत्तेः। दर्शनविषय एवायं परीक्ष्यते। योऽयमेकमिति प्रत्ययो दृश्यते स परीक्ष्यते। किं द्रव्यान्तरविषयो वा अथाणुसञ्चयविषय इति। अत्र दर्शनमन्यतरस्य साधकं न भवति। नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम् अतस्मिंस्तदिति प्रत्ययो, यथा स्थाणौ पुरुष इति। ततः किम्? अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिः।

"स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानम्?"

---

(ख०)प्रधानेति। यद्विषयं यथार्थज्ञानं तद्विषयमेव मिथ्याज्ञानमपि सम्भवति। यथार्थज्ञानमेव मिथ्याज्ञानस्य प्रधानमित्यत्रोच्यते। तथाच यथा पुरुषे पुरुषबुद्धिः सत्या असत्यायाः स्थाणौ पुरुषबुद्धेः प्रधानमेवम् अनेकविषयेष्वेकमिति मिथ्याज्ञानस्य कुत्राप्येकविषये एकबुद्ध्या सत्यया भावितव्यम्।

---

(भा०चं०)दिना। दूषयति **तच्च नेति**। स्ववाक्यं विवृणोति **दर्शनविषय एवेत्यादिना**। परीक्ष्यते निर्णयार्थं विचार्यते। ननु निर्णीतेऽर्थे कोयं विचार इत्यतः संशयं दर्शयति **किमित्यादिना इतीत्यन्तेन**। ननु हेतौ सत्यपि तवानिर्णय इत्याशङ्क्य निराकरोति **अत्रेत्यादिभवत्यन्तेन**। दृश्यतेऽनेनेति दर्शनम्। हेतुरेकदेशग्रहणादित्यादि। अन्यतरस्य पूर्वपक्षिणस्तव काकाक्षिगोलकन्यायेनेदमुतरान्वय्यपि। सञ्चितेष्वणुष्वनेकेषु एकदर्शनं भ्रान्तिमङ्गीकर्तुः सा नोपपद्यत इति वक्तुं तामनुवदति **नानाभावेत्यादिना पुरुष इत्यन्तेन**। इष्टापत्त्याह **ततः किमिति**। अनिष्टापत्तिस्तवेत्याह **अतस्मिंस्तदिति**। प्रधानसिद्धिरेकसिद्धिः।

सिध्यत्यन्यः कश्चन प्रधानमतः किमायातमवयविना इत्यत

( भा० ) योऽसौ पुरुषे पुरुषप्रत्ययस्तस्मिन्सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोऽयमिति । एवं नानाभूतेष्वेकमिति सामान्यग्रहणात् प्रधाने सति भवितुमर्हति । प्रधानं च सर्वस्याग्रहणादिति नोपपद्यते । तस्मादभिन्न एवायमभेदप्रत्यय एकमिति ।

"इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति" चेद्—न विशेषहेत्वभावाद् दृष्टान्ताव्यवस्था । श्रोत्रादिविषयेषु शब्दादिष्व-

( ख० ) दृष्टान्तोपादानमिति । दृष्टान्तमात्रोपन्यासेन न किञ्चित्सिध्यतीत्यर्थः ।

( भा०चं० )आह **स्थाणावित्यादिनोपपद्यत इत्यन्तेन** । किं प्रधानं किं प्रमाणं प्रमेत्यर्थः । प्रत्ययस्येति षष्ठी कर्मणि प्रधीयते क्रियतेऽनेनेति व्युत्पत्तेः(१) । सामान्यग्रहणात् सादृश्यग्रहणात् । पुरुषोयमित्यनन्तरं प्रत्यय इत्यनुषङ्गः नानाभूतेषु एकमिति प्रत्ययो भाक्तः प्रधाने सति भवितुमर्हतीत्यन्वयः । प्रधानाप्रधानाभ्यां भज्यत इति भाक्तिः सादृश्यमुपचार उपमेत्यनर्थान्तरं तया प्रयुक्तो भाक्तः । प्रधानानुपपत्तौ हेतुमाह **सर्वाग्रहणादिति** । स्वमतसिद्धिमुपसंहरति **तस्मादिति** । एवकारेणौपमिकत्वं वारयति ।

अवयविगतमेकत्वं प्रधानमन्यत्र भाक्तमिति न नियमः इत्याशयेनाह **इन्द्रियान्तरेति** । श्रवणादिविशेषो शब्दादिष्वित्यर्थः । अभेदप्रत्ययः एकप्रत्ययः । दूषयति **नेत्यादिना** । विशेषहेत्वभावादित्यस्यायमाशयः । चाक्षुषारोपे चाक्षुषं प्रधानं न तु श्रावणादीति(२)

( टि० ) १ येन प्रत्ययेन विपरीतारोपः संपाद्यते सादृश्यवशात् तत्प्रधानं यथा स्थाणौ पुरुषप्रत्ययस्य पुरुषे पुरुषप्रत्ययः ।

२ श्रोत्रविषयस्य शब्दस्य श्रावणत्वाच्चाक्षुषारोपे, शब्दादिष्वभिन्नप्रत्ययस्य प्रधानतया उपन्यासो न युक्तियुक्त इति भावः ।

( भा० ) भिन्नेष्वेकप्रत्ययः प्रधानमनेकस्मिन्नेकप्रत्ययस्येति । एवं च सति दृष्टान्तोपादानं न व्यवतिष्ठते,विशेषहेत्वभावात् । अणुषु सञ्चितेष्वेकप्रत्ययः किमतस्मिंस्तदिति प्रत्ययः स्थाणौ पुरुषप्रत्ययवत् ? अथार्थस्य तथाभावात्तस्मिंस्तदिति प्रत्ययो यथा शब्दस्यैकत्वादेकः शब्द इति ? । विशेषहेतुपरिग्रहमन्तरेण दृष्टान्तौ संशयमापादयत इति । कुम्भवत्सञ्चयमात्रं गन्धादयोऽपीत्यनुदाहरणं गन्धादय इति ।

एवं परिमाणसंयोगस्पन्दजातिविशेषप्रत्ययानप्यनुयोक्तव्यः। तेषु चैवं प्रसङ्ग इति ।

---

(ख०)कुम्भवदिति । यांश्च शब्दादीन् प्रधानप्रत्ययनिमित्तत्वेन भवान् प्रतिपद्यते तेऽपि सञ्चिता एव । वैभासिकाः खलु भूतभौतिकसमूहात् पटादपि शब्दादीन् इच्छन्ति । अतस्तेषाम्मते शब्दादयोऽपि सञ्चिता एव । अपिचास्मन्मतेऽपि शब्दादीनान्न मुख्यमेकत्वम् , सङ्ख्याया गुणस्य गुणेषु शब्दादिष्वभावात् । अपि तु शब्दादिष्वप्येकत्वप्रत्ययो भाक्त एवेति हृदयम् । भाक्तत्वेऽप्यस्यैकत्वप्रत्ययस्य क्वचित्सत्यत्वम्—यत्र न कोऽपि बाधकप्रत्यय उदेति, क्वचिन्मिथ्यात्वं—यत्र बाधप्रत्ययस्योदय इति विवेकः ।

एवमिति । अवयविनम्प्रत्याचक्षाणक एवं पर्यनुयोक्तव्य इत्यन्व-

---

(भा०चं०)भवतु वा तवायमारोपः मम तु मते न भवतीति प्रतिदृष्टान्तेन प्रत्यवतिष्ठते **अणुष्वित्यादि** । पुरुषप्रत्ययवदित्यन्तं नास्तिकमतम् । अथेत्यादिशब्द इत्यन्तमास्तिकमतम् । दृष्टान्तौ त्वदीयमदीयौ पुरुषप्रत्येकशब्दौ । आपादयतो जनयतः । इन्द्रियान्तरविषया अपि ते परमाणुपुञ्जा एवेत्यनुदाहरणमित्याह **कुम्भवदित्यादिना** । एकत्वप्रत्ययप्रत्यवस्थानवत् परिमाणादिभिरपि प्रत्यवस्थानं कर्तव्य-

(भा०) एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात् एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवतः। तेन विज्ञायते यन्महत्तदेकमिति।

"अणुसमूहातिशयग्रहणे महत्प्रत्यय" इति चेत्?-सोऽयममहत्स्वणुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति। "किञ्चातः?"

---

(ख०) यः। यद्यवयविनमर्थान्तरं न प्रतिपद्यसे 'महत्' इति 'संयुक्त' इति वा 'अश्वो गच्छतीति' वा प्रत्यया न प्राप्नुवन्ति। नह्यतीन्द्रियेषु परमाणुषु ते प्रत्यया युज्यन्त इत्यर्थः।

उक्तेषु परिमाणस्पन्दजातिविशेषेषु चतुर्षु परिमाणम्परामृशति एकत्वेत्यादिना।

---

(भा०चं०) मित्युपदिशति **एवमित्यादिना**।

ननु वृक्षैकबुद्धिभेवत्पक्षेपि कथमेकत्वप्रमां प्रति विशेषहेत्वभावादित्यत आह **एकत्वेत्यादि**। तदितिप्रत्ययइतिपदं सप्तम्यन्तम् अस्मिन् साध्ये इत्यर्थः। महदिति प्रत्ययेन सामानाधिरकण्यात् इति विशेषहेतुरित्यन्वयः। समानाधिकरणप्रत्ययं प्रदर्शयति **एकमिदन्मिति**। इदं चक्षुषा गृह्यमाणं वस्तु चेति धर्मसमुच्चयार्थं समानमभिन्नमधिकरणं भिन्नधर्मयोराधेययोः समानाधिकरणौ भवतः, प्रमीयेते। उपसंहरति **तेनेति**।

महत्त्वं न परिमाणं किन्तु पुञ्जगत एवातिशयविशेष इत्याशयवान् विप्रतिपद्यते **अणुसमूहेति**। तथापि परिमाणविषयत्वात् त्वन्मते भ्रान्तिरित्याह **सोयममहत्स्विति**। इष्टापत्त्याह **किञ्चात इति**।

अनिष्टापत्तिस्तवेत्याह **अतस्मिन्निति**। प्रधानसिद्धिर्मे-

( भा० ) अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिरिति भवितव्यं महत्येव महत्प्रत्ययेनेति ।

"अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति" चेद् – न, मन्दतीव्रताग्रहणमियत्तानवधारणाद् यथा द्रव्ये । अणुः

( ख० ) अणुः शब्द इति । अणुः शब्दो महानित्यत्राणुत्वमहत्त्वयोः सामानाधिकरण्यं लक्ष्यते । इदमेव च प्रधानम्भविष्यति परमाणौ महत्प्रत्ययस्येत्यर्थः ।

इयत्तेति । प्रत्यक्षपरिमाणविषयमियत्तावधारणम् । नच तत्सम्भवति शब्देऽणौ वा ।

---

(भा०चं०) हत्प्रमासिद्धिः । भवितव्यं न्यायोपात्तं भवनमित्यर्थः । **महत्प्रत्ययेनेति** । कर्तरि तृतीया ।

ननु शब्दगतमहत्त्वप्रत्ययः प्रधानं भविष्यतीत्याशङ्कते **अणुः शब्दो महानितीनि** । अन्यथयति **न मन्देति** । शब्दे अणुता मन्दता महत्ता तीव्रता न परिमाणविशेषः, अत्र तु परिमाणविशेषः प्रतीयते स कुत्रत्य इत्युच्यतामिति भावः । इयत्ता वितस्तिहस्तादिपरिमाणं तच्च न शब्दे सम्भवति गुणत्वादिति भावः । असम्भवमाह **यथा द्रव्ये इति** । शब्दसमानाधिकरणाणुमहच्छब्दयोः पर्यायेणार्थं दर्शयति अणुरित्यादिशब्दैः । अणुरल्पो मन्द इति त्रयः पर्यायाः । तथैव महान् पटुस्तीव्र इत्येते पर्यायाः । शब्दगतमन्दतातीव्रते वर्णयति वार्तिककारः मन्दता तीव्रता च शब्दधर्मः अतोऽणुमहत्प्रत्ययः शब्दे । का पुनरियं मन्दता तीव्रता च ? अणुद्रव्यसामान्यात् सामान्यप्रत्ययविषयत्वं मन्दता । महद्द्रव्यसामान्याच्च सामान्यप्रत्ययविषयत्वं तीव्रता तदेव पाटवमिति । सामान्यपदमिह सादृश्यपरं किमणुद्रव्यसादृश्यं शब्देऽनुद्वेजकत्वं । महद्द्रव्यसादृश्यं शब्दे

( भा० ) शब्दोऽल्पो मन्द इत्येतस्य ग्रहणं महान् शब्दः पटु-स्तीव्र इत्येतस्य ग्रहणं कस्मात् ? इयत्तानवधारणात् । न ह्ययं महान् शब्द इति व्यवस्यन्नियानयमित्यवधारयति । यथा बदरामलकविल्वादीनि ।

संयुक्ते इमे इति च द्वित्वसमानाश्रयप्राप्तिग्रहणम् ।

"द्वौ समुदायावाश्रयः संयोगस्येति" चेत्—कोऽयं समुदायः ?,

---

( ख० ) संयुक्त इति—उक्तेषु चतुर्षु संयोगम्परामृशति । 'संयुक्ते इमे' इति ज्ञानं द्वित्वसमानाश्रयं प्राप्तिग्रहणं सत् अवयविनः प्रतिपादकमित्यन्वयः ।

आक्षिपति द्वाविति । द्वाववयवसमुदायावेव-न तु द्वाववयविनौ आश्रितः संयुक्तप्रत्यय इति हृदयम् ।

आक्षेपम्परिहरिष्यन् पृच्छति कोऽयमिति । समुदायार्थं विकल्प्योत्तरयति पूर्वपक्षी प्राप्तिरनेकस्येति । अनेकस्य अवयवस्य प्राप्तिः

---

(भा०चं०) उद्वेजकत्वमित्याद्युन्नेयम् । तथाच भाक्तप्रत्ययोयमिति भावः । परिमाणाभावे हेतुमाह इयत्तानवधारणात् । प्रमात्रनुभवेन व्यतिरेकं द्रढयति **न ह्ययमिति** । अयं प्रमाता व्यवस्यन् निश्चिन्वन् । इयानेतावत्परिमाणक इति न ह्यवधारयति यत्तथावधारयति तदाह **यथा बदरेति** ।

द्वित्वप्रमामपि अवयविसद्भावे हेतुमाह **संयुक्तेत्यादिना** । इमे द्रव्ये चाक्षुषे । समानाश्रयप्राप्तिग्रहणं समानाधिकरणसंयोगग्रहणम् । विशेषहेतुरित्यनुषङ्गः तथाच प्रयोगः द्वे इमे इति बुद्धिः प्रमा संयुक्ते-इतिबुद्धिसमानाधिकरणत्वात । यन्नैवं तन्नैवं यथा द्विचन्द्रबुद्धिः ।

प्रतीतेरन्यविषयत्वं शङ्कते **द्वाविति** । पृच्छति **कोऽयमित्यादिना** । अयं भवदभिमतसमुदायः समूहापरनामा पदार्थः ।

(भा०) "प्राप्तिरनेकस्यानेका वा प्राप्तिरेकस्य समुदाय इति चेत्" प्राप्तेरग्रहणं प्राप्त्याश्रितायाः। संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते।

---

(ख०) संयोग एव समुदाय इति प्रथमविकल्पस्यार्थः। भिन्नाः समुदायिनः (अवयवाः) संयोगेन एकीकृताः समुदाय इत्यर्थः। एकस्यैवावयवस्य अनेका प्राप्तिरनेकैरवयवैः संयोगः समुदायार्थ इति द्वितीयविकल्पार्थः। अनेकेऽवयवसमूहा एव समुदाय इत्यर्थः। इमावेव विकल्पौ द्वात्रिंशत्सूत्रभाष्येऽप्युक्तौ—समुदाय्यशेषता वा समुदायो वृक्षः स्यात्तत्प्राप्तिर्वेत्यादिना। तत्र यत्समुदाय्यशेषतापदेन विवक्षितं तदेवात्र द्वितीयविकल्परूपेणोपन्यस्तम्। समुदायिप्राप्तित्वेन यत्तत्रोक्तन्तदेवात्र प्राप्तिरनेकस्येत्यनेन विवक्षितम्।

आद्यं विकल्पं दूषयति प्राप्तेरिति। प्राप्त्याश्रितायाः प्राप्तेरग्रहणमित्यन्वयः। संयुक्ते इमे वस्तुनी इत्यत्र द्वयोः समुदाययोः संयोगो गृह्यते। तत्र यदि अनेकस्य प्राप्तिरेव समुदायो भवेत् तर्ह्यत्र द्वयोः समुदायभूतयोः प्राप्त्योरेव प्राप्तिर्गृहीता स्यात्। नच प्राप्तेः प्राप्तिर्गृह्यते। अतो नानेकप्राप्तिः समुदायो भवितुमर्हति।

---

(भा०चं०) उत्तरयति **प्राप्तिरित्यादिना**। प्राप्तिः संयोगः। अनेकस्य एकभिन्नस्य। द्रव्यस्य अनेका एका एकभिन्ना एकस्य द्रव्यस्य वा समुदाय इति योजना।

दूषयति **प्राप्तेरित्यादिना**। संयोगाश्रितः संयोगो न गृह्यत इत्यर्थः। तर्हि किंविषयकं ग्रहणमित्याह **संयुक्ते इमे वस्तुनीति**। इमे द्वे वस्तुनी द्रव्ये। अत्र उल्लेखे द्वे प्राप्ती द्वौ संयोगौ संयुक्ते संयोगाधिकरणे गृह्येते प्रतीयेते।

द्वितीयां कोटिमुल्लिख्य दूषयति **अनेक इति**। अनेकसमु-

(भा०)"अनेकसमूहः समुदाय"इति चेद्-न, द्वित्वेन समानाधिकरणस्य ग्रहणात्। द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमूहाश्रयः संयोगो गृह्यते। न च द्व्योरण्वोर्ग्रहणमस्ति। तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति।

"प्रत्यासत्तिः प्रतीघातावसाना संयोगो नार्थान्तरमिति" चेत्—न, अर्थान्तरहेतुत्वात्संयोगस्य। शब्दरूपादिस्पन्दानां हेतुः संयोगः। न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु स्पन्दे च कारणत्वं गृह्यते। तस्माद् गुणान्तरं, प्रत्ययविषयश्चार्था-

---

(ख०) प्रथमं विकल्पम्पराहतं कृत्वा द्वितीयमुत्थापयति अनेकसमूह इति। अनेका प्राप्तिरिति पक्षे द्वे वस्तुनी इति द्वित्वसामानाधिकरण्यमनेकत्वस्य न घटते।

नचेति। परमाणोरतीन्द्रियत्वात्परमाणुद्वयस्याप्यतीन्द्रियत्वादित्यर्थः पूर्वोक्तेषु चतुर्षु तृतीयं स्पन्दमुद्दिश्य व्याचष्टे प्रत्यासत्तिरिति।

---

(भा०चं०) होऽनेकसंयोगः द्वित्वेन सह समानाधिकरणस्यैकस्य संयोगस्य। अर्थौ घटपटावित्यादि। अनेकसमूहः आश्रयो यस्य स तथा। अणुद्वयाश्रितत्वशङ्कां वारयति **नचेति**। अतीन्द्रियत्वादिति हेतुः शेषः। स्वमतमुपसंहरति **तस्मादिति**।

संयोगमपह्नोतुमाह **प्रत्यासत्तिरिति**। प्रतीघातावसाना प्रतीघातफलिका प्रत्यासत्तिः सम्बन्धः संयोगो नार्थान्तरं सम्बन्धिद्वयानतिरिक्तमित्यर्थः। इदमन्यथयति **नेति**। संयोगस्यार्थान्तरहेतुत्वात्। संयोगो नार्थान्तरमिति योजना। अर्थान्तरहेतुत्वं दर्शयति **शब्देत्यादिना**। गुणान्तरोपजननं गुणविशेषोत्पत्तिं। शब्देत्यादिविषयसप्तमी। विषयश्चेह उत्पाद्यरूपः। कारणत्वं जनकशक्तिः। उपसंहरति **तस्मादिति**। अत्र संयोग इत्यनुषङ्गः। तस्यानतिरिक्तत्वे तत्पूर्वमपि का-

(भा०) न्तरं तत्प्रतिषेधो वा—कुण्डली गुरुरकुण्डलश्छात्र इति। संयोगबुद्धेश्च यद्यर्थान्तरं न विषयः, अर्थान्तरप्रतिषेधस्तर्हि विषयः। तत्र प्रतिषिध्यमानवचनम्। संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद्वक्तव्यमिति। द्वयोर्महतोराश्रितस्य ग्रहणान्नाण्वाश्रय इति।

---

( ख० ) प्रतिषिध्यमानवचनमिति। किमत्र प्रतिषिध्यते तद् वक्तव्यमित्यर्थः।

---

(भा०चं०)र्योत्पत्तिप्रसङ्ग इति भावः। अनुमानेन साधयित्वा प्रत्यक्षेणापि साधयति **प्रत्ययविषयश्चेति**। प्रत्ययः प्रत्यक्षम्। तद्विषयश्चार्थो द्विविधः भावोऽभावश्चेति। याविमौ सम्बन्धासम्बन्धावित्युच्येते। अनतिरिक्तत्वे(१) सम्बन्धिसम्बन्धव्यवहार एव न स्यादिति भावः। ताविमौ दर्शयत्यधिकरणभेदेन **कुण्डलीत्यादिना**। अनतिरिक्तत्वे कुण्डलगुरुर्गुरुकुण्डल इति वा स्यात्। अकुण्डलछात्रछात्राकुण्डलावित्येवं वा स्यात्। न मतुबर्थप्रत्ययबहुव्रीही स्याताम्। समर्थः पदविधिरिति शास्त्रमर्थसम्बन्धे प्रवर्तते तदभावे लोकशास्त्रविरोध इति भावः। विधिप्रतिषेधयोरन्यतरप्रतिषेधेऽन्यतरपर्यवसानमित्याह **संयोगबुद्धेश्चेति**। संयुक्तो गुरुः कुण्डलेनेत्यादिबुद्धेः। प्रतिषिध्यमानः अभावबुध्या विशिष्यमाणः तस्य वचनं स्वशब्देन प्रतिपादनं तव प्रसक्तमिति शेषः। तदिदं विवृणोति **संयुक्ते इत्यादिना इतीत्यन्तेन**। परमाणुपुञ्जाश्रयः संयोग इत्यपि वक्तुं न शक्यत इत्याह **द्वयोर्महतोरिति**। आश्रितस्य समवायेन वृत्तिमतः संयोगस्येति शेषः। एकत्वा-

---

(टि०)१ द्रव्यगुणकर्महेतुत्वादपि संयोगस्यार्थान्तरहेतुत्वं द्रष्टव्यम्। यथा तन्तुसंयोगः पटस्य, भेर्याकाशसंयोगः शब्दस्य, प्रयत्नवदात्महस्तसंयोगः हस्तकर्मणो हेतुरित्येवमादि।

( भा० ) जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम् । प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः ।

व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम् ।

"अणुसमवस्थानं विषय" इति चेत् —प्राप्ताप्राप्तसाम-

---

( ख० ) उक्तेषु चतुर्षु चतुर्थीं जातिमुद्दिश्य व्याचष्टे जातिविशेषस्येति । प्रत्ययानुवृत्तिलिङ्गस्येत्यत्र लिङ्गपदन्निमित्तवाचकम् । लिङ्गमनुमापकमिति तु तात्पर्यकृतः । तथा चोक्तम्— प्रत्ययानुवृत्तिर्यद्यपि प्रत्यक्षा तथाऽपि विप्रतिपन्नम्प्रति सैव लिङ्गमुच्यते ।

व्यधिकरणस्येति । नचायं जातिविशेषो व्यधिकरणो व्यज्यते— इत्यधिकरणमवश्यं वक्तव्यमित्यर्थः ।

विषय इति । अधिकरणमित्यर्थः । परमाणव एव केनचित् समवस्थानेनावतिष्ठमानाः तां तां जातिं व्यञ्जयन्ति । अतो नावयवी सिध्यतीति पूर्वपक्षिणो हृदयम् ।

---

(भा०चं०) नेकत्वसंयोगैरनुयोगं दर्शयित्वा जात्यानुयोगं दर्शयति **जातिविशेषस्येति** । प्रत्ययानुवृत्तिरेकाकारा प्रतीतिः सा लिङ्गं यस्य स तथा । तस्य प्रत्याख्यानं निराकरणं त्वामापन्नमिति शेषः । न हि आश्रयप्रतीतिमन्तरेण जातेः प्रतीतिरस्तीति भावः । इष्टापत्तौ दोषमाह **प्रत्याख्याने वेति** । व्यवस्था अयं घटो भवति न पट इत्यादिप्रत्येकविधिनिषेधबुद्धिः । तस्या अनुपपत्तिरप्राप्तिः(१) त्वन्मत इति शेषः ।

अवयवव्यतिरिक्तनिष्ठा जातिरित्याशङ्क्य निषेधति **व्यधिकरणस्येत्यादिना** । अनभिव्यक्तेरप्रत्यक्षमितेर्हेतोः प्रत्यक्षविशेषजातिविशेषाधिकरणस्य वचनं कार्यमिति शेषः ।

---

( टि० ) १ अवयविनोऽतिरिक्तत्वानङ्गीकारे घटः पटः इत्येकाकाराऽनुगतप्रतीतिर्न स्यात् जात्यभिव्यञ्जिकाया अवयविव्यक्तेरभावादिति भावः ।

( भा० )र्थ्यवचनम् । किमप्राप्ते अणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते, अथ प्राप्ते इति ? अप्राप्ते ग्रहणमिति चेत्,—व्यवहितस्याणुसमवस्थानस्याप्युपलब्धिप्रसङ्गः । व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत । प्राप्ते ग्रहणमिति चेत् ? मध्यपरभागयोरप्राप्तावनभिव्यक्तिः । यावत्प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत्,—तावतोऽधिकरणत्वमणुसमवस्थानस्य । यावति प्राप्ते जातिविशेषो गृह्यते तावदस्याधिकरणमिति प्राप्तं भवति । तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः । एवं

---

( ख० ) प्राप्ताप्राप्तेति पूर्वपक्षोक्तं दूषयति । यत्तत् परमाणूनां समवस्थानं जातिविशेषं व्यनक्ति—इति मन्यसे—किन्तच्चक्षुषा प्राप्तं जातिविशेषं व्यनक्त्याहोस्विदप्राप्तमिति भावः ।

तत्रैकेति । योऽयं वृक्ष इति समुदायः प्रतीयते तस्य वृक्षस्य भेदः प्राप्नोतीत्यर्थः । यावति यावति जातिर्व्यज्यते स स वृक्ष इति प्राप्नोति । ततश्चैको वृक्षोऽनेक इति प्रतीयेत— एकप्रत्ययश्च न स्यादित्याशयः ।

---

(भा० चं०) अणूनां परमाणूनां समवस्थानं संयोगविशेषः पुञ्जाख्यः स एव संयोगाधिकरणत्वेन प्रत्यक्षविषय एवेत्यर्थः । दूषयति **प्राप्तेत्यादिना** । प्राप्ताप्राप्तयोः प्राप्ताप्राप्ताभ्यां वा सामर्थ्यमिन्द्रियस्य प्रतिपादनशक्तिः । तद्वचनं तद्वाच्यम् त्वयेत्यर्थः । तदिदं विशदयति **किमित्यादिना** । अणुसमवस्थाने पुञ्जाख्ये परमाणुसमूहे तदाश्रयस्तदाश्रितः । बहुव्रीहिस्तत्पुरुषो वाऽयं समास इति ज्ञेयम् । प्रथमं पक्षं दूषयति **व्यवहितस्येति** । उपलब्धिः प्रत्यक्षं तत्प्रसङ्गः तदापत्तिः । द्वितीयं पक्षं दूषयति **मध्येत्यादिना** । अनभिव्यक्तिः प्रसज्येतेति शेषः हेतुश्च इन्द्रियाप्राप्तत्वात् । शङ्कते **यावदिति** । दूषयति **तावदित्यादिना** ।

(भा०)च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षवहुत्वं प्रतीयेत—यत्र यत्र ह्यणुसमुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति । तस्मात्समुदिताणुसमवस्थानस्यार्थान्तरस्य जातिविशेषाभिव्यक्तिविषयत्वादवयव्यर्थान्तरभूत इति ॥ ३७ ॥

(६)अनुमानपरीक्षाप्रकरणम् ।

( भा० )परीक्षितं प्रत्यक्षम् । अनुमानमिदानीं परीक्ष्यते—

---

( ख० ) उपसंहरति तस्मादिति । समुदिता अणवः समवस्थानमधिकरणं यस्य तादृशस्यार्थान्तरस्य जातिविशेषाभिव्यक्तिहेतुत्वं नाणूनामिति सिद्धोऽवयवीति भावः ।

---

(भा०चं०) ततः किमत आह **तत्रेति** । तत्र उक्तप्रकारे सति । अर्थभेदः जात्याश्रयव्यक्तिभेदः । प्रसक्त इति शेषः । तथासति का हानिरित्यत आह **एवं चेति** । वृक्षवहुत्वं प्रतीयेत(१) तच्चानिष्टमिति भावः । कुत इदमित्यत आह **यत्रयत्रेति** । यत्रयत्र पार्श्वपृष्ठादौ भागे अंशे वृक्षत्वमेका जातिः सस इत्येतद्वीप्सया वृक्षवहुत्वमुक्तम् । दूषयित्वा परमतं स्वमतमुपसंहरति **तस्मादिति** । अवयविवहुत्वान्ताद्दूषणादित्यर्थः । समुदिताः अणवः कपालादिपर्यन्ताः । समवस्थानमधिकरणं यस्यार्थान्तरस्य व्यक्तिविशेषस्य जातिविशेषाधिकरणस्य अभिव्यक्तिः प्रत्यक्षम् । अवयवीत्येकवचनेन एक उक्तः । इति शब्देन सिद्ध उक्तः । अथवा पूर्वपक्षसमाप्तिरुक्ता प्रकरणसमाप्तिश्चाह **परीक्षितमिति** ॥ ३७ ॥

इति श्रीभाष्यचन्द्रे प्रत्यक्षलक्षणे अवयविपरीक्षाभाष्यचन्द्रिका ।

शिष्यावधानाय प्रतिजानीते **अनुमानमिति** । इदानीमवसरे रोधोपेत्यादिसूत्रम् । अनुमानं न प्रमितिकरणं रोधोपघातसादृश्येभ्यो वृष्ट्या-

---

( टि० ) १ अणुसमूहरूपाणां वृक्षाणां बहुत्वादित्यर्थः ।

(सू०)"रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम्" ॥ ३८ ॥

(भा०)"अप्रमाणमिति —एकदाप्यर्थस्य न प्रतिपादकमिति। रोधादपि नदी पूर्णा गृह्यते। तदा चोपरिष्टाद्वृष्टो देव इति मिथ्यानुमानम्। नीडोपघातादपि पिपीलिकाण्डसञ्चारो भवति। तदा

---

( ख० )प्रतिपादकमिति। निश्चायकमित्यर्थः। प्रतिपादनमात्रन्त्वप्रमाणेनापि क्रियत एव। अतः प्रतिपादनमत्र निश्चायकमेव विवक्षितम्।

नदीपूरदर्शनादभूद्वृष्टिरिति शेषवदनुमानम्—कार्यात् कारणस्येति। तत्सांशयिकत्वेन दूषयति रोधादिति। जलस्यवारोधादपि नद्याः पूरो भवति। अतो नास्ति नियतः सम्बन्धो नदीपूरस्य वृष्ट्येत्यर्थः।

पिपीलिकाण्डसञ्चरणाद्भविष्यति वृष्टिरिति पूर्ववदनुमानम्—कारणात्कार्यस्य। तद्दूषयति नीडोपघातादिति। स्ववासस्थानभ्रंशादपि पिपीलिका अण्डं गृहीत्वा निस्सरन्ति। अतो नास्ति नियतः सम्बन्धः पिपीलिकाण्डसञ्चरणस्य भाविवृष्ट्येत्याशयः।

---

(भा०चं०) दावनुमीयमाने अनुमितेरनुपपत्तिर्व्यभिचारेण रोधोपघातादेरकरणत्वात्। यदा नद्या रोधेन पूर्वोत्कर्षात् उपरिवृष्टिम्, आश्रयोपघातेन पिपीलिकाण्डसञ्चारात् भाविनीं वृष्टिम्, मयूरसमानशब्देन च पर्वते मयूरं साधयति तदा नानुमितिरूपा प्रमोदेति। तत्तदुदाहरणानां व्यभिचारादनुमानस्याप्रामाण्यमिति सूत्रार्थः। भाष्यं तु **अप्रमाणमितीति**। विधेयपदं व्याचष्टे **एकदेति**। एकदा हेत्वाभासप्रयोगकाले अर्थस्य साध्यस्य न प्रतिपादकं न प्रमितिकरणम्। अत्र विभज्य हेतून् प्रदर्शयति **रोधादपीत्यादिना**। रोधो सेतुबन्धः गृह्यते दृश्यते। वृष्ट इति कर्तरि क्तः देवो मेघः। नीडोपघातात् पिपीलिकानामाश्रयोपघातात्

(भा०)च भविष्यति वृष्टिरिति मिथ्यानुमानमिति।पुरुषोऽपि मयूरवाशितमनुकरोति। तदापि शब्दसादृश्यान्मिथ्यानुमानं भवति"॥३८॥

(सू०)न, एकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्॥३९॥

---

(ख०) अत्रेदमवधेयम्। न पिपीलिकाण्डसञ्चरणं वर्षायाः कारणम्। अनुपलब्धसामर्थ्यात्। असत्यपि तस्मिन् वर्षोपपत्तेः। वर्षामूलकारणस्य तु महाभूतसङ्क्षोभस्य पिपीलिकाण्डसञ्चरणं पूर्वकार्यम्। भौमेनोष्मणा क्लथ्यमानाः पिपीलिकाः स्वान्यण्डानि भूमिष्ठान्युपरिष्ठान्नयन्ति। तस्मात्पिपीलिकाण्डसञ्चारेण वर्षकारणं महाभूतसङ्क्षोभमनुमाय यदि वर्षकारणात् वर्षकार्यमनुमीयते तदा पूर्ववदुदाहरणम्। अथ कार्यकारणभावमबुध्वैवानुमिमीते पिपीलिकाण्डसञ्चरणेन वर्षं तदा कार्यकारणभावाभावेन सामान्यतोदृष्टस्योदाहरणमिदम्।

मयूररुतं श्रुत्वा वर्तमानो मेघोऽनुमीयते—तदपि दूषयति पुरुष इति। यच्छ्रूयते मयूररुतत्वेन च ज्ञायते तत्पुरुषकृतम्मयूररुतानुकरणमेव स्यात्।

वार्तिककारोक्त्या तु मयूररुतेन मयूरस्यैवास्तित्वमनुमीयत इत्येवात्र विवक्षितम्।

अनुमानमिथ्यात्वं निराकरोति नेत्यादिना सूत्रेण।

अनुमानाप्रामाण्यन्न युक्तम्-एकदेशजनदीवृद्धि-त्रासजपिपीलिकाण्डसञ्चार-मयूररुतसदृशरुतेभ्योऽर्थान्तरत्वात्-यथार्थानुमितिकरणत्वेनाभिमतानामिति शेषः। ये नदीवृद्ध्यादयोऽनुमितिकरणत्वेनाभिम-

---

(मा०चं०)अण्डजा यत्र प्रसुवते पालयन्ति तत्स्थानं नीडमित्युच्यते तस्योपघातः परेणोपद्रवः। मयूरवाशितं मयूरसदृशध्वनिम्। अथवानुकृतिरेव सदृशीकरणम् ॥ ३८ ॥

एवमाक्षिप्ते समाधान सूत्रम् नैकदेशेत्यादि। उदाहृतलिङ्गानामि-

( भा० ) नायमनुमानव्यभिचारः। अननुमाने तु खल्वयमनुमानाभिमानः। कथम् ? नाविशिष्टो लिङ्गं भवितुमर्हति। पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतरफेनफल-

( ख० ) तास्ते एकदेशजादिभ्यो भिन्ना एवेत्याशयः।

नाविशिष्ट इति। नदीवृद्ध्यादिमात्रन्नानुमितिकरणत्वेनाभिमतमपि तु विशिष्टमेवेत्यर्थः।

नदीवृद्ध्यादीनां विशेषं दर्शयति पूर्वोदकेति।

(भा०चं०)ति सूत्रशेषः। एकदेशत्रासशब्दाभ्यामेकदेशजत्रासजयोरभिधानन्तथा च नोक्तव्यभिचारादनुमानाप्रामाण्यम्, कुतः ? उदाहृतलिङ्गानामेकदेशजनदीपूरत्रासजपिपीलिकाण्डसञ्चारमयूरशब्दसादृश्येभ्यः अर्थान्तरभावात् भेदादित्यर्थः। नहि नदीपूरमात्रं निर्वृत्तवृष्टिलिङ्गम्, किन्तु फेनबुद्बुदमालिन्यतृणफलादिमन्नदीपुरः। न वा पिपीलिकाण्डसंचारमात्रं भाविवृष्टिलिङ्गं किन्त्ववित्रस्ताननस्थाण्डोर्ध्वगामित्वं पिपीलिकानाम्। न वा मयूरशब्दसादृश्यविशिष्टः शब्दो मयूरवत्त्वे लिङ्गम्। किन्तु तदविशिष्टः, न त्वेवंविधस्य व्यभिचारः। न चानुमानमप्रमाणमित्यपि प्रयोगो युक्तः। त्वदुक्तहेतोरपि प्रामाण्याप्रामाण्ययोर्व्याघातात्। अनुमानमात्रस्य पक्षत्वे व्यभिचारादिति। हेतुसिद्धश्च ? नह्यनुमानमात्रे व्यभिचारः। तथा चारोधेत्यादिविशेषाभिधानमिति सूत्रार्थः।

भाष्यं तु **नायमित्यादि**। अनुमानव्यभिचारः हेतुव्यभिचारः। फलं न व्यभिचरति हेतुरित्यर्थः। कुत इत्याह **अननुमानेत्विति**। अननुमाने हेत्वाभासे, तुशब्द एवार्थे खलु निश्चितं अयं त्वदीयः। अनुमानाभिमानः परेणोक्तसद्धेतुत्वाभिमानः कथं कुतः। इत इत्याह **नाविशिष्ट इति**। नाव्यावृत इत्यर्थः। लिङ्गं गमकं प्रमा-

(भा०)पर्णकाष्ठादिवहनं चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति, नोदकवृद्धिमात्रेण । पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते, न कासाञ्चिदिति । नेदं मयूरवाशितं तत्सदृशोऽयं शब्द इति विशेषापरिज्ञानान्मिथ्यानुमानमिति । यस्तु विशिष्टाच्छब्दाद्विशिष्टमयूरवाशितं गृह्णाति तस्य वि-

( ख० )पिपीलिकेति । प्रायः प्रबन्धः पङ्क्तिरिति यावत् ।

विशेषापरिज्ञानादिति । यदा मयूररुतात् तत्सदृशशब्दस्य भेदन्नावधारयति तद्द्वारैव चानुमिमीते तदैवेदमनुमानं मिथ्या । एवञ्च यदा रोधादिकारणान्तरैरुपजनितो नदीपूर इति नावधारयति तद्द्वारेण च उपरि वृष्टो देव इत्यनुमिनोति तदैवानुमानाम्मिथ्या । त्रासजोऽयम्पिपीलिकाण्डसञ्चार इति यदा नावधारयति—अनुमिनोति च तद्द्वारैवागामिनीं वृष्टिं तदैवानुमानम्मिथ्या नान्यथेत्याशयः ।

विशिष्टादिति । षड्जस्वरविशिष्टादित्यर्थः ।

---

(भा०चं०)करणं भवितुं प्रमातुमर्हति युज्यते । तदिदं व्यतिरेकेण दर्शयति **पूर्वोदकेत्यादिना** । विशिष्टं व्यावृत्तं खल्वेव न तु पूर्णोदकमात्रं वर्षोदकं वृष्टिजलं शीघ्रतरत्वमद्रुतगातिमत्त्वं स्रोतसो जलप्रवाहस्य वहनं नयनम् उपलभमानः प्रमिण्वन् अनुमितिं कर्तुं यः प्रवृत्तः । पिपीलिकाप्रायस्याण्डसचारे पिपीलिकानां पङ्क्तीभूतानां प्रायस्य प्रीतियुक्तासमवायस्य प्रीयन्ते अस्मिन्निति व्युत्पत्तेः कृद्विहितो भावो द्रव्यवत्प्रकाशत इति न्यायेन प्रीतिपूर्वकपंक्तिभूतपिपीलिकानामित्यर्थः ! कर्तरि षष्ठी अण्डानां संचारः संचारस्येति कर्मणि षष्ठी । एतेन त्रासितसंचारणा वारिता । भाव्यनिष्टचिन्तनत्रासः भविष्यति वाऽऽसन्ना वृष्टिरित्यर्थः । उक्तविशेषणव्यावृत्ताः पिपीलिका आह न कासाञ्चित् । हेतुमपरिचितवतो मिथ्यानुमानमाह **नेदमित्यादिना** । तं परि-

३८

(भा०)शिष्टोऽर्थो गृह्यमाणो लिङ्गं, यथा सर्पादीनामिति। सोऽयमनुमातुरपराधो नानुमानस्य, योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति ॥ ३९ ॥

( ७ ) वर्तमानकालपरीक्षाप्रकरणम् ।

( भा० ) त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्, अत्र च—

(ख०)सर्पादीनामिति। सर्पादयो मयूरस्यैव विशिष्टं शब्दं श्रुत्वा तस्यास्तित्वमनुमिन्वन्ति। न तेषां कदापि मयूरसदृशरुतमात्रात्तदस्तित्वभ्रान्तिः।

तदेवमनुमानलक्षणपरीक्षाद्वारेणानुमानम्परीक्ष्य सम्प्रत्यनुमानविषयपरीक्षयाऽनुमानपरीक्षामवतारयति त्रिकालेति।

(भा०चं०) चितवतः सदनुमानमाह-**यस्त्वित्यादिना**। सदृशादित्यवधौ पञ्चमी। तद्विशेषणविशिष्टात् द्वित्रिवृत्तियुक्तात्। विशेषश्च मयूरशब्दे षड्जत्वं ध्वनित्वव्याप्यजातिविशेषः। गृह्णाति प्रत्यक्षीकरोति। तस्य प्रमातुः लिङ्गं प्रमापकम्। अग्राह्यमाणपदापेक्षतृतीयाप्राप्तावपि लिङ्गापेक्षया षष्ठी। मुख्यामुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात्। वैजात्यग्रहणशक्तिमाह **सर्पादीनामिति**। आदिशब्देन पतङ्गादयो ग्राह्याः। सोयं हेत्वाभासपरिग्रहो दोषो न हेतोरित्याह **सोयमिति**। अनुमातुर्मातुर्मनुष्यादेर्न तु सर्पादेर्यः अनुमाता। अविशिष्टार्थदर्शनेन मयूरशब्दसदृशशब्दश्रवणेन बुभुत्सते अनुमित्सति ॥ ३९ ॥

इति श्रीभाष्यचन्द्रे अनुमानलक्षणपरीक्षाभाष्यचन्द्रिका।

अनुमानं हेतुतः परीक्ष्य विधातः परीक्षयितुमाह **त्रिकालेत्यादि भाष्यम्**। त्रैकाल्यग्रहणादित्युक्तमनुमानसूत्रभाष्ये त्रिविधपदस्य द्वितीयव्याख्याने सदसद्विषयमनुमानमित्यादिरूपे(१) अत्र च चोऽप्यर्थे

(टि०) १ वर्तमानातीतानागतविषयमनुमानमित्यादिरूपे।

(सू०) "वर्तमानाभावः, पततः पतितपतितव्य-कालोपपत्तेः" ॥ ४० ॥

(भा०) "वृन्तात्प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा । तत्संयुक्तः कालः पतितकालः । योऽधस्तात् स

(भा०चं०) अत्रापीत्यर्थः । हेतुत्रैविध्यदूषणवत्(१) कालत्रैविध्यदूषणमपीति भावः । **वर्तमानेत्यादिसूत्रम्** । (२)वर्तमानकालो नास्ति, कुतः? पततः अधोगच्छतः वस्तुनः फलादेः पतितकालस्य पतितव्यकालस्य च केवलमुपपत्तेः । वर्तमानकालस्यानुपपत्तेरित्यर्थः । वृन्तात् प्रच्यवमानस्य फलस्य समवधिं कृत्वा वृन्तं यावत् यो अध्वा स पतितोऽध्वा भूमिञ्च यावत् योऽध्वा स पतितव्योऽध्वा तदुभयसञ्चरणकालावतीतानागतावेव तस्मान्न वर्तमानस्य वार्तापीति भावः । ननु काल एव मानं नास्ति कुतस्तद्विशेषकथेति चेन्न ज्येष्ठकनिष्ठादिप्रत्ययानुपपत्तेः । कालैकत्वात् प्रत्ययभेदानुपपत्तिरिति चेन्न सापेक्षत्वात् पितृपुत्रादिप्रत्ययवत् यथैकस्मिन् पुरुषे नानासम्बन्धानुविधायिनि अभिन्नेपि पिता पुत्रो भ्रातेत्यादिप्रत्ययाः भवन्ति तथैकः कालः कारणविशेषापेक्षः पूर्वापरादिप्रत्ययहेतुर्भवति ।

**वृन्तादित्यादि भाष्यम्** । वृन्तं प्रसवबन्धनं फलोत्पत्तिस्थानन्तस्मात् । प्रच्युतस्य पतितुमारब्धस्य प्रशब्देन प्रथमकालमाह च्युतशब्देन गतिकर्म आह च्युङ्गताविति धातुः गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्चेति सूत्रेण कर्तरि क्तः । भूमौ भूमिं प्रत्यासीदतः प्रत्यासत्तिं कुर्वतः ऊर्ध्वं स्वापेक्षयोपरि स पतितोऽतीतः अध्वा-मार्गः । तत्संयुक्तः तत्सम्बन्धः । अधस्तात् स्वापेक्षया तलमित्यर्थः ।

(टि०) १ रोधोपघातसादृश्येत्याद्युक्तदूषणवदित्यर्थः ।
२ कालस्याध्वव्यंग्यत्वमभिप्रेत्येयमाशंका ।

(भा०)पतितव्योऽध्वा। तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति वर्त्तमानः कालो गृह्येत। तस्माद्वर्तमानः कालो न विद्यत इति" ॥ ४० ॥

(सू०)तयोरप्यभावो वर्तमानाभावे, तदपेक्षत्वात् ॥४१॥

( भा० ) नाध्वव्यङ्ग्यः कालः, किं तर्हि, क्रियाव्यङ्ग्यः—पततीति। यदा पतनक्रिया व्युपरता भवति स कालः पतितकालः। यदोत्पत्स्यते स पतितव्यकालः। यदा द्रव्ये व-

( ख० ) तयोरिति। अतीतानागतयोरिति यावत्। तदपेक्षत्वादिति वर्तमानापेक्षत्वादित्यर्थः।

यदा खल्वयम्पुरुषः फलम्प्रवर्तमानपतनीक्रियाविशिष्टं प्रतिपद्यते तदा व्यपदिशति 'पतति'फलमिति। तन्मूले चास्यातीतानागते—'अपतत्फलम्'—'पतिष्यतीति'। नच प्रवर्तमानम्पतनमसिद्धम्—येन कालं न व्यञ्ज्यात्। प्रत्यक्षसिद्धं हि तत् पतनम्। प्रवर्तमानपतनक्रियाया अभावे कस्य कारणं गुरुत्वं, कस्य च फलम्भूमिसंयोगः।

एवं चातीतानागतयोर्वर्तमानापेक्षत्वात् वर्तमानस्य च तद्रूपेक्षत्वादस्ति त्रैकाल्यमिति सिद्धान्तः।

(भा०चं०)पतितव्यः भाविप्राप्तिकर्मा ॥ ४० ॥

तयोरित्यादि सिद्धान्तसूत्रम्। तयोर्भूतभविष्यतोः अभावोऽनुपपत्तिः वर्तमानाभाव इति भावसप्तमी तदपेक्षत्वाद्वर्तमाननिरूपणाधीननिरूपणकत्वान्नाध्वव्यंग्य इत्यादि भाष्यम्। (१)कालो नाम महाकालः क्रियोपाधिकः सन् वर्तमानादिसंज्ञां प्राप्तः स च क्रिययैव व्यंग्यः क्रिया च धात्वर्थमात्रं न तु स्पन्द एव तत्र स्पन्दमादाय पततीत्यादिव्यवहारः। पतितकालः पतितश्चासौ कालश्चेति कर्मधारयः।

( टि०) १ क्रियाव्यंग्यो अर्थव्यंग्यश्च काल इत्याभिप्रायेणोत्तरयति।

(भा०)र्तमाना क्रिया गृह्यते स वर्तमानः कालः । यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते । पतितः काल इति भूता क्रिया । पतितव्यः काल इति चोत्पत्स्यमाना क्रिया । उभयोः कालयोः क्रियाहीनं द्रव्यम् । अधः पततीति क्रियासम्बद्धम् । सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णातीति वर्तमानः कालः । तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥ ४१ ॥

( भा० ) अथापि—

---

( भा०चं० ) यद्यप्यतीतत्वं वर्तमानध्वंसकत्वं तच्च न नित्ये सम्भवति तथापि श्रवणं नष्टमिति व्यवहारवत् भाक्तोयं व्यवहारः । **उत्पत्स्यत इति** भविष्यति लट् । कर्तृपदमत्र पतनक्रियेत्यनुषञ्जनीयम् द्रव्ये सिद्धपदार्थे क्रिया धात्वर्थः । वर्तमानानङ्गीकारे दोषं दर्शयति **यदिचेत्यादिना** । द्रव्ये द्रव्यादौ पतनं पतनादिवर्तमानं न गृह्णाति न पश्यति तर्हि कस्योपरमं नाशं उत्पत्स्यमानतां प्रागभावं प्रतिपद्यते जानाति । परमार्थतः काले वर्तमानत्वादिकं नास्तीत्याह **पतित इति** वर्तमानस्याप्युपलक्षणं वर्तमानत्वं हि उत्पद्यस्थितिमत्त्वं नहि काले तदस्तीति भावः । भूता नष्टा । उत्पत्स्यमाना वर्तमानप्रागभावाः । क्रियाहीनं क्रियाभावाधिकरणं प्राप्तपरित्यागवाचिनो जहातेरत्र प्रागभाववाचित्वं भक्त्या । क्रियासम्बद्धं वर्तमानाक्रियाकम् । सोयं प्रमाता सम्बन्धं समवायादिरूपं भावम् । उत्पन्नो घट इत्यादौ हि उत्पत्तिघटयोर्विशेषणविशेष्यभावं गृह्णाति तदाश्रयौ तदधीननिरूपणकौ इतरौ भूतभविष्यन्तौ तदभावे वर्तमानाभावे न स्यातां न प्रमीयेयाताम् ॥ ४१ ॥

नन्वतीतानागतयोः परस्परनिरूपणाधीननिरूपणकत्वमस्तु अलं तन्निरूपणार्थवर्तमानस्वीकारेणेत्यत आह **अथापीति** । तदभिप्रायेपीत्य-

(सू०) नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥४२॥

(भा०)यद्यतीतानागतावितरेतरापेक्षौ सिद्ध्येतां प्रतिपद्येमहि वर्तमानविलोपम् । नातीतापेक्षाऽनागतसिद्धिः नाप्यनागतापेक्षाऽतीतसिद्धिः ।

कया युक्त्या ?

केन कल्पेनातीतः कथमतीतापेक्षाऽनागतसिद्धिः, केन च कल्पेनानागत इति नैतच्छक्यं निर्वक्तुम् । अव्याकरणीयमेतद्वर्तमानलोप इति ।

---

(ख०)नातीतेत्यादिसूत्रम् । परस्परापेक्षसिद्धेर्हि वर्तमानाभावः । सैव तु नास्तीति सूत्रार्थः ।

कया युक्त्येति प्रश्नः । केन कल्पेनेति तस्योत्तरम् । कल्पेनेति प्रकारेणेत्यर्थः । अनेन वर्तमानाभावेऽतीतरूपाक्षेपः कृतः ।

---

(भा०चं०)र्थः। **नातीतेत्यादि सूत्रम्** । अतीतानागतयोर्भूतभविष्यतोः आगतशब्दोऽयं वर्तमानातीतवाचकः उभयकाले क्तविधानात् तद्भिन्नो अनागतो भावी इतरेतरापेक्षा परस्परनिरूपणापेक्षा सिद्धिर्निरूपणम् ।

**यद्यीत्यादिभाष्यम्** । सिध्येतां निरूप्येतां प्रतिपद्येमहि अङ्गीकुर्महि वर्तमानविलोपं वर्तमानापहारं वर्तमानस्य प्रमाणासम्बन्धामित्यर्थः ।

कया युक्त्या केन तर्केण कल्पेन समर्थकेन प्रमाणेनेत्यर्थः । अथ वा युक्त्या प्रमाणेन कल्पेन प्रकारेणेत्यर्थः । अथवा युक्त्या विवक्षया कल्पेन विवक्षितेन किंशब्दाविमावाक्षेपार्थौ न कयापि युक्त्या न केनापि कल्पेन वर्तमाने सत्यतीतः सिध्यति वदतो व्याघातादिति भावः । कथमित्याक्षेपे न केनापि प्रकारेण अनागतसिद्धिरतीतापेक्षा भवितुमर्हतीति भावः । हेतुदृष्टान्ताभावः केन च कल्पेनानागत इति भविष्यद्व-

(भा०)यच्च मन्येत–"ह्रस्वदीर्घयोः स्थलनिम्नयोश्छायातपयोश्च यथेतरेतरापेक्षया सिद्धिरेवमतीतानागतयोरिति"–तन्नोपपद्यते, विशेषहेत्वभावात् । दृष्टान्तवत्प्रतिदृष्टान्तोऽपि प्रसज्यते । यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ सिध्यतः, एवमतीतानागताविति नेतरेतरापेक्षा कस्यचित्सिद्धिरिति । यस्मादेकाभावेऽन्यतराभावादुभयाभावः । यद्येकस्यान्यतरापेक्षा

---

( ख० ) ह्रस्वत्वदीर्घत्वादीनां परस्परापेक्षसिद्धत्वमङ्गीकृत्याऽऽह–तन्नोपपद्यत इति । परमार्थतस्तु ह्रस्वत्वदीर्घत्वादीनामपि न परस्परापेक्षासिद्धिरिति ।

---

(भा०चं०)र्तमानताक एवानागत इत्युच्यते तदभावे नैतच्छक्यं निर्वक्तुमिति भावः । स्फुटमुपहसन्नाह । **अव्याकरणीयमिति** । एतद्वचनं व्याकरणानभिज्ञस्येत्यर्थः । वर्तमाने लट् लटः शतृशानचाविति सूत्रद्वयमपि न जानासीति भावः । यतः पततो वर्तमानाभाव इति वदसि ।

वर्तमानलोप इति लोपपदं सूत्रस्थाभावपदव्याख्यानं नोपपद्यत इत्यत्र हेतुमाह **विशेषेति** । मास्तु विशेषहेतुर्दृष्टान्तेनैव साध्यं सिध्यात्वित्याशंक्य नेत्याह **दृष्टान्तवदिति** । प्रतिदृष्टान्तो मत्साध्यानुकूलदृष्टान्त इत्यर्थः । दृष्टान्तं दर्शयति **यथेति** । किमु वक्तव्यमतीतानागतयोर्नेतरेतरापेक्षासिद्धिरिति न कस्यापि तथाऽन्योन्याश्रयदोषादित्युपसंहरति **नेतरेतरेति** । नन्वन्योन्याश्रयदोषो न व्यवहारलोपकः तथाच ह्रस्वदीर्घादिसिद्धिरतः सिध्येदित्यत आह **यस्मादिति** । एकाभावे वर्तमानाभावे अन्यतरस्यातीतस्य अनागतस्य वा अभावात् लोपात् उभयाभावो अतीतानागतयोरभावः । प्रसज्यत इति शेषः । एकस्यातीतस्यान्यतरापेक्षा अनागतापेक्षासिद्धिः इदानीमन्यतरस्यानागतस्य किमपेक्षासिद्धिः

(भा०)सिद्धिरन्यतरस्येदानीं किमपेक्षा? यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा ? एवमेकस्याभावे अन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते ॥ ४२ ॥

( भा० ) अर्थसद्भावव्यङ्ग्यश्चायं वर्तमानः कालः, विद्यते द्रव्यं विद्यते गुणः विद्यते कर्मेति। यस्य चायं नास्ति, तस्य—

(सू०)वर्त्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥४३॥

---

( ख० ) वक्ष्यमाणसूत्रावतारपरं भाष्यम्—अर्थसद्भावेति । अयमस्यार्थः । न केवलम्पतनादिक्रियाव्यङ्ग्यो वर्तमानः कालः। अपि तु 'अर्थसद्भावः'–अर्थस्य सत्ता, अस्तिक्रिया–तया व्यङ्ग्य इत्यवधेयम्।

वर्तमानेत्यादिसूत्रम् । एतदुक्तं भवति–पतनादयः क्रियाः

---

(भा०चं०) न किञ्चिदपेक्ष्येत्यर्थः । अनागतं हि भाविवर्तमानताकमिति । यद्यन्यतरस्यानागतस्य एकापेक्षाऽतीतापेक्षा सिद्धिः । तदैकस्य किमपेक्षासिद्धिः । न किञ्चिदपेक्ष्येत्यर्थः । त्यक्तवर्तमानताकं ह्यतीतमिति। उपसंहरति **एवमिति** । एकस्य वर्तमानस्य । अन्यतरदतीतमनागतञ्च ॥ ४२ ॥

क्रियावर्तमानताकालस्थितिमुक्त्वा कार्य्यवर्तमानता मास्त्वित्यत आह **अर्थेति** । सद्भावो वर्त्तमानत्वं । सद्–विद्यमानत्वं–वर्तमानमित्येते हि पर्य्यायाः । कालः काल्यमानः कार्य्य इत्यर्थः। पूर्वस्तु कालना काल इति बोध्यम् । कालोऽयं त्रिविधः इत्याह **द्रव्यं गुणः कर्मेति**(१) । द्रव्यं कार्य्यद्रव्यं द्व्यणुकादि ब्रह्माण्डान्तम् । गुणा अवयविरूपादिः कर्म्म पञ्चविधमेव। विद्यते उत्पद्यास्ति।

---

(टि०) १ जन्यमात्रस्य कालोपाधित्वात्कालोपाधीनां च कालत्वादित्यभिप्रायेण द्रव्यगुणकर्मणां कालत्वोक्तिः।

(भा०)प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम्। न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते। न चायं विद्यमानं सत्किञ्चिदनुजानाति। प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं—सर्वं नोपपद्यते। प्रत्य-

---

(ख०) वर्तमानेषु अपयान्ति उपयान्ति च। अस्तिक्रिया तु सर्ववर्तमानव्यापिनी। तदेवमस्ति क्रियाविशिष्टस्य वर्तमानस्याभावे सर्वाग्रहणम्, प्रत्यक्षानुपपत्तेरिति।

अविद्यमानमित्यस्य विवरणम्—असदिति।

अयमिति—पूर्वपक्षी।

प्रत्यक्षनिमित्तमिति। 'प्रत्यक्षनिमित्तं' सन्निकर्षः, अस्मदादिप्रत्यक्षविषयो विद्यमानो घटादिः, प्रत्यक्षम्प्रमाणम् अनाधारम्—एतत् सर्वं नोपपद्यत इत्याशयः।

---

( भा०चं० ) कदाचित्कवर्त्तमानत्वमिदमुक्तम्। शाब्दिकवर्त्तमानत्वं महाकालादेः वर्त्तमानत्वमनङ्गीकर्तुः सर्वव्यवहारलोप आह **यस्य चेति**। चोऽवधारणे **वर्त्तमानेत्यादिसूत्रम्**। स्पष्टम्।

अनुपपत्तिं दर्शयति **प्रत्यक्षमिति**। इन्द्रियञ्चार्थश्च सन्निकर्षश्च(१) इन्द्रियार्थसन्निकर्षाः। तेभ्यो जातमिन्द्रियार्थसन्निकर्षजम्। तेभ्य इति लुप्तपञ्चमी हेत्वर्था हेतुश्चानन्यथासिद्धनियतपूर्वकालवर्त्तमानः। तल्लोपे जातिरेव न सम्भवतीति भावः। एवं सत्यपि दूषणान्तरमाह **नचेति**। अविद्यमानमवर्त्तमानं तद्व्याख्यानम**सदिति**। असच्च द्वेधा भूतं भविष्यच्चेति। तदुभयमपि नेन्द्रियेण संनिकृष्यते न प्राप्यते। प्राप्तिः संयोगादिः। ननु कारणरूपं विद्यमानं नापलप्यते किन्तु वर्त्तमानकाल इत्यत आह **न चायमिति**। अयं वर्त्तमानापह्नोता। किञ्चिदपि वर्त्त-

---

(टि०) १ इन्द्रियञ्चार्थश्च सन्निकर्षश्चेतीयमुक्तिः लौकिकप्रत्यक्षाभिप्रायेण।

(भा०) क्षानुपपत्तौ तत्पूर्वकत्वाद् अनुमानागमयोरनुपपत्तिः। सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति ॥ ४३ ॥

( भा० ) उभयथा च वर्तमानः कालो गृह्यते। क्वचिदर्थसद्भावव्यङ्ग्यः, यथा अस्ति द्रव्यमिति। क्वचित् क्रियासन्तानव्य-

---

( ख० ) कथम्पुनर्वर्तमानाभावे प्रत्याक्षानुपपत्तिः । यस्मादिदं प्रत्यक्षं वर्तमानाधारं कार्यत्वात्—यत् कार्यं तद्वर्तमानाधारं दृष्टम्—यथा क्षीरम्—कार्यं च प्रत्यक्षं तस्माद्वर्तमानाधारमिति । अत एव वर्तमानकालानभ्युपगमेऽनाधारम्प्रत्यक्षम्प्राप्नोति । अनाधारं च कार्यं नास्तीति प्रत्यक्षानुपपत्तिरिति ।

अर्थसद्भावेति—आस्तिक्रियामात्रगम्य इत्यर्थः ।

---

(भा०चं०) मानं नानुजानाति नाङ्गीकरोति। वर्त्तमानाभाव इति सामान्योक्तेः । न हि घटो नास्तीत्यभ्युपगच्छन्नीलघटोऽस्तीत्यभ्युपगच्छतीति भावः । सूत्रस्थप्रत्यक्षानुपपत्तिपदं व्याचष्टे **प्रत्यक्षनिमित्तमित्यादिना**। प्रत्यक्षनिमित्तं करणतद्व्यापारौ । प्रत्यक्षविषयौ भावभवितारौ—प्रत्यक्षकर्म्मप्रत्यक्षौ । ज्ञानं क्रियाकर्त्तुरप्युपलक्षणमिदं क्रियाधारो हि सः तथा च प्रमात्रादिचतुर्वर्गानुपपत्तिरित्यर्थः(१) । तदनुपपत्तौ सर्वानुपपत्तिमाह **तत्पूर्वकत्वादिति**। अनुमानागमयोरित्यनेनोपलक्षितमुपमानमपि। सर्वग्रहणं चतुर्विधप्रमेयग्रहणं न भवति(२) न जायते। इतिशब्दोऽनुपपत्तिप्रदर्शनव्यापारसमाप्त्यर्थः ॥ ४३ ॥

अथ वर्तमाने उपपत्तिसमुच्चयं दर्शयति **उभयथा चेति**। कालः क्रियाकारकरूपः । गृह्यते ज्ञायते। क्वचित् कदाचिदित्यर्थः । क्वचि-

---

( टि०) १ प्रमाणप्रमेयप्रमितिप्रमातृरूपचतुर्वर्गानुपपत्तिरित्यर्थः ।
२ प्रत्यक्षादिचतुर्विधप्रमाणस्य प्रमेयं न सिध्यतीति भावः।

(भा०)ङ्ग्यः, यथा पचति छिनत्तीति । नानाविधा चैकार्था क्रिया-क्रियासन्तानः, क्रियाभ्यासश्च । नानाविधा चैकार्था क्रिया-पचतीति—स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोऽपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणमधोवतारणमिति । छिनत्तीति क्रियाभ्यासः—उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते ।

---

( ख० )यथा पचतीत्यादि । पचतीत्यत्र नानाविधा एका क्रिया । अतोऽत्र नानाक्रियासन्तानगम्यो वर्तमानःकालः। एता नानाक्रिया उद्दिष्टा अधस्तात् स्थाल्यधिश्रयणमित्यादि । छिनत्तीत्यत्र तु एकस्या एव छेदनक्रियाया अभ्यास एव क्रियासन्तानो येन गम्यः कालः । एवंरूपमेव भेदं समुद्दिश्य दृष्टान्तद्वयमुपन्यस्तम् ।

---

( भा०चं० ) द्विषयवृन्द इति वा । अर्थ इन्द्रियार्थः तस्य सद्भावो वर्त्तमानत्वं तेन व्यङ्ग्यः अनुमेयो महाकालः । उपाधिकालस्य प्रत्यक्षस्यापि विषयत्वात् । उदाहरति **यथाऽस्ति द्रव्यमिति** । वर्त्तमानसत्ताकर्तृ द्रव्यमिति । क्रियासन्तानः धात्वर्थसमूहः तद्व्यङ्ग्यः । उदाहरणं **यथेति** । पचति छिनत्तीति सन्तानद्वैविध्याभिप्रायेन । तद्वैविध्यं दर्शयति । **नानाविधाचेत्यनेन** चकारेणैकविधा चेत्यर्थः । एकार्था एकफलिका एकैकफलिकेत्यर्थः । क्रियाभ्यासः क्रियासमूहविशेषः । एकविधक्रियासमूहः इत्यर्थः । तौ समूहौ पृथक् पृथक् प्रदर्शयति **नानेति** । पचतीत्येकपदोपात्तं विजातीयक्रियासन्तानं दर्शयति **स्थाल्येत्यादिनाऽधोवतारणमित्यन्तेन** । छिनत्तीत्येकपदोपात्तं सजातयिसन्तानं दर्शयति **उद्यम्येत्यादिना** । पचतिछिनत्तीत्याभ्यां कर्तृनिष्ठौ व्यापारसमूहौ दर्शितौ ।

इदानीं कर्मनिष्ठौ फलव्यापारावाह **पच्यमानं छिद्यमान-**

( भा० ) यच्चेदं पच्यमानं छिद्यमानं च तत्क्रियमाणम् । तस्मिन् क्रियमाणे—

(सू०) कृतताकर्त्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥४४॥

( भा० )क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतः कालः—

---

( ख० ) तदेवं वर्तमानक्रियासद्भावमुक्त्वा तत्सम्बन्धव्यङ्ग्यां कारकस्य वर्तमानतामाह यच्चेदमिति । 'तत्' क्रियमाणं वर्तमानक्रियासम्बन्धेन 'वर्तमानं', नतु स्वरूपत इत्याशयः ।

तस्य च कारकस्य वर्तमानक्रियासम्बन्धमतीनानागतानपेक्षामपेक्ष्यातीतानागतत्वे क्रियायाः कारकस्यापि व्यक्तिः तद्भावव्यक्तिः । तद्धेतुकं च द्वैविध्यमिति प्रतिपादनपरं सूत्रमवतारयति तस्मिन् क्रियमाण इति ।

---

(भा०चं०) मिति । क्रियमाणं वर्त्तमानक्रियाकर्म । अत्र व्यापारस्यैव वर्तमानत्वमवगम्यते साधनत्वात् । तस्मिन् क्रियमाणे वर्तमानाक्रियाकर्मणि । क्रिया च द्वेधा फलव्यापाररूपा धातुवाच्यैका । आख्यातवाच्याऽपरा तत्र लट्वाच्यस्य वर्तमानस्य फलं विहायोभयत्रान्वयो बोध्यः । चशब्दः समुच्चयार्थः । तृतीयायाः केवलायाः ।

कृततेत्यादि सूत्रम् । भूते क्तः । भविष्यति तव्यः । कृतता कृतस्य भावः, कृतस्य भूतव्यापारस्य । कर्तव्यता कर्तव्यभावः भविष्यद्व्यापार एव । तथाच भूतभविष्यन्तौ व्यापाराविमौ ज्ञेयौ । यद्यपि वर्तमानभविष्यत्फले तयोर्भावौ वक्तुं शक्यौ तथाप्यविवक्षातस्ते न बुध्येते । कृतताकर्तव्यतयोरुपपत्तिः कार्यकारणभावः सम्बन्धः । तस्या हेतोः । उभयथा ताभ्यां प्रकाराभ्यां ग्रहणं ज्ञानं शाब्दबोधः भवतीति सूत्रशेषः ।

उपपादकमाह भाष्यकारः क्रियासन्तान इत्यादिना ।

(भा०) पक्ष्यतीति । प्रयोजनावसानः क्रियासन्तानोपरमः अतीतः कालः—अपाक्षीदिति । आरब्धक्रियासन्तानो वर्तमानः कालः-पचतीति । तत्र या उपरता सा कृतता । या चिकीर्षिता सा कर्त्तव्यता । या विद्यमाना सा क्रियमाणता । तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः पचति पच्यत इति वर्त्तमानग्रहणेन गृह्यते, क्रियासन्तानस्य ह्यत्राविच्छेदो विधीयते, नारम्भो नोपरम इति ।

---

( भा०चं० )वर्तमानबोधार्थं भाविभूतयोरुदाहरणमाह **अनारब्ध इत्यादिना** । आरब्धः प्रथमकृतिकर्मी कृतः भूतप्रथमकृतिक इत्यर्थः, तद्भिन्नोऽनारब्धः चिकीर्षितः कर्तुमिष्टः । उक्तद्विशेषणविशिष्टः कालोऽनागत इत्युच्यते । कालशब्दोयं क्रियामहाकालयोर्वर्तते, आत्मानात्मनोर्मनुष्यादिशब्दवत् । तत्र महाकाले भाव्यादिशब्दो भाक्तः इतिपदसमभिव्याहृतपदपरस्तृतीयान्तः । तत्रोच्यत इति शेषः । प्रयोजनावसानः । प्रयोजने फले विक्लित्याख्ये सति अवसानं निवृत्तिर्यस्य स तथा । उपरमतीत्युपरमः क्रियासन्तानश्चासावुपरमश्चेति, आरब्धश्चासौ क्रियासन्तानश्चेति कर्मधारयौ । सन्तानपदमिह सन्ततपरं कृदभिहितत्वात् । सन्ततत्वञ्च एककार्यार्थानेकसम्बन्धः । आरब्धमित्यनेन प्रथमकृतावतीतत्वमवगम्यते । तदनुषङ्गिण्यामन्त्यकृतौ भावित्वमवगम्यते । मध्यायास्तु वर्तमानशब्देनैवोक्तिः । एवं त्रिविधः क्रियारूपः कालः पचतीत्यनेनोच्यते वर्त्तमानप्रयोगे तां त्रिविधां दर्शयति **तत्रेत्यादिना** । उपसंहरति **तदेवमिति** । क्रियासन्तानस्तु वर्त्तमानप्रयोगोपक्रियासन्तानसम्बन्धः । त्रैकाल्यसमाहारस्त्रय एव काल्यं तस्य समाहारो मेलः संप्लव इति यावत् । वर्त्तमानग्रहणेन वर्त्तमानप्रयोगेण । तत्र हेतुमाह **क्रियासन्तानस्य हीति** । अविच्छेदोऽनिवृत्तिः । यावत्यः फलनिर्वाहिकास्तासां कासाञ्चित्प्रवृत्तिरित्यर्थः ।

(भा०)सोऽयमुभयथा वर्त्तमानो गृह्यते-अपवृक्तो व्यपवृक्तश्चातीतानागताभ्याम् । स्थितिव्यङ्ग्यः—विद्यते द्रव्यमिति । क्रियासन्तानाविच्छेदाभिधायी च त्रैकाल्यान्वितः—पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदाभिधायी बहुप्रकारो लोकेषु उत्प्रेक्षितव्यः । तस्मादस्ति वर्त्तमानः काल इति ॥ ४४ ॥

( ख० ) त्रैकाल्यान्वित इति । 'पचति' 'छिनत्ति' इत्यत्र सम्पृक्तः, काश्चिदत्र क्रियाः व्यतीताः काश्चिदनागताः, एका च वर्तमाना । एवमेव त्रैकाल्यान्वितत्वम् ।

(भा०चं०) विधीयते ज्ञाप्यते । उपरमः सर्वनिवृत्तिः । इतिपदं कृतताकर्तव्यतापदव्याख्याननिवृत्त्यर्थम् । इदानीन्तुशब्दप्रतिपाद्यं वक्तुमाह **सोऽयमिति** । तुशब्दश्चपर्य्यायः । स च समुच्चयार्थः । अतीतानागताभ्यामपवृक्तो रहितः । व्यपवृक्तः सहितः । तत्रापवृक्तः स्थितिव्यङ्ग्यः सत्ताक्रियोपलक्षितः । तस्योदाहरणं **विद्यत** इत्यादि। व्यपवृक्तमाह **क्रियासन्तानेति** । चशब्दस्त्वर्थे । अपवृक्तः व्यावर्त्तकः । तुशब्दसूचितार्थमाह **अन्यश्चेति** । प्रत्यासत्तिः सान्निध्यं । प्रभृतिशब्दो वीप्साद्यर्थकः बहुप्रकार इत्यस्य प्रयोग इति शेषः । तथाहि सन्निहितभाविगमने एषः गच्छामीति सन्निहितगमने एष आगच्छामीत्येवमादिक ऊह्यः । सिद्धान्तमुपसंहरति तस्मादिति । इतिशब्दः प्रकरणसमाप्त्यर्थः । तदिदं—

क्रियाकारकचक्रं तु विदन्तो दुर्लभा भुवि ।
पाणिनीयाक्षपादीयशास्त्रतत्त्वविदो विदु ॥
आख्यातार्थाः षट् तु मुख्या भावनाभाव्यभावकाः ।
भवत्भूतभविष्यन्तश्चेति सन्तः प्रचक्षते ॥

(८)उपमानपरीक्षाप्रकरणम् ।

(सू०)"अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः"॥४५॥

( भा० )"अत्यन्तसाधर्म्यादुपमानं न सिध्यति । न चैवं भवति यथा गौरेवं गौरिति । प्रायसाधर्म्यादुपमानं न सिध्यति । न हि भवति यथाऽनड्वानेवं महिष इति । एकदेशसाधर्म्यादुप-

---

( ख० )अत्यन्तेत्यादिपूर्वपक्षसूत्रम् । यथा गौरेवं गवय इत्यतिदेशवाक्यार्थस्मृतिसहकारि सारूप्यदर्शनं साध्यस्य–गवयोऽयमिति संज्ञा-संज्ञिसम्बन्धस्य–साधनमुपमानम् । तच्चेदन्नोपपद्यते विकल्पानुपपत्तेः । किं यथा गौरेवं गवय इत्यत्यन्तसाधर्म्यं विवक्षितम् प्रायिकं साधर्म्यं वा । उभयथाऽपि नोपपद्यत इति पूर्वपक्षाशयः ।

नचैवमिति । गोगवययोरत्यन्तसादृश्ये सति–यावदुक्तं भवति 'यथा गौस्तथा गवय' इति तावदुक्तं भवति 'यथा गौस्तथा गौरिति' । न चैतद्वाक्यमभीप्सितसंज्ञासंज्ञिसम्बन्धम्बोधयितुं शक्नोति ।

नहि भवतीति । प्रायिके सादृश्ये विवक्षिते सति अनडुन्महिषयोरपि तादृशे सादृश्ये वर्तमाने 'यथाऽनड्वांस्तथा महिष' इत्यपि स्यात् । महिषस्यापि च गवा प्रायिकसादृश्यदर्शनात् तस्यापि गवयाभिधानप्रसङ्गः स्यात् ।

---

(भा०चं०)आख्यातार्थैः सहाख्यातमख्यातमिव दुश्चिताम् ।
सदाख्यातं कालकालं सदा वयमुपास्महे ॥ ४४ ॥

इति श्रीभाष्यचन्द्रे काललक्षणभाष्यचन्द्रिका ।

अथोपमानलक्षणपरीक्षा अत्यन्तेत्यादिसूत्रम् । तत्र अत्यन्तसाधर्म्यादित्यादि भाष्यम् । अत्यन्तसाधर्म्यात् एकान्तसादृश्यात् उपमानमुपमितिः प्रमाणं वा न सिध्यति न सम्भवति । हेतुतया उदाहरति नचैवमित्यादिना । एव मीदृशः । प्रायो बाहुल्यम्

(भा०)मानं न सिध्यति। न हि सर्वेण सर्वमुपमीयत इति" ॥४५॥

(सू०) प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥ ४६ ॥

( भा० ) न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं

---

( ख० ) नहि सर्वेणेति । सर्वेषामपि वस्तूनां यत्किञ्चित्साधर्म्यं भवत्येवेत्याशयः ।

प्रसिद्धसाधर्म्यादिति पूर्वपक्षपरिहारसूत्रम् । प्रकरणाद्यपेक्षं हि वाक्यं स्वार्थम्प्रतिपादयति, न केवलम् । तद्वशाच्च क्वचिदत्यन्तसादृश्यं प्रतीयते, क्वचित्प्रायिकसाधर्म्यम्, क्वचिदेकदेशसाधर्म्यम् । तदिह प्रतीतमहिषादिकं पुरुषं प्रति यदा 'यथा गौरेवं गवय' इति वाक्यमुच्चार्यते तदा महिषादिपरिहाराय भूयस्साधर्म्यं विवक्षितम्—इति तद्वाक्यार्थं स्मरन् महिषादिषु गोसादृश्यं पश्यन्नपि न गवयसंज्ञां निवेशयति अपि तु भूयस्सादृश्यवति गवय एव तां निवेशयतीत्याशयः ।

नसाधर्म्यस्येति भाष्यं नियमं निषेधति । न साधर्म्यस्य कृत्स्नभावमेव वाऽल्पभावमेव वाऽऽश्रित्यातिदेशवाक्यम्प्रवर्तत इत्याशयः । उपमानमिति । अतिदेशवाक्यमित्यर्थः ।

---

(भा०चं०)प्रायेण साधर्म्यम् प्रायसाधर्म्यम् तस्मात् बहुसादृश्यादित्यर्थः। एकदेशसाधर्म्यात् किञ्चित्सादृश्यात्। न हि सर्वेण सर्वमुपमीयत इति। यथा घटेन परमेश्वरः परमेश्वरेण वा घटो नोपमीयेत इत्यर्थः ॥ ४५॥

**प्रसिद्धेत्यादि सूत्रम्** । **तत्र न साधर्म्येत्यादि** भाष्यम्(१)। साधर्म्यस्य समानधर्मवत्त्वस्य। उपमानं फलं करणं वा प्रवर्तते

---

( टि० ) १ प्रसिद्धसाधर्म्यादितिसूत्रभाष्ये न साध्यस्येति पाठो बहुषु पुस्तकेषु दृश्यते अत्र तु न साधर्म्यस्येतिपाठमनुरुध्य तथैव प्रतीकं धृतं सूत्रानुरोधेनायम्पाठः सम्यक्प्रतिभाति ।

(भा०) प्रवर्त्तते, किं तर्हि, प्रसिद्धसाधर्म्यात्साध्यसाधनभावमाश्रित्य प्रवर्त्तते । यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यम् । तस्माद्यथोक्तदोषो नोपपद्यत इति ॥ ४६ ॥

( भा० ) "अस्तु तर्ह्युपमानमनुमानम्—

(सू०) "प्रत्यक्षेणाप्रत्यक्षसिद्धेः" ॥ ४७ ॥

(भा०) "यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम्, एवं गवा प्रत्यक्षेणाऽप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते" ॥ ४७ ॥

---

( ख० ) साध्यसाधनेति । 'साध्यः' संज्ञासंज्ञिसम्बन्धः । एतदुक्तम्भवति । अतिदेशवाक्यप्रसिद्धसाधर्म्यं यतः संज्ञासंज्ञिसम्बन्धस्य साधनं भविष्यति—ततः न् नियमः, किन्तु क्वचित् किञ्चित् साधर्म्यमाश्रित्यातिदेशवाक्यं प्रवर्त्तते । तच्च प्रकरणादुन्नेयमिति ।

उपमानमनुमानेऽन्तर्भावयन्नाह पूर्वपक्षी—प्रत्यक्षेणेतिसूत्रम् । यथा गौरेवं गवय इति वाक्यं 'प्रत्यक्षेण' गवा गवयमप्रत्यक्षं प्रतिपादयति । श्रुतवाक्योऽपि यदा प्रत्यक्षेण गवयं पश्यति तदा वाक्यार्थाधिगमादधिकं न किञ्चित् प्रतिपद्यते । संज्ञासंज्ञिसम्बन्धोऽप्यस्माद्वाक्यादेवावगतः।तस्मात् 'प्रत्यक्षेण'गवा 'अप्रत्यक्षस्य' गवयस्य गवयसंज्ञाविशिष्टस्य प्रतीतेरुपमानस्यानुमानतेति पूर्वपक्षिणो हृदयम् ।

---

( भा०चं० ) उत्पद्यते व्याप्रियते वेत्यर्थः । साध्यसाधनभावमुत्पाद्योत्पादकभावं ज्ञाप्यज्ञापकभावं वा । यत्र तु गोगवयादौ । अस्ति प्रमीयते ॥ ४६ ॥

उपमानस्य लोपशङ्कां वारयितुमाह **अस्तु तर्हीति । प्रत्यक्षेणेत्यादि सूत्रम् । तत्र यथेत्यादि भाष्यम् ।** आतिदेशिक-

( भा० ) विशिष्यत इत्याह । कया युक्त्या ?—

(सू०) नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति ॥ ४८ ॥

( भा० ) यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवा समानमर्थं पश्यति तदाऽयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते, न चेदमनुमानमिति ।

---

( ख० )नाप्रत्यक्ष इत्यादि सिद्धान्तसूत्रम् ।

नचेदामिति । गवयत्वं हि 'संज्ञि' । न च तत् 'यथा गौस्तथा गवय' इति वाक्यात्प्रतीयते, अपि तु कस्यचिज्जन्तोः गवा सादृश्य-

---

(भा० चं०) वाक्यार्थलिङ्गादेवोपमितिसम्भव इति शङ्कितुराशयः(१) । तदुक्तं—नेदमनुमानाद्विशिष्यत इति ॥ ४७ ॥

समाधानं प्रतिजानीते भाष्यकृत् अनुमानादुपमानं विशिष्यत इत्याह सूत्रकृदिति शेषः । हेतुं पृच्छति कयेति । उत्तरं नाप्रत्यक्ष इत्यादिसूत्रम् । इतीतिभाष्यपदम् आहेति भाष्यपदान्वितम् । तच्च तृतीयान्तम् । बहुवचनं शिष्याभिप्रायम् । दर्शनमुपपादयति भाष्यकृत् यदा हीति । अयमुपमाता । उपयुक्तोपमानः श्रुतोपमानवाक्यः । गोदर्शी दृष्टगुः । गवा संस्कृतेन गवा । समानं सदृशम् । अर्थमनवधारितसंज्ञकं विषयं पश्यति चक्षुषा गृह्णाति । तदायमुद्बुद्धसंस्कारः । व्यवस्थां नियतशक्तिम् । इदमिति क्रियाविशेषणम् । अनुमानमनुमितिः ।

---

( टि० ) १ करणस्य क्रियाभेदभिन्नमूर्तिकतया अनुमितिक्रियातो उपमितिक्रियाया वैलक्षण्याद्दर्शनादुपमानस्य न प्रमाणान्तरत्वमिति भावः । प्रयोगश्च गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादिति ।

(भा०) परार्थं चोपमानं यस्य ह्युपमेयमप्रसिद्धं तदर्थं प्रसिद्धोभयेन क्रियत इति ।

"परार्थमुपमानमिति चेद्," न, स्वयमध्यवसायात् ।

"भवति च भोः स्वयमध्यवसायः—यथा गौरेवं गवय इति"।

नाध्यवसायः प्रतिषिध्यते । उपमानं तु तन्न भवति । प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् । न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यत इति ॥ ४८ ॥

---

(ख० )मेव तस्माद्वाक्यात्प्रतीयते । न च वाक्यगतो गवयशब्दस्तस्य सादृश्यस्य वाचकः, तथा तदानीमगृहीतसङ्गतित्वात् । न च सादृश्यं 'संज्ञि' । तस्मात् प्रत्यक्षे एव गवये गवयत्वस्य जातेः प्रत्यक्षत्वात् संज्ञासंज्ञिसम्बन्धपरिच्छेदः । स एव चोपमानस्य प्रमाणस्यार्थ इति परः प्रत्यवतिष्ठते परार्थमुपमानमिति चेदिति । एवमत्र सम्बन्धः । परार्थमनुमानमिति चेन्मन्यसे सिद्धान्तवादिन्, तन्नास्ति,—कुतः ? स्वयमप्यध्यवसायात् । 'यथा गौरेवं गवय' इति वाक्यमेव परार्थं स्याद्यदि परस्यैवाध्यवसायं जनयेत् । तावतोच्चारयितुरप्यध्यवसायं जनयति । तस्मात् स्वार्थमपीति नानुमानादतोऽय भेद इत्याक्षेपस्याशयः ।

आक्षेपं परिहरति नाध्यवसाय इति । उक्तोऽध्यवसायोऽतिदेशवाक्योच्चारयितारम्प्रति उपमानन्न भवतीत्येतावन्मात्रं सिद्धान्तिन आशय इत्यर्थः ।

---

(भा०चं०)परार्थत्वेनानुमानशङ्कामनुवदति(१) अध्यवसायो न प्रतिषिध्यत इत्यर्थः । वाक्यार्थश्रवणं हि तन्न तूपमितिरित्याह **उपमानं त्विति** । किन्तर्ह्युपमानमित्यतः सूत्रं स्मारयति **प्रसिद्धेत्यादि** । प्रसिद्धोपमानस्य प्रसिद्धोपमेयस्य उपमितिर्भवतीत्याह **नचेति** । स्पष्टम् ॥ ४८ ॥

---

(टि०) १ स्वयं निश्चित्य केवलम्परप्रतिपत्त्यर्थं वाक्यप्रयोगो भवति चैवं परार्थत्वमत्र न तथेति पूर्वपक्ष्याशयः ।

( भा० ) अथापि--

(सू०) तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४९ ॥

( भा० ) तथेति समानधर्मोपसंहारादुपमानं सिध्यति, नानुमानम् । अयं चानयोर्विशेष इति ॥ ४९ ॥

( ९ ) शब्दपरीक्षाप्रकरणम् ।

(सू०)"शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्"॥५०॥

---

( ख० ) तथेत्यादि सूत्रम् । नानुमानमेवं भवति-'यथा धूमस्तथाऽग्निरिति' । अस्ति तूपमानं 'यथा गौस्तथा गवय' इति ।

शब्दोऽनुमानमिति पूर्वपक्षसूत्रम् । प्रत्यक्षेणानुपलभ्यमानार्थत्वादिति तदर्थः । यज्ज्ञानम्प्रत्यक्षेणानुपलभ्यमानविषयं प्रत्यक्षस्य पश्चादुपजायते तत् 'अनुमानम्' । यथाऽग्निमद्धूमज्ञानम् । तथाच शब्दज्ञानम्-तस्मादनुमानमित्याशयः ।

---

(भा०चं०)उपमानस्यानुमानाङ्गत्वादपि नाप्रमाणत्वमित्याह **अथापीति** । **तथेत्यादि** सूत्रम् । तत्र **तथेत्यादि** भाष्यम् । समानधर्म्मे उपमानधर्म्मः तस्योपसंहारात् दृष्टान्तो ह्युपमानं तेन हि पक्ष उपमीयत इति भावः । तथाच कार्यकारणयोर्नैक्यमिति भावः । **अयञ्चेति** । चकारः पूर्वोक्तसमुच्चयार्थः । अप्रत्यक्षविषयमनुमानं प्रत्यक्षविषयमुपामानमिति सः(१) । इतिशब्दः प्रकरणसमाप्त्यर्थः ॥ ४९ ॥

इतिश्रीभाष्यचन्द्रे उपमानलक्षणपरीक्षाभाष्यचन्द्रिका ।

अथ शब्दसामान्यलक्षणपरीक्षा । **शब्द इत्यादि सूत्रम्** । सूत्रभाष्ययोः शब्दादिपदं (२)भावपरम् । शब्दार्थस्यानुमेयत्वात्-स्वक-

---

( टि० ) १ स इति विशेष इत्यर्थः ।

२ भावपरमिति अनुमानत्वापेक्षया शब्दत्वं न काचिद्विलक्षणा जातिरित्यर्थः

( भा० ) "शब्दोऽनुमानं न प्रमाणान्तरम्। कस्मात्? शब्दार्थस्यानुमेयत्वात्। कथमनुमेयत्वम्? प्रत्यक्षतोऽनुपलब्धेः। यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इति अनुमानम्, एवं मितेन शब्देन पश्चान्मीयतेऽर्थोऽनुपलभ्यमान इत्यनुमानं शब्दः" ॥ ५० ॥

( भा० ) "इतश्चानुमानं शब्दः—

( सू० ) "उपलब्धेरद्विप्रवृत्तित्वात्" ॥ ५१ ॥

( भा० ) "प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः। अन्यथा

---

( ख० ) पूर्वपक्षे हेत्वन्तरम्—उपलब्धेरिति सूत्रम्।
द्विप्रवृत्तिरिति–प्रवृत्तिप्रकारभेद इत्यर्थः।

---

(भा०चं०)रणार्थस्यानुमेयत्वात् हेतुप्रयोजकोयं हेतुः। तथाच शब्दस्यानुमानयोग्यविषयकत्वादित्यर्थः। उपलब्धिपदं प्रत्यक्षपरमित्याह **प्रत्यक्षत इति**। तसिल् तृतीयार्थे पञ्चम्यर्थे वा। तदर्थश्च अभेदो हेतुर्वा। विशदयति **यथेति**। अनुपलभ्यमानः प्रत्यक्षत इत्यनुषज्यते। लिङ्गी लिङ्गसाध्यः। मितेन प्रत्यक्षेण लिङ्गेन हेतुना। पश्चान्मितिः पश्चिमकाले अनुमानमनुमितिः। मितेन प्रत्यक्षितेन शब्देन करणेन अनुपलभ्यमानः अप्रत्यक्ष्यमाण इति हेतोः। अनुमानमनुमितिः शब्द इत्यनुषङ्गः॥ ५०॥

हेत्वन्तरं वक्तुमाह **इतश्चेति**। **उपलब्धेरित्यादि** सूत्रम्। न स्तो द्वे प्रवृत्ती विशेषौ यस्यां सा तथा तस्या भावस्तस्मात् भिद्यमानयोः परस्परविशेषकाभावादित्यर्थः।

अत्र **प्रमाणेत्यादि** भाष्यम्। प्रमाणान्तरभावे प्रमित्योरन्योन्यभेदे। द्विःप्रवृत्तिर्द्विप्रकारा उपलब्धिः स्यादिति शेषः।

(भा०) ह्युपलब्धिरनुमाने अन्यथोपमाने–तद्व्याख्यातम् । शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिः । यथानुमाने प्रवर्तते तथा शब्देऽपि । विशेषाभावादनुमानं शब्द इति" ॥ ५१ ॥

(सू०) "सम्बन्धाच्च" ॥ ५२ ॥

---

(ख० )पूर्वपक्षे तृतीयो हेतुः सम्बन्धाच्चेति सूत्रम् ।

अत्रहि सूत्रकारेण प्रथमं शब्दस्यानुमानान्तर्गतिरेव परीक्षिता । न चापरीक्षितप्रमाणभावस्य सा युक्तेति वार्तिककारोऽस्यादौ प्रमाणभावमेव परीक्षाञ्चक्रे । तत्रायम्पूर्वपक्षसङ्क्षेपः—

यस्मिन् सति प्रमा भवत्येव, न च न भवति, तदेव प्रमाणम्-साधकतमस्य करणत्वात् । सत्यपि तु शब्दे प्रमा न भवति यावदसावश्रुतः । एतच्च तस्य साधकतमत्वं विघटयति । अन्यच्च प्रामाण्यं हि विषयवत्तया व्याप्तम् । सा शब्दान्निवर्तमाना प्रामाण्यमपि

---

(भा० चं० )न नान्यथेत्याह **अन्यथेति** । अनुमाने अनुमीयमाने अन्यथोपमाने इति दृष्टान्तार्थम् । तद्व्याख्यातं प्रत्यक्षाप्रत्यक्षविषयत्वादित्यनेन । प्रकृतयोश्च न तथेत्याह **शब्देति** । शब्दानुमानयोः (१)शब्द्यमानानुमीयमानयोः । तुशब्दो दृष्टान्तव्यावृत्त्यर्थः । प्रवर्तते उत्पद्यते तथा शब्देपि शब्द्यमानेपि । उपसंहरति **विशेषाभावादिति** ॥ ५१ ॥

हेत्वन्तरमाह **सम्बन्धाच्चेति** सूत्रम् । तस्यास्य सूत्रस्य व्याप्यव्यापकभावादित्यर्थः । शाब्दस्य व्याप्तिज्ञानजन्यत्वादिति यावत् ।

---

(टि०) १शब्द्यमानानुमीयमानयोरिति । यथा अनुमानेन लिङ्गभूतेन अनुमीयमाने लिङ्गिनि प्रवृत्तिस्तथा शब्देन शब्द्यमाने प्रवृत्तिरित्यभिप्रायः ।

( भा० ) "शब्दोऽनुमानमिति वर्त्तते। सम्बद्धयोश्च शब्दार्थयोः सम्बन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणं, यथा सम्बद्धयोर्लिङ्गलिङ्गिनोः सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिति" ॥५२॥

( भा० ) यत्तावदर्थस्यानुमेयत्वादिति, तन्न—

( सू० ) आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः॥५३॥

---

(ख०)निवर्तयति । द्विविधश्च विषयः । प्रत्यक्षः परोक्षश्च । तत्र पूर्वः प्रत्यक्षस्य प्रमाणस्य विषयः, अप्रत्यक्षश्चाविनाभूताल्लिङ्गादवगन्तव्यः । तदनपेक्षेणासम्बन्धाविशेषात् सर्वं सर्वस्माद्गम्येत । तथाच सर्वः परोक्षार्थः प्रत्ययोऽनुमानव्याप्तः । न च प्रत्यक्षपरोक्षाभ्यामन्यो राशिरस्ति । तस्माद् विषयाभावादपि न शब्दप्रामाण्यमिति । एवञ्च प्रत्यक्षानुमानाभ्याम्भिन्नप्रस्थानः शब्दो न प्रमाणम्, प्रमाणत्वे वा तदन्तर्भूत एव । तत्रापि प्रत्यक्षानुमानयोः कतरस्मिन्नस्यान्तर्भाव-इति जिज्ञासायामनुमान एवान्तर्भाव इति सूत्रत्रयार्थः ।

आप्तोपदेशेत्यादि सिद्धान्तसूत्रम् । अत्राभ्युच्चयमात्रतया भाष्यवार्तिककाराभ्यामाप्तोक्तत्वाश्रयत्वानाश्रयत्वे शब्दानुमानभेदहेतुतयोपन्यस्ते । वस्तुतस्तु यदत्यन्तादृष्टपूर्वं स्वर्गापूर्वदेवतादि तद् वाक्यार्थरूपमेव, नास्मदादिप्रत्यक्षगोचरम् । न चागृहीतं लिङ्गमस्मिन्

---

( भा० चं० ) अत्र शब्द इत्यादिभाष्यम् । शब्दोऽनुमानमिति साध्यानुषङ्गपरम् । शिष्टं स्पष्टम् ॥ ५२ ॥

समाधातुमाह **यत्तावदित्यादिना** । **तन्नेति** । साध्यं सूत्रशेषः । **आप्तोपदेशेत्यादि** सूत्रम् । आप्तोपदेशः आप्तकार्यत्वं तदेव सामर्थ्यं यस्य स तथा तस्माच्छब्दाच्छब्दनकरणात् वाक्यादिति यावत् अर्थेऽप्रत्यक्षे विषये सम्प्रत्ययः प्रमा ।

(भा० ) स्वर्गः अप्सरसः उत्तराः कुरवः सप्तद्वीपसमुद्रो लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात्प्रत्ययः। किं तर्हि, आप्तैरयमुक्तः शब्द इत्यतः सम्प्रत्ययः, विपर्ययेण सम्प्रत्ययाभावात्। न त्वेवमनुमानमिति।

यत्पुनरुपलब्धेरद्विप्रवृत्तित्वादिति—अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः,—तत्र विशेषे सत्यहेतुर्विशेषाभावादिति।

यत्पुनरिदं सम्बन्धाच्चेति—अस्ति च शब्दार्थयोः सम्बन्धो-

---

(ख० )प्रवर्तितुमर्हति। नचागृहीते सम्बन्धिनि सम्बन्धः शक्यग्रहः। वाक्यार्थप्रमां च प्रति पदानामेव पदार्थस्मरणावान्तरव्यापाराणां करणत्वम्। पदान्येव हि पदार्थस्मरणद्वारेण तत्संसर्गं लक्षयन्ति वाक्यार्थे प्रमाणम्। तेषां चापक्षधर्मतया न लिङ्गत्वम्। स्मृतिजनकत्वमपि पदानां वाक्यार्थप्रत्यायनाथ कल्पितन्न सम्बन्धान्तरं व्यनक्ति॥

शब्दार्थयोः सम्बन्ध इति। वाच्यवाचकभावलक्षणः सम्बन्धोऽनुज्ञातः, मीमांसकाभिमतः स्वभाविकश्च सम्बन्धः प्रतिषिद्ध इत्याशयः।

---

(भा० चं० ) अत्र **स्वर्ग** इत्यादि भाष्यम्। अप्सरसः आप इव सरन्ति प्रियतया प्रतिभान्ति इत्यप्सरः स्त्रीविशेषाः। उत्तराः कुरवः देशविशेषाः पुरुषविशेषा वा। सप्त द्वीपाः समुद्राश्च यस्मिन् स तथा। लोकसन्निवेशो भूमण्डलः आदिशब्देन सहस्राक्ष इन्द्र इत्यादेर्ग्रहणम्। शब्दमात्रादाप्तविशेषणरहितात्। प्रत्ययः सम्प्रत्ययः। **नत्वेवं मनुमानमिति**। तथासति प्रतिज्ञामात्रेण परस्य साध्यसम्प्रत्ययः स्यादित्यर्थः। द्वितीयं दूषणं निराचष्टे।

**यत्पुनरित्यादिना**। शब्दानुमानयोरिति षष्ठ्यन्तं सप्तम्यन्तं वा। प्रवृत्तिभेदः प्रकारविशेषः। विशेषे भेदके।

(भा०) ऽनुज्ञातः, अस्ति च प्रतिषिद्धः । अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः, प्राप्तिलक्षणस्तु शब्दार्थयोः सम्बन्धः प्रतिषिद्धः । कस्मात् ? प्रमाणतोऽनुपलब्धेः । प्रत्यक्षतस्तावच्छब्दार्थप्राप्तेर्नोपलब्धिरतीन्द्रियत्वात् । येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते । अस्ति चातीन्द्रियाविषयभूतोऽप्यर्थः । समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यत इति ॥ ५३ ॥

---

(ख०)प्राप्तिलक्षण इति । स्वाभाविको हि शब्दार्थयोस्सम्बन्धस्तदा स्यात्—यदा (१)तादात्म्यलक्षणो वा, (२)प्रत्याय्यप्रत्यायकभावो वा, (३)प्राप्तिलक्षणो वा स्यात् । तत्र प्रत्यक्षलक्षणस्थेन अव्यपदेश्यपदेन तादात्म्यमपाकृतम् ।ततश्च नाभेदः शब्दस्य प्रत्यक्षात् । प्रत्याय्यप्रत्यायकभावश्चौत्पत्तिकः सम्बन्धो मीमांसकाभिमतो निराकरिष्यतेऽधस्तात् । तेन प्राप्तिलक्षणमेव सम्बन्धं निराकरोति भाष्यकारः ।

अस्ति चेति । अतीन्द्रियश्चासौ विषयभूत इति समासः । अतीन्द्रियश्च शब्दग्राहकेन्द्रियातिपतित इन्द्रियमात्रमतिपतितश्चेति ज्ञेयम् ।

गृह्यत इति । एकेन्द्रियग्राह्ययोः प्राप्तिः प्रत्यक्षा । यथाऽङ्गुल्योः । नतु शब्दार्थयोरेकेन्द्रियग्राह्यता । येनेन्द्रियेण शब्दो गृह्यते न तेन तस्यार्थ इति भावः ।

---

(भा०चं०)तृतीयं दूषणं दूषयते **यत्पुनरिति** । सम्बन्धः सम्बन्धविशेषः अनुज्ञातो अङ्गीकृतः तथा हेतुरस्तु साध्यं मास्त्विति भावः । अस्ति च प्रतिषिद्धः अनुज्ञातान्यसम्बन्धविशेषः । तथा चास्मदभिमतहेतुर्नास्तीति भावः । अभिप्रायमजानतो व्याघातशङ्कां वारयितुमनुज्ञायां हेतुमाह **अस्येदमित्यादिना** । अनुज्ञातः पदार्थवाक्यार्थ इति व्यवहारानुपपत्तिरिति भावः । निषेधाभिप्रेतं सम्बन्धमाह **प्राप्तीति** । प्राप्तिः

(भा०) प्राप्तिलक्षणे च गृह्यमाणे सम्बन्धे शब्दार्थयोः शब्दान्तिके वार्थः स्यात्, अर्थान्तिके वा शब्दः स्याद्, उभयं वोभयत्र ।

( भा० ) अथ खल्वयम्—

(सू०) पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः॥५४॥

---

( ख० ) प्राप्तिलक्षण इत्याद्यागामिसूत्रमवतारयति ।

अतीन्द्रियत्वादप्रत्यक्षः शब्दार्थोऽनुमानेनोपलप्स्यत इति चेत्—नानुमानेन, विकल्पानुपपत्तेः । शब्दो वाऽर्थदेशं गच्छति—अर्थो वा शब्ददेशम्—उभयं वा । मोदकशब्दे चोच्चार्यमाणे आगच्छन् मोदकादिरुपलभ्येत—नचोपलभ्यते—तस्मान्न गच्छति शब्ददेशमर्थः । शब्दस्य तु गतिरेव न सम्भवतीत्यादि स्पष्टमग्रिमभाष्ये ।

---

(भा०चं०)संयोगसमवायान्यतरः । तल्लक्षणस्तत्स्वरूपः । तुशब्द इष्टव्यावृत्त्यर्थः ।पृच्छति **कस्मादिति** । उत्तरं **प्रमाणत इति** । अनुपलब्धिं विशदयति । **प्रत्यक्षत इत्यादिना** । विवृणोति **येनेति** । समानेन एकेन चक्षुरादिना । गृह्यमाणयोर्धूमवह्न्याद्योप्राप्तिरेकाधिकरणीयसंयोगादिः । गृह्यते दृश्यते । नन्वेवं शब्दार्थयोरपि प्राप्तिर्गृह्यतामित्यत आह, **प्राप्तिलक्षणे चेति** । गृह्यमाणे प्रत्यक्षीक्रियमाणे । शब्दान्तिके समवायेन शब्दाधिकरणे अर्थोऽभिधेयः स्यादन्यतरप्राप्त्या सम्बध्येत ॥ ५३ ॥

ननु प्रत्यक्षेणाग्रहणेपि अनुमानेन ग्रहणसम्भवात् तथास्त्विवतीष्टापत्तौ दूषणमाह **अथेति** । पूरणेत्यादि **सूत्रम्** । सम्बधाभावः शब्दार्थयोरिति शेषः । कुतः ? पूरणप्रदाहपाटनानुपपत्तेः ।

अत्र **स्थानेत्यादि** भाष्यम् । स्थानमुत्पत्तिस्थानं शब्दार्थयोः

(भा०) स्थानकरणाभावादिति चार्थः ।

न चायमनुमानतोऽप्युपलभ्यते-शब्दान्तिकेऽर्थ इति । एतस्मिन्पक्षेऽप्यास्यस्थानकरणोच्चारणीयः शब्दस्तदन्तिकेऽर्थ इति-अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन् । न च गृह्यन्ते । अग्रहणान्नानुमेयः प्राप्तिलक्षणः सम्बन्धः ।

अर्थान्तिके शब्द इति स्थानकरणासम्भवादनुच्चारणम् । स्थानं कण्ठादयः । करणं प्रयत्नविशेषः । तस्यार्थान्तिकेऽनुपपत्तिरिति । उभयप्रतिषेधाच्च नोभयम् । तस्मान्न शब्देनार्थः प्राप्त इति ॥ ५४ ॥

(सू०) "शब्दार्थव्यवस्थानादप्रतिषेधः" ॥ ५५ ॥

(भा०) "शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयते-अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम् । असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः। तस्मादप्रतिषेधः सम्बन्धस्येति"॥५५॥

---

(ख०) स्थानेति । 'स्थानं' कण्ठादयः। 'करणं' प्रयत्नविशेषः । चार्थ इति । सूत्रस्थचकारस्यार्थ इति भावः ।

पूर्वसूत्रोक्तदूषणपरिहारपरं पूर्वपक्षिसूत्रम्—शब्दार्थेति ।

---

(भा०चं०)करणं प्रयत्नवायुक्रियादण्डादि तयोः परस्परस्थानेऽभावात् परस्परसामानाधिकरण्यं न सम्भवतीति भावः । एतस्मिन् शब्दान्तिकेऽर्थ आयातीति पक्षे अस्य स्थानं कण्ठाद्यवयवाः करणं यत्नवायुक्रियादयः तैरुच्चारणीयः उत्पाद्यः तदन्तिके तेन सहैकाधिकरणे । अन्नं खाद्यपेयं । शब्दोच्चारणे वाचकोच्चारणे मुखे। उपसंहरति **तस्मादिति**। न प्राप्तिः न स्वाभाविकसम्बन्धवान् ॥ ५४ ॥

प्रत्ययव्यवस्थां शङ्कते **शब्देत्यादिसूत्रेण** ॥ ५५ ॥

( भा० ) अत्र समाधिः —

( सू० ) न, सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥५६॥

( भा० ) न सम्बन्धकारितं शब्दार्थव्यवस्थानम् । किन्तर्हि ? समयकारितम् । यत्तदवोचाम-अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः सम्बन्ध इति-समयं तमवोचाम इति । कः पुनरयं समयः ? अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः । तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति । विपर्यये हि शब्दश्रवणेऽपि

---

( ख० )न सामयिकत्वादित्यादि समाधानसूत्रम् ।

शब्दार्थयोर्नित्यमेव सम्बन्धं वयं निषेधामो न सम्बन्धमात्रम्-सम्बन्धस्तु अस्माच्छब्दादयमर्थो बोद्धव्य इत्येवंरूपसमयकारितोऽस्त्येव शब्दार्थयोरिति भावः ।

नियमनियोग इति । सर्गादावीश्वरस्येति शेषः ।

---

( भा०चं० )नेत्यादिसमाधानसूत्रम् । सामयिकपरभाष्यं समयकारितमिति । समयेन कारितमिति करणसमासः । णिजत्र प्रयोजकसूचकः । स च समयकर्ता । अनुमानमप्यर्थान्तरमित्याह यत्तदिति । अवोचाम इति बहुवचनं द्विवचनस्थाने "अस्मदो द्वयोश्चेति" स्मृतेः । समयं सङ्केतं । समयपदं स्वाभिमतसम्बन्धपरमाशङ्क्य पृच्छति कः पुनरिति । समाधत्ते अस्येत्यादिना । अभिधानाभिधेययोर्नियमो व्यवस्था तस्यै नियोगो नाम कर्तुरिच्छाविशेषः। तस्मिन्नुपयुक्ते शब्दार्थसम्प्रत्ययः सम्यक्प्रतीतिः शब्दपदमिह चतुर्विधशब्दपरं प्रकृतिद्वयविभक्तिद्वयभेदात्, समयपदमिह गौण्युपलक्षणार्थम् । विपर्यये सयमाग्रहे । सम्बन्धवादिना शब्दार्थयोः

(भा०) प्रत्ययाभावः । सम्बन्धवादिनापि चायमवर्जनीय इति ।

प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम् । समयपालनार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणम् । वाक्यलक्षणाया वाचोऽर्थो लक्षणम् । पदसमूहो वाक्यमर्थपरिसमाप्ताविति । तदेवं प्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्यार्थतुपोऽप्यनुमानहेतुर्न भवतीति ॥ ५६ ॥

---

( ख० ) सम्बन्धवादिनेति । शब्दार्थसम्बन्धनित्यतावादिना मीमांसकेनापि उक्तः समय एव परमोपायः शब्दार्थसम्बन्धनिर्णयस्येति ।

समयेति । पारमेश्वरसमयपरिपालनार्थमित्याशयः । तथा च येषां पदानां येनार्थेन परमेश्वरेण समयः कृतः तानि तस्मिन्नर्थे साधून्यसाधूनीतरत्रेति विभागायैव व्याकरणमर्थवदिति सिद्धम् ।

अनुमानहेतुरिति । प्राप्तिलक्षणसम्बन्धानुमापको हेतुरित्यर्थः ।

तथाच शब्दस्य स्वाभाविकसम्बन्धाभावादनुमानाभेदायाविनाभावसिद्ध्यर्थं स्वाभाविकसम्बन्धाभिधानमयुक्तमिति सिद्धम्भवति ।

---

(भा०चं०)स्वाभाविकसम्बन्धवादिना अवर्जनीयो व्यवहारादिना चायं गृह्यत इति सर्ववादिसिद्धम् ।

तदिदमाह **प्रयुज्यमानेति** । प्रयुज्यमानो नियुज्यमानः नियुज्यमानो मध्यमवृद्धः तस्य व्यवहारस्य ग्रहणादित्यर्थः । समयोपयोगो समयग्रहणं लौकिकानामपरीक्षकाणां परीक्षका हि जातव्युत्पत्तय इति । न केवलं वयमेवैवं ब्रूमः किन्तु शब्दशास्त्रकृतोपीत्याह **समयपालनार्थम् इति** । चशब्देन सर्वशास्त्रकृतामभिप्रायः समुच्चितः । पदलक्षणायाः पदरूपायाः वाचः वाचकशब्दस्य अन्वाख्यानमनुवादः व्याकरणं व्याक्रियन्ते प्रकृतिप्रत्ययविभागेन अव्युत्पन्नाः व्युत्पद्यन्ते अने-

(सू० ) जातिविशेषे चानियमात् ॥ ५७ ॥

(भा० ) सामयिकः शब्दादर्थसम्प्रत्ययो न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्याद्। यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति ॥ ५७ ॥

---

(ख० ) सम्बन्धानित्यतायामपरो हेतुः—जातिविशेष इति सूत्रम्। ऋष्यार्येति। तथाहि यवशब्द आर्यैर्दीर्घशूके पदार्थे प्रयुज्यते। ते हि यवशब्दात् दीर्घशूकपदार्थम्प्रातिपद्यन्ते। म्लेच्छास्तु तमेव प्रियङ्गौ प्रयुञ्जते। सोऽयमनियमः स्वाभाविके सम्बन्धे न स्यात्। नहि रूपेण स्वाभाविकसम्बद्ध आलोकः शिल्पिसहस्रेणापि रसादिसम्बद्धः शक्यते कर्तुं यतस्ततो रसादयो गृह्येरन्। सोऽयमनियमः सामयिकत्वे उपपद्यते, पुरुषेच्छाधीनत्वात्समयस्य, इच्छायाश्चानियतत्वादिति भावः।

---

(भा०चं०)नेति व्याकरणम्। अर्थो अर्थसमूहः लक्षणं भेदकं वाक्याभासादिति शेषः। परिसमाप्तिः परितोऽर्थानां परस्परप्राप्तिः तस्यां सत्यामिति भावसप्तमी तथाच संम्बद्धयावदर्थमनेकं वाक्यमित्यर्थः। उपहसन्नुपसंहरति **तदेवमिति**। अर्थसम्बन्धस्य अर्थसम्बन्धपरिग्रहस्य अर्थतुषः प्रयोजनलेशः अनुमानहेतुरनुमितिहेतुः ॥ ५६ ॥

परीक्षकैरस्माभिरेव नोपेक्षितोयं प्राप्तिलक्षणसम्बन्धः किन्तु प्राकृतैरपीत्याह **जातीत्यादिसूत्रेण**। चशब्दः परीक्षकसमुच्चयार्थः। न स्वाभाविकः न व्याप्तिकृतः तथासति यथेष्टव्यवहारानुपपत्तेः। तदेवाह **ऋष्यादीति**। ऋषयः शास्त्रकृतः ॥ ५७ ॥

इति श्रीभाष्यचन्द्रे शब्दसामान्यलक्षणप्रकरणभाष्यचन्द्रिका।

(१०) शब्दविशेषपरीक्षाप्रकरणम् ।

( भा० ) "पुत्रकामेष्टिहवनाभ्यासेषु"—

(सू०)"तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः" ॥५८॥

---

( ख० ) तदप्रामाण्यमित्यादिशब्दप्रामाण्यनिराकरणपरं पूर्वपक्षसूत्रम् ।

'व्याघातः' पदयोर्वाक्ययोर्वा विरुद्धार्थोपस्थापकत्वेन सहासम्भवः।

पूर्वप्रकरणे समस्तलोकयात्रानुबद्धस्य शब्दस्य झटित्यप्रामाण्याभिधानं लोकविरुद्धं स्वचरितविरुद्धं चेति मन्वानस्य पूर्वपक्षिणोऽनुमानानन्तर्भावमुखेन तद्बाह्यतयाऽप्रामाण्यमेवाभिमतम् । तदेवं बहिर्भावसिद्धाविदानीं विभाव्य प्रत्यवस्थानम् । न हि सर्वस्य शब्दस्याप्रामाण्यमस्य पूर्वपक्षिणो विवक्षितम्, स्ववचनव्याघातप्रसङ्गात्—इति परमैश्वर्यसाधनत्वेन नैयायिकाभिमतं शब्दविशेषस्य वेदस्यैव प्रामाण्यमाक्षिपति ।

वस्तुतस्त्वस्य हृदये शब्दमात्रस्यैवाप्रामाण्यं चेष्टते । कैश्चिद् हेतुभिः केषाञ्चिद्वेदगतानामप्रामाण्यं प्रसाध्य तद्दृष्टान्तबलेनान्येषामपि वाक्यानामप्रामाण्यं साधयितुं सुकरम्—नित्यसन्देहादाप्तानाप्तविभागस्य दुष्करत्वादित्याशयः ।

---

(भा०चं०)अथ शब्दविशेषलक्षणप्रकरणम् । **तदप्रामाण्यमित्यादिसूत्रम्** । अनृतपुनरुक्तिपदे भावपरे । तथा चानृतत्वव्याघातकत्वपुनरुक्तत्वदोषेभ्य इत्यर्थः ।

अत्र **पुत्रेत्यादिभाष्यम्** । सप्तमीबहुवचनान्तपदं दोषाधिकरणदर्शनार्थम् । समस्तं तत्पदं विगृह्य तदर्थं दर्शयति **तस्येति** । शब्दविशेषं वेदं स द्विविधो दृष्टादृष्टार्थत्वादित्युक्तम् अधिकुरुते पर-

( भा० ) "तस्येति शब्दविशेषमेवाधिकुरुते भगवान् ऋषिः। शब्दस्य प्रमाणत्वं न सम्भवति। कस्मात्? अनृतदोषात्। पुत्रकामेष्टौ—"पुत्रकामः पुत्रेष्ट्या यजेत" इति। नेष्टौ संस्थितायां पुत्रजन्म दृश्यते। दृष्टार्थस्य वाक्यस्यानृतत्वाददृष्टार्थमपि वाक्यम् "अग्निहोत्रं जुहुयात् स्वर्गकाम"इत्याद्यनृतमिति ज्ञायते।

विहितव्याघातदोषाच्च। हवने—'उदिते होतव्यम् अनुदिते होतव्यम् समयाध्युषिते होतव्यम्' इति—विधाय, विहितं व्या-

---

( ख० ) तस्येतीति। सूत्रे तच्छब्दप्रयोगोऽप्येतदेव सूचयति। यस्मात्प्रकरणेन प्राप्तमपि शब्दं तच्छब्देन पुनरभिधत्ते तेन ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता न शब्दमात्रमिति। अन्यथैवं वक्तव्यम्—'अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य' इति।

अनृतत्वादिति। अत्र फलादर्शनमेव 'अनृतत्वम्'।

---

( भा०चं० )विवक्षितमभिप्रैति। ननु पराभिप्रायं कथं जानातीत्याह **भगवानिति**। भगवान् सर्वज्ञः।

उत्पत्तिं च विनाशञ्च भूतानामागतिं गतिम्।
वेत्ति विद्यामविद्यां च स उक्तो भगवानिति॥

इदमेव कुत इत्यत आह **ऋषिरिति**। तपोबलज्ञाततत्त्वज्ञानक इत्यर्थः। तदप्रामाण्यमिति बहुव्रीह्याश्रयणे तद्धितविधानं व्यर्थमित्यादि दूषणमालोच्य व्याचष्टे **तस्येति**। न भवति न विद्यते। पञ्चम्यर्थस्य प्रत्येकमन्वयमभिप्रेत्य प्रश्नोत्तरे। **कस्मादनृतदोषादिति**। दृष्टमुदाहरति **पुत्रेत्यादिना**। संस्थितायामनुष्ठितायामनृतमिति ज्ञायते वेदवाक्यत्वाविशेषादिति शेषः।

व्याघातपदं स्वविहितव्याघातकत्वपरमित्याह **विहितव्याघातेति**। तदुदाहरति। **उदित** इत्यादिवाक्यषट्केन। उदितादित्रयं

(भा०) हन्ति—'श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलौ वास्याहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति'। व्याघातााचान्यतरन्मिथ्येति ।

"पुनरुक्तदोषाच्च । अभ्यासे देश्यमाने—'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति पुनरुक्तदोषो भवति । पुनरुक्तं च प्रमत्तवाक्यमिति ।

---

(ख०)श्यावशबलाविति । 'श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ । ताभ्याम्पिण्डं प्रयच्छामि स्यातामेतावहिंसकाविति' बलिमन्त्रोऽत्रानुसन्धेयः ।

व्याघातादिति । उदितहोमादिविधिवाक्यानां निन्दावाक्यैर्व्याघातः ।

---

( आ०चं० )चोक्तम् वैदिकैः—

रेखामात्रोदिते सूर्ये रश्मिभिः परिदृश्यते ।
उदितं तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥
रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते ।
अनुदितं विजानीयात् तत्र होमं प्रकल्पयेत् ॥
प्रभातसमये जाते नष्टे नक्षत्रमण्डले ।
रविर्यावन्न दृश्येत समयाध्युषितं विदुः ॥ इति ।

श्यावशबलौ कुक्कुरविशेषौ । एवंविधानां व्याघातकत्वे तत्साम्यात् अन्यान्यपीति भावः । अन्यतरदुभयम् ।

देश्यमाने विधीयमाने एकादशसामिधेनीनां पञ्चदशत्वार्थमिति शेषः । त्रिः त्रिवारमन्वाहेत्यन्वयः । संख्यायाः क्रियाया वृत्तिगणने कृत्वसुच् इत्यनुवृत्तौ द्वित्रिभ्यां सुजिमिः श्रिते । प्रमत्तवाक्य-

(भा०) "तस्मादप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति" ॥ ५८ ॥

( सू० ) न कर्मकर्तृसाधनवैगुण्यात् ॥ ५९ ॥

( भा० ) नानृतदोषः पुत्रकामेष्टौ । कस्मात् ? कर्मकर्तृसाधनवैगुण्यात् । इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति-इष्टिः करणं साधनम्, पितरौ कर्तारौ, संयोगः कर्म । त्रयाणां गुणयोगात् पुत्रजन्म । वैगुण्याद्विपर्ययः ।

इष्ट्याश्रयं तावत्कर्मवैगुण्यं-समीहाभ्रेषः । कर्तृवैगुण्यम्-

---

(ख०)तस्मादप्रमाणमिति । दृष्टान्तत्वेनैतानि वाक्यान्युपन्यस्यैककर्तृकत्वेनाशेषवेदवाक्यानामप्रामाण्यमिति ।

न कर्मेत्यादि पूर्वपक्षपरिहारसूत्रम् । तस्यार्थः—फलादर्शनमन्यथाप्युपपद्यमानं नानृतत्वं साधयति, ततश्चासिद्धमनृतत्वं हेतुरिति ।

समीहाभ्रेष इति । 'समीहा' तदङ्गसमिदाद्यनुष्ठानम्-तस्या 'भ्रेषः' भ्रंशोऽननुष्ठानमिति यावत् ।

कर्तृवैगुण्यमिति । विदुषो ह्यधिकारः सामर्थ्यात् । अत एव स्त्रीशूद्रतिरश्चामसमर्थानामनधिकारः ।

---

(भा०चं०)**मिति** । तथाचोक्तं बाह्यदर्शने—

प्रियाविरह उन्मादो लम्भना बहुजल्पितम् ।
ते वेदा इति विभ्रान्तैः प्रमाणत्वेन कल्पिताः ॥
अग्निहोत्रं त्रयो वेदास्त्रिदण्डं भस्मगुण्ठनम् ।
प्रज्ञापौरुषहीनानां जीविकेति बृहस्पतिः ॥ इत्यादि ।

उपसंहरति **तस्मादिति** । अस्योत्तरसूत्रस्थनञ्पदापेक्षितमाह **अनृतेत्यादिना इतीत्यन्तेन** ॥ ५८ ॥

**न कर्मेत्यादि** सूत्रम् । अत्र **भाष्यं नानृतेत्यादि** । पुत्रकामेष्टौ तत्प्रतिपादकश्रुतौ ।

( भा० ) अविद्वान्-प्रयोक्ता कपूयाचरणश्च । साधनवैगुण्यं-ह-विरसंस्कृतमुपहतमिति, मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति, दक्षिणा दुरागता हीना निन्दिता चेति ।

अथोपजनाश्रयं कर्मवैगुण्यम्-मिथ्यासम्प्रयोगः । कर्तृवै-गुण्यं-योनिव्यापादो बीजोपघातश्चेति । साधनवैगुण्यम्-इष्टाव-भिहितम् ।

---

( ख० ) विद्वानपि यदि द्विजातिकर्महानिहेतुं कर्म ब्रह्महत्यादि कृतवान् तत्कृतमपि कर्म फलाय न कल्पते-इति दर्शयति कपूयेति । 'कपूयं' निन्दितम् । आचरतीति 'आचरणः' पुरुषः ।

असंस्कृतमिति । अपूतमप्रोक्षितमित्यर्थः ।

उपहतमिति-श्वमार्जारादिभिरिति ।

स्वरवर्णेति । "मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न स तमर्थमाह । स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽप राधादिति" ।

दुरागतेति । दौत्यद्यूतोत्कोचादेः दुष्टादुपायादागतेत्यर्थः । हीने-ति । ऋत्विजाम्परितोषं न करोतीति ।

निन्दितेति । रजतादिप्रतिषिद्धद्रव्यरूपा ।

कर्तृवैगुण्यं प्रदर्श्य कर्मवैगुण्यं प्रदर्शयति अथेति । 'उपजनं' पुत्रोत्पादनरूपं कर्म ।

---

(भा०चं०)समीहा।शेषः इतिकर्त्तव्यतांशः। कर्ता यजमानः, तस्य वैगुण्यमविद्वानितीति शेषः । भावप्रधानो निर्देशो वा, अविद्वत्ता मन्त्रादौ । कपूयाचरणो निन्दिताचरणः ।

उपजनः पत्युपगमः । तदाश्रयं तन्निष्ठम् । मिथ्यासं-प्रयोगः यथोचितानृतत्वम । योनिर्मातृबीजम् । व्यापादो नाशः ।

(भा०) लोके च "अग्निकामो दारुणी मथ्नीयात्" इति विधि वाक्यम्। तत्र कर्मवैगुण्यम्—मिथ्याभिमन्थनम्। कर्तृवैगुण्यं-प्रज्ञाप्रयत्नगतः प्रमादः। साधनवैगुण्यम्—आर्द्रं सुषिरं दार्विति। तत्र फलं न निष्पद्यत इति नानृतदोषः। गुणयोगेन फल-निष्पत्तिदर्शनात्।

न चेदं लौकिकाद्भिद्यते "पुत्रकामः पुत्रेष्ट्या यजेत" इति ॥ ५९ ॥

(सू०) अभ्युपेत्य कालभेदे दोषवचनात् ॥६०॥

(भा०) न व्याघातो हवन इत्यनुवर्त्तते। योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति तत्रायमभ्युपगतकालभेदे दोष उच्यते—"श्यावोऽस्याहुतिमभ्यवहरति य उदिते जुहोति"। तदिदं विधिभ्रेषे निन्दावचनमिति ॥ ६० ॥

---

(ख०)मिथ्येति। येनाभिमन्थनेनाग्निर्न जायते तदेव 'मिथ्या'। नचेदमिति। यथा लोकेऽपि कर्त्रादिवैगुण्यवशादसम्पन्नमग्नि-जननरूपं कर्म—'अग्निकामो दारुणी मथ्नीयात्' इत्यस्य विधिवाक्यस्य प्रामाण्यं न व्याहन्ति—तथैव कर्त्रादिवैगुण्येनासम्पद्य-मानं पुत्रजननरूपं कर्म—'पुत्रकामः पुत्रेष्ट्या यजेत' इत्यस्य विधि-वाक्यस्य प्रामाण्यं न व्याहन्तीति लौकिकदृष्टान्तोद्भावनतात्पर्यम्। अभ्युपेत्येति सूत्रं पूर्वपक्षोक्तं व्याघातदोषम्परिहरति।

---

(भा०चं०)लौकिककर्मदृष्टान्तेन वैदिककर्मणोऽङ्गहान्या फलासाध-नत्वं दर्शयति लोके चेत्यादिना। न भिद्यते न विशिष्यते ॥५९॥

द्वितीयदोषमुद्धरति अभ्युपेत्येत्यादि सूत्रम्। अत्र न व्याघात इत्यादि भाष्यम्। सूत्रं एकवाक्यीकर्तुमिदमाह

(सू०) अनुवादोपपत्तेश्च ॥ ६१ ॥

( भा० ) पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम् ।

अनर्थकोऽभ्यासः पुनरुक्तम् । अर्थवानभ्यासोऽनुवादः । योऽयमभ्यासः—"त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इत्यनुवाद उपपद्यते, अर्थवत्त्वात् । त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्चदशत्वं सामिधेनीनां भवति । तथा च मन्त्राभिवादः—"इद-

---

( ख० )अनुवादेति सूत्रं पूर्वपक्षोक्तपुनरुक्तदोषम्परिहरति ।

अर्थवानिति । पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृतविशेषस्य पुनर्वचनम् । अनुवादस्तु पुनः श्रुतिसामान्यादङ्गीकृताविशेषस्यार्थस्य वादः । एवं च सति न यथोक्तो दोषः ।

---

(भा०चं०)न व्याघात इत्यादि । नञ्पदव्याघातपदे पूर्वसूत्रस्थे । हवन इति पूर्वभाष्यस्थमनुवर्तते । सूत्रस्य वाक्यद्वये इति शेषः । श्लेषस्त्यागः ॥ ६० ॥

तृतीयमुद्धरति **अनुवादेत्यादि सूत्रम्** । प्रकृतमनुवर्तत इति शेषः । प्रकृतत्वादनुवृत्तिरिति भावः ।

गुणदोषाविवेकाय अभ्यासद्वैविध्यमाह **अनर्थक इत्यादि** । पुनरुक्तं पुनरुक्तिः । अर्थवत्त्वात् प्रयोजनवत्त्वात् । निरर्थकपुनरुक्तिर्दोष इति भावः । अर्थवत्त्वं दर्शयति **त्रिर्वचनेन हीत्यादिना** । प्रथमोत्तमयोः आद्यन्तिमयोः । ऋचोरिति शेषः । पञ्चदशत्वं सामिधेनीनामेकादशानां । भवतीति सम्पद्यते तत्सम्पत्तिः फलबोधनम् । मन्त्रं दर्शयति **तथाच इत्यादिना** । मन्त्राभिवाद इति कर्मधारयः । आभि मुख्याय कर्मणे प्रवृत्तये वादो वाक्यम् । **इदमित्यादि** मन्त्रः । भ्रातृव्यं शत्रुं पञ्चदशावरणे वाग्व-

(भा०)मह्यं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण बाधे योऽस्मान्द्वेष्टि यं च वयं द्विष्म" इति-पञ्चदशसांमिधेनीर्वज्रं मन्त्रोऽभिवदति। तदभ्यासमन्तरेण न स्यादिति ॥ ६१ ॥

(सू०) वाक्यविभागस्य चार्थग्रहणात् ॥ ६२ ॥

( भा० ) प्रमाणं शब्दो यथा लोके ॥ ६२ ॥

( भा० ) विभागश्च ब्राह्मणवाक्यानां त्रिविधः--

(सू०) विध्यर्थवादानुवादवचनविनियोगात् ॥६३॥

---

( ख० ) वाक्यविभागस्येति सूत्रं समस्तानि वेदवाक्यानि पक्षीकरोति। प्रमाणं वेदवाक्यानि, अर्थविभागवत्त्वात् , मन्वादिवाक्यवदित्यर्थः।

---

(भा०चं०)वज्रेणेति रूपकालङ्कारः । वबाधे बाधिष्ये बाधितवानिव इत्यर्थः। द्विष्मः जिघांसामः। न स्यादेकादशत्वादि सामिधेनीनामिति शेषः ॥ ६१ ॥

ननु वेदे विध्यर्थवादौ दृष्टौ नानुवाद इत्याक्षेपे स्वाभिमतविभागान् दर्शयितुमाह **वाक्येत्यादिसूत्रम्**। तद्व्याचष्टे **प्रमाणमित्यादिना**। यथा लोके त्रिविधः शब्दः प्रमाणं तथा वेदेपीति शेषः ॥ ६२ ॥

**ब्राह्मणवाक्यानामिति** । ब्राह्मणाख्यश्रुतिवाक्यानामित्यर्थः । न तु मन्त्राणां, तेषां चातुर्विध्यात्। तथाहि—

कर्मब्रह्मप्रमाहेतुर्वाक्यं यत् स्यादलौकिकम्।
स वेदकोविदैः प्रोक्तः सऋगादिश्चतुर्विधः ॥

पुनः स द्विविधो मन्त्रब्राह्मणभेदतः। तत्र मन्त्राः अनुष्ठानकारकद्रव्यदेवताः।

(भा०) त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि–विधिवचनान्यर्थवादवचनान्यनुवादवचनानीति ॥ ६३ ॥

( भा० ) तत्र––

(सू०) विधिर्विधायकः ॥ ६४ ॥

यद्वाक्यं विधायकं चोदकं स विधिः । विधिस्तु नियोगोऽनुज्ञा

---

( ख० ) विधिस्त्विति । 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इति वाक्यमप्रवृत्तप्रवर्तकलक्षणं कर्त्रपेक्षितोपायतां ज्ञापयत् 'विधिः' इति । तदेव तत्साधनद्रव्याद्यवाप्तिप्रवृत्तिमनुजानातीति 'अनुज्ञाऽपि' भवति । एतदुक्तं भवति । एकमेवाग्निहोत्रवाक्यमप्राप्तेऽग्निहोत्रादौ 'विधिः,'

---

(भा०चं०)प्रकाशयन्तस्त्रिविधा ऋग्यजुःसामभेदतः ।
गायत्रीप्रभृतिश्छन्दःपादबन्धान्विता ऋचः ॥
ता एव गीतियुक्ताश्चेत्सामानीति प्रकीर्तिताः ।
सामऋक्लक्षणहीनानि यजूंषि प्रविदुर्बुधाः ॥
(१)अग्नीन्दग्नीनेवमाद्या यजुःसु मनवो मताः ।
तदेवन्तु प्रकारेण मन्त्रभागो निरूपितः ॥
ब्राह्मणं त्रिविधं प्रोक्तं प्रथमं विधिसंज्ञकम् ।
अर्थवादात्मकं मध्यमनुवादस्तृतीयकम् ॥

इत्याद्यद्वैतानन्दसागरेऽष्टादशविद्यानिरूपणलहर्य्यां द्रष्टव्यम् । सामान्योक्तं विशिनष्टि–**विध्यर्थवादेत्यादिसूत्रम्** । तद्व्याचष्टे **त्रिविधेत्यादिना** । विनियुक्तानि विशिष्टार्थबोधनाय नियुक्तानि प्रयुक्तानीत्यर्थः ॥ ६३ ॥

तत्र तेषु त्रिविधेषु । **विधिरित्यादि सूत्रम्** । **यदित्यादि**

---

( टि० ) १ अग्नीदग्नीरिति पाठः समीचीनः ।

(भा०)वा, यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः"इत्यादि ॥६४॥

(सू०) स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः॥६५॥

(भा०) विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः सम्प्रत्ययार्था-स्तूयमानं श्रद्धीतेति-प्रवर्त्तिका च, फलश्रवणात्

---

(ख०)अन्यतः प्राप्ते तत्साधने 'अनुज्ञा' चेति ।

पुनश्च ये द्रव्यार्जननियमाविधयः—'ब्राह्मणस्य प्रतिग्रहादिना' इत्येवमादयः— ते च रागतो धनार्जने प्रवृत्तानां ब्राह्मणानां लौकिकानेकोपायप्रयुक्तौ सत्यां नियमपराः पुरुषार्थाः, न क्रत्वर्थाः। क्रतुविधयस्तु धनसाधनाः। तेऽनूदिताः पर्यवस्यन्तोऽपि न धनार्जनं वा तन्नियमं वा प्रयुञ्जते—तस्य पुरुषार्थत्वेनैव प्रयुक्तत्वात्। केवलमनुजानन्ति तु तदिति ।

---

(भा०चं०)भाष्यम् । विधायकमपूर्वार्थज्ञापकं करणस्य कर्तृत्वं विवक्षा-(१)तः । विधेः प्रयोजनं दर्शयति **चोदकमिति** । चोदकं प्रेरकं प्रवृत्तिहेतुरित्यर्थः। तत्र कर्मणि अधिकृतपुरुषस्येति शेषः। विधेर्द्वैविध्यमाह **विधिस्त्विति** । विनियोगो नित्यविधिः । अनुज्ञा काम्यविधिः । उदाहरणं **यथेत्यादि** । आदिशब्देन अहरहः सन्ध्यामुपासीतेत्यादेः परिग्रहः । नित्यकाम्यविधेर्ध्यात्मकत्वान्न पार्थक्यमिति भावः ॥ ६४ ॥

अर्थवादस्य चातुर्विध्यमाह **स्तुतिरित्यादिसूत्रम्** । तद्भाष्यं विधेरित्यादि । फलवादलक्षणा फलोत्कर्षवादिका या सेति शेषः । स्तव्यमाह-**विधेरिति** । प्रशंसा गुणकथनम् । स्तुतेः प्रयोजनमाह **संप्रत्ययार्थेति**। संप्रत्ययं व्याचष्टे **श्रद्धीतेति**। प्रवर्त्तिकेत्यत्र स्तुतिरित्यनुकर्षणीयम् । तथा च स्तुतिः संप्रत्ययेन व्यापारेण पुरुषं प्रवर्त-

(टि०) १ विवक्षातः कारकाणि भवन्तीति ।

(भा०)प्रवर्तते । "सर्वजितो वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाप्नोति सर्वं जयति" इत्येवमादि ।

अनिष्टफलवादो निन्दा वर्जनार्था,-निन्दितं न समाचरेदिति । "स एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते गर्ते पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा" इत्येवमादि ।

अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः। "हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यम्, तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति, अग्नेः प्राणाः पृषदाज्यमित्येवमभिदधति" इत्येवमादि ।

---

( ख० ) परकृतिरिति । चरकाध्वर्युपुरुषसम्बन्धात् वपाहोमपृषदाज्याभिघारणयोः क्रमभेदस्याप्राप्तस्य पुरुषविशेषधर्मतया विधायकं परकृतिवाक्यम् । तथा बहिष्पवमानसामस्तोममन्त्रसम्बन्धस्य पूर्वकालपुरुषसम्बन्धितया श्रवणादिदानीन्तनपुरुषधर्मतया विधायकं पुराकल्पवाक्यमिति विवेकः । स्फुटतरस्तुतिनिन्दाप्रतीत्यभावाच्च परकृतिपुराकल्पयोः स्तुतिनिन्दाभ्याम्भेदेनोपन्यासः ।

---

(भा०चं०)यतीति भावः । श्रद्धा चेच्छाविशेष इति व्यासः । मनसा भावना भक्तिरिच्छा श्रद्धा च कीर्तितेति ब्राह्मणवचनात् । प्रवर्तते पुरुष इति शेषः । स्तुतिश्रुतिवाक्यं दर्शयति **सर्वजितो वा इत्यादि** । विश्वजिता यजेतेति विधेः । स्तुतिरियं वर्जनार्था 'हानार्था' एतज्जीर्यते एतत्कर्म जीर्यते फलमदत्वैव नश्यतीत्यर्थः । प्रमीयते कालेन हिंस्यते अन्यफलद्वयष्टेति(१) शेषः ।

---

( टि० ) १ यष्टा यजमानः यष्टा च यजमानश्चेति कोशात् ।

(भा०)ऐतिह्यसमाचरितो विधिः पुराकल्प इति । "तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे" इत्येवमादि ।

"कथं परकृतिपुराकल्पावर्थवादाविति ?"

स्तुतिनिन्दावाक्येनाभिसम्बन्धाद्विध्याश्रयस्य कस्यचिदर्थस्य द्योतनादर्थवाद इति ॥६५॥

(सू०) विधिविहितस्यानुवचनमनुवादः ॥ ६६ ॥

---

( ख० ) कथमित्यादिप्रश्नस्योत्तरम्—स्तुतिनिन्देति । स्तुतिनिन्दावाक्येन कस्यचिद्विधेः शेषभूतेन सम्बन्धादिति भावः ।

अर्थवाद इति । न तावदेतेषु वाक्येषु सिद्धाभिधायिषु विधिश्रुतिरस्ति । तत्र किमश्रूयमाणो विधिः कल्प्यताम्—आहोस्वित् प्रतीतेनैव केनचिदन्येन विधिनैकवाक्यता कल्प्यतामिति संशये—कल्पनालाघवात् प्रतीतेनैव विधिनैकवाक्यता ज्यायसी । पूर्वपक्षे विधिकल्पना तदेकवाक्यताकल्पना चेति द्वयं कल्पनीयम्, उत्तरस्मिंस्त्वेकवाक्यतामात्रमित्याशयः ।

विधिविहितस्येत्यादि सूत्रम् (१)अश्वमेधेन यजेतेति विधेरनुवादो 'योऽश्वमेधेन यजते तरति मृत्युन्तरति पाप्मानमित्यादि' विहितं स्तोतुम्। (२)उदिते होतव्यमिति विधेरनुवादः 'यदुदिते जुहोति यदनुदिते जुहोति श्यावो वास्याहुतिमभ्यवहरतीत्यादि' विहितातिक्रमं निन्दितुम्।

---

(भा०चं०)द्वितीयार्थवादं दर्शयितुमाह अन्येत्यादि ।

चतुर्थमर्थवादमाह ऐतिह्येति। उदाहरति तस्माद्वेत्यादि॥६५॥

पुनरुक्तद्वैविध्यवदनुवादद्वैविध्यमाह विधीत्यादिसूत्रम् । विधिहितस्येति समाहारद्वन्द्वः । अतोऽनुवचनस्य प्रत्येकमन्वय इत्याह

( भा० ) विध्यनुवचनं चानुवादो विहितानुवचनं च। पूर्वः शब्दानुवादोऽपरोऽर्थानुवादः। यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि।

"किमर्थं पुनर्विहितमनूद्यते ?"

अधिकारार्थम्। विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा विधिशेषो वाऽभिधीयते। विहितानन्तरार्थोऽपि चानुवादो भवति। एवमन्यदप्युत्प्रेक्षणीयम्।

लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। ओदनं पचेदिति विधिवाक्यम्। अर्थवादवाक्यमायुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम्। अनुवादः-पचतु पचतु भवानित्यभ्यासः-क्षिप्रं पच्यतामिति वा, अङ्ग पच्यतामित्यध्येषणार्थम्, पच्यतामेवेति वावधारणार्थम्।

---

( ख० ) (३) सोमयागो विहितो दर्शपूर्णमासौ च, तयोरनुवादो 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेतेत्यादि' अनुष्ठानक्रमं बोधयितुम्।

---

(भा०चं०) भाष्यं विध्यनुवचनश्चेति। विधिः शब्दो विहितोऽर्थः। कर्तरि विकरणे वा किः। कर्मक्तो विदधातेः। विधानमपूर्वज्ञापनम्।

विहितानुवचनप्रयोजनमाह अधिकारार्थमिति। अधिकारः फलाधिगतये साधनप्रवृत्तिः। अधिकृत्य अधिकारमुद्दिश्य। विहितं करोत्विति निन्दा विहिताकरणे दोषकथनं विधिशेषः विहिताङ्गं विहितगुणः। विहितानन्तरार्थः विहितानन्तरकर्त्तव्यबोधनाय। एवमन्यदप्युत्प्रेक्षणीयम्। अन्यद्विहिते हेयहान्यादि इदमत्र न कुर्यादिति।

(भा०)यथा लौकिकवाक्ये विभागेनार्थग्रहणात्प्रमाणत्वम् एवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हतीति ॥ ६६ ॥

(सू०) "नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः॥" ६७ ॥

(भा०) "पुनरुक्तमसाधु साधुरनुवाद इत्ययं विशेषो नोपपद्यते। कस्मात्? उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते। चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति" ॥ ६७ ॥

(सू०) शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६८ ॥

(भा०) नानुवादपुनरुक्तयोरविशेषः। कस्मात्? अर्थवतोऽभ्यासस्यानुवादभावात्। समानेऽभ्यासे पुनरुक्तमनर्थकम्, अर्थवानभ्यासोऽनुवादः, शीघ्रतरगमनोपदेशवत्। शीघ्रं शीघ्रं

(ख०)सूत्रपञ्चकोक्तमुपसंहरति यथा लौकिक इति।

भाष्योक्तमनुवादप्रयोजनमविद्वानाक्षिपति—नानुवादेति सूत्रम्।

शीघ्रतरेत्यादि समाधानसूत्रम्।

अर्थवानिति। अनुवादलक्षणोऽभ्यासः सप्रयोजनः प्रत्ययविशेषहेतुत्वात् शीघ्रतरगमनोपदेशवदिति।

---

(भा०चं०)वैदिकानुवचनस्य सार्थकत्वज्ञापनाय लौकिकानुवचनम् दृष्टान्तमाह **लोकेऽपीत्यादिना**। अध्येषणा प्रेरणाविशेषः। अवधारणं निश्चितानुमतिः। उपसंहरति **यथा लोके तथा वेदेऽपीति**॥६६॥

अनुवादे सार्थकत्वेन स्थापिते तदाक्षिपति **नानुवादेत्यादि सूत्रम्**। उभयमसाधु असाधकमर्थस्य ॥ ६७ ॥

एतदुद्धरणसूत्रात्पूर्वमेव भाष्यकृत स्वयमेव समाधत्ते **शीघ्र-**

(भा०)गम्यतां शीघ्रतरं गम्यतामिति क्रियातिशयोऽभ्यासे-नैवोच्यते । उदाहरणार्थं चेदम् । एवमन्योऽप्यभ्यासः । पचति पचतीति क्रियानुपरमः । ग्रामो ग्रामो रमणीय इति व्याप्तिः । परि परि त्रिगर्तेभ्यो वृष्टो देव इति परिवर्जनम् । अध्यधिकुड्यं निषण्णमिति सामीप्यम् । तिक्तं तिक्तम् इति प्रकारः ।

एवमनुवादस्य स्तुतिनिन्दाशेषविधिष्वधिकारार्थता विहि-तानन्तरार्थता चेति ॥ ६८ ॥

( भा० ) "किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमा-णत्वं सिध्यति ?"

अतश्च—

(सू०) मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामा-ण्यात् ॥ ६९ ॥

---

( ख० ) अतश्चेति । यतः प्रतिषेधहेतुद्धारादेव शब्दस्य प्रा-माण्यं न सिध्यति-अतः सूत्रकारो हेत्वन्तरैस्तत् साक्षात् साधयति । मन्त्रेत्यादिसूत्रम् । तत्र चकारः पूर्वहेत्वनुकर्षणार्थः । अत्र प्रयो-

---

(भा०चं०)तरेत्यादिना । अभ्यासार्थः वैदिकाभ्यासप्रयोजनम् । विशेषोऽस्तीति शेषः । गम्यतां गम्यतामित्युक्ते शीघ्रं गम्यतामित्यर्थः । अन्यतरस्य तादृशगमने लक्षणा । अन्यतरत् तात्पर्यग्राहकं । पचति पचतीत्यत्र क्रियानुपरमः पचन्नेवास्तीत्यर्थः । व्याप्तिः सर्वग्रामेषु सौन्दर्यस्य परिवर्जनं सर्वतो वर्जनं । तिक्तं तिक्तमिति प्रकारोऽतिक्तभेद-ज्ञानं । दृष्टान्तेषु दर्शितान् विशेषान् दार्ष्टान्तिके उपसंहरति एव-मनुवादस्येति ॥ ६८ ॥

आक्षेप्ता पृच्छति किं पुनरिति । समाधाताह अतश्चेति ।

(भा०)"किं पुनरायुर्वेदस्य प्रामाण्यम् ?"

यत्तदायुर्वेदेनोपदिश्यते–इदं कृत्वेष्टमधिगच्छतीदं वर्जयित्वाऽनिष्टं जहाति, तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थताऽविपर्ययः। मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभाव एतत्प्रामाण्यम्।

किं कृतमेतत् ? आप्तप्रामाण्यकृतम्।

किं पुनराप्तानां प्रामाण्यम् ? साक्षात्कृतधर्मता

---

(ख०) गः–प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवदिति। अथवा–एककर्तृकत्वेन मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यार्थप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्यः।

---

(भा०चं०)सूत्रेण वक्ष्यमाणहेतोश्चेत्यर्थः। **मन्त्रेत्यादिसूत्रम्**। मन्त्रो विषवज्रहरादिमन्त्रः आयुर्वेदो वैद्यकशास्त्रं तयोः प्रामाण्यवत् तत्प्रामाण्यं वेदप्रामाण्यम्। आप्तप्रामाण्यादुपदेष्टृप्रमातृत्वात्।

प्रश्नोत्तराभ्यां सूत्रं व्याचष्टे किं **पुनरित्यादि**। इष्टमारोग्यादि। अनिष्टं रोगादि। तस्य वैद्यकविहितस्य औषधसेवनस्य आपथ्यपरिवर्जनस्य च अनुष्ठीयमानस्य क्रियमाणस्य। तथाभावः इष्टप्रापकत्वमनिष्टहापकत्वञ्चेत्यर्थः। सत्यार्थताऽबाधितार्थकता। अविपर्ययः अनन्यथाभावः। प्रामाण्यमित्यनुषङ्गः। **मन्त्रपदानामिति**। मन्त्रेषु पदविशेषाणां योगिबोध्यानामित्यर्थः। प्रतिषेधार्थानां निषेधप्रयोजनकानां। प्रयोगेऽनुष्ठाने सति। अर्थस्य विषादिनिवृत्तेः। तथाभावो जनकत्वं। प्रामाण्यमित्यनुषङ्गः। आप्तप्रामाण्यकृतमुपदेष्टृप्रमातृत्वप्रयुक्तम्। प्रामाण्यपदार्थमनुबध्यमानः पृच्छति

(भा० ) भूतदया यथाभूतार्थचिख्यापयिषेति । आप्ताः खलु साक्षात्कृतधर्माणः--इदं हातव्यमिदमस्य हानिहेतुरिदमस्याधिगन्तव्यमिदमस्याधिगमहेतुरिति—भूतान्यनुकम्पन्ते— तेषां खलु वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति, न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति, हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामस्त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्ति इति एवमाप्तोपदेशः । एतेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति । एवमाप्तोपदेशः प्रमाणम् । एवमाप्ताः प्रमाणम् ।

---

( ख० ) इदं हातव्यमित्यादि साक्षात्कृतधर्मताम्प्रदर्शयति । हन्तेत्यादि यथाभूतार्थचिख्यापयिषां सूचयति ।

---

(भा०चं०) किमाप्तानां प्रामाण्यमिति । प्रामाण्यं हि प्रमाकरणधर्मः नतु प्रयोजकधर्म इत्याशयः । प्रमातर्यपि प्रामाण्यमस्तीति दर्शयितुमाह साक्षादित्यादि । धर्मस्तत्त्वं तत्साक्षात्कारित्वं तत्साक्षात्कृतधर्मता । भूतदया भूतेषु शरीरिषु दया हि तत्प्राप्त्यहितपरिहारेच्छा । निरुपाधिः । यथाभूतार्थचिख्यापयिषा चेत्येतत्त्रितयमाप्तप्रामाण्यम् । तदिदं क्रियाकारकभावेन दर्शयति आप्ताः खल्वित्यादिना । अनुकम्पन्ते दयन्ते ।प्रमाणरूपं शास्त्रं कुर्वन्तीत्यर्थः । प्रमाणमृते शास्त्रं विना । उपदेशात् शास्त्रात् अवबोधकारणं तत्त्वज्ञानकारणं । समीहा प्राप्त्युपायानुष्ठानं । वर्जनं हान्युपायानुष्ठानम् । अकृत्वा शास्त्रोक्तोपायमकृत्वा स्वस्तिभावः कल्याणप्राप्तिः । उपसंहरति एवमिति । एतेन त्रिविधेन तत्त्वसाक्षात्कारादिरूपेण प्रामाण्येन

(भा०)दृष्टार्थेनाप्तोपदेशेनायुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति । आप्तप्रामाण्यस्य हेतोः समानत्वादिति । अस्यापि चैकदेशो "ग्रामकामो यजेत" इत्येवमादिर्दृष्टार्थः । तेनानुमातव्यमिति ।

लोके च भूयानुपदेशाश्रयो व्यवहारः । लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम् । तत्परिग्रहादाप्तोपदेशः प्रमाणमिति ।

---

(ख०)समानत्वादिति । यथाऽऽयुर्वेद आप्तप्रणीतस्तथा वेदोऽपीत्यर्थः

---

(भा०चं०)उपदेष्टृधर्मेण । परिगृहीतो निर्मितः निश्चितो वा । अनुष्ठीयमानः अर्थतः सेव्यमानः । अर्थस्य द्विविधप्रयोजनस्य साधको हेतुर्भवति । उपदेशोपदेष्ट्रोः प्रामाण्यं फलोपधायकत्वम् । तत्प्रयोजकमुपदेष्टृगतं तत्त्वसाक्षात्कारादित्रयमिति । गुणवृत्त्या(१) प्रमाणशब्द आप्ते प्रयुक्त इति ज्ञेयम् ।

यदर्थं मन्त्रायुर्वेदतत्कर्त्रोः प्रामाण्यमुक्तं तदाह **दृष्टार्थेनेत्यादिना** । मन्त्रायुर्वेदात् वेदस्यैकदेशात् । तत्सिद्धप्रामाण्येनादृष्टार्थवेदभागान्तरे प्रामाण्यमनुमेयमित्याह **अदृष्टार्थ इति** । दृष्टान्तदार्ष्टान्तिकयोः समानं हेतुमाह **आप्तप्रामाण्यस्येति** । अङ्गेष्विवाङ्गिन्यपि दृष्टार्थत्वं दर्शयति **अस्यापीति** । वेदस्यापीत्यर्थः । अपिशब्देनोपवेदसमुच्चयः । तेन दृष्टान्तेन । अदृष्टार्थेऽनुमातव्यं प्रामाण्यमिति शेषः ।

लौकिकालौकिकयोरुपदेशयोः साम्यार्थं पुनरप्याह **लोके चेति** । लौकिकस्य अनृषेः अनार्यस्य प्राकृतजनस्येत्यर्थः । अ-

---

(टि०)१उपचारेण उपचारबीजं तु प्रमाश्रयत्वं प्रमाश्रयेऽपि प्रमाणशब्दप्रयोगस्य तन्मे प्रमाणं शिव इत्यादिना उदयनाचार्यैः कृतत्वात् ।

(भा०)द्रष्टृप्रवक्तृसामान्याच्चानुमानम् । य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवायुर्वेदप्रभृतीनाम्—इत्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति ।

"नित्यत्वाद् वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्" ।

शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वम्, न नित्यत्वात्; नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः । "नानित्यत्वे वाचकत्वमिति" चेद् न, लौकिकेष्वर्थदर्शनात् । "तेऽपि नित्या इति" चेद् न, अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः ।

---

( ख० ) अनाप्तेति । यदि लौकिका अपि शब्दा नित्यास्तर्ह्यनाप्तवचने योऽर्थविसंवादः सकलानुभवगम्यः स न स्यादित्यर्थः ।

---

(भा०चं०)नृषेरप्युपदेशः प्रमाणञ्चेत्किमु वक्तव्यम् ऋष्युपदेशः प्रमाणमित्याह द्रष्टेति । द्रष्टः प्रवक्ताऽप्राकृतवक्ता येषूपदेशेषु तैः सामान्यं सादृश्यम् । आप्तप्रवक्तृकत्वं तस्मादनुमानं वेदप्रामाण्यस्येति शेषः । त एवेति बहुवचनमुपदेष्टुरभ्रान्तत्वज्ञापनार्थम् ।

आप्तोपदेशत्वेन न प्रामाण्यं वेदस्य किन्तु नित्यत्वेनेत्याहुर्मीमांसकाः । तन्मतं निरसितुमनुवदति **नित्यत्वादित्यादि** ।

आक्षेपं परिहरति **शब्दस्येति** । वाचकत्वात्सामयिकत्वात् । अर्थप्रतिपत्तावित्यभेदे सप्तमी । तस्य च प्रमाणत्वैकदेशे प्रमायामन्वयः । सामान्यविशेषयोरभेदोपपत्तेः । परहेतुं निरस्यति न **नित्यत्वादिति** । अत्र दोषमाह **नित्यत्वे हीति** । वेदस्य कार्यत्वे हेत्वसिद्धिं शङ्कते **नानित्यत्व इति** । वाचकत्वं समयेन बोधकत्वम् । परिहरति **न लौकिकेष्विति** । शङ्कते **तेऽपि नित्या इति** । निषेधति

(भा०)नित्यत्वाद्धि शब्दः प्रमाणमिति । "अनित्यः स इति" चेत्, अविशेषवचनम् । अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति । यथानियोगं चार्थस्य प्रत्यायनान्नामधेयशब्दानां लोके प्रामाण्यम् । नित्यत्वात्प्रामाण्यानुपपत्तिः । यत्रार्थे नामधेयशब्दो नियुज्यते लोके तस्य नियोगसामर्थ्यात्प्रत्यायको भवति, न नित्यत्वात् । मन्वन्तरयुगान्तरेषु चातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम् । आप्तप्रामाण्याच्च

---

(ख० )मन्वन्तरेति । महाप्रलये ईश्वरेण वेदान् प्रणीय सृष्ट्यादौ सम्प्रदायः प्रवर्त्यत एवेत्याशयः ।

इति प्रथमाह्निकखद्योतः ।

---

(भा०चं०)नेति । अर्थविसम्वादः अर्थाप्राप्तिः । तथा च प्रतारकवाक्यादप्यर्थसिद्धिः स्यादिति भावः । अत्र हेतुमाह **नित्यत्वाद्धीति** । प्रतारकवाक्ये हेतुरेव नास्तीत्याह **अनित्यः स इति** । नित्यानित्यविभागे हेतुर्नास्तीत्याशयेनाह **अविशेषवचनमिति** । लौकिकः प्राकृतोक्तः । कारणं ज्ञापकं वाच्यं त्वया मीमांसकेनेति शेषः । यथानियोगं यथासमयं समयापरित्यागेन प्रामाण्यं दृष्टमिति शेषः । नियोगसामर्थ्यात् समयपरिज्ञानात् । प्रत्यायकः प्रमापकः न तु नित्यत्वात् । ननु श्रुतिस्मृतिसिद्धं वेदनित्यत्वं कथमकस्मादपलप्यते इत्याशङ्कायां नित्यं कर्मेति वत् वेदनित्यताऽन्यथा स्वीक्रियत इत्याह **मन्वन्तरेत्यादि** । संप्रदाय एकानुपूर्वीकत्वं तेनैवाभ्यासः स्वयमावृत्तिः तेनैव प्रयोगोऽन्यं प्रत्युपदेशः तयोरविच्छेदः स्वरूपाहानिः । इदं नित्यत्वं न पुनरनुत्पन्नाविनष्टत्वम् । उपसंहरति **आप्तप्रामाण्याच्चेति** ।

(भा०)प्रामाण्यम् । लौकिकेषु शब्देषु चैतत्समानमिति ॥ ६९ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीया-
ध्यायस्याद्यमाह्निकम् ।

---

( भा० चं० )नित्यत्वञ्च प्रमाणत्वं सादृश्यादितरेतरम् ।
वेदवेदकयोरुक्तं भक्त्याभक्त्या च वैदिकैः ॥

इतिश्रीवात्स्यायनीयन्यायभाष्यचन्द्रे द्वितीयाध्यायस्याद्याह्निके
शब्दविशेषलक्षणपरीक्षाप्रकरणभाष्यचन्द्रिका ।

समाप्तञ्चात्राद्यमाह्निकम् ।

## अथ द्वितीयाध्यायस्य द्वितीयमाह्निकम् ।

### (१) प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ।

( भा० ) अयथार्थः प्रमाणोद्देश इति मत्वाऽऽह—

( सू० )"न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभाव-प्रामाण्यात्" ॥ १ ॥

(भा०)"न चत्वार्येव प्रमाणानि। किं तर्हि ? ऐतिह्यमर्थापत्तिः सम्भवोऽभाव इत्येतान्यपि प्रमाणानि । तानि कस्मान्नोक्तानि ।

इति होचुरित्यनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् ।

---

(ख०)एवं प्रथमाह्निके धर्मिणः प्रत्यक्षादीन् शब्दान्तान्निरूप्येदानीं द्वितीयाह्निके चतुष्ट्वादयस्तेषां धर्मा निरूपणीयाः । तत्र प्रमाणधर्मपरीक्षा द्वितीयाह्निकार्थः ।

अयथार्थ इति । प्रमाणानां विभागोद्देशो यः सोऽयथार्थ इत्यर्थः ।

नचतुष्ट्वमित्यादि पूर्वपक्षसूत्रम् । अभ्युपगतोक्तप्रत्यक्षादिप्रमाणभावोऽनभ्युपगतचतुष्ट्वमात्रोऽत्र पूर्वपक्षी । अथ वा तन्त्रान्तरोक्तप्रमाणान्तरसत्त्वासत्त्वनिश्चयरहितः सतीर्थ एवात्र प्रष्टा ।

---

( भा० चं० ) अथ प्रमाणचतुष्ट्वपरीक्षाप्रकरणम् ।

न चतुष्ट्वमित्यादिसूत्रम् । प्रमाणेष्वष्टत्वसंख्यापादनं सूत्रार्थः । ऐतिह्यलक्षणमाह इति होचुरित्यादिना । अनिर्दिष्टोऽनिश्चितः प्रवक्ता यस्य स तथा । प्रवादो वाक्यविशेषः तस्य पारम्पर्य्यं लोकपरम्परोक्तत्वं भावेन भविताऽत्रोक्तः(१) । तथा च परम्परोक्तप्रवादविशेष ऐतिह्यम् ।

---

( टि० ) १ पारम्पर्यशब्देन परम्परोक्तेत्यर्थः ।

(भा०)अर्थादापत्तिरर्थापत्तिः। आपत्तिः-प्राप्तिः-प्रसङ्गः। यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा मेघेष्वसत्सु वृष्टिर्न भवतीति। किमत्र प्रसज्यते? सत्सु भवतीति।

सम्भवो नामाविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्। यथा द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम् आढकस्य ग्रहणात्प्रस्थस्येति।

अभावो विरोधी-अभूतं भूतस्य, अविद्यमानं वर्षकर्म

---

(भा०चं०)अर्थात्फलादापत्तिरापादनं प्रत्ययविशेषः। इदं व्याचष्टे **प्राप्तिः प्रसङ्ग इत्याभ्याम्**। क्रियाकर्मणोरभेदोपचारेणाह **योऽन्य इति**। अभेदोपचारेण गुणो मूलं या भक्तिरित्युच्यते उभाभ्यां भज्यमानो धर्मः परस्परसादृश्याख्यः। स चेह धर्मः कर्मत्वं कर्मत्वञ्च कर्तृसाध्यत्वं तत् क्रियायामिव क्रियाविषयेऽपि विद्यत इति। प्रसज्यमानस्य प्रसञ्जकमाह **यथा मेघेष्विति**। असत्सु अविद्यमानेषु न भवति नोत्पद्यते। कारणस्य विद्यमानता हि कारणत्वं या शक्तिरित्युच्यते तदभावः कार्यानुत्पत्तौ प्रयोजकः यः कार्यप्रतिबन्धक इत्युच्यते तद्विपरीतं कारणं ततः कारणे सति कार्यं प्रसज्यत इति वक्तुं पृच्छति **किमत्र प्रसज्यत इति**। उत्तरमाह **सत्सु भवतीति**। सत्सु मेघेष्विति शेषः। भवतीत्यस्य वृष्टिरिति शेषः। सम्भवभाष्यं स्फुटम्।

अभावप्रमाणं व्याचष्टे विरोधि विपरीतं तथा च भावशब्दोऽयं कर्तृसाधनो ज्ञेयः। भवतीति भावः। तथाभूतमित्यपि। भूतमिति त्रिलिङ्गं भाव इति पुलिङ्गः स्वभावात् द्वयोरपि विद्यमानमर्थः। तद्विपरीतमभावोऽभूतमिति। एतेनेह सत्ताभाव इति निरस्तम्। उदाहरति **अविद्यमानमित्यादिना**। वाय्वभ्रसंयोगस्य वृष्टिप्रतिबन्धकमरु-

(भा०)विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम् । विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न भवतीति" ॥ १ ॥

( भा० ) सत्यमेतानि प्रमाणानि, न तु प्रमाणान्तराणि । प्रमाणान्तरं च मन्यमानेन प्रतिषेध उच्यते । सोऽयम्—

(सू०)शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः ॥ २ ॥

---

( ख० ) वाय्वभ्रेति । अपाम्पातप्रत्यनीकस्य पातविरोधिनः वाय्वभ्रसंयोगस्य ग्रहणम् । तदिदं किलाभावाख्यम्प्रमाणम् । प्रमीयतेऽनेन ( मेघोदयेऽपि तोयपाताभावेन ) वाय्वभ्रसंयोग इत्याशयः ।

सत्यमिति । सत्यमेतान्यैतिह्यादीनि प्रमाणानि—न तु प्रत्यक्षादिभ्योऽन्यानि । प्रत्यक्षादिभ्योऽन्यत् प्रमाणन्नास्तीत्येतावन्मात्रेऽस्माकमाग्रहः । न चैतिह्यादीनाम्प्रमाणत्वमेव न मृष्यामह इति हृदयम् ।

सोयमिति—अनुपपन्नः प्रतिषेध इत्यग्रिमेण भाष्यग्रन्थेनान्वयः ।

शब्द इत्यादिसिद्धान्तसूत्रमुक्तानाम्प्रागुक्तेष्वेवान्तर्भावप्रदर्शनार्थम् ।

---

(भा०चं०)णमेघसंयोगविशेषस्येत्यर्थः । प्रतिपादकं प्रमापकम् । सत्यपि मेघे वृष्ट्यभावे इदं बोध्यमित्याह **विधारके हीति** ॥ १ ॥

एतानि प्रमाणत्वेनाङ्गीकृत्याह **सत्यमिति** । निषेधकोटिमाह **नत्विति** । मन्यमानेन भवतेति शेषः । प्रतिषेधः चत्वार्येव प्रमाणानि नेत्याकारः । स चतुष्ट्वसंख्यानियमविषयः । अयं भवतोच्यमानः । अप्रतिषेध इति सूत्रस्थपदेनान्वयः । **शब्द इत्यादिसूत्रम्** । अनर्थान्तरभावोऽभेदः । ऐतिह्यस्य शब्दे सम्भवादेरनुमानेऽन्तर्भाव इति सूत्रार्थः ।

(भा०)अनुपपन्नः प्रतिषेधः । कथम्? आप्तोपदेशः शब्दः इति । न च शब्दलक्षणमैतिह्याद्व्यावर्तते । सोऽयं भेदः सामान्यात्सङ्गृह्यत इति ।

प्रत्यक्षेणाप्रत्यक्षस्य सम्बद्धस्य प्रतिपत्तिरनुमानम् । तथा चार्थापत्तिसम्भवाभावाः । वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थ-

---

(ख०)शब्दलक्षणमिति । यत् खल्वनिर्दिष्टप्रवक्तृकप्रवादपारम्पर्यमैतिह्यं तस्य चेदाप्तः कर्ता नावधारितः, ततस्तत् प्रमाणमेव न भवति। अथाक्षरपरम्परेत्यवगतं तत्राप्तोपदेश इति शब्दलक्षणन्नातिवर्तत इत्यर्थः ।

वाक्यार्थेति । असत्सु मेघेषु वृष्टिर्न भवतीत्येतद्वाक्यमवगत्य तेनानभिहितं 'सत्सु मेघेषु भविष्यतीति' अवगच्छत्यर्थापत्त्येति पूर्वपक्षिणोऽभिमतम् । एतच्चानुमानमेव—यतोऽस्त्येवोक्तयोर्वाक्ययोर्विरोधरूपः सम्बन्धोऽनुमानबीजम् ।

---

(भा०चं०)अप्रतिषेध इत्यत्र नञस्तात्पर्यमाह **अनुपपन्न इति**। अन्यथा भवतोच्यमानः प्रतिषेधोऽप्रतिषेध इति व्याघातः स्यात् । पृच्छति **कथमिति** । अनुपपन्न इत्यनुषङ्गः । एकैकमुत्तरमाह **आप्तोपदेश इत्यादि यथार्थ एव प्रमाणोद्देश** इत्यन्तेन । शब्दलक्षणमाप्तोपदेशत्वं ऐतिह्याद्व्यावर्तते ऐतिह्ये न वर्त्तत इत्यर्थः । सोऽयं भेदः ऐतिह्यरूपशब्दविशेषः सामान्यादेकलक्षण्यात् संगृह्यते समानत्वेन गृह्यते समानत्वमभेदः । समानाः सत् समैके स्युरिति कोशात् ।

संभवाऽभावशब्दाविह तज्जन्यप्रतीतिपरौ क्रियाप्रकरणात्(१) । अर्थापत्तेरनुमानत्वोपपादकमाह **वाक्येत्यादिना** । वाक्यार्थस्य संप्रत्ययः तेनानभिहितस्याप्रतिहतस्याप्रतिबद्धस्येत्यर्थः । प्रत्यनीकभावा-

---

(टि०) १ क्रियाप्रकरणादित्यत्र क्रियापदेन ज्ञानरूपक्रिया गृह्यते भाष्यकारैः सर्वत्र ज्ञानस्यैव प्रमाणत्वस्वीकारात् ।

(भा०)स्य प्रत्यनीकभावाद्ग्रहणमर्थापत्तिरनुमानमेव । अविनाभाववृत्त्या च सम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः, तदप्यनुमानमेव । अस्मिन्सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते । सोऽयं यथार्थ एव प्रमाणोद्देश इति ॥ २ ॥

( भा० ) "सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणीत्युक्तम् । अत्रार्थापत्तेः प्रमाणभावाभ्यनुज्ञा नोपपद्यते । तथा हीयम्—

(सू०)"अर्थापत्तिरप्रमाणमनैकान्तिकत्वात्" ॥ ३ ॥

( भा० ) "असत्सु मेघेषु वृष्टिर्न भवतीति सत्सु भवतीत्येतदर्थादापद्यते । सत्स्वपि चैकदा न भवति । सेयमर्थापत्तिरप्रमाणमिति" ॥ ३ ॥

( भा० ) नानैकान्तिकत्वमर्थापत्तेः—

(सू०)अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥

---

( ख० )अर्थापत्तिरिति पूर्वपक्षसूत्रम् ।

अनर्थेति सिद्धान्तसूत्रम् ।

---

(भा०चं०)त् विपरीतव्याप्तेः । ग्रहणमनुमितिः । अभावस्यानुमितित्वमाह **अस्मिन्निति** । विरोधित्वे प्रतिबन्धकत्वे प्रसिद्धे प्रमिते सति कार्यानुत्पत्त्या प्रतिबन्धानुत्पत्त्या । उपसंहरति **सोऽयमिति** । भवताऽज्ञानेन प्रतिषिध्यमान इत्यर्थः । प्रमाणोद्देशः चातुर्विध्येनैव प्रमाणविभागः ॥ २ ॥

अर्थापत्तेरनुमानत्वे स्थापिते व्यभिचारेण दूषयितुमाह **सत्यमित्यादि तथाहीयमित्यन्तम्** । **अर्थापत्तिरित्यादि** सूत्रम् । तद्भाष्यम**सत्स्वित्यादि** ॥ ३ ॥

(भा०)असति कारणे कार्यं नोत्पद्यत इति वाक्यात्प्रत्यनीकभूतोऽर्थः सति कारणे कार्यमुत्पद्यते इत्यर्थादापद्यते,-अभावस्य हि भावः प्रत्यनीक इति । सोऽयं कार्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति । न खल्वसति कारणे कार्यमुत्पद्यते । तस्मान्नानैकान्तिकी ।

यत्तु "सति कारणे निमित्तप्रतिबन्धात्कार्यं नोत्पद्यते" इति, कारणधर्मोऽसौ न त्वर्थापत्तेः प्रमेयम् । किं तर्ह्यस्याः प्रमेयम् ? सति कारणे कार्यमुत्पद्यते इति योऽसौ कार्योत्पादः कारणस्य सत्तां न व्यभिचरति तदस्याः प्रमेयम् । एवं तु सत्यनर्थापत्तावर्थापत्त्याभिमानं कृत्वा प्रतिषेध उच्यते इति । दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ॥ ४ ॥

(सू०) प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

---

( ख०. )न व्यभिचरतीति । ततश्च नानैकान्तिकतेति भावः । उच्यत इति । पूर्वपक्षिणा तृतीयसूत्र इति शेषः । प्रतिषेधेति सिद्धान्तिनः सूत्रम् ।

---

(भा०चं०)परिहर्तुमाह **नेत्यादि** । **अनर्थापत्ताविति** सूत्रम् । व्याचष्टे**ऽसतीत्यादिना** । कारणे कारणकलापे नतु मेघमात्रे इति भावः । अभावस्य अभूतस्य भावो भूतं । प्रत्यनीको विधिः । सत्तां सामग्र्याः सत्तां । तथा च वाय्वभ्रसंयोगप्रतिबन्धे कार्यानुत्पत्तिर्न दोष इति भावः । **न खल्विति** । कारणे यत्कारणं फलोपधायकं तावतोऽन्यतमेऽप्यसतीत्यर्थः ।

निमित्तप्रतिबन्धः वाय्वभ्रसंयोगादिरूपस्तस्मात् । कारणधर्मोऽसौ असौ प्रतिबन्धस्वरूपः । अस्याः प्रमेयमस्या विषयः । अज्ञानाद्दूषणमिदमित्याह **एवन्त्विति** ॥ ४ ॥

( भा० ) अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वादिति वाक्यं प्रतिषेधः। तेनानेनार्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः। एवमनैकान्तिको भवति । अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यते इति ॥ ५ ॥

(भा०) अथ मन्यसे–"नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति, न च प्रतिषेधस्य सद्भावो विषयः" ! एवं तर्हि—

(सू०) तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥

---

(ख०)एवमिति । एवं ह्यैकान्तिकः स्याद्यद्यर्थापत्तेः प्रामाण्यं सत्तां च प्रतिषेधेत् । नत्वनैकान्तिकत्वात्सत्त्वं प्रतिषेद्धुमर्हति । न भवति 'यदनैकान्तिकं तत् सर्वं नास्तीति'। प्रमेयत्वादीनां नित्यत्वसाधनेऽनैकान्तिकत्वेऽपि सत्त्वादिति हृदयम् ।

तदिति सिद्धान्तिनः सूत्रम् । तदिति प्रतिषेधं परामृशति ।

---

(भा०चं०)भवदुक्तोऽसमर्थः प्रतिषेध इत्याह **प्रतिषेधाप्रामाण्यमिति सूत्रम्** ।शेषषष्ठीसमासः । धर्मिविशिष्टो धर्मः साध्यः । अनेकान्तिकत्वादिति हेतुः । तमुपपादयन्नाह **भाष्यकृदर्थापत्तिरित्यादि** ।वाक्यं प्रतिषेध इति करणव्युत्पत्त्या घअन्तत्वादसमानलिङ्गत्वम् । तां व्युत्पत्तिं दर्शयन्नाह **तेनेत्यादि** । न सद्भावो न स्वरूपम् । एवमत इत्यर्थः । अनैकान्तिको भवति प्रतिषेध इत्यनुषङ्गः । स्वयमसिद्धः कथं परं बाधते इत्युपहसन्नाह **अनैकान्तिकत्वादित्यादि** । अप्रमाणेन अप्रमाकरणेन न प्रतिषिध्यते न प्रतिषिद्धिप्रमाक्रियते । न च सद्भावो विषयः प्रतिबध्य इत्यर्थः । एवंमवमङ्गीकृते सतीत्यर्थः ॥ ५ ॥

**तत्प्रामाण्येवेति** सूत्रं समीकरणार्थम् ।यदि भवदुक्तनिषेधस्य प्रमाणं विषयः तदार्थापत्तेरपि स्वविषये प्रामाण्यमेव अर्थापत्त्या हि वृ-

(भा०) अर्थापत्तेरपि कार्योत्पादेन कारणसत्ताया अव्यभिचारो विषयः, न च कारणधर्मो निमित्तप्रतिबन्धात् कार्यानुत्पादकत्वमिति ॥ ६ ॥

(भा०) "अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते।" कथमिति?—

अभावस्य भूयसि प्रमेये लोकसिद्धे वैयात्यादुच्यते

(सू०) "नाभावप्रामाण्यं प्रमेयासिद्धेः" ॥ ७ ॥

---

(ख०) नाभावेति पूर्वपक्षसूत्रम्। नाभावज्ञानम्प्रमाणम्। कस्मात्? प्रमेयस्याभावस्यासिद्धेः। यत् किल सर्वोपाख्यारहितं तन्न प्रमाणज्ञानविषयभावमनुभवति। केवलं काल्पनिको ह्यभावव्यवहारो लौकिकानामिति पूर्वपक्षिणो हृदयम्।

अभावस्येति। सर्वजनीनाभावप्रत्ययव्यवहारौ न काल्पनिकौ भवितुमर्हतः। नच कल्पनाऽपि सर्वोपाख्यारहितं गोचर-

---

(भा० चं०) वृष्टिरूपे कार्ये मेघस्यावश्यकतोक्ता न त्वव्यभिचार एवेति। सति मेघे वृष्टिर्भवति न तु भवत्येवेति। एतत्तात्पर्येणाह भाष्यकृत् **अर्थापत्तेरपीत्यादिना**। कार्योत्पादनकर्त्रा सति मेघे वृष्ट्युत्पत्त्या कारणसत्ताया मेघसत्त्वस्य। कर्मणि षष्ठी। अव्यभिचारो व्यभिचाराभावः। मेघसत्तां वृष्टिर्न व्यभिचरतीत्यर्थः। तथा च सति मेघे वृष्टिर्भवत्येवेति अर्थापत्तेर्विषयं मत्वा यन्निषिद्धं तन्नेत्याशयेनाह **न चेति**। कारणस्य मेघस्य धर्मः कार्यानुत्पादकत्वं वृष्ट्यकारणत्वं स्वरूपभूतशक्त्यभावः प्रतिबन्धे सति फलं न जायत इति भावः। सहकारिसम्बन्धस्यापि कारणत्वात्। सहकारी च प्रतिबन्धकाभाव इति ॥ ६ ॥

अभावप्रामाण्यनिषेधमवतारयति **अभावस्येति**। **नाभावेत्यादि** सूत्रम्। प्रमेयासिद्धेः प्रमेयासाधकत्वात् प्रमेयस्य अभावस्य

( भा० ) नाभावप्रामाण्यं प्रमेयासिद्धेरिति ॥ ७ ॥

( भा० ) अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते—

(सू०) लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धिः ॥ ८ ॥

(भा०)तस्याभावस्य सिध्यति प्रमेयम् । कथम् ? लक्षितेषु वासःसु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वाल्लक्षणाभावेन लक्षितत्वादिति । उभयसन्निधावलक्षितानि

---

( ख० )यितुमर्हति ।

वैयात्यादिति । साहसमात्रादित्यर्थः ।

लक्षितेष्विति सिद्धान्तसूत्रमनेकधा भिन्नप्रपञ्चस्योदाहरणार्थम् ।

---

(भा०चं०)विश्वरूपत्वादिति भावः । **अभावस्येत्यादि** भाष्यम् । अभावस्य योग्यानुपलब्धिगम्यस्य । भूयसि प्रचुरे प्रमेये विषये लोकसिद्धे प्रमिते सत्यपीति शेषः । वैजात्यात् निर्लज्जत्वात्(१) ॥ ७ ॥

अभावस्य चातुर्विध्यात् अर्थबहुत्वम् । एकदेशे प्रागभावे । **लक्षितेष्वित्यादि सूत्रम्** । लक्षितेषु चिह्नितेषु अलक्षणं चिह्नाभावः(२) । तेन लक्षितमितरभेदेन ज्ञापितं तस्य भावस्तस्मात् अलक्षितानामचिह्नितानां वस्त्वादीनां तत्प्रमेयं अभावप्रमेयं तस्य सिद्धिः प्रमितिः इदमाह भाष्यकृत् **तस्येत्यादिना** । सिध्यति प्रमीयते प्रमेयं विषयः । हेतुं पृच्छति **कथमिति** । उत्तरं **लक्षितेषु वासःस्विति** । वासःसु चिह्निताचिह्नितेषु मध्ये केषुचिद्वस्त्रेषु अनुपादेयेषु अनुपादेयत्वेनोपदिष्टेषु उपादेयत्वेनोपदिष्टानाम् । उपदेशं प्रकटयति **उभये**-

---

(टि०)१ वैजात्यादित्यस्य स्थाने वैयात्यादिति पाठः समीचीनः।
२ लक्षणाभावः इत्यर्थः ।

(भा०)वासांस्यानयेति प्रयुक्तो येषु वासस्सु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते, प्रतिपद्य चानयति । प्रतिपत्तिहेतुश्च प्रमाणमिति ॥ ८ ॥

(सू०)"असत्यर्थे नाभाव इति" चेन्नान्यलक्षणोपपत्तेः ॥ ९ ॥

( भा० ) "यत्र भूत्वा किञ्चिन्न भवति तत्र तस्याभाव उपपद्यते । अलक्षितेषु च वासस्सु लक्षणानि भूत्वा न न भवन्ति, तस्मात्तेषु लक्षणाभावोऽनुपपन्न इति" ।

नान्यलक्षणोपपत्तेः । यथाऽयमन्येषु वासस्सु लक्षणाना-

( ख० ) प्रमाणमिति । लक्षणस्याभाव एव च प्रतिपत्तेर्हेतुरिति । लक्षणाभावज्ञानं विशिष्टे वाससि प्रत्ययं जनयत् साधकतमत्वात्प्रमाणम्भवतीत्याशयः ।

असत्यर्थ इति पूर्वपक्षानुस्यूतं सिद्धान्तसूत्रम् । प्रध्वंस एवाभावः, तस्य भावाधीननिरूपणत्वात्प्राप्तिपूर्वकत्वाद् भावपूर्वकत्वान्नान्योऽस्त्यभाव इति मन्वानस्य पूर्वपक्षः ।

तत्र समाधानम् प्रत्यक्षं हि प्रमाणं प्रमेयाभावं व्यवस्थापयति । तच्च प्रध्वंसवत् प्रागभावेऽपि तुल्यम् । प्रतियन्ति हि लौकिकाः दध्नि क्षीराभावं प्रध्वंसरूपं, क्षीरे च दध्यभावम्प्रागभावरूपमिति ।

(भा०चं०)त्यादिना । प्रयुक्तो नियुक्तः प्रमातेति शेष । न भवन्तीत्यस्य पश्यतीति शेषः । लक्षणाभावेन दृष्टेनेति शेषः । प्रतिपद्यते उपादीयत्वेनेति शेषः । उपादानमानयनमिति व्याचष्टे **आनयतीति** ॥ ८ ॥

प्रध्वंसाभिप्रायेण प्रतिषेधसूत्रमिदमसदित्यादिचेदन्तम् ।तत्र **नेत्यादिसूत्रं समाधानम्** । पूर्वपक्षभागं व्याचष्टे **यत्र भूत्वेत्यादिनाऽनुपपन्न इत्यन्तेन** । समाधानं **नेत्यादि** । उपपत्तिमुत्पत्तिम् ।

( भा० )मुपपत्तिं पश्यति नैवमलक्षितेषु । सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यते इति ॥ ९ ॥

(सू०)"तत्सिद्धेरलक्षितेष्वहेतुः" ॥ १० ॥

( भा० ) "तेषु वासस्सु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम् । यानि च लक्षितेषु विद्यन्ते लक्षणानि तेषामलक्षितेष्वभाव इत्यहेतुः । यानि खलु भवन्ति तेषामभावो व्याहत इति" ॥ १० ॥

(सू०) न लक्षणावस्थितापेक्षासिद्धेः ॥ ११ ॥

( भा० ) न ब्रूमो—यानि लक्षणानि भवन्ति तेषामभाव इति । किन्तु केषुचिल्लक्षणान्यवस्थितानि अनवस्थितानि केषु-

---

( ख० ) तत्सिद्धेरिति पूर्वपक्षिसूत्रम् । यत्र लक्षणानि सन्ति तत्र तेषामभावो व्याहतः । यत्र च न सन्ति तत्राप्यभावोऽनुपपन्नः, तस्य भावाधीननिरूपणस्य तदभावेऽशक्यनिरूपणत्वादित्यर्थः ।

नलक्षणेति सिद्धान्तसूत्रम् ।

---

( भा० चं० )लक्षणाभावं लक्षणप्रागभावं । लक्षणानुत्पत्तिमित्यर्थः । अर्थं साध्यम् आनेयत्वरूपं । प्रतिपद्यतेऽनुमिनोति । असद्विषयमनुमानमिदम् पूर्वोक्ततृतीयम् ॥ ९ ॥

पूर्वपक्षसूत्रं **तत्सिद्धेरित्यादि** । तत्पदार्थं व्याचष्टे **तेषु वासःस्विति** । लक्षितेषु लक्षणयुक्तेषु सिद्धिर्विद्यमानता सत्ता । भवति विद्यते । अभावोऽसत्त्वं नेत्यन्वयः । अहेतुत्वमुपपादयति **न खल्विति** । भवन्ति सन्ति । अभावोऽसत्त्वम् ॥ १० ॥

सिद्धान्तसूत्रं **नेत्यादि** । दूषकाशयं निराकरोति **नब्रूम इति** । तेषामभाव इति । अभावोऽसत्त्वम् । असत्त्वञ्च स्वरूपत्यागः । तर्हि किं

(भा०)चित् । अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

(सू०) प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

( भा० ) अभावद्वैतं खलु भवति,–प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चात्मनो हानादविद्यमानता । तत्रालक्षितेषु वासस्सु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥ १२ ॥

---

( ख० ) प्रतिपद्यत इतीति । अभावो हि भावज्ञानाधीनानिरूपणो न भावमात्राधीननिरूपणः । प्रागभावोऽपि च शक्यो भविष्यद्भावज्ञाने-नान्यत्रावस्थितभावज्ञानेन वा निरूपयितुमिति न प्रागभावाभाव इत्यर्थः ।

प्रागुत्पत्तेरिति सिद्धान्तिसूत्रम् ।

---

(भा०चं०)ब्रूषेत्यपेक्षायामाह **किंन्त्वति** । केषुचिद्विद्यमानलक्षणकेषु अवस्थितानि स्वरूपं धारयन्ति । केषुचित्संज्ञानलक्षणकेषु अनव-स्थितानि अपेक्षमाणो दिदृक्षमाणः । भावमुत्पत्तिम् । उत्पन्नसत्त्वं वा । न पश्यति योग्यं नोपलभते । लक्षणाभावेन लक्षणायोगेन प्रकारेण प्रतिपद्यते पश्यति ॥ ११ ॥

अलक्षितत्वेन दर्शनाद्विद्याभावमवगाहत इत्याह **प्रागु-त्पत्तेरित्यादि सूत्रम्** । विभज्य व्याचष्टे **अभावद्वैत-मिति** । खल्वित्यवधारणे । भवति प्रमीयते । नेतरो न प्रध्वंसः । प्रकृताभिप्रायमिदम् । वस्तुतस्तु अभावस्त्रिविधः नित्यस्योपाधिभेदे-न भेदात् ॥ १२ ॥

इतिश्रीवात्स्यानीयभाष्यचन्द्रे प्रमाणविभागपरीक्षाप्रकरणचन्द्रिका ॥

## (२) शब्दानित्यताप्रकरणम् ।

( भा० ) 'आप्तोपदेशः शब्द' इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते । तस्मिन् सामान्येन विचारः—किंनित्योऽथानित्य इति ।

---

(ख०)अस्य प्रकरणस्य प्रयोजनं यथा । पदवाक्यकौटस्थ्यशङ्काव्युदासेन निष्प्रत्यूहमाप्तोक्तसिद्धौ वेदप्रामाण्यासिद्धिः । अन्यथा ह्यपौरुषेयत्वे दोषप्रवृत्तौ यथाऽप्रामाण्यं तथा तदर्थोपलम्भप्रातिपिपादयिषालक्षणगुणनिवृत्तावप्यप्रामाण्यमाशङ्क्येत—अनैवम्मूलानां लोकेऽप्रामाण्यदर्शनात् । अपि च शब्दस्यानित्यत्वसिद्धावाकाशगुणत्वं सिध्येत, तथा-चेन्द्रियनियम उपपद्येतेत्येतदपि प्रयोजनम् । अन्यथा गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थां इति भज्येत ।

अत्र च शब्दसामान्यस्यैव विचारः । वर्णात्मकस्य तु तस्य विचारोऽग्रिमे तृतीये प्रकरणे वर्तिष्यते ।

---

ॐश्रीगणेशायमः ।

(भा०चं०)(१) नित्यानित्यस्वरूपाय प्रकृतिप्रत्ययात्मने ।
परमात्मन्नमस्तेऽस्तु शब्दब्रह्मसरस्वते ॥

शब्दनित्यानित्यत्वपरीक्षाप्रकरणमवतारयति **आप्तोपदेश इत्यादिना** । प्रमाणभावे प्रामाण्ये निमित्ते प्रामाण्यनिर्वाहाय शब्दस्येति शेषः । ब्रुवता भगवतर्षिणेति शेषः । नाना अनेकः प्रकारो विशेषो यस्येति विग्रहः । यद्वा नाना चासौ प्रकारश्चेति विग्रहः । स्वस्यैव प्रकारप्रकारिरूपतोपपत्तेः । निमित्तभेदान्नीलोत्पलवत्सामान्यविशेषभावेन

---

(टि० ) १ नित्यानित्येति विशेषणं शब्दस्य नित्यत्वानित्यत्ववादिमताभिप्रायेण ।

(भा०)विमर्शहेत्वनुयोगे च विप्रतिपत्तेश्च संशयः।

आकाशगुणः शब्दो विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके। गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्ति-

---

( ख० ) आकाशगुण इति जरन्मीमांसकमतमाह। अवघात-प्रेरितेन वायुना यावद्वेगमभिप्रतिष्ठमानेन कर्णशष्कुल्यवच्छिन्ननभो-भागसमवेतो नित्यः शब्दो व्यज्यत इति तन्मतसङ्क्षेपः।

गन्धादीति साङ्ख्यमतमाह। पञ्चतन्मात्रोत्पन्नभूतसूक्ष्मसमुदायार-ब्धपृथिव्यादिविकारो गोघटादिवृत्तिः शब्दो योग्यदेशस्थ आहङ्कारि-कतया व्यापकं विषयदेशस्थं श्रोत्रेन्द्रियं विकुर्वन्नवस्थित एव गृह्यत इति तत्सङ्क्षेपः।

---

(भा०चं०)भेदसम्भवात्। तस्मिन् शब्दे सामान्येन प्रकारेण विशेषिते विचारः विचार्यतेऽनेनास्मिन्निति विचारः। अकर्तरि च कारके इति घञ्। तदाकारं दर्शयति **किमिति**। अत्र शब्द इति शेषः। संश-यहेतुमाह **विप्रतिपत्तेरिति**। तत्प्रयोजकं कारणसिद्धान्तभेदं चतुर्धा वादिभेदं दर्शयति **आकाशेत्यादिना**। विभुः परमम-हान्। नित्योऽनुत्पत्तिविनाशधर्मा। पराभिप्रायेण अभिव्यक्तिराविर्-भावः प्रकटीभावोऽन्तर्हितस्य ज्ञापकवशाज्ज्ञानं प्रतिपत्तिर्न तूत्पत्तिः, सा धर्मः स्वभावो यस्य सोऽभिव्यक्तिधर्माऽनित्योऽपि भवतीति तद्-व्यावृत्तयेऽभिव्यक्तिधर्मैवेत्यवधारणे कः। यः शाब्दिकैः स्वार्थिक इ-त्युच्यते सोऽस्माभिः परव्यावृत्त्यर्थक उच्यतेऽन्यगतिसम्भवात्।

द्वितीयसिद्धान्तमाह **गन्धादीति**। सहवृत्तिरेकाधिकरणनिष्ठः। द्रव्येषु पञ्चसु भूतेषु। सन्निविष्टोऽन्तर्हितः। गन्धादिवदित्यनेन स-होत्पत्तिरपि दर्शिता। अभिव्यक्तिधर्मक इति पूर्ववत्। अवस्थितो नित्यत्वादिति वा।

(भा०)धर्मक इत्यपरे। आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे। महाभूतसङ्क्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये। अतः संशयः,—किमत्र तत्त्वमिति।

अनित्यः शब्द इत्युत्तरम्। कथम्?—

(सू०) आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥ १३ ॥

---

( ख० ) आकाशेति तृतीयं वैशेषिकमतमाह।

महाभूतेति बौद्धराद्धान्तमाह।

आदिमत्त्वादित्यादि सिद्धान्तसूत्रम्।

---

(भा०चं०)तृतीयं स्वसिद्धान्तमाह–**आकाशगुणेत्यादिना**। कः पूर्ववत्।

चतुर्थमाह महाभूतेत्यादिना। सङ्क्षोभः संयोगविशेषो विभागविशेषश्च। अनाश्रितो निराधारः।(१)अतः एभ्यः(२)। एषां श्रवणादित्यर्थः। संशयाकारं दर्शयति। **किमत्र तत्त्वमिति**। तत्त्वमनारोपितप्रकारः।

स्वसिद्धान्तं स्थापयितुमाह–**अनित्यः शब्द इति**। कथं कुतः ॥ १३ ॥

**आदिमत्त्वादित्यादि**सूत्रं हेतुत्रयीबोधकम्। वादकथेयं गुरुशिष्ययोः। अतो हेत्वाधिक्यं न दोषः। (३)यद्वा द्वितीयादि हेतूपपा-

---

( टि० ) १ संशयकारणीभूतविप्रतिपत्तिषु प्रथमा जरन्मीमांसकानां द्वितीया सांख्यानां तृतीया वैशेषिकाणां चतुर्थी बौद्धानाम्।

२ एभ्य इति पूर्वोक्तपक्षेभ्यः।

३ हेतुत्रयोद्भावनं न निग्रहप्रयोजकं वादकथात्वात् भाष्ये वादलक्षणघटकपञ्चावयवोपपन्नत्वविशेषणं वादे न्यूनाधिकयोरभ्यनुज्ञानार्थमुक्तं तेन ज्ञायते वादकथायामपि हेतुत्रयोद्भावनं निग्रह प्रयोजकमित्यरुचेराह यद्वेति।

(भा०)आदिर्योनिः कारणम्,–आदीयते अस्मादिति । कारणवदनित्यं दृष्टम् । संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति । "का पुनरियमर्थदेशना,–कारणवत्त्वादिति ?" उत्पत्तिधर्मकत्वादनित्यः शब्द–इति भूत्वा न भवति विनाशधर्मक इति ।

"सांशयिकमेतत्–किमुत्पत्तिकारणं संयोगविभागौ शब्दस्य, आहोस्विदभिव्यक्तिकारणम्—"इत्यत आह–ऐन्द्रियकत्वात् । इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः ।

---

(भा०चं०)दिकं इति नाधिक्यम् ।

हेतुं व्याख्यातुमाह **आदिरिति** । यौति जनयतीति योनिः स्वभावे स्त्रीलिङ्गमिदं पदम् । करोतीति कारणं । गुणप्रकृतिप्रत्ययविभागेनादिपदं व्याचष्टे **आदीयत इति** । उत्पद्यतेऽस्मादिति हेतौ पञ्चमी । आदीयत इति कर्मकर्तरि च पुंयोगः । तेन प्रयोज्यप्रयोजककर्त्रोरपि प्राप्तिः । कारणवदनित्यं दृष्टं यथा घटादीति शेषः । संयोगविभागजः संयोगविभागान्यतरजन्यः । कारणवत्त्वादित्यर्थापनं पृच्छति **का पुनिरिति** । अर्थदेशना अर्थापना । उत्तरमाह **उत्पत्तिधर्मकत्वादिति** । कारणतानिरूपितकार्यता हि कारणवतो भावः । कार्यता च कृतिरुत्पत्तिरिति भावः । साध्यं व्याचष्टे **भूत्वा न भवतीति** । उत्पत्त्यनन्तरमभवन(१)मनित्यत्वमित्यर्थः । विनाश इत्युक्तो विशिष्टो नाशः स धर्मी यस्य स तथा ।

कार्यकारणशब्दयोर्द्विधा प्रयोगदर्शनेन सांशयिको हेतुरित्याह **सांशयिकमित्यादि** । एतद्धेतुवचनं संशयं नातिवर्तत इति

---

(टि०) १ अभवनं विनाश इत्यर्थः ।

(भा०)"किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत्? अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति" ?

संयोगनिवृत्तौ शब्दग्रहणान्न व्यञ्जकेन समानदेशस्य ग्रहणम्। दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते। न च व्यञ्जकाभावे व्यङ्ग्यग्रहणं भवति। तस्मान्न व्यञ्जकः संयोगः।

उत्पादके तु संयोगे संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति।

---

(भा०चं०) सांशयिकं शेषे ठक्। एतत्प्रकटयति **किमुत्पत्तीत्यादिना**। हेतुं समर्थयितुमप्याह **ऐन्द्रियकत्वादिति**। इमं हेतुं व्याचष्टे **इन्द्रियेति**। इन्द्रियेण करणेन प्रत्यासत्त्या व्यापारेण साक्षात्सम्बन्धेन ग्राह्यः ग्राहणीयः प्रमात्रेति शेषः(१)। इन्द्रियेण ग्राह्य इत्येव विग्रहे ठक्। प्रत्यासत्तीति व्यापारकथनम्।

संशयं निराकर्त्तुं तत्प्रकारौ विभज्य दर्शयति **किमयं व्यञ्जकेनेत्यादिना**।

स्वाभिमतप्रकारस्थापनायाह **संयोगेत्यादि**। दारुव्रश्चने काष्ठछेदनकाले व्रश्चनशब्देन पुरुषपरशुव्यापाराभ्यास उक्तः। **संयोगनिवृत्ताविति**। कुठारे उत्थापिते सतीति बोध्यम्। दूरस्थेन पुरुषेण गृह्यते श्रूयते। संयोगस्य कार्यकालासत्त्वेन व्यभिचारादभिव्यक्तिकारणमेव नास्तीति दर्शयति **नचेत्यादिना**।

स्वमते तूपपत्तिमाह **उत्पादके संयोगे इत्यादिना**।

---

(टि०) १ इन्द्रियसन्निकर्षजन्यज्ञानविषय इत्यर्थः।

(भा०)इतश्च शब्द उत्पद्यते नाभिव्यज्यते-कृतकवदुपचारात् । तीव्रं मन्दमिति कृतकमुपचर्यते । तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति । उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति ।

"व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति" चेद्-न अभिभवोपपत्तेः । "संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति, न तु शब्दो भिद्यते । यथा प्रका-

---

(ख०)केचिदेवम्मन्यन्ते—"प्रत्यभिज्ञैव भगवती शब्दस्थेमसाधिनी । तदानुगुण्याय व्यापिनः शब्दस्य गुणस्य द्रव्यस्य वा प्रयत्नप्रेरिता वायवो यावद्वेगम्प्रतिष्ठमानाः श्रोत्रं श्रोत्रावच्छिन्नशब्दविशेषं संस्कुर्वन्तो व्यञ्जका इति कल्प्यते । न च 'समानदेशानां समानेन्द्रियग्राह्याणां नियतव्यञ्जकव्यङ्ग्यत्वन्न दृष्टमिति' इमं प्रसङ्गं प्रत्यभिज्ञा मृष्यति । सोऽयमनया बाधितविषयो विलीयत" इति ।

एतान् प्रत्याह इतश्चेति ।

तीव्रत्वमन्दत्वानुनासिकत्वादयो धर्माः शब्दस्यौपाधिका उत नेति संशये सिद्धान्तः । वर्णसमवेतोऽनुनासिकत्वादिः प्रतीयमानो वर्णधर्म एव भवति नौपाधिक इति । तथा च युगपद्विरुद्धधर्मयोगात्परस्परमन्यत्वङ्ककारादीनामिति युक्तम् ।

कृतकवदुपचारादित्यनेन सर्वानित्यत्वसाधनसङ्ग्रहः ।

---

(भा०चं०)उत्पत्तिमत्त्वे हेत्वन्तरं दर्शयति **इतश्चेत्यादिना** । कृतकमुत्पत्तिमदेव उपचर्यते उच्यते तेन तेन शब्देनेत्यर्थः । तीव्रं सुखमित्यादि दृष्टान्तः । तीव्रः शब्द इति दार्ष्टान्तिकः । औपाधिकं तीव्रत्वादिशब्दगतमिति प्रत्यवतिष्ठते ।

रूपवत् यथा रूपं रक्तादि । अस्फुटालोककृतमन्दादिग्रहणेन रूपं मन्दमित्याद्युच्यते तथा शब्दोपीत्यर्थः । निराचष्टे **नेति** । अभिभवो

(भा०)शस्य तीव्रमन्दतया रूपग्रहणस्येति"। तच्च नैवम्, अभिभवो-पपत्तेः। तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति, न मन्दः। न च शब्दग्रहणमभिभावकम्। शब्दश्च न भिद्यते। शब्दे तु भिद्यमाने युक्तोऽभिभवः। तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति।

अभिभवानुपपत्तिश्च, व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात्। व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्द इत्येतस्मिन्पक्षे नोपपद्यतेऽभिभवः। न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति।

"अप्राप्तेऽभिभव इति" चेत्—शब्दमात्राभिभवप्रसङ्गः। अथ मन्येत—"असत्यां प्राप्तावभिभवो भवतीति"। एवं सति यथा भेरीशब्दः कश्चित्तन्त्रीस्वनमभिभवति एवमन्तिकस्थोपादानमिव दवीयःस्थोपादानानपि तन्त्रीस्वनानभिभवेद्, अप्राप्तेरविशेषात्। तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन् इति। नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्र-

---

(भा०चं०)अस्मन्मते उपपद्यते न भवन्मते(१) इति वक्तुमाहाभिभवोपपत्तेरिति। अभिभवति तिरस्करोति आविर्भवन्तं प्रतिबध्नाति स्वाविर्भावेनेत्यर्थः। न भवत्पक्षे एतत्सम्भवतीत्याह **नचेति**। शब्दस्य ग्रहणमिति कर्मणि षष्ठी ग्रहणं च प्रकाश एवातोऽप्रकाशः स्वस्मादेव स्वविषयेति नेत्याह **शब्दश्च न भिद्यते इति**। यतो व्यंजकगत एव भेदो व्यंग्ये उपचर्यते। भवन्मतमिति। स्वपक्षे सम्भवमाह **शब्दे तु भिद्यमान इति**। युक्तो न्याय्यः। उपसंहरति **तस्मादिति**।

---

(टि०) १ अस्मन्मते संयोगस्य शब्दजनकत्वपक्षे। भवन्मते संयोगस्य शब्दव्यञ्जकत्वपक्षे।

(भा०)प्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रेण मन्दस्याभिभवो युक्त इति । "कः पुनरयमभिभवो नाम ?" ग्राह्यसमानजातीय-ग्रहणकृतमग्रहणम् अभिभवः, यथोल्काप्रकाशस्य ग्रहणार्हस्या-दित्यप्रकाशेनेति ॥ १३ ॥

(सू० ) "न घटाभावसामान्यनित्यत्वान्नित्येष्व-प्यनित्यवदुपचाराच्च" ॥ १४ ॥

---

( ख० ) यथोल्केति । अन्यत् खल्वन्येन समानजातीयेनाभिभूयते नतु तदेव तेन । नहि मध्यन्दिनोल्काप्रकाशसम्बधी पटः पटुना सावि-त्रेण प्रकाशेन प्रकाशमानमात्मानमात्मनाऽभिभवति । एवं गकारोऽपि तीव्रध्वनिप्रकाश्यं गकारमात्मानमभिभवेद्यदि स्वयं मन्दध्वनिप्रकाश्यो गकारस्तीव्रध्वनिप्रकाश्याद्गकारादन्यो भवति । मध्यान्दिनोल्काप्रका-शस्तु सवितृप्रकाशेनात्मनोऽन्येनाल्पत्वादभिभूयते ।

न घटेत्यादि सिद्धान्ताक्षेपसूत्रं सिद्धान्तहेतूनामनैकान्तिकत्वज्ञाप-नार्थम् । घटाभावस्य नित्यत्वात् सामान्यस्य नित्यत्वात् नित्येष्वनि-त्यवदुपचाराच्चेत्यन्वयः ।

---

(भा०चं०)अन्तिकं निकटतरां दवीयो दूरतरं । तत्तदुपादानं कारणं येषां ते तथा तान् । स्वसिद्धान्तमुपपादयति **नानेत्या-दिना** । सन्तानो नाम पूर्वपूर्वोत्पाद्य उत्तर उत्तरोऽर्थः । अभिभावपदार्थं व्याचष्टे **ग्राह्येत्यादिना** । ग्राह्यो गृहीतुं योग्यः अग्रहणं ग्रहणप्रा-गभावः(१) कृतं परिपालितं । न तूत्पादितमसम्भवात् । तस्यानादित्वात् ग्रहणार्हस्य ग्रहणयोग्यस्य ॥ १३ ॥

हेतुत्रयेपि व्यभिचारप्रदर्शनाय **सूत्रं न घटेत्यादि** । अस्य भाष्यं निगदव्याख्यातम् ॥ १४ ॥

---

(टि०) १ सजातीयग्रहणक्षमग्रहणमिति भावः ।

( भा० ) "न खल्वादिमत्त्वादनित्यः शब्दः। कस्मात्? व्यभिचारात्। आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम्। कथमादिमान्? कारणविभागेभ्यो हि घटो न भवति। कथमस्य नित्यत्वम्? योऽसौ कारणविभागेभ्यो न भवति न तस्याभावो भावेन कदाचिन्निवर्त्यत इति।

यदप्यैन्द्रियकत्वात्—तदपि व्यभिचरति। ऐन्द्रियकं च सामान्यं नित्यं चेति।

यदपि कृतकवदुपचारादिति—एतदपि व्यभिचरति। नित्येष्वनित्यवदुपचारो दृष्टः। यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेशः एवमाकाशस्य प्रदेशः आत्मनः प्रदेश इति भवतीति" ॥ १४ ॥

(सू०) तत्त्वभाक्तयोर्नानात्वविभागादव्यभिचारः ॥ १५ ॥

( भा० ) नित्यमित्यत्र किं तावत्तत्त्वम्? अर्थान्तरस्यानुत्पत्तिधर्मकस्यात्महानानुपपत्तिर्नित्यत्वम्। तच्चाभावे नोपपद्यते।

(ख०)आकाशस्येति। 'आकाशस्य प्रदेश' इत्यत्र यथा प्रदेशरहित आकाशे प्रदेशोक्तिर्नित्यस्यापि तस्यानित्यत्वं व्यनक्ति तादृश्येव नित्येऽपि शब्देऽनित्यत्वोक्तिरिति सम्भाव्यते।

तत्त्वभाक्तयोरित्याक्षेपपरिहारसूत्रम्।

तच्चेति। सत्तासम्बन्ध उभयान्तावच्छिन्नत्वं चेत्येतदुभयमित्यर्थः।

( भा० चं० ) समाधिसूत्रं **तत्त्वेत्यादिसूत्रम्**। नित्यपदार्थतावच्छेदकं प्रश्नोत्तराभ्यामाह **नित्यमित्यादिना**। तत्त्वं मुख्यं। भाक्तं तद्भिन्नं। (१)अर्थान्तरस्य अर्थविशेषस्य नित्यमुख्यसंज्ञकस्य। आत्महानान्नुत्पत्तिर्ध्वंसात्यन्ताभावः उत्पत्त्यसमानाधिकरणध्वंसात्यन्ता-

(१) आत्मान्तरस्येति भाष्यपाठः सर्वत्रोपलभ्यते।

(भा०)भाक्तं तु भवति। यत्तत्रात्मानमहासीद्यद् भूत्वा न भवति न जातु तत्पुनर्भवति तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति । तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किंचिन्नित्यं दृश्यत इत्यव्यभिचारः ॥ १५ ॥

( भा० ) यदपि—"सामान्यानित्यत्वादिति"—इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति —

( सू० ) सन्तानानुमानविशेषणात् ॥ १६ ॥

(भा०) नित्येष्वव्यभिचार इति प्रकृतम् । नेन्द्रियग्रहणसा-

( ख० )यदपीति चतुर्दशसूत्रोक्तमाक्षेपम्परामृशति ।

सन्तानेत्यादि सिद्धान्तिसूत्रम् ।

न वयमैन्द्रियकत्वेनानित्यत्वं प्रतिपादयामोऽपि तु शब्दस्याभिव्यक्तिम्प्रतिषेधामः । नहि व्यज्यमानस्यैन्द्रियकत्वं युक्तम् ।

ऐन्द्रियकत्वं चात्र इन्द्रियप्रत्यासत्तिग्राह्यत्वम् । तेन शब्दस्य सन्तानोऽनुमीयते सन्तानवृत्तित्वेन चास्य नित्यत्वमिति सूत्रार्थः ।

(भा०चं०)भाववत्त्वं नित्यत्वं "शाश्वतस्तु ध्रुवो नित्यसदातनसनातना" इत्यत्र तथैवावधारणात् । अभावे प्रागभावध्वंसान्यतरस्मिन् नोपपपद्यते न प्रमाणेन ज्ञाप्यते । तर्हि ध्वंसो नित्यः इति व्यवहारस्य का गतिरित्यत्राह **भाक्तं त्विति** । भाक्तं (१)भक्त्या ग्राह्यं न तु शक्त्या । ध्वंसे नित्यभक्तिं दर्शयितुमाह **न जातु तत्पुनर्भवतीति** । तस्य पुनर्भावे ध्वंसस्य ध्वंसः स्यादिति भावः(२) ॥ १५ ॥

द्वितीयहेतुं समर्थयितुं सूत्रम्–**सन्तानेत्यादि** । सूत्रपूर्वकमाह **नित्येष्वव्यभिचार इति** । प्रकृतमनुवृत्तम् । ऐन्द्रियकत्वादिति

(टि०) १ उपचारेणेत्यर्थः ।
२ ध्वंसस्य नाशाभावान्नित्यत्वोपचार इति भावः ।

(भा०)मर्थ्याच्छब्दस्यानित्यत्वम् । किं तर्हि ? इन्द्रियप्रत्यासत्ति-ग्राह्यत्वात् सन्तानानुमानम्, तेनानित्यत्वमिति ॥ १६ ॥

( भा० ) यदपि "नित्येष्वप्यनित्यवदुपचाराद् इति" । न—

( सू० ) कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्॥ १७॥

( भा० ) नित्येष्वप्यव्यभिचार इति । एवमाकाश-प्रदेशः आत्मप्रदेश इति नात्राकाशात्मनोः कारणद्रव्यम-भिधीयते, यथा कृतकस्य । कथं ह्यविद्यमानमभिधीयते ? अवि-

---

( ख० )यदपीति चतुर्दशसूत्रोक्तमाक्षेपान्तरम्परामृशति ।

कारणद्रव्यस्येत्यादि अभिधानादित्यन्तमेव सूत्रम् । नित्येष्वप्य-व्यभिचार इति तु भाष्यग्रन्थ एव सूत्रेणान्वितः । वृक्षकम्बलादिषु कार्यद्रव्यविषयेषु प्रदेशशब्देन कारणद्रव्यमेवोच्यते । तस्य चाकाशा-दावसम्भवान्न तादृगुक्तिसम्भवः ।

---

(भा०चं०)सूत्रपदव्याख्यानम्—**इन्द्रियग्रहणसामर्थ्यादिति** । इन्द्रियेण ग्रहणं इन्द्रियग्रहणं कर्तृकरणे कृता बहुलमिति समासः इन्द्रि-यग्रहणे सामर्थ्यं कारकत्वं सिद्धे कर्मणि कारकत्वस्थितेः, तस्मादि-न्द्रियग्रहणसामर्थ्यात् । अनित्यत्वं साध्यते इति शेषः । पृच्छति **किं तर्हीति** । सन्तानः सन्ततिः वीचीतरङ्गन्यायेन शब्दस्योत्पत्तिरिति यावत् तस्यानुमानमनुमितिः क्रियत इति शेषः । तेनानुमितेन सन्ता-नेन अनित्यत्वं साध्यमित्यर्थः । अत्रेन्द्रियपदं श्रवणपरं ग्राह्यं तेन यः श्रवणप्रत्यासन्नो न भवति स श्रवणेन न गृह्यत इति भावः ॥ १६ ॥

तृतीयमुद्धर्तुं सूत्रमिदं—**कारणेत्यादि** । पूरकमाह **नित्ये-ष्वप्यव्यभिचार इतीति**। कारणद्रव्यं समवायिकारणद्रव्यं कार्यद्र-व्यस्येति शेषः। व्यतिरेकदृष्टान्तमाह **यथा कृतकस्येति** । कार्यद्रव्य-स्येत्यनुषंगः। यथा कृतकस्य घटादेः प्रदेश इत्यभिधीयते तथा नात्मनः

(भा०)द्यमानता च प्रमाणतोऽनुपलब्धेः । किन्तर्हि तत्राभिधीयते ? संयोगस्याव्याप्यवृत्तित्वम् । परिच्छिन्नेन द्रव्येणाकाशस्य संयोगो नाकाशं व्याप्नोति—अव्याप्य वर्तत इति । तदस्य कृतकेन द्रव्येण सामान्यम् । न ह्यामलकयोः संयोग आश्रयं व्याप्नोति । सामान्यकृता च भक्तिराकाशस्य प्रदेशइति ।

अनेनात्मप्रदेशो व्याख्यातः ।

संयोगवच्च शब्दबुद्ध्यादीनामव्याप्यवृत्तित्वमिति ।

परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति ।

---

( ख० )अव्याप्येति । शब्द आकाशेऽव्याप्यवृत्तिः, आत्मनि च बुद्ध्यादिरिति ।

---

(भा०चं०)प्रदेश इत्यभिधीयत इति भावः । तर्हि व्यर्थमभिधानमित्याशयवानाक्षिपति **कथमिति** । अविद्यमानमसम्बद्धम् । अविद्यमानत्वं समर्थयति **प्रमाणतोऽनुपलब्धेरिति** । प्रमाजन्योपलब्ध्यभावादित्यर्थः । अथ पृच्छति **किं तर्हीति** । तदुत्तरं **संयोगस्येति** । भक्तिं दर्शयति **परिच्छिन्नेनेत्यादिना सामान्यमित्यन्तेन** । संयोगस्याव्याप्यवृत्तित्वं दृष्टान्तयति **न ह्यामलकयोरिति** । सामान्यं सादृश्यं तत्कृता तत्प्रयुक्ता भक्तिर्भाक्तः प्रयोगः विषयिशब्देन विषयः कथ्यते । इतिशब्दः प्रयोगस्वरूपमाह ।

आकाशदृष्टमतिदिशति **अनेनेति** । संयोगप्रसङ्गात् । अन्येषामव्याप्यवृत्तित्वसिद्धान्तमाह **संयोगवच्चेति** । आदिशब्देन सुखादयो ग्राह्याः । ननु यथाऽऽकाशस्य प्रदेशः, इत्यत्र भाक्तः प्रयोगः तथा शब्दस्तीव्रो मन्द इत्यत्राप्यस्तु इत्याशङ्कां वारयति **परीक्षिता चेति** । परीक्षिता प्रमाणेन निश्चिता न त्वयाऽपलपितुं शक्या इति भावः ।

(भा०)"कस्मात्पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते इति?" शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति। तत्र शास्त्रसिद्धान्ततत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते । शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति ॥ १७ ॥

( भा० ) अथापि खल्विदमस्ति इदं नास्तीति कुत एत-

---

(ख०)कस्मादिति । निष्प्रदेशमाकाशं निष्प्रदेशश्चात्मेत्येतदर्थबोधकं सूत्रन्नास्तीति प्राश्निकस्य हृदयम् ।

सप्तदशसूत्र उक्तयोरर्थयोः प्रतिपादितत्वान्नायम्प्रश्नः सङ्गच्छत इति केचित् ।

परन्तु 'कारणद्रव्यस्य प्रदेशशब्देनाभिधानात्' इतिसूत्रमाकाशादीनां निष्प्रदेशत्वं साक्षान्न ब्रूत इति कृत्वैव प्रश्नस्य सङ्गतिः ।

उक्तामेवासङ्गतिमरुचिबीजम्मनसि कृत्वा वार्तिककारः प्रश्नमन्यथावर्णयाञ्चकार—शब्दसन्तानप्रतिपादने वा न सूत्रमिति प्राश्निकस्य भाव इति ॥

अथापीति—अस्य पर्यनुयोगस्य को विषयः । अनुपलभ्यमाना-

---

( भा० चं० )आक्षिपति सूत्रकारं **कस्मादिति** । समाधत्ते **शीलमित्यादिना**। निष्प्रदेशसप्रदेशत्वे पक्षावित्यन्वयः। न व्यवस्थापयति सूत्रैरिति शेषः। सूचनेन तु व्यवस्थापयत्येवेत्याह **तत्र शास्त्रेत्यादिना** । तत्त्वावधारणं वस्तुस्वाभाव्यनिर्णयं प्रतिपत्तुं प्राप्तुमर्हति शिक्षितः शिष्य इति शेषः । इति मन्यते भगवानिति शेषः। कः सिद्धान्तो येन तत्त्वमवगन्तव्यमित्यपेक्षायामाह **शास्त्रसिद्धान्तस्त्विति**। बहुशाखं बहुप्रकारम्। अनुमतं भगवतेति शेषः । अनुमानं प्रमाणं कार्यद्रव्यत्वादिरूपम् ॥ १७ ॥

( भा० )त्प्रतिपत्तव्यमिति ? प्रमाणत उपलब्धेरनुपलब्धेश्चेति ।
अविद्यमानस्तर्हि शब्दः—

(सू०) प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च॥१८॥

(भा०)प्रागुच्चारणान्नास्ति शब्दः। कस्मात्? अनुपलब्धेः। "सतोऽनुपलब्धिरावरणादिभ्यः।" एतन्नोपपद्यते। कस्मात्? आ-

---

(ख०)स्तित्वम् । ये शब्दं नित्यङ्कल्पयन्ति त इदम्पर्यनुयोज्याः-इद-मस्तीदन्नास्तीति एतद्भवन्तः कथं प्रतिपद्यन्त इति । एवमनुयुक्तास्सन्तः प्रतिब्रुवते–प्रमाणत उपलब्धेरनुपलब्धेश्चेति । ततश्चानिष्टप्रसङ्ग इति सूचनार्थं सूत्रम्–प्रागुच्चारणादित्यादि ।

अन्यथाऽपि सूत्रावतरणिकां वार्तिककार आह ।

यच्चोभयपक्षसम्प्रतिपन्नं घटाद्यनित्यत्वेन–तेन चानुयोज्याः । यदिदमनित्यं घटादि भवद्भिः प्रतिपद्यते तत्कथमानित्यमिति । एव-मनुयुक्ता यदि घटाद्यनित्यत्वे न्यायं प्रतिपद्यन्ते स शब्देऽपीति सूचनार्थं सूत्रम् ।

---

(भा०चं०)अनुमानेन शब्दानित्यत्वं ज्ञापयितुमाचार्यः शिष्यं पृच्छ-ति **अथापीत्यादि प्रतिपत्तव्यमित्यन्तेन** । अथशब्दः प्रश्ने खलुशब्दः प्रतिपत्तव्यमित्यत्र धात्वर्थान्वयि। पृष्टः उत्तरयति **प्रमाणत इति**। प्रमाणं दर्शयितुं विषयमाह **अविद्यमानस्तर्हि शब्द इति**। अविद्यमानो नास्तीत्यर्थः। **प्रागुच्चारणादिति सूत्रम्** । उच्चार-णात्पूर्वकाले इत्यर्थः । अनुपलब्धेः प्रमाणाभावात् । प्रागुच्चारणादि-त्यादिभाष्यमनुवादरूपम् । हेतुरस्तु साध्यं मास्तु इत्याशयवतो मत-मनुवदति **सतोऽनुपलब्धिरिति** । दूषयितुमाह **एतन्नोपपद्यत**

(भा०)वरणादीनामनुपलब्धिकारणानामग्रहणात्। अनेनावृतः शब्दो नोपलभ्यते असन्निकृष्टश्चेन्द्रियव्यवधानाद्वेत्येवमादि अनुपलब्धिकारणं न गृह्यत इति । सोऽयमनुच्चारितो नास्तीति ।

"उच्चारणमस्य व्यञ्जकम् । तदभावात्प्रागुच्चारणादनुपलब्धिरिति" ।

किमिदमुच्चारणं नामेति ?

विवक्षाजनितेन प्रयत्नेन कोष्ठचस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघातः, यथास्थानं प्रतिघाताद्वर्णाभिव्यक्तिरिति ।

संयोगविशेषो वै प्रतिघातः । प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वम् । तस्मान्न व्यञ्जकाभावादग्रहणम्, अपि त्वभावादेवेति ।

सोऽयमुच्चार्यमाणः श्रूयते श्रूयमाणश्चाभूत्वा भवतीत्यनुमीयते । ऊर्ध्वं चोच्चारणान्न श्रूयते स भूत्वा न भवति, अभावान्न श्रूयत इति । कथम् ? आवरणाद्यनुपलब्धेरित्युक्तम् । तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति ॥ १८ ॥

---

(भा० चं० )इति । शब्दावरणवादी हेतुं पृच्छति कस्मादिति । उत्तरमाह **आवरणेत्यादि** ।

व्यञ्जकाभावान्नोपलभ्यते इत्याह **उच्चारणमस्येति** । पृच्छति **किमिति** । व्यञ्जकवाद्युत्तरं—**विवक्षाजनितेनेत्यादि** । दूषयितुमाह **संयोगविशेषेत्यादि** । वैशब्दोऽवधारणे । दूषणं स्मारयति **प्रतिषिद्धश्चेति** । दारुपरशुसंयोगे निवृत्ते शब्दः श्रूयते इत्युक्तं न विस्मर्तव्यमिति भावः । अभूत्वा भवति अप्राप्तस्वरूपं प्राप्नोतीत्यर्थः । भूत्वा न भवति प्राप्तस्वरूपं त्यजतीत्यर्थः । अभावात् विनाशात् आवरणेनैव न श्रूयतामित्याशयेन पृ-

(भा०) एवं च सति तत्त्वं पांशुभिरिवावाकिरन्निदमाह—

(सू०) "तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः" ॥१९॥

(भा०) "यद्यनुपलम्भादावरणं नास्ति, आवरणानुपलब्धिरपि तर्ह्यनुपलम्भान्नास्तीति—तस्या अभावादप्रतिषिद्धमावरणमिति"।

कथं पुनर्जानीते भवान्नावरणानुपलब्धिरुपलभ्यत इति ? 'किमत्र ज्ञेयम् । प्रत्यात्मवेदनीयत्वात् समानम् । अयं खल्वावरणमनुपलभमानः प्रत्यात्ममेव संवेदयते नावरणमुपलभ इति,—यथा कुड्येनावृतस्यावरणमुपलभमानः प्रत्यात्ममेव संवेदयते ।

---

(ख०) तत्त्वे उक्ते पूर्वपक्षी जात्या प्रत्यवतिष्ठते तदनुपलब्धेरिति सूत्रेण ।

यथा आवरणाद्यनुपलब्धिरनुपलभ्यमानाऽप्यस्ति, तथाऽऽवरणमप्यनुपलभ्यमानमप्यस्तीत्यर्थः । आवरणानुपलब्धेस्तावदुपलब्धिर्न सम्भवति, अनुपलब्धिस्वरूपविरोधात् । तस्मादावरणानुपलब्धिरेव वक्तव्या । तथा चावरणानुपलब्धेरभावे सत्यावरणोपलब्धिः । तया त्वावरणसद्भावः, ज्ञानस्य निरालम्बनत्वायोगादिति हृदयम् ।

तस्या इति । आवरणानुपलब्धेरित्यर्थः ।

---

(भा०चं०)च्छति **कथमिति** । प्रतिषिद्धभावमावरयति **आवरणेनेति** । उपसंहरति । **तस्मादिति** । उत्पत्तितिरोभावधर्मको(१) न त्वभिव्यक्तितिरोभावधर्मक इति भावः ॥ १८ ॥

पांसुभिरिवाकिरन् इत्यस्याकृतबुद्धिसंमोहनमेतत्सूत्रमित्यभिप्रायः । **तदनुपलब्धेरित्यादि**सूत्रभाष्ये निगदव्याख्याते ॥ १९॥

---

(टि०) १ तिरोभावश्चात्र नाशो ग्राह्यः तथाच तिरोभावधर्मको विनाशधर्मक इति भावः ।

(भा०)सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति। एवं च सत्यपहृतविषयमुत्तरवाक्यमस्तीति ॥ १९ ॥

( भा० ) अभ्यनुज्ञावादेन तूच्यते जातिवादिना—

( सू० ) "अनुपलम्भादप्यनुपलब्धिसद्भावान्नावरणानुपपत्तिरनुपलम्भात्" ॥ २० ॥

(भा०)"यथाऽनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति। यद्यभ्यनुजानाति भवान्, अनुपलभ्यमानाऽऽवरणानुपलब्धिरस्तीति, अभ्यनुज्ञाय च वदति—नास्त्यावरणमनुपलम्भादित्येतद्, एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति" ॥ २० ॥

---

( ख० ) एवञ्चेति सिद्धान्तिन उक्तिः। यद्यावरणानुपलब्धिरुपलभ्यते मानसेन प्रत्यक्षेण तदा नानैकातिकत्वं नचावरणसद्भाव इति पूर्वपक्षिण ऊनविंशसूत्रोक्तं जात्युतरवाक्यमपहृताविषयम्भवतीत्यर्थः।

अभ्यनुज्ञेति। सिद्धान्तिन उक्तिमनुज्ञायापि जातिवादं प्रत्यवतिष्ठतेऽग्रिमेण सूत्रेणेत्यर्थः।

अनुपलम्भादिति जातिवादिनो द्वितीयं सूत्रम्। यदि पूर्वोक्तदोषभयादनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति तथासत्यनुपलब्धेरनैकान्तिकत्वं प्रसज्यत इति भावः।

---

(भा०चं०)जातिसूत्रान्तरमवतारयाति **अभ्यनुज्ञेनि**। जातिवादिना अनुपलब्धिसमा(१)ख्यजातिवादिना असत्कथकेनेति शेषः।

(टि०) १ तदनुपलब्धेरनुपलम्भादभावासिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः इत्यनुपलब्धिसमलक्षणात् सूत्रद्वयमप्यनुपलब्धिसमजातिबोधकमिति।

( सू० )अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥ २१ ॥

( भा० ) यदुपलभ्यते तदस्ति, यन्नोपलभ्यते तन्नास्ति, इति अनुपलम्भात्मकमसदिति व्यवस्थितम्। उपलब्ध्यभावश्चानुपल-

---

( ख० )अनुपलम्भात्मकत्वादिति सिद्धान्तिसूत्रम् । अस्यार्थः । 'अनुपलब्धेः' आवरणानुपलब्धेः 'अनुपलम्भात्मकत्वात्' आवरणोपलब्धिनिषेधात्मकत्वात्—'तदनुपलब्धेरनुपलम्भादिति' ऊनविंशसूत्रोक्तो 'न हेतुः'—आवरणोपपत्ताविति शेषः-असिद्धत्वात् इति ।

अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः । यथाजातीयकः शब्दो नित्यस्तथाजातीयकं किञ्चिन्नित्यन्न दृष्टमित्याशयः ।

'उपलभ्यत' इति विधिविषयेण प्रमाणेनेति भावः। 'न उपलभ्यते'—निषेधविषयेण प्रमाणेनेति भावः । तस्मादनुपलम्भात्मकं निषेधविषयप्रमाणमिदं असत्—इति स्थितम् ।

---

(भा०चं०)अनुपलम्भादित्यादिसूत्रं व्याचष्टे **यथेत्यादिना** । यथेत्याद्यस्तीत्यन्तस्य भवतः सिद्धान्तिनो मते इति शेषः, एवमित्याद्यस्तीत्यस्य मम मते इति शेषः, तेन समीकरणसिद्धिः। यद्यभ्यनुजानाति भवानित्यापाद्योक्तिः सिद्धान्तिनं प्रति पूर्वपक्षिणः। प्रतिनियमः मत्पक्षप्रतिषेधनियमः नोपपद्यते विशेषहेत्वभावादित्यर्थः ॥ २० ॥

एतस्य जातिसूत्रद्वयस्य समाधानसूत्रम्—**अनुपलम्भेत्यादि** । अस्यार्थः । आवरणानुपलब्धेरनुपलम्भात् आवरणोपलब्धिरिति जातिवादिनस्तवोत्तरमहेतुः । अस्मन्मते प्रतिषेधकारणं कुतः ? अनुपलब्धेः आवरणानुपलब्धेः अनुपलम्भात्मकत्वात् अनुपलम्भस्वरूपत्वात् न त्वनुपलम्भविषयत्वात् प्रत्यात्मवेदनीयत्वेनानुपलम्भासम्भवादिति । इममर्थं भाष्यकृदाह **यदित्यादिना** । उपलभ्यते इत्यस्य

(भा०)ब्धिरिति। सेयमभावत्वान्नोपलभ्यते। सच्च खल्वावरणम्। तस्योपलब्ध्या भवितव्यम्। न चोपलभ्यते। तस्मान्नास्तीति। तत्र यदुक्तं–"नावरणानुपपत्तिरनुपलम्भादिति" अयुक्तमिति ॥ २१ ॥

अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्माद्धेतोः प्रतीजानीते ?—

( सू० ) "अस्पर्शत्वात्" ॥ २२ ॥

( भा० ) "अस्पर्शमाकाशं नित्यं दृष्टमिति। तथा च शब्द इति" ॥ २२ ॥

सोयमुभयतः सव्यभिचारः स्पर्शवांश्चाणुर्नित्यः। अस्पर्शं च कर्मानित्यं दृष्टम्। अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम्—

---

( ख० )सेयमिति। नोपलभ्यते–विधिविषयेण प्रमाणेनेत्यर्थः। अस्पर्शत्वादिति विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतोः परिप्रश्नसूत्रम्।

---

(भा०चं०)प्रमाणेनेति शेषः। तदस्ति अस्तित्वेनाभ्यनुज्ञायते नास्ति नास्तित्वेनाभ्यनुज्ञायते। इति हेतोः अनुपलम्भात्मकं सान्निःस्वरूपमिति व्यवस्थितं निश्चितं सर्ववादिभिरिति शेषः। अभावत्वान्निःस्वरूपत्वादित्यर्थः। नोपलभ्यते भवन्मते नोपलभ्यतामित्यभ्यनुज्ञा। सच्च सत्तु–सत्स्वरूपं तु उपलब्ध्या प्रमया प्रमाणेन वा भवितव्यं भवितुमुचितम्। उपसंहरति तस्मादिति। इतीति आवरणखण्डनसमाप्त्यर्थः ॥२१॥

शिष्यः पृच्छति अथेति अस्पर्शत्वादिति सूत्रं शब्दस्य नित्यत्वमित्यत्रान्वयि, बहुव्रीहेर्भावप्रत्ययोयम्। निदर्शनमाह भाष्यकृत् अस्पर्शमित्यादि ॥ २२ ॥

(सू०) न, कर्मानित्यत्वात् ॥ २३ ॥

(भा०) "अयं तर्हि हेतुः"—

(सू०) नाणुनित्यत्व ॥ २४ ॥

(भा०)उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतुः ॥ २४ ॥
"अयं तर्हि हेतुः"—

(सू०) "सम्प्रदानात्" ॥ २५ ॥

(भा०)"सम्प्रदीयमानमवस्थितं दृष्टम् । सम्प्रदीयते च शब्द आचार्येणान्तवासिने । तस्मादवस्थित इति" ॥ २५ ॥

---

(ख०)न कर्मेति तस्याव्यभिचारप्रदर्शनार्थं सूत्रम् ।

नाण्विति सिद्धान्तिसूत्रं व्यभिचारान्तरप्रदशनार्थम् । अस्पर्शेन कर्मणैवोभयतो व्यभिचारे लब्धे नित्येनाणुना व्यभिचारोद्भावनं कृतकत्वानित्यत्ववत्समव्याप्तिकत्वनिराकरणार्थं द्रष्टव्यम् ।

सम्प्रदानादिति पूर्वपक्षिसूत्रम् । सम्प्रदीयमानत्वादित्यर्थः ।

---

(भा०चं०)उभयतः अन्वयव्यतिरेकाभ्याम्(१)। उदाहरणं दृष्टान्तः। न कर्मेतिसूत्रं स्पष्टार्थम् । नाणु।रित्यादि सूत्रमपि तथा । न हेतुरस्पर्शत्वमिति शेषः ॥ २३ ॥ २४ ॥

शङ्कतेऽयन्तर्हीति । सम्प्रदानादिसूत्रम् उक्तसाध्यधर्मान्वयि । व्याचष्ट सम्प्रदीयमानमिति । अवस्थितं—स्थितं—स्थिरम् ॥ २५ ॥

---

(टि०) १ यत्र हेत्वभावस्तत्र साध्याभाव इत्ययं व्यतिरेकः स च प्रकृतानुमाने परमाण्वन्तर्भावेण व्यभिचरितः यत्र यत्र हेतुस्तत्र तत्र साध्यमित्यन्वयः स च प्रकृते कर्मणि व्यभिचरित इति भावः ।

( सू० ) तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

( भा० ) येन सम्प्रदीयते यस्मै च, तयोरन्तरालेऽवस्थानमस्य केन लिङ्गेनोपलभ्यते ॥ २६ ॥

सम्प्रदीयमानो ह्यवस्थितः सम्प्रदातुरपैति सम्प्रदानं च प्राप्नोति—इत्यवर्जनीयमेतत् ।

( सू० ) "अध्यापनादप्रतिषेधः" ॥ २७ ॥

( भा० ) "अध्यापनं लिङ्गम् । असति सम्प्रदानेऽध्यापनं न स्यादिति" ॥ २७ ॥

---

( ख० )तदन्तरालेति परिहारसूत्रम् ।

पञ्चविंशसूत्रोक्तं हेतुं पूर्वपक्षी विशदयति अध्यापनादिति सूत्रेण ।

अयमत्र प्रयोगः—दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्ति, अध्यापनात्, गुरुणा शिष्याय दीयमानत्वात्, धनुर्वेदविदा आचार्येण शिष्याय दीयमानेष्वादिवत्—इति ।

---

(भा०चं०) तदन्तरालेत्यादि सिद्धान्तसूत्रम् । अहेतुः सम्प्रदानमित्यनुषङ्गः । येन कर्त्रा । यस्मै सम्प्रदानाय पुंसे । तयोरन्तराले मध्यदेशे अवस्थानं स्थितिः अस्य दीयमानशब्दस्य लिङ्गेन ज्ञापकेन । सम्प्रदीयमानो गौस्तर्णकादिरिति शेषः । अपैति विश्लिष्यते प्राप्नोति सम्बध्यते । अवर्जनीयमप्रतिषेध्यम् एतद्द्रव्यकर्तृकक्रियायुगलम् ॥ २६ ॥

अध्यापनादित्यादि पूर्वपक्षसूत्रम् । अप्रतिषेधो हेतुरिति शेषः, नास्ति प्रतिषेधो यस्य स तथा । अप्रतिषिध्यमानो वा । कर्मणि घञ् । तर्कमाह असतीति ॥ २७ ॥

(सू०)उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः॥२८॥

( भा० ) समानमध्यापनमुभयोः पक्षयोः-संशयानिवृत्तेः। किमाचार्यस्थः शब्दोऽन्तेवासिनमापद्यते तदध्यापनम्, आहोस्विन्नृत्योपदेशवद् गृहीतस्यानुकरणमध्यापनमिति ? एवमध्यापनमलिङ्गं सम्प्रदानस्येति ॥ २८ ॥

"अयं तर्हि हेतुः"—

( सू० ) "अभ्यासात्" ॥ २९ ॥

(भा०)"अभ्यस्यमानमवस्थितं दृष्टम्। पञ्चकृत्वः पश्यतीति

---

( ख० ) उभयोरिति सिद्धान्तिसूत्रम्।

सांशयिकत्वादहेतुः पूर्वपक्षोक्तो हेतुरिति सूत्रार्थः।

अलिङ्गमिति। सिद्धसाधनत्वात्। वयमपि ब्रूमः दात्रोच्चरितः शब्दः सन्तानवृत्त्या सम्प्रदानमेतीत्यवस्थाने न हेतुः।

पूर्वपक्षी हेत्वन्तरमुपन्यस्यति अभ्यासादिति सूत्रम्।

---

(भा०चं०)**उभयोरित्यादि सिद्धान्तसूत्रम्**। अप्रतिषेधोऽहेतुरिति शेषः। तथाच सम्प्रदानमहेतुर्वेत्यर्थः। व्याचष्टे समानमिति। उभयोः स्थिरास्थिरयोः। संशयन्दर्शयति किमाचार्यस्थः। अध्यापनमिति फले ल्युट्। स्वशङ्कितकोटिं दर्शयति **आहोस्विदित्यादिना**। नृत्योपदेश इति कर्मधारयः। वतिः सदृशे। तदन्तमव्ययमिति षष्ठी **लुक्। अनुकरणमनुकृतिः**। अध्यापनं शिष्यकर्तृकमध्ययनम्। एवमुक्तप्रकारेण। अलिङ्गं सन्दिग्धत्वात् ॥ २८ ॥

हेत्वन्तरं वक्तुमाह **अयमिति। अभ्यासादिति सूत्रम्**। तस्याभ्यस्यमानत्वादित्यर्थः। अभ्यासः पुनः पुनः क्रिया। क्रिया च ( व्यञ्जनाभिप्रेता ) नोत्पादना। तादिदमाह भाष्यकृदभ्य-

(भा०)रूपमवस्थितं पुनः पुनर्दृश्यते। भवति च शब्देऽभ्यासः,–दशकृत्वोऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इति। तस्मादवस्थितस्य पुनः पुनरुच्चारणमभ्यास इति" ॥ २९ ॥

( सू० ) नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ ३० ॥

( भा० ) अनवस्थानेऽप्यभ्यासस्याभिधानं भवति–द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवानिति, द्विरनृत्यत् त्रिरनृत्यद्, द्विरग्निहोत्रं जुहोति, द्विर्भुङ्क्ते ॥ ३० ॥

"एवं व्यभिचारात् प्रतिपिद्धे हेतावन्यशब्दस्य

---

( ख० ) उक्तं हेतुं दूषयति नान्यत्व इति सूत्रेण ॥

अनित्येष्वेवाभ्यास इत्यनेकान्तः, अभ्यासस्वरूपानवधारणादसिद्धश्च। अभ्यासो ह्येकविषयोऽनेकज्ञानोत्पाद एकाकारविषयो वा। तत्रायमभ्यास एकविषय एकाकारविषयो वेति सन्दिग्धासिद्धिः।

---

(भा०चं०)दृश्यमानमिति। उपनयति भवति चेति। दशकृत्व इति। क्रियाभ्यावृत्तिगणने कृत्व सुच्। दशकृत्वो दशवारानित्यर्थः। अनुवाको वेदभागविशेषः। उच्चारणमाविर्भावनं–प्रकाशनं–प्रख्यापनमिति यावत् ॥ २९ ॥

दूषयति नान्यत्वेपीत्यादि सूत्रम्। उपचारो व्यवहारस्तन्मते व्याचष्टेऽनवस्थाने इत्यादिना। उपचारपदं व्याचष्टेऽभिधानमिति। तस्य कीर्तनमित्यर्थः। भवति प्रमीयते। द्विर्नृत्यतु भवानित्यादि नाट्याचार्योपदेशः। इति शब्दोऽस्मादित्यर्थः। अनृत्यदित्यत्र नटशिष्य इति शेषः। लौकिकमुदाहृत्य वैदिकमुदाहरति द्विरग्निहोत्रमिति। द्विर्भुक्तं पुरोडाशखण्डादीति शेषः ॥ ३० ॥

हेतौ संप्रदाने अभ्यासे च। प्रतिषिध्यते प्रतिवादिनेति शेषः।

(भा०)प्रयोगः प्रतिषिध्यते"—

(सू०)"अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः" ॥ ३१ ॥

(भा०)"यदिदमन्यदिति मन्यसे तत् स्वात्मनोऽनन्यत्वाद् अन्यन्न भवति । एवमन्यताया अभावः । तत्र यदुक्तमन्यत्वेऽप्यभ्यासोपचारादित्येतदयुक्तमिति" ॥ ३१ ॥

शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते—

(सू०) तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षासिद्धेः ॥ ३२ ॥

---

( ख० ) प्रतिषिध्यत इति—पूर्वपक्षिणेति शेषः ।

यदि 'अन्यत्' नाम जगति भवेत् ततः 'अन्यत्वेऽप्यभ्यासोपचारात्' इत्यनेनानैकान्तिकत्वमुद्भाव्येत । तदेव तु नास्तीति वाक्छलेन प्रत्यवतिष्ठते पूर्वपक्षी—अन्यदिति सूत्रम् ।

परिहरति सिद्धान्ती तदभाव इति सूत्रम् । यदि 'अन्यत्' इति प्रयोगो न सम्भवति तर्हि 'अनन्यत्' इत्यपि न सम्भवत्येवेत्यर्थः ।

---

(भा०चं०)**अन्यदित्यादिपूर्वपक्षसूत्रम्** अन्यपदार्थापलापः सूत्रार्थः । व्याचष्टे **यदिदमित्यादिना** । मन्यसे त्वं भिन्नाभिन्नवादीति शेषः ॥ ३१ ॥

अन्यत्रानिषेधं कुर्वतो व्याघातमाह **शब्दप्रयोगमिति** । अन्यशब्दप्रयोगमित्यर्थः । शब्दान्तरप्रयोगो अनन्यशब्दप्रयोगः प्रतिषिध्यत इति कर्मकर्तरि प्रयोगः प्रतिषेधत इति षष्ठ्या तत्कर्तृविवक्षाभावात् ।

**तदभावेत्यादि सिद्धान्तसूत्रम्** । तद्भाष्यमन्यस्मादि-

(भा०)अन्यस्यानन्यतामुपपादयति भवान्, उपपाद्य चान्यत् प्रत्याचष्टे—अनन्यदिति च शब्दमनुजानाति—प्रयुङ्क्ते चानन्यदिति। एतत् समासपदम्। अन्यशब्दोऽयं प्रतिषेधेन सह समस्यते। यदि चात्रोत्तरं पदं नास्ति कस्यायं प्रतिषेधेन सह समासः। तस्मात्तयोरन्यानन्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिद्ध्यतीति। तत्र यदुक्तमन्यताया अभाव इत्येतदयुक्तमिति ॥३२॥

"अस्तु तर्हीदानीं शब्दस्य नित्यत्वम्"—

(सू०) "विनाशकारणानुपलब्धेः" ॥ ३३ ॥

(ख०) अयुक्तमिति। न च स्वस्मात् 'अनन्यत्' परस्मादपि 'अनन्यत्' भवितुमर्हति। नहि नीलमात्मनः 'अनन्यत्' इति पीतादपि 'अनन्यत्' भवति। अन्यदेव हि नीलम्पीतादिति परमार्थः।

पूर्वहेतौ निरस्ते पूर्वपक्षी शब्दनित्यतायां हेत्वन्तरमुपन्यस्यति विनाशेति सूत्रम्।

---

(भा० चं०) **स्यादि**। अन्यत् अन्यपदाभिधेयं। व्याघातं स्फुटयति **अनुजानातीति**। व्याघाते समासानुपपत्तिं हेतुमाह **यदि चात्रोत्तरमित्यादिना**। उत्तरपदं नास्ति तत्पदार्थापलापादिति भावः। प्रतिषेधेन नञ्पदेन करणसाधनमिदं पदम्। अपेक्षमाण इत्यत्र समर्थः पदविधिरित्यभिप्रायः। अन्यशब्दमित्यत्र अन्यशब्दार्थमित्यर्थः। पदार्थयोः सम्बन्धे सति पदयोः समासोपपत्तेः अन्यथा तदनुपपत्तेः तदिदमाह **अयुक्तमिति** ॥ ३२ ॥

हेत्वन्तरेण शब्दस्य नित्यत्वं साधयितुमाह **अस्त्विति**। **विनाशेत्यादि सूत्रम्**। विनाशकारणेनानुपलब्धिरिति विग्रहः(१)। तद्व्याचष्टे

---

(टि०) १ विनाशस्य कारणेनानुपलब्धेरित्यर्थः।

(भा०)"यदनित्यं तस्य विनाशः कारणाद्भवति । यथा लोष्टस्य कारणद्रव्यविभागात्। शब्दश्चेदनित्यस्तस्य विनाशो यस्मात्कारणाद्भवति तदुपलभ्येत। न चोपलभ्यते। तस्मान्नित्य इति"॥३३॥

(सू०) अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥ ३४ ॥

(भा०)यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्ग एवमश्रवणकारणानुपलब्धेः सततं श्रवणप्रसङ्गः। "व्यञ्जकाभावादश्रवणमिति"- चेत् १ प्रतिषिद्धं व्यञ्जकम्। अथ विद्यमानस्य निर्निमित्तमश्रवणमिति विद्यमानस्य निर्निमित्तो विनाश इति। समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥ ३४ ॥

(सू०)उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥३५॥

(ख०)अश्रवणेति सिद्धान्तिसूत्रम्।

उपलभ्यमान इति सिद्धान्तसूत्रम्। 'अनपदेश' इति अहेतुरित्यर्थः।

(भा०चं०)यदनित्यमित्यादिना। तस्येति कर्तरि षष्ठी। भवति उत्पद्यते प्रतिपद्यते वा। विभागादिति पञ्चमी जनकहेतौ ज्ञापकहेतौ वा ॥३३॥

सिद्धान्तिनः प्रतिबन्द्योत्तरसूत्रम् **अश्रवणेत्यादि**। अश्रवणकारणेन प्रकारिणा अनुपलब्धिः शब्दस्य तस्याः अश्रवणकारणवत्त्वेन अनुपलब्धत्वादित्यर्थः(१)। व्याचष्टे **यथेत्यादिना**। अविनाशप्रसङ्गस्तवमते इति शेषः। एवं यथा मम मते अश्रवणेत्यादिहेतोः सततश्रवणप्रसङ्गः। शेषं स्पष्टम् ॥ ३४ ॥

प्रतिबन्द्योत्तरमनुत्तरमेवेति मत्वा स्वमते हेतुमाह **उपलभ्येत्यादि**

---

(टि०) १ अत्रापि अश्रवणस्य कारणेनानुपलब्धिरिति विग्रहः।

( भा० ) अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः,—यथा यस्माद्विषाणी तस्मादश्व इति । किमनुमानमिति चेत्–सन्तानोपपत्तिः । उपपादितः शब्दसन्तानः संयोगविभागजाच्छब्दाच्छब्दान्तरं ततोऽप्यन्यत्ततोऽप्यन्यदिति । तत्र कार्यः शब्दः कारणशब्दं निरुणद्धि । प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधकः । दृष्टं हि तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य, श्रवणं दूरस्थेनाप्यसति व्यवधाने इति ।

---

( ख० ) प्रतिघातीति । शब्दस्य गुणत्वाद्गुणे च गुणान्तरासम्भवात् तस्य संयोगो वैशेषिकराद्धान्तविरुद्ध इति कृत्वा प्रतिघातिद्रव्यमत्र आकाशमेवेति तात्पर्यकाराः । तथा चोक्तम्–एतदुक्तम्भवति । घनतरद्रव्यसंयुक्तं नभो न शब्दसमवायिकारणताम्प्रतिपद्यते । ततश्च शब्दो न शब्दान्तरमारभते इति । प्रतिघातिद्रव्यमत्र शब्दनिमित्तकारणीभूतो वायुरेवेति न्यायकन्दलीकाराः ।

---

(भा०चं०)**सूत्रम्** । अनपदेशः त्वदुक्तो हेतुरिति शेषः । अनपदेशोऽज्ञापक इत्यर्थः । तद्व्याचष्टे **अनुमानाच्चेत्यादि** । हेतोरज्ञापकत्वं दृष्टान्तेन दृढयति **यथेत्यादि** । तथाच स्वरूपासिद्धोयं त्वदुक्तो हेतुरिति शेषः । पृच्छति **किमिति** । उत्तरं **सन्तानेति** । सन्तानोपपत्तिः सन्तानस्य शब्दोत्पत्तिविशेषस्य उपपत्तिरनुमानम् । सन्तानानुमानविशेषणादिति सूत्रोक्तं तदेवानुमानमस्येति भावः । कार्यशब्दः उत्तरोत्तरशब्दः कारणशब्दं पूर्वपूर्वशब्दं निरुणद्धि नाशयति । तर्हि चरमशब्दनाशकं किमित्याकांक्षायामाह **प्रतिघातीति** । प्रतिघातिद्रव्यं कुड्यादि मूर्तं तेन सह समवायिकारणस्याकाशस्य संयोगः । तिरःप्रतिकुड्यं प्रतिघातिकुड्येन तिरोहितेन शब्दकर्तुरन्तिकस्थेन

(भा०)घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानोऽविच्छेदेन श्रूयते। तत्र नित्ये शब्दे घण्टास्थमन्यगतं वाऽवस्थितं सन्तानवृत्ति वाऽभिव्यक्तिकारणं वाच्यं येन श्रुतिसन्तानो भवतीति। शब्दभेदे चासति श्रुतिभेद उपपादयितव्य इति।

अनित्ये तु शब्दे घण्टास्थं सन्तानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं पटु मन्दमनुवर्तते। तस्यानुवृत्त्या शब्दस-

---

(ख०) शब्दभेद इति। नित्यस्य शब्दस्य न स्वाभाविको भेदो नाप्यौपाधिक इत्युपपादितम्। तथाच सति यदि घण्टास्थेन व्यञ्जकेनान्यवृत्तिना वाऽवस्थितेन सन्तानवृत्तिना वा नित्यः शब्दो व्यज्येत तर्हि तार–तारतर–तारतम—मन्द–मन्दतर–मन्दतमादिश्रुतिभेदो न स्यादेवेत्याशयः। यदि च तारतमादयस्तावन्त एव शब्दा नित्यास्ततस्तावन्त एव युगपदेव गम्येरन् विशेषाभावात्। एको हि व्यञ्जक एषां स्थिर इति। घण्टास्थस्य सन्तानवृत्तेः कारणत्वे युक्तं यत् तारतमादिभेदेन कारणभेदात्कार्यभेद इति।

---

(भा०चं०) श्रोतुं समर्थेन पुरुषेणेत्यर्थः। तृतीया कर्तरि। शब्दस्येति कर्मणि षष्ठी। उभयप्राप्तौ कर्मणीति नियमात्। **असति व्यवधाने इति**। अव्यवहितपुरुषेणेत्यर्थः।

घण्टायामिति,–कालविशेषज्ञापकवाद्यविशेषस्याप्युपलक्षणम्। श्रुतिभेदात् श्रावणानुभवविशेषात् अविच्छेदेन सातत्येन। तत्र सातत्यश्रवणविषये नित्ये नित्यत्वे अङ्गीक्रियमाणे त्वया। शब्दभेदे शब्दविशेषेऽसति त्वन्मतेऽविद्यमाने श्रुतिभेदः शब्दप्रत्यक्षविशेषः तारस्तारतरो मन्द्रो मन्द्रतर इत्यादिरूपः। उपपादयितव्यः समर्थयितव्यस्त्वयेति शेषः। भवन्मते किं समर्थकमित्यत आह **अनित्ये तु शब्द इति**।

( भा० )न्तानानुवृत्तिः । पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य । तत्कृतश्च श्रुतिभेद इति ॥ ३५ ॥

"न वै निमित्तान्तरं संस्कार उपलभ्यते । अनुपलब्धेर्नास्तीति" ।

---

( भा० चं० ) घण्टास्थं घण्टास्थितमेव सन्तानवृत्ति सन्तानोत्पत्तिकं संस्कारभूतं वेगाख्यसंस्कारस्वरूपं निमित्तान्तरं जनकान्तरम्, कीदृशं संयोगसहकारि संयोगः सहकारि यस्य तत्तथा । तत्पुनः कीदृशं पटु मन्दं पटु च मन्दञ्चेत्यर्थः । अनुवर्त्तते यावच्छब्दश्रवणं वर्त्तते । अत्र वार्त्तिकं–शब्दानामुत्पत्तिकारणं घण्टावृत्ति कदाचिद्भवति कदाचिद्भावेऽपि सति सन्तानवृत्ति तत्कारणं तस्मात् निमित्तभेदानुविधायिनः शब्दाः कदाचिद् भवन्ति इति। सन्तानवृत्तित्वाच्च मन्द्रमन्द्रतरादिभिन्नरूपानुविधायिनं शब्दमुत्पादयन्तीति । शब्दकारणं च संस्कार इति। कुतस्तदुत्पत्तिः ? पाणिसंश्लेषमपेक्षमाणात् कर्मणः पाणिघण्टासंश्लेषात् पाणिगतवेगापेक्षातो घण्टायां कर्म भवति तत्कर्म पाण्यभिघातमपेक्षमाणं विभागसमकालं संस्कारं करोति। सा च चलन्ती स्वान्तर्वर्तिनं वायुमुपसङ्गृह्णाति सा च वायुनाभिहता पुनः कर्म करोति ततः कर्मणः संस्कारः संस्कारेण पुनः कर्म पुनर्वायूपग्रहः इत्येवमादिन्यायेन संस्कार उत्पद्यत इति। तत्र अन्त्यस्य संस्कारस्य अतिमान्द्यात् घण्टायां महाभूतसंक्षोभणशक्तेरभावः ततो वायूपग्रहोच्छेदः ततः संस्कारसमुच्छेद इति ॥ ३५ ॥

उत्तरसूत्रप्रवर्तकं पूर्वपक्षमाह **नेति** । वै प्रसिद्धौ अवधारणे वा । नैवोपलभ्यत इत्यन्वयः । अनुपलभ्यमानोऽप्यस्तीत्यत आहानुपलब्धेरिति । साधकप्रमाणाभावान्नास्तीत्यर्थः ।

( सू० ) पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥ ३६ ॥

(भा०)पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति। तस्मिंश्च सति शब्दसन्तानो नोपलभ्यते। अतः श्रवणानुपपत्तिः। तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धीत्यनुमीयते। तस्य च निरोधाच्छब्दसन्तानो नोत्पद्यते। अनुत्पत्तौ श्रुतिविच्छेदः। यथा,-प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति। कम्पसन्तानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः। कांस्यपात्रादिषु पाणिसंश्लेषो

---

( ख० ) पाणीति सिद्धान्तिसूत्रम्। अत्र सूत्रार्थे मतभेदः। पाणिरूपस्य शब्दाभावनिमित्तस्य 'प्रश्लेषात्' संयोगात् 'शब्दाभावे' उपलभ्यमाने शब्दाभावकारणस्य 'नानुपलब्धिः' इति केचित्। अन्ये तु 'पाणि''रूपनिमित्तस्य' 'प्रश्लेषः' कार्यत्वरूपसम्बन्धो यत्र स शब्द उत्तरशब्दः, तस्मात् 'शब्दाभावे' शब्दध्वंसे सति-विनाशकारणस्य 'नानुपलब्धिः' इति। प्रथममेव भाष्यसम्मतम्प्रातिभाति। तत्र च 'नानुपलब्धिः' इत्यस्य 'संस्कारस्यानुपलब्धिरिति न' इत्येवमन्वयः कार्यः।

'पाणिसंश्लेषः' इति सर्वत्र पाठः। कांस्यपात्रादिषु(१)स्पर्शनेन्द्रियग्राह्यस्य कम्पसन्तानस्य उपरमः, तथाच (२)पाणिसंश्लेषः-

---

( भा० चं० )समाधानं **पाणिनिमित्तमित्यादि सूत्रम्**। तद्व्याचष्टे **पाणीत्यादि**। प्रश्लेषः कम्पवारकः संयोगः। श्रवणानुपपत्तिः श्रवणनिवृत्तिः। ननु कम्पश्चेदस्ति घण्टायां मन्द्रतरकालेऽपि चक्षुषा दृश्येतेत्यत आह **स्पर्शनेति**। तर्हि क दृष्टमित्यत आह **कांस्येति**।

(भा०) लिङ्गं संस्कारसन्तानस्येति । तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥ ३६ ॥

(सू०) विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः ॥ ३७ ॥

(भा०) यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते, अवस्थानाच्च तस्य नित्यत्वं प्रसज्यते, एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतम्, न तेषां विनाशकारणं भवतोपपाद्यते, अनुपपादनादवस्थानमवस्थानात् तेषां नि-

---

(ख०) इत्येतदुभयमेव संस्कारसन्तानस्य लिङ्गमिति सम्बन्धः।

'पाणिसंश्लेषे' इति पाठे तु—'कांस्यपात्रादिषु पाणिसंश्लेषे सति स्पर्शनेन्द्रियग्राह्यस्य कम्पसन्तानस्य उपरमः संस्कारसन्तानस्य लिङ्गं सूचकं भवतीत्येवं' सम्बन्धः कार्यः।

विनाशकारणानुपलब्धेरिति त्रयस्त्रिंशसूत्रोक्तम्पूर्वपक्षहेतुम्प्रत्याचष्टे विनाशेत्यादि सूत्रम्।

---

(भा०चं०)पाणिसंश्लेषः पाणिसंयोगः लिङ्गं ज्ञापकं संव्याप्यं व्यालिङ्ग्यत इति योगात्। संस्कारसन्तानस्य कम्पसन्ताननिष्पाद्यसंस्कारसन्तानस्य। उपसंहरति **तस्मादिति** ॥ ३६ ॥

विनाशकारणानुपलब्धेरिति सूत्रे यच्छब्दनित्यत्वमापादितं पूर्वपक्षिणा तेनैव हेतुना भाष्यकृच्छब्दश्रुतिनित्यत्वमापादयति **विनाश इत्यादिना प्रसङ्ग(१)इत्यन्तेन**। तदिदं स्ववाक्यं व्याचष्टे **यदीत्यादिना प्रसज्यत इत्यनेन**। परापाद्यमनूद्य स्वापाद्यमाह **एवमित्यादिना**। शब्दश्रवणानि शब्दग्रहणानि शब्दाभि-

---

(टि०) १ भाष्यचन्द्रमते नेदं सूत्रम्।

(भा०)त्यत्वं प्रसज्यत इति। अथ नैवं,न तर्हि विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति ॥ ३७ ॥

"कम्पसमानाश्रयस्य चानुनादस्य पाणिप्रश्लेषात् कम्पवत् कारणोपरमादभावः । वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषात् समानाधिकरणस्यैवोपरमः स्यादिति" ।

( सू० )अस्पर्शत्वादप्रतिषेधः ॥३८॥

---

(ख०)साङ्ख्यः प्रत्यवतिष्ठते—कम्पसमानाश्रयस्येत्यादि स्यादित्यन्तम् ।

अनुवृत्तो नादः शब्दोऽनुनाद इत्यर्थः ।

प्रतिघातीति । द्रव्यप्रश्लेषसमानाधिकरणस्यैव संस्कारस्योच्छेदः स्यात्, न व्यधिकरणस्य शब्दस्य । व्यधिकरणस्य तूच्छेदाभ्युपगमेऽतिप्रसङ्गः स्तात् । तस्मात्कम्पसन्तानसंस्कारसमानाश्रयः शब्दोऽभ्युपगन्तव्यः । तदनेनाकाशाश्रयत्वं शब्दस्य प्रतिषिद्धमिति हृदयम् ।

---

( भा० चं० )व्यक्तय इति व्याख्या इति मतं तवेति शेषः । **अथ नैवमिति** । विनाशकारणानुपलब्धेरपि शब्दश्रवणनित्यत्वं नाङ्गीकरोषि चेत्परस्यापि सा गतिरित्याह **न तर्हीति** ॥ ३७ ॥

सूत्रमवतारयितुं पूर्वपक्षवचनमाह **कम्पेत्यादि स्यादित्यन्तम्** । कम्पसमानाश्रयस्य कम्पसमानाधिकरणस्य अनुनादस्य उत्तरोत्तरध्वनेः । कम्पवत् कम्पस्येव । वैय्यधिकरण्ये दोषमाह **वैयधीत्यादिना** । (१)समानाधिकरणस्यैवेत्येवकारेण श्रोत्रस्थनादस्योपरमं वारयति। **अस्पर्शत्वादित्यादि सूत्रम्** । तद्व्याचष्टे **यदिदमित्यादिना** । नाकाशगुणः नाकाशमात्रगुणः । अनुपपन्नमिति नञ्-

---

(टि०) १ समानाधिकरणस्येत्यनेन कम्पसमानाधिकरणस्येत्यर्थः।

( भा० )यदिदं नाकाशगुणः शब्द इति प्रतिषिध्यते, अयमनुपपन्नः—अस्पर्श वाच्छब्दाश्रयस्य । रूपादिसमानदेशस्याग्रहणे शब्दसन्तानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते, न कम्पसमानाश्रय इति ॥ ३८ ॥

प्रतिद्रव्यं रूपादिभिः सह सन्निविष्टः शब्दसमानदेशो व्यज्यत इति नोपपद्यते । कथम्?—

(सू०)विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३९ ॥

---

( ख० ) रूपादिसमानदेशस्येति । रूपादेरित्यर्थः ।

ज्ञायत इति । प्राप्यकारित्वमिन्द्रियाणां व्यवस्थितम् । घण्टाद्याश्रयः शब्दो न श्रोत्रम्प्राप्नोति । एवं हि प्राप्नुयाद् यदि घण्टा कर्णशष्कुलीमागच्छेत्—कर्णशष्कुली वा घण्टाम् । नचैतदुभयमस्ति । न चाहङ्कारिकमिन्द्रियं व्यापीत्युक्तमेव । तस्माच्छब्दाधारो निःस्पर्शो व्यापी वा आकाशः, तदाधारः शब्दः श्रोत्रमायाति सन्तानवृत्त्येति युक्तम् । तथैव च श्रवणमस्योपपद्यते नान्यथेत्याशयः ।

शब्दसमानदेश इति—शब्द इत्यर्थः ।

विभक्तीति सिद्धान्तिसूत्रम् । रूपरसगन्धस्पर्शशब्दसमुदायो वीणावेणुशङ्खादिद्रव्यम् । तत्र 'समासे' समुदाये स्थित एव शब्दो व्यज्यत—

---

(भा०चं०)व्याख्यानम् । शब्दाश्रयस्याकाशस्य । शब्दस्यास्पर्शव्यापिद्रव्याश्रितत्वमुपपादयितुमाह **रूपादीत्यादिसन्तानोपपत्तेरि-त्यन्तम्** । परिशेषानुमानमाह **अस्पर्शेत्यादि–ज्ञायत–इत्यन्तम्** । मूर्तस्थत्वं वारयति **न कम्पेनि** ॥ ३८ ॥

अनुपपत्तिसाधकं सूत्रमवतारयति **प्रतीत्यादि कथमित्यन्तेन** । **विभक्तीत्यादिसूत्रम्** । तद्याचष्टे **सन्तानेत्यादि** । समस्ताः मि-

(भा०)सन्तानोपपत्तेश्चेति चार्थः । तद्व्याख्यातम् । यदि रूपादयः शब्दश्च प्रतिद्रव्यं समस्ताः समुदितास्तस्मिन् समासे समुदाये यो यथाजातीयकः सन्निविष्टस्तस्य तथाजातीयस्यैव ग्रहणेन भवितव्यं शब्दे, रूपादिवत् । तत्र योऽयं विभागः—एकद्रव्ये नानारूपा भिन्नश्रुतयो विधर्माणः शब्दा अभिव्यज्यमानाः श्रूयन्ते, यच्च विभागान्तरं—सरूपाः समानश्रुतयः सधर्माणः शब्दास्तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते,—तदुभयं नोपपद्यते । नानाभूतानामु-

---

(ख०)इति साङ्ख्यदर्शनम् । तस्मिन समुदाये साङ्ख्याभिमते 'विभक्त्यन्तरोपपत्तेश्च' न व्यज्यते शब्द इति सूत्रार्थः । विभक्तिश्च विभक्त्यन्तरं चेति 'विभक्त्यन्तरम्' । यदि समुदाये व्यज्येत शब्दः 'विभक्तिः' षड्जधैवतगान्धारादिभेदेन—'विभक्त्यन्तरं च'—षड्जजातीयस्यैव तारमन्दाद्यवान्तरभेदेन—नोपपद्येत । तस्माद् 'विभक्त्यन्तरोपपत्तेः' न समासे व्यज्यते शब्दः, अपित्वाकाशगुणः क्रियत इत्येव साम्प्रतम् ।

भिन्नश्रुतय इति । षड्जादिरूपा इत्यर्थः ।

विभागान्तरमिति—षड्जस्यैव तारमन्दाद्यवान्तरभेदेनेत्याशयः ।

---

(भा०चं०)लिताः समानाधिकरणा इत्यर्थः । समासे समानाधिकरण्ये । यथाजातीयकः तारत्वादिविशेषवान् सन्निविष्टः रूपादिभिः सह मिलितः तथाजातीयस्यैतत्प्रकारेणैव ग्रहणेन अनुभवेन भवितुमुचितं न मन्दत्वादिना रूपादिवत् यथा रूपादौ न विशेष उपलभ्यते इत्यर्थः । उलभ्यन्ते तु तारो मन्द्रो मन्द्रतर इत्यादिविशेषाः । अयमनुभूयमानः विभागो विश्लेषः ध्वनेरिति शेषः । विभज्यमानो ध्वनिरिति वार्थः । विभागं व्याचष्टे **नानेति** । नाना विभिन्नानि रूपाणि विशेषणानि येषां ते नानारूपाः । नानारूपत्वे मानं **भिन्नश्रुतय** इति । बहुव्रीहिरयं विधर्माण इति । नानारूपपदव्याख्याशब्दाः नादानुनादाः अभिव्यज्यमानाः

(भा०)त्पद्यमानानामयं धर्मो नैकस्य व्यज्यमानस्येति । अस्ति चायं विभागो विभागान्तरं च । तेन विभागोपपत्तेर्मन्यामहे न प्रतिद्रव्यं रूपादिभिः सह शब्दः सन्निविष्टो व्यज्यत इति ॥३९॥

( ३ ) शब्दपरिणामप्रकरणम् ।

( भा० ) द्विविधश्चायं शब्दो वर्णात्मको ध्वनिमात्रश्च । तत्र वर्णात्मनि तावत्—

---

(ख०) तदेवं रूपादिसन्निविष्टः शब्दो व्यज्यत इति साङ्ख्यमते दूषिते स एव साङ्ख्यो वर्णेषु प्रकृतिविकारभावश्रुतेः मृत्सुवर्णादिवत् परिणामिनित्या वर्णा इति यदि प्रत्यवतिष्ठते तत्र परीक्षामारभते—द्विविध इति ।
'वर्णलक्षण' अकारादिः, 'ध्वनिलक्षणः' शङ्खादिनिमित्तः ।

---

( भा० चं० ) उपपद्यमानाः । सरूपाः तीव्रत्वेनैव मन्द्रतरत्वेनैवैकरूपाः एकविशेषाः अतः समानश्रुतयः अविजातीयश्रवणविषयाः सधर्माण इति पूर्ववद् व्याख्यानम् । तदुभयं सधर्मविधर्मरूपं द्वयं नोपपद्यते प्रमाणाभावादभिव्यक्तिपक्ष इति शेषः । स्थिरस्यैकरूपत्वात् स्वपक्षे सम्भवमाह **नानेति** । अयं विभागो(१) नादविभागःविभागान्तरं(२) वर्णविभागः अस्ति च अस्त्येवेत्यर्थः । विधिनिषेधावुपसंहरति **तेनेत्यादिना** । रूपादिभिः सह सन्निविष्टः समानाधिकरण इत्यर्थः । व्यज्यत इतीतिशब्दः नित्यानित्यत्वपरीक्षाप्रकरणसमात्यर्थः ॥ ३९ ॥

इति श्रीभाष्यचन्द्रे नित्यत्वानित्यत्वपरीक्षाप्रकरणभाष्यचन्द्रिका ।

विकारादेशपरीक्षाप्रकरणमवतारयति **द्विविधश्चायं शब्दइति**। सूत्रापेक्षितं पदमध्याहरति **वर्णात्मनीति** । **विकारेत्यादिसूत्रम्** ।

---

(टि०) १ विभिन्नश्रुतित्वरूपो विभागः ।
२ विभागान्तरं समानश्रुतित्वरूपम् ।

( सू० ) विकारादेशोपदेशात्संशयः ॥ ४० ॥

(भा०) "दध्यत्रेति" केचिद् इकार इत्वं हित्वा यत्वमापद्यत इति विकारं मन्यन्ते । केचिदिकारस्य प्रयोगे विषयकृते यदिकारः स्थानं जहाति तत्र यकारस्य प्रयोगं ब्रुवते । संहितायां विषये इकारो न प्रयुज्यते, तस्य स्थाने यकारः प्रयुज्यते, स आदेश इति। उभयमिदमुपदिश्यते । तत्र न ज्ञायते किं तत्त्वमिति ?

आदेशोपदेशस्तत्त्वम् ।

विकारोपदेशे ह्यन्वयस्याग्रहणाद्विकारानुमानम् । सत्यन्वये

---

(ख०) न ज्ञायत इति । इको यणचीत्यत्र उक्तव्याख्यातृविप्रतिपत्तेः संशयः । तन्नापरीक्ष्य शक्यमवधारयितुम् ।

विकारोपदेश इति । विकारो हि नाम न बौद्धनयवत् पूर्वस्य नि-

---

( भा० चं० ) विप्रतिपत्तिजोऽयं संशय इति दर्शयति **केचिदिति** । केचित्कालापादयः । इवर्णोऽयमसवर्णे न च परोच् लोप्य इति कालापसूत्रम् । इयं स्वर इति सारस्वतसूत्रम् । तद्व्याख्यानम् दर्शयति इकारइत्यादि इतीत्यन्तम् । आदेशवादं दर्शयति । **केचिदिकारस्येति** । विषयकृते कार्यत्वेनेष्टे । स्थानं धोत्तरकालम् । जहाति तस्मिन् काले न प्रयुज्यत इत्यर्थः । प्रयोज्यं दर्शयति **यकारस्येति** । प्रयोगं पाणिनीयादिशास्त्रविहितम् इकोयणचि इत्यनेन ब्रुवते संहितायाम् तन्मतानुसारिणः । संहितायाम् अव्यवधानेन प्रयोगेच्छायाम् । विषये विषयिण्याम् । शेषं स्पष्टम् । सः प्रयोगः ।

पाणिनीयमतम् पक्षीकरोति **आदेशोपदेशस्तत्त्वमिति** । सत्त्वं तत्त्वोपदेशः । यद्वाऽऽदिश्यत इत्यादेशः उपदिश्यत इत्युपदेशः ततस्तयोः कर्मधारयः ।

( भा० )किञ्चिन्निवर्तते किञ्चिदुपजायत इति शक्यते विकारोऽनुमातुम् । न चान्वयो गृह्यते । तस्माद्विकारो नास्तीति ।

भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः । विवृतक-

---

(ख०)रन्वयनिवृत्तावुत्तरस्य प्रादुर्भावः साङ्ख्यस्य विवक्षितः—किन्त्ववस्थितस्यैव धर्मिणः पूर्वपूर्वधर्मतिरोभावे धर्मान्तरस्याविर्भावः । न चैकारस्य धर्मस्य धर्मी कश्चिदुपलम्भगोचरो य इकारधर्मनिवृत्तावप्यनुवृत्ताकारतया परिणमेत ।

विकारो नास्तीति । सुवर्णजातीयाः खल्ववयवा अन्यतमव्यूहपरित्यागेनान्यतमव्यूहमापद्यमानाः 'रुचक' इति वा 'वर्धमान' इति वा परिणमन्ते । अस्ति हि तेषु सर्वेषु सुवर्णजातीयानामवयवानामनुगमः । नतु यकारे इकारस्य वा तदारम्भकस्य वाऽवयवस्यानुगममीक्षामहे । तस्माद्विकाराभावादादेशमस्य निश्चिनुमः ।

उपपत्त्यन्तरं चाविकारे दर्शयति—भिन्नकरणयोरिति । यदि हि इकारविकारो यकारः स्याद् यकारप्रयोगाय इकारमुपाददानास्तत्कारणं विवृतकरणं पूर्वमुपाददीरन् । तन्निरपेक्षास्तु यकारम्प्रयोक्ष्यमाणाः ईषत्स्पृष्टकरणमुपाददते । तस्मान्नेकारविकारो यकार इति युक्तमुत्पश्यामः ।

---

( भा० चं० )इदमेव तत्त्वं कथमित्यत आह **विकारोपदेशे हीत्यादि** । पक्ष इति शेषः । अन्वयस्य प्रकृत्यनुगमस्य—प्रकृतितावच्छेदकधर्मस्य इत्यस्याग्रहणात् अननुभवात् विकृत्यनुमित्यभावः । सत्यन्वये प्रकृतितावच्छेदकान्वये सति । किञ्चिद् पिण्डाद्याकारत्वं निवर्तते । किञ्चिद् कुण्डलाद्याकारत्वम् ।

भिन्नकरणयोः भिन्नप्रयत्नजन्ययोः । अप्रयोगे पूर्वस्येति शेषः । प्रयोगोपपत्तिः परस्येति शेषः । प्रयत्नभेदं दर्शयति **विवृतेति** ।

(भा०)रण इकार ईषत्स्पृष्टकरणो यकारः। ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ। तयोरेकस्याप्रयोगेऽन्यतरस्य प्रयोग उपपन्न इति।

अविकारे चाविशेषः। यत्रेमाविकारयकारौ न विकारभूतौ-यतते यच्छति प्रायंस्त इति, इकार इदमिति च,-यत्र च विकारभूतौ-इष्ट्वा दध्याहरेति,-उभयत्र प्रयोक्तुरविशेषो यत्नः, श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः।

प्रयुज्यमानाग्रहणाच्च। न खलु इकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते। किं तर्हि? इकारस्य प्रयोगे यकारः प्रयुज्यते। तस्मादविकार इति।

---

( ख० ) उपपत्त्यन्तरमाह-अविकार इति।

प्रयुज्यमानेति। यथाहि क्षीरं कालविपाकापेक्षं दधि भवत् दृश्यते, न तथा इकारो यकारो भवन्नित्यर्थः।

---

( भा० चं० )विवृतमूष्मणां स्वराणाञ्चेति स्मरणात्। **ईषदिति**। ईषत्स्पृष्टमन्तस्थानामिति स्मरणात्। **पृथगिति**। तृतीयान्तं पदमव्ययम्। करणाख्येनेति व्यापाराख्येनेत्यर्थः। उच्चारणीयौ उत्पादनीयौ।

विकारवादम् निरसितुम् विकाराविकारयोरविशेषमाह **अविकारेचेति**। यती प्रयत्ने यमुपरमे इत्यनयोस्त्रयः प्रयोगाः। अविकारोदाहरणम् इकार इदमिति चेति द्वयमपि तथा। विकारभूतावुदाहरति **इष्ट्वा दध्याहरेति**। वचिस्वपि यजादीनाङ्किति चेति सूत्रेण सम्प्रसारणाख्यविकारादेशः। उभयत्र विकाराविकारयोस्तव मते मम मते आदेशानादेशयोः श्रुतिरविशेषेत्यनुषङ्गः।

विकारे प्रमाणाभावमाह **न खल्विति**। गृह्यते अनुभूयते सुव-

(भा०)अविकारे च न शब्दान्वाख्यानलोपः।न विक्रियन्ते वर्णा इति–न चैतस्मिन्पक्षे शब्दान्वाख्यानस्यासम्भवो येन वर्णविकारं प्रतिपद्येमहीति ।

न खलु वर्णस्य वर्णान्तरं कार्यम् । न हि इकाराद्यकार उत्पद्यते यकाराद्वा इकारः । पृथक्स्थानप्रयत्नोत्पाद्या हीमे वर्णाः। तेषामन्यो ऽन्यस्य स्थाने प्रयुज्यत इति युक्तम् ।

एतावच्चैतत्परिणामो विकारः स्यात् कार्यकारणभावो वा । उभयं च नास्ति । तस्मान्न सन्ति वर्णविकाराः ।

---

(ख०) यदि न विकारः कथन्तर्हि शब्दान्वाख्यानम्–इकोयणचीत्यत आह—अविकारे चेति ।

न चैतस्मिन्निति । इकः प्रयोगप्रसङ्गे संहितायां यणः प्रयोगमाह तत्सूत्रम्, नपुनरिग्विकारं यणमित्यर्थः ।

ननु मा भूद्विकारः, परिणामोऽर्थान्तरन्तु भविष्यति ततो नित्या वर्णा भविष्यन्तीत्यत आह न खल्विति ।

उभयमिति । इगनपेक्षस्य यणो निष्पत्तेर्न तयोः कार्यकारणभावः। तदभावे च न परिमाणादिसम्भव इत्यर्थः ।

---

( भा० चं० )र्णं घट्यमानं कुण्डलतामापद्यमानमिवेति शेषः ।

ननु कलापादिव्याकरणं विरुद्धं स्यादिति समानाधिकरणप्रयोगात् विकारवादस्यैव प्रतिभानादिति चेन्नेत्याह **अविकारे चेति** । आदेश एवेत्यर्थः । शह्वान्वाख्यानं पाणिनीयादिशास्त्रं तस्य न लोप इत्यर्थः ।

परिणामः प्रकृतिविकृतिभावः कार्यकारणभावो निमित्तनैमित्तिकभावः । उपसंहरति **तस्मान्नेति** । आदेशवाद एवोपपद्यते इत्यर्थः ।

( भा० )वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः। 'अस्तेर्भूः' 'ब्रुवो वचि'रिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं, शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते, तथा वर्णस्य वर्णान्तरमिति ॥ ४० ॥

इतश्च न सन्ति विकाराः—

( सू० ) प्रकृतिविवृद्धौ विकारवृद्धेः ॥ ४१ ॥

( भा० ) प्रकृत्यनुविधानं विकारेषु दृष्टम्। यकारे ह्रस्वदीर्घानुविधानं नास्ति, येन विकारत्वमनुमीयत इति ॥ ४१ ॥

---

( ख० ) इकोयणचीति सूत्रमादेशोपदेश एव न विकारोपदेश इत्यत्र हेत्वन्तरम्–वर्णसमुदायेति। एवं ह्यत्र प्रयोगः। योऽयमिकः स्थाने संहितायां यण् उपदिश्यते नासौ तस्य विकारः, ततो वर्णातिरिक्तत्वात्, 'अस्तिस्थाने प्रयुक्त'भू'वत्–इति।

अनुमीयत इति। महद्भिः खलु तूलपिण्डैरारब्धः स्थूलः पिण्डः, अल्पैश्चारब्धोऽल्प इति दृष्टम्। तद्वदिहापि दीर्घेकारविकारस्य यकारस्य ह्रस्वेकाराविकाराद् भवितव्यं विशेषेण। न चास्ति विशेषः। तस्मान्न प्रकृतिविकृतिभावः।

---

( भा० चं० ) अविकारे आदेशान्तरं दृष्टान्तमाह **वर्णसमुदायेति**। अस्तेर्भूरिति अनेकवर्णस्थाने एकवर्णादेशः ब्रुवोर्वचिरिति संयोगस्थानेऽसंयोगादेशः। धातुलक्षणस्य धातुस्वरूपस्य ॥ ४० ॥

हेत्वन्तरप्रदर्शनाय सूत्रं **प्रकृतीत्यादि**। इह खंडे त्रिविधा प्रकृतिः। आरम्भवादिनां परमाण्वादिः। परिणामवादिनां प्रधानादिः। ब्रह्मवादिनां ब्रह्ममायादिरिति। तस्याः स्वकार्यापेक्षया पाणिनीये ज-

(सू०) "न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः" ॥४२॥

( भा० ) "द्रव्यविकारा न्यूनाः समाः अधिकाश्च गृह्यन्ते। तद्वदयं विकारो न्यूनः स्यादिति" ॥ ४२ ॥

( सू० ) द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः ॥४३ ॥

( भा० )अत्र नोदाहरणसाधर्म्याद्धेतुरस्ति, न वैधर्म्यात्।

---

( ख० ) न्यूनेत्याक्षेपसूत्रम् । अल्पेन न्यग्रोधबीजेनारब्धो न्यग्रोधतरुर्महान् । ततोऽतिमहता वा नारिकेलबीजेनारब्धो नारिकेलतरुस्तदपेक्षयाऽल्पः । नारिकेलबीजैरेव परस्परापेक्षया समैरारब्धःसम इति।

द्विविधस्येत्यादिपरिहारसूत्रम् ।

न्यूनाधिकसमोपलब्धेरिति साधनन्न भवितुमर्हति । दृष्टान्तसाधर्म्येण दृष्टान्तवैधर्म्येणेत्युभयविधस्यापि हेतोरभावात् प्रतिदृष्टान्तस्य च सम्भवात्—इति परिहाराशयः ।

---

( भा० चं० )निवर्त्तुः प्रकृतिरिति सूत्रेणापादानसंज्ञा पञ्चमीविधानार्था तत्र सर्ववादिसिद्धदृष्टान्ते पटादिविकारे प्रकृत्यनुविधानं दृष्टं दीर्घेभ्यस्तन्तुभ्यो दीर्घः पटो जायते ह्रस्वेभ्यो ह्रस्वः पट इति नैतच्छब्दविकारे दृश्यते ह्रस्वदीर्घयोरपि ह्रस्वमात्रादेशात् । अतो यकारे विकारत्वानुमानं न सम्भवतीत्याह प्रकृतीत्यादिना ॥ ४१ ॥

व्यभिचारादहेतुरयमित्याह पूर्वपक्षी **न्यूनेत्यादिसूत्रम्** । तं व्याचष्टे **द्रव्येत्यादि** । दीर्घात्सुवर्णाद्वर्तुलाकारं कुण्डलमुत्पद्यते समेभ्यस्तन्तुभ्यः समः पट उत्पद्यते अल्पेभ्यस्तूलेभ्यो दीर्घाणि सूत्राण्युत्पद्यन्ते इति प्रकृत्यनुविधाननियमाभावः ॥ ४२ ॥

दृष्टान्तमात्रमसाधकमित्याह सिद्धान्ती **द्विविधस्येत्यादि सूत्रम्**।

( भा० )अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति ।

प्रतिदृष्टान्ते चानियमः प्रसज्येत । यथाऽनडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति, एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति । न चात्र नियमहेतुरस्ति—दृष्टान्तः साधको न प्रतिदृष्टान्त इति ॥ ४३ ॥

( भा० ) द्रव्यविकारोदाहरणं च—

(सू०) न, अतुल्यप्रकृतीनां विकारविकल्पात् ॥४४॥

---

( ख० ) यदि च न्यूनाधिकसमोपलब्धेरिति न साधनमपि तु सिद्धान्तोक्तहेतोरनैकान्तिकत्वोद्भावनन्तदा तत्र परिहारसूत्रम्—नातुल्येत्यादि ।

अतुल्यायाः प्रकृतेर्विकारा विकल्पन्ते अथ च विकाराः प्रकृतिभे-

---

(भा०चं०) द्विविधस्यान्वयिव्यतिरेकिरूपस्य । तदिदं विभज्य व्याचष्टे **अत्रेत्यादिना** । **अनुपसंहृत** इति । साध्यव्याप्यहेतुमत्तया अप्रदर्शित इत्यर्थः । न साधकः न पक्षे साध्यसिद्धिहेतुः ।

निर्हेतुकदृष्टान्तस्य साधकत्वेऽनिर्हेतुकप्रतिदृष्टान्तोपि साधकः स्यादित्याह **प्रतिदृष्टान्ते चेति** । अनियमः प्रसज्येत विशेषहेत्वभावादिति शेषः । अहेतुकं प्रतिदृष्टान्तमुदाहरति **यथाऽनडुह इति** । दार्ष्टान्तिकमाह **एवमित्यादि** । समीकरणं दृढयति **नचात्रेति** ॥४३॥

न केवलं निर्हेतुकत्वेनैव दृष्टान्तोऽयमसाधकः किन्तु द्रव्यगुणभावेन तुल्यत्वादपीत्याह **द्रव्यविकारोदाहरणं चेति** । नेति सूत्राक्षरेणान्वयः । तथा च दार्ष्टान्तिको गुणः दृष्टान्तस्तु द्रव्यमिति वैषम्यमिति भावः । **अतुल्येत्यादि सूत्रम्** । तद्व्याचष्टे **अतुल्यानामि-**

(भा०)अतुल्यानां द्रव्याणां प्रकृतिभावोऽवकल्पते, विकाराश्च प्रकृतीरनुविधीयन्ते । न त्विवर्णमनुविधीयते यकारः । तस्मादनुदाहरणं द्रव्यविकार इति ॥ ४४ ॥

(सू०)"द्रव्यविकारे वैषम्यवद् वर्णविकारविकल्पः" ॥४५॥

( भा० ) "यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम्, एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्प इति" ॥४५॥

---

(ख०)दमनुविधीयन्ते । तद्यथा न्यग्रोधबीजं न्यग्रोधवृक्षस्य प्रकृतिरथ च न्यग्रोधबीजान्न्यग्रोधवृक्ष एव जायते न नारिकेलवृक्षः । एतदेव च प्रकृत्यनुविधानं सिद्धान्तिनोक्तम्-न पुनः प्रकृतिवृद्धिह्रासाभ्यां विकृतिवृद्धिह्रासाविति ।

द्रव्यविकार इत्याक्षेपसूत्रम् ।

न प्रकृतिभेदमवश्यमनुविधीयन्ते विकाराः । द्रव्यत्वेन तुल्यत्वेऽपि प्रकृतीनां विकारवैषम्यदर्शनात् । एवं वर्णत्वेन तुल्यत्वेऽपि विकाराद्वैषम्यम्भवितुमर्हतीति दूषकस्य हृदयम् ।

---

(भा०चं०)त्यादिना । सूत्रस्थषष्ठयन्तं पदं बहुव्रीहिः कर्मधारयो वा । विकाराश्चेति चकारो भिन्नक्रमः विकारा विकल्पन्ते प्रकृतीरनुविधीयन्ते चेत्यन्वयः । दार्ष्टान्तिकेऽनुविधानं नास्तीत्याह **नत्विवर्णमिति** । न कश्चियकारो दीर्घो भवतीति भावः । उपसंहरति **तस्मादिति** । प्रकृत्यनुविधानाभावादित्यर्थः ॥ ४४ ॥

असिद्धो हेतुरित्याह **पूर्वपक्षी द्रव्येत्यादिसूत्रम्** । तद्याचष्टे **यथेति** । द्रव्यभावेन द्रव्यत्वेन तुल्यायाः समासः स्वविकारैः सहेति शेषः । एवं इत्थं वर्णभावेन वर्णत्वेन विकारविकल्पो विकारवैषम्यम् । अयं भावः-प्रकृतिविकृत्योरनुविधानं किं सर्वभावेन उत केन-

( सू० ) न, विकारधर्मानुपपत्तेः ॥ ४६ ॥

( भा० ) अयं विकारधर्मो द्रव्यसामान्ये-यदात्मकं द्रव्यं, मृद्वा सुवर्णं वा, तस्यात्मनोऽन्वये पूर्वो व्यूहो निवर्तते व्यूहान्तरं चोपजायते, तं विकारमाचक्ष्महे। न वर्णसामान्ये कश्चिच्छब्दात्माऽन्वयी य इत्वं जहाति यत्वं चापद्यते । तत्र यथा सति द्रव्यभावे विकारवैषम्ये नाऽनडुहोऽश्वो विकारो विकारधर्मानुपपत्तेः, एवमिवर्णस्य न यकारो विकारो विकारधर्मानुपपत्तेरिति ॥ ४६ ॥

---

( ख० )आक्षेपप्रत्याख्यानसूत्रम्-न विकारेति ।

---

( भा० चं० )चिह्नावेन ? आद्ये द्रव्येपि तन्न स्यात् । अन्त्ये अस्त्येव शब्देऽपि वर्णत्वेनानुविधानादिति ॥ ४५ ॥

न विकारेत्यादि **सिद्धान्तसूत्रम्** । **अयमित्यादि** भाष्यम् । विकारधर्मः विकारस्वभावः द्रव्यसामान्ये सतीति शेषः । यदात्मकं यत्स्वभावकं द्रव्यं मृत्सुवर्णादि घटकुण्डलादेः प्रकृतिः । तस्यात्मनोऽसाधारणधर्मस्य मृत्त्वसुवर्णत्वादेरन्वयेऽनुगमे सतीति शेषः । व्यूहः-पिण्डाद्याकृतिः अवयवसंयोगसमूहः । निवर्तते नश्यति । व्यूहान्तरमाकृत्यन्तरम्—घटाकृतिः कुण्डलाकृतिरित्यादि—आचक्ष्महे सावयवविकारवादिनो वयमित्यर्थः । दार्ष्टान्तिके तु तव तन्न सम्भवतीत्याह **न वर्णेति** । शब्दात्मा इकारादिरिति शेषः । नान्वयीत्यर्थः । यथा मृद्घटः सुवर्णं कुण्डलमिति विशेषणैवाभेदः प्रतीयते तथा इकारो यकार इत्यभेदेन प्रतीयत इति भावः । विशेषयोः प्रकृतिविकृतिभावाङ्गीकारात् । अस्तु सामान्येन प्रकृतिविकृतिभाव इत्याशयं निराकर्तुं प्रतिदृष्टान्तमाह **तत्र यथेति** । विकारधर्म्मानुपपत्तेरित्यस्यायमभिप्रा-

( भा० ) इतश्च न सन्ति वर्णविकाराः—

( सू० ) विकारप्राप्तानामपुनरापत्तेः ॥ ४७ ॥

(भा०)अनुपपन्ना पुनरापत्तिः। कथम्? पुनरापत्तेरननुमानादिति। इकारो यकारत्वमापन्नः पुनरिकारो भवति, न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्चेत्यत्रानुमानं नास्ति॥४७॥

( सू० ) "सुवर्णादीनां पुनरापत्तेरहेतुः"॥४८॥

---

( ख० ) सिद्धान्तोपोद्बलकं सूत्रम्—विकारेति। नो खलु क्षीरविकारो दधि पुनः क्षीरं भवद् दृष्टमिति भावः।

अननुमानादिति। प्रमाणाभावादित्यर्थः।

आक्षेपसूत्रम्—सुवर्णादीनामिति। विकारेत्यादि सिद्धान्त्युक्तोऽस-

---

( भा० चं० )यः—अनडुहः स्थानेऽश्वे बद्धेऽनड्वानितीयमभेदप्रतीतिः स्यादिति। अविकारत्वमुपसंहरति। **एवमिति** ॥ ४६ ॥

वर्णविकृतौ हेत्वन्तरमाह **विकारेत्यादिसूत्रम्**। व्याख्यानम**नुपपन्नेत्यादि**। अनुपपन्ना पुनरापत्तिरिति विकारप्राप्तानामित्यनेन सौत्रेणान्वितं। विकारो विकृतिः अप्राप्तानि दध्यादीनि तेषां पुनरापत्तिः प्रकृतिभावप्राप्तिः अनुपपन्नेतिसूत्रे नञर्थप्रतिपादनम्। अत्र प्रतिज्ञाते हेतुं पृच्छति **कथमिति**। उत्तरं **पुनरापत्तेरननुमानादिति**। यदि इकारस्य यकारो विकारः स्यात्तर्हि दध्नो दुग्धताप्राप्त्यभाववत् यकारस्य इभावप्राप्तिर्न स्यादिति भावः। प्राप्नोति तु इकारत्वं यकारः यथा ध्यायतेः सम्प्रसारणे धीरिति सिध्यति तस्य च समासे ध्याप्तिरिति तस्य व्याख्याने धीप्राप्तिरिति। प्रकृतिविकृतिभावे पुनः पुनरेवञ्च वैपरीत्यं नोपपद्यते इति प्रत्यक्षप्रतिषेधो नास्तीत्यत आह न **पुनरित्यादि** ॥ ४७ ॥

( भा० ) "अननुमानादिति न । इदं ह्यनुमानम्—

सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते । एवमिकारोऽपि यकारत्वमापन्नः पुनरिकारो भवतीति" ॥ ४८ ॥

व्यभिचारादननुमानम् । यथा पयो दधिभावमापन्नं न पुनः पयो भवति, किमेवं वर्णानां न पुनरापत्तिः—अथ सुवर्णवत् पुनरापत्तिरिति ? सुवर्णोदाहरणोपपत्तिश्च—

(सू०)न—तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥ ४९ ॥

---

( ख० )द्धेतुरित्यर्थः । विकारप्राप्तानामपि पुनरापत्तिदर्शनादनेकान्त इत्याशयः ।

पूर्वपक्ष्युक्तहेतोः साधनपक्षे तद्दूषणम्—व्यभिचारादिति ।

तस्यैव सिद्धान्तदूषणमात्रत्वे तदुत्तरम्-अथ सुवर्णवदित्यादि ।

न तद्विकाराणामिति सिद्धान्तिसूत्रम् ।

ये सुवर्णजातीया अवयवा रुचकत्वमापन्नास्त एव पूर्वव्यूहपरि-

---

( भा० चं० )असिद्धोऽयं हेतुरित्याह पूर्वपक्षी **सुवर्णेत्यादि सूत्रम्** । सुवर्णादीनां दृष्टान्तानां विकृतीनां पुनरापत्तिः पुनःपुनः प्रकृतिभावप्राप्तिः । अहेतुरिति पदं व्याचष्टे **अननुमानादिति** । नेति स्वपक्षे साधकं दर्शयति **इदं हीति** । अनुमानं दृष्टान्त इत्यर्थः । दार्ष्टान्तिकमाह **एवमिकारोपीति** ॥ ४८ ॥

इदमनुमानं व्यभिचारीत्याह **व्यभिचारादिति** । न पुनरापत्तिः पुनरनापत्तिः । अथेति पक्षान्तरे त्वन्मत इत्यर्थः । सुवर्णोदाहरणेन व्यभिचारो नास्तीत्याशङ्कायामाह **सुवर्णोदाहरणोपपत्तिश्च नेति** । नकारमिमं सूत्रावयवं केचित्पठन्ति ।

( भा० ) अवस्थितं सुवर्णं हीयमानेन धर्मेणोपजायमानेन च धर्मि भवति। नैवं कश्चिच्छब्दात्मा हीयमानेन इत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते। तस्मात्सुवर्णोदाहरणं नोपपद्यते इति ॥ ४९ ॥

(सू०)"वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः"॥५०॥

(भा०)"वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति, यथा सुवर्णविकारः सुवर्णत्वमिति" ॥ ५० ॥

(सू०) सामान्यवतो धर्मयोगो न सामान्यस्य ॥ ५१ ॥

---

(ख०) त्यागेन वर्धमानतामापन्नाः पुना रुचकत्वमापद्यन्ते, तदवयवानान्तत्र प्रत्यभिज्ञायमानत्वात्। न त्विहेकारो यकारानुगत इकारयकारानुगतो वाऽन्यः कश्चिद्धर्मी दृश्यते य इत्वम्परित्यज्य यत्वमापद्यते। वर्णत्वन्त्वनुगतमपि न धर्मि किन्तु धर्म एव। वर्णत्वस्य हि धर्मित्वे इको यणचीति नियमो न स्यात्, वर्णत्वस्य पञ्चाशत्साधारणत्वात्। नच निवर्तमान इकारो यकारस्य धर्मो भवितु मर्हति, धर्मधर्मिणोः समानकालत्वादिति सङ्क्षेपार्थः।

वर्णत्वाव्यतिरेकादित्याक्षेपसूत्रम्।

सामान्यवत इति परिहारसूत्रम्।

---

( भा० चं० )तद्विकाराणामित्यादि सूत्रम्। व्यतिरेकौ क्रमेण दर्शयति अवस्थितमित्यादिना नैवमित्यादिना च। उपसंहरति तस्मादिति ॥ ४९ ॥

पूर्वपक्षी दृष्टान्तदार्ष्टान्तिकयोः साम्येन प्रत्यवतिष्ठते वर्णत्वादित्यादिना सुवर्णत्वमित्यन्तेन। अप्रतिषेधः सुवर्णोदाहरणोपपत्तेरिति शेषः ॥ ५० ॥

सिद्धान्ती प्रतिसमाधत्ते सामान्यवत इत्यादिना। धर्म-

(भा०)कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य । एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ ? वर्णत्वं सामान्यं, न तस्येमौ धर्मौ भवितुमर्हतः। न च निवर्तमानो धर्म उपजायमानस्य प्रकृतिः । तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥ ५१ ॥

( भा० ) इतश्च वर्णविकारानुपपत्तिः—

(सू०) नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥५२॥

(भा०)नित्या वर्णा इत्येतस्मिन्पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद्विकारानुपपत्तिः। नित्यत्वेऽविनाशित्वात् कः कस्य विकार इति । अथानित्या वर्णा इति पक्षः, एवमप्यनवस्थानं वर्णानाम् ।"किमिदमनवस्थानं वर्णानाम्"? उत्पद्य निरोधः । उत्पद्य निरुद्धे इकारे यकार उत्पद्यते, यकारे चोत्पद्य निरुद्धे इकार उत्पद्यते—कः कस्य विकारः । तदेतदवगृह्य सन्धाने सन्धाय चावग्रहे वेदितव्यमिति ॥ ५२ ॥

---

( ख० )नित्यत्व इति सिद्धान्तिसूत्रम् ।

ननु दध्यत्रेति प्रयोगे कदा इकारस्योत्पद्य निरोध इत्यत आह तदेतिदिति । 'अवग्रहः' असंहिता । 'दधि—अत्र' इति उच्चार्य

---

(भा०चं०)योगो विकाररूपकार्यधर्मयोगः न सामान्यस्य धर्मयोगः । उपसंहरति तत्रेति । निवर्तमानो विनश्यन् । प्रकृते नश्वरत्वाभावात् अधिष्ठानं विना आधार्यस्यानुपपत्तिरिति भावः ॥ ५१ ॥

हेत्वन्तराय सूत्रं नित्यत्वे इत्यादि । व्याचष्टे नित्या वर्णा इत्यादि । उत्पद्य निरुद्धे सतीति शेषः । तदेतदवगृह्य दध्यत्रेति विगृह्य संधाने कृते संधौ वेदितव्यमित्यन्वयः । सन्धाय

(भा०) "नित्यपक्षे तु तावत्समाधिः"—

(सू०) "नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः" ॥ ५२ ॥

(भा०) "नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः। यथा नित्यत्वे सति किञ्चिदतीन्द्रियं किञ्चिदिन्द्रियग्राह्यम्, इन्द्रियग्राह्याश्च वर्णाः, एवं नित्यत्वे सति किञ्चिन्न विक्रियते वर्णास्तु विक्रियन्त इति"।

विरोधादहेतुस्तद्धर्मविकल्पः। नित्यं नोपजायते नापैति।

---

(ख०) दध्यत्रेत्युच्चार्यते। दध्यत्रेति वा सन्धाय दधि—अत्रेत्यवगृह्यते। अयमेव चेकारस्योत्पद्य निरोध इत्याशयः।

समाधिरिति। शब्दनित्यतावादिन इति शेषः।

नित्यानामित्यादि जात्युत्तररूपं सूत्रम्।

विक्रियन्त इति। यथा हि सत्यपि नित्यत्वे केचिदतीन्द्रियाः यथा परमाण्वाकाशादयः, केचिदैन्द्रियकाः—यथा गोत्वादयः, एवं सत्यपि नित्यत्वे परमाण्वाकाशादयो न प्रकृतिविकारभूताः वर्णास्तु प्रकृतिविकारभावमापत्स्यन्ते नित्या अपीति हृदयम्।

सेयं विकल्पसमा जातिरित्याह—विरोधादिति। न खल्वैन्द्रियकत्वानैन्द्रियकत्वाभ्यामस्ति कश्चिन्नित्यत्वस्य विरोधः। प्रकृतिविका-

---

(भा०चं०) दध्यत्रेति सन्धिं कृत्वा अवग्रहे दधि अत्रेति विग्रहे सति वेदितव्यमित्यन्वयः ॥ ५२ ॥

नित्यानामित्यादि पूर्वपक्षसूत्रम्। नित्या इत्यादि भाष्यं विप्रतिषेध अप्रतिषेध इत्यर्थः।

(भा०)अनुपजनापायधर्मकं नित्यम्, अनित्यं पुनरुपजनापाय-युक्तम्। न चान्तरेणोपजनापायौ विकारः सम्भवति। तद्यदि वर्णा विक्रियन्ते, नित्यत्वमेषां निवर्त्तते। अथ नित्याः, विकारधर्मत्वमेषां निवर्त्तते। सोऽयं विरुद्धो हेत्वाभासो धर्मविकल्प इति ॥ ५३ ॥

अनित्यपक्षे समाधिः—

(सू०)"अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः" ॥ ५४ ॥

(भा०)"यथाऽनवस्थायिनां वर्णानां श्रवणं भवत्येवमेषां विकारो भवतीति"।

असम्बन्धादसमर्थाऽर्थप्रतिपादिका वर्णोपलब्धिर्न विकारेण

---

(ख०)रभावेन त्वस्ति विरोधो नित्यत्वस्य! न हि सम्भवति कार्यं च नित्यं चेत्यर्थः।

अनित्यपक्षे जात्युत्तरम्पूर्वपाक्षिणः—अनवस्थायित्व इति सूत्रम्।

यथेति। यथा सत्यप्यनवस्थायित्वे वर्णा इन्द्रियेण सम्बध्य स्वविषयं ज्ञानं जनयन्ति—एवं विकारमपि करिष्यन्तीति हृदयम्।

सेयं साधर्म्यसमा जातिरित्याह—असम्बन्धादिति। कतिपयक्षणाव-

---

(भा० चं०) दूषयति **विरोधादिति**। अहेतुर्हेत्वाभासः धर्मविकल्पोऽसमर्थो धर्मः असाधक इत्यर्थः। अनुपजनापायधर्मकम् उत्पत्तिध्वंसविहितं। **न चेति**। उत्पत्तिविनाशे विहितो विकार एव न भवतीत्यर्थः ॥ ५३ ॥

अनित्यपक्षे समाधिसूत्रमिदमिति विशेष्यं शेषः। **अनवस्थेत्यादि सूत्रं** व्याचष्टे **यथेति**। अनवस्थायिनां स्वल्पकालस्थायिनां।

(भा०) सम्बन्धादसमर्था, या गृह्यमाणा वर्णविकारमर्थमनुमापयेदिति। तत्र यादृगिदं—यथा गन्धगुणा पृथिव्येवं शब्दसुखादिगुणापीति—तादृगेतद्भवतीति। न च वर्णोपलब्धिर्वर्णनिवृत्तौ वर्णा-

---

(ख०) स्थानेन वर्णानां क्षणिकानामपि स्वविषयज्ञानहेतुभावो युज्यते। अवगृह्य चिरं स्थित्वा यदा सन्धीयते—सन्धाय वा चिरं स्थित्वा यदाऽवगृह्यते—तदा वर्णानामनित्यानां न तावन्तं कालमवस्थानमस्तीति नोपलब्धिहेतुत्वेन विकारकर्तृत्वं वर्णानां तुल्यम्। तस्मात्—असम्बन्धात् असमर्था वर्णोपलब्धिः वर्णविकारप्रतिपादने इत्याशयः।

एवं ह्यत्र वाक्यान्वयः। या वर्णोपलब्धिः वर्णविकारमनुमापयेत् (सा) विकारेण न—सम्बद्धा (सती) असमर्था—इति।

एतदिति जात्युत्तरं परामृशति।

ननु मा भूद्वर्णोपलब्धिर्वर्णविकारेण साक्षात्सम्बद्धा—आदेशविरोधितया तु तन्निवृत्त्या पारिशेष्याद् विकारं साधयिष्यति—इत्यत आह न च वर्णेति।

---

(भा० चं०) नश्वराणामित्यर्थं दूषयितुमाह (१)असम्बन्धादिति। प्रकृत्या सह विकृतिशब्दस्येति शेषः। अर्थप्रतिपादिका॰ अर्थस्य प्रकृतिविशिष्टशब्दस्य प्रतिपादिका साधिका वर्णोपलब्धिर्नेत्यन्वयः। विकृतिवर्णोपलब्धिर्यकारादिश्रुतिः सा कीदृशी इत्याकांक्षायामाह **विकारेण सम्बद्धेति**। विकारत्वेनाभिमतेन यकारेणैव न तु तत्तत्प्रकृत्या इकारेणापि संवद्धा अतोऽसमर्था भवन्मतस्यासाधिका चोऽवधारणे अगृह्यमाणप्रकृत्या सहेति शेषः। वर्णविकारं वर्णविकारत्वम्

---

(टि०) १ असम्बन्धादित्ययं भाष्यग्रन्थः वर्णविकारप्रतिषेधपरः तद्दर्शयितुं व्याख्याकृत दूषयितुमाहेत्युक्तवान्।

(भा०)न्तरप्रयोगस्य निवर्तिका । योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगो—यद्ययं वर्णोपलब्ध्या निवर्त्तते तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यते इति गृह्येत । तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति ॥ ५४ ॥

(सू० ) विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥ ५५ ॥

---

(ख०)तदेवं जात्युत्तरमुत्थितमेव मारितं भाष्यकारेण । तत्रैवार्थे सूत्रम्—विकारधर्मित्व इति ।

---

( भा० चं० )अर्थसाध्यमनुमापयेत् संभावयेत् संभावनायां लिङ् । निर्हेतुकोयं दृष्टान्त इति दूषयति उपहसन्नेव **तत्र यादृगिति** । ननु स्थिरत्वाद्यथा श्रुतिं जनयति एवं विकृतिमपि जनयत्वित्याशयो ममेत्यत आह **न च वर्णोपलब्धिरिति** । वर्णोपलब्धिः विकारोपलब्धिः प्रकृतित्वेनाभिमतवर्णनिवृत्तौ तन्नाशे सति वर्णान्तरप्रयोगस्य विकृतित्वाभिमतवर्णप्रयोगस्य वर्णान्तरोत्पत्तिरित्यर्थः । फलपरत्वादिह धातोः निर्वर्त्तिका उत्पादिका न चेत्यन्वयः । सामान्योक्तस्य विवरणं **योऽयमिति** । येयं यकारस्योत्पत्तिरित्यर्थः । अनिवृत्ताशंकां वारयति तर्केण **यद्ययमिति** । वर्णोपलब्ध्या उपलभ्यमानवर्णेन निर्वर्त्यते उत्पद्यते तृतीयेयं हेतौ हेतुश्च तत्प्रजको हेतुश्चेति पाणिन्युक्तः । यथा दृश्यमानेन मृदादिना घटादिर्जायते एवं श्रूयमाणेनेवर्णेन यवर्णो जायते इति । तदा तर्हि उपलभ्यमानः श्रूयमाणः यत्त्वं यस्वरूपं आपद्यते प्रकृतिभावेन जनयति मृद्घटमिवेति शेषः । इति गृह्येत प्रत्यक्षीक्रियेत न च प्रत्यक्षीक्रियते केनापि परीक्षकेणेति शेषः । तस्माद्वर्णोपलब्धिः उपलभ्यमान इकारः अहेतुरप्रयोजकः वर्णविकारस्य कार्यभूतवर्णस्य ॥ ५४ ॥

(भा० ) तद्धर्मविकल्पादिति न युक्तः प्रतिषेधः । न खलु विकारधर्मकं किञ्चिन्नित्यमुपलभ्यत इति वर्णोपलब्धिवदिति न युक्तः प्रतिषेधः । अवग्रहे हि दधि अत्रेति प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते–दध्यत्रेति । चिरनिवृत्ते चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते, कारणाभावात् कार्याभाव इति अनुयोगः प्रसज्यत इति ॥ ५५ ॥

इतश्च वर्णविकारानुपपत्तिः—

( सू० ) प्रकृत्यनियमाद्वर्णविकाराणाम् ॥ ५६ ॥

(भा०)इकारस्थाने यकारः श्रूयते यकारस्थाने खल्विकारो

---

(ख०)प्रकृतीति सिद्धान्तिसूत्रम् ।

---

(भा०चं०) व्यंजकाभावान्नोपलभ्यते प्रकृतिरित्यत आह विकारधर्मित्वे इत्यादि सिद्धान्तिसूत्रम् । तद्व्याचष्टे तद्धर्मेति । तद्धर्मविकल्पादिति पूर्वसूत्रोक्तो । हेत्वाभासत्वमस्योपपादयितुमाह न खल्विति । विकारधर्मकम् उत्पत्तिधर्मकम् । किञ्चित् द्रव्यगुणादिकं नित्यमविनाशधर्मकम् । उपलभ्यते प्रमीयते । इतीतिहेतौ अस्माद्धेतोरित्यर्थः । न युक्तो अयुक्त इत्यन्वयः । तदिदं विशदयति अवग्रहे हीति । असन्धावित्यर्थः । चिरं स्थित्वेति । नाशस्फोरणार्थं । संहितायाम्–अव्यवधानेनोच्चारणेच्छायां । प्रयुंक्ते विधिशास्त्रप्रयुक्तो वक्तेति शेषः । चिरनिवृत्ते चिरनष्टे । चोऽवधारणे । अनुमानसूचकः । अनुमानं च अनुपलभ्यमानत्वादिति । अविनाशे यकारवत् श्रूयेत । कस्य विकार इति किं शब्द आक्षेपे अनुयोगः प्रतिषेधः उपालम्भ इति यावत् ॥ ५५ ॥

अविकारे हेत्वन्तरमाह प्रकृति–इत्यादि सूत्रम् । तद्व्या-

(भा०)विधीयते-विध्यति इति । तद्यदि स्यात् प्रकृतिविकारभावो वर्णानां, तस्य प्रकृतिनियमः स्यात् । दृष्टो विकारधर्मित्वे प्रकृतिनियम इति ॥ ५६ ॥

( सू० )"अनियमे नियमान्नानियमः" ॥ ५७ ॥

( भा० )"योऽयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं व्यवस्थितो नियतत्वान्नियम इति भवति । एवं सत्यनियमो नास्ति । तत्र यदुक्तं प्रकृत्यनियमादित्येतदयुक्तमिति" ॥ ५७ ॥

---

( ख० ) प्रकृतिनियम इति । क्षीरजातीयस्य दधिजातीयो विकारः । न पुनः कदाचिदपि दधिजातीयस्य क्षीरजातीया विकारा उपलभ्यन्ते । इह तु यथा इकारजातीयस्य यकारजातीयो विकारो दध्यत्रेति दृश्यते-एवं यकारजातीयस्यापि विकार इकारजातीयो दृश्यते । यथाव्यधिंधातोर्यकारस्य इकारो विध्यतीत्यत्र । तदेवमनियमान्न प्रकृतिविकारभाव इति ।

छलवादी प्रत्यवतिष्ठते-अनियमे इति सूत्रम् ।

---

(भा०चं०)चष्टे **इकारेत्यादि** । श्रूयते विधित्व इति शेषः । विधीयते विधितः श्रूयते । इग्यणः संप्रसारणमित्यादेः प्रकृतिनियमः ॥ ५६ ॥

प्रकृत्यनियमादिति हेतुं दूषयति पूर्वपक्षी **अनियम इत्यादिसूत्रेण** । व्याचष्टे **योयमित्यादि** । उक्तो भवता आदेशवादिनेति शेषः । सोऽनियमः नियतो नियम्यमानः । अतो नियम एवेति भावः । नियतपदं व्याचष्टे **यथाविषयमिति** । व्यवस्थितः व्यभिचरितः । नियतत्वात् नियम इति कर्मणि घञ् । स्पष्टम् शिष्टम् ॥ ५७ ॥

(सू० ) नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥ ५८ ॥

( भा० ) नियम इत्यत्रार्थाभ्यनुज्ञा, अनियम इति तस्य प्रतिषेधः । अनुज्ञातनिषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति । अनियमश्च नियतत्वान्नियमो न भवतीति नात्रार्थस्य तथाभावः प्रतिषिध्यते । किं तर्हि ? तथाभूतस्यार्थस्य नियमशब्देनाभिधीयमानस्य नियतत्वान्नियमशब्द एवोपपद्यते । सोऽयं नियमादनियमे प्रतिषेधो न भवतीति ॥ ५८॥

( भा० ) न चेयं वर्णविकारोपपत्तिः परिणामात् कार्य-

---

(ख०)नियमानियमेत्यादि सूत्रमुक्तस्य वाक्छलत्वमापादयति । नात्रार्थस्येति । नियमानियमसामानाधिकरण्यं हि विरुध्यते, न त्वाधाराधेयभाव इति भावः ।

तदेवं प्रकृतिविकारभावं निराकृत्य शब्दानां विकारवचनव्यक्तिमादेशपक्षे समर्थयते—न चेयमिति ।

---

(भा०चं०)सिद्धान्ती दूषयति **नियमेत्यादिसूत्रेण** । संज्ञाभेदेन नार्थप्रतिषेधेन इत्याशयेन व्याचष्टे अभ्यनुज्ञा अस्तित्वेन स्वीकारः । तस्या अस्तित्ववतः प्रतिषेधो नास्तित्वेनाभ्यनुज्ञा अनुज्ञातनिषिद्धयोः परस्परवैपरीत्येन अनुज्ञातयोरित्यर्थः । अनर्थान्तरत्वं न भवति अभिन्नार्थवत्त्वं न भवति । भिन्नत्वमेवास्तीत्यर्थः । नन्वनियमो नियम इति सामानाधिकरण्यं दर्शितमेव तत्कथं अर्थभेदो नास्तीत्यत आह **अनियमश्चेति** । नियतत्वान्नियमनकर्मत्वात् न तु नियमनत्वादित्यर्थः । तथाभावः नियतप्रतिषेधभावः न प्रतिषिध्यत इत्यन्वयः । नियमशब्द एव अनियमे प्रवृत्तिनिमित्तभेदो नोपपद्यत इत्यर्थः ॥ ५८ ॥

(भा०)कारणभावाद्वा। किं तर्हि?—

( सू० ) गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः ॥ ५९ ॥

( भा० )स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः। स भिद्यते।

गुणान्तरापत्तिः—उदात्तस्यानुदात्त इत्येवमादिः। उपमर्दो नाम–एकरूपनिवृत्तौ रूपान्तरोपजनः। ह्रासो–दीर्घस्य ह्रस्वः। वृद्धिर्ह्रस्वस्य दीर्घः, तयोर्वा प्लुतः। लेशो–लाघवम्, स्त इत्य-

---

( ख० ) स्थानीति। एकस्याप्रयोगेऽन्यस्य प्रयोगो विकार इति सामान्यलक्षणमभिप्रेतम्।

उपमर्द इति—यथा अस्तेर्भूः।

लेश इति। यथा 'स्तः' इत्यत्र अस्तेरकारलोपे सकारमात्रस्य लेशस्यैकदेशस्य व्यवस्थापनम्।

---

(भा०चं०) तर्हि कथं विकारात्संज्ञाप्राप्तिरित्यत आह **न चेयमिति**। वर्णविकारोपपत्तिः वर्णविकारसंज्ञाप्राप्तिः। परिणामात् कार्यकारणभावात् वा प्रवृत्तिनिमित्तात्। किं तर्हि कस्मात् तर्हि। **गुणान्तरेत्यादि** सूत्रम्। आदेशपक्षे एतेभ्यस्तु वर्णविकारोपपत्तेः वर्णविकारा व्यवहर्तव्याः। न तु परिणतिकार्यत्वान्तरेणेति तोरर्थः। एतेभ्यः केभ्यः इत्यत आह **गुणान्तर इति**। पूर्वस्मात् अन्यथाप्रयोगो गुणान्तरं विशेषान्तरमित्यर्थः। तस्याप्तिः–सम्बन्धः उदात्तादावनुदात्तादिप्रयोग इत्यर्थः। उपमर्दो–रूपान्तरनिवृत्तिसमुदितस्य रूपान्तरप्राप्तिः—ब्रुवो वचिरित्यादिः। ह्रासो–दीर्घस्य ह्रस्वः अधिग्रामणि कुलमित्यादौ। वृद्धिर्ह्रस्वस्य दीर्घः नीहार इत्यादौ। लेशोऽल्पीभावः समुदितस्यैकदेश-

(भा०)स्तेर्विकारः । श्लेष-आगमः, प्रकृतेः प्रत्ययस्य वा । एत एव विशेषा विकारा इति, एत एवादेशाः । एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ॥ ५९ ॥

## ( ४ ) शब्दशक्तिपरीक्षाप्रकरणम् ।

### ( सू० ) ते विभक्त्यन्ताः पदम् ॥ ६० ॥

---

(ख०)तदेवं वर्णानामनित्यतां प्रतिपाद्य शब्दप्रामाण्योपयोगि पदं निरूपयति—ते विभक्त्यन्ताः पदमित्यादिप्रकरणेन ।

सर्वमेतत्प्रकरणं स्फोटवादं लक्षीकृत्योक्तम् । स च वादस्तस्य खण्डनञ्च सविस्तरन्तात्पर्यटीकायामुक्तन्तत एवानुसन्धेयम्।

---

( भा० चं० ) परित्यागः—अस्तेरल्लोपे स्तः सन्तीत्यादौ । श्लेष-आगमादीनां सम्बन्धः भगवन्निहेत्यादौ । सूत्रमिदं व्याचष्टे भाष्यकृत् **स्थान्यादेशेत्यादि** । स्थानी पूर्ववर्ण इकारादिः आदेशः परवर्णो यकारादिः कार्यः पूर्वस्थानग्राही तयोर्भावात् बलिवासवन्यायेन शत्रुवदादेश इति सारस्वतोक्तेः । तदिदमाहाप्रयोगे प्रयोग इति । अप्राप्तौ प्राप्तिरित्यर्थः । तदिदं विकारादेशशब्दयोः पर्यायत्वमिति भावः । स च विकारोऽनेकप्रकार इत्याह **स भिद्यत इति** । गुणान्तरेत्यादि कृतव्याख्यानं । तथापि चेदेवं स यो विकार इष्टस्तर्हि नावयोर्विरोध इत्याह **एते चेदिति** ॥ ५९ ॥

इति श्रीभाष्यचन्द्रे द्वितीयाध्याये विकारादेशतत्त्वपरीक्षाप्रकरणभाष्यचन्द्रिका ॥

इदानीं शब्दप्रामाण्योपयोगिपदार्थं निरूपयिष्यतः पदलक्षणाय सूत्रं **ते इत्यादि** । व्याचष्टे **यथेत्यादि** । यथादर्शनं परीक्षार्थं

( भा० ) यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति । विभक्तिर्द्वयी–नामिक्याख्यातिकी च । 'ब्राह्मणः' 'पचती'त्युदाहरणम् ।

"उपसर्गनिपातास्तर्हि न पदसंज्ञाः। लक्षणान्तरं वाच्यम्" इति। शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः

---

(ख०)यथादर्शनमिति । यथाप्रमाणमित्यर्थः । गुणान्तरापत्त्यादिभिरादेशरूपेण विकृता, नतु प्रकृतिविकारभावेन, तस्य प्रमाणबाधितत्वादित्याशयः ।

---

( भा० चं० )प्रमाणमनतिक्रम्य विकृताः विकृतिमन्तः। **वर्णा इति।** वर्णौ च वर्णाश्च वर्णाः तथाच द्विवर्णात्मकमपि पदमुपसंगृहीतं भवति। पदशब्दोऽयं लौकिको बोध्यः । तथा च कलापसूत्रं-"पूर्वापरयोरर्थोपलब्धौ पदमिति" पूर्वापरयोरिति प्रकृतिप्रत्यययोर्ग्रहणमिति तयोर्वर्णसंज्ञापि यौगिकी ज्ञेया वर्णत्वजातिस्तु प्रयोगोपाधिः । तत्पदं द्विविधं सुवन्तं तिङन्तं चेत्यभिप्रायेणाह **विभक्तिर्द्वयीति** । द्विविधेत्यर्थः। विधां विभजते **नामिकीत्यादि** । नाम प्रातिपदिकं लिङ्गमित्यप्युच्यते व्याकरणप्रभेदे, तत्सम्बधिनी नामिकी । आख्यातं धातुस्तत्सम्बन्धिनी आख्यातिकी । उभयमुदाहरति **ब्राह्मणः पचतीति ।** पुरोडाशमिति शेषः । सम्बद्धार्थक्रियाकारकपदसमुदायो वाक्यमिति वाक्यलक्षणम् । शङ्कते **उपसर्गेत्यादि** । उपसर्गाः प्रादयः निपाताश्चादयः । समाधत्ते **शिष्यते च खल्विति** । शिष्यते शास्त्रेण विधीयते तेषामपि प्रातिपदिकसंज्ञाऽर्थवत्त्वेन द्योतकत्वेऽपि अर्थवत्त्वाविशेषात् । तर्हि विभक्तिर्न दृश्यते कुत इति **अव्ययाल्लोप इति** । तयोरुपसर्गनिपातयोः विभक्त्यन्तयोः पदसंज्ञार्थं पदसंज्ञायै । ननु विभ-

(भा०)पदसंज्ञार्थमिति। पदेनार्थसम्प्रत्यय इति प्रयोजनम् ॥ ६० ॥

(भा०) नामपदं चाधिकृत्य परीक्षा । गौरिति पदं खल्विदमुदाहरणम् । तदर्थे—

(सू०) व्यक्त्याकृतिजातिसान्निधावुपचारात्संशयः ॥ ६१ ॥

(भा०)अविनाभाववृत्तिः सन्निधिः। अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते। तत्र न ज्ञायते किमन्यतमः पदार्थ उत सर्व इति ॥ ६१ ॥

---

(भा०चं०)किञ्चेत्प्रयोगदशायां न तिष्ठति तर्हि पदसंज्ञापि मास्त्वित्यत आह **पदेनार्थसम्प्रत्यय इति** । अर्थयोः सम्बन्धप्रत्यय इत्यर्थः । नापदं प्रयुञ्जीतेतिनिषेधशास्त्रादिति भावः । पदसंज्ञेयं प्रकृतिप्रत्यययोः पर्याप्ता एकैकस्यार्थोपस्थापकत्वादित्यभिप्रेत्याह **नामपदं चेति** । प्रकृत्यर्था अपि नाम्नोच्यन्ते इति नाम्नः प्रधानत्वात्तदर्थपरीक्षया प्रत्ययार्थपरीक्षा चरितार्थेति नामार्थ एव परीक्ष्यत इति भावः ॥ ६० ॥

**तदर्थ इत्यादि सूत्रम्** । संशयप्रदर्शनार्थं तद्व्याचष्टे **अविनेत्यादि** । अविनाभावेन व्याप्यव्यापकभावेन वृत्तिः सम्बद्धः । पदस्य पदार्थानां वृत्तिरित्याकाङ्क्षायामाह **अविनाभावेन वर्तमानास्विति** । वर्तमानासु प्रकाशमानासु परस्परमविनाभावं प्रकाशयन्तीष्विति वा । सूत्रस्थोपचारपदं प्रयुज्यमानत्वपरमित्याह **प्रयुज्यत इति** । संशयमाह न **ज्ञायत इति** । न निश्चीयत इत्यर्थः । अन्यतम इति पुंस्त्वं पदार्थापेक्षया । पदार्थः पदशक्यः सर्वे त्रयो जात्यादयः ॥ ६१ ॥

(भा०) "शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणम् । तस्मात्-

(सू०)"याशब्दसमूहत्यागपरिग्रहसङ्ख्यावृद्ध्यपचयवर्णसमासानुबन्धाना व्यक्तावुपचाराद्व्यक्तिः"॥६२॥

(भा०)"व्यक्तिः पदार्थः । कस्मात् ? याशब्दप्रभृतीनां व्यक्तावुपचारात् । उपचारः प्रयोगः । या गौस्तिष्ठति या गौर्निषण्णेति नेदं वाक्यं जातेरभिधायकमभेदात् । भेदात्तु द्रव्याभिधायकम् । गवां समूह इति भेदाद्द्रव्याभिधानम्, न जातेरभेदात् ।

---

( ख० )याशब्देत्यादिसूत्रं व्यक्तिवादमुत्थापयति ।
अभेदादिति । एकैव जातिस्तस्या विशेषणमनर्थकमिति भावः ।

---

(भा०चं०)असंशये हेतुमाह **शब्दस्य प्रयोगसामर्थ्यादिति** । शब्दस्य नामधातुप्रत्ययात्मकस्य प्रयोगः शासकप्रयोगः शिष्टप्रयोगो वा । **याशब्देत्यादि सूत्रम्** । व्याख्यानं **व्यक्तिरित्यादि** । स्त्रीगवीषु गोशब्दस्य बहुलप्रयोगात् येत्याह । तिष्ठति न गच्छति-स्थितिं करोति । एवमुपविशति शेते इत्यादि द्रष्टव्यम् । निषण्णा उपविष्टा कर्तरीमौ तिङ्कृतौ । इदं समानाधिकरणतिङन्तसुबन्तयुग्मकं तथाभूतसुबन्तकृदन्तपदयुग्मकं वाक्यं सम्बद्धार्थमनेकं पदं न जातेरभिधायकमित्यर्थः । तत्र हेतुमाह **अभेदादिति** । गतिस्थित्यादिकर्त्रभेदादित्यर्थः । भेदात्तु भेदादपि द्रव्याभिधायकं व्यक्तिरूपद्रव्याभिधायकमित्यर्थः । उदाहरति (१)**गवां समूह इति** । समूहः समुदायः,

---

( टि० ) १ द्रव्याभिधायकमित्यस्यानन्तरं "गवां समूह इति भेदाद् द्रव्याभिधानं न जातेरभेदादिति"भाष्यपाठमङ्गीकृत्येदं प्रतीकं धृतं भाष्यचन्द्रकारेण ।

(भा०)चैत्राय गां ददातीति द्रव्यस्य त्यागो, न जातेरमूर्त्तत्वात्, प्रतिक्रमानुक्रमानुपपत्तेश्च। परिग्रहः-स्वत्वेनाभिसम्बन्धः। कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति-द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेद इति उपपन्नम्। अभिन्ना तु जातिरिति। सङ्ख्या-दश गावो विंशतिर्गाव इति-भिन्नं द्रव्यं सङ्ख्यायते, न जातिरभेदादिति। वृद्धिः-कारणवतो द्रव्यस्यावयवापचयः, अवर्द्धत गौरि-

---

( भा० चं० )एककालैकदेशसम्बन्धः कदाचिद् गोष्ठे कदाचिद् गृहे। गवामिति कर्तरि षष्ठी कर्मणि वा। तमिमं सम्बन्धमाह **भेदादिति**। यत्त्वभेदादित्यनेकत्वादित्यर्थः। तदिदमनेकत्वं जातौ नास्तीत्याह **जातेरभेदादिति**। त्यागो दानमिति व्याचष्टे **चैत्रायेति**। त्यागाशक्तौ हेतुमाह **अमूर्त्तत्वादिति**। निरवयवत्वादित्यर्थः। मूर्तिषु देहेषु अपरिच्छिन्नत्वादिति वाऽर्थः। सा ह्येका जगदवगता। मूर्त्तिः परिमाणविशेषः कर्मविशेषो वा अवयवसमुदायविशेषो वा। प्रतिक्रमो विश्लेषः। अनुक्रमः संश्लेषः। ताविमौ विभागसंयोगौ। तयोरनुपपत्तिरभावः। तस्या जातेरित्यन्वयः। स्वेनात्मना। स्वस्तिकर्त्री इत्यर्थः। अभिसम्बन्धः प्राप्तिः। स्वेनेति सहार्थे कर्तरि वा तृतीया। **कौण्डिन्यस्येति**। अत्र स्वामिसम्बन्धविशेषाद् गौर्भिद्यते न जातिरिति भावः। संख्येति सूत्रे संख्यापदं द्वित्वादिपरमिति भावः। **विंशतिरिति**।

विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः।
संख्यार्थे द्विबहुत्वे स्तस्तासु चानवतेः स्त्रियः॥ इति।

सामानाधिकरण्येऽपि वचनभेदः। गोसुखमिति चेतनपिण्डाभिप्रायं चेतनो ह्यत्र शरीरी देहात्मभ्रान्त इति विवेकिनां तु तत्रापि शक्तिरिति

(भा०)ति । निरवयवा तु जातिरिति । एतेनापचयो व्याख्यातः । वर्णः-शुक्ला गौः कपिला गौरिति द्रव्यस्य गुणयोगो न सामान्यस्य । समासः-गोहितं गोसुखमिति द्रव्यस्य सुखादियोगो न जातेरिति । अनुबन्धः-सरूपप्रजननसन्तानो, गौर्गां जनयतीति । तदुत्पत्तिधर्मत्वाद्‌ द्रव्ये युक्तं, न जातौ, विपर्ययादिति । द्रव्यं व्यक्तिरिति हि नार्थान्तरम्'' ॥ ६२ ॥

( भा० )अस्य प्रतिषेधः—

( सू० )न, तदनवस्थानात्॥ ६३ ॥

(भा०)न व्यक्तिः पदार्थः । कस्मात् ? अनवस्थानात् । याशब्दप्रभृतिभिर्यो विशेष्यते स गोशब्दार्थः । या गौस्तिष्ठति या गौर्निषण्णेति न द्रव्यमात्रमविशिष्टं जात्या विनाऽभिधीयते । किं तर्हि ? जातिविशिष्टम् । तस्मान्न व्यक्तिः पदार्थः । एवं समूहादिषु द्रष्टव्यम् ॥ ६३ ॥

---

( ख० ) विपर्ययादिति । अनुत्पत्तिधर्मकत्वाज्जातेरित्यर्थः ।
न तदनवस्थानादिति सूत्रं व्यक्तिवादं दूषयति ।
याशब्देत्याद्यपरं दूषणं व्यक्तिवादस्य ।

---

(भा०चं०)ज्ञेयम् । **द्रव्यस्येति** । प्रकृतेः शरीरिण इत्यर्थः । न जातेर्न शरीरादिगतजातेः । सरूपप्रजननसन्तानः समानं रूपं शरीरं येषां ते तथा तेषां प्रजननं प्रजाऽपत्यं तस्य सन्तानः समूहः । उत्तरोत्तरानेकोत्पत्तिर्वा । उदाहरति **गौर्गामिति** । **विपर्ययादिति** । उत्पत्त्युत्पादनयोरभावादित्यर्थः ॥ ६२ ॥

अस्य प्रतिषेधसूत्रमिदमिति शेषः । नेत्यादिव्याख्यानं । तस्मान्न व्यक्तिः पदार्थ इत्यस्यायमाशयः—जातौ शक्तिर्व्यक्तिस्त्वविनाभावाल्लभ्यत इति ॥ ६३ ॥

( भा० )यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति ? निमित्तादतद्भावेऽपि तदुपचारः । दृश्यते खलु—

(सू०)सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गाशाटकान्नपुरुषेष्वतद्भावेऽपि तदुपचारः ॥६४॥

(भा०)अतद्भावेऽपि तदुपचार इति—अतच्छब्दस्य तेन शब्देनाभिधानमिति। सहचरणात्—यष्टिकां भोजयेति यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति । स्थानात्—मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते । तादर्थ्यात्—कटार्थेषु वीरणेषु व्यूह्यमानेषु कटं करोतीति भवति । वृत्तात्—यमो राजा कुबेरो राजेति तद्वद्वर्त्तते इति । मानात्—आढकेन मिताः सक्तवः आढकसक्तव इति । धारणात्—तुलायां धृतं चन्दनं तुलाचन्दनमिति । सामीप्यात्—गङ्गायां गावश्चरन्तीति देशोऽभिधीयते सन्निकृष्टः । योगात्—कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते । साधनात्—अन्नं प्राणा इति । आधिपत्यात्—अयं पुरुषः कुलम्, अयं गोत्रमिति ।

---

( भा० चं० )निमित्तात् शक्त्यन्यहेतोः । उपचारः प्रयोगः । **सहेत्यादिसूत्रम्** । दशविधनिमित्तप्रयोगो व्युत्पत्तिबाहुल्यार्थम्—अन्येषामपि सम्भवात् । व्याचष्टे **अतद्भावेऽपीत्यादि** । अतद्भावेऽपि अतत्पदशक्यत्वेऽपि ब्राह्मणादिषूपचार इत्यन्वयः । अतच्छब्दस्य अतच्छक्यस्य तेन शब्देन परशब्देन अभिधानं प्रतिपादनम् । क्रमेणोदाहरति **सहचरणादित्यादि** । कृतव्याख्यानं प्रथमाध्याये ।

(भा०)तत्रायं सहचरणाद्योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति ॥ ६४ ॥

(भा०) "यदि गौरित्यस्य पदस्य न व्यक्तिरर्थोऽस्तु तर्हि-

( सू० )"आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः" ॥ ६५ ॥

(भा०)"आकृतिः पदार्थः। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः। तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति-अयं गौरयमश्व इति, नागृह्यमाणायाम्। यस्य ग्रहणात् सत्त्वव्यवस्थानं सिद्ध्यति तं शब्दोऽभिधातुमर्हति। सोऽस्यार्थ इति"।

नैतदुपपद्यते। यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते-गौरिति। न चावयवव्यूहस्य जात्या योगः। कस्य तर्हि? नियतावयवव्यूहस्य द्रव्यस्य। तस्मान्नाकृतिः पदार्थः ॥ ६५ ॥

( भा० ) "अस्तु तर्हि जातिः पदार्थः—

---

(ख०)आकृतिरिति सूत्रमाकृतिवादमुपस्थापयति।

---

(भा०चं०) दार्ष्टान्तिके योजयति **तत्रायमिति** ॥ ६४ ॥

आकृतिशक्तिवादी प्रत्यवतिष्ठते **यदीत्यादिना**। **आकृतिरित्यादिसूत्रम्**। **आकृतिरित्यादि** भाष्यं। सत्त्वव्यवस्थानं द्रव्यभेदबुद्धिः। तस्य सिद्धिरुत्पत्तिः। अथवा व्यवस्थापदं भेदपरम् सिद्धिपदं निश्चितपरं—सर्वं हि वाक्यमवधारणपरमित्युत्सर्गात्। व्यक्तिशक्तिवादी दूषयति **नैतदिति**। नचावयवव्यूहस्य जात्या योगो गौरवात्-लाघवात् व्यक्तिरेव जात्या विशिष्यत इति भावः। उपसंहरति **तस्मादिति** ॥ ॥ ६५ ॥

( सू० )"व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके, जातिः" ॥ ६६ ॥

(भा०)"जातिः पदार्थः। कस्मात्? व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति। गां प्रोक्षय गामानय गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते। कस्मात्? जातेरभावात्। अस्ति हि तत्र व्यक्तिः, अस्त्याकृतिः। यदभावात्तत्रासम्प्रत्ययः स पदार्थ इति" ॥ ६६ ॥

( सू० )नाकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥६७॥

( भा० ) जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते। नागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्रं शुद्धं गृह्यते। तस्मान्न जातिः पदार्थ इति ॥ ६७ ॥

---

( ख० ) व्यक्त्याकृतीतिसूत्रं जातिवादमुपस्थापयति।

नाकृतीति सूत्रमाकृतिवादं निराकरोति—आकृतेरेव प्रधानत्वात्। किन्तत् प्रधानत्वम्? आकृतिविशेषणत्वं व्यक्तेः। यस्माद्व्यक्त्या

---

(भा०चं०) जातिवादी प्रत्यवतिष्ठते **अस्त्वति**। व्यक्तीत्यादिसूत्रम्। व्याचष्टे **जातिरित्यादि**। पदार्थः प्रकृतिप्रत्ययान्यतरार्थः। मृन्मयो गौर्मृद्गवकः। अत्र गौरिति गवाकृतिरित्यर्थः। जातेरभावात् गवाकृतौ जातेरभावादित्यर्थः। तत्र मृद्गवके व्यक्तिर्गवाकृतिपिण्डः। आकृतिश्चरणाद्यवयवसंस्थानविशेषः। यदभावाद् गोत्वजात्यभावात् स पदार्थ इति विधेयापेक्षया तत्पदे पुंस्त्वम् ॥ ६६ ॥

व्यक्त्याकृत्युभयशक्तिवादी प्रत्यवतिष्ठते **नाकृतीत्यादिसूत्रेण**। व्याचष्टे **जातेरित्यादिना**। न जातिर्न जातिमात्रम्। इति शब्दो विप्रतिपत्तिसमाप्त्यर्थः ॥ ६७ ॥

(भा० )न वै पदार्थेन न भवितुं शक्यम् । कः खल्विदानीं पदार्थ इति ?—

( सू० )व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६८ ॥

(भा०)तुशब्दो विशेषणार्थः । किं विशिष्यते?प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति । यदा हि भेदविवक्षा विशेषगतिश्च, तदा व्यक्तिः प्रधानमङ्गन्तु जात्याकृती । यदा तु भेदोऽविवक्षितः सामान्यगतिश्च, तदा जातिः प्रधानमङ्गं तु व्यक्त्याकृती । तदेत-

---

( ख० )विशेष्यमाणा आकृतिर्जातेर्लिङ्गम्भवति तस्मात्सैव प्रधानमिति तस्या एव प्राङ् निराकरणम् ।

तदेवं व्यक्त्याकृतिजातीनामन्यतमाभिधाननियमन्निराकृत्यानियमाभिधानं सिद्धान्तमाह—व्यक्त्याकृतिजातय इति सूत्रेण । स्पष्टं सविस्तरं च प्रतिपादितोऽयं सिद्धान्तस्तात्पर्यटीकायाम् । व्यक्त्याकृतिजातयस्तिस्र एवास्माकम्पदार्थः । गुणप्रधानभावस्तु कस्यचित्क्वाचिदेवेति परिस्फुटार्थः ।

---

(भा०चं०)सिद्धान्तसूत्रमवतारयितुमाह **न वै पदार्थेनेत्यादि**। न, न शक्यमित्यस्य पदत्वेनार्थवत्त्वनियमादिति भावः । **व्यक्तीत्यादिसूत्रम्** । व्याख्यानं **शब्द इत्यादि** । विशेषणार्थः प्रत्येककोटिव्यावृत्त्यर्थः । तिसृणां पदार्थत्वे विशेष्यविशेषणभावनियमं पृच्छति । किं **विशिष्यत इति** । केन केनेतिशेषः । उत्तरमाह **प्रधानेत्यादि** । प्रधानाङ्गभावस्य विशेष्यविशेषणभावस्य । अनियमेन विनिगमनाभावादिति शेषः । पदार्थत्वं पदस्यार्थेषु शक्तिः । इतीत्यस्य सिद्धान्त इति शेषः । विवक्षयैव विशेष्यविशेषणभावव्यवस्थेत्याह **यदा हीत्यादि** । भेदेन विवक्षा भेदविवक्षा तया विशेषगतिः विशेषणज्ञानं

(भा०)द्बहुलं प्रयोगेषु। आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्यः॥६८॥

(भा०)"कथं पुनर्ज्ञायते नाना व्यक्त्याकृतिजातय इति?" लक्षणभेदात्। तत्र तावत्—

(सू०) व्यक्तिर्गुणविशेषाश्रयो मूर्तिः॥ ६९॥

(भा०)व्यज्यत इति व्यक्तिरिन्द्रियग्राह्येति। न सर्वं द्रव्यं व्यक्तिः। यो गुणविशेषाणां स्पर्शान्तानां गुरुत्वघनत्वद्रवत्वसंस्काराणामव्यापिनः परिमाणस्याश्रयो यथासम्भवं तद् द्रव्यं मूर्तिः, मूर्छितावयवत्वादिति॥ ६९॥

---

(ख०) उत्प्रेक्षितव्य इति। स्वयमुत्प्रेक्षणीय इत्यर्थः। यथा पिष्टकमय्यो गावः क्रियन्तामित्यत्र।

न सर्वमिति। यत्र हि व्यक्त्याकृतिजातीनां समावेशस्तत्र व्यक्तिनिर्धारणायेदं सूत्रम्। तेनाकाशाद्यनवरोधेऽपि न दोषः, तत्राकृतेरभावादिति भाष्यमतम्।

'मूर्छिताः' परस्परं संयुक्ता अवयवा यस्य तत् 'मूर्छितावयवम्'। मूर्छनं सम्बन्धः, स चेह समवाय एवेति ध्येयम्।

अस्मिन् सूत्रार्थे वार्तिककारस्यारुचिः। एवंचात्र वार्तिकव्याख्या-

---

(भा०चं०) विशेषाश्च उक्ताः। तिष्ठति निषीदति शेत इत्यादयः। सामान्येन गतिज्ञानम्। जातिः प्रधानं यथा गौर्नित्येति। अयमेवोच्यते भावप्रधानो निर्देश इति। आकृत्युदाहरणन्तु मृद्गवकचित्रगवक्रादौ। वार्तिककारास्तु राहोः शिरः शिलापुत्रस्य शरीरमित्याद्यप्युदाहरणमाहुः तत्र तत्र॥ ६८॥

नाना भिन्ना भिन्ना। उत्तरं लक्षणभेदादिति।

तत्र तेषु लक्षणेषु। तावदित्यवधारणे वाक्यालङ्कारे वा।

(सू०) आकृतिर्जातिलिङ्गाख्या ॥ ७० ॥

(भा०) यया जातिर्जातिलिङ्गानि च प्रख्यायन्ते तामाकृतिं विद्यात्। सा च नान्या सत्त्वावयवानां तदवयवानां च नियताद्

---

(ख०) नम्। वयं तु ब्रूमो नात्रावयवी व्यवच्छेद्योऽपि तु जात्याकृतिपदव्यतिरिक्तस्य व्यक्तिपदस्यार्थो वक्तव्य इति। सा च व्यक्तिर्या न जातिर्नाकृतिस्तस्या अनेन सूत्रेण सङ्ग्रहः। गुणविशेषास्तदाश्रयश्चात्र तच्छब्दलोपाद्गुणविशेषाश्रयशब्देन द्रव्यमुच्यते। कर्मापि गुणविशेषशब्दाल्लभ्यते—गुणेभ्यो विशेषो गुणविशेष इति। मूर्तिशब्देन द्रव्यमुच्यते। एवं चैतल्लक्षणं रूपाद्याकाशाद्यनुगतं भवति। अथवा गुणविशेषाणामाश्रय इति गुणाश्च विशेषाश्च—तेषामाश्रयो द्रव्यम्। तत्र मूर्छत इति मूर्तिः—इति।

---

(भा० चं०) **व्यक्तेरित्यादिसूत्रम्**। व्याख्यानं **व्यज्यत इत्यादि**। संभवति योगे रूढेरभावादिति भावः। व्यक्तिरिति कर्मणि क्तिः प्रत्ययः। तदेवाह **इन्द्रियग्राह्येति**। मूर्तिरिति व्यक्तिपर्य्यायो नेत्याह **मूर्च्छितावयवत्वादिति**। मूर्च्छा मोहसमुच्छ्राययोरिति धातुः। तस्य क्तौ क्तिचि वा प्रयोगोऽयम्। समुच्छ्रायोऽवयवोपचयविशेषः। स च व्यक्तेः कारणविशेषतया विशेषणम्। यत्र व्यक्तौ महत्त्वोदभूतरूपे स्तः। सा च पृथिवीजलतेजोभूता ॥ ६९ ॥

**आकृतिरित्यादिसूत्रम्**। **ययेति भाष्यम्** जातिलिङ्गयोराख्या शाब्दबुद्धिर्यया सा जातिलिङ्गाख्या इति बहुव्रीह्यर्थमाख्यात्रिकपदेन व्याचष्टे **जातिर्जातिलिङ्गानि च प्रख्यायन्ते इति**। सूत्रे ज्ञातव्येति पदमध्याहृत्य व्याख्यातव्यमित्याशयेनाह—**तामाकृतिं विद्यादिति**। सा चाकृतिर्द्विधेत्याह **नान्येति**।

(भा०)व्यूहादिति। नियतावयवव्यूहाः खलु सत्त्वावयवा जातिलिङ्गम्। शिरसा पादेन गामनुमिन्वन्ति। नियते च सत्त्वावयवानां व्यूहे सति गोत्वं प्रख्यायत इति। अनाकृतिव्यङ्ग्यायां जातौ मृत्सुवर्णं रजतमित्येवमादिष्वाकृतिर्निवर्तते जहाति पदार्थत्वमिति ॥ ७० ॥

---

( ख० ) यद्यपि गोत्वम्प्रत्यक्षमेव नाकृतिव्यङ्ग्यम्, तथाऽपि विप्रतिपद्यमानं प्रत्युच्यते–अनुमिन्वन्तीति।

---

(भा०चं०)षष्ठ्यन्तं पदं सत्त्वावयवानामिति अस्य विशेषणम्। नानाऽनेकेषां सत्वावयवानां प्राण्यङ्गानां शिरःपाददलाङ्गुलादीनामेका तदवयवानां मुखखुरादीनां द्वितीया। नियताद्व्यूहाद् ज्ञातव्येति शेषः। द्विधाप्याकृतिर्जातेर्लिङ्गमित्याह **नियतेत्यादि**। नियता अवयवव्यूहा येषां ते तथा इत्यन्यपदार्थप्रधानबहुव्रीहिणा शिरःप्रभृतयोऽवयवास्तदवयविनश्चोक्ताः। तेषामप्यवयवाः खलु ज्ञातव्याः। ते उभयेऽपि सत्त्वावयवा इति पदेनोक्ताः। नियते एकविधे व्यूहे रचनाविशेषे चक्षुर्ग्राह्ये प्रख्यायते प्रत्यक्षेण भासते।

इतिपदं प्राण्याकृतिव्याख्यासमाप्त्यर्थम्। घटाद्याकृतिसूचनार्थञ्च। त्रिशक्तिनिरूपणमिदम् प्रधानपदार्थाभिप्राय इत्याशयेनाह **अनाकृतिव्यङ्ग्यायामित्यादि**। मृत् मृत्तिका पृथिवीविशेषः। गैरिकहरितालादिधातूनामुपलक्षणार्थः। सुवर्णमिति रजतमित्यष्टधातूनामुपलक्षणार्थम्। सुवर्णरजतादयश्च द्विधा तेजःपृथिवीरूपत्वात् पीतादिरूपगुरुत्वसंम्बन्धेन पृथिवी अत्यन्ताग्निसंयोगेऽपि विद्यमानद्रवत्वेन तेज इत्युभयव्यवहारात् सुवर्णादिपदं नानार्थं ज्ञातव्यम्। एवमादिषु आकृतिर्वर्त्तते पदार्थत्वादिति शेषः। तदिदमाह ज-

( सू० ) समानप्रसवात्मिका जातिः ॥ ७१ ॥

( भा० ) या समानां बुद्धिं प्रसूते भिन्नेष्वधिकरणेषु, यया बहूनीतरेतरतो न व्यावर्तन्ते, योऽर्थोऽनेकत्र प्रत्ययानुवृत्ति-निमित्तं, तत्सामान्यम् । यच्च केषाञ्चिदभेदं कुतश्चिद्भेदं करोति तत् सामान्यविशेषो जातिरिति ॥ ७१ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्य द्वितीयमाह्निकम्।
समाप्तश्चायं द्वितीयाध्यायः ॥ २ ॥

---

(ख०) समानेतिसूत्रम् । प्रसूते इति 'प्रसवः' भिन्नेषु समानबुद्धेः प्रसोत्रीत्यर्थः । या जातिः साऽवश्यं सामान्यप्रत्ययं प्रसूते—न पुनर्या सामान्यप्रत्ययं प्रसूते सा सर्वा जातिः, पाचकादिषु व्यभिचारात् । व्यक्त्याकृतिभ्यां भेदकत्वमात्रेणैतल्लक्षणम्, न तु सर्वथाऽनवद्यमिति तात्पर्यकाराः ।

इति खद्योते द्वितीयं प्रस्फुरणम् ।

यत्कृपालेशमात्रेण शास्त्रं यत्किञ्चिदीक्षितम् ।
तं श्रीलक्ष्मीश्वरं देवं धन्यम्मन्ये सदा हृदि ॥

---

(भा०चं०)हाति पदार्थत्वमिति ॥ ७० ॥

आकृतिलक्षणमुक्त्वा जातिलक्षणमाह **समानेत्यादिसूत्रम्** । सूत्रे समानपदं तदर्थज्ञानपरं प्रसवपदं जननपरम् आत्मपदं तदनुकूलव्यापारपरमित्याशयेन व्याचष्टे **समानां बुद्धिमित्यादिना** । समानस्य प्रसवे आत्मा यत्नो व्यापारो यस्या इति विग्रहाद्बहुव्रीहिरयं समानबुद्धिजनिकर्तारमाह तामिमां बुद्धिं लक्षयति **ययेति** । बहूनि वस्तूनि जात्याकृतिमन्ति जातिमन्त्येव वा न व्यावर्त्तन्ते न परस्परेण

( भा० चं० )भिद्यन्ते । जातिपदमिदं सामान्यपरमिति । तेनोपाधेरपि परिग्रहः द्वयोरपि तयोः कार्य्यमेकविधमेव । **भेदाभेदज्ञानद्वये**-परस्परवैलक्षण्यन्तु जातिसङ्करदोषादिना ज्ञेयमित्याशयेनाह **सामान्यविशेष इति** । नित्यमेकमनेकसमवेतं यत्सामान्यं तदित्यर्थः । उपाधिरूपं सामान्यन्तु नैवम् खण्डाखण्डरूपतया तद् द्वेधा खण्डरूपं अनित्यमनेकञ्च यथा पृथिव्यां नीलत्वं पाठकेषु पाठकत्वम् । अखण्डन्तु एकमेव जातिसमशीलम्-विषयत्वादि । जातिरितीति-शब्दोयं प्रकरणसमाप्त्यर्थोऽध्यायसमाप्त्यर्थश्च ॥ ७१ ॥

इति श्रीभाष्यचन्द्रे पदार्थनिरूपणप्रकरणचन्द्रिका ।

समाप्तोऽयं द्वितीयाध्यायः ॥ २ ॥

## अथ तृतीयाध्यायस्याद्यमाह्निकम् ॥

(१)आत्मा इन्द्रियेभ्योऽन्यः ।

( भा० ) परीक्षितानि प्रमाणानि, प्रमेयमिदानीं परीक्ष्यते । तच्चात्मादीत्यात्मा विविच्यते–"किं देहेन्द्रियमनोबुद्धिवेदनासङ्घा-

---

( ख० ) परीक्ष्यत इति । प्रमाणेन प्रमेयं परीक्ष्यते नान्येन । न च तदपरीक्षितं प्रमेयपरीक्षायै प्रभवति । तस्मात्प्रमाणपरीक्षा हेतु-र्हेतुमती च प्रमेयपरीक्षा ।

तच्चेति । आत्मैव प्रमेयेषु प्रथममुद्दिष्टो लक्षितश्चेति तदनुरोधा-दात्मैव प्रथमम्परीक्ष्यते । अत्र च यद्यपि स्वरूपत आत्मन्येव परीक्षाम्प्र-तिजानीते भाष्यकारस्तथापि लक्षणपरीक्षाद्वारेण लक्ष्यपरीक्षणात् लक्ष-णपरीक्षैव द्रष्टव्या । यथा चेयमात्मलक्षणपरीक्षा तथोपरिष्टाद्दर्शयिष्यते ।

किमिति । विचारपूर्वः संशयो दर्शितः ।

---

तृतीयाध्यायः

(भा०चं०) परं महान्तं विज्ञमतिशान्तं शाश्वतमक्षरं विदुषां कान्तम् ।
सीताकामं दुर्जनरामं जगदभिरामं वन्दे रामम् ॥

अथ परीक्षितैः प्रमाणैः प्रमेयं परीक्षणीयमिति तत्परीक्षा उच्य-ते । तत्र **दर्शनस्पर्शनाभ्यामित्यादि सूत्रम्** । तदवतारय-ति भाष्यकारः **परीक्षितानीत्यादिना कस्मादित्यन्तेन** । तत्र प्रमायामात्मपरीक्षाया सङ्गतिमाह **तच्चात्मादीत्यादिना** । तत्र द्वादशविधं प्रमेयम् । आत्मा आदिर्यत्र तदादीत्यन्वयः । (१)तद्गुणसंविज्ञानो बहुव्रीहिः । आदिः प्रधानमभ्यर्हितो वा । प्रि-यतमत्वात् "आत्मनस्तु कामाय सर्वं प्रियं भवतीति" श्रुतेः । परीक्षाङ्गं संशयं दर्शयति **किमित्यादिना** । वेदना भयतृष्णादिः सङ्घातः

---

( टि० ) १ लम्बकर्णमानयेत्यादिवत् ।

(भा०)तन्मात्रमात्मा आहोस्वित्तद्व्यतिरिक्त इति" । कुतः संशयः? व्यपदेशस्योभयथा सिद्धेः। क्रियाकरणयोः कर्त्रा सम्बन्धस्याभिधानं व्यपदेशः। स द्विविधः अवयवेन समुदायस्य–

( ख० ) व्यपदेशस्येति केचित्सूत्रत्वेनाभिप्रयन्ति । भाष्यवाक्यमेतन्न सूत्रमिति परिशुद्धिकृतः ।

न व्यपदेशमात्रं देहादिव्यतिरिक्तात्मसाधनमुच्यते येन गौरोऽहमिति व्यपदेशेनानैकान्तम्भवेत्–अपि त्वनुभवः । स चात्मेत्यनुभवो न शरीरादिष्विदमो विषयेष्वस्ति । असम्भिन्नेदंविषयो ह्यहम्प्रत्ययः शरीराद्यतिरिक्तविषय एवास्ति । स चात्मा। शरीरादयस्तु मतुब्लोपादभेदोपचाराद्वाऽहमा विषयीक्रियन्ते । ममात्मेति तु व्यपदेशमात्रम्, न पुनः शरीरादिष्विव ममकारस्तत्र मुख्यो, भेदेनाप्रतिभासात्। राहोः शिर इतिवत्तु ममकार आत्मनि द्रष्टव्यः।

अहं जाने–अहं यते–ममात्मा–इत्येवंजातीयकेषु व्यपदेशेषु प्रथमद्वितीययोर्बाधकानुपपत्तेर्मुख्यत्वम् तृतीयस्य त्वनवस्थालक्षणबाधकोपपत्तौ गौणत्वमवधार्यते ।

(भा०चं०)समूहः। तन्मात्रं तन्मात्रस्वरूपः आत्माऽहङ्कारास्पदं तद्व्यतिरिक्तस्तत्सङ्घातभिन्नः। गृहसंघातभिन्नः पुरुष इव। संशयबीजं पृच्छति **कुत इति**। उत्तरमाह **व्यपदेशस्येति**। व्यपदेशं व्याचष्टे **क्रियेत्यादिना**। क्रिया धात्वर्थः करणं तृतीयार्थः कर्ता तिङर्थः कर्त्रेति तृतीया सहार्थे । अथवा क्रियाकरणयोरिति कर्मणि षष्ठी कर्त्रा इति कर्तरि तृतीया। अभिधानं वाक्यम्। विशिष्टमपदिश्यते प्रतिपाद्यतेऽनेनेति व्यपदेशः। सन्देहहेतुं वाक्यविभागमाह **स द्विविध इति**। विधा विशेषः। (१)सङ्घातपक्षं

( टि० ) १ देहेन्द्रियमनोबुद्धिवेदनासङ्घातपक्षम्।

(भा०)मूलैर्वृक्षस्तिष्ठति,स्तम्भैः प्रासादो ध्रियत इति। अन्येनान्यस्य व्यपदेशः—परशुना वृश्चति, प्रदीपेन पश्यति । अस्ति चायं व्यपदेशः—चक्षुषा पश्यति, मनसा विजानाति, बुद्ध्या विचारयति, शरीरेण सुखदुःखमनुभवतीति । तत्र नावधार्यते किमवयवेन समुदायस्य देहादिसङ्घातस्य, अथान्येनान्यस्य तद्व्यतिरिक्तस्य वेति ।

अन्येनायमन्यस्य व्यपदेशः । कस्मात् ?

## ( सू० ) दर्शनस्पर्शनाभ्यामेकार्थग्रहणात् ॥ १ ॥

(ख०) अवयवेनेति । यद्यपि वृक्षप्रासादयोरन्ययोरेवान्येनावयवेन समुदायिना व्यपदेशस्तथाऽप्यवयव्यभावं समुदायं च समुदाय्यनतिरिक्तं मन्वानस्य परस्योदाहरणं द्रष्टव्यमिति तात्पर्यकृतः ।

अन्येनेति । अत्रात्मनो शरीरेन्द्रियादिभेदाभेदविषयैव विप्रतिपत्तिर्न त्वात्मनि धर्मिणि । यतो वाद्येवासौ न भवति यो धर्मिणि विप्रतिपद्यते । नहि धर्मिणि विप्रतिपद्यमानस्यास्ति किञ्चित्प्रमाणम्, सर्वस्य तस्याश्रयासिद्धत्वात् । तस्माद्धर्म्यभाववादी न लौकिको न परीक्षक इत्युन्मत्तवदुपेक्ष्यः ।

दर्शनेत्यादि सूत्रम् । भावस्य भवित्रपेक्षत्वादिति तस्यार्थः । अनेकेन्द्रियकरणकोऽनेकार्थदर्शी कश्चिदेकश्चेतन इति भावः ।

(भा०चं०)दर्शयति **अवयवेनेत्यादिना** । ध्रियत इति कर्तरि धृङ् अवस्थाने तौदादिकः । व्यतिरिक्तकोटिं दर्शयति **अन्येनेत्यादिना**। वृश्चतीति । ओव्रश्चू छेदने । आत्मनि सर्वसङ्घातव्यतिरेकं दर्शयति **अस्ति चायमित्यादिना** । बुद्ध्या भेदकयोर्दृष्ट्या विचारयति विविनक्ति । एवं संशयिते साध्यकोटिं गृह्णाति **अन्येनेति** । अन्यस्येति कर्मणि षष्ठी । पृच्छति **कस्मादिति** ।

(भा०) दर्शनेन कश्चिदर्थो गृहीतः स्पर्शनेनापि सोऽर्थो गृह्यते—यमहमद्राक्षं चक्षुषा तं स्पर्शनेनापि स्पृशामीति, यं चास्पार्क्षं स्पर्शनेन तं चक्षुषा पश्यामीति। एकविषयौ चेमौ प्रत्ययावेककर्तृकौ प्रतिसन्धीयेते। न च सङ्घातकर्तृकौ नेन्द्रियेणैककर्तृकौ। तद्योऽसौ चक्षुषा त्वगिन्द्रियेण चैकार्थस्य ग्रहीता भिन्ननिमित्तावनन्यकर्तृकौ प्रत्ययौ समानविषयौ, प्रतिसन्दधाति सोऽर्थान्तरभूत आत्मा।

"कथं पुनर्नेन्द्रियेणैककर्तृकौ?"

---

(ख०) भिन्ननिमित्ताविति। भिन्नम्—इन्द्रियं—निमित्तं ययोस्तावित्यर्थः।

अनन्यकर्तृकाविति। आत्मकर्तृकावित्यर्थः।

समानविषयाविति। द्रव्यमेवैकं विषय इत्यर्थः।

---

(भा०चं०) सूत्रेणोत्तरं **दर्शनेत्यादिना**। व्याचष्टे **दर्शनेनेति**। दर्शनेन (१)चक्षुषा गृहीतो दृष्टः। यद्वा दर्शनेन (२)दृष्ट्वा गृहीतो विषयीकृतः। स्पर्शनेन (३)त्वचा तज्जन्यक्रियया वा स तावानर्थः गृह्यते पूर्ववत्। न च सङ्घातकर्तृकौ प्रत्ययौ कर्तृकरणयोर्भेदात्। इन्द्रियेणेत्यभेदे तृतीया तयोर्भेदादर्शनात्। भिन्ननिमित्तौ भिन्नकरणकौ प्रतिसन्दधाति पश्चादनुसन्धत्ते। सोऽर्थान्तर्भूतः। सङ्घातादिन्द्रियाच्चेति शेषः। भूतपदं सत्यार्थकम्। अर्थान्तरभूतः प्रमाणेनाऽनुभूत इत्यर्थः। आत्मा सर्वेषामहमित्यनुभवविषयः।

---

(टि०) १दर्शनेन चक्षुषा इत्यस्मिन्नर्थे दर्शनशब्दः करणसाधनः।
(टि०) २ दर्शनेन दृष्ट्वा इत्यस्मिन्नर्थे दर्शनशब्दो भाववाची।
(टि०) ३ त्वचा त्वगिन्द्रियेणेत्यर्थः।

(भा०)इन्द्रियं खलु स्वस्वविषयग्रहणमनन्यकर्तृकं प्रतिसन्धातुमर्हति नेन्द्रियान्तरस्य विषयान्तरग्रहणमिति ।

"कथं न सङ्घातकर्तृकौ ?"

एकः खल्वयं भिन्ननिमित्तौ स्वात्मकर्तृकौ प्रत्ययौ प्रतिसंहितौ वेदयते न सङ्घातः । कस्मात् ? अनिवृत्तं हि सङ्घाते प्रत्येकं विषयान्तरग्रहणस्याप्रतिसन्धानमिन्द्रियान्तरेणेवेति ॥ १ ॥

(सू०) "न विषयव्यवस्थानात्" ॥ २ ॥

(ख०) न विषयेत्यादि सूत्रम् । दर्शनस्पर्शनाभ्यामेकार्थग्रह-

(भा०चं०)इन्द्रियं खल्वनेकमनन्यकर्तृकम् एककर्तृकम् । स्वेन स्वेन स्वस्य स्वस्य विषयस्य ग्रहणं प्रतिसन्धातुमर्हति न परकर्तृकं ग्रहणमित्यर्थः । आत्मा तु सर्वेन्द्रियकरणकं ग्रहणं प्रतिसन्धत्ते इति भावः ।

सङ्घातात्मशङ्की पृच्छति **कथमिति** । उत्तरमाह **एकः खल्विति** । एकोऽभिन्नः अनेककरणकौ प्रत्ययौ वेदयते वेत्ति स्वात्मकर्तृकौ स्वकृतिसिद्धौ । एतेन डुकृञ् करण इत्यस्य यत्नार्थकत्ववादिनां मतमपास्तं वेदितव्यम् ।

करोतेर्यततेश्चैव ये पर्यायत्वमीरते ।
ते प्रमातृत्वहीना हि यस्मादकृतबुद्धयः ॥

**न सङ्घात इति** । सङ्घातः परस्परमिलितोऽनेकः न वेदयत इत्यन्वयः । हेतुं पृच्छति **कस्मादिति** उत्तरमाह **अनिवृत्तमिति** । प्रत्येकं प्रत्येकेन विषयान्तरग्रहणस्य परविषयग्रहणस्य । कर्मणि षष्ठी । अप्रतिसन्धानमननुसन्धानम् । इन्द्रियान्तरेण परस्परभिन्नेन इन्द्रियेण । प्रत्येकमिन्द्रियान्तरेणेति भेद्यभेदकभावः । उभयप्राप्तौ कर्मणीति नियमात् कर्तरि न षष्ठी ॥ १ ॥

(भा०) "न देहादिसङ्घातादन्यश्चेतनः। कस्मात्? विषयव्यवस्थानात्। व्यवस्थितविषयाणीन्द्रियाणि—चक्षुष्यसति रूपं न गृह्यते सति च गृह्यते। यच्च यस्मिन्नसति न भवति सति भवति तस्य तदिति विज्ञायते। तस्माद्रूपग्रहणं चक्षुषः,—चक्षू रूपं पश्यति। एवं घ्राणादिष्वपीति। तानीन्द्रियाणीमानि स्वस्वविषयग्रहणाच्चेतनानि इन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावात्। एवं सति किमन्येन चेतनेन"।

---

(ख०)णादिति सूत्रेण अनेकेन्द्रियकरणकोऽनेकार्थदर्शी कश्चिदेकश्चेतन इति विवक्षितम्। तत्र पूर्वपक्षी प्रतिसन्धानलक्षणं हेतुमवधार्य साध्यमात्रं विहन्तुमाह न विषयेत्यादि। अस्यार्थः। यदापि चेतनान्तरं कल्पितं तदापि न सर्वः सर्वज्ञः किन्तु कश्चित् कचिज्ज्ञानवान्। तथा च वरमिन्द्रियाण्येव स्वस्वविषयव्यवस्थितचैतन्यानि सन्तु कृतमपरेण चेतनेनेति।

यच्चेति। यद्भावाभावानुविधायिनौ ज्ञानभावाभावौ तच्चेतनम्। इन्द्रियभावाभावानुविधायिनौ च ताविति तदेव चेतनमिति भावः।

---

(भा०चं०)पूर्वपक्षिण उत्तरसूत्रं न विषयेत्यादि। तस्य कर्तुः तत् ग्रहणं क्रियायाः सकर्तृकत्वनियमात्। चक्षुष इति कर्तरि षष्ठी। क्रियाकर्तृभावं प्रकटयति चक्षू रूपं पश्यतीति। चेतनानि कर्तृतया चैतन्याधिकरणानि। एवंसति इन्द्रियाणामेव कर्तृत्वे सतीत्यर्थः। सतीति कोऽर्थः? उभयवादिसिद्धे इत्यर्थः। किमन्येनेत्युपपदविभक्तिः षष्ठ्यर्थे। अन्यस्य व्यर्थत्वमित्यर्थः। अतिरिक्तकल्पनायां गौरवाच्च।

(भा०)सन्दिग्धत्वादहेतुः । योऽयमिन्द्रियाणां भावाभावयोर्विषयग्रहणस्य तथाभावः, स किमयं चेतनत्वादाहोस्विच्चेतनोपकरणानां ग्रहणनिमित्तत्वादिति सन्दिह्यते । चेतनोपकरणत्वेऽपीन्द्रियाणां ग्रहणनिमित्तत्वाद्भवितुमर्हति ॥ २ ॥

(भा०) यच्चोक्तं—"विषयव्यवस्थानादिति"—

**(सू०) तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः ॥ ३ ॥**

(भा०) यदि खल्वेकमिन्द्रियमव्यवस्थितविषयं सर्वज्ञं सर्व-

---

(ख०) सन्दिग्धत्वादहेतुरिति सिद्धान्तभाष्यम् । अनन्यथासिद्धान्वयव्यतिरेकौ कारणत्वमात्रे प्रमाणम्—न तु 'न कर्ता चेतनश्चेतनं करणम्' इत्यत्रेत्यर्थः । इदमुत्तरम्भाष्योद्भावितपूर्वपक्षस्य । सूत्रोद्भावितस्य तूत्तरमग्रिमसूत्रेण भविष्यति ।

तद्व्यवस्थानादिति सूत्रम् । विषयव्यवस्थानं विरुद्धम्—इन्द्रियादीनामचेतनत्वसाधनादित्यर्थः ।

---

(भा०चं०)भाष्यकारः स्ववचनेन दूषयति **सन्दिग्धत्वादिति** । अहेतुर्हेत्वाभासः । हेतुसदृश इत्यर्थः । तथाभावः कार्यभावः । चेतनत्वात् कर्तृतया चैतन्याधिकरणत्वात् । चेतनोपकरणानां चैतन्यकर्तुः सहकारिणां । ग्रहणनिमित्तत्वात् ग्रहणकरणत्वात् । अत्र षष्ठीतत्पुरुषो वा कर्मधारयो वा समासो वेदितव्यः । इति त्वदुक्तोऽर्थः सन्दिह्यते । चेतनोपकरणत्वेऽपीत्यपिशब्देन परपक्षकर्तृत्वसमुच्चयः । अर्हति युज्यते ॥ २ ॥

विषयव्यवस्थानादिति हेतुं दूषयितुमाह—**यच्चोक्तमिति** । **तदित्यादि सूत्रम्** । आत्मसद्भावात् करणप्रेरकचेतनसद्भावात् । अप्रतिषेधस्तस्येति शेषः । **यदीत्यादिभाष्यम्** । इन्द्रियं कर्तृस्थानीयमव्यवस्थितविषयं सर्वेन्द्रियविषयविषयकं । तदिदमाह **सर्वज्ञमिति** ।

(भा०) विषयग्राहि चेतनं स्यात् कस्ततोऽन्यं चेतनमनुमातुं शक्नुयात् । यस्मात्तु व्यवस्थितविषयाणीन्द्रियाणि तस्मात्तेभ्यो-ऽन्यश्चेतनः सर्वज्ञः सर्वविषयग्राही विषयव्यवस्थितिमतीतोऽनु-मीयते । तत्रेदमभिज्ञानमप्रत्याख्येयं चेतनवृत्तमुदाह्रियते—रूपदर्शी खल्वयं रसं गन्धं वा पूर्वगृहीतमनुमिनोति । गन्धप्रति-संवेदी च रूपरसावनुमिनोति । एवं विषयशेषेऽपि वाच्यम् । रूपं दृष्ट्वा गन्धं जिघ्रति, घ्रात्वा च गन्धं रूपं पश्यति । तदेव-मनियतपर्यायं सर्वविषयग्रहणमेकचेतनाधिकरणमनन्यकर्तृकं

---

(ख०) सर्वविषयग्राहीति । सर्वेषामिन्द्रियान्तराणां च ये विष-यास्तद्ग्राही । इन्द्रियान्तराणि च पुनर्व्यवस्थितविषयाणि । तेनार्वा-ग्दृगपि सर्वज्ञ इत्यादि सिद्धम् ।

विषयव्यवस्थितिमिति । इन्द्रियान्तराणि प्रमाणान्तराणि च पुनः व्यवस्थितविषयाणीत्यर्थः ।

अभिज्ञानमिति । असाधारणं चिह्नमिति यावत् । अप्रत्या-ख्येयमिति प्रत्याख्यातुमशक्यमित्यर्थः । चेतनवृत्तमभिज्ञानमप्रत्या-ख्येयमुदाह्रियत इति सम्बन्धः ।

अनियतपर्यायमिति—अनियतक्रममित्यर्थः ।

---

(भा०चं०)मनोवारणार्थमाह **सर्वविषयग्राहीति** । चेतनं चेतना-कर्तृ यदि स्यादित्यन्वयः । सर्वेषां षण्णामपीन्द्रियाणां विषयान् गृहीतुं शीलमस्येति तत्तथा । स्यादिति सम्भावनायां लिङ् । ततः सर्वग्राहि-णः । विषयव्यवस्थितिरेकैकविषयग्राहित्वम् तदतीतस्तद्रहित इत्यर्थः । तत्रातिरिक्तात्मनि इदमुक्तं वक्ष्यमाणं वा अप्रत्याख्येयं प्रत्याख्यातुम-शक्यम् । अप्रत्याख्याने दृढतरमुपायं दर्शयति **चेतनवृत्तमित्या-**

(भा०)प्रतिसन्धत्ते प्रत्यक्षानुमानागमसंशयान् प्रत्ययांश्च नानाविषयान् स्वात्मकर्तृकान् प्रतिसन्दधाति प्रतिसन्धाय वेदयते । सर्वविषयं च शास्त्रं प्रतिपद्यते । अर्थमविषयभूतं श्रोत्रस्य क्रमभाविनो वर्णान् श्रुत्वा पदवाक्यभावेन प्रतिसन्धाय शब्दार्थव्यवस्थां च बुध्यमानोऽनेकविषयमर्थजातमग्रहणीयमेकैकेनेन्द्रियेण गृह्णाति । सेयं सर्वज्ञस्य ज्ञेयाव्यवस्थाऽनुपदं न शक्या

---

(ख०)अनेकविषयमिति । अनेकपदार्थो विषयो यस्य अर्थजातस्य तदित्यर्थः ।

---

(भा०चं०)**दिना परिक्रमितुमित्यन्तेन** । अनियतपर्यायमनियतक्रमं भिन्नभिन्नकालिकमित्यर्थः । एकचेतनाधिकरणमेकचेतनसमवेतम् योऽहं सोऽहमित्यादि प्रत्यभिज्ञानाकलितम् । भवतु शरीराधिकरणकमित्यत आह **अनन्यकर्तृकमिति** । शरीरस्य बाल्याद्यवस्थाभेदेन भेदात् । तेन नैककर्तृकमित्यर्थः । **सर्वार्थविषयमिति** । शास्त्रं सर्वविषयमित्यर्थः । तदिदं स्पष्टयति **अर्थमिति** । श्रोत्रस्य श्रवणेन्द्रियस्य शृणोत्यनेनेति करणे क्त्विधानात् । वर्णान् पदवाक्यगतान् । पदवाक्यभावेन पदत्वेन सुबन्ततिङन्तान्यतरत्वेन वाक्यत्वेन सम्बद्धार्थानेकपदत्वेन क्रियान्वितकारकार्थकानेकपदत्वेन वा इत्यर्थः । सुप्तिङन्तं पदम्, ते विभक्त्यन्ताः पदम्, पूर्वापरयोरर्थोपलब्धौ पदमित्यादिसूत्रैः पदसंज्ञाञ्च स्मृत्वेत्यर्थः । सम्बद्धार्थमनेकं पदं वाक्यम्, सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्वितमित्यादिवाक्यलक्षणञ्च स्मृत्वेत्यर्थः । शब्दार्थव्यवस्थाम् । शब्दः प्रकृतिप्रत्ययात्मकत्वेन द्विविधः । प्रकृतिर्द्वेधा नाम च धातुश्चेति । प्रत्ययाः पञ्चधा सुप्तिङ्कृत्ताद्धितः स्त्रीप्रत्ययश्चेति । एषा शब्दव्यवस्था सप्तधा तदर्थव्यवस्था तां बुध्यमानो

(भा०)परिक्रमितुम् । आकृतिमात्रं तूदाहृतम् । तत्र यदुक्तम्
"इन्द्रियचैतन्ये सति किमन्येन चेतनेन" तदयुक्तं भवति ॥३॥

(२)शरीरव्यतिरिक्तात्मप्रकरणम् ।

( भा० ) इतश्च देहादिव्यतिरिक्त आत्मा, न देहादिसङ्घातमात्रम्—

---

(ख०) आकृतिमात्रमिति—सामान्यमात्रमिति यावत् ।

इतश्चेति । एवम्प्रथमेन प्रकरणेनेन्द्रियव्यतिरेके प्रसाधिते यदि कश्चिद्देशयेत्—"ननु माभूवन्निन्द्रियाणि चेतनानि, व्यवस्थितविषयत्वात्—शरीरन्तु भविष्यति । अव्यवस्थितविषयं हि तत् । योऽहं गौरः पीनो युवा रूपं दृष्टवान् सोऽहं स्पर्शं स्पृशामीत्यनुभवात् । अतो दर्शनस्पर्शनाभ्यामेकार्थग्रहीतृ शरीरमेवात्मेति"—तत्रेदम्प्रकरणान्तरमुपतिष्ठते ।

---

(भा०चं०)जानन्नित्यर्थः । अर्थजातमभिधेयसमूहं शक्यलक्ष्यगौणभेदेन त्रिविधं पदार्थवाक्यार्थभेदेन द्विविधम् । अग्रहणीयं ग्रहीतुमशक्यम् । सर्वज्ञस्य सर्वविषयचेतनस्य व्यवस्था इतरभेदको धर्मः अनुपदं प्रतिस्थानं परिक्रमितुं परावर्त्तयितुम् इन्द्रियनिष्ठां कर्तुमित्यर्थः । आकृतिमात्रमेकदेशमात्रम् । दूषणमुपसंहरति **तत्रेत्यादिना भवतीत्यन्तेन** ॥ ३ ॥

इति श्रीभाष्यचन्द्रे इन्द्रियव्यतिरिक्तात्मपरीक्षणभाष्यचन्द्रिका ।

अथ शरीरव्यतिरेकप्रकरणमवतारयति **इतश्चेत्यादिना** । देहादिव्यतिरिक्त आत्मा इति साध्यनिर्देशः, स चार्थिकः । न देहादिसङ्घातमात्रमिति तु शाब्दः साध्यनिर्देशः । **शरीरेत्यादि सूत्रम्** ।

( सू० ) शरीरदाहे पातकाभावात् ॥ ४ ॥

(भा०)शरीरग्रहणेन शरीरेन्द्रियबुद्धिवेदनासङ्घातः प्राणिभूतो गृह्यते । प्राणिभूतं शरीरं दहतः प्राणिहिंसाकृतपापं पातकमि-

---

(ख०) शरीरेत्यादि सूत्रम् । प्राणातिपाते पातकाभावप्रसङ्गा-दित्यर्थः । अयं यद्यप्येकान्तभूतचैतनिकानां नानिष्टप्रसङ्गस्तन्मते पात-कादेरभावात्, तथापि शाक्यान् प्रति द्रष्टव्यः । ते हि प्राणातिपातकृतं पातकमभ्युपगच्छन्ति । एवं च न बुद्धिरात्मेति वक्तव्ये-विचित्राभि-सन्धित्वात्पुंसां यदि कश्चिद् भूतचैतनिकः प्राणातिपातकृतं पातकमिच्छेत् तं प्रति दूषणम्भविष्यतीत्येवमर्थमेव देहादिग्रहणमिति । दाहशब्देनात्र नाशमुपलक्षयति । पातकाभावशब्देन च कालान्तरोपयोगिस्थायिगुणा-भावम् । शरीरदाह इति शरीरदग्धरि अथवा शरीरदाहे सति तत्कर्तरि इति सम्बन्धः । यस्यात्मा नास्ति तस्यायं दोष इति प्रतिपादनार्थमे-वेदं सूत्रम् न पुनरात्मसाधनार्थम् ।

इत्थमेव सूत्रार्थ इत्यग्रिमेण सूत्रकलापेन स्पष्टम् । अत एव— (१)यदि शरीरमेवात्माऽभविष्यत् तदा शरीरस्य-मृतकशरीरस्य-दाहे पातकं स्यात्, न च तदस्ति । अथवा (२)शरीरे दग्धे तदनन्तरमाश्रया-भावात् पुण्यपापाद्यभाव एव स्यात् तथा च न पुनर्जन्मेति—यदर्थ-द्वयमस्य सूत्रद्वयस्योद्भावितं तस्य नास्त्यवकाशः ।

---

(भा०चं०)पातकाभावप्रसङ्गादित्यर्थः । शरीरदाह इति कर्मण्यण् शरीरद-ग्धरीत्यर्थः । यद्वा शरीरदाहे शरीरदहने सति तत्कर्तरीति शेषः । व्याचष्टे **शरीरग्रहणेनेत्यादि** । प्राणिभूतः प्राणसंयुक्तरूपः अनेन विशे-षणेन सिद्धसाधनव्यावृत्तिः । सप्तम्यन्तपदस्य कर्तृपरत्वं दर्शयति **शरीरं दहत इति** । लटः शतृशानचाविति कर्तरि शतृविधानात् ।

(भा०)त्युच्यते । तस्याभावः—तत्फलेन कर्तुरसम्बन्धात् अकर्तुश्च सम्बन्धात् । शरीरेन्द्रियबुद्धिवेदनाप्रबन्धेन खल्वन्यः सङ्घात उत्पद्यतेऽन्यो निरुध्यते । उत्पादनिरोधसन्तातिभूतः प्रबन्धो नान्यत्वं बाधते देहादिसङ्घातस्यान्यत्वाधिष्ठानत्वात् । अन्यत्वाधिष्ठानो ह्यसौ प्रख्यायत इति । एवं च सति यो देहादिसङ्घातः प्राणिभूतो हिंसां करोति नासौ हिंसाफले-

---

(ख०) अकर्तुरिति । शास्त्रचोदितम्फलमनुष्ठातरीत्युत्सर्गः । यत्र पुनः शास्त्रमन्यस्य फलमाह—यथा श्राद्धे वैश्वानरीयेष्ट्यादौ—तत्र भवतु पुत्रकृतस्य श्राद्धस्य पितृगामि फलं पितृकृताया वेष्टेः पुत्रगामि फलमिति भावः ।

---

(भा०चं०) हिंसा प्राणवियोगानुकूलव्यापारो भावना तत्कृतं पापं "मा हिंस्यात्सर्वा भूतानीति" श्रुतिबोधितम् । पातकं नरकदुःखभोजकमित्यर्थः । णिजन्तात्कर्तरि ण्वुल् बोध्यः । यौगिकं नामेदं नरकांशे रुढम् । तस्याभावो भोक्तर्य्यविद्यमानत्वम् । तत्र हेतुमाह कर्तुरसम्बन्धादिति । भवन्मते कर्तुरनेकत्वात् बाल्यादिभेदेन भेदाच्च । अकर्तुर्भोक्तुः सम्बन्धात् भावात् तत्फलेनेत्यनुषङ्गः । प्रबन्धेन(१) धारारूपेण निरुध्यते भवन्मत इति शेषः । प्रबन्धं व्याचष्टे उत्पादेत्यादिना । स च नान्यत्वं बाधते । कार्यकारणभावेन सम्मतयोः सङ्घातयोरिति शेषः । देहादिसङ्घातस्य भोक्तृत्वेन संमतस्येति शेषः । अन्यत्वाऽधिष्ठानत्वाद्भेदाधारत्वात् । मन्मते तु कर्तृभोक्त्रोरनन्यत्वमित्याह अन्यत्वाधिष्ठानो हीति । असौ प्रत्यभिज्ञाता योऽहं पापमकार्षं सोऽहमिदानीं दुःखं भुञ्जे इति

---

(१) अत्र मूले प्रबन्धेनेति तृतीयान्तः पाठो भाष्यचन्द्रकारसम्मतः ।

(भा०) न सम्बध्यते । यश्च सम्बध्यते न तेन हिंसा कृता । तदेवं सत्त्वभेदे कृतहानमकृताभ्यागमः प्रसज्यते । सति च सत्त्वोत्पादे सत्त्वनिरोधे चाकर्मनिमित्तः सत्त्वसर्गः प्राप्नोति । तत्र मुक्त्यर्थो ब्रह्मचर्यवासो न स्यात् । तद्यदि देहादिसङ्घातमात्रं सत्त्वं स्यात् शरीरदाहे पातकं न भवेत् । अनिष्टं चैतत् । तस्माद्देहादिसङ्घातव्यतिरिक्त आत्मा नित्य इति ॥ ४ ॥

(सू०) "तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" ॥५॥

(भा०) "यस्यापि नित्येनात्मना सात्मकं शरीरं दह्यते तस्यापि शरीरदाहे पातकं न भवेद्दग्धुः । कस्मात् ?

---

(भा०चं०) ह्यात्मप्रत्यभिज्ञा । सत्त्वभेदे कर्तृभोक्त्रोर्भेदे सतीति शेषः । कृतहानं(१) कृतस्य पापस्य फलभोगं विनैव त्यागः । पूर्वसङ्घातस्येति शेषः । अकृतस्य भोक्त्राऽनुत्पादितस्य पापस्य अभ्यागमः फलप्राप्तिः । दूषणान्तरमप्याह **अकर्मनिमित्त इति** । नहि लौकिका अपि अकर्मनिमित्तकं सत्त्वसर्गं मन्यन्त इति भावः । तेन च भवान्न लौकिकोऽपि कुतः परीक्षक इति व्यज्यते । ननु भगवतो बुद्धस्य राद्धान्ते नायं दोष इत्यत आह **तत्रेति** । ब्रह्मचर्यवासो भवदीयभदन्तानामिति शेषः । सत्त्वं प्राणी । इष्टापत्तौ दूषणमाह—**अनिष्टमिति** । भवद्राद्धान्तकारिणामिति शेषः । स्वमतमुपसंहरति—**तस्मादिति** । नित्यः सर्वकालस्थायी ॥ ४ ॥

प्रत्यवतिष्ठते **तदभाव इति सूत्रेण** । तदभावः पातकाभावः । सात्मकप्रदाहे नित्यात्मविशिष्टसङ्घातप्रदाहेऽपि तन्नित्यत्वात् भिन्नात्मनित्यत्वात् । व्याचष्टे **यस्यापीति** । नित्येनात्मना

---

(टि०)१कर्तुर्नाशात्कृतनाशः अकर्तुश्च विद्यमानत्वादकृताभ्यागमः।

(भा०)नित्यत्वादात्मनः। न जातु कश्चिन्नित्यं हिंसितुमर्हति। अथ हिंस्यते? नित्यत्वमस्य न भवति। सेयमेकस्मिन्पक्षे हिंसा निष्फलाऽन्यस्मिंस्त्वनुपपन्नेति ॥ ५ ॥

(सू०) न कार्याश्रयकर्तृवधात् ॥ ६ ॥

(भा०) न ब्रूमो नित्यस्य सत्त्वस्य वधो हिंसा, अ-

---

(ख०)सूत्रमिदं द्विधा व्याख्यातम्भाष्यकारेण। 'कार्याश्रयस्य' शरीरस्य यानि 'कर्तॄणि' इन्द्रियाणि तेषां वधादिति। अथवा'कार्याश्रयो' देहेन्द्रियबुद्धिसङ्घातः, स एव कर्ता–तस्य वधादिति। द्वितीयमेतत् व्याख्यानं स्वीकृतं वृत्तिकृता।

वधादित्यस्य स्थाने बाधादिति पठन्ति न्यायसूत्रविवरणकाराः। तदर्थश्च—न शरीरदाहेऽदृष्टनाशः। 'कार्यम्' अदृष्टम्, तस्य 'आश्रयस्य' कर्तुः आत्मनः 'बाधात्' नाशाभावात्। अन्यदपि व्याख्यानमुल्लिख्य निराकुर्वन्ति विवरणकाराः। तद्यथा—न सात्मकशरीरदाहे पापानुत्पादः। 'कार्यम्' शरीरम् तदाश्रयस्य तत्सम्बन्धस्य 'कर्तुः' आत्मनः 'बाधात्' नाशादिति।

---

(भा०चं०)आत्मना नित्येनेति योजना। तृतीयाऽभेदे तस्य च सात्मकेत्यत्रात्मन्यन्वयः। नित्यत्वादात्मनः आस्तिकसंमतस्येति शेषः। नित्यं कदाचिदपि स्वरूपमप्रतिहतं हिंसितुं नाशयितुमर्हति शक्नोति। हिंसास्वीकारे दूषणमाह **अथ हिंस्यत इत्यादिना**। नित्य इति शेषः। न भवति न प्रमाणेन सिद्ध्यति। एकस्मिन् नास्तिकमते अन्यस्मिन् आस्तिकमते। अनुपपन्ना प्रमाणासिद्धा। इतिपदं पूर्वपक्षसमाप्तौ ॥ ५ ॥

**नेत्यादि सिद्धान्तसूत्रम्**। व्याचष्टे **न ब्रूम इति**।

(भा०) पि त्वनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च कर्तॄणामिन्द्रियाणामुपघातः पीडा वैकल्यलक्षणः प्रबन्धोच्छेदो वा प्रमापणलक्षणो वा वधो हिंसेति । कार्यं तु सुखदुःखसंवेदनम् । तस्यायतनमाधिष्ठानमाश्रयः शरीरम् । कार्याश्रयस्य शरीरस्य स्वविषयोपलब्धेश्च

---

(ख०)वैकल्यलक्षण इति । यथा शरीरमुपघ्नन् हिनस्ति एवं चक्षुराद्युत्पाटयन्नपि हिनस्त्येवेति भावः ।

---

(भा०चं०)आस्तिका वयं षडपीत्यर्थः । वधः स्वरूपत्याजनम् । **अनुच्छित्तीति** । उच्छित्तिः स्वरूपत्यागः, फलपरं पदमिदं, न व्यापारपरम् न उच्छित्तिरनुच्छित्तिः, उच्छित्त्यत्यन्ताभावः,. सा धर्मः स्वभावो यस्य सोऽनुच्छित्तिधर्मकस्तस्याऽनुच्छित्तिधर्मकस्य सत्त्वस्य प्राणिनः । चेतनस्येत्यर्थः । "प्राणी तु चेतनो जन्मी जन्तुजन्युशरीरिणः" इति कोशात् । कार्याश्रयस्य सुखदुःखभोगायतनस्य(१) । काकाक्षिगोलकन्यायेन सत्त्वशरीरयोरस्यान्वयः । शरीरस्य विशेषणमिदं भक्त्येति ज्ञेयम् । स्वमात्मा विषयः सुखदुःखादिः तयोरुपलब्धिः साक्षात्कृतिः तस्याः कर्तॄणां (२)कारकाणामिन्द्रियाणां सशरीराणामिति शेषः । उपघातः पीडानुकूलव्यापारः । तामाह **पीडेति** । व्यापारपरं पदमिदं । वैकल्यलक्षणः व्याकुलत्वस्वरूपः दुःखजनकसंयोगविभागरूपः । प्रबन्धोच्छेदः समूहोच्छित्तिः । बाह्यवधं व्याख्यायान्तरवधमाह **प्रमापणलक्षण इति** । प्रमापणं मारणं तल्लक्षणस्तद्रूपः । कार्यपदं व्याचष्टे **कार्यं त्विति** । संवेदनं वि-

---

(टि०)१ शरीरे सुखदुःखोपभोगाश्रयत्वमवच्छेदकतयेति ।

[ टि० ] २ कारकाणां करणानामित्यर्थः ।

(भा०) कर्त्तॄणामिन्द्रियाणां वधो हिंसा, न नित्यस्यात्मनः। तत्र यदुक्तं–"तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" इत्येतदयुक्तम्। यस्य सत्त्वोच्छेदो हिंसा तस्य कृतहानमकृताभ्यागमश्चेति दोषः।

एतावच्चैतत् स्यात्–सत्त्वोच्छेदो वा हिंसा। अनुच्छित्तिधर्मकस्य सत्त्वस्य कार्याश्रयकर्तृवधो वा। न कल्पान्तरमस्ति। सत्त्वोच्छेदश्च प्रतिषिद्धः। तत्र किमन्यच्छेषं यथाभूतमिति।

अथवा कार्याश्रयकर्तृवधादिति। कार्याश्रयो देहेन्द्रियबुद्धिसङ्घातः। नित्यस्यात्मनस्तत्र सुखदुःखप्रतिसंवेदनं तस्याधिष्ठानमाश्रयः तदायतनं तद् भवति न ततोऽन्यदिति स एव कर्ता। तन्निमित्ता हि सुखदुःखसंवेदनस्य निर्वृत्तिः न तमन्तरेणेति। तस्य वध–उपघातः पीडा प्रमापणं वा हिंसा न नित्यत्वेनात्मोच्छेदः। तत्र यदुक्तं–"तदभावः सात्मकप्रदाहेऽपि तन्नित्यत्वात्" एतन्नेति॥ ६॥

---

(ख०) अथवेति– प्रकारान्तरेण सूत्रं व्याचष्टे।

---

(भा०चं०) षयसमानाधिकरणसाक्षात्कारः। परमते दोषं स्मारयति **यस्येत्यादिना**।

मतद्वयं स्पष्टीकृत्य दर्शयति **एतावच्चेत्यादिना भूतमित्यन्तेन**। यथाभूतं यथाऽनुभूतं प्रमितमिति यावत्।

प्रकारान्तरेण सूत्रं व्याचष्टे **अथवेति**। कार्याश्रयः कार्यानुकूलः। आयतनमधिकरणमिवाऽनुकूलम्। कर्ता कारकमित्यर्थः। निर्वृत्तिः कृतिः। पीडा दुःखानुकूलव्यापारः संयोगविभागादिः। प्रमापणं प्राणवियोजनं। नित्यत्वेनेति हेतौ तृतीया। उच्छेदः स्व-

## (३) चक्षुरद्वैतनिराकरणप्रकरणम् (प्रासङ्गिकम्)

( भा० ) इतश्च देहादिव्यतिरिक्त आत्मा—

(ख०)प्रासङ्गिकस्यैतस्य चक्षुरद्वैतनिराकरणपरस्य प्रकरणस्य विषये व्याख्यातृषु महान् मतभेदो दृश्यते । वस्तुतः सप्तविंशतितम-सूत्रपर्यन्तमात्मनः स्वतन्त्रस्थितिनिरूपणपरमेकमेव प्रकरणं वर्तते । त-त्साधनप्रकारभेदेन तु व्याख्यातारः प्रकरणभेदमत्र कुर्वन्ति । न्या-यसूचीनिबन्धे तात्पर्ये च वाचस्पतिमिश्राः सप्तमसूत्रमारभ्य चतुर्द-शसूत्रपर्यन्तमेकम्प्रकरणमभिप्रेत्य तदर्थम्—चक्षुरिन्द्रियस्य द्वित्वे आ-त्मनश्चैकत्वे सिद्धे नात्मेन्द्रिययोरभेदः सम्भवतीति—वर्णयन्ति ।

एतत्तु वार्तिककारस्य नाभिप्रेतम् । तैरुक्तम्—एके इदं प्रकरण-मात्मन इन्द्रियव्यतिरेकज्ञापनार्थं वर्णयन्ति । तन्न पूर्वप्रकरणेनैव त-त्सिद्धेः—इति ।

भाष्यकारादपि वार्तिककारस्यात्र स्फुटो मतभेदः । भाष्यम-ते चक्षुरिन्द्रिये द्वित्वम्— वार्तिकमते चक्षुरेकत्वमेव सिद्धान्तः । च-क्षुर्द्वित्वसिद्धान्तपरिग्रहेण हि ताभ्याम्भिन्नस्यैकस्यात्मनः साधनं सु-करम्भवतीति भाष्यकारस्य हृदयम् ।

भाष्यमतेनैवं सूत्रार्थविभागः । सप्तमसूत्रे सिद्धान्तोपक्रमः—वा-मेन चक्षुषा दृष्टस्य दक्षिणेन प्रत्यभिज्ञानादुभयाधिष्ठातैक आत्मा सि-द्ध्यतीति । अष्टमसूत्रे तदाक्षेपः—उभयोरपि गोलकयोश्चक्षुरिन्द्रियस्यै-कत्वे तन्मूलकमेव प्रत्यभिज्ञानमिति । नवमसूत्रे तत्परिहारः—गोलक-

(भा०चं०) रूपत्यागः ॥ ६ ॥

इति श्रीभाष्यचन्द्रे तृतीयाध्याये शरीरव्यतिरिक्तात्मपरीक्षा-प्रकरणभाष्यचन्द्रिका ।

इदानीं प्रासङ्गिकं चक्षुरद्वैतप्रकरणमवतारयति **इतश्चेत्यादिना**।

( सू० ) सव्यदृष्टस्येतरेण प्रत्यभिज्ञानात् ॥ ७ ॥

(भा०) पूर्वपरयोर्विज्ञानयोरेकविषये प्रतिसन्धिज्ञानं प्रत्यभि-

---

(ख०)द्वयस्थितस्येन्द्रियस्यैकत्वं न सम्भवतीति । दशमसूत्रे चक्षुरेक-त्ववादिकृतमुत्तरम्—एकस्य गोलकस्य नाशे चक्षुरिन्द्रियस्यैकमवयव-मेव नश्यतीति । तत्परिहार एकादशसूत्रे—चक्षुर्द्वित्वसिद्धान्तप्रतिषे-धो न युक्त इति ।

एवं च चक्षुर्द्वित्वमानिनो भाष्यकरस्य मतेन सप्तमसूत्रे सिद्धा-न्तेनैवोपक्रमः । वार्तिकमते त्वस्मिन् सूत्रे सव्यदृष्टस्येतरेण प्रत्यभिज्ञा-नमात्मभेदसाधनायोपन्यस्तं सूत्रकारेण निराकरणार्थमेव । तन्निराक-रणाङ्गत्वेनैवाष्टमसूत्रे चक्षुरद्वैतसिद्धान्तोपन्यासः । नवमसूत्रे तत्रा-क्षेपः, दशमसूत्रे केषाचिन्मतेन तदाक्षेपपरिहारः, एकादशसूत्रे च त-त्परिहारस्य नवमसूत्रकृतस्याक्षेपस्य च खण्डनम् ।

द्वादशसूत्रमारभ्य षोडशसूत्रपर्यन्तं तु न कोऽपि भेदः । उभयो-रपि मतयोस्तेषामात्मसाधनपरत्वाभ्युपगमात् ।

प्रत्यभिज्ञानात्—आत्मैक इति शेषः । चक्षुषोरभेद-सिद्धिरिति तु न्यायसूत्रविवरणकाराः । तत्तु न सम्यक् । अकस्मा-च्चक्षुषोरद्वैतस्योपन्यासेन सूत्रकारस्यासम्बद्धप्रलापितैव स्यात् । आ-त्मभेदसाधनोपन्यासाङ्गतया चक्षुर्द्वैतोपन्यास एव प्राकरणिकत्वं स्यात्तदुपन्यासस्य ।

---

(भा०चं०)सव्यदृष्टस्येत्यादि सूत्रम् । तदिदं वै द्विधा व्याचष्टे पूर्वापरयोरित्यादिना । प्रतिसन्धिरूपं ज्ञानप्रतिसन्धानं प्रती-तस्य(१) अभिज्ञा प्रत्यभिज्ञानम् । तमेवैतर्हि पश्यामीत्यत्रातीतप्रतीति-

---

[ टि ] १ अभिज्ञा अनुसन्धानम् ।

(भा०) ज्ञानम्—'तमेवैतर्हि पश्यामि यमज्ञासिषं स एवायमर्थ'इति । सव्येन चक्षुषा दृष्टस्येतरेणापि चक्षुषा प्रत्यभिज्ञानाद्—'यमद्राक्षं तमेवैतर्हि पश्यामीति' । इन्द्रियचैतन्ये तु नान्यदृष्टमन्यः प्रत्यभिजानातीति प्रत्यभिज्ञानुपपत्तिः । अस्ति त्विदं प्रत्यभिज्ञानं तस्मादिन्द्रियव्यतिरिक्तश्चेतनः ॥ ७ ॥

(सू०) "नैकस्मिन्नासास्थिव्यवहिते द्वित्वाभिमानात्" ॥८॥

(भा०) "एकमिदं चक्षुर्मध्ये नासास्थिव्यवहितं तस्यान्तौ गृह्यमाणौ द्वित्वाभिमानं प्रयोजयतो मध्यव्यवहितस्य दीर्घस्येव" ॥ ८ ॥

---

(ख०) उक्तं हेतुं चक्षुरैक्येनाक्षिपति नैकस्मिन्निति ।
दीर्घस्येति—वंशादेरिति शेषः ।

---

(भा०चं०) विषयमाह तच्छब्दः । एतर्हि इदानीं पश्यामि वर्तमानदर्शनानुकूलवर्त्तमानकृतिमान् यं अज्ञासिषम् अतीतज्ञानानुकूलातीतकृतिमानहम् । सामान्येन प्रत्यभिज्ञानहेतुं व्याख्याय विशेषेण व्याचष्टे- **सव्येनेत्यादि** । स्पष्टम् । यमद्राक्षमित्यत्र सव्येनेत्यनुषङ्गः । पश्यामीत्यत्र इतरेणेति । इन्द्रियचैतनिकमतं दूषयति **इन्द्रियचैतन्ये त्विति** ॥ ७ ॥

ननु सव्यदक्षिणचक्षुषोर्भेदे सतीदं स्यात् तन्नास्मन्मते सिद्धं चक्षुष एकत्वात् प्रत्यभिज्ञा तु गोलकमादाय उपपद्यत इत्याह **नैकस्मिन्नित्यादिसूत्रम्** । नासास्थिव्यवहिते चक्षुषि काकचक्षुर्वद्गोलकभेदे द्वित्वाभिमानादित्यर्थः । व्याचष्टे **एकमिदमित्यादिना** । तस्यान्तौ द्वे गोलके स्थानभूते । द्वित्वाभिमानं द्वित्वभ्रान्तिं प्रयोजयतः कुरुतः कारयतो वा । तत्प्रयोजको हेतुश्चेति प्रयोगदर्शनात् ।

(सू०) एकविनाशे द्वितीयाविनाशान्नैकत्वम् ॥ ९ ॥

(भा०) एकस्मिन्नुपहते चोद्धृते वा चक्षुषि द्वितीयमवतिष्ठते चक्षुर्विषयग्रहणलिङ्गम् । तस्मादेकस्य व्यवधानानुपपत्तिः ॥ ९ ॥

(सू०) "अवयवनाशेऽप्यवयव्युपलब्धेरहेतुः" ॥ १० ॥

(भा०) "एकविनाशे द्वितीयाविनाशादित्यहेतुः । कस्मात् ? वृक्षस्य हि कासु चिच्छाखासु छिन्नासूपलभ्यते एव वृक्षः" ॥१०॥

(सू०) दृष्टान्तविरोधादप्रतिषेधः ॥ ११ ॥

(भा०) न कारणद्रव्यस्य विभागे कार्यद्रव्यमवतिष्ठते नित्यत्वप्रसङ्गात् । बहुष्ववयविषु यस्य कारणानि विभक्तानि तस्य विनाशः । येषां कारणान्यविभक्तानि तानि अवतिष्ठन्ते ।

---

(ख०)विषयेति । विषयग्रहणं लिङ्गं (सूचकं) यस्य तत् । विषयग्रहणे लिङ्गमिति मुद्रितवार्तिकपुस्तकधृतपाठः । तदर्थस्तु द्वितीयमेव चक्षुः विषयग्रहणे लिङ्गम् (करणं) भवतीति ।

चक्षुर्द्वैतं दूषयति अवयवनाश इति सूत्रम् ।

सिद्धान्तिसूत्रम् दृष्टान्तेति ।

---

(भा०चं०)दीर्घस्येव वंशादेरिति शेषः ॥ ८ ॥

एकेत्यादि ॥ ९ ॥ १० ॥

**सिद्धान्तिसूत्रम्** व्याचष्टे **न कारणेत्यादि** । न वयमवयवनाशेऽवयविस्थिरतामङ्गीकुर्म इत्याह **कार्यद्रव्यमिति** । नित्यत्वप्रसङ्गान्नित्यत्वापत्तेः । कार्यद्रव्यमनित्यमवयवित्वादिति भावः । एतर्हि छिन्नायां शाखायां कथं वृक्षबुद्धिरित्यत आह **बहुष्वित्याद्यवतिष्ठन्त इत्यन्तम्** । खण्डावयवी उत्पद्यत

(भा०) अथ वा दृश्यमानार्थविरोधो दृष्टान्तविरोधः । मृतस्य हि शिरःकपाले द्वाववटौ नासास्थिव्यवहितौ चक्षुषः स्थाने भेदेन गृह्येते । न चैतदेकस्मिन्नासास्थिव्यवहिते सम्भवति ।

अथ वा एकविनाशस्याऽनियमाद् द्वाविमावर्थौ तौ च पृथगावरणोपघातौ अनुमीयेते विभिन्नाविति ।

अवपीडनाच्चैकस्य चक्षुषो रश्मिविषयसन्निकर्षस्य भेदाद्-

---

(ख०) अवपीडनादिति । द्वाभ्यां नेत्राभ्यामवलोकितं वस्त्वेकमेव प्रतिभाति—किन्तु यदैकं नेत्रमङ्गुल्याऽवपीडितं तदा तदेव द्वे इव प्रतिभाति । भाष्यचन्द्रोक्तस्य नयननिमीलनस्य चर्चाऽत्र सर्वथा वृथैव ।

---

(भा०चं०) इति भावः । स एवायं खण्डो वृक्ष इति प्रत्यभिज्ञा-तु साजात्यमादायोपपादनीया ।

दृष्टान्तं दूषयित्वा दृष्टान्तपदस्यान्यथा व्याख्यानेन साध्यं दूषयति **अथवेति** । दृष्टः दृश्यमानोऽन्तोऽर्थः क्तःप्रत्ययोऽयमारम्भे कर्मधारयश्च समासः । नन्वर्यमाणं हि दृश्यमानत्वमिति प्रवृत्तिनिमित्तभेदाभावात् कथं कर्मधारय इति चेन्न सामान्यविशेषयोस्तद्भेदात् । अवटौ गर्त्तौ । कूपवद्गम्भीरौ गृह्येते दृश्येते ।

एकविनाशस्य अपरस्थितिविनाशौ प्रत्यनियामकत्वात् अन्यथा द्वित्वमनुमीयत इत्याह **अथवेत्यादिना विभिन्नावित्यन्तेन** । इमावर्थौ इमे चक्षुषी । पृथगावरणोपघाताविति हेतुः । द्वौ वृक्षाविवेति शेषः ।

दृष्टान्तविरोधादित्यन्यथा व्याचष्टे—एकं चक्षुर्मुद्रयित्वाऽपरस्यावपीडनमङ्गुल्या यदा क्रियते तदा एको दीपचन्द्रादिः द्वाविव

(भा०)दृश्यभेद इव गृह्यते तच्चैकत्वे विरुद्ध्यते। अवपीडननिवृत्तौ चाभिन्नप्रतिसन्धानमिति। तस्मादेकस्य व्यवधानानुपपत्तिः ॥११॥

(भा०) अनुमीयते चायं देहादिसङ्घातव्यतिरिक्तश्चेतन इति—

(सू०) इन्द्रियान्तरविकारात् ॥ १२ ॥

(भा०)कस्यचिदम्लफलस्य गृहीततद्रससाहचर्ये रूपे गन्धे वा केनचिदिन्द्रियेण गृह्यमाणे रसनस्येन्द्रियान्तरस्य विकारः रसानुस्मृतौ रसगर्धिप्रवर्त्तितो दन्तोदकसंप्लवभूतो गृह्यते। तस्येन्द्रियचैतन्येऽनुपपत्तिः,—नान्यदृष्टमन्यः स्मरति ॥ १२ ॥

---

(ख०)प्रतिसन्धानहेतुना (चक्षुर्द्वैतसाधनद्वारेण) आत्मनि प्रत्ययं प्रमाणयित्वाऽनुमानमिदानीम्प्रमाणयति अनुमीयते चायमिति। विप्रतिपन्नं हि प्रति प्रतिसन्धानमुक्तम्। परमार्थतस्त्वनुभवानुसारमार्गोऽयमिति मन्तव्यम्।

स्मरतीति। रूपं गन्धञ्चानुभवति—अथ तत्सहचरितं रसं स्मरति—

---

(भा०चं०)दृश्यते। तच्चैकत्वे न सम्भवतीत्यर्थः। कुत इत्यत आह **अवपीडननिवृत्ताविति**। अभिन्नप्रतिसन्धानमेकप्रत्यभिज्ञा यं द्वावद्राक्षं तमेकं पश्यामीति हेतोः। तस्माद्धेतोः ॥ ११ ॥

इति श्रीभाष्यचन्द्रे प्रासङ्गिकचक्षुरद्वैतनिराकरणभाष्यचन्द्रिका।

सङ्घातभिन्नात्मन्यनुमानान्तरमाह **इन्द्रियेत्यादि सूत्रम्**। अम्लफलस्य आम्राम्रातकादेः गृहीततद्रससाहचर्ये निश्चिततदीयरसव्यासिके। गृह्यमाणेऽनुभूयमाने—दृश्यमाने घ्रायमाणे वेत्यर्थः। इन्द्रियान्तरस्य रसनस्य जिह्वाग्रवर्त्तिनः रसानुस्मृतौ तदीयाम्लरसानुस्मृतौ सत्यां रसगर्द्धिप्रवर्द्धितः अम्लरसतृष्णाजनितः दन्तोदकसंप्लवभूतः

( सू० ) "न स्मृतेः स्मर्त्तव्यविषयत्वात्" ॥ १३ ॥

(भा०) "स्मृतिर्नाम धर्मो निमित्तादुत्पद्यते तस्याः स्मर्तव्यो विषयः तत्कृत इन्द्रियान्तरविकारो नात्मकृत इति" ॥ १३ ॥

---

(ख०)स्मृत्वा चेच्छति–इच्छातो रसनेन्द्रियविकारो दन्तोदकसम्प्लवलक्षणः प्रवर्तते । तद्दर्शनाच्चास्येच्छाऽनुमीयते–इच्छया च स्मृतिरनुमीयते । सेयं स्मृतिरसति सर्वेन्द्रियवेदिन्यात्मनि न भवितुमर्हति ।

न्यायसूत्रविवरणकारा अन्यथा व्याचष्टे सूत्रमेतत् । तन्मतेनैतदपि चक्षुरद्वैतसाधनमेव । तदर्थस्तु–घर्षणादिना पूर्वचक्षुर्नाशे चक्षुरन्तरोत्पादादिति । नैतद्व्याख्यानं सम्यक् प्रतिभाति ।

न स्मृतेरित्याक्षेपसूत्रम् । स्मृतिरात्मानं कारणत्वेनावगमयेत् विषयत्वेन वा । न तावत्कारणत्वेन, स्मृतेः संस्कारकारणकत्वात् । नापि विषयत्वेन स्मृतेः स्मर्तव्यविषयकत्वात् । स्मृताच्च तस्माद्विषयादिन्द्रियान्तरविकारोत्पत्तिरिति शङ्कस्य हृदयम् ।

एतदपि सूत्रं चक्षुरद्वैतपरकत्वेनान्यथा व्याचष्टे विवरणकारः– स्मृतेः स्मर्तव्यविषयत्वात् पूर्वानुभूतविषयत्वमात्रनियमात्–नतु तदिन्द्रियजन्यत्वनियमोऽपीति भाव इति ।

---

(भा०चं०)विकारः दन्तोदकव्याप्तिरूपः ॥ १२ ॥

नास्तिकः प्रत्यवतिष्ठते **न स्मृतेरित्यादि सूत्रेण** । तद्व्याचष्टे **स्मृतिरित्यादि** । निमित्तात् स्मर्तव्यात् । तत्कृतो विषयकृतः । इन्द्रियान्तरविकारो रसनाविकारः । नात्मकृतः (१)न

---

[ टि० ] १ शङ्काकर्तुरयमभिप्रायः–स्मृतेरात्मा कारणं न भवति तस्याः संस्कारकारणकत्वात् न स्मृतेरात्मा विषयः स्मृतेः स्मर्तव्यविषयत्वात् तस्मात्स्मृत्यादिविषयादिन्द्रियान्तरविकारो नात्मकृत इति ।

( सू० ) तदात्मगुणसद्भावादप्रतिषेधः ॥ १४ ॥

( भा० ) तस्या आत्मगुणत्वे सति सद्भावादप्रतिषेध आत्मनः । यदि स्मृतिरात्मगुणः एवं सति स्मृतिरुपपद्यते नान्यदृष्टमन्यः स्मरतीति । इन्द्रियचैतन्ये तु नानाकर्तृकाणां विषयग्रहणानामप्रतिसन्धानम्, प्रतिसन्धाने वा विषयव्यवस्थानु-

---

(ख०) तदात्मेति सूत्रम् । तद्व्याख्यानं विवरणमतेन यथा—ननु स्मृतिसमवायित्वं तत्तदिन्द्रिये स्वीकार्यम् तदन्यस्यानुपस्थितेः—इति कथं पूर्वचक्षुर्नाशे स्मृत्युपपत्तिरित्यत आह तदात्मेति । तस्याः स्मृतेः आत्मगुणत्वसद्भावात्—अत्मसमवायितयाऽनुभवात्—न यथोक्तप्रतिषेधः । अनुभवाकारश्च स्मरामीत्यादिरूपः—इति ।

---

(भा०चं०)समवायेनात्मकृत इत्यर्थः । न वयं ज्ञानसमवायिनमात्मानं ब्रूमः अस्मन्मते ज्ञानमेवात्मेति भावः ॥ १३ ॥

एतद्दूषयति सिद्धान्तिसूत्रं **तदात्मगुणेत्यादि** । तद्व्याचष्टे **तस्या इत्यादि** । तस्याः स्मृतेः क्रियायाः । आत्मनः कर्तुर्गुणत्वे समवायसम्बन्धेनाधेयत्वे । सति प्रमाणसिद्धे । सद्भावात् स्वरूपधारणात् । नहि निराधारा क्रिया उत्पद्यतेऽस्ति वेति भावः । आत्मनस्तदाधारभूतस्य । तथा चानुभवः—“अहं घटं स्मरामीति” । यदीति निश्चये—असन्देहे सन्देहवचनम् । उपपद्यते प्रमाणसिद्धा भवति । अन्यदृष्टं कर्त्रन्यदृष्टं अन्यः क्षणिक आत्मा कर्मभूतघटादिर्वा । स्मरति स्वस्मिन्नधिकरणे स्मृतिमुत्पादयति । स्मृत्यनुभवयोः कालभेदेन समानाधिकरणत्वात् । असमानाधिकरण्ये दोषमाह **इन्द्रियेति** । इन्द्रियाधारकचैतन्ये इत्यर्थः । अप्रतिसन्धानमप्रत्यभिज्ञा प्रसज्येत इति शेषः । इष्टापत्तौ दोषमाह **प्रतिसन्धाने वेति** । विषयव्यवस्था

(भा०) पपत्तिः। एकस्तु चेतनोऽनेकार्थदर्शी भिन्ननिमित्तः पूर्वदृष्टमर्थं स्मरतीति एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानात् स्मृतेरात्मगुणत्वे सति सद्भावः विपर्यये चानुपपत्तिः। स्मृत्याश्रयाः प्राणभृतां सर्वे व्यवहाराः। आत्मलिङ्गमुदाहरणमात्रमिन्द्रियान्तरविकार इति॥

अपरिसङ्ख्यानाच्च स्मृतिविषयस्य॥

अपरिसङ्ख्याय च स्मृतिविषयमिदमुच्यते—'न स्मृतेः

---

(ख०) अपरिसङ्ख्यानादिति। नैतत्सूत्रम्। न्यायसूचीनिबन्धादौ प्राचीनपुस्तकेषु च तथात्वेनाग्रहणात्। भाष्यकारीयसूत्रमेतदिति विवरणकृतः।

अपरिसङ्ख्यायेति। असति आत्मनि स्मृत्यनुपपत्तिं दर्शयित्वा

---

(भा०चं०)इन्द्रियाणां स्वस्वविषयग्रहणनियमः। चक्षू रूपमेव गृह्णाति न रसमित्यादिरूपः। उभयवादिसिद्धः। अनुपपत्तिरसम्भवः। आत्मनित्यत्वव्यवस्था दृश्यते सर्वैरित्याह **एकस्त्विति**। चेतनो ज्ञानाधिकरणम्। अनेकार्थदर्शी अनेकैः करणैरनेकरूपरसादिदर्शनशीलः। भिन्ननिमित्तो नानाधिकरणकः। पूर्वदृष्टं पूर्वस्मिन् जन्मनि अस्मिन्नेव वा जन्मनि पुराकाले दृष्टमनुभूतमनुस्मरति नियमेन चिन्तयति। अचिन्तने स्तन्यपानादिप्रवृत्तिर्न स्यादिति भावः। उक्तमर्थं व्यवहारेण दृढयति **एकस्येत्यादि व्यवहारा इत्यन्तेन**। स्मृत्याश्रयाः स्मृत्यधीनाः सर्वे कायिकवाचिकादयः। व्यवहारा धात्वर्थाः। आत्मलिङ्गमिन्द्रियभिन्नात्मगमकम्। उदाहरणमात्रमेकमुदाहरणमित्यर्थः॥

हेतुमाह **अपरीति**। अपरिसंख्याय अपरिकलय्य परिकलनं

( भा० ) स्मर्तव्याविषयत्वादिति' । येयं स्मृतिरगृह्यमाणेऽर्थेऽज्ञासिषमहममुमर्थमिति । एतस्या ज्ञातृज्ञानविशिष्टः पूर्वज्ञातोऽर्थो विषयो नार्थमात्रम्, ज्ञातवानहममुमर्थम्, असावर्थो मया ज्ञातः, अस्मिन्नर्थे मम ज्ञानमभूदिति, चतुर्विधमेतद्वाक्यं स्मृतिविषयज्ञापकं समानार्थम् । सर्वत्र खलु ज्ञाता ज्ञानं ज्ञेयं च गृह्यते ।

---

(ख०)स्मर्तव्यार्थविषयैव स्मृतिर्नात्मविषयेति पूर्वपक्षिणोऽवधारणं त्रयोदशसूत्रोक्तं खण्डयति ।

चतुर्विधमिति । (१)अज्ञासिषमहममुमर्थमिति तिङुक्तकर्तृकं वाक्यम् । (२)ज्ञातवानहममुमर्थमिति कृदुक्तकर्तृकम् । (३)असावर्थो मया ज्ञात इति कृदुक्तकर्मकम् । (४)असावर्थो मया ज्ञात इति कृदुक्तक्रियाकमिति विवेकः ।

समानार्थमिति । ज्ञानज्ञेयज्ञातृप्रकाशनं सर्वेषु समानमित्यर्थः ।

---

(भा०चं०)नाम कर्तृक्रियाकर्मादिप्रतिसन्धानम् । तदकृत्वैवोच्यते त्वयेति शेषः । उक्तिस्तु भवदुक्तसूत्रमेवेत्याह **न स्मृतेरिति** । अगृह्यमाणेऽवर्तमानप्रत्यक्षके । अर्थे विषये रूपरसादिरूपे विषयसप्तमीयम् । विषयं परिच्छिनत्ति **एतस्या इति** । ज्ञाताऽहङ्कारास्पदं ज्ञानं क्रिया । ज्ञातो ज्ञानकर्मविषयो गोचरः । एतत्त्रितयं ज्ञातृज्ञानज्ञेयं स्मरणस्य विषयः । नार्थमात्रं न ज्ञेयमात्रम् । वाक्यभेदेन विषयं स्फुटं करोति **ज्ञातवानहममुमर्थमिति** । इदं वाक्यं कृदुक्तकर्तृकम् । असावर्थो मया ज्ञात इति कृदुक्तकर्मकम् । अस्मिन्नर्थे मम ज्ञानमिति कृदुक्तक्रियाकम् । अभूदिति क्रियाविशेषणम् तत्सहितन्तृतीयमज्ञासिषमहमित्यादि । पूर्वोक्ततिङुक्तकर्तृकं चतुर्थं तदेवं चतुर्विधं वाक्यमित्ये-

(भा०)अथ प्रत्यक्षेऽर्थे या स्मृतिस्तया त्रीणि ज्ञानानि एकस्मिन्नर्थे प्रतिसन्धीयन्ते समानकर्तृकाणि, न नानाकर्तृकाणि नाकर्तृकाणि। किं तर्हि ? एककर्तृकाणि—अद्राक्षममुमर्थं यमेवैतर्हि पश्यामि । अद्राक्षमिति दर्शनं दर्शनसंविच्च । न खल्वसंविदिते स्वे दर्शने

---

(ख०)स्मृतिरिति–प्रत्यभिज्ञानमित्यर्थः । स्मृतिच्छायावगाहित्वात्तस्य ।

---

(भा०चं०)कवचनमेककर्तृकत्वाभिप्रायेण । समानार्थं समाना अभिन्नाः स्वरूपेण परस्परवर्णभिन्ना अर्था यस्य वाक्यस्य तत्तथा । कथमित्यत आह **सर्वत्रेति** ।

एतावता वाक्यप्रमाणत्वमपह्नुतवानसीत्युक्तम् । अधुना प्रत्यक्षप्रमाणमपि त्वमपन्हुषे इत्याह **अथेत्यादिना** । अद्राक्षमित्यतीते कर्तरि च लुङ् । धात्वर्थान्वयी कालः मिप् अस्मत्पदार्थसमानाधिकरणः । "अस्मद्युत्तम" इति सूत्रात् ।

सामानाधिकरण्यं हि रूपभेदमपेक्षते ।
तच्चानेकधर्मकत्वे सत्येकार्थप्रबोधनम् ॥
येनयेन प्रकारेण धर्म्येकः स्मर्यते पदैः ।
तत्प्रवृत्तिनिमित्तं स्याद्युष्मदस्मत्पदार्थयोः ॥
अन्यथा ब्रुवते ये तु समानाधिकरणं पदम् ।
त एडमूका विख्याता विद्यार्थिपरिमोहकाः ॥

दर्शनसंवित् दर्शनस्मृतिः । अवगम्यत इति शेषः । अर्थोक्तमवाक्यार्थः पदार्थो भवतीति भावः । कथमर्थोक्तमित्यत आह—**न खल्वसंविदिते इति** । एतद्वाक्यमित्यर्थः । न हि पदवाक्ययोरविज्ञाने तदर्थकपदवाक्यं कथितुं कर्तुं शक्त इति भावः । ननु प्रत्यक्षप्रसङ्गे किमिति वाक्यार्थविचार इति चेन्न प्रत्यक्षस्यापि कथाविषयत्वात् न हि

(भा०) स्यादेतत्—'अद्राक्षमिति'। ते खल्वेते द्वे ज्ञाने। 'यमेवैतर्हि पश्यामीति' तृतीयं ज्ञानम्। एवमेकोऽर्थस्त्रिभिर्ज्ञानैर्युज्यमानो नाकर्तृको न नानाकर्तृकः। किं तर्हि? एककर्तृक इति।

सोऽयं स्मृतिविषयोऽपरिसङ्ख्यायमानो विद्यमानः प्रज्ञातोऽर्थः प्रतिषिध्यते—'नास्त्यात्मा स्मृतेः स्मर्तव्यविषयत्वादिति'। न चेदं स्मृतिमात्रं स्मर्तव्यमात्रविषयं वा। इदं खलु ज्ञानप्रतिसन्धानवत् स्मृतिप्रतिसन्धानमेकस्य सर्व-

---

(भा०चं०)वाक्यं विना प्रत्यक्षादिप्रमाणं व्याख्यातुं शक्यमिति। **ते खल्वि-ति**। ते प्रवर्तमानातीते ज्ञाने प्रत्यक्षे एते स्मृतिप्रत्यक्षे अनुव्यवसायरूपे प्रत्यक्षतद्विषयस्मृती उदाहृते। अद्राक्षमित्यत्र प्रत्यक्षौ व्यवसायानुव्यवसायरूपौ उदाहरति **तमेवैतर्हीति पश्यामीति**। चाक्षुषमानसी प्रत्यक्षे। अद्राक्षमिति प्रत्यक्षस्मरणे तथैव। परन्तु स्मरणं न प्रत्यक्षमिति भेदः। तदिदमाह **तृतीयमेवेति**(१)। तृतीयं स्मरणमेकमभिन्नं सजातीयभेदरहितम्। एकोऽर्थः ज्ञानातिरिक्तविषयरूपः अतीतवर्तमानप्रत्यक्षविषयः। त्रिभिर्ज्ञानैस्त्रिभिः प्रत्यक्षैः।

अविद्यमान एक एव सन्नित्यर्थः। प्रज्ञातः प्रमितः। प्रतिषिध्यते नास्तिकेनेति शेषः। प्रतिषेधवाक्याकारमाह **नास्त्यात्मेति**। इदमद्राक्षमिति ज्ञानं स्मृतिमात्रं निर्विषया स्मृतिरित्यर्थः। ननु क एवमाह इत्यत आह **स्मर्तव्यमात्रविषयं चेति**। तर्हि किमित्यत आह **इदं खल्वित्यादि**। ज्ञानस्य प्रत्यक्षस्य अनुभवस्य वा प्रतिसन्धानं वाक्यं करणे ल्युट् ज्ञानप्रतिसन्धानञ्च ज्ञानप्रातिसन्धानामिव। स्मृतिप्रतिसन्धानमद्राक्षमिति वाक्यम्। उपपादकमाह **एकस्येति**। आत्मन इत्यर्थः।

---

(१) अत्र तृतीयमेवार्थज्ञानमेव.मे कोर्थ इति भाष्यपाठोऽभिप्रेतः।

(भा०)विषयत्वात् । एकोऽयं ज्ञाता सर्वविषयः स्वानि ज्ञानानि प्रतिसन्धत्ते-'अमुमर्थं ज्ञास्यामि अमुमर्थं विजानाम्यमुमर्थमज्ञासिषममुमर्थं जिज्ञासमानश्चिरमज्ञात्वाऽध्यवस्यत्यज्ञासिषमिति' । एवं स्मृतिमपि त्रिकालविशिष्टां सुस्मूर्षाविशिष्टां च प्रतिसन्धत्ते । संस्कारसन्ततिमात्रे तु सत्त्वे उत्पद्योत्पद्य संस्कारास्तिरोभवन्ति । स नास्त्येकोऽपि संस्कारो यस्त्रिकालविशिष्टं ज्ञानं स्मृतिं चानुभवेत् । न चानुभवमन्तरेण ज्ञानस्य स्मृतेश्च प्रतिसन्धानमहं ममेति चोत्पद्यते देहान्तरवत् । अतोऽनुमीयते-

---

(भा०चं०)सर्वविषयत्वादिति बहुव्रीहेर्भावप्रत्ययः । सर्वविषयत्वं विवृणोति **एकोऽयमिति** । ज्ञाता समवायसम्बन्धावच्छिन्नज्ञानानुकूलकृतिमान् । सर्वविषयः सर्वे प्रमाणादयः पदार्था विषया यस्य स तथा । स्वानि समवायेन स्वकर्तृकानि ज्ञानानि ज्ञप्तीः प्रतिसन्धत्तेऽनुसन्धत्ते । भावित्वादिप्रकारेण चिन्तयतीत्यर्थः । तान्प्रकारान् दर्शयति **ज्ञास्यामीत्यादिना** । जिज्ञासमानस्तत्त्वेन ज्ञातुमिच्छन् । चिरमज्ञात्वाऽनिर्णीय अध्यवस्यति निश्चिनोति । निश्चयाकारमाह **अज्ञासिषमिति** । प्रत्यक्षस्य त्रिकालविषयित्वं दर्शयित्वा स्मृतेरपि त्रिकालविषयित्वं दर्शयति **एवमिति** । तत्र भाविनीमाह **सुस्मूर्षेति** । संस्कारसन्ततिमात्रे स्मृतिसन्ततिमात्रे । तुशब्द आधारं व्यावर्त्तयति परसंमतम् । सत्त्वे स्मृत्यनुभवक्रियाकर्त्तर्यात्मनि । स कर्त्ता नास्ति भवन्मते स्थिर इति शेषः । ज्ञानमनुभवेत् प्राप्नुयात् । यद्वाऽनुभवेदनुसन्दध्यात् । यद्वा ज्ञानमनुभवन्नीयं स्मृतिं स्मरणीयम् अनुभवेत् स्मृतिभिन्नज्ञानविषयं कुर्यात् । ननु स्मृत्यनुभवज्ञानभेदौ न स्यातां न स्याच्च तत्कर्तैकः किं नश्छिन्नमित्यत आह **नचेति** । प्रतिसन्धानानुपपत्तिमुक्त्वा द्व्याकाराऽनुभवविरोधमाह **अहं ममेति चेति** । अहं

(भा०)अस्त्येकः सर्वविषयः प्रतिदेहं स्वज्ञानप्रबन्धं स्मृतिप्रबन्धं च प्रतिसन्धत्ते इति। यस्य देहान्तरेषु वृत्तेरभावान्न प्रतिसन्धानं भवतीति ॥ १४ ॥

(४) मनोव्यतिरेकिप्रकरणम् ।

( सू० )"नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्"॥१५॥

( भा० ) "न देहादिसङ्घातव्यतिरिक्त आत्मा । कस्मात् ? आत्मप्रतिपत्तिहेतूनां मनसि सम्भवात् । 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्येवमादीनामात्मप्रतिपादकानां हेतूनां मनसि सम्भवो यतः—मनो हि सर्वविषयमिति । तस्मान्न शरीरेन्द्रियमनोबुद्धिसङ्घातव्यतिरिक्त आत्मेति ॥ १५ ॥

---

(ख०)सर्वविषयमिति । सर्वे बाह्यान्तरभूता विषया यस्य तत्—सर्वज्ञमित्यर्थः ।

---

(भा०चं०)करिष्यामि अहं करोमि अहमकार्षमिति मम कृतिर्भविष्यति मम कृतिर्भवतीति मम कृतिरभूदिति । उत्पद्यते जायते देहान्तरवत् अतीतदेहे इवेत्यर्थः । द्वयोर्देहयोरेक आत्मा स्थिर इति पूर्वोक्तं न विस्मर्त्तव्यमिति भावः । प्रतिसन्धत्ते चिन्तयति । देहान्तरेषु वृत्तेः क्रियामात्रात्मकस्यात्मनः अभावादसम्भवात् । शेषं स्फुटम् ॥ १४ ॥

मनसा स्थिरेणात्मनाऽन्यः प्रत्यवतिष्ठते **नात्मेत्यादि सूत्रम्** । व्याचष्टे **न देहादिसङ्घातव्यतिरिक्त इत्यादिना** । सङ्घातः मनःपर्यन्तपदार्थसमूहान्यतरः । तद्व्यतिरिक्तस्तद्भिन्नः । सम्भवात् सम्बन्धात् । मन एवात्मेत्यर्थः । विशदयति **दर्शनेत्यादिना** । निगमयति **मनो हीति** । सर्वे बाह्याभ्यन्तरभूता विषया यस्य तत्सर्वविषयं सर्वज्ञमित्यर्थः । परपक्षं निषेधति **तस्मान्नेति** । शरीरेन्द्रियमनोव्यतिरिक्तः शरीरेन्द्रियमनोऽन्यतमभिन्नः ॥ १५ ॥

(सू०) ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम् ॥ १६ ॥

( भा० ) ज्ञातुः खलु ज्ञानसाधनान्युपपद्यन्ते—चक्षुषा पश्यति, घ्राणेन जिघ्रति, स्पर्शनेन स्पृशति । एवं मन्तुःसर्वविषयमतिसाधनम्मनः करणभूतं सर्वविषयं विद्यते येनायं मन्यत

---

(ख०) एवं मन्तुरिति । 'मतिः' स्मृत्यनुमानादिकं ज्ञानम् । यद्यपि चेदं प्रातिस्विकसंस्कारकारणकं तथाऽप्यवश्यमेतेनेन्द्रियजेन (अर्थात् शरीरसंयुक्तसंस्कारकद्रव्यसंयोगजेन) भवितव्यम्—ज्ञानत्वाद् रूपादिज्ञानवत् । तच्चेन्द्रियमसति चक्षुरादौ मतेर्भावात् चक्षुराद्यतिरिक्तम्मन इत्युच्यते बुद्धिपर्यायत्वेपि मतिज्ञानशब्दयोः साक्षात्कारी प्रत्ययो ज्ञानमिह विवक्षितः, जिज्ञासाधीनं च ज्ञानमिह मतिः।

यथा कारणसत्तया कार्यं जनितं कारणं ज्ञापयति एवम्मनस्सत्तया मनोलिङ्गज्ञानं जनितम्मनो ज्ञापयति । तच्च लिङ्गजं मनोज्ञानं मनस्सत्ताहेतुकम् । न च स्वात्मनि वृत्तिविरोधः । नहि मनस्सत्तायां

---

(भां०चं०)कर्तृकरणयोर्भेदमाश्रित्य सिद्धान्ती परमतं दूषयति **ज्ञातुरित्यादि सूत्रेण** । ज्ञानसाधनोपपत्तेः ज्ञानकरणोपपत्तेः । ज्ञानमिति भावे ल्युट् । साधनमिति करणे । उपपत्तिः प्रमाणप्राप्तिः । व्याचष्टे **ज्ञातुः खल्वित्यादिना** । उपपद्यन्ते प्रमाणेन प्राप्यन्ते । प्रमाणं दर्शयति **चक्षुषा पश्यतीत्यादि** । एवमित्थम् । पूर्वोक्तचतुर्वर्गस्य पृथग्भाववदहं मनसा मन्ये सुखमित्यादावपि चतुर्वर्गोऽपि पृथग्वक्तव्य इति भावः । करणभूतं करणमेवेत्यर्थः । विद्यते प्रमीयते । येन करणभूतेन अयं मन्ता चक्षुरादिकरणकदर्शनक्रियाकर्ता । मन्यते सुखादिकर्मकमतिं करोति । संज्ञाभेदमात्रमिति सूत्रपदं विशदीकरोति

(भा०)इति। एवं सति ज्ञातर्यात्मसंज्ञान मृष्यते मनःसंज्ञाभ्यनुज्ञायते। मनसि च मनःसंज्ञा न मृष्यते मतिसाधनं त्वभ्यनुज्ञायते। तदिदं संज्ञाभेदमात्रं नार्थे विवाद इति।

प्रत्याख्याने वा सर्वेन्द्रियविलोपप्रसङ्गः। अथ मन्तुः सर्वविषयस्य मतिसाधनं सर्वविषयं प्रत्याख्यायते 'नास्तीति'। एवं रूपादिविषयग्रहणसाधनान्यपि न सन्ति इति सर्वेन्द्रियविलोपः प्रसज्यत इति ॥ १६ ॥

---

(ख०)मनः करणम्--मनोज्ञाने वा मनः करणम्-येन स्वात्मनि वृत्तिविरोधः स्यात्। न च केवलं मनः स्वज्ञाने करणम् येनैकत्र कर्मत्वकरणत्वे स्याताम्। अपि तु मनोज्ञाने लिङ्गज्ञानसहितम्मनः करणम्—तत्स्वरूपं तु लिङ्गज्ञानसाहित्यादिरिति न स्वात्मनि वृत्तिविरोधः। तत्त्वतस्तु कर्मत्वकरणत्वयोर्विरोधोऽपि नास्ति। कर्तृव्यापार्यत्वं हि करणत्वम्, अनात्मसमवेतक्रियाफलभागित्वं च कर्मत्वम्। न च कर्तृव्यापार्यताया पटसमवेतक्रियाफलभागितायाः किञ्चित्स्वरूपतः फलतो वा विरुध्यते।

---

(भा०चं०)**एवं सतीत्यादिना**। ज्ञातरि ज्ञानकर्तरि आत्मसंज्ञा आत्मेति नामधेयं न मृष्यते न सह्यते त्वयेति शेषः। उपहसन्नाह **मनःसंज्ञाऽभ्यनुज्ञायत** इति। मनःसंज्ञायां कर्तृकरणभावं द्वयमप्यङ्गीकरोषि यदि तदा चक्षुरादावप्यङ्गीकुर्विति भावः। मनस्यात्मभिन्ने मनसि मनःसंज्ञा न मृष्यते मतिसाधनसंज्ञा मृष्यते मतिकरणसंज्ञा सह्यत इत्यर्थः। नात्मनि विवादः षड्विधज्ञानक्रियाकर्तरि न विप्रतिपत्तिरित्यर्थः।

एक एव कर्त्ता करणञ्चेत्याशयश्चेत्तत्राह **प्रत्याख्याने वेति**।

(सू०) नियमश्च निरनुमानः ॥ १७ ॥

(भा०) योऽयं नियम इष्यते—'रूपादिग्रहणसाधनान्यस्य सन्ति, मतिसाधनं सर्वविषयं नास्तीति'। अयं नियमो निरनुमानः। नात्रानुमानमस्ति येन नियमं प्रतिपद्यामह इति।

रूपादिभ्यश्च विषयान्तरं सुखादयस्तदुपलब्धौ करणान्तरसद्भावः। यथा चक्षुषा गन्धो न गृह्यत इति करणान्तरं घ्राणमेवं चक्षुर्घ्राणाभ्यां रसो न गृह्यत इति करणान्तरं रसनम्। एवं शेषेष्वपि। तथा चक्षुरादिभिः सुखादयो न गृह्यन्त इति करणान्तरेण भवितव्यम्।

तच्च ज्ञानायौगपद्यलिङ्गम्। यच्च सुखाद्युपलब्धौ करणं तच्च ज्ञानायौगपद्यलिङ्गं तस्येन्द्रियमिन्द्रियं प्रति सन्निधेरसन्निधेः न

---

(भा०चं०)विलोपोऽभावः। सङ्ग्रहवाक्यं विवृणोति **अथेत्यादिना-प्रसज्यत** इत्यन्तेन ॥ १६ ॥

नियमविशेषमङ्गीकुर्वन्तं प्रत्याह **नियमश्च निरनुमान** इति सूत्रम्। नियमं स्पष्टयति **योऽयमित्यादिना**। इष्यते त्वयेति शेषः। अस्य ज्ञानकर्तुः। मतिसाधनं सुखादिज्ञानकरणम्। निरनुमानो हेतुदृष्टान्तशून्यः।

पञ्चान्यतमेनैव सुखादिज्ञानं मन्वानं प्रत्याह **रूपादिभ्यश्च विषयान्तरमित्यादि**। करणान्तरसद्भावः करणान्तरसिद्धिः विषयान्तरत्वादेव हेतोरिति शेषः। दृष्टान्तेनेदमाह **यथेत्यादिना**। उपसंहरति **तथा चक्षुरादिभिरिति**। करणान्तरेण मनोनाम्ना करणेनेत्यर्थः। भवितव्यं सेद्धुमुचितम्।

तच्च मनश्च। ज्ञानायौगपद्यं लिङ्गं यस्य तत्तथा। एतत्स्पष्टयति

(भा०)युगपज् ज्ञानान्युत्पद्यन्ते इति । तत्र यदुक्तं—'आत्मप्रतिपत्तिहेतूनां मनसि सम्भवादिति' तदयुक्तम् ॥ १७ ॥

(९)आत्मनित्यताप्रकरणम् ।

( भा० ) "किम्पुनरयं देहादिसङ्घातादन्यो नित्यः, उतानित्य इति । कुत संशयः ? उभयथा दृष्टत्वात् संशयः । विद्यमानमुभयथा भवति नित्यमनित्यं च । प्रतिपादिते चात्मसद्भावे संशयानिवृत्तेरिति" ।

---

(ख०) किम्पुनरिति—शास्त्रानुभूताभ्युदयनिःश्रयसोपयोगिनं परलोकं विवक्षुः परीक्षाहेतुभूतं संशयमाह ।

एतत्प्रकरणारम्भं केचिदाक्षिपन्ति— देहेन्द्रियबुद्धिवेदनाभ्यो व्यतिरिक्तत्वमात्मनो दर्शयता बाल्यकौमारयौवनवार्धक्यभेदेऽपि चैकात्म्यप्रतिसन्धानमर्थादुपपादयता शरीरनाशादूर्ध्वमात्मसद्भावो दर्शितः। तावतैव च नः प्रयोजनम् । ततः किमर्थमिदम्प्रकरणान्तरोत्थापनमिति । तत्परिहारश्च—सिद्धेऽपि देहादिव्यतिरेके बाल्यादिषु चानुगमे—किमयमात्मा आ शरीरोत्पत्तेरा च मरणात् यावद्देहसन्तानभावी—आहोस्विदुपरतेपि देहादिसन्तानेऽनुवर्तत एवेत्येष विमर्शोऽद्यापि न निराकृत इति तन्निरासायेदं प्रकरणमारभ्यत इति ।

---

(भा०चं०)यच्चेत्यादिना । परोक्तहेतुं दुष्टमनुवदति तत्र यदुक्तमित्यादिना । अयुक्तमन्याय्यमित्यर्थः ॥ १७ ॥

अतिरिक्तत्वं साधयित्वा नित्यत्वं साधयितुमुपक्रमते किम्पुनरित्यादिना भाष्येण। विद्यमानं प्रमाणसिद्धं वस्तु उभयथा द्विविधं भवति दृश्यते ।

प्रागिति । प्राङ्चासौ देहश्चेति प्राग्देहः तस्मात् भेदो भिन्नत्वं

(भा०) आत्मसद्भावहेतुभिरेवास्य प्राग्देहभेदादवस्थानं सिद्धमूर्द्ध्वमपि देहभेदादवतिष्ठते । कुतः ?

( सू० ) पूर्वाभ्यस्तस्मृत्यनुबन्धाज्जातस्य हर्षभयशोकसम्प्रतिपत्तेः ॥ १८ ॥

( भा० ) जातः खल्वयं कुमारकोऽस्मिन् जन्मन्यगृहीतेषु हर्षभयशोकहेतुषु हर्षभयशोकान् प्रतिपद्यते लिङ्गानुमेयान् । ते च

---

(ख०) देहभेदादिति ल्यब्लोपे पञ्चमी । बाल्यकौमारयौवनवार्धकदेहभेदमभिसमीक्ष्य प्रतिसन्धानादस्यावस्थानमित्यर्थः—इति तात्पर्यकृतः ।

प्रतिसन्धानेनैवास्य प्रतिसन्धातुरवस्थानं सिद्धम् 'देहस्य भेदात्' अप्रतिसन्धातृत्वादित्यन्यथा व्याख्यानम्परिशुद्धिकृतः ।

लिङ्गानुमेयानिति—यथाक्रमं स्मितकम्परुदितानुमेयानिति यावत् ।

---

(भा०चं०)तस्मात् । अवस्थानं स्थिरत्वम् । यद्वा प्रागिति अवस्थानविशेषणम् । ऊर्द्ध्वमपि पश्चादपि देहभेदात् देहभङ्गात् । कुतः कस्माद्धेतोः इदं ज्ञातव्यमिति शेषः । **पूर्वाभ्यस्तेत्यादिसूत्रम्** । व्याचष्टे **जातः स्वल्वित्यादि** । जातः प्रादुर्भूतः । गर्भस्थशरीरेन्द्रियादिकं प्राप्य योनिद्वारेण बहिर्भूतः । अयं प्रमाता शरीरी कुमारकः कुत्सितकामकः अविवेकेन विष्ठामूत्रादिग्रहणात् । जन्मनि अपूर्वशरीरेन्द्रियादिप्राप्तौ । यद्वा जन्मेतिपदं जन्यधिकरणशरीरेन्द्रियादिपरम् । तस्मिन्निमित्ते । सप्तम्यर्थोऽयं ग्रहधात्वर्थेऽन्वितः अगृहीतेषु एतज्जन्मनिमित्तकग्रहणापरिचयेषु । हर्षः सुखं भयं भाव्यनिष्टचिन्तनं शोको नष्टेषु विषयचिन्तनं । तद्धेतुषु तत्कारणेषु पुत्रोत्पत्तिरोगमरणादिषु

(भा०) स्मृत्यनुबन्धादुत्पद्यन्ते नान्यथा । स्मृत्यनुबन्धश्च पूर्वाभ्यासमन्तरेण न भवति । पूर्वाभ्यासश्च पूर्वजन्मनि सति,नान्यथेति सिद्ध्यत्येतदवतिष्ठतेऽयमूर्द्ध्वं शरीरभेदादिति ॥ १८ ॥

(सू०) "पद्मादिषु प्रबोधसम्मीलनविकारवत्ताद्विकारः" ॥१९॥

( भा० ) "यथा पद्मादिष्वनित्येषु प्रबोधसम्मीलनं विकारो

---

(ख०) अवतिष्ठत इति । दृष्टो हि निरालम्बनो बालः स्खलन् मातुरङ्कात्पतनस्यानिष्टसाधनत्वमनुस्मृत्य—इदं च पतनमिति परामृश्य (प्रत्यभिज्ञाय)—तस्याप्यनिष्टसाधनतामनुमाय रोदिति ।

---

(भा०चं०) प्रतिपद्यते प्राप्नोति । तत्संस्काराज्जातमात्रो बालः सहकारिकारणं प्राप्य हर्षेण हि सति नयननिमीलनकरचरणादिविक्षेपान् करोति रोदिति चेति लिङ्गैरनुमेयान् । ते च हर्षादयश्च । स्मृत्यनुबन्धात् संस्कारविशेषात् । हेतुपञ्चमीयम् । तत्प्रयोजको हेतुश्चेति उत्पत्तिप्रयोजकोऽत्र ज्ञेयः । नान्यथा संस्कारभिन्नेन कारणेन संस्कारस्य प्रयोजना स्मृतिरेव । स्मृत्यनुबन्धश्च स्मृतिधाराकारणसंस्कारश्च । पूर्वाऽभ्यासं विना पूर्वजन्मजज्ञानाऽभ्यासं विना न भवति नोत्पद्यते । सिध्यति स्वरूपं प्राप्नोति । इतिहेतोः । एतदवतिष्ठते इदमवस्थानं करोति । इदं स्वावस्थानं ज्ञापयतीत्यर्थः । ऊद्ध्वमिति कालविशेषणं द्वितीयान्तम् । सापि कालाध्वनोरत्यन्तसंयोगे इति सप्तम्यर्थे ज्ञेया ॥१८॥

अस्थिरत्वेऽपीदं सम्भवतीत्याह पूर्वपक्षी **पद्मादिष्वित्यादिसूत्रेण** । तदिदं व्याचष्टे **यथेत्यादिना** । यथाऽनित्येष्विति छेदः(१) । पद्मादिषु पुष्पेषु प्रबोधः प्रफुल्लता संमीलनं मुकुलीभावः ।

---

(१) यथा नित्येषु पद्मादिष्विति भाष्यपाठोऽत्र संमतो भाष्यचन्द्रस्येति ।

(भा०) भवति । एवमनित्यस्यात्मनो हर्षभयशोकसम्प्रतिपत्ति-विकारः स्यात्" ।

हेत्वभावादयुक्तम् । अनेन हेतुना पद्मादिषु प्रबोधसम्मीलनविकारवदनित्यस्यात्मनो, हर्षादिसम्प्रतिपत्तिरिति नात्रोदाहरणसाधर्म्यात्साध्यसाधनं हेतुर्न वैधर्म्यादस्ति । हेत्वभावात् असम्बद्धार्थकमपार्थकमुच्यते इति ।

दृष्टान्ताच्च हर्षादिनिमित्तस्यानिवृत्तिः । या चेयमासेवितेषु विषयेषु हर्षादिसम्प्रतिपत्तिः स्मृत्यनुबन्धकृता प्रत्यात्मं गृह्यते सेयं पद्मादिसम्मीलनदृष्टान्तेन न निवर्तते । यथा चेयं

---

(ख०) यथा चेयमिति । यथा वृद्धादीनाम्प्रत्यात्मवेदनीया हर्षादिसम्प्रतिपत्तिः पद्मादिदृष्टान्तेन न निवर्तते तथैव जातमात्रस्य बालस्यापि सा न निवर्तयितुं शक्यत इति भावः ।

---

(भा०चं०)ताविमौ विभागसंयोगविशेषौ । विकारः क्रियाविशेषः क्रिया चात्रैवोक्ता । दार्ष्टान्तिकेऽतिदिशति **एवमनित्यस्यात्मन इति** । संप्रतिपत्तिः प्राप्तिः ॥

दृष्टान्तमात्रं नार्थं साधयतीति दूषयति **हेत्वभावादयुक्तमिति** । नात्र हेतुरस्तीत्यन्वयः । स च हेतुर्द्विविध इत्याह **उदाहरणसाधर्म्याद्वैधर्म्यादिति** । उदाहरणवैधर्म्यादित्यर्थः । अयुक्तपदं स्वोक्तं द्विधा व्याचष्टे **असम्बद्धार्थकमपार्थकमिति च** । हेत्वभावादसम्बद्धार्थकं साध्यासिद्धेरपार्थकं । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमप्याह **दृष्टान्ताच्चेत्यादिना** । हर्षादिनिमित्तस्य चेतनधर्मस्य अनिवृत्तिरनिषेधः । आसेवितेषु भुक्तेषु भुक्तजातीयेष्वित्यर्थः विषयेषु पुरुषपशुबन्धकेषु । **यथा चेयमिति** । इयं पद्मादिक्रिया सहेतु-

(भा०) न निवर्तते तथा जातस्यापीति। क्रियाजाताश्च पर्णसंयोगविभागाः प्रबोधसम्मीलने । क्रियाहेतुश्च क्रियानुमेयः । एवं च सति किं दृष्टान्तेन प्रतिषिध्यते ॥ १९ ॥

(भा०) अथ निर्निमित्तः पद्मादिषु प्रबोधसम्मीलनविकार इति मतमेवमात्मनोऽपि हर्षादिसम्प्रतिपत्तिरिति ? तच्च—

(सू०) न, उष्णशीतवर्षाकालनिमित्तत्वात् पञ्चात्मकविकाराणाम् ॥२० ॥

(भा०) उष्णादिषु सत्सु भावादसत्स्वभावात्तन्निमित्ताः पञ्चभूतानुग्रहेण निर्वृत्तानां पद्मादीनां प्रबोधसम्मीलनविकारा

---

(भा०चं०)का न निवर्तते तथा जातस्य बालकस्यापि सहेतुका हासादिक्रिया न निवर्तत इत्यर्थः । क्रियाजात इत्यत्र क्रियापदं कर्मपरं न धात्वर्थमात्रपरम् । क्रियाहेतुश्चेत्यत्र क्रियापदं कार्यधात्वर्थपरम् । क्रियानुमेयः कार्यानुमेयः । उद्धृतमनुस्मारयति एवञ्चेति । किमित्याक्षेपे । किं प्रतिषिध्यते न किञ्चिदपीत्यर्थः ॥ १९ ॥

पद्मविकाशसङ्कोचयोः सहेतुकदृष्टान्तेन हर्षशोकादिषु सहेतुकत्वे साधिते सति पद्मविकाशसङ्कोचयोर्निर्हेतुकत्वमवतारयति अथेत्यादिना इतीत्यन्तेन । दूषयति तच्च नेति । अत्र हेतुसूत्रमुष्णेत्यादि । पञ्चम्यन्तं पदमिदं बहुव्रीहिसमासः भावप्रत्ययान्तं । षष्ठ्यन्तं पदं षष्ठीबहुव्रीहिः । तत्र विशेषणपदं व्यधिकरणबहुव्रीहिः । तदिदं व्याचष्टे उष्णादिष्विति । उष्णादीनां निमित्तत्वे हेतुं दर्शयति सत्सु भावादित्यादिना । सूत्रे पञ्चात्मकमितिपदं व्यधिकरणबहुव्रीहिसिद्धमिति व्याचष्टे पञ्चभूतानुग्रहेणेति । अनुग्रहोऽनुकूलव्यापारः तत्र पृथिव्या अवयवानां परस्परसंयोगोऽसमवायिकारण-

(भा०)इति न निर्निमित्ताः । एवं हर्षादयोऽपि विकारा निमित्ताद्भवितुमर्हन्ति न निमित्तमन्तरेण । न चान्यत्पूर्वाभ्यस्तस्मृत्यनुबन्धान्निमित्तमस्तीति । न चोत्पत्तिनिरोधकारणानुमानमात्मनो दृष्टान्तात् । न हर्षादीनां निमित्तमन्तरेणोत्पत्तिः । नोष्णादिवन्निमित्तान्तरोपादानं हर्षादीनाम् । तस्मादयुक्तमेतत् ॥ २० ॥

---

(ख०)दृष्टान्तादिति । आत्मनो नित्यत्वे नानाहेतुभिः सिद्धे केवलपद्मादिदृष्टान्तबलेन तस्योत्पत्तिविनाशावनुमातुन्नोचितम् । तदनुमानप्रकारश्च—यद्विकारि तदुत्पत्तिनिरोधधर्मकं—यथा पद्मम्—तथा चात्मा—तस्मादनित्य इति ।

---

(भा०चं०)मनुकूलव्यापारः पृथिवी तु समवायिकारणं । चतुर्णां भूतानां संयोगो निमित्तमात्रं । तथाच पञ्चभ्यो भूतेभ्य आत्मा येषामिति विग्रहः । निर्वृत्तानां निष्पन्नानां पद्मात्मनामित्यर्थः । पद्मादीनामित्यादिपदेन कुसुमादिपरिग्रहः । पद्मबन्धोः करस्पर्शने पद्मविकाशः । कुमुदबन्धोः करस्पर्शने कुमुदविकाश इति । परस्परविपरीतयोगेन द्वयोर्मीलनमिति ज्ञेयम् । वर्षादियोगेन कुटजादीनां विकाशः । विकारा इत्यत्र इतिशब्दो हेत्वर्थः । दार्ष्टान्तिकेऽपि सनिमित्तत्वं दर्शयति **एवमित्यादिना** । निमित्तान्तरशङ्कामपि वारयति **न चेत्यादिना** । पद्मदृष्टान्तेनात्मन उत्पत्तिविनाशसाधनेच्छां वारयति **न चेत्यादिना दृष्टान्तादित्यन्तेन** । स्मृत्यन्यथाऽनुपपत्त्या नित्यत्वस्य साधितत्वादिति भावः । स्मृतिरेवाप्रमाणेत्याशङ्क्याह **न हर्षादीनामिति** । निमित्तं स्मरणरूपं । निमित्तान्तरं भविष्यतीत्याशङ्कां वारयति **नोष्णादिरिति** । निमित्तान्तरोपादानमित्यत्र कर्तुं शक्यमिति शेषः । परमतमन्याय्यमित्युपसंहरति **तस्मादयुक्तमिति** ॥ २० ॥

(भा० ) इतश्च नित्य आत्मा—

(सू० )प्रेत्यहाराभ्यासकृतात् स्तन्याभिलाषात् ॥२१॥

(भा० ) जातमात्रस्य वत्सस्य प्रवृत्तिलिङ्गः स्तन्याभिलाषो गृह्यते । स च नान्तरेणाहाराभ्यासम् । कया युक्त्या ? दृश्यते हि शरीरिणां क्षुधा पीड्यमानानामाहाराभ्यासकृतात्स्मरणानुब-

---

(ख०) प्रेत्येति सूत्रे आक्षेपः—किमर्थं पुनरिदं सूत्रमारभ्यते यदाऽयमर्थः पूर्वाभ्यस्तसूत्रेऽवगत इति । तत्परिहारश्च—पूर्वसूत्रात् सामान्यतोऽवगतस्य विशेषज्ञापनार्थं सूत्रमिदमित्यदोष इति । हर्षादिना सामान्यत इच्छामात्रमवगतम्, तद्विशेषस्तु स्तन्याभिलाषो रागश्चात्रोक्त इत्यर्थः ।

---

(भा०चं०)हेत्वन्तरेणापि नित्यत्वं साधयितुमाह **इतश्चेति** । नित्य उत्पत्तिनिरोधशून्यः । आत्मा अहमित्यनुभवास्पदम् । **प्रेत्याहारेत्यादि-सूत्रम्** । प्रेत्य मरणानन्तरमाहारो रसास्वादनम् तस्याभ्यासः पुनःपुनः करणम् । तेन संस्कारस्मृतिद्वारा कृतात् स्तन्याभिलाषात् स्वभवदुग्धतृष्णायाः । तदिदं सूत्रं व्याचष्टे **जातमात्रस्येत्यादिना** । जातमात्रस्य लब्धापूर्वपूर्वजातीयशरीरमात्रस्य वत्सस्य धेनुशावकादेः प्रवृत्तिलिङ्गश्चेष्टालिङ्गः, चेष्टा च करचरणमुखादिव्यापारविशेषः येन दुग्धनिःसरणं मुखे भवति । स्तन्याभिलाषः दुग्धविषयकमुखादिसंयोगेच्छा गृह्यतेऽनुमीयते । स चाभिलाषश्च आहाराभ्यासं संस्कारविशेषं । पृच्छति **कया युक्त्येति** । उत्तरमाह **दृश्यते हीति** । तथाचात्र युक्तिपदेन दृष्टान्त उक्तः । युज्यतेऽनुमीयतेऽनेनेति व्युत्पत्तिः । युज्यते प्रयुज्यते साध्यसाधनायेति वा । करणकर्मणोः क्तिन् । **क्षुधेति**—तृतीयान्तन्तस्याशनेच्छयेत्यर्थः । आहरणमाहारः । आह्रियते भुज्यते इति

(भा०)न्धादाहाराभिलाषः । न च पूर्वशरीराभ्यासमन्तरेणासौ जातमात्रस्योपपद्यते । तेनानुमीयते भूतपूर्वं शरीरं यत्रानेनाहारोऽभ्यस्त इति । स खल्वयमात्मा पूर्वशरीरात्प्रेत्य शरीरान्तरमापन्नः क्षुत्पीडितः पूर्वाभ्यस्तमाहारमनुस्मरन् स्तन्यमभिलषति । तस्मान्न देहभेदादात्मा भिद्यते भवत्येवोर्द्ध्वं देहभेदादिति ॥ २१ ॥

(सू० )"अयसोऽयस्कान्ताभिगमनवत्तदुपसर्पणम्"॥२२॥

(भा० ) "यथा खल्वयोऽभ्यासमन्तरेणायस्कान्तमुपसर्पति, एवमाहाराभ्यासमन्तरेण बालः स्तन्यमभिलषति" ॥ २२ ॥

---

(ख०) अयस इत्याक्षेपसूत्रम् प्रवृत्तिमात्रस्यानैकान्तिकत्वज्ञापनार्थम् । न पूर्वाभ्यस्तस्मृत्यनुबन्ध एव प्रवृत्तिकारणम्, अयसोऽयस्कान्तोपसर्पणे तदभावात् । यदि च बालकस्य स्मृत्यनुबन्धो भवेत् जात्यन्धबधिरादयस्तज्जन्मानुभूतानिव रसस्पर्शगन्धादीन् जात्यन्तरानुभूतान् रूपशब्दादीनपि व्याचक्षीरन्नित्यभिप्रायः ।

---

(भा०चं०)वा आहारः । तत्राभ्यासः क्रियाभ्यावृत्तिः पुनः पुना रसास्वादरूपा । तज्जन्यदृढतरसंस्कार आहाराभ्यासपदेनोक्तः तेन कृतादिति तृतीयातत्पुरुषः समासः । कर्तृकरणे कृता बहुलमिति समासः । स्मरणानुबन्धात् पुनः पुनः स्मरणात् । आहाराभिलाषः आहारप्राप्तीच्छा । संस्कारान्यथानुपपत्त्याऽऽत्मस्थिरत्वं दृढयति **नच पूर्वेति** । उपपद्यते संभवति । तेनोपपत्त्यभावेन भूतपूर्वं पूर्वजातम् । अनेन स्मरणकर्त्रा आहारो भक्षणक्रियाऽभ्यस्तः दृढतरसंस्कारविषयीकृतः । अनुस्मरन् अनुकूलत्वेन स्मरन् । ऊर्ध्वं उत्तरकालम् । भवत्येव स्वरूपं धारयत्येव ॥ २१ ॥

अयस इत्यादिसूत्रभाष्ये स्फुटार्थे ॥ २२ ॥

(भा०) किमिदमयसोऽयस्कान्ताभिसर्पणं निर्निमित्तमथ निमित्तादिति ? निर्निमित्तं तावत्—

(सू०) न, अन्यत्र प्रवृत्त्यभावात् ॥ २३ ॥

(भा०) यदि निर्निमित्तम् ? लोष्टादयोऽप्ययस्कान्तमुपसर्पेयुः। न जातु नियमे कारणमस्तीति। अथ निमित्तात् ? तत्केनोपलभ्यते इति। क्रियालिङ्गः क्रियाहेतुः क्रियानियमलिङ्गश्च क्रियाहेतुनियमः। तेनान्यत्र प्रवृत्त्यभावः। बालस्यापि नियतमुपसर्पणं क्रियोपलभ्यते। न च स्तन्याभिलाषलिङ्गमन्यदाहा-

---

(भा०चं०)दूषयति निर्निमित्तायस्कान्तोपसर्पणं **नान्यत्रेत्यादिसूत्रेण**। तद्व्याचष्टे **यदीत्यादि**। नियमे इति। किञ्चिल्लोहमुपसर्पति अयस्कान्तं किञ्चिन्नेति नियमे साधकं करणं नास्तीति भावः। उपसर्पणे निमित्तमस्तीति चेदत्राह **अथेति**। निमित्तात्कारणात् उपसर्पतीति शेषः। उपसर्पणं दृश्यते तत्कारणं न दृश्यते इत्याह **तत्केनोपलभ्यत इति**। क्रियारूपकार्येणैवेत्याह **क्रियालिङ्ग इति**। बहुव्रीहिरयं। क्रियालिङ्गत्वं पक्षविधया दृष्टान्तविधया च क्रियात्वविशेषणविधया वा। क्रियाहेतुः क्रियाजनकं क्रियानियमलिङ्गश्च क्रियाव्यतिरेकालिङ्ग इत्यर्थः। स क इत्याकाङ्क्षायामाह **क्रियानियमेति**। अयम्भावः अयस्कान्तमणिनिष्ठानुद्भूतबाह्यसंयोग एव लोहे क्रियाहेतुः। अन्यथा स्वरूपेणैव तादृशसंयोगहेतुत्वे जगति लोहमेव न तिष्ठेत् समुद्रेऽयस्कान्तसमूहसत्त्वात्तत्रैव गच्छेदिति। इदमाह **नान्यत्र प्रवृत्त्यभाव इति**। दृष्टान्ते प्रवृत्तिनियामकमुपपाद्य दार्ष्टान्तिकेऽप्युपपादयति **बालस्यापीति**। स्मरणव्यतिरिक्तं निमित्तं भविष्यतीति पक्षं निराकरोति

(भा०)राभ्यासकृतात्स्मरणानुबन्धात्। निमित्तं दृष्टान्तेनोपपाद्यते, न चासति निमित्ते कस्यचिदुत्पत्तिः। न च दृष्टान्तो दृष्टमभिलाषहेतुं बाधते। तस्मादयसोऽयस्कान्ताभिगमनमदृष्टान्त इति।

अयसः खल्वपि नान्यत्र प्रवृत्तिर्भवति न जात्वयो लोष्टमुपसर्पति। किं कृतोऽस्य नियम इति। यदि कारणनियमात् ? स च क्रियानियमलिङ्गः। एवं बालस्यापि नियतविषयोऽभिलाषः कारणनियमाद्भवितुमर्हति। तच्च कारणमभ्यस्तस्मरणमन्यद्वेति दृष्टेन विशिष्यते। दृष्टो हि शरीरिणामभ्यस्तस्मरणादाहाराभिलाष इति॥ २३॥

---

(ख०) दृष्टो हीति। यौवनाद्यवस्थायां हि चेतनस्य प्रवृत्तिः क्षीरादौ पूर्वाभ्यस्तस्मृत्यनुबन्धहेतुका प्रतीतेति बाल्यावस्थायामपि चेतनस्य

---

(भा०चं०)न चेत्यादिना। स्मरणानुबन्धादन्यादित्यन्वयः। न चोपपाद्यते न चोपपादयितुं शक्यत इत्यर्थः। काचित्क्रिया निष्कारणैव भविष्यतीत्याशङ्कां वारयति न चासतीति। कस्यचिदुत्पत्तुरित्यर्थः। पश्चादिदृष्टान्तो बाधको भविष्यतीत्यत आह नचेति। दृष्टं सर्वचेतनैरिति शेषः। अभिलाषहेतुं स्मृतिमनुमानञ्च, तथा च शर्करादिजातिं दृष्ट्वा इष्टसाधनताव्याप्तिं स्मृत्वा परामृश्यानुमायाभिलषतीत्यर्थः। उपसंहरति तस्मादिति।

अयःक्रियायामपि निमित्तमाह अयसः खल्विति। व्यतिरेकेण स्पष्टयति न जात्वयो लोष्टमुपसर्पतीति। न वाऽसन्निकृष्टं लोहमयस्कान्तमुपसर्पतीति द्रष्टव्यम्। आक्षिपति किं कृतोऽस्य नियम इति। तद्वदेरिति शेषः। त्वमेव वदेरिति चेन्न वक्तव्यमित्याह यदीति। असन्देहे सन्देहवचनम्। नियतविषयः स्त-

( भा० ) इतश्च नित्य आत्मा । कस्मात् ?

( सू० ) वीतरागजन्मादर्शनात् ॥ २४ ॥

(ख०) तद्धेतुकैव भवितुमर्हति । तेन हेतुना चेतनप्रवृत्तेः स्वाभाविकसम्बन्धावगमाद् वह्निनेव धूमस्य । एवं व्यवस्थिते यत्र स्मृतेः कार्यं दृश्यते तन्मात्रविषयैव बालस्य स्मृतिरनुमीयते, नान्यत्र । न च य एकस्य स्मरति तेनापरमपि स्मर्तव्यमिति नियमहेतुरस्ति येन जात्यन्धबधिरादयो रूपादीनाचक्षीरन् । अदृष्टपरिपाकोद्बोधितस्य संस्कारस्य तन्नियमेन नियमोपपत्तेः । अद्यत्वेपि चानुभूतेषु कस्यचिदेव स्मरति न सर्वस्येति तात्पर्यम् ।

वीतरागेति सूत्रम् । स्तन्याभिलाषोपन्यासपुनरुक्तिमेव मन्वानेन जन्मान्तरीयेष्टसाधनताज्ञानाधीनस्मरणं हेतुरिति पूर्वं स्तन्याभिलाष उक्तः, सम्प्रति तु पतगादीनां कणादिभक्षणाभिलाषस्य धारणं रागमात्रमित्यपौनरुक्त्यमिति प्रेत्याहारादिसूत्रोक्तपुनरुक्तिमत्र मन्वाना वृत्तिकृतः । पूर्वत्र सूत्रे स्तन्याभिलाषस्मरणम्प्रवृत्तिहेतुत्वेनोपन्यस्तमत्र तु रागो जन्महेतुत्वेनोपन्यस्त इति न पौनरुक्त्यशङ्कावकाशः ।

---

(भा०चं०)न्यादिविषयः । कारणनियमाज्जनकनियमात् अर्हति युज्यते । स्मरणमेव कुतोऽभिलाषकारणं किञ्चिदन्यदस्त्वित्यत आह **तच्च विशिष्यत इति** । दृष्टेनास्मदादिदृष्टेन । दृष्टमेव दर्शयति **दृष्टो हि शरीरिणामिति** ॥ २३ ॥

हेत्वन्तरेणात्मनो नित्यत्वसाधनं दर्शयति **इतश्चेति** । **वीतेत्यादिसूत्रम्** । वीतो रागो यस्मादिति बहुव्रीहिः जन्मनो वा विशेषणं जनिकर्तुर्वा विशेषणं वीतरागजन्मनोऽदर्शनं तस्मात् । सूत्रमिदं व्याचष्टे **सराग इति** । विरोधिनिरोधे तद्विरोध्यन्तरप्राप्तिमाह

(भा०) सरागो जायत इत्यर्थादापद्यते । अयं जायमानो रागानुबद्धो जायते । रागस्य पूर्वानुभूतविषयानुचिन्तनं योनिः ।

---

(ख०) पूर्वानुभूतेति । एकविषयस्मृतिप्रवाहः विजातीयप्रत्ययाभिन्नः 'चिन्तनम्' । तच्चानुभवस्य पश्चाद्भवतीति 'अनुचिन्तनम्' । न चैतत् स्मृतिमन्तरेण भवतीत्यर्थः ।

---

(भा०चं०)**सरागो जायत इति** । अर्थादर्थापत्त्यनुमानात् आपद्यते प्रतीयते । सरागं जन्मोपपादयति **अयं जायमान इत्यादिना** । रागानुबद्धः रागसमूहबद्धः रागस्य विश्वरूपत्वात् तदुक्तं—

इन्द्रियाणि निवर्तन्ते निराहारस्य देहिनः ।
रसवर्ज्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥

इति(१)। परमिति परमात्मतत्त्वं । रसो रागः । "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रस"इत्यनुशासनात् । अस्य निवृत्त्युपायः कथितो ब्रह्मवैवर्त्ते श्रीरुद्रं प्रति श्रीविष्णुना । —

जन्मानि क्रमशो यस्य निष्पापसवृषाणि च ।
तस्य त्वयि भवे भक्तिस्ततोऽभेदो मया सह ॥
अभेददृष्टिः सर्वत्र ज्ञानदाऽज्ञाननाशिनी ।
वैराग्यादिमहामुख्यैः साधनैः सम्प्रवर्तते ॥
बहूनां जन्मनामन्ते कस्यचित्तत्प्रजायते ॥

इदमुक्तं भगवद्गीतायामपि—

बहूनां जन्मनामन्ते ज्ञानवान् मां प्रवर्तते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥

इति । अस्य मूलं हेयं दर्शयति **रागस्येत्यादि योनिरित्य-**

---

(टि०) १ गीतायामिति शेषः ।

(भा०) पूर्वानुभवश्च विषयाणामन्यस्मिन् जन्मनि शरीरमन्तरेण नोपपद्यते। सोऽयमात्मा पूर्वशरीरानुभूतान् विषयान् अनुस्मरन् तेषु तेषु रज्यते । तथा चायं द्वयोर्जन्मनोः प्रतिसन्धिः । एवं पूर्वशरीरस्य पूर्वतरेण पूर्वतरस्य पूर्वतमेनेत्यादिनाऽनादिश्चेतनस्य शरीरयोगः । अनादिश्च रागानुबन्ध इति सिद्धं नित्यत्वमिति ॥ २४ ॥

( भा० ) "कथं पुनर्ज्ञायते पूर्वविषयानुचिन्तनजनितो जातस्य रागो न पुनः—

( सू० )"सगुणद्रव्योत्पत्तिवत्तदुत्पत्तिः"॥ २५ ॥

( भा० ) "यथोत्पत्तिधर्मकस्य द्रव्यस्य गुणाः कारणत

---

(ख०) सगुणेत्याद्यनैकान्तिकत्वप्रतिपादनार्थं सूत्रम् ।

---

(भा०चं०)न्तेन । विषिण्वन्ति पुरुषपशूनिति विषयाः शरीरादिदशविधं प्रमेयं तच्चिन्तनमेव मोह इत्युच्यते । एष हेयतरो मुमुक्षूणां । तदुक्तं सूत्रकारेण–"तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तिरिति"। रागवतोऽनित्यत्वे उपपत्तिमाह–**पूर्वानुभवश्चेत्यादिना नोपपद्यत इत्यन्तेन** । अनुस्मरन् अनुकूलतया स्मरन् रज्यते रागी भवति । अयं रागः । द्वयोर्जन्मनोः । प्रतिसन्धिः प्रतिसन्धानहेतुः । करणे किप्रत्ययविधानात् । अथवा प्रतिसन्धिः प्रतिसन्धानं द्वयोः प्रतिसम्बन्धः प्रयोज्यप्रयोजकभावरूप इति भावः । सर्वेषां जन्मनां परस्परं प्रतिसन्धिमाह **एवं पूर्वशरीरस्येत्यादिना** । अनादिः इदंप्रथमताहीनः । रागानुबन्धः रागप्रवाहः । सोऽप्यनादिः । उपसंहरति **इति सिद्धं नित्यत्वमिति** । आत्मन इति शेषः ॥२४॥

पूर्वपक्षसूत्रमवतारयति **कथं पुनरित्यादिना** । **सगुणेत्या-**

उत्पद्यन्ते तथोत्पत्तिधर्मकस्यात्मनो रागः कुतश्चिदुत्पद्यते"॥२५॥

(भा०) अत्रायमुदितानुवादो निदर्शनार्थः ।

(सू०) न,सङ्कल्पनिमित्तत्वाद्रागादीनाम् ॥२६॥

(भा०) न खलु सगुणद्रव्योत्पत्तिवदुत्पत्तिरात्मनो रागस्य च । कस्मात्? सङ्कल्पनिमित्तत्वाद्रागादीनाम् । अयं खलु प्राणिनां विषयानासेवमानानां सङ्कल्पजनितो रागो गृह्यते । सङ्कल्पश्च

---

(ख०) अत्रायंमिति । उदितमिदं चोद्यमयस्कान्तदृष्टान्तचोद्येन । तथापि तस्यानुवादो निदर्शनार्थः । पूर्वमयस्कान्तो निदर्शनम् इदानीं घटादीनामुत्पद्यमानानां रूपादयो निदर्शनमिति तदर्थः—इत्यर्थः । चोद्यस्योदितानुवादत्वात्परिहारोऽप्युदितानुवाद एवेति हृदयम् ।

---

(भा०चं०)दिसूत्रम् । दृष्टान्तदार्ष्टान्तिकभावेन सूत्रं व्याचष्टे **यथा-चेति** । उत्पत्तिर्धर्मो विशेषणं यस्य तदुत्पत्तिधर्मकं तस्य द्रव्यघटादेः । गुणा रूपरसादयः । कारणतः पाकादितः । तथा च तथैव । आत्मनो जीवस्य रागः कुताश्चित् कालविशेषादेः ॥ २५ ॥

उदितानुवादः कथितानुकथनं । निदर्शनार्थः दृष्टान्तार्थः ।

एततरवण्डकं सूत्रं **न सङ्कल्पेत्यादि** । सङ्कल्पः बलवदनिष्टाननुबन्धीष्टसाधनत्वज्ञानं बलवादिष्टसाधनताज्ञानञ्च । तन्निमित्तत्वात् तद्धेतुकत्वात् । बहुव्रीहेर्भावप्रत्ययान्तं पदमिदन् । रागादीनां रागद्वेषप्रवृत्तिनिवृत्तीनां । सूत्रमिदमपेक्षितेन पूरयित्वा व्याचष्टे **नेत्यादिना** । निषेधकं हेतुं पृच्छति **कस्मादिति** । हेतुमाह **सङ्कल्पेत्यादिना** । सङ्कल्पजनितत्वं प्रकटयत्य**यमित्यादिना** । प्राणिनाम् अस्मदादीनाम् । आसेवमानानां भुञ्जानानाम् । भोगश्चेन्द्रियजानुभवः(१) । सङ्कल्पः सुखजनकताबुद्धिः तज्जानितस्तत्कृतः । रागः प्राप्ती-

---

(टि०) १ मानसः सुखदुखसाक्षात्कार इतियावत ।

(भा०)पूर्वानुभूतविषयानुचिन्तनयोनिः। तेनानुमीयते—'जातस्यापि पूर्वानुभूतार्थचिन्तनकृतो राग' इति। आत्मोत्पादाधिकरणानान्तु रागोत्पत्तिर्भवन्ती सङ्कल्पादन्यस्मिन् रागकारणे सति वाच्या कार्यद्रव्यगुणवत्। न चात्मोत्पादः सिद्धो। नापि सङ्कल्पादन्यद्रागकारणमस्ति। तस्मादयुक्तं—'सगुणद्रव्योत्पत्तिवत्तदुत्पत्ति'रिति।

अथापि सङ्कल्पादन्यद्रागकारणं धर्माधर्मलक्षणमदृष्टमुपा-

---

(भा०चं०)च्छा विषयेषु गृध्यते प्रत्यक्षादिना प्रतीयते। सङ्कल्पहेतुं दर्शयति **पूर्वेत्यादिना**। पूर्वानुभूतविषयाः स्रक्चन्दनमिष्टान्नपानादयः तदनुचिन्तनं तज्जातीयेषु तत्सादृश्येन सुखदुःखाद्यनुसन्धानं। तद्योनिस्तद्धेतुकः। तेनास्मदादिरागदृष्टान्तेन। जातस्य बालकादेः रागः पक्षः पूर्वानुभूतार्थानुचिन्तनकृतोऽनुमीयत इत्यन्वयः(१)। हेतुस्तु रागत्वादित्येव। परमतं दूषयितुमाह **आत्मोत्पादाधिकरणानामिति**। आत्मोत्पादोऽधिकरणं पक्षो येषां ते तथा तेषां वादिनां तु मते रागोत्पत्तिर्वाच्येत्यन्वयः। तन्मते कारणं दर्शयति **सङ्कल्पादन्यस्मिन्निति**। दृष्टवैषम्यमाह **न चोत्पादः सिद्ध इति**। अस्माकं नित्यात्मवादिनामिति शेषः। सङ्कल्पादन्यत्कारणमपि न सिद्धमित्याह **नापि सङ्कल्पादन्यदिति**। अस्ति अस्मन्मत इति शेषः। दूषणमुपसंहरति **तस्मादयुक्तमिति**।

परशङ्कितं प्रकारान्तरमनूद्य दूषयति **अथापीत्यादिना**। धर्माधर्मौ लक्षणं स्वरूपं यस्य तत्तथा। लक्ष्यत इति लक्षणं कर्मणि ल्युट्। अदृष्टं दृष्टक्रियाकार्येणानुमेयम्। उपादीयते त्वयेति शेषः।

---

(टि०) १ पूर्वानुभूतार्थचिन्तनकृतत्वं रागत्वहेतुना साध्यते।

(भा०) दीयते तथापि पूर्वशरीरयोगोऽप्रत्याख्येयः। तत्र हि तस्य निर्वृत्तिः नास्मिन् जन्मनि। तन्मयत्वाद्राग इति। विषयाभ्यासः खल्वयं भावनाहेतुः तन्मयत्वमुच्यते इति। जातिविशेषाच्च रागविशेष इति। कर्म खल्विदं जातिविशेषनिर्वर्तकं

---

(ख०) तन्मयत्वादिति। रागादीनामदृष्टकारणत्वमभ्युपेत्य पूर्वं परिहृतम्, परमार्थतस्तु तन्मयत्वाद्राग इति तात्पर्यम्।

स्यादेतत्—यदि पूर्वाभ्यस्तस्मृत्यनुबन्धाद् रागद्वेषादीनामुत्पादो हन्त मनुष्यजन्मानन्तरं प्राप्तकरभभावस्य मनुष्यजन्मोचितानां भावनानामानन्तर्यात् तदनुरूपा एवास्य रागादयो भवेयुः, न करभरूपाः। करभजेतरस्य विजातीयजन्मसहस्रव्यवायादत आह—जातिविशेषाच्चेति। कर्मणः संस्कारोद्बोधकत्वात् करभत्वजात्यनुबद्धेन कर्मणा जन्मसहस्रव्यवहिताऽपि करभभावनोद्बोध्यते नानन्तराऽपि मनुष्यभावना प्रायणाभिभूतेति भावः।

---

(भा०चं०) पूर्वशरीरयोगः पूर्वदेहप्राप्तिः। अप्रत्याख्येयः प्रत्याख्यातुमशक्यः। अप्रत्याख्याने हेतुमाह **तत्रहीति**। हि यस्मात् तत्र पूर्वशरीरे तस्यादृष्टस्य धर्माधर्मसंज्ञकस्य निर्वृत्तिरुत्पत्तिः। नास्मिन् जन्मनि शरीरे तस्य निर्वृत्तिरित्यन्वयः। तन्मयत्वादिति लौकिकाभाणकं प्रमाणीकरोति। लौकिका हि वदन्ति—स्त्रीमयत्वाज्जाल्मस्य स्त्रियां राग इति। तन्मयत्वपदस्यार्थमाह **विषयाभ्यास इति**। विषयेषु स्त्र्यादिषु अभ्यासः पुनः पुनः प्रवृत्तिः। भावनाहेतुः सुखसाधनताबुद्धिहेतुकः। तन्मयस्य भावस्तन्मयत्वं यदायं विषयाविष्टो भवति तदायं ततो भिन्नत्वेनात्मानं न पश्यतीति तन्मय इत्युपचर्यते स्वरूपे मयट् चिन्मय इति वत्। **जातिविशेषादिति**। जाति-

(भा०) तादात्म्यात्ताच्छब्द्यं विज्ञायते। तस्मादनुपपन्नं—'सङ्कल्पादन्यद्रागकारणम्' इति ॥ २६ ॥

## (६)शरीरपरीक्षाप्रकरणम्

(भा०) अनादिश्चेतनस्य शरीरयोग इत्युक्तम्, स्वकृतकर्मनिमित्तं चास्य शरीरं सुखदुःखाधिष्ठानम्। तत्परीक्ष्यते-किं

---

(ख०) अनादिश्चेतनस्येति शरीरपरीक्षाप्रकरणमारभ्यते। आत्मनः शरीरादिभिन्नत्वसाधकस्य पूर्वप्रकरणस्यैवाङ्गभूतेनैतेन भवितव्यमिति न प्रकरणान्तरावकाश इति श्रीवत्सादिकृताशङ्काऽनूद्य परिहृता परिशुद्धिकृता। सर्वेषामुद्दिष्टानाम्परीक्षणे कर्तव्ये पूर्वप्रकरणे शरीराद्भिन्नत्वमात्मनः प्रसाधितम्—इदानीन्तु तस्यैव शरीरस्य परीक्षा कर्तव्यत्वेनोपतिष्ठते। परीक्षिते च शरीरे तत्स्वभावावगत्यनन्तरन्तत्र निर्विण्णस्तस्माज्जुगुप्सत इति परमोद्देश्यम्।

---

(भा०चं०) जन्म क्रमेलकादिशरीरप्राप्तिः। तस्य हि कण्टकितशाखाभक्षणादौ रागः इन्द्रस्य पीयूषभक्षण इव। जातिविशेषहेतुं दर्शयति **कर्म खल्विति**। कर्मविशेष एवेत्यर्थः। तादात्म्यात् तत्तच्छरीरतादात्म्यभिमानात्ताच्छब्द्यं तत्तच्छरीरवाचकपदवाच्यत्वं। विज्ञानमौपचारिकम् अज्ञानां भ्रान्तिकृतमिति शेषः। अत एवात्मनोऽर्द्धं पत्नीति वदन्ति विवेकेन ज्ञायते धीरैः विपरीतं ज्ञायते मूर्खैः। सङ्कल्पो हेतुरपरिहार्य इत्युपसंहरति **तस्मादिति**। अनुपपन्नमप्रमाणिकम् ॥ २६ ॥

इति श्रीभाष्यचन्द्रे आत्मनित्यत्वपरीक्षाभाष्यचन्द्रिका ॥

अथ शरीरपरीक्षाप्रकरणम्। तदवतारयति **अनादिरिति**। नास्त्यादिरिदंप्रथमता यस्य सोऽनादिः। उक्तं पूर्वम्। इतीत्यव्ययापेक्षया नपुंसकत्वम्। अव्ययस्यालिङ्गत्वेन तद्विशेषणस्याप्यलिङ्गत्वे प्रसक्ते केन-

(भा०)घ्राणादिवदेकप्रकृतिकमुत नानाप्रकृतीति । कुतः संशयः ? विप्रतिपत्तेश्च संशयः । पृथिव्यादीनि भूतानि सङ्ख्याविकल्पेन शरीरप्रकृतिरिति प्रतिजानत इति ।

किं तत्र तत्त्वम् ?

(सू०) पार्थिवं गुणान्तरोपलब्धेः ॥ २७ ॥

---

(ख०) सङ्ख्याविकल्पेनेति । एकद्वित्रिचतुःपञ्चप्रकृतिकतामास्थिषत शरीरस्य वादिन इत्यर्थः ।

पार्थिवमिति सूत्रम् । गुणान्तरोपलब्धेरिति—तद्विशेषगुणोपलब्धेरित्यर्थः ।

इह पार्थिवत्वेन आप्यत्वादिना वा शरीरलक्षणस्य चेष्टाश्रयत्वादेः किमुपपद्यते किं वा नोपपद्यते यत इदम्प्रस्तूयत—इति केषांचिदाक्षेपः । तत्परिहारश्च—भौतिकत्वे शरीरस्य निरूपिते भूतत्वाच्च घटादि-

---

(भा०चं०)चिल्लिङ्गेन विनाऽनव्ययस्य प्रयोगोऽशक्य इति सामान्यतो नपुंसकलिङ्गम् । सुखदुःखाधिष्ठानं सुखदुःखाधिकरणम् । अवच्छेदकतयेति बोध्यम्(१) । द्रव्यगुणकर्मणां कार्यभूतानां समवायिन एवाधारता मुख्या अन्यस्य गौणीति नियमात् । तच्छरीरं विचारेण निश्चीयते । विचार्यकोटिं दर्शयति **किमित्यादिना** । एकप्रकृतिकमेकभूतसमवायिकारणकं नानाप्रकृति नानाभूतसमवायिकारणकं । किंशब्दः संशयद्योतकः । तत्र हेतुं पृच्छति **कुत इति** । उत्तरं **विप्रतिपत्तेश्चेति** । चकारः अनेकधर्मोपपत्तिदर्शनसमुच्चयार्थः । प्रतिजानते विप्रतिपन्ना वादिन इति शेषः । तत्र सिद्धान्तेनोपक्रमसूत्रं **पार्थिव-**

---

(टि०) १ शरीरावच्छेदेनैवात्मनि सुखदुःखोत्पादस्य नैयायिकनये अङ्गीकृतत्वात् ।

( भा० ) तत्र मानुषं शरीरं पार्थिवम् । कस्मात् ? गुणान्तरोपलब्धेः । गन्धवती पृथिवी गन्धवच्च शरीरम् । अबादीनामगन्धत्वात् तत्प्रकृत्यगन्धं स्यात् । न त्विदमबादिभिरसम्पृक्तया पृथिव्याऽऽरब्धं चेष्टेन्द्रियार्थाश्रयभावेन कल्पते इत्यतः पञ्चानां भूतानां संयोगे सति शरीरं भवति । भूतसंयोगो हि

(ख०)वच्चैतन्यमयत्नसिद्धम्भवेत् । ततः प्रयत्नवदात्मसंयोगासमवायिकारणक्रियारूपचेष्टाश्रयत्वमेव सुखेन सिद्ध्येत् । तदारम्भकशेषीभूताहारावयवोपचयापचयहेतुभूतेन्द्रियोपचयापचयलक्षणमिन्द्रियाश्रयत्वं तदवच्छिन्नस्यात्मनो भोगाधिकरणत्वञ्च तस्यार्थाश्रयत्वं च सिद्ध्येदिति लक्षणमेवेदं परीक्ष्यते—इति ।

भूतसंयोग इति । पार्थिवं शरीरमिति सिद्धान्तस्यायमेवार्थो यत् पृथिव्येवास्य समवायिकारणमिति । न चैतावताऽबादीनां भूतान्तराणां संयोगः शरीरोत्पत्तौ निषिध्यते । यथा मृदेव घटस्य समवायिकारणम्—किन्तु तदुत्पत्तौ जलादिकमप्यपेक्ष्यत एवेति ।

(भा०चं०)**मित्यादि** । नरमधिकृत्य विचार(१) इति व्याचष्टे **तत्र मानुषमिति** । पार्थिवं पृथिवीसमवायिकारणकं । तस्य विकार इत्यण् प्रत्ययः विकारो विकृतिरिति पृथिवीप्रकृतिकं पृथिवी विकृतिरिति यावत् । पृथिवीमात्रसमवेतसत्कार्यमिति पर्यवसितोऽर्थः । गुणान्तरं गन्धः तदुपलब्धेस्तत्प्रकारकोपलब्धिविषयत्वात् । कारणगुणा हि कार्यगुणमारभन्त इति न्यायं दर्शयति **गन्धेत्यादिना** । जलादिप्रकृतिकत्वं वारयितुमाह **अबादीनामिति** । तर्हि कथं तत्र जलाद्यंशप्रतीतिरित्यत आह **नत्विदमित्यादि** । असम्पृक्तयाऽसंयुक्तया आरब्धं समवाये स्वस्मिन् जनितं कल्पते कार्यसमर्थं भवति ।

( टि० ) १ मनुष्यशरीरमधिकृत्येत्यर्थः ।

(भा०)मिथः पञ्चानां न निषिद्ध इति । आप्यतैजसवायव्यानि लोकान्तरे शरीराणि तेष्वपि भूतसंयोगः पुरुषार्थतन्त्र इति। स्थाल्यादिद्रव्यनिष्पत्तावपि निःसंशया नाबादिसंयोगमन्तरेण निष्पत्तिरिति ॥ २७ ॥

(सू०)"पार्थिवाप्यतैजसं तद्गुणोपलब्धेः" ॥ २८ ॥

"निःश्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्" ॥ २९ ॥

"गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्" ॥ ३० ॥

---

(भा०चं०)इतः सामर्थ्यात । भूतसंयोगः प्रमितसंयोगः कर्मधारयोऽयं न निषिद्धः न निषेद्धुं शक्यः **आप्येति** । आप्यं वरुणलोके तैजसं सूर्यादिलोके वायव्यं वायुलोके । आकाशे न प्रकृतिरिति न तदीयं शरीरं न्यायमते । तेष्वपि आप्यादिषु त्रिष्वपि । पुरुषार्थस्तन्त्रं साध्यं यस्य स पुरुषार्थतन्त्रः तत्पुरुषे तु पुरुषार्थतन्त्रमिति स्यात् परवल्लिङ्गं द्वन्द्वतत्पुरुषयोरिति शास्त्रात् । निःसंशय इत्यस्य भूतसंयोग इति विशेष्यमनुषञ्जनीयम् । अन्यथा निःसंशयमिति स्यात् निर्मक्षिकमिति वत् । संयोगे भूतत्वं दर्शयति **नाबादीत्यादिना** ॥ २७ ॥

परकीयपूर्वपक्षसूत्राणि त्रीणि दर्शयति **पार्थिवेत्यादीना** । पृथिव्यादित्रिभूतप्रकृतिकमित्येके । पृथिव्यादिचतुर्भूतप्रकृतिकमित्यन्ये । पाञ्चभौतिकमित्यपरे । मनुष्यशरीरमित्युद्देश्यं । तेषु साध्येषु हेतवः । गन्धशैत्योष्णोपलब्धिविषयत्वादिति प्रथमहेत्वर्थः । तत्सहितनिश्वासोच्छ्वासोपलब्धिविषयत्वादिति द्वितीयहेत्वर्थः । गन्धो गन्धवत्त्वं क्लेद आर्द्रीभावः पाको भुक्तपचनानुकूलव्यापारः ।

(भा०)त इमे सन्दिग्धा हेतव इत्युपेक्षितवान्सूत्रकारः। कथं सन्दिग्धाः? सति च प्रकृतिभावे भूतानां धर्मोपलब्धिरसति च संयोगाप्रतिषेधात् सन्निहितानामिति। यथा स्थाल्यामुदकतेजोवाय्वाकाशानामिति। तदिदमनेकभूतप्रकृति शरीरमगन्धमर-

---

(ख०) उपेक्षितवानिति—तत्परिहारे यत्नं न कृतवानित्यर्थः।

तदिदमिति। स्पष्टं व्याख्यातमिदं वार्तिककारेण। तद्यथा—

पृथिव्युदकाभ्यामारभ्यमाणमगन्धं कारणगन्धस्यैकस्यानारम्भकत्वात्। पृथिव्यनलाभ्यामारभ्यमाणमगन्धमरसं च कारणगन्धरसयोः केवलयोरनारम्भकत्वात्। पृथिव्यनिलाभ्यामगन्धमरसञ्चारूपं च वायोरगन्धरसरूपत्वात्। पृथिव्याकाशाभ्यामगन्धमरसमरूपमस्पर्शं च आकाशे गन्धाद्यभावात्। सर्वत्र समानो न्यायः कारणगुणस्य केवलस्यानारम्भकत्वात्। जलानलाभ्यामगन्धञ्चारसं च जलवायुभ्यामगन्ध-

---

(भा०चं०)व्यूहो भुक्तान्नपानरससञ्चरणम्। अवकाशदानमितरभूतानामितस्ततः सञ्चरणानुकूलव्यापारविशेष एव स च संयोगविशेषः। प्रतिबन्धकसंयोगाभावो वा। त्रीनपि हेतूनाभासयति **सन्दिग्धा इति**। एकप्रकृतिकत्वे परेषां संयोगे सत्यपि तत्संभवात् संशय इति भावः। पूर्वपक्षी पृच्छति **कथं सन्दिग्धा इति**। उत्तरमाह **सति चेति**। प्रकृतिभावे इत्यनुषञ्जनीयं। भूतानां धर्मोपलब्धिरित्यनुषञ्जनीयं संभवतीति शेषः। तत्र हेतुः **संयोगेत्यादिः**। तत्र दृष्टान्तमाह **यथेति**। यथा स्थाली वान्हिसंयुक्ता पचति उदकसङ्गे क्लेदयति वायुसंयुक्ता सञ्चारयति आकाशसंयुक्ता तथाकरोति। तथापि स्थाली पार्थिव्येव एवं मनुष्यशरीरमिदं पार्थिवमेव न पाञ्चभौतिकम्। अनेकभूतप्रकृतिकत्वे दोषमाह **अगन्धमित्यादि**। यद्यत्र-

(भा०) समरूपमस्पर्शं च प्रकृत्यनुविधानात्स्यात् । न त्विद-मित्थम्भूतम् । तस्मात्पार्थिवं गुणान्तरोपलब्धेः ॥२८॥२९॥३०॥

(सू०)श्रुतिप्रामाण्याच्च ॥ ३१ ॥

(भा०)'सूर्यं ते चक्षुर्गच्छतात्' इत्यत्र मन्त्रे 'पृथिवीं ते शरीरमिति' श्रूयते । तदिदं प्रकृतौ विकारस्य प्रलयाभिधानमिति । 'सूर्यं ते चक्षुः स्पृणोमि' इत्यत्र मन्त्रान्तरे 'पृथिवीं ते शरीरं

---

(ख०)श्चारसश्चारूपश्च जलाकाशाभ्यामगन्धमरसमरूपमस्पर्शश्च,तेजोनि-लाभ्यामगन्धश्चारसश्चारूपश्च,अनलाकाशाभ्यामगन्धमरसमरूपमस्पर्शश्च, अनिलाकाशाभ्यामेवमेव भूजलानलैरगन्धमेव, भूजलानिलैरेवमेव, भूज-लाकाशैरेवमेव, पृथिव्यनिलानलैरगन्धमरसञ्च, पृथिव्यनलाकाशैरेवमेव, पृथिव्यनिलाकाशैरगन्धमरसमरूपञ्च, जलानिलानलैरगन्धमरसञ्च जला-नलाकाशैरेवमेव, जलानिलाकाशैरगन्धश्चारसश्चारूपश्च, अनलानिला-काशैरेवमेव, पृथिव्युदकतेजोवायुभिरगन्धम्पृथिव्युदकज्वलनाकाशैरेवमेव, अवनिजलाकाशैरेवमेव, पृथिव्यनिलज्वलनाकाशैरगन्धमरूपञ्च, जला-निलानलाकाशैरेवमेव, पृथिव्युदकतेजोवाय्वाकाशैरगन्धङ्कारणगुणस्यै-कस्यानारम्भकत्वादिति वाच्यम् । एककारणकत्वे तु सततोत्पत्त्यनुत्पत्ती नित्यत्वप्रसङ्गश्चेत्युक्तम् ।

---

(भा०चं०)कृतिकं तत्तत्समानधर्मकमिति व्याप्तेः ॥ २८ ॥ २९ ॥ ३० ॥

पार्थिवत्वे हेत्वन्तरमप्याह **श्रुतीत्यादिसूत्रम्** । सूर्यं ते च-क्षुर्गच्छतादित्यत्र इत्यादौ मन्त्रे प्रेतसंस्कारके मन्त्रे पृथिव्यां प्रकृतिभू-तायां तेव तप्रेतस्य शरीरमन्त्यावविविभूतं गच्छतादित्यनुषङ्गः । लीय-तामिति तस्यार्थः । सर्वेषां सिद्धान्तिनां मते प्रकृतावेवोत्पत्तिस्थितिल-याः । अतः सूर्यमितिपदं तेजःपरं गौण्या । श्रूयते शाब्दबोधविषयी-

(भा०)स्पृणोमी'ति श्रूयते । सेयं कारणाद्विकारस्य स्पृत्तिरभिधीयते इति । स्थाल्यादिषु च तुल्यजातीयानामेककार्यारम्भदर्शनाद् भिन्नजातीयानामेककार्यारम्भानुपपत्तिः ॥ ३१ ॥

## (७) इन्द्रियपरीक्षाप्रकरणम् ।

(भा०) अथेदानीमिन्द्रियाणि प्रमेयक्रमेण विचार्यन्ते-कि-

---

(ख०) सेयमिति । अस्यापि मन्त्रस्यायमर्थो यद् यस्मादायातं तत् तस्मिन्नेव लयं गच्छतीति प्रकृतौ विकारस्य लयाभिधानम् । प्रकृतिशब्देन च कार्यशून्यं कारणमुच्यते, न पुनः कारणे कार्यस्य लयः।

स्थाल्यादिष्विति । अयन्तावत्प्रमाणार्थः । विवादाध्यासितं द्व्यणुकं गन्धवद्भ्यामेव परमाणुभ्यामारभ्यते गन्धवत्त्वात् उभयवादिसिद्धपार्थिवद्व्यणुकवत् ।

भाष्यमतेनात्र साङ्ख्यनैयायिकयोरेव विप्रतिपत्तिः । तात्पर्यकृन्मते तु बौद्धनैयायिकयोरपीति ध्येयम् । तथा चोक्तन्तात्पर्ये—उपलक्षणं

---

(भा०चं०)क्रियते। स्पृणामि सृजामि इत्यत्र इत्यादौ मन्त्रान्तरे गर्भादिसंस्कारमन्त्रे। पृथिवीं शरीरं स्पृणोमीति मृदं घटं करोतीतिवत् प्रयोगः। स्पृतिः सृष्टिः कृतिरेव । अभिधीयते उच्यते । लौकिकार्थे वेदार्थे दृष्टान्तीकरोति **स्थाल्यादिषु चेति** । तुल्यजातीयानामेकजातीयानाम् । सूत्रमृत्सुबन्धादीनां एककार्यारम्भः स्वगतजात्यवच्छिन्नकार्यजननं । कार्यं च विकृतिरेवेति बोध्यम् । निमित्तासमवायिनोस्तदसम्भवात् । परमतेऽसम्भवमाह **भिन्नेत्यादिना** ॥ ३१ ॥

इति श्रीभाष्यचन्द्रे शरीरपरीक्षाप्रकरणभाष्यचन्द्रिका ।

विचार्यन्ते परीक्ष्यन्ते । परीक्षाङ्गं दर्शयति **किमाव्यक्तिकानीत्यादिना** । अव्यक्तं प्रधानं सत्त्वरजस्तमसां साम्यावस्था प्रकृ-

(भा०) माव्यक्तिकान्याहोस्विद् भौतिकानीति । कुतः संशयः?—

(सू०) कृष्णसारे सत्युपलम्भाद् व्यतिरिच्य चोपलम्भात्संशयः ॥ ३२ ॥

(भा०) कृष्णसारं भौतिकं । तस्मिन्ननुपहते रूपोपलब्धिः उपहते चानुपलब्धिरिति । व्यतिरिच्य कृष्णसारमवस्थितस्य विषयस्य उपलम्भो न कृष्णसारप्राप्तस्य । न चाप्राप्यकारित्वमि-

---

(ख०) चैतत् । यदापि भौतिकानि तदापि कृष्णसारं यदेतदुपलभ्यते तदेवेन्द्रियमाहो तदधिष्ठानं तैजसमित्यपि संशयो द्रष्टव्यः । तत्र पूर्वः संशयः साङ्ख्यनैयायिकयोर्विप्रतिपत्तेरुत्तरस्तु सौगतनैयायिकयोरिति ।

आव्यक्तिकानीति । साङ्ख्यमते इन्द्रियाणामुत्पत्तिर्नाव्यक्तत्वात्साक्षात् किन्त्वहङ्कारादेव । अत एवोक्तं तात्पर्यकृद्भिः—आव्यक्तिकत्वमाहङ्कारिकत्वं द्रष्टव्यम् । अहङ्काराद्धि बुद्धिविकाराद्वैकारिकादेकादशेन्द्रियाणि जायन्त इति साङ्ख्याः । आव्यक्तिकत्वन्त्वव्यक्तस्य मूलकारणत्वादुक्तमिति ॥

संशयकारणोद्भावनपरं सूत्रं कृष्णसार इति । व्यतिरिच्य चोपलम्भाऽहङ्कारिकत्वे सत्येव सम्भवति अहङ्कारस्य विभुत्वेनाप्रतिघातात् भौतिकत्वे काचाभ्रपटलादिभिर्भौतिकैः प्रतिघातसम्भवात् ॥

(ख०) व्यतिरिच्येति । कृष्णसारव्यतिरेकेण विप्रकृष्टदेशावस्थितस्य विषयस्योपलब्धिरित्यर्थः ।

---

(भा०चं०) तिरिति वदन्ति सांख्याः । तस्य विकार इति ठक् । प्रधानविकारा इत्यर्थः । भौतिकानि भूतविकाराः ।

तत्र चक्षुः परीक्षयति कृष्णेत्यादि सूत्रेण । कृष्णसारं

(भा०) न्द्रियाणां तदिदमभौतिकत्वे विभुत्वात्सम्भवति । एवमुभयधर्मोपलब्धेः संशयः ॥ ३२ ॥

( भा० ) अभौतिकानीत्याह । कस्मात् ?—

( सू० ) महदणुग्रहणात् ॥ ३३ ॥

( भा० ) महदिति महत्तरं महत्तमं चोपलभ्यते यथा न्यग्रोधपर्वतादि । अण्विति अणुतरमणुतमं च गृह्यते यथा न्यग्रोधधानादि । तदुभयमुपलभ्यमानं चक्षुषो भौतिकत्वं बाधते । भौ-

---

(ख०) अभौतिकानीति–साङ्ख्यमतमिदानीमुत्थाप्य अक्षिकनीतिकैवेन्द्रियमिति बौद्धपक्षं दूषयति ।

अभौतिकत्वप्रतिपादनपरं सूत्रम्—महदिति । गोलकं नेन्द्रियम्—अप्राप्यकारित्वेऽतिप्रसङ्गात् । इत्थञ्च गोलकातिरिक्तं भौतिकमिति वाच्यम्भौतिकत्ववादिभिः । तदप्यसङ्गतम् । चक्षुषा हि न्यूनपरिमाणम्महत्परिमाणं च गृह्यते, भौतिकत्वे तदसम्भवादित्यर्थः ।

---

(भा०चं०)कनीनिका । **विभुत्वादिति** । सांख्यादिमते चक्षुरादीनि इन्द्रियाणि विभूनि उभयधर्मोपलब्धेः उभयवादिसंमतपरिच्छिन्नधर्मविभुधर्मोपलब्धेः । बाह्यमते कृष्णसारमेव चक्षुः । सांख्यमते कृष्णसारसहकृतं विभु चक्षुः ॥ ३२ ॥

तत्र सांख्यमतं परिगृह्णाति **अभौतिकानीत्याहेति** । आह सांख्य इति शेषः । हेतुमाह **महदित्यादिसूत्रेण** । महान्ति च अणूनि च महदणूनि । अत्र बहुवचनस्य त्रित्वे विश्रान्तिः तथाच महन्महत्तरम्महत्तमम् अणु अणुतरमणुतममिति लभ्यते । तादिदं भाष्यकृता उभयव्याख्यानेन चाभ्यासुक्तम् । धाना बीजं । आदिशब्देन तत्खण्डादि । बाधते वारयति । अत्र हेतुमाह हि यस्मात् भौतिकं यत्-

(भा०) तिकं हि यावत्तावदेव व्याप्नोति । अभौतिकन्तु वि-भुत्वात्सर्वव्यापकमिति ॥ ३३ ॥

(भा०) न महदणुग्रहणमात्रादभौतिकत्वं विभुत्वं चेन्द्रियाणां शक्यं प्रतिपत्तुम् । इदं खलु—

**(सू०) रश्म्यर्थसान्निकर्षविशेषात्तद्ग्रहणम् ॥ ३४ ॥**

(भा०) तयोर्महदण्वोर्ग्रहणं चक्षूरश्मेरर्थस्य च सान्निकर्षविशेषाद्भवति यथा प्रदीपरश्मेरर्थस्य चेति । रश्म्यर्थसन्निकर्षश्चाव-

---

(ख०) न महदिति—पूर्वसूत्रोक्तं साङ्ख्यमतं न्यायमतेन दूषयति । रश्म्यर्थेतिन्यायमतप्रतिपादकं सूत्रम् । सान्निकर्षविशेषेति । योऽयं सन्निकर्षो विशेषप्रतिपत्तिहेतुर्भूयोवयवसंयोगैरनुगृह्यते सोऽयमवान्तरसंयोगापेक्षयाऽवयवीन्द्रियसन्निकर्षः सान्निकर्षविशेष इत्युच्यते । स-चेन्द्रियावयवानामर्थावयवैः—इन्द्रियावयवानामर्थेनावयविना—अर्थाव-यवानामिन्द्रियेण—इन्द्रियस्य चार्थेनेति । स च रश्म्यर्थसन्निकर्षविशेषो महदण्वोस्तुल्यो भवतीत्यन्यथा महदण्वोर्ग्रहणं सिध्यतीति हृदयम् ।

---

(भा०चं०)रिमाणकं तत्परिमाणकमेव व्याप्तुं शक्नोति । यथाऽङ्गुल्यग्रं स्वपरिमाणसमपरिमाणकं व्याप्नोति । सांख्यः स्वपक्षमुपपादयति **अभौतिकन्त्विति** ॥ ३३ ॥

तदिदं सांख्यमतं नैयायिकः खण्डयति **न महदित्यादिना** । **रश्म्यर्थेत्यादिसिद्धान्तिसूत्रं** व्याचष्टे । **तयोरिति** । तयोस्त्रिविधयोः चक्षूरश्मयो ह्यनुद्भूतरूपवन्तस्तिष्ठन्ति । ते ह्यवयवा चक्षुषः । तेषु विद्यमानं चक्षुर्यथायोग्यं विषयदेशं व्याप्नोति । सेयं व्याप्तिः सन्निकर्षविशेषादित्यनेनोक्ता । अनुद्भूते तेजसि अनुद्भूतं तेजो दृष्टान्तयति **यथेति** । प्रदीपरश्मेः प्रदीपप्रभायाः । अतीन्द्रिये च-

(भा०) रणालिङ्गः । चाक्षुषो हि रश्मिः कुड्यादिभिरावृतोऽर्थं न प्रकाशयति यथा प्रदीपरश्मिरिति ॥ ३४ ॥

(भा०) आवरणानुमेयत्वे सतीदमाह—

(सू०) "तदनुपलब्धेरहेतुः" ॥ ३५ ॥

(भा०) "रूपस्पर्शवद्धि तेजः, महत्त्वादनेकद्रव्यवत्त्वाद्रूपवत्त्वाच्चोपलब्धिरिति प्रदीपवत् प्रत्यक्षत उपलभ्येत चाक्षुषो रश्मिर्यदि स्यादिति" ॥ ३५ ॥

---

(ख०) तदनुपलब्धेरिति सूत्रं न्यायमतमाक्षिपति । न चाक्षुषो रश्मिर्विद्यत इति सूत्रार्थः। उपलब्धिलक्षणप्राप्तमनुपलभ्यमानमनुमातुं न शक्यते । तथा सति नरविषाणादीनामप्यनुमानप्रसङ्ग इति हृदयम् ।

महत्त्वादिति वैशेषिकसूत्रमनुवदति । तच्च सूत्रं यथा—महत्यनेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति ।

---

(भा०चं०) क्षुषि प्रमाणं दर्शयति **रश्म्यर्थेति** । रश्म्यर्थसन्निकर्षः अर्थसन्निकृष्टो रश्मिरित्यर्थः । आवरणं लिङ्गं ज्ञापकं यस्य स तथा । व्यतिरेकेणोपपादयति **चाक्षुष इति** । चक्षुःपदं गोलकेन्द्रिययोर्वर्त्तते तत्र गोलकं प्रकृत्यर्थः इन्द्रियं प्रत्ययार्थः स चेह रश्मिः । यद्वा इन्द्रियमेव प्रकृत्यर्थः प्रत्ययार्थोऽवयवभूतो रश्मिः एवं सति तद्धितः सम्भवदर्थः । आवृतो निरुद्धः । प्रतिबद्धगतिक इत्यर्थः । तमर्थं न प्रकाशयति ॥ ३४॥

अतीन्द्रिये चक्षुषि परो विप्रतिपद्यते **तदनुपलब्धेरित्यादिसूत्रेण** । अहेतुवारणं न हेतुरित्यर्थः । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादिति भावः । प्रदीपवदुपलभ्येत दृश्येत प्रत्यक्षत इति तृतीयान्तात्तसिल् स चाभेदे तस्यान्वय उपलब्धौ ॥ ३५ ॥

( सू० ) नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः ॥ ३६ ॥

( भा० ) सन्निकर्षप्रतिषेधेनावरणेन लिङ्गेनानुमीयमानस्य रश्मेर्या प्रत्यक्षतोऽनुपलब्धिर्नासावभावं प्रतिपादयति, यथा चन्द्रमसः परभागस्य पृथिव्याश्चाधोभागस्य ॥ ३६ ॥

(सू०) द्रव्यगुणधर्मभेदाच्चोपलब्ध्यनियमः ॥ ३७ ॥

( भा० ) भिन्नः खल्वयं द्रव्यधर्मो गुणधर्मश्च । महदने-

---

(ख०) नानुमीयमानस्येति—आक्षेपपरिहारपरं सूत्रम् । प्रत्यक्षमात्रेणानुपलब्धिर्नैकान्ततोऽभावमेव साधयतीत्यर्थः ।

---

(भा०चं०)नानुमीयमानस्येत्यादिसिद्धान्तिसूत्रम् । व्याचष्टे **सन्निकर्षेत्यादि** । आवरणेनेत्यस्य व्याख्यानं **सन्निकर्षप्रतिषेधेनेति** । अनुमीयमानस्येत्यस्य प्रमाणसिद्धोऽर्थो नापन्होतुं शक्य इति भावः । तदिदमाह **नाभावं प्रतिपादयतीति** । तथासत्यनुमानोच्छेदापत्तिरिति भावः । प्रत्यक्षतोऽनुपलब्धेरभावसाधकत्वाभावे दृष्टान्तमाह **यथेत्यादिना** । परभागस्योपरिभागस्य । अधोभागस्य तलांशस्य प्रत्यक्षतोऽनुपलब्धिर्नाभावं(१) साधयतीत्यनुषङ्गः ॥ ३६ ॥

एकजातीयमपि ऐन्द्रियकातीन्द्रियभेदेन दृष्टान्तमुद्रया दर्शयति **द्रव्यगुणेत्यादिसूत्रेण** । उपलब्ध्यनियमः प्रत्यक्षानियमः । व्याचष्टे **भिन्न इत्यादि** । भिन्नः खल्वभिन्नवद्द्रव्यधर्मो गुणधर्मश्चेति धर्मः प्रत्यक्षतोऽनुपलभ्यमानत्वमुपलभ्यमानत्वञ्चेति द्विधा । तत्र द्रव्यं न प्र-

---

( टि० ) १ उपलब्धिलक्षणप्राप्तस्यानुपलब्धिरभावसाधिका नानुपलब्धिमात्रम् ।

कद्रव्यवच्च विषक्तावयवमाप्यं द्रव्यं प्रत्यक्षतो नोपलभ्यते, स्पर्शस्तु शीतो गृह्यते । तस्य द्रव्यस्यानुबन्धात् हेमन्तशिशिरौ कल्पेते । तथाविधमेव च तैजसं द्रव्यमनुद्भूतरूपं सह रूपेण नोपलभ्यते, स्पर्शस्त्वस्योष्ण उपलभ्यते । तस्य द्रव्यस्यानुवन्धाद् ग्रीष्मवसन्तौ कल्पेते ॥ ३७ ॥

( भा० ) यत्र त्वेषा भवति—

---

(ख०) आप्यं द्रव्यमिति । वायुनीतं जलीयत्र्यणुकादीत्यर्थः ।

(ख०) यत्रत्विति । यत्रैषा रूपोपलब्धिः (तत्र) अनेकद्रव्यसमवायात् रूपविशेषाच्च भवति इति सम्बन्धस्सूत्रेण । रूपविशेषादिति

---

(भा०चं०)त्यक्षं तद्गुणः प्रत्यक्ष इत्यत्र निदर्शनमाह **महादित्यादिना गृह्यत इत्यन्तेन** । महदनेकद्रव्यवद्विषक्तावयवं त्र्यणुकादि । विषक्तावयवं नाम विशेषेणानुभवायासक्तावयवम् । त्वक्सम्बद्धावयवकमित्यर्थः । आप्यं हिमादि । स्पर्शस्तु शीत इति पुंविशेषणतया पुंस्त्वम् । स्वप्रधानं तु नपुंसकमेव । शीतं गुण इति कोशे तु "हिमस्य शीतं न तुलामुपैती"त्याद्युदाहरणम् । ग्रहोऽनुभवः अनुबन्धोऽविच्छेदेनोत्पत्तिः स्थितिर्वा । कल्पेते समर्थौ भवतः । तदुक्तं शिशुपालवधे—

उपचितेषु परेष्वसमर्थतां व्रजति कालवशाद्बलवानपि ।
तपसि मन्दगभस्तिरभीषुमान्न हि महाहिमहानिकरो भवेत् ॥ इति ।

भवत्वाप्यं द्रव्यं तथा तैजसन्तु न तथा भविष्यतीत्यत आह **तथाविधमेव चेति** । यत्र तु उद्भवसमाख्ये रूपगतविशेषे सतीति शेषः ॥ ३७ ॥

एषेति रूपोपलब्धिरित्यस्य सूत्रस्थस्य विशेषणम् । **अनेकेत्यादि**

(सू०) अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः ॥ ३८ ॥

(भा०) यत्र रूपं च द्रव्यं च तदाश्रयः प्रत्यक्षत उपलभ्यते, रूपविशेषस्तु—यद्भावात् क्वचिद्रूपोपलब्धिः यदभावाच्च द्रव्यस्य क्वचिदनुपलब्धिः—स रूपधर्मोऽयमुद्भवसमाख्यात इति । अनुद्भूतरूपश्चायं नायनो रश्मिः । तस्मात्प्रत्यक्षतो नोपलभ्यत इति । दृष्टश्च तेजसो धर्मभेदः । उद्भूतरूपस्पर्शं प्रत्यक्षं तेजो

---

(ख०) सूत्रे 'रूपविशेषः' उद्भवसमाख्योऽभिधीयते न रूपत्वम् । न रूपत्वं रूपं रूपान्तरात् विशिनष्टि, अपि तूद्भवो विशेषकत्वात् विशेष इत्युच्यते । उद्भवश्च कार्यगम्यः—यस्याभावाद् विषक्तावयवमाप्यं द्रव्यं हेमन्ते न गृह्यते तैजसञ्च ग्रीष्मे, यस्य भावात् प्रदीपरश्मिरुपलभ्यते आदित्यरश्मिश्च—स उद्भवो नाम विशेषः । स तस्मिन्नायने रश्मौ रूपविशेषो नास्तीत्यचाक्षुषो रश्मिर्नोपलभ्यते ।

---

(भा०चं०) सूत्रम् । अनेकद्रव्यसमवायात् बहुद्रव्यसमवायात् रूपविशेषादुद्भूतसमाख्यात् रूपोपलब्धिः रूपसहितद्रव्योपलब्धिः । सूत्रमिदं व्याचष्टे **यत्रेति** । उद्भवाख्ये सतीत्यर्थः । **तदाश्रय इति** । द्रव्यसमानाधिकरणत्वेऽपि अजहल्लिङ्गात्पुंस्त्वम् । क्वचित् यद्भावादित्यन्वयः रूपोपलब्धिः रूपयुक्तद्रव्योपलब्धिः । क्वचिद्यदभावादित्यन्वयः । द्रव्यस्य रूपसहितस्येति शेषः । उद्भव उद्भूतत्वं तच्छब्देन समाख्यातः । उद्भव उद्भवसमाख्याक इत्यर्थः । एवमनुद्भूतरूपं तैजसं द्रव्यमुदाहृत्य तादृशं चक्षुरित्याह **अनुद्भूतेत्यादिना** । अतोऽनुपलब्धिर्न दोषायेत्याह **तस्मादिति** । प्रसिद्धं पुनरुदाहरति **दृष्टश्चे-**

(भा०) यथा आदित्यरश्मयः। उद्भूतरूपमनुद्भूतस्पर्शं च प्रत्यक्षं यथा प्रदीपरश्मयः। उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षं यथाऽबादिसंयुक्तं तेजः। अनुद्भूतरूपस्पर्शोऽप्रत्यक्षश्चाक्षुषो रश्मिरिति॥३८॥

(सू०) कर्मकारितश्चेन्द्रियाणां व्यूहः पुरुषार्थतन्त्रः ३९

(भा०) यथा चेतनस्यार्थो विषयोपलब्धिभूतः सुखदुःखोपलब्धिभूतश्च कल्पते तथेन्द्रियाणि व्यूढानि। विषयप्राप्त्यर्थश्च रश्मेश्चाक्षुषस्य व्यूहः। रूपस्पर्शानभिव्यक्तिश्च व्यवहार-

---

(ख०) पुरुषार्थतन्त्र इति—पुरुषार्थकारित इत्यर्थः।

---

(भा०चं०)तथादिना। प्रत्यक्षं त्वक्चक्षुषोरिति शेषः प्रदीपरश्मयस्तु चाक्षुषा एव। अबादिसंयुक्तं तेजः अप्रत्यक्षमचाक्षुषम्। अस्पर्शनस्तु चाक्षुषो रश्मिरपि तथा॥ ३८॥

एवंवैचित्र्यां हेतुप्रदर्शनार्थं सूत्रं कर्मेत्यादि। कारित इत्यनेनाविचित्रेच्छस्य परमेश्वरस्य कर्मवैचित्रीप्रयुक्तप्रयुक्तं सृष्टिवैचित्र्याः प्रत्यक्षत्वं दर्शितम्। यद्वा कर्मणा कारित इति प्रयोज्यकर्तृसमास एव बोध्यः। तथाच परमेश्वरस्य स्वातन्त्र्यमेवास्थितं भवति एतेनातिविचित्रस्य जगतः सर्वज्ञं चेतनं कर्तारं विना सृष्टिर्न भवतीति सूचितम्। तथाच मीमांसकसांख्यमतमनीश्वरं सर्जनं निरस्तम्। व्याचष्टे यथेत्यादिना। चेतनस्य जीवस्यार्थः प्रयोजनं विषयोपलब्धिर्विषयभोगः। तत्संसर्गश्च सुखदुःखोपलब्धिरूपः। भूतशब्दः स्वभावपर्यायः। व्यूढानि रचितानि व्यूहो रचना। रच प्रतियत्ने। प्रतियत्नो विचित्रव्यापारः। व्यापारश्च भावनैव ग्राह्या। तथाच कर्मणि प्रत्ययोऽयं व्यूढानीति तेन कर्तुरपेक्षायां विचित्रशक्तिना परमेश्वरेणेति शेषो लभ्यते। रूपस्पर्शानभिव्यक्तिश्चेति।

(भा०) प्रवृत्त्यर्था। द्रव्यविशेषे च प्रतिघाताद्दावरणोपपत्तिर्व्यवहारार्था। सर्वद्रव्याणां विश्वरूपो व्यूह इन्द्रियवत् कर्मकारितः। पुरुषार्थतन्त्रः। कर्म तु धर्माधर्मभूतं चेतनस्योपभोगार्थमिति।

अव्यभिचाराच्च प्रतिघातो भौतिकधर्मः।

यश्चावरणोपलम्भादिन्द्रियस्य द्रव्यविशेषे प्रतिघातः स भौतिकधर्मो न भूतानि व्यभिचरति—नाभौतिकं प्रतिघातधर्मकं दृष्टमिति। अप्रतिघातस्तु व्यभिचारी भौतिकाभौतिकयोः समानत्वादिति।

---

(ख०) अव्यभिचाराच्चेत्यादि न सूत्रम्। न्यायसूचीनिबन्धे वृत्तौ विवरणे प्राचीनपुस्तकेषु च तथाविधसूत्रस्याभावात्।

---

(भा०चं०)अभिव्यज्यतेऽनेनेत्यभिव्यक्तिरुद्भूतिः। न अभिव्यक्तिरनभिव्यक्तिरनुद्भूतत्वम्। **व्यवहारप्रवृत्त्यर्थेति**। व्यवहारो व्यवहारविशेषः। स विचित्रज्ञानशब्दप्रयोगरूपादिः। अतीन्द्रियमिन्द्रियमित्यादिः। आवरणोपपत्तिश्चक्षुष इति शेषः। विश्वरूपो विचित्रस्वरूपः। पुरुषार्थतन्त्रः पुरुषार्थसाधकः॥

(१)प्रतिघातो गतिनिरोधकसंयोगः। **यश्चेति**। आवरणोपलम्भात् कुड्यादिव्यवहितघटादेरावरणोपलम्भात् इन्द्रियस्य चक्षुषः। द्रव्यविशेषे कुड्यादौ प्रतिघातो गतिप्रतिबन्धः। स भौतिकधर्मः। भौतिकत्वाव्यभिचारी। भौतिकत्वञ्च भूतसमवेतभूतविशेषत्वं। तदिदमाह **भूतानि न व्यभिचरतीति**। भूतानि कार्यभूतानि इति तु प्रकृताभिप्रायकम्। अभौतिकमाकाशादिव्यापकं द्रव्यं। परमाणोरपि प्रतिघातः संभवतीति। न-

---

(टि०)१ भाष्यचन्द्रसम्मतमेवाव्यभिचारादिति सूत्रं व्याख्यातत्वात्।

यदपि मन्यते—"प्रतिघाताद्भौतिकानीन्द्रियाणि, अप्रतिघाताद्भौतिकानीति प्राप्तम् । दृष्टश्चाप्रतिघातः काचाभ्रपटलस्फटिकान्तरितोपलब्धेः"—तन्न युक्तम् । कस्मात् ? यस्माद्भौतिकमपि न प्रतिहन्यते । काचाभ्रपटलस्फटिकान्तरितप्रकाशात् प्रदीपरश्मीनाम् । स्थाल्यादिषु पाचकस्य तेजसोऽप्रतिघातः ॥ ३९ ॥

( भा० ) उपपद्यते चानुपलब्धिः कारणभेदात्—

**( सू० ) मध्यन्दिनोल्काप्रकाशानुपलब्धिवत्तदनुपलब्धिः ॥ ४० ॥**

( भा० ) यथाऽनेकद्रव्येण समवायाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे माध्यन्दिनोल्काप्रकाशो नोपलभ्यते

---

नु काचाभ्रस्फटिकादावप्रतिघातदर्शनात् चक्षुरादिकमभौतिकमेवास्त्विति चेत्तत्राह **अप्रतिघातस्त्विति** । तथाचाप्रतिघातस्य भौतिकेऽपि वर्तमानत्वान्नाभौतिकत्वसाधक इत्यर्थः । पूर्वपक्ष्याशयं प्रकटीकृत्य दूषयति **यदपीत्यादिना न युक्तमित्यन्तेन** । व्यभिचारं दर्शयति **यस्माद्भौतिकमपि न प्रतिहन्यते इति** । प्रकाश्यदेशं गच्छतीत्यर्थः । कथमित्यत आह **काचेति** । प्रकाशात्प्रकाशकत्वात् प्रदीपरश्मीनामित्यन्वयः । पाचकस्य विक्लित्तिजनकस्य तेजसो वन्ह्यादेः अप्रतिघातो गतिः पचनीयद्रव्यसंयोग एव ॥ ३९ ॥

तर्हि तद्गतं कुतो न दृश्यत इत्यत आह **कारणभेदादिति** । कारणभेदः कारणविशेषः रूपस्याऽनुद्भूतत्वम् । इममर्थं दृष्टान्तेन समर्थयति **मध्यन्दिनेत्यादि सूत्रम्** । दिनस्य मध्यं मध्यन्दिनं तस्मिन् विद्यमाना उल्का **पाकनक्षत्रं** मध्यन्दिनोल्का त-

(भा०)आदित्यप्रकाशेनाभिभूतः । एवं महदनेकद्रव्यवत्त्वाद्रूपविशेषाच्चोपलब्धिरिति सत्युपलब्धिकारणे चाक्षुषो रश्मिर्नोपलभ्यते निमित्तान्तरतः । तच्च व्याख्यातमनुद्भूतरूपस्पर्शस्य द्रव्यस्य प्रत्यक्षतोऽनुपलब्धिरित्यत्यन्तानुपलब्धिश्चाभावकारणम् ॥४०॥

( भा० ) यो हि ब्रवीति–"लोष्टप्रकाशो मध्यन्दिने आदित्यप्रकाशाभिभवान्नोपलभ्यते" इति, तस्यैतत्स्यात्–

( सू० ) न, रात्रावप्यनुपलब्धेः ॥ ४१ ॥

( भा० ) अप्यनुमानतोऽनुपलब्धेरिति । एवमत्यन्तानुपलब्धेर्लोष्टप्रकाशो नास्ति । न त्वेवं चक्षुषो रश्मिरिति ॥ ४१ ॥

(ख०) तच्चेति–निमित्तान्तरमिति यावत् । व्याख्यातमिति–अनेकद्रव्यसमवायादिति सूत्रभाष्ये ।

न रात्राविति सूत्रम् । स्यादेतत्–आदित्यप्रकाशाभिभवा-

(भा०चं०)स्याः प्रकाशो दीप्तिः । प्रभा रूपविशेषो वा । तस्या अनुपलब्धिः चक्षुषाऽप्रतीतिः । तद्वत् सा यथेत्यर्थः । अनेकद्रव्येणेति सहार्थे तृतीया न कर्तरि । न ह्यनेकद्रव्यं स्वावयविनं समवैति अपि तु स एव तत्समवैतीति । गत्यर्थत्वात्सकर्मकोऽयं समवैतिः । तर्हि कथं घटरूपं समवेतं कपाले घटः समवेत इति चेद्विवक्षात इति पश्य । यथा ग्रामे गच्छतीति । उपलब्धिरवयविन इति शेषः । इतीत्यस्य उपलब्धिकारणेऽन्वयः । निमित्तान्तरतः रूपस्याऽनुद्भूतेः । प्रत्यक्षतोऽनुपलब्धेर्मास्तु धर्मीत्यत आह अत्यन्तेत्यादि । अत्यन्तानुपलब्धिर्नाम केनापि प्रमाणेनानुपलब्धिः । अभावकारणं धर्म्यसत्त्वज्ञापकं ॥ ४० ॥

लोष्टप्रकाशो लोष्टप्रभा । यो हीत्यादेर्भाष्यस्यायमाशयः । चाक्षुषरश्मेरपि प्रकाशोऽस्तु अभिभवान्नोपलभ्यते इत्युक्ते सति लोष्टादावप्येवं प्रकाशोऽङ्गीकार्य इत्यापादिते इष्टापत्तावेतत्स्यादिति । एतद्वक्ष्यमाणम् ।

( भा० ) उपपन्नरूपा चेयम्—

( सू० ) बाह्यप्रकाशानुग्रहाद् विषयोपलब्धेरनभिव्यक्तितोऽनुपलब्धिः ॥ ४२ ॥

( भा० )बाह्येन प्रकाशेनानुगृहीतं चक्षुर्विषयग्राहकम् । तदभावेऽनुपलब्धिः । सति च प्रकाशानुग्रहे शीतस्पर्शोपलब्धौ च सत्यां तदाश्रयस्य द्रव्यस्य चक्षुषाऽग्रहणं रूपस्यानुद्भूतत्वात् । सेयं रूपानभिव्यक्तितो रूपाश्रयस्य द्रव्यस्यानुपलब्धिर्दृष्टा । तत्र यदुक्तं 'तदनुपलब्धेरहेतुः' इत्येतदयुक्तम् ॥ ४२ ॥

( भा० ) कस्मात्पुनरभिभवोऽनुपलब्धिकारणं चाक्षुषस्य रश्मेर्नोच्यत इति ?—

---

(ख०)न्मध्यन्दिनोल्काप्रकाशानुपलब्धिरिति यदुक्तं तदयुक्तम् । तथा सति सर्वपदार्थानां रश्मिवत्त्वप्रसङ्गात् । एवं सति सर्वं लोष्टादिरश्मिवत् प्राप्नोति । लोष्टादिरश्मयः कस्मान्नोपलभ्यन्ते—इत्युक्तो ब्रूयात्—आदित्यरश्म्यभावादिति—एतस्यैवोत्तररूपमेतत् सूत्रम् ।

बाह्यप्रकाशेति सूत्रम् दृष्टान्तोपन्यासरूपम् । यद्यत् बाह्य-

---

(भा०चं०)न रात्रावित्यादि सूत्रम् । व्याचष्टे अपीत्यादि । अनुमानतोऽपीति योजना । सूत्रस्थापिशब्दव्याख्यानं तस्य च लोष्टप्रकाशस्यानुमानतोऽप्यनुपलब्धिरित्यर्थः । शेषं स्पष्टम् ॥ ४१ ॥

चक्षुष्यनुपलब्धिमुपपादयितुमाह उपपन्नेति । उपपन्नरूपा प्रमाणसिद्धस्वरूपा । इयं चक्षुषि चाक्षुषा । बाह्येत्यादिसूत्रम् । सूत्रेऽनुग्रहादितिपदं ल्यब्लोपपञ्चम्यन्तं हेतुपञ्चम्यन्तं वा । हेतुश्चात्र सहकारिकारणमेव । व्याचष्टे बाह्येनेति । रूपानभिव्यक्तिः रूपस्याऽनुद्भूतत्वं । करणप्रत्ययान्तेनेह नञ्समासः ॥ ४२ ॥

( सू० ) अभिव्यक्तौ चाभिभवात् ॥ ४३ ॥

( भा० ) बाह्यप्रकाशानुग्रहनिरपेक्षतायां चेति चार्थः । यद्रूपमभिव्यक्तमुद्भूतं बाह्यप्रकाशानुग्रहं च नापेक्षते तद्विषयोऽभिभवो विपर्ययेऽभिभवाभावात् । अनुद्भूतरूपत्वाच्चानुपलभ्यमानं बाह्यप्रकाशानुग्रहाच्चोपलभ्यमानं नाभिभूयत इति । एवमुपपन्नमस्ति चाक्षुषो रश्मिरिति ॥ ४२ ॥

---

(ख०)प्रकाशमपेक्षते तस्य तस्यानुपलब्धी रूपानभिव्यक्तित एव न पुनरभिभवात् । स्वोपलब्धौ बाह्यप्रकाशमनपेक्षमाणानामेवानुपलब्धिराभिभवाद् भवति यथा दिवसे तारकाणाम् । विषक्तावयवस्याप्यद्रव्यस्याकाशवर्तिनो यदनुपलब्धिस्तत्तद्रूपस्यानभिव्यक्तेरेव, आप्यद्रव्याणां स्वग्रहणे बाह्यप्रकाशापेक्षत्वात् । एवमेव चाक्षुषस्यापि रश्मेः स्वग्रहणे बाह्यप्रकाशापेक्षत्वात् तस्याप्यनुलब्धिस्तद्रूपानभिव्यक्तेरेव स्यान्न पुनरभिभवात् इति हृदयम् ।

---

(भा०चं०)चाक्षुषरश्मेरुद्भूतरूपमस्ति अभिभवान्नोपलभ्यते इत्यतः सूत्रम वतारयति **कस्मादित्यादिना । अभीत्यादि सूत्रम् ।** अभिव्यक्ताविति सप्तमी । चार्थमाह **बाह्येति** । अभिव्यक्तमुद्भूतमिति व्याख्येयव्याख्यानम्(१) । तद्विषयः नक्षत्रादिरूपविषयः । बहुव्रीहिरयं विषयः कर्म । विपर्यये चक्षुर्लोष्टादौ । अनुपलभ्यमानं चक्षुषाऽदृश्यमानम् । एवमुक्तप्रकारैः उपपन्नं प्रतिपन्नम् । अस्ति स्वरूपवान् ॥ ४२ ॥

---

( टि० ) १ व्याख्येयभाष्यस्य व्याख्यानमित्यर्थः ।

( सू० ) नक्तञ्चरनयनरश्मिदर्शनाच्च ॥ ४४ ॥

( भा० ) दृश्यन्ते हि नक्तं नयनरश्मयो नक्तञ्चराणां वृषदंशप्रभृतीनाम् । तेन शेषस्यानुमानमिति ।

"जातिभेदवदिन्द्रियभेद इति चेत्" धर्मभेदमात्रं चानुपपन्नमावरणस्य प्राप्तिप्रतिषेधार्थस्य दर्शनादिति ॥ ४४ ॥

---

(ख०) वृषदंशेति । वृषदंशगोलकसंयोगि अन्यदेव तेजः प्रत्यक्षं नतु तदिन्द्रियम्-इन्द्रियस्यातीन्द्रियत्वात् । इन्द्रियलक्षणे रूपशब्दातिरिक्तोद्भूतविशेषगुणशून्येति विशेषणपक्षेऽपि नोक्तस्य तेजस इन्द्रियत्वम्, गोलकात्तद्विषयपर्यन्तं तद्दर्शनप्रसङ्गात्—इन्द्रियाणां प्राप्यकारित्वनियमादिति विचारणीयम् ।

अनुमानमिति । अनुमानप्रकारा यथा—

(१)विप्रतिपत्तिविषयः कृष्णसारं रश्मिवत्—द्रव्यत्वे सति रूपोपलब्धौ नियतस्य साधनस्य निमित्तत्वात्—प्रदीपवदिति ॥ (२)अथवा—रश्मिवच्चक्षुः—द्रव्यत्वे सति नियतत्वे सति स्फटिकादिव्यवहितार्थप्रकाशकत्वात्—प्रदीपवदिति ॥ अथवा(३) मानुषं चक्षू रश्मिवत्- अप्राप्तिस्वभावत्वे सति रूपाद्युपलब्धिनिमित्तत्वात्—नक्तञ्चरचक्षुर्वदिति ॥

जातिभेदवदिति । यथा बिडालत्वं जातिर्वृषदंशे वर्तते न मनु-

---

(भा०चं०) नक्तमित्यादि सूत्रम् । व्याचष्ट दृश्यन्ते चेति । वृषदंशो मार्जारः वृषदंशः प्रभृतिरादिर्येषां व्याघ्रादीनां ते तेषां । शेषस्य मनुष्यादिनेत्रस्य । अनुमानं तैजसत्वानुमानं । शङ्कते जातीत्यादिना । जातिभेदो मनुष्यमार्जारादिः स यथा तथा इन्द्रियविशेषोऽपि ।

(भा०) "इन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वानुपपत्तिः । कस्मात् ?—

(सू०) "अप्राप्य ग्रहणं काचाभ्रपटलस्फटिकान्तरितोपलब्धेः" ॥ ४५ ॥

(भा०) "तृणादि सर्पद् द्रव्यं काचेऽभ्रपटले वा प्रतिहतं दृष्ट-

---

(ख०) ष्ये—एवं बिडालस्यैव चक्षू रश्मिवद् भविष्यति न मानुषस्येति शङ्ककहृदयम् । तत्परिहारो धर्मभेदमात्रमिति । वृषदंशनेत्रस्य रश्मिवत्त्वं धर्मो मनुष्यनेत्रस्य तु न तत्त्वमिति योऽयं धर्मभेदः सोऽनुपपन्न एव । अनुपपत्तौ हेतुः—आवरणस्येति । सत्यपि जातिभेदे यथा वृषदंशप्रभृतीनां रश्मयः कुड्यादिभिराव्रियन्ते तथा मनुष्याणामपीति समानमेवेति भावः ॥

---

(भा०चं०) तथाच मनुष्यादेर्न तैजसं चक्षुरिति भावः । इदं दूषयति **धर्मभेदमात्रं चेति** । धर्ममात्रभेदः कदाप्युपलभ्यमानस्वरूपकत्वं कदाप्यनुपलभ्यमानत्वञ्चेति । यथा सूर्याचन्द्रमसोरुष्णस्पर्शशीतस्पर्शरूपधर्मवतोरपि न जातिभेदस्तथा चक्षुषोऽपीति भावः ॥ ४४ ॥

एवं तैजसत्वे साधिते विषयदेशप्राप्यकारित्वपक्षमवतारयति **आवरणस्येत्यादिना** । आवरणस्य कुड्यादेः आव्रियतेऽनेनेति व्युत्पत्तेः । आवृणोतीति वा व्युत्पत्तेः । नन्द्यादित्वाल्ल्युः । भावसाधने प्राप्तिप्रतिषेधार्थस्येति वचनानुपपत्तिः । तस्य प्रतिषेधमात्ररूपपरत्वात् । कारणत्वानुपपत्तीरित्यस्यायमर्थः । **कृतित्वानुपपत्तिरिति** । **अप्राप्येत्यादिसूत्रम्** । गृह्यतेऽनेनेति ग्रहणं । चाक्षुषज्ञानकरणं चक्षुरादि ।

(भा०)मव्यवहितेन सन्निकृष्यते व्याहन्यते वै प्राप्तिर्व्यवधानेनेति। यदि च रश्म्यर्थसन्निकर्षो ग्रहणहेतुः स्याद् न व्यवहितस्य सन्निकर्ष इत्यग्रहणं स्यात्। अस्ति चेयं काचाभ्रपटलस्फटिकान्तरितोपलब्धिः। सा ज्ञापयत्यप्राप्यकारीणीन्द्रियाणि। अत एवाभौतिकानि। प्राप्यकारित्वं हि भौतिकधर्म इति" ॥ ४५ ॥

(सू०) कुड्यान्तरितानुपलब्धेरप्रातिषेधः ॥४६॥

---

(ख०) सन्निकृष्यत इति—काचं निर्भिद्य काचान्तर्गतेनार्थेन सम्बध्यत इत्यर्थः।

---

(भा०चं०) प्राप्येति तत्र विशेषणं पुरुषे राजवत्। अप्राप्यस्य अप्राप्तस्य। ग्रहणकर [illegible]मित्यर्थः। तथा च चक्षुरादि पक्षीकृत्य अप्राप्यग्रहणमिति साध्यं बोध्यम्। काचाभ्रेत्यादिहेतुः(१)। व्याचष्टे **तृणेत्यादिना**। सर्पतः गच्छतः। सृप्लृ गतौ। प्रतिहतं निरुद्धगतिकं। दृष्टं चक्षुषैवेत्यर्थः। सन्निकृष्यत इति कर्मकर्त्तरि प्रयोगः। व्याहन्यते प्रतिबध्यते। प्राप्तिरुत्तरसंयोगः व्यवधानेन व्यवधायकेन कुड्यादिना सर्वत इति शेषः। ग्रहणहेतुः ग्रहणे हेतुर्व्यापारविधया कारकविधया वा। न सन्निकर्ष इत्यन्वयः। तस्य च सान्निकर्षो नास्तीत्यर्थः। अप्राप्यकारीणि अप्राप्यज्ञापनशीलानीत्यर्थः। अत एव अगतिपूर्वकज्ञापनशीलत्वादेव। अभौतिकानि विभुत्वात्। भौतिकधर्मः भौतिकस्य कारणकूटादेर्धर्मो दृष्टः ॥ ४५ ॥

दूषणमिदमुद्धरति **कुड्येत्यादिसूत्रम्**। अयं हेतुरप्रतिषेधः प्रतिषेधासमर्थः करणघञन्तेन नञ् समासः। अस्मिन्साध्ये पूर्वपदार्थो

---

(टि०)१ चक्षुरप्राप्तग्रहणकारणं, काचाभ्रपटलस्फटिकान्तरितोपलब्धिजनकत्वादित्ययमनुमानप्रयोगः।

(भा०) अप्राप्यकारित्वे सतीन्द्रियाणां कुड्यान्तरितस्यानुपलब्धिर्न स्यात् ॥ ४६ ॥

(भा०) "प्राप्यकारित्वेऽपि तु काचाभ्रपटलस्फटिकान्तरितोपलब्धिर्न स्यात्"।

(सू०) अप्रतिघातात्सन्निकर्षोपपत्तिः ॥ ४७ ॥

(भा०) न च काचोऽभ्रपटलं वा नयनरश्मिं विष्टभ्नाति। सोऽप्रतिहन्यमानः सन्निकृष्यत इति ॥ ४७ ॥

(भा०) यश्च मन्यते "न भौतिकस्याप्रतिघात" इति, तन्न—

(सू०) आदित्यरश्मेः स्फटिकान्तरितेऽपि दाह्येऽविघातात् ॥ ४८ ॥

---

(ख०) आदित्यरश्मेरिति सूत्रम्। भाष्यमेतेनात्र तिस्र उक्तयः—

---

(भा०चं०) हेतुः। व्याचष्टे **अप्राप्येत्यादिना**। सति प्रमीयमाणे कुड्यान्तरितमपि गृह्णीयादिति भावः ॥ ४६ ॥

अप्राप्यकारिवादी प्रत्यवतिष्ठते **प्राप्येत्यादिना**। तन्निरासाय सूत्रमिदं **अप्रतिघातादित्यादि**। अप्रतिघातो गत्यनिरोधः प्राप्तिरेव व्यापाररूपा तस्मात् सन्निकर्षोत्पत्तिः फलरूपप्राप्त्युपपत्तिः। तद्व्याचष्टे **न चेति**। विष्टभ्नाति गच्छन्तं प्रतिवध्नाति स हि नयनरश्मिर्हि अप्रतिहन्यमानः अप्रतिहतवर्तमानकृतिकः सन्निकृष्यते स्वयमेव सन्निकर्षं करोति तेजःस्वाभाव्यात् ॥ ४७ ॥

भौतिकस्याप्रतिघातो नास्तीति यन्न मन्यते तन्निषेधाय सूत्रम् **आदित्येत्यादि**। यश्च न मन्यत इति भाष्यस्य इतीत्यवयवार्थेन समन्वयः।

( भा० ) आदित्यरश्मेरविघातात्—स्फटिकान्तरितेऽप्यविघातात्–दाह्येऽविघातात् । अविघातादिति च पदाभिसम्बन्धाद्वाक्यभेद इति । यथावाक्यं चार्थभेद इति । आदित्यरश्मिः कुम्भादिषु न प्रतिहन्यतेऽविघातात् । कुम्भस्थमुदकं तपति । प्राप्तौ हि द्रव्यान्तरगुणस्य उष्णस्य स्पर्शस्य ग्रहणं तेन च शीतस्पर्शाभिभव इति । स्फटिकान्तरितेऽपि प्रकाशनीये प्रदीपरश्मीनामप्रतिघातः । अप्रतिघातात्प्राप्तस्य ग्रहणमिति । भर्जनकपालादिस्थं च द्रव्यमाग्नेयेन तेजसा दह्यते । तत्राविघातात्प्राप्तिः ।प्राप्तौ तु दाहः। नाप्राप्यकारि तेज इति ।

---

(ख०)(१)आदित्यरश्मेरविघातः (२)स्फटिकान्तरितेऽविघातः, (३)दाह्येऽविघातः ॥ किन्तु स्फटिकान्तरितेऽपि दाह्ये आदित्यरश्मेरविघात इत्येकैवोक्तिरत्रेत्येव समीचीनं प्रतिभाति । स्फटिकान्तरितैरप्यादित्यरश्मिभिस्तूलकादिकं दह्यत एवेति सूत्रकारस्य हृद्गतो भाव इव भासते।

---

(भा०चं०) सूत्रमिदं वाक्यभेदेन व्याचष्टे **नादित्येत्यादि** । त्वदभिमतं नेति साध्यम् आदित्यरश्मेरविघातादित्यादयो हेतवः । चण्डातपस्थे मुद्रितमुखे जलपूरितकुम्भेऽविघातादविघातदर्शनात् तपति उष्णं करोति स्वोष्णगुणं शीतगुणमभिभूय ज्ञापयतीत्यर्थः । तदसंयोगेन संभवतीत्याह **प्राप्तौ हीति** । तेन उष्णस्पर्शग्रहणेन शीतस्पर्शाभिभवः शीतस्पर्शाग्रहणं । द्वितीयं हेतुं व्याचष्टे **स्फटिकेत्यादि** । प्रकाशनीये प्रज्ञापनीये जपाकुसुमादौ । प्राप्तस्य संयुक्तस्य ग्रहणं प्रदीपरश्मीनामित्यन्वयः। अत्र प्राप्तस्य रश्मीनां ग्रहणमिति षष्ठी शेषे रश्मिभिः प्राप्तस्य ग्रहणमित्यर्थः । पुरुषेणेति शेषः । तृतीयहेतुं व्याचष्टे **भर्जनेत्यादिना** । अग्निंगनोद्भूतरूपवता उद्भूतरूपस्थेनाऽनुद्भूतरूपेण तेजसेत्यर्थः । यथा उद्भूततेजःस्थमनुद्भूतरूपं तेजो वर्तते एवमनुद्भूत-

(भा०)अविघातादिति च केवलं पदमुपादीयते। कोऽयमविघातो नाम ? अव्यूह्यमानावयवेन व्यवधायकेन द्रव्येण सर्वतो द्रव्यस्याविष्टम्भः—क्रियाहेतोरप्रतिबन्धः—प्राप्तेरप्रतिषेध इति। दृष्टं हि कलशनिषक्तानामपां वहिः शीतस्पर्शस्य ग्रहणम्। न चेन्द्रियेणासन्निकृष्टस्य द्रव्यस्य स्पर्शोपलब्धिः। दृष्टौ च प्रस्पन्दपरिस्रवौ।

---

(ख०) अव्यूह्यमानावयवेनेति। यस्य द्रव्यस्य भर्जनकपालादेः अवयवा न व्यूह्यन्ते—पूर्वोत्पन्नद्रव्यारम्भकसंयोगनाशेन द्रव्यान्तरजनकसंयोगोत्पादनं 'व्यूहनम्'—तन्न क्रियते—तस्य द्रव्यस्य भर्जनकपालादेः अन्तरावयवैः योऽभिसम्बन्धो वह्नेः, स एव 'अप्रतिघातः'। एतदुक्तं भवति—सान्तरत्वादवयविद्रव्याणां तदविनाशेनाग्नेर्योऽनुप्रवेशः स 'अप्रातिघातः'।

प्रवेशेऽप्रतिघातमुक्त्वा निस्सरणेऽप्यविघातम्प्रदर्शयितुमाह—दृष्टं हीति। घटस्थं जलं यदा परितप्यते तदा घटच्छिद्रद्वारा निस्सृत्य घर्मरश्मयोऽभ्यन्तरस्थं जलं तापयन्ति। तत्रापि घटस्य नाशो न भवति।

दृष्टाविति। एतदपि सूचयति यत् जलनिस्सरणादपि घटनाशो

---

(भा०चं०) रूपतेजःस्थमपि उद्भूततेजःपरमाणवः सन्तीति ज्ञेयम्। तप्ततैलादावार्द्रद्रव्यसंयोगे तत्कार्यदर्शनात्। अत्र कारीत्यत्र कृञर्थो दाह एव। दाहादयो हि उत्पादनविशेषाः तथा संकेतशास्त्रे दर्शनात्। दह भस्मीकरण इति।

अविशेषितहेतुमुपादत्ते चतुर्थम**विघातादिति**। केवलं विशेषणशून्यम्। अव्यूह्यमानावयवेन वियोक्तुमशक्यावयवेन। सर्वतो गच्छतः अविष्टम्भः गतेरप्रतिबन्धः। तदिदमाह **क्रियाहेतोरिति**। क्रिया प्राप्यप्राप्तिः तस्या हेतुर्व्यापाररूपा गतिः तस्या अप्रतिबन्ध इति प्राप्तेरप्रतिषेध इति योजना। दृष्टान्तमाह **दृष्टं हीति**।

(भा०)तत्र काचाभ्रपटलादिभिर्नायनरश्मेरप्रतिघाताद्विभिद्यार्थेन सह सन्निकर्षादुपपन्नं ग्रहणमिति ॥ ४८ ॥

( सू० ) "नेतरेतरधर्मप्रसङ्गात्" ॥ ४९ ॥

( भा० )"काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातः, कुड्यादिवद्वा काचाभ्रपटलादिभिः प्रतिघात इति प्रसज्यते । नियमे कारणं वाच्यमिति" । ४९ ॥

( सू० ) आदर्शोदकयोः प्रसादस्वाभाव्याद्रूपोपलब्धिवत्तदुपलब्धिः ॥ ५० ॥

(भा०)आदर्शोदकयोः प्रसादो रूपविशेषः स्वो धर्मो नियम-

---

(ख०) न भवतीति ।

रूपविशेष इति । स च द्रव्यान्तरसंयुक्तसमवाय एव, तस्य वा रूपोपलम्भनसामर्थ्यम् । तस्य या विद्यमानता उदकादिषु तदेव

---

(भा०चं०) इन्द्रियाणां त्वगादीनामसन्निकृष्टस्याप्राप्तस्य इन्द्रियैरप्राप्तस्येत्यर्थः । स्पर्शोपलब्धिः कार्येति शेषः । प्रस्पन्दः अन्तःस्थितस्य द्रवद्रव्यस्य जलघृततैलादेर्बहिःसरणं, परिस्रवः परितः सूक्ष्मरन्ध्रैः क्षरणं । सरन्ध्रे कलशादौ सावयवाः सर्वे सूक्ष्मतमान्तररन्ध्रवन्त एव जलतेजोवायूनां गमनाप्रतिबन्धकाः । विचित्रशक्तीनि हि द्रव्याणि । तत्रेत्यादि भाष्यं स्पष्टम् ॥ ४८ ॥

**नेतरेतरेत्यादिसूत्रं** पूर्वपक्षाय व्याचष्टे **काचेत्यादिना** । आदिशब्देन गम्भीरजलादिसङ्ग्रहः । अप्रतिघातः प्रसज्यत इत्यनेनान्वयः । प्रसज्यते आपद्यते । नियमे कारणं ज्ञापकं वाच्यमित्यर्थः । नियमेनेति पाठे नियमप्रयुक्तं वाच्यमित्यर्थः । नियमप्रयुक्तं ज्ञापकवचनं कार्यमिति यावत् ॥ ४९ ॥

उच्यत इत्याह **आदर्शेत्यादि सूत्रम्** । प्रसादो रूपविशेषः

(भा०)मदर्शनात् । प्रसादस्य वा स्वो धर्मो रूपोपलम्भनम् । यथाऽऽदर्शप्रतिहतस्य परावृत्तस्य नयनरश्मेः स्वेन मुखेन सन्निकर्षे सति स्वमुखोपलम्भनं प्रतिविम्बग्रहणाख्यमादर्शरूपानुग्रहात्तन्निमित्तं भवति—आदर्शोपघाते तदभावात् कुड्यादिषु च प्रतिविम्बग्रहणं न भवति—एवं काचाभ्रपटलादिभिराविघातश्चक्षूरश्मेः कुड्यादिभिश्च प्रतिघातो द्रव्यस्वभावनियमादिति ॥५०॥

(सू०) दृष्टानुमितानां नियोगप्रतिषेधानुपपत्तिः ॥ ५१ ॥

(भा०) प्रमाणस्य तत्त्वविषयत्वात् । न खलु भोः परीक्षमाणेन दृष्टानुमिता अर्थाः शक्या नियोक्तुमेवं भवतेति–नापि प्रतिषेद्धुमेवं न भवतेति । न हीदमुपपद्यते रूपवद्गन्धोऽपि चाक्षुषो भवत्विति-गन्धवद्वा रूपं चाक्षुषं मा भूदिति–अग्निप्रतिपत्तिवद्धूमेनोदकप्रतिपत्तिरपि भवत्विति–उदकाप्रतिपत्तिवद्वा धूमेनाग्निप्रतिपत्तिरपि मा भूदिति । किं कारणम् ? यथा खल्वर्था भवन्ति य एषां स्वो भावः स्वो धर्म इति तथाभूताः प्रमाणेन प्रति-

(ख०)स्वाभाव्यम् ॥

(भा०चं०) शुक्लस्वरूपवस्तुविशेषः । रूपोपलम्भनं प्रतिविम्बग्राहकत्वं न तु वृक्षपाषाणादेः द्रव्यस्वभावनियमादिति स्वाभाव्यपदव्याख्यानम् ॥५०॥

प्रमाणसिद्धस्यानुयोगो(१)ऽनुचित इत्याह **दृष्टेत्यादिसूत्रम्** । तादिदं व्याचष्टे **प्रमाणस्येति** । तत्त्वविषयत्वात् यथावास्थितवस्तुविषयत्वात् । भो इत्युपहाससंबोधनं । परीक्षमाणेन परीक्षाप्रवृत्तेन । दृष्टानुमिताः। प्रत्यक्षानुमानविषयाः । अर्था अबाधिताः शक्याः न्याय्या इत्यर्थः न खलु नियोक्तुं शक्या इत्यन्वयः । नियोगप्रकारमाह **एवं भवतेति** । यूयमित्यध्याहृत्यान्वयः । **नापि प्रतिषेद्धुमित्यादि**

(टि०) १ अनुयोग इति प्रतिषेधस्याप्युपलक्षणम् ।

(भा०)पद्यन्त इति । तथाभूतविषयकं हि प्रमाणमिति । इमौ खलु नियोगप्रतिषेधौ भवता देशितौ–काचाभ्रपटलादिवद्वा कुड्यादिभिरप्रतिघातो भवतु कुड्यादिवद्वा काचाभ्रपटलादिभिरप्रतिघातो मा भूदिति । न । दृष्टानुमिताः खल्विमे द्रव्यधर्माः । प्रतिघाताप्रतिघातयोर्ह्युपलब्ध्यनुपलब्धी व्यवस्थापिके । व्यवहितानुपलब्ध्याऽनुमीयते कुड्यादिभिः प्रतिघातः । व्यवहितोपलब्ध्याऽनुमीयते काचाभ्रपटलादिभिरप्रतिघात इति ॥ ५१ ॥

(८) इन्द्रियनानात्वप्रकरणम् ।

(भा०) अथापि खल्वेकमिदमिन्द्रियं बहूनीन्द्रियाणि वा कुतः संशयः ?—

(सू०) स्थानान्यत्वे नानात्वादवयविनाना-

(ख०) एवं भौतिकत्वं प्राप्यकारित्वं चेन्द्रियाणां प्रसाध्येन्द्रियनानात्वप्रकरणमारम्भणीयम् । तस्य चोपोद्घातादवतारः । नानात्वासिद्धौ हि भौतिकत्वन्न सिध्येत्—तदसिद्धौ च न प्राप्यकारित्वम् । एकत्वे हि रूपादिषु मध्ये नियमेन रूपस्य प्रकाशकत्वादित्यादीनाम्भौतिकत्वसाधकानामसिद्धिः स्यादिति । तथाच न प्राप्यकारित्वमत्र सिध्येत्, तस्य भूतधर्मत्वादिति । प्रयोजनं चास्य—इन्द्रियनानात्वसिद्धौ सत्यां दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्यादिभिरिन्द्रियातिरिक्तात्मासिद्धिः, अन्यथेन्द्रियमेवैकत्वात्सर्वं प्रतिसन्दधीतेत्यादि परिशुद्धौ स्पष्टम् ॥

स्थानान्यत्व इति सूत्रम् । केचिदिदं सूत्रं भाष्यमतानपेक्षं यथा-

(भा०चं०) प्रकारणसमाप्त्यन्तं भाष्यं स्पष्टम् ॥ ५१ ॥

इति श्रीभाष्यचन्द्रे इन्द्रियभौतिकत्वप्रकरणभाष्यचन्द्रिका ।

(१)प्रकरणान्तरमारभते अथेति । अथेति प्रश्ने कात्स्न्र्ये वा । सकल-

(टि०) १ इन्द्रियैकत्वानेकत्वप्रकरणमित्यर्थः

( सू० ) स्थानत्वाच्च संशयः ॥ ५२ ॥

( भा० ) बहूनि द्रव्याणि नानास्थानानि दृश्यन्ते। नाना-

(ख०)श्रुति व्याचक्षते । स्थानान्यत्वे नानात्वं दृष्टम्—यथा बहूनां घटानामिति, एकस्य च नानास्थानत्वम्-यथाऽवयविन इति ॥

तदेतदसमञ्जसमिति वार्तिकतात्पर्ययोः स्पष्टम्। 'स्थानान्यत्वं' च स्थानस्य अन्यत्वमुच्यते—'नानास्थानत्वं' च नाना स्थानानि यस्येत्य-न्यपदार्थः 'स्थानान्यत्वात्' अन्यः। संशयकारणं चैक एव धर्मो, न धर्मद्वयमित्येकतरस्यैकानेकसाधारणं वाच्यम्। तत्र (१)यदि तावदेवं संशयः क्रियते—स्थानान्यत्वे नानात्वैकत्वदर्शनात् संशय इति तदा सूत्रार्थालोचनेनैकत्वे स्थानान्यत्वस्यादर्शनात् न समानधर्मः। सूत्रं खल्वेकत्वे नानास्थानत्वमाह, न स्थानान्यत्वमात्रम्। अनेकत्वमात्रे हि स्थानान्यत्वमुक्तं सूत्रकारेण—'स्थानान्यत्वे नानात्वादिति' ॥ (२)अथ नानास्थानत्वे सत्येकत्वानकत्वे दर्शनात्संशय इति संशयः क्रियते तदा द्रव्यं नानास्थानमनेकं किञ्चिद् दृष्टमिति न समानधर्मत्वम्। 'अवयविनाना-स्थानत्वादिति' सूत्रं नानास्थानत्वेनैकत्वमाह न तु नानात्वमपि। यत्तु पुनर्घटाद्यनेकम्, न तन्नानास्थानमुक्तं सूत्रकृता, अपि तु स्थानान्यत्व-मेव—'स्थानान्यत्वे नानात्वात्' इत्यनेनेति ॥

वर्धमानोपाध्यायाश्चारुचिबीजमन्यथा वर्णितवन्तः। सूत्राक्षरानु-सारेण स्थानान्यत्वेन नानात्वसूचनमुद्भावितम्—न पुनरेकत्वम्—ए-कत्वं च संशयबीजम्। नानास्थानत्वादप्येकत्वं द्वितीयसूत्रांशेन सूचितम्—तत्र च नानात्वन्नोद्भावितम्। उभयत्रापि संशयबीजमनुक्त-मेव वर्तत इति ॥

---

(भा०चं०)मिन्द्रियमिदमनेकमेकं वेति संशयः। हेतुं पृच्छति कुत इति। स्थानेत्यादिसूत्रम् हेतुप्रकाशकम्। स्थानान्यत्व इति निमित्तसप्तमी।

(भा०)स्थानश्च सन्नेकोऽवयवी चेति। तेनेन्द्रियेषु भिन्नस्थानेषु संशय इति ॥ ५२ ॥

( भा० ) "एकमिन्द्रियम्–

---

(ख०) एवं सूत्रं यथाश्रुतमसम्बद्धं ज्ञात्वा तच्छब्दगतिमवधीर्यार्थगत्यैव व्याख्यातवान् भाष्यकारः।

सूत्रार्थस्तु स्पष्ट एव—यदा वस्तूनि नानास्थानमधितिष्ठान्ति तदा तान्यपि नानैव भवन्ति, यथा घटपटौ। एकमेव च वस्तु नानास्थानान्यधितिष्ठत् दृष्टम्—यथा नानावयवेष्वेक एवावयवी। एवं च यदा वयमिन्द्रियाणि नानास्थानान्यधितिष्ठन्ति पश्यामस्तदा जायते संशयः—किमेतानि घटपटवन्नाना—उतावयविवदेकमेवेति ॥

भिन्नस्थानेष्विति। अत्र नानास्थानत्वानिमित्त इन्द्रियेष्वेकानेकत्वसंशयः।

एकमिन्द्रियमिति पूर्वपक्षः। तदुद्भावकं सूत्रम्—त्वगव्यतिरेकादिति।

---

(भा०चं०)स्थानानि अन्यानि यस्य तस्य तत्तथा तस्य भावः स्थानान्यत्वम्अनेकस्थानास्थितैकत्वमित्यर्थः। तेन नानात्वात् तज्ज्ञापितनानात्वादित्यर्थः। अवयविन एकस्य नानास्थानत्वान्नानावयवाधारकत्वाच्च एकत्वं तथा च हेतुद्वयेन एकत्वमनेकत्वञ्च कोटिद्वयं संशयस्थानमुपस्थापितम्(१)। व्याचष्टे बहूनीति। अवयवी दृश्यत इत्येकवचनान्तस्यानुषङ्गः॥५२॥

पूर्वपक्षं गृह्णाति एकमिन्द्रियमिति। त्वगित्यादिहेतु-

---

( टि० ) १ नानास्थानत्वनिमित्तको इन्द्रियेषु एकत्वानेकत्वसंशयो युक्तः नानास्थानं खल्वेकमवयविद्रव्यं दृष्टमनेकञ्च=सूत्रेपि स्थानान्यत्वे इत्यनेन नानास्थानत्वमेवोपलक्षणीयम्।

( सू० ) "त्वगव्यतिरेकात्" ॥ ५२ ॥

( भा० ) त्वगेकमिन्द्रियमित्याह । कस्मात् ? अव्यतिरेकात् । न त्वचा किञ्चिदिन्द्रियाधिष्ठानं न प्राप्तम्, न चासत्यां त्वचि किञ्चिद्विषयग्रहणं भवति । यया सर्वेन्द्रियस्थानानि व्याप्तानि यस्यां च सत्यां विषयग्रहणं भवति सा त्वगेकमिन्द्रियमिति" ।

नेन्द्रियान्तरार्थानुपलब्धेः । स्पर्शोपलब्धिलक्षणायां सत्यां त्वचि गृह्यमाणे त्वगिन्द्रियेण स्पर्शे इन्द्रियान्तरार्था रूपादयो न गृह्यन्ते अन्धादिभिः । न स्पर्शग्राहकादिन्द्रियादिन्द्रियान्तरमस्तीति स्पर्शवदन्धादिभिर्गृह्येरन् रूपादयः । न च गृह्यन्ते । तस्मान्नैकमिन्द्रियं त्वगिति ।

"त्वगवयवविशेषेण धूमोपलब्धिवत्तदुपलब्धिः।यथा त्वचोऽवयवविशेषः कश्चिच्चक्षुषि सन्निकृष्टो धूमस्पर्शं गृह्णाति ना-

---

( ख० ) नेन्द्रियान्तरार्थेति पूर्वपक्षव्युदासभाष्यम् ।

---

(भा०चं०) सूत्रम् । तद्व्याचष्टे **त्वगेकमित्यादिना** । त्वगेकमिन्द्रियमिति साध्यम् अव्यतिरेकादिति हेतुः । अभेदादित्यर्थः । उपपादयति **नचेत्यादिना** । इन्द्रियाधिष्ठानं गोलकं त्वचा न न प्राप्तमपि तु प्राप्तमेव व्याप्तमित्यर्थः । विविधा प्राप्तिर्व्याप्तिः ।

दूषयति **नेन्द्रियेत्यादिसूत्रेण** । त्वगेवैकमिन्द्रियं नेति साध्यम् इन्द्रियार्थानामपरेषामनुपलब्धिरिति हेत्वर्थः । व्याचष्टे **स्पर्श इत्यादि** । लक्षणभेदेन इन्द्रियभेद इत्याह **लक्षणायामित्यन्तेन** । गृह्यमाण इति भावसप्तमी । अन्धादिभिरित्यादिशब्देन बधिरविघ्रादिपरिग्रहः । इन्द्रियान्तरं नासीत्परमते इति शेषः ।

त्वगेवैकमिन्द्रियमिति मते निषिद्धे त्वगवयवा इन्द्रियाणीत्याह पूर्वपक्षी **त्वगवयवेत्यादिना** ।

(भा०)न्यः, एवं त्वचोऽवयवविशेषा रूपादिग्राहकास्तेषामुपघातादन्धादिभिर्न गृह्यन्ते रूपादय इति"।

व्याहतत्वादहेतुः। त्वगव्यतिरेकादेकमिन्द्रियमित्युक्त्वा 'त्वगवयवविशेषेण धूमोपलब्धिवद्रूपाद्युपलब्धिः' इत्युच्यते। एवञ्च सति नानाभूतानि विषयग्राहकाणि, विषयव्यवस्थानात्–तद्भावे विषयग्रहणस्य भावात्तदुपघाते चाभावात्। तथा च पूर्वो वाद उत्तरेण वादेन व्याहन्यत इति।

सन्दिग्धश्चाव्यतिरेकः। पृथिव्यादिरपि भूतैरिन्द्रियाधिष्ठानानि व्याप्तानि। न च तेष्वसत्सु विषयग्रहणं भवतीति। तस्मान्न त्वगन्यद्वा सर्वविषयमेकमिन्द्रियमिति ॥ ५३ ॥

(ख० ) व्याहन्यत इति। प्रागेकमिन्द्रियं त्वगित्यभ्युपगम्येदानीं त्वगवयवविशेषा रूपादिग्राहका इति ब्रुवाणः प्रतिषेध्यमनुजानातीति व्याघातः॥

(भा०चं०) तद्दूषयति **व्याहतत्वादिति**। व्याहतत्वमुपपादयति **त्वगव्यति(१)रेकादेकमित्यादिना**। त्वगवयवविशेषेणेति करणे तृतीया। रूपाद्युपलब्धिरपि तदवयवविशेषैरिति शेषः। इत्युच्यते इन्द्रियैकत्ववादिना त्वयेति शेषः। पूर्वं त्वच एव सर्वोपलब्धिकरणत्वमुक्तं इदानीं तु तदवयवानां तदुपलब्धिकरणत्वमुच्यते इति व्याघातः, प्रतिज्ञाहानिश्च परो दोष इति ज्ञेयम्। एकत्वं नानात्वेन व्याहतमिति दर्शयति **एवंसतीत्यादिना**। ननु तत्तद्विशेषणविशिष्टस्य करणत्वाभिप्रायान्न नानात्वमस्तीत्याशङ्कायामाह **तद्भावे इति**। तथाचान्वयव्यतिरेकाभ्यामवयवानामेव करणत्वं नावयविन इति

(टि०) १ अर्थशब्दस्य विषये प्रयोजने च व्यवहारादत्रार्थशब्दे तद्वयोरपि ग्रहणात्संशयो मा भूतदेर्थे प्रयोजनमित्युक्तं भाष्य इत्यभिप्रायः।

( सू० ) न युगपदर्थानुपलब्धेः ॥ ५४ ॥

( भा० ) आत्मा मनसा सम्बध्यते, मन इन्द्रियेण, इन्द्रियं सर्वार्थैः सन्निकृष्टमिति—आत्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो युगपद्ग्रहणानि स्युः । न च युगपद्रूपादयो गृह्यन्ते । तस्मान्नैकमिन्द्रियं सर्वविषयकम् । साहचर्ये हि विषयग्रहणानामन्धाद्यनुपपत्तिरिति ॥ ५४ ॥

---

(ख०) न युगपदिति सिद्धान्तनिरूपणपरं सूत्रम् । नैतदस्ति 'एकमिन्द्रियमिति'—कस्मात्—युगपदर्थानुलब्धेरिति सम्बन्धः ।

आत्मा मनसेत्यादि भाष्यकारीयव्याख्याने वार्तिककारस्यारुचिः । तद्बीजं च तत्रैवोपन्यस्तम् । तद्यथा—यथैकेन्द्रियवादिनो युगपदनेकार्थसन्निधाने सति युगपदुपलब्धिदोषो भवति, तथानेकेन्द्रियवादिनोऽप्येकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गः । य एव चात्र परिहारस्स एवैकेन्द्रियवादिनोऽपीति ॥

---

(भा०चं०) भावः । पूर्वो वादोऽङ्गीकृतवचनम् ।

सान्दिग्धहेत्वाभासोऽप्ययमित्याह **सान्दिग्धेति** ॥ ५३ ॥

हेतुमसाधकमुक्त्वा तदुद्धारकं स्वहेतुमाह **न युगपदित्यादिसूत्रम्** । व्याचष्टे **आत्मेत्यादिना** । सम्बध्यते संयुज्यते इन्द्रियेण चक्षुरादिना सर्वार्थैः रूपादिभिः संनिकृष्टं यथासंभवं संयोगसमवायादिविशिष्टम् । हेत्वन्तरमप्याह **साहचर्येत्यादि** । साहचर्यं युगपदुद्भवः । सहेत्यस्य युगपदर्थः चरतेरुत्पत्तिरर्थः शब्द उच्चरतीत्यादौ तथादर्शनात् गत्यर्थस्य प्राप्त्यर्थतया उत्पत्तेश्च स्वरूपप्राप्तिकतया सामान्यस्य विशेषाभेदेन द्वयोर्वाच्यवाचकतेति ध्येयम् । सह चरन्तीति सहचराणि तेषां भावः साहचर्यं—युगपदुत्पत्तिरेव । तथासति किं दूषणमित्यत आह **अन्धाद्यनुपपत्तिरिति** ॥ ५४ ॥

( सू० ) विप्रतिषेधाच्च न त्वगेका ॥ ५५ ॥

( भा० ) न खलु त्वगेकमिन्द्रियं— व्याघातात् । त्वचा रूपाण्यप्राप्तानि गृह्यन्त इत्यप्राप्यकारित्वे स्पर्शादिष्वप्येवं प्रसङ्गः । स्पर्शादीनां च प्राप्तानां ग्रहणाद्रूपादीनां प्राप्तानां ग्रहणमिति प्राप्तम् ।

"प्राप्याप्राप्यकारित्वमिति" चेत् आवरणानुपपत्तेर्विषयमात्रस्य ग्रहणम् । अथापि मन्येत—"प्राप्ताः स्पर्शादयस्त्वचा गृह्यन्ते रूपाणि त्वप्राप्तानीति" एवं सति नास्त्यावरणम् । आवरणानुपपत्तेश्च रूपमात्रस्य ग्रहणं व्यवहितस्य चाव्यवहितस्य चेति । दृ-

---

(ख०) वस्तुतस्तु न ज्ञानायौगपद्यमिह विवक्षितम्—किन्तु एकदैवार्थानां ग्रहणमिति परिशुद्धिः ॥

भाष्यकारीयव्याख्यानं दूषयित्वा सूत्रमन्यथा व्याख्यातवान् वार्तिककारः । यत्तदेकमिन्द्रियं सर्वार्थमित्येकेन्द्रियवादी मन्यते तत किं प्राप्यकारि उत न । यदि प्राप्यकारि तर्हि किं तदिति वक्तव्यम् । यदि त्वगेव तत्— तर्हि त्वचाऽप्राप्तानां रूपाणामग्रहणप्रसङ्गः । अथाप्राप्तमेव रूपं गृह्यते—स्पर्शादिष्वप्येवमेव प्रसङ्गः । अथ किञ्चिदिन्द्रियम्प्राप्तं गृह्णाति किञ्चिच्चाप्राप्तम्—एवं सति करणधर्मातिक्रमः ॥ "भवतु करणधर्मातिक्रमः । किं नो बाध्यते" इति चेत् तन्निराकरणपरमिदं सूत्रम् न युगपदिति । यथाऽनेकेन्द्रियवदिन एकेन्द्रियग्राह्येषु युगपदुपलब्धिप्रसङ्गे 'करणत्वादिति' परिहारस्सुवचः—तथायमेकेन्द्रियपक्षे न सम्भवति, तथाभूतस्य करणधर्मातिरेकाभ्युपगमादित्याशय इति ॥

---

(भा०चं०) विप्रतिषेधो विधाय प्रतिषेधो व्याघात एव ।
नास्त्यावरणं नास्त्यावरणकृत्यम् । अप्राप्तस्यापि त्वन्मते ग्राहकत्वात् ५५

( भा० )रान्तिकानुविधानं च रूपोपलब्ध्यनुपलब्ध्योर्न स्यात् । अप्राप्तं त्वचा गृह्यते रूपमिति दूरे रूपस्याग्रहणमन्तिके च ग्रहणमित्येतन्न स्यादिति ॥ ५५ ॥

एकत्वप्रतिषेधाच्च नानात्वसिद्धौ स्थापनाहेतुरप्युपादीयते—

( सू० ) इन्द्रियार्थपञ्चत्वात् ॥ ५६ ॥

( भा० ) अर्थः प्रयोजनं—तत् पञ्चविधमिन्द्रियाणाम् । स्पर्शनेनेन्द्रियेण स्पर्शग्रहणे सति न तेनैव रूपं गृह्यत इति रूपग्रहणप्रयोजनं चक्षुरनुमीयते । स्पर्शरूपग्रहणे च ताभ्यामेव न गन्धो गृह्यत इति गन्धग्रहणप्रयोजनं घ्राणमनुमीयते । त्रयाणां ग्रहणे न तैरेव रसो गृह्यते इति रसग्रहणप्रयोजनं रसनमनुमीयते । न

---

( ख० ) प्रतिषेधादिति । अत्र वाक्ये—(१)'एकत्वप्रतिषेधात्'—अनन्तरम्—नानात्वसिद्धौ स्थापनाहेतुरुपादीयते—(२)अथवा प्रतिषेधहेतुभिरेव 'एकत्वप्रतिषेधात्' एव 'नानात्वसिद्धौ' संपातायातम्—'स्थापनाहेतुरपि' शिष्यशिक्षायै उपादीयत इति च—उभयथा सम्बन्धः ॥

अत्र परिशुद्धिकृतः—यद्यपि साधनदूषणमात्रेण साध्यं न निवर्तते तथाऽपि परसाध्यनिवृत्तिरेव यत्र साध्यते तत्र तद्विपरीतसिद्धिः । एतदभिप्रायेणैवैतद् भाष्यम् । प्रयोगस्त्वेवम्—एकत्र शरीरे नैकमिन्द्रियम् युगपद्विषयसन्निधानेऽपि क्रमवृत्तित्वात्—यत् पुनरेकं न तत् युगपद्विषयसन्निधानेऽपि क्रमवृत्ति—यथा चक्षुः—तथा चेन्द्रियम्—तस्मान्नैकमिति ॥

---

(भा०चं०) सूत्रमवतारयति **नानात्वेत्यादिना** । स्थापनाहेतुर्नानात्वसाधनहेतुः । **इन्द्रियेत्यादि सूत्रम्** । अर्थपदं विषयसंशयितं वा-

(भा०)चतुर्णां ग्रहणे तेरैव शब्दः श्रूयते इति शब्दग्रहणप्रयोजनं श्रोत्रमनुमीयते। एवमिन्द्रियप्रयोजनस्यानितरेतरसाधनसाध्यत्वात्पञ्चैवेन्द्रियाणि ॥ ५६ ॥

( सू० ) "न, तदर्थबहुत्वात्" ॥ ५७ ॥

( भा० ) "न खल्विन्द्रियार्थपञ्चत्वात्पञ्चेन्द्रियाणीति सिद्ध्यति। कस्मात् ? तेषामर्थानां बहुत्वात्। बहवः खल्विमे इन्द्रियार्थाः। स्पर्शास्तावच्छीतोष्णानुष्णाशीता इति। रूपाणि शुक्लहारितादीनि। गन्धा इष्टानिष्टोपेक्षणीयाः। रसाः कटुकादयः। शब्दा वर्णात्मानो ध्वनिमात्राश्च भिन्नाः। तद्यस्येन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणि तस्येन्द्रियार्थबहुत्वाद्बहूनीन्द्रियाणि प्रसज्यन्त इति" ॥ ५७ ॥

(सू०) गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामप्रतिषेधः॥ ५८॥

( भा०) गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्थानां गन्धादीनां यानि गन्धादिग्रहणानि तान्यसमानसाधनसाध्यत्वाद्ग्राहकान्तराणि प्रयोजयन्ति। अर्थसमूहोऽनुमानमुक्तो नार्थं-

---

(भा०चं०)रयति प्रयोजनमिति। प्रयोगश्च—रूपादिग्रहणानि विजातीयकरणकानि कार्यत्वाद्घटादिवत् ॥ ५६ ॥

पञ्चत्वमसहमानः प्रत्यवतिष्ठते **न तादित्यादिसूत्रेण**। **नखल्वित्यादि** भाष्यम्। इष्टगन्धः सुखजनकः। अनिष्टगधो दुःखजनकः। तदुभयजनको गन्धश्चेति हेयोपादेयोपेक्षणीयभेदेन त्रिधा सः। वर्णात्मनो वर्णपदवाक्यभेदात् त्रिधात्मानः बहुत्वमनन्तत्वं। प्रसज्यन्त इत्यस्य भाष्यस्याप्रतिषेध इति सूत्राक्षरान्वयः ॥ ५७॥

तत्र हेतुः गन्धत्वेत्या**दिसमाधानसूत्रम्**। गन्धत्वाद्यव्यतिरेकाद्गन्धादीनामिति। गन्धत्वादिभिरव्यतिरेकात गन्धसमूहो गन्ध-

(भा०)कदेशः । अर्थैकदेशं चाश्रित्य विषयपञ्चत्वमात्रं भवान्प्रतिषेधति । तस्मादयुक्तोऽयं प्रतिषेध इति ।

"कथं पुनर्गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था गन्धादय इति" ।

स्पर्शः खल्वयं त्रिविधः—शीत उष्णोऽनुष्णाशीतश्च स्पर्शत्वेन स्वसामान्येन सङ्गृहीतः । गृह्यमाणे च शीतस्पर्शे नोष्णस्यानुष्णाशीतस्य वा स्पर्शस्य ग्रहणं ग्राहकान्तरं प्रयोजयति-स्पर्शभेदानामेकसाधनसाध्यत्वाद्—येनैव शीतस्पर्शो गृह्यते तेनैवेतरावपीति । एवं गन्धत्वेन गन्धानां रूपत्वेन रूपाणां रसत्वेन रसानां शब्दत्वेन शब्दानामिति ।

गन्धादिग्रहणानि पुनरसमानसाधनसाध्यत्वाद् ग्राहकान्त-

(भा०चं०)त्वेनैकः । एवं रूपसमूहादिरपि । ततः पञ्चसमूहानादाय पञ्चत्वमुक्तम् । सूत्रमिदं भाष्यकृद्व्याचष्टे **गन्धत्वादिभिरिति** । स्वसामान्यैर्बहूनामेकैकसामान्यैः कृतव्यवस्थानां निश्चितेयत्ताकानामसमानसाधनसाध्यत्वात् विजातीयग्राहकग्राह्यत्वात् ग्राहकान्तराणि परस्परभिन्नग्राहकाणि प्रयोजयन्ति अनुमापयन्ति । गन्धत्वावान्तरजातिमन्तोऽपि गन्धा एकस्वरूपाः स्वविषयकग्रहणं जनयन्तः स्वग्राहकमेकं ग्राहयन्ति । एवं रूपादयोऽपि । तदिदमाह **अर्थसमूहोऽनुमानमिति** । नार्थैकदेशः न सुरभ्यादिमात्रं । तथासति गन्धभेदेनेन्द्रियभेदः स्यात् । तादिदमाहा**र्थैकदेशमित्यादिना भवान्प्रतिषेधतीत्यन्तेन** । स्वमतमुपसंहरति **तस्मादिति** ।

पृच्छति **कथं पुनरिति** । कृतव्यवस्थाः निश्चितपरिसंख्याकाः । संगृहीतः अभिन्नीकृतः । अभेदप्रयोजकं रूपं दर्शयति **गृह्यमाणेत्यादि प्रयोजयतीत्यन्तेन** । स्पर्शभेदानां स्पर्शविशेषाणाम् । एकसाधनसाध्यत्वादेकग्राहकग्राह्यत्वात् ग्राहकान्तराणां

(भा० ) राणां प्रयोजकानि । तस्मादुपपन्नमिन्द्रियार्थपञ्चत्वात् पञ्चेन्द्रियाणीति ॥ ५८ ॥

(भा० ) "यदि सामान्यं सङ्ग्राहकं, प्राप्तमिन्द्रियाणाम्—

(सू० ) "विषयत्वाव्यतिरेकादेकत्वम्" ॥ ५९ ॥

(भा०)विषयत्वेन हि सामान्येन गन्धादयः सङ्गृहीता इति" ॥५९॥

(सू० ) न, बुद्धिलक्षणाधिष्ठानगत्याकृतिपञ्चत्वेभ्यः ॥६०॥

(भा०)न खलु विषयत्वेन सामान्येन कृतव्यवस्था विषया ग्राहकान्तरनिरपेक्षा एकसाधनग्राह्या अनुमीयन्ते । अनुमीयन्ते च पञ्च गन्धादयो गन्धत्वादिभिः स्वसामान्यैः कृतव्यवस्था इन्द्रियान्तरग्राह्याः । तस्मादसम्बद्धमेतत् ।

अयमेव चार्थोऽनूद्यतेबुद्धिलक्षणपञ्चत्वादिति । बुद्धय एव लक्षणानि विषयग्रहणलिङ्गत्वादिन्द्रियाणाम् । तदेतत् -'इन्द्रियार्थपञ्चत्वात्'इत्येतस्मिन् सूत्रे कृतभाष्यमिति । तस्माद् बुद्धिलक्षणपञ्चत्वात्पञ्चेन्द्रियाणि ।

---

(भा०चं०) करणान्तराणां प्रयोजकानि अनुमापकानि पक्षविधया । उपसंहरति **तस्मादिति** ॥ ५८ ॥

सामान्यस्य ग्राहकत्वेऽतिप्रसङ्गमापादयति **यदीत्यादिना** । इन्द्रियान्तराणामित्यस्य एकत्वमिति सूत्राक्षरेणान्वयः । **विषयत्वेत्यादि पूर्वपक्षसूत्रम्** । व्याचष्टे **विषयत्वेन हीत्यादिना** ॥५९॥

**न बुद्धीत्यादिसमाधानसूत्रम्** । व्याचष्टे **न खल्विति** । सामान्येन उपाधिरूपेण ग्राहकान्तरनिरपेक्षा न खल्वितिनिषेधेनान्विताः व्यतिरेके गन्धविशेषा इवेति शेषः । एकसाधनग्राह्या अपि नानुमीयन्त इत्यन्वयः । स विशेषनिषेधो वा ज्ञातव्यः । स्वपक्षे नैष दोष इत्याह **अनुमीयन्ते चेत्यादिना** । साध्यांशमुपसंहरति **तस्मादिति** ।

(भा०)अधिष्ठानान्यपि खलु पञ्चेन्द्रियाणाम् । सर्वशरीराधिष्ठानं स्पर्शनं स्पर्शग्रहणलिङ्गं, कृष्णताराधिष्ठानं चक्षुः बहिर्निःसृतं रूपग्रहणलिङ्गम् , नासाधिष्ठानं घ्राणम् , जिह्वाधिष्ठानं रसनम् , कर्णच्छिद्राधिष्ठानं श्रोत्रम् ,–गन्धरसरूपस्पर्शशब्दग्रहणलिङ्गत्वादिति।

---

(भा०चं०) बुद्धयश्च ता लक्षणानि चेति बुद्धिलक्षणानि तेषु पञ्चत्वं वैजात्यपञ्चकं तत्तदाश्रयकरणत्वात्पञ्चविधाः पञ्चेन्द्रियाणीत्यर्थः ।

अधिष्ठानपञ्चत्वेनापि पञ्चत्वमाहेन्द्रियाणाम् **अधिष्ठानान्यपीति** । अधिष्ठीयन्ते इमानीति अधिष्ठानानि अधिकरणानि । कर्मण्यपि ल्युट् । अधिकरणस्यापि कर्मत्वं "अधिशीङ्स्थासां कर्मेत्य"नुशासनात् । एकैकमाधिकरणं पृथक् पृथग्विविनक्ति **सर्वशरीराधिष्ठानमिति** । सर्वशरीरपदं शरीरस्य सर्वावयवव्यापिं त्वक् एवं सर्वं शरीरं यस्याः सा सर्वशरीरा त्वक् सर्वशरीराधिष्ठानमाश्रयो यस्य तत्तथा । तस्य यौगिकं नामाह **स्पर्शनमिति** । स्पृश्यत्यनेनेति स्पर्शनं । तच्चेनाऽनुमेयं तदाह **स्पर्शग्रहणेति** । ग्रहणपदं क्रियापरं स्पर्शो गुणस्तु तस्या विशेषणं कृष्णसारं कनीनिका अधिष्ठानमधिकरणं यस्य (१)तच्चक्षुः न तु पक्ष्मगोलककृष्णसाराणि । बहुव्रीहिणा भेदोपलब्धेः । तस्य त्वगिन्द्रियादिभ्यो विलक्षणतया कार्यकारितामाह **बहिर्निःसृतमिति** । निःसरणं द्वेधा–गतिचलनं ग्राह्यसम्बन्धश्च। तत्र बहिश्चलनं नान्यत्रेन्द्रिय इति वैलक्षण्यम् । **रूपग्रहणेति** । रूपं पूर्ववद्विशेषणम् । नासेति नासाग्रपरं तत्र नासाविशेषणं अवयविनोऽनाश्रयत्वनियमात् । अग्रावयवस्यैवाश्रयत्वात् । घ्राणमिति यौगिकं नाम । पूर्ववत् । जिह्वाधिष्ठानमित्यत्रापीत्थं व्याख्या कार्या । रसनमित्यपि यौगिकं नाम । छिद्रमिति संयोगविशेषपरम् । कर्णपदं पृथिवीविकारभूतावयवप-

---

(टि०)१ कृष्णसारमधिष्ठानमस्येति बहुव्रीहिकरणेन चक्षुषः गोलकातिरिक्तत्वं प्रदर्शितं तेन गोलकात्मकचक्षुरङ्गीकर्तृबौद्धमतनिरासः ।

(भा०) गतिभेदादपीन्द्रियभेदः । कृष्णसारोपनिबद्धं चक्षुर्बहिर्निःसृत्य रूपाधिकरणानि द्रव्याणि प्राप्नोति । स्पर्शनादीनि त्विन्द्रियाणि विषया एवाश्रयोपसर्पणात्प्रत्यासीदन्ति । सन्तानवृत्त्या शब्दस्य श्रोत्रप्रत्यासत्तिरिति ।

आकृतिः खलु परिमाणमियत्ता । सा पञ्चधा । स्वस्था-

---

(भा०चं०)रम् । कर्णच्छिद्रमधिष्ठानमाश्रयः सहकारिकारणं यस्य तत्कर्णच्छिद्राधिष्ठानम् । यद्वा कर्णच्छिद्रस्य कर्णसंयोगस्याधिष्ठानमाश्रय इति तत्पुरुषः । यथाश्रुते आकाशस्यानाधेयत्वादनुपपत्तिरिति प्रयासोऽयम् । श्रोत्रमपि यौगिकं नाम । ता एताः पञ्चाऽऽख्या यौगिक्यः ग्रहणविशेषकृताः ग्रहणविशेषलिङ्गकानामिन्द्रियाणामित्याह **गन्धेत्यादिलिङ्गत्वादित्यन्तेन** ।

बुद्ध्यधिष्ठानविशेषाभ्यां विशेषमुक्त्वा सम्बन्धविशेषाद्विशेषमाह **गतिभेदादिति** । कृष्णसारोपनिबद्धं कृष्णसारमुपोपकाराय निबद्धं येन कृष्णसारेण वोपनिबद्धम् । रूपाधिकरणानि उद्भूतरूपाधिकरणानि । योग्यपृथिव्यादीनि प्राप्नोति प्रत्यासीदति । स्पृशत्यनेनेति स्पर्शः स्पर्शनेन्द्रियमादिर्येषां तानि तथा । एषां गतिभेदमाह **आश्रयेति** । आश्रयोपसर्पणात् इन्द्रियाश्रयकर्मकस्वकर्तृकोपसर्पणं(१) व्यापाराख्यं प्रत्यासदने सम्बन्धाख्ये हेतुरिति पञ्चम्युक्तम् । यद्वा स्वाश्रयोपसर्पणादित्यर्थः प्रत्यासीदन्ति सम्बन्धं प्रकाशयन्ति । शब्दविषयस्य वैलक्षण्यमाह **सन्तानवृत्त्या इति** । सन्तानः जन्यसमूहस्तस्य वृत्तिरुत्तरोत्तरोत्पत्तिस्तत्क्रमेण शब्दस्य ग्राह्यशब्दस्य श्रोत्रे प्रत्यासत्तिरुत्पत्तिः समवायो वा ।

आकृतिपदं व्याचष्टे **परिमाणमिति** । तद्विशेषमाह **इयत्त-**

---

(टि०) १ इन्द्रियाश्रयकर्मकेत्यनेन इन्द्रियरूपमाश्रयं तत्कर्मकेत्यर्थः । स्वकर्तृकेत्यत्र स्वं विषयः तत्कर्तृकेत्यर्थः ।

( भा० ) त्रमात्राणि घ्राणरसनस्पर्शनानि विषयग्रहणेनानुमेयानि । चक्षुः कृष्णसाराश्रयं बहिर्निःसृतं विषयव्यापि । श्रोत्रं नान्यदाकाशात् । तच्च विभु शब्दमात्रानुभवानुमेयं पुरुषसंस्कारोपग्रहाच्चाधिष्ठाननियमेन शब्दस्य व्यञ्जकमिति ।

जातिरिति योनिं प्रचक्षते । पञ्च खल्विन्द्रिययोनयः—पृथिव्यादीनि भूतानि । तस्मात्प्रकृतिपञ्चत्वादपि पञ्चेन्द्रियाणीति सिद्धम् ॥ ६० ॥

---

(भा०चं०)ति । सा आकृतिपदवाच्या पञ्चधा पञ्चप्रकारा । घ्राणादीनां त्रयाणां त्रीणि परिमाणानि विशिष्टानि दर्शयति **स्वस्थानेति** । स्वस्थानपरिमाणतुल्यपरिमाणकानीत्यर्थः । विषया गन्धरसस्पर्शविशेषाः तेषां ग्रहणं घ्राणरसनस्पर्शनं तेन पृथक् पृथगनुमेयानि । बहिर्निःसृतं क्षेपकजालसदृशं विषयदेशव्यापनशीलं स्वाधिष्ठानदेशे तु सङ्कोचनशीलम्(१) । श्रोत्रस्य विभुत्वमेव परिमाणमित्याह **श्रोत्रन्तिवति** । सर्वस्य सर्वशब्दानुभवः स्यादित्याशङ्क्याह **पुरुषसंस्कारेति** । पुरुषाः जीवविशेषाः तेषां संस्कारा अदृष्टविशेषाः तैर्विशिष्टैः पापपुण्याख्यैरुपग्रहः भेदेन कल्पितसम्बन्धस्तस्मात् । तथा हि ते वदन्ति—'मम श्रोत्रं न तव तव श्रोत्रं न ममेति' । अधिष्ठाननियमेन शब्दाधारभेदनियमेन शब्दस्य व्यञ्जकं ग्राहकं ग्रहकरणं तथा च सहकारिवैचित्र्यादेव कार्यवैचित्र्यं न तु करणवैचित्र्यात् यथा वेदान्तिनामुपाधिवैचित्र्यादेव जीवकार्यवैचित्र्यम् ।

जातिपदं व्याचष्टे **योनिं प्रचक्षत इति** । योनिं प्रकृतिं कारणविशेषम् । आकाशस्य प्रकृतित्वं घ्राणादिसूत्रभाष्ये व्याख्यातम् । उपसंहरति **तस्मादिति** ॥ ६० ॥

---

( टि० ) १ एतेन चक्षुषो विभुत्वं निरस्तम् ।

( भा० ) "कथं पुनर्ज्ञायते भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति"—

( सू० )भूतगुणविशेषोपलब्धेस्तादात्म्यम् ॥६१॥

( भा० ) दृष्टो हि वाय्वादीनां भूतानां गुणविशेषाभिव्यक्तिनियमः । वायुः स्पर्शव्यञ्जकः । आपो रसव्यञ्जिकाः । तेजो रूपव्यञ्जकम् । पार्थिवं किञ्चिद् द्रव्यं कस्यचिद् द्रव्यस्य गन्धव्यञ्जकम् । अस्ति चायमिन्द्रियाणां भूतगुणविशेषोपलब्धिनियमः । तेन

---

( ख० ) भूतगुणविशेषोपलब्धिनियम इति । 'पार्थिवं घ्राणम् रूपरसगन्धस्पर्शेषु नियमेन गन्धस्य व्यञ्जकत्वा' दित्येवं रूपो नियमोऽत्र विवक्षितः ।

अत्रेदमवधेयम् । इन्द्रियपञ्चत्वेन हस्तपादपायूपस्थवाचामिन्द्रियत्वनिषेधोऽपि सूचितः, तेषामिन्द्रियलक्षणविरहात् । यच्छरीरसंयुक्तं

---

(भा०चं०)सांख्यः शङ्कते **कथं पुनरिति** । अव्यक्तप्रकृतीनि प्रधानप्रकृतिकानि । कथमिति पृष्टे हेतुमाह सूत्रेण **भूतगुणेत्यादिना** । भूतगुणविशेषोपलब्धेः,—भूतानां पृथिव्यादीनां ये गुणा गन्धादयः शब्दान्ता व्यवस्थिताः पृथिव्यामेव गन्धः आकाश एव शब्दः अप्सु रूपरसस्पर्शाः तेजसि रूपस्पर्शौ वायौ स्पर्श इति, तेषां यथायोगमुपलब्धेः उपलब्धिकरणत्वात् तादात्म्यं तत्तद्भूतात्मकत्वम् । गन्धादिषु पञ्चसु मध्ये पृथिवीगुणस्य गन्धस्य ग्राहकत्वात्पृथिव्यात्मकत्वम् । एवं रसनादिष्वपि । व्याचष्टे **दृष्टो हीति** । अभिव्यक्तिनियमः अभिव्यञ्जकतानियमः । तदुदाहरति **वायुरित्यादिना** । तेज आलोकेरूपम् । पार्थिवं तैलादि । कस्यचित्कुङ्कुमादेः । दृष्टान्तस्थं नियमं दार्ष्टान्तिके दर्शयति **अस्ति चायमिति** । भूतप्रकृतीनी-

( भा० ) भूतगुणविशेषोपलब्धेर्मन्यामहे भूतप्रकृतीनीन्द्रियाणि नाव्यक्तप्रकृतीनीति ॥ ६१ ॥

( भा० ) गन्धादयः पृथिव्यादिगुणा इत्युद्दिष्टम् । उद्देशश्च पृथिव्यादीनामेकगुणत्वे चानेकगुणत्वे समान इत्यत आह—

---

(ख०)संस्कारदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति हीन्द्रियलक्षणम् । न चैतदस्ति हस्तादिषु ॥ "शरीराश्रितमसाधारणकारीन्द्रियमिति लक्षणं हस्तादिष्वपि वर्तत" इति चेत्—वक्तव्यं हस्तादीनामसाधारणं कार्यम् ॥ "उक्तन्तत्—वचनादानविहरणोत्सर्गानन्दाश्च पञ्चानामिति" चेत्—आदानविहरणोत्सर्गा वक्त्रहस्तादिभिरपि शक्याः कर्तुम् । अपि चास्ति कण्ठहृदयाऽऽमाशयपक्वाशयादीनामपि गिरणादि तत्तदसाधारणं कार्यमिति तान्यपीन्द्रियाणि प्रसज्येरन्—इति ॥

गन्धादय इति । क्रमप्राप्तमर्थलक्षणं परिचिक्षिषमाणोऽर्थलक्षणंप्पूर्वोक्तं ( १ । १ । १४ ) स्मारयति । प्रयोजनं चास्याः परीक्षाया इन्द्रियनानात्वसिद्धिः पृथिव्यादिलक्षणासिद्धिपरिहारश्च । समुच्चये हि नेन्द्रियपञ्चत्वं स्यात् ।

उद्दिष्टमिति—लक्षितमित्यर्थः । उद्देशस्तु सर्वेषां पदार्थानामाद्य एव सूत्रे कृत इति ध्येयम् ।

समान इति । नियोगविकल्पसमुच्चैयस्तुल्य इत्यर्थः । तत्र(१) नियोगे—घ्राणादिष्वेकस्य पृथिव्यादिष्वेक एव विषयः । (२)विकल्पे—

---

(भा०चं०)त्यस्य तत्तद्भूतविशेषैकैकगुणसजातीयगुणकानीत्यर्थः । अन्यथा बहुव्रीह्यर्थस्य भूतकार्यत्वस्य मुख्यस्य श्रवणेऽसंभवात् । नाव्यक्तप्रकृतिनीति सांख्यमतनिषेधः । इतिप्रकरणसमाप्त्यर्थः ॥ ६१ ॥

इतिश्रीभाष्यचन्द्रे इन्द्रियनानात्वपरीक्षाप्रकरणभाष्यचन्द्रिका ॥

गन्धादयइत्यादि उत्तरसूत्रभाष्यम् । गन्धेत्यादि-

(सू०)गन्धरसरूपस्पर्शशब्दानां स्पर्शपर्यन्ताः पृथिव्याः६२
अप्तेजोवायूनां पूर्वं पूर्वमपोह्याकाशस्योत्तरः॥६३॥

( भा० ) स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः । आकाशस्योत्तरः शब्दः स्पर्शपर्यन्तेभ्य इति । कथं तर्हि तरन्निर्देशः? स्वतन्त्रविनियोगसामर्थ्यात् । तेनोत्तरशब्दस्य परार्थाभिधानं

---

(ख०)कस्यचिदेकः कस्यचिद् द्वावित्येवमादिः । (३)समुच्चये सर्वं सर्वत्रेति ॥ तत्र गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ( १ । १ । १४ ) इत्येतद्वाक्यं नियोगार्थं विकल्पार्थं समुच्चयार्थं वेति संशयः । अथवा गन्धरसरूपस्पर्शशब्देष्वेव गुणत्वेन सन्देहः । गुणा हि केचित् सर्वद्रव्यसाधारणाः केचित्प्रतिनियतद्रव्यवृत्तयो दृष्टाः ॥

नियमार्थं सूत्रद्वयम्—गन्धेति अविति च ।

स्पर्शपर्यन्तानामिति । पूर्वसूत्रगतस्पर्शपर्यन्ता इति पदस्यानुवृत्तिरबित्यादि सूत्रे कर्तव्या । तत्र तु विभक्तिविपरिणामः कर्तव्यः । स्पर्शपर्यन्ता इति प्रथमान्तस्थाने स्पर्शपर्यन्तानामिति षष्ठ्यन्तः कर्तव्य इत्यर्थः । तथा च स्पर्शपर्यन्तानां गन्धादीनाम्मध्ये पूर्वम्पूर्वमपोह्य अप्तेजोवायूनां गुणा इति सूत्रार्थः ।

---

(भा०चं०) **सूत्रम्** । स्पर्शपर्यन्ता इत्यस्य गन्धादय इति विशेष्यम् । ताविमौ बहुव्रीही तद्गुणसंविज्ञानौ ॥ ६२ ॥

**अप्तेज इत्यादिद्वितीयं सूत्रम्** । तद्व्याचष्टे **स्पर्शेत्यादि** । स्पर्शपर्यन्तानामिति विभक्तिविपरिणामः गन्धादीनां स्पर्शपर्यन्तानां संबन्धिनं पूर्वं पूर्वमपोह्य प्रतिषिध्य शेषा अबादीनां यथायोग्या बोध्याः । आकाशस्योत्तर इत्यत्रापि स्पर्शपर्यन्तेभ्य इति विभक्तिविपरिणामेन बोध्यमित्याह **स्पर्शपर्यन्तेभ्य इति** । पृच्छति **कथमिति** । निर्देशः न्यूननिर्देशः । उत्तरमाह **स्वतन्त्रेति** । स्वतन्त्रस्य

( भा० ) विज्ञायते । उद्देशसूत्रे हि स्पर्शपर्यन्तेभ्यः परः शब्द इति । तन्त्रं वा, स्पर्शस्य विवक्षितत्वात् । स्पर्शपर्यन्तेषु नियुक्तेषु योऽन्यस्तदुत्तरः शब्द इति ॥ ६३ ॥

(ख०) तन्त्रं वेति । गन्धादिभ्यः परः स्पर्शः स्पर्शादयं ( शब्दः) पर इति यावदुक्तम्भवति तावदुक्तम्भवति 'उत्तर' इति ।

(भा०चं०) सूत्रकारस्य विनियोगसामर्थ्यात् प्रथमयापि तत्तदर्थबोधकत्वसामर्थ्यात् "वेदवद्वैदिकवचनमिति" स्मृतेः, प्रत्ययो बहुलमिति पाणिनीयस्मृतेश्च । पञ्चम्यन्तानुषङ्गप्रयोजनं दर्शयति **तेनेति** । तेन पञ्चम्यन्तार्थलाभेन । उत्तरशब्दस्याभिधायकस्य परार्थाभिधानं परश्चासावर्थश्चेति परार्थः तस्याभिधानं तत्कर्मकं प्रतिपादनम् । सूत्रे गन्धादिसूत्रे । हि यस्मात् स्पर्शपर्यन्तेभ्यः चतुर्भ्यः परः शब्दः । अत उत्तरशब्देन परमेवाभिधत्ते मुनिः । **तन्त्रं वा इति** । एकयोक्त्या बोधनं तन्त्रम् । तत्र हेतुमाह **स्पर्शस्येति** । विवक्षितत्वात्तद्गुणसंविज्ञानबहुव्रीहिणेति भावः । **तदुत्तर इति**। तदित्यव्ययस्य सहेत्यर्थः । यद्वा तदुत्तरः स्पर्शोत्तरः स्पर्शस्य विवक्षितत्वात् । अत्र वार्त्तिकञ्च -स्पर्शपर्यन्तानामिति विभक्तिविपरिणामेन किं कृतं भवति स्पर्शपर्यन्तानां नियुक्तानां य उत्तरतो नियुक्तः स आकाशस्येति । आकाशस्योत्तरः शब्दः । उत्तर इत्ययं तरब्निर्देशो न युक्तः तस्य द्वयोर्दृष्टत्वात् । इह पुनः प्रकृष्टवाचित्वे सत्युत्तम इति स्यात् । नायं भोस्तरब्निर्देशः । (यदुक्तं द्विरयं विभज्योपपदे तरबीयसुनौ)अपि तु पराभिधानमेव तत् । यदुक्तं भवति पर इति तदुक्तं भवत्युत्तर इति । तन्त्रं वा स्पर्शस्य विवक्षितत्वात् । भवतु वा तरब्निर्देशः ननूक्तमुत्तम इति प्राप्नोति । न प्राप्नोति । स्पर्शस्य विवक्षितत्वात् गन्धादिभ्यः परः स्पर्शः स्पर्शादयं पर इति यावदुक्तं भवति तावदुक्तं भवत्युत्तर इति ॥६३॥

( सू० ) "न, सर्वगुणानुपलब्धेः" ॥ ६४ ॥

( भा० ) "नायं गुणनियमयोगः साधुः । कस्मात् ? यस्य भूतस्य ये गुणा न ते तदात्मकेनेन्द्रियेण सर्वे उपलभ्यन्ते । पार्थिवेन हि घ्राणेन स्पर्शपर्यन्ता न गृह्यन्ते, गन्ध एव एको गृह्यते । एवं शेषेष्वपीति" ॥ ६४ ॥

( भा० ) कथं तर्हीमे गुणा विनियोक्तव्या इति ?—

( सू० ) "एकैकश्येनोत्तरोत्तरगुणसद्भावादुत्तराणां तदनुपलब्धिः" ॥ ६५ ॥

(भा०)"गन्धादीनामेकैको यथाक्रमं पृथिव्यादीनामेकैकस्य गुणः । अतस्तदनुपलब्धिः—तेषां तयोः तस्य चानुपलब्धिः । घ्राणेन रसरूपस्पर्शानां, रसनेन रूपस्पर्शयोः, चक्षुषा स्पर्शस्येति" ।

---

(ख०) पूर्वपक्षी 'एकस्यैकमिति' नियोगपक्षमुत्थापयति न सर्वगुणानुपब्धेरिति सूत्रे ।

एवं शेषेष्विति । पृथिव्यादिप्रकृतीनां प्रतिव्यक्तिनियम एवमुपपद्यते यदि गन्धमात्रगुणा पृथिवी रसमात्रगुणा आप इत्यादि, न त्वन्यथा । अन्यथा तु पार्थिवेन घ्राणेन गन्धवद् रूपरसस्पर्शा अपि व्यज्येरन्निति हृदयम् ॥

---

(भा०चं०)इमां व्यवस्थामसहमानः प्रत्यवतिष्ठते **न सर्वेत्यादि**-**सूत्रेण**।तद्व्याचष्टे **नायमित्यादिना**। गुणनियमेन योगः योजना सम्बन्धप्रतिपादनेति यावत् । साधुः सम्यङ् नेत्यन्वयः । पृच्छति **कस्मादिति** । हेतोरिति शेषः । उत्तरमाह **यस्येत्यादिना** **गृह्यन्ते इत्यन्तेन** । एवमुक्तदूषणं शेषेष्वबादिगुणेषु ॥ ६४ ॥

परमतं परीक्ष्य दूषयितुं नैयायिकः पृच्छति **कथमिति** । **एकैकश्येनेत्यादि परस्य सूत्रम्** ।

अनेके गुणा एकैकस्मिन् येषु तानि तथा ।

( भा० ) कथं तर्ह्यनेकगुणानि भूतानि गृह्यन्त इति ?

"संसर्गाच्चानेकगुणग्रहणम् । अबादिसंसर्गाच्च पृथिव्यां रसादयो गृह्यन्ते । एवं शेषेष्वपीति" ॥ ६५ ॥

(भा०) नियमस्तर्हि न प्राप्नोति । संसर्गस्यानियमाच्चतुर्गुणा पृथिवी त्रिगुणा आपो द्विगुणं तेज एकगुणो वायुरिति ।

नियमश्चोपपद्यते । कथम् ?—

( सू० ) "विष्टं ह्यपरं परेण" ॥ ६६ ॥

( भा० ) "पृथिव्यादीनां पूर्वपूर्वमुत्तरेणोत्तरेण विष्टम् । अतः संसर्गानियम इति । तच्चैतद् भूतसृष्टौ वेदितव्यं नैतर्हीति" ॥ ६६ ॥

(ख०) विष्टमिति सूत्रम् । तत्र चन्द्रोक्तं व्याख्यानम्भाष्यसम्मतन्न प्रतिभाति । तदभिमतं तु प्रदर्शितन्तात्पर्ये तद्यथा—'अपरं' पृथिव्यादि 'परेण' अबादिना 'विष्टम्' व्याप्तम् । नाबादिमन्तरेणास्ति पृथिवी । तेन पृथिव्यामबादिगुणानां रसादीनां नियमेनोपलम्भः, न त्वबादिषु पृथिवीगुणानाम् । एवमेवाप्सु अनलादिगुणो व्याख्यात इति ।

भूतसृष्टाविति । भूतसृष्ट्यादिप्रतिपादकेषु पुराणादिग्रन्थेष्वित्यर्थः ।

नैतर्हीति । नेदानीमिति यावत्-इदानीन्तनैरस्माभिस्तदननुभवादित्याशयः ।

---

(भा०चं०)उत्तरमाह । (१)**संसर्गाच्चेत्यादिसूत्रेण** ॥६५॥

नैयायिक आह **नियमस्तर्हि न प्राप्नोतीति** । तत्र हेतुमाह **संसर्गस्येति** ।

नियमोपपादकं सूत्रं **विष्टमित्यादि** । विष्टं प्रविष्टं संसृष्टमित्यर्थः ।

---

( टि० ) १ भाष्यचन्द्रमत एवेदं सूत्रं न वृत्तिकारादिमत इति द्रष्टव्यम् ।

( सू० ) न, पार्थिवाप्ययोः प्रत्यक्षत्वात् ॥ ६७॥

( भा० ) नेति त्रिसूत्रीं प्रत्याचष्टे । कस्मात् ? पार्थिवस्य द्रव्यस्याप्यस्य च प्रत्यक्षत्वात् । महत्त्वानेकद्रव्यत्वाद्रूपाच्चोपलब्धिरिति तैजसमेव द्रव्यं प्रत्यक्षं स्यात्, न पार्थिवमाप्यं वा, रूपा-

(ख०) महत्त्वेति । त्रिविधं हि चाक्षुषमिष्यते–पार्थिवमाप्यं तैजसं च । तत्र रूपवत्त्वेन तैजसमेव चाक्षुषं स्यात्, नेतरत्, अरूपत्वात् । न च "रूपिद्रव्यसंसर्गाच्चाक्षुषत्वमरूपयोरपि पार्थिवाप्ययोः" इति वाच्यम् । तथा सति नभोनभस्वतोरपि चाक्षुषत्वप्रसङ्गात् । अस्ति हि रूपवता तेजसा तयोरपि संयोग इति ।

(भा०चं०)पृथिवी जलादिना जलादि पृथिव्यादिना । संयोगविशेषोऽयं कार्यद्रव्येषु यावद्विनाशं वर्तेत इत्याह **तच्चेत्यादि भाष्यम्** । भूतयोः सृष्टिः (१)भूतसृष्टिः । भूतः परमात्मा भूतस्य प्राणिनो भोगार्थं तत्तद्विचित्रकर्मसहकारेण भूतस्य पृथिव्यादेः सृष्टिं कृतवान् । तथाच भूतेन भूताय भूतस्य सृष्टिकाले इदं परमेश्वरेण स्वतन्त्रेण विचित्रशक्तिना सम्पादितं नाधुनिकमाधुनिकेन केनचिदिति भावः । तदिदं वेदान्ते पञ्चीकरणं त्रिवृत्करणमित्युच्यते ॥ ६६ ॥

तदेतन्मतं नैयायिकः प्रत्याचष्टे **न पार्थिवेत्यादिसूत्रेण** । तदिदं व्याचष्टे **नेतीति** । त्रिसूत्रीं त्रिसूत्र्युक्तमर्थं प्रत्याचष्टे प्रतिषेधति नास्तित्वेन ज्ञापयतीत्यर्थः । प्रत्याख्याने हेतुं पृच्छति **कस्मादिति** । हेतुमाह **पार्थिवस्येत्यादिना** । प्रत्यक्षत्वात् बहिरिन्द्रियजन्यप्रमाविषयत्वात् तद्व्याप्यगुणवत्त्वाद्वा । प्रकृत्यर्थे यो योऽसाधारणो धर्मः स भावप्रत्ययेन विवक्षया प्रतिपाद्यत इति । अत एव घटत्वं जातिः कलसत्वमुपाधिरिति वदन्ति । इदं स्फोटयति

(टि०) १ भूतसृष्टं भूतसृष्टिप्रतिपादकपुराणादौ इति तात्पर्यटीकाकारः ।

(भा० ) भावात् । तैजसवत्तु पार्थिवाप्ययोः प्रत्यक्षत्वान्न संसर्गादनेकगुणग्रहणं भूतानामिति । भूतान्तररूपकृतं च पार्थिवाप्ययोः प्रत्यक्षत्वं ब्रुवतः प्रत्यक्षो वायुः प्रसज्यते । नियमे वा कारणमुच्यतामिति ।

रसयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् । पार्थिवो रसः षड्विधः, आप्यो मधुर एव । न चैतत्संसर्गाद्भवितुमर्हति । रूपयोर्वा पार्थिवाप्ययोः प्रत्यक्षत्वात् तैजसरूपानुगृहीतयोः । संसर्गे हि व्यञ्जकमेव रूपं न व्यङ्ग्यमस्तीति । एकानेकविधत्वे च पार्थिवाप्ययोः प्रत्यक्षत्वाद् रूपयोः।पार्थिवं हरितलोहितपीताद्यनेकविधं रूपमाप्यं तु शुक्लमप्रकाशकम् । न चैतदेकगुणानां संसर्गे सत्युपलभ्यते इति ।

---

(ख०)रसयोरित्यादि–उपपद्यते इत्यन्तस्य ग्रन्थसन्दर्भस्य संक्षेपार्थो वर्णितस्तात्पर्यकारेण—पार्थिवाप्यसम्बन्धिनो रसभेदस्य रूपभेदस्य चैकानेकविधत्वेन प्रत्यक्षत्वमिति सूत्रस्थहेतोरन्यथा व्याख्यानमिति ॥

---

(भा०चं०) **महत्त्वेत्यादिना** । पूर्वोक्तसूत्रेण । रूपाभावात् त्वन्मत इति शेषः । **तैजसवदिति** विनिगमनाभावात् कः कस्य गुण इत्यनिश्चयः स्यादिति भावः । दूषणान्तरमाह **भूतान्तररूपकृतमित्यादिना** । प्रत्यक्षो वायुः प्रसज्यते प्रत्यक्षप्रमाविषयः प्रसज्यत इत्यर्थः । इष्टापत्तौ पार्थिवाप्ययोरपि भ्रमः स्यादिति भावः । कारणमुद्भूतरूपातिरिक्तम् ।

सूत्रस्थहेतुमन्यथापि व्याचष्टे **रसयोरित्यध्याहृत्य** विशेष्यम् । विशेष्यान्तरेणापि तथैव व्याचष्टे **रूपयोर्वेति** । तैजसं रूपं शुक्लभास्वरं रूपम् । तेनानुगृहीतयोः सहकृतयोः न व्यङ्ग्यमस्तीत्यस्य रूपेषु वैलक्षण्यानुपपत्तिरिति भावः । विशेषणान्तरेण व्याचष्टे **एकानेकविधत्वे चेति** । रूपयोः पार्थिवाप्ययोः यथा

( भा० ) उदाहरणमात्रं चैतत् । अतः परं प्रपञ्चः ।

स्पर्शयोर्वा पार्थिवतैजसयोः प्रत्यक्षत्वात् । पार्थिवोऽनुष्णाशीतः स्पर्शः उष्णस्तैजसः प्रत्यक्षः । न चैतदेकगुणानामनुष्णाशीतस्पर्शेन वायुना संसर्गेणोपपद्यते इति ।

अथ वा पार्थिवाप्ययोर्द्रव्ययोर्व्यवस्थितगुणयोः प्रत्यक्षत्वात् । चतुर्गुणं पार्थिवं द्रव्यम्, त्रिगुणमाप्यं प्रत्यक्षम् । तेन तत्कारणमनुमीयते तथागुण्यमिति । तस्य कार्यं लिङ्गम्, कारणभावाद्धि कार्यभाव इति । एवं तैजसवायव्ययोर्द्रव्ययोः प्रत्यक्षत्वाद् गुणव्यवस्थायास्तत्कारणे द्रव्ये व्यवस्थाऽनुमानमिति ।

दृष्टश्च विवेकः–पार्थिवाप्ययोः प्रत्यक्षत्वात् । पार्थिवं द्रव्यमबादिभिर्वियुक्तं प्रत्यक्षतो गृह्यते, आप्यं च पराभ्यां, तैजसं च

---

(ख०) उदाहरणमात्रमिति । पार्थिवतैजसयोरप्येवमेव व्याख्यानं युक्तमिति भावः ।

तथागुण्यमिति । कार्यस्य व्यवस्थितगुणस्य दर्शनात् कारणमपि व्यवस्थितगुणमनुमीयत इत्यर्थः ।

---

(भा०चं०)क्रममेकानेकाविधत्वं ज्ञेयम् ।

सूत्रं बहुधा व्याचष्टे **स्पर्शयोर्वेत्यादिभिर्भाष्यैः** ।

प्रत्यक्षत्वादित्यत्र विशेषणान्तरमप्यध्याहरति **एवं तैजसवायव्ययोरिति** । गुणव्यवस्थाया इत्यध्याहारः । तथा तैजसवायव्ययोर्द्रव्ययोर्गुणव्यवस्थायाः प्रत्यक्षत्वादित्यन्वयः । तत्कारणद्रव्ये व्यवस्थानुमानमिति साध्यम् ।

विवेकः पृथक्त्वेन ग्रहः । विचिर पृथक्भावे इति धातुः । पृथग्भावः पृथग्भावना । तथा च विविक्तयोः पार्थिवाप्ययोः प्रत्यक्षत्वादित्यर्थः सूत्रस्य । तादिदमाह **वियुक्तं प्रत्यक्षतो गृह्यत**

(भा०) वायुना । न चैकैकगुणं गृह्यते इति । निरनुमानं तु–'विष्टं ह्यपरं परेण' इत्येतदिति । नात्र लिङ्गमनुमापकं गृह्यत इति येनैतदेवं प्रतिपद्येमहि ।

यच्चोक्तं–"विष्टं ह्यपरं परेणेति भूतसृष्टौ वेदितव्यं न साम्प्रतमिति"–नियमकारणाभावादयुक्तम् । दृष्टं च साम्प्रतमपरं परेण विष्टमिति–वायुना च विष्टं तेज इति । विष्टत्वं संयोगः । स च द्वयोः समानः । वायुना च विष्टत्वात् स्पर्शवत्तेजो, न तु तेजसा विष्टत्वाद्

---

(ख०) नियमकारणाभावादिति । नियमः–गन्धश्च वै पृथिव्यामित्येवमादिः । तस्य कारणं प्रमाणं त्वन्मते नास्ति–तद्बाधकस्यैव प्रमाणस्य त्वयोक्तत्वात् । तस्माद् भूतसृष्टिः कथंचिदुपचारतो व्याख्येयेत्यर्थः ।

विष्टत्वमिति । आस्तान्तावत्प्रत्यक्षबाधः । विकल्पतोऽपि विष्टत्वन्नोपपद्यत इत्यभिप्रायः । द्वयोः समान इति । अन्यगुणो यदन्यत्रोपलभ्यते तत् किं संयोगादुत व्याप्तेः । यदि व्याप्तेः, नायोगोलके वह्निसम्पृक्ते वह्निगुणा गृह्येरन्, तयोर्व्याप्यव्यापकभावाभावात् । तस्मादन्यसंयोग एव हेतुः । स च द्वयोरविशिष्ट इति तेजसा संयुक्तस्य वायोरपि रूपवत्त्वेन चाक्षुषत्वप्रसङ्ग इति ॥

---

(भा०चं०) इति । पराभ्यां पार्थिवतैजसाभ्यां । तैजसं च आप्येन वियुक्तं गृह्यत इति शेषः । तस्मान्निरनुमानं विष्टमित्यादि प्रतिज्ञातम् । निरनुमानमिति स्वपदं व्याचष्टे **नात्र लिङ्गमित्यादिना** ।

यदुक्तं न साम्प्रतमिति विष्टत्वविशेषणं तद्दूषयति **दृष्टश्चेत्यादिना** । विष्टत्वमिति भावप्रत्ययेन प्रकृत्यर्थप्रकारीभूतो धर्मो विवक्ष्यते तत्समशीलस्तत्समानाधिकरणोऽन्योऽपि धर्मः कश्चिदिति भावः । विष्टमिति कर्मणि क्तः–परेणेति कर्तुः पृथङ् निर्देशात् । कर्म च धात्वर्थत्वे सति धात्वर्थजन्यफलशालि । तदेव फलं भावप्रत्ययेनेहोक्तम् ।

( भा० ) रूपवान्वायुरिति नियमकारणं नास्तीति । दृष्टं च तैजसेन स्पर्शेन वायव्यस्य स्पर्शस्याभिभवादग्रहणमिति । न च तेनैव तस्याभिभव इति ॥ ६७ ॥

( भा० ) तदेवं न्यायाविरुद्धं प्रवादं प्रतिषिध्य 'न सर्वगुणानुपलब्धे'रिति चोदितं समाधीयते—

( सू० ) पूर्वपूर्वगुणोत्कर्षात्तत्तत्प्रधानम् ॥ ६८ ॥

(ख०) पूर्वपूर्वेति सूत्रम् । घ्राणादीनाम्मध्ये यत् पूर्वं पूर्वं तत् गुणस्यैकस्य उत्कर्षात् ( अर्थात् आभिव्यक्तिसामर्थ्यात् ) तत्तत्प्रधानम् ( स स गुणः प्रधानो यस्य तत् ) । एवं च घ्राणं गन्धप्रधानम्, रसनं रसप्रधानमित्यादि सूत्रार्थो भाष्यसम्मतः ॥

अत्र तु वार्तिककारस्यारुचिः। विषयग्राहकत्वं चेत् प्रधानत्वं ततः सर्वेषामिन्द्रियाणां विषयग्राहकत्वात् सर्वाणि प्रधानानि—इत्यरुचिबीजम् ॥

किन्तु यस्मिन् व्याख्याने वार्तिककारस्यारुचिर्न तद्भाष्यकारस्य विवक्षितमिति ध्येयम् । 'तत्तत्प्रधानम्' इत्यस्य नायमर्थो यत् पूर्वं पूर्वमिन्द्रियम्परस्मात्प्रधानम्—अपितु स स गुणः प्रधानो यस्य तदेव पूर्वं पूर्वमिन्द्रियमिति । न चात्र व्याख्याने वार्तिकोक्तदूषणस्यावकाशः ॥

वर्धमानोपाध्यायास्त्वेवं व्याचक्षते । पूर्वं पूर्वं घ्राणादिगुणानां ग-

---

(भा०चं०) कर्तृवाचकपदोत्तरभावप्रत्ययो व्यापारं वदतीति बोध्यम् । नियमकारणं विनिगमकं नास्ति न प्रमीयते । शेषं स्पष्टम् ॥ ६७ ॥

परव्यवस्थां दूषयित्वा स्वव्यवस्थायां तदुक्तं दूषणमुद्धर्तुमाह—**समाधीयत इति** । **पूर्वेणेत्यादिसूत्रेण तस्यान्वयः** । अस्य सूत्रस्यायमर्थः । घ्राणादीनां यथाक्रममुद्दिष्टानामिन्द्रियाणां परस्मात्परस्मात्पूर्वं पूर्वमिन्द्रियं प्रधानम् । तत्र हेतुः—**पूर्वपूर्वगुणोत्कर्षादिति** । पूर्वस्य पूर्वस्य परपरापेक्षया **गुणोत्कर्षादिति** । किं

( भा० ) तस्मान्न सर्वगुणोपलब्धिः । घ्राणादीनां पूर्वं पूर्वं गन्धादेर्गुणस्योत्कर्षात्तत्तत्प्रधानम् । का प्रधानता ? विषयग्राहकत्वम् । को गुणोत्कर्षः ? अभिव्यक्तौ समर्थत्वम् । यथा बाह्यानां पार्थिवाप्यतैजसानां द्रव्याणां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणव्यञ्जकत्वं गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपव्यञ्जकत्वम्,—एवं घ्राणरसनचक्षुषां चतुर्गुणत्रिगुणद्विगुणानां न सर्वगुणग्राहकत्वम्,—गन्धरसरूपोत्कर्षात्तु यथाक्रमं गन्धरसरूपग्राहकत्वम्—तस्माद् घ्राणादिभिर्न सर्वेषां गुणानामुपलब्धिरिति ।

---

(ख०)न्धादीनामुत्कर्षात्—उत्तररसनाद्यवृत्तित्वे सति पूर्ववृत्तित्वात्—तत्तत्प्रधानम् । तेन तेन गुणेन प्रधानमित्यर्थः । यतस्तस्माद् घ्राणादिना न सर्वगुणोपलब्धिः । तथा च येनैव गुणेनोक्तरूपं प्रधानं स एवोद्भूतस्तेन गृह्यते न सर्वे—इति भाव इति ।

तस्मादिति । सर्वेषां समवायाविशेषेऽपि गन्धस्यैव घ्राणे उत्कर्ष इति गन्धमेव गृह्णाति । तेन गन्धवत्त्वनिषेधपरं प्राधान्याभिधानम् । न पुनर्गन्धवत्त्वं गन्धग्रहणे प्रयोजकमपि तु गन्धस्योत्कर्ष इति सिद्धम् ॥

---

(भा०चं०) प्रधानत्वमिदं यत्साध्यम् । तदुच्यते—चतुर्गुणत्वादिप्रधानत्वं को गुणोत्कर्षो हेतुः ? स्वगुणाभिव्यक्तिसामर्थ्यमिति । तदिदं प्रधानत्वं परोक्तसाध्यप्रतिषेधे हेतुः । तदुक्तं भाष्यकारेण **तस्मादिति पदेन** । न सर्वगुणोपलब्धिरिति परोक्तसाध्यप्रतिषेधः । विषयग्राहकत्वं स्वस्वविषयग्रहणसामर्थ्यम् । त्रिष्विन्द्रियेषु सर्वगुणप्रसङ्गं विभज्य प्रदर्श्य निषेधति **एवमित्यादिना** । घ्राणस्य चतुर्गुणग्राहकत्वं न रसस्य त्रिगुणग्राहकत्वं न चक्षुषो द्विगुणग्राहकत्वं न एवं सर्वपदस्य विभागः । न सर्वगुणग्राहकत्वम् न सर्वगुणग्रहणे सामर्थ्यम् । किं पुनः सामर्थ्यं ? स्वरूपसहकारीत्याद्युक्तं न विस्मर्तव्यम् । एकैकगुणग्राहकत्वं त्रयाणामि-

( भा० ) यस्तु प्रतिजानीते—गन्धगुणत्वाद् घ्राणं गन्धस्य ग्राहकमेवंरसनादिष्वपीति,—तस्य यथागुणयोगं घ्राणादिभिर्गुणग्रहणं प्रसज्यत इति ॥ ६८ ॥

( भा० ) "किंकृतं पुनर्व्यवस्थानं—किञ्चित्पार्थिवमिन्द्रियं न सर्वाणि, कानिचिदाप्यतैजसवायव्यानि इन्द्रियाणि न सर्वाणीति"-

( सू० ) तद्व्यवस्थानं तु भूयस्त्वात् ॥ ६९ ॥

( भा० ) अर्थनिर्वृत्तिसमर्थस्य प्रविभक्तस्य द्रव्यस्य संसर्गः पुरुषसंस्कारकारितो 'भूयस्त्वम्' । दृष्टो हि प्रकर्षे भूयस्त्व-

---

(ख०) तस्य यथा गुणयोगमिति । "गन्धमात्रगुणत्वादेव घ्राणं गन्धस्य व्यञ्जकं नतु गन्धस्य तत्रोत्कर्षात्" इति यः प्रतिजानीते तस्य वादिनः सर्वेषामेव पार्थिवानां गुणानां घ्राणग्राह्यत्वप्रसङ्ग इति भावः।

---

(भा०चं०)त्याह **गन्धरसरूपग्राहकत्वमिति** । एकैकमात्रग्रहणे सामर्थ्यमित्यर्थः । तस्मात् सर्वगुणग्रहणसामर्थ्याभावात् । घ्राणादिभिः करणैः सर्वेषां चतुर्णां त्रयाणां द्वयोर्वा । नोपलब्धिः सम्भवतीति शेषः।

यस्तु यः पुनः प्रतिजानीते प्रतिज्ञां करोति गन्धगुणत्वात् ग्राहकं ग्रहणसमर्थम् । एवं रसनादिष्वपि । इति प्रतिजानीते इत्यन्वयः। तस्य मते यथागुणयोगं गुणग्रहणं घ्राणादिभिः प्रसज्यते नास्मन्मत इति भावः ॥ ६८ ॥

उत्तरसूत्रमवतारयितुं पृच्छति **किंकृतमित्यादि** । **तदित्यादिसूत्रम्** । तद्व्यवस्थानं पार्थिवत्वादिव्यवहारव्यवस्थानं । भूयस्त्वात् वैशेष्यात् प्रकृष्टत्वादिति यावत् । तदिदं सूत्रं व्याचष्टे-**ऽर्थेत्यादिना** । अर्थः कार्यं तस्य निर्वृत्तिर्निष्पत्तिरुत्पत्तिरिति यावत् । तत्र समर्थस्य शक्तस्य प्रविभक्तस्य पञ्चविधस्य द्रव्यस्य भूताख्यस्य संसर्गः प्रकृतिविकृतिभावः पुरुषसंस्कारकारितः

(भा०) शब्दः-प्रकृष्टो यथा विषयो भूयानित्युच्यते । यथा पृथगर्थक्रियासमर्थानि पुरुषसंस्कारवशाद्विषौषधिमणिप्रभृतीनि द्रव्याणि निर्वर्त्यन्ते, न सर्वं सर्वार्थम्,—एवं पृथग्विषयग्रहणसमर्थानि घ्राणादीनि निर्वर्त्यन्ते, न सर्वविषयग्रहणसमर्थानीति ॥६९॥

(भा०) "स्वगुणान्नोपलभन्ते इन्द्रियाणि । कस्मादिति चेत्"—

(सू०) सगुणानामिन्द्रियभावात् ॥ ७० ॥

(भा०) "स्वान् गन्धादीन्नोपलभन्ते घ्राणादीनि—केन

---

(ख०) स्वगुणानिति-सूत्रोपोद्घातपरं वाक्यम् । वृत्तिकृतस्त्वन्यथैवोपोद्घातमाहुः—घ्राणादीनां गन्धादिगुणवत्त्वे मानमाहेति ।

---

(भा०चं०)पुरुषकर्मविशेषकारितः । पुरुषयोः संस्कारः पुरुषसंस्कारः पुरुषयोर्जीवेश्वरयोर्जीवस्य समवायः सम्बन्धः । ईश्वरस्य वश्यवास? भावः सोऽयं संसर्गो भूयस्त्वमित्युक्तं । तदिदं भूयस्त्वं प्रकृष्टत्वमप्युच्यत इत्याह **दृष्टोहि प्रकर्ष इति** । भूयस्त्वशब्दः भूयस्त्वमितिशब्दः । भावेन भवितारं व्याचष्टे **प्रकृष्टो भूयानिति** । उक्तमर्थं दृष्टान्ते द्रढयति **यथेत्यादिना निर्वर्त्यन्त इत्यन्तेन** । निर्वर्त्यन्त इति णिजन्तस्य कर्मणि पदं तेन विचित्रशक्तिरीश्वरः कर्त्ताक्षिप्यते । तदविवक्षायां निर्वर्तन्त इत्येवोक्तं स्यात् । **पृथगिति** । पृथगर्थाः भिन्नभिन्नप्रयोजनानि तेषां क्रिया कृतिरुत्पत्तिरेव फलरूपभावस्य विवक्षितत्वात् तच्च साध्यनिष्ठत्वात् । साधकनिष्ठा हि कृतिर्व्यापार इति तस्यां समर्थानि शक्तानि । सर्वार्थं सर्वप्रयोजनसमर्थं । दार्ष्टान्तिकेऽपीदं दर्शयति **एवं पृथगित्यादिना** । निर्वर्त्यन्ते परमेश्वरेणेति शेषः ॥ ६९ ॥

परसूत्रमवतारयति **स्वगुणानित्यादिना** । **सगुणानामित्यादिसूत्रम्** । इन्द्रियभावात् इन्द्रियस्य भावो भावकत्वं भावना सामर्थ्यमेव स्वस्वविषयग्राहकत्वं तस्मात् । व्याचष्टे **स्वानित्यादिना** ।

( भा० ) करणेनेति चेत्"—स्वगुणैः सह घ्राणादीनामिन्द्रियभावात्। घ्राणं स्वेन गन्धेन समानार्थकारिणा सह बाह्यं गन्धं गृह्णाति। तस्य स्वगन्धग्रहणं सहकारिवैकल्यान्न भवति। एवं शेषाणामपि ॥ ७० ॥

( भा० ) "यदि पुनर्गन्धः सहकारी च स्याद् घ्राणस्य ग्राह्यश्च" त्यत आह—

( सू० ) तेनैव तस्याग्रहणाच्च ॥ ७१ ॥

( भा० ) न गुणोपलब्धिरिन्द्रियाणाम्। यो ब्रूते-'यथा बाह्यं द्रव्यं चक्षुषा गृह्यते तथा तेनैव चक्षुषा तदेव चक्षुर्गृह्यतामिति'-तादृगिदम्। तुल्यो ह्युभयत्र प्रतिपत्तिहेत्वभाव इति ॥ ७३ ॥

---

(ख०) तेनैवेति सूत्रं वृत्तिकारोऽन्यथा व्याख्यातवान्। तद्यथा-इत्थं च गन्धादिसिद्धौ अप्रत्यक्षत्वादनुद्भूतत्वकल्पनमित्याशेयनाह

---

(भा०चं०)स्वान् स्वगतान् गन्धादिस्पर्शपर्यन्तान् श्रवणस्य स्वगुणग्राहकत्वादिति वक्ष्यति। नोपलभन्ते नोपलम्भयन्ति तिङः प्रयोजककर्तृविवक्षयेदं बोध्यम्। विवक्षयापि कर्तुर्द्वैविध्यसिद्धेः। अनुपलम्भकत्वे हेतुमाह **स्वगुणैरित्यादिना**। स्वगुणैः स्वगतगुणसहितैः स्वगतगन्धादेः सहकारित्वमिति भावः। तदिदं स्फुटयति **घ्राणमित्यादिना**। समानार्थकारिणा अभिन्नकार्यकारिणा। बाह्यमनिन्द्रियगतं। बहिःशब्दस्य भिन्न इत्यर्थः। प्रत्ययस्य उत्पन्नोऽर्थः। गृह्णाति ग्राहयति। सहकारिवैकल्यात् सहकारिकारणासम्बन्धात् कार्यकारणत्वस्य भेदघटितत्वात्। शेषाणां स्पर्शपर्यन्तानाम् ॥ ७० ॥

भवत्वभेदेऽपि ग्राह्यग्राहकभाव इत्यत आह **तेनैवेत्यादिसूत्रम्**। सूत्रमिदं साध्यपूरणेन व्याचष्टे **नेत्यादि**। दृष्टान्तमापाद्योपहसति यो **ब्रूत इत्यादिना**। उभयत्र गन्धेन गन्धग्रहणे चक्षुषा चक्षुर्ग्रहणे प्रतिपत्तिहेत्वभावो लिङ्गाभावः ॥ ७१ ॥

( सू० ) "न, शब्दगुणोपलब्धेः" ॥ ७२ ॥

( भा० ) "स्वगुणान्नोपलभन्त इन्द्रियाणीति,—एतन्न भवति उपलभ्यते हि स्वगुणः शब्दः श्रोत्रेणेति" ॥ ७२ ॥

( सू० ) तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यात् ॥७३॥

( भा० ) न शब्देन गुणेन सगुणकामाशमिन्द्रियं भवति । न शब्दः शब्दस्य व्यञ्जकः ।

न च घ्राणादीनां स्वगुणग्रहणं प्रत्यक्षम्—नाप्यनुमीयते । अनुमीयते तु श्रोत्रेणाकाशेन शब्दस्य ग्रहणं शब्दगुणत्वं च

(ख०) तेनैवेति । 'तेन' इन्द्रियेण 'तस्य' सगुणस्य इन्द्रियस्य 'अग्रहणात्' अनुद्भूतत्वकल्पनमिति ॥

तदुपलब्धिरिति सूत्रम् । यथेतराणीन्द्रियाणि सगुणानि न तथाऽऽकाशम् । कस्मात् । शब्दस्येतरगुणवैधर्म्यात्, आकाशस्य चेतरद्रव्यवैधर्म्यादित्यर्थः । न श्रोत्रं सशब्दमिन्द्रियमिति भावः ।

इति तृतीयाध्यायप्रथमाह्निकखद्योतः ।

---

(भा०चं०)ज्ञापकमस्तीत्याह **नशब्द इत्यादिसूत्रेण** । तदिदं व्याचष्टे स्वेत्यादिना । तथाच शब्दः शब्दग्रहे सहकारिकारणमिति भावः । सगुणानामिन्द्रियभावादित्यविशेषोक्तेः ॥ ७२ ॥

आपादितमिदं खण्डयति **तदित्यादिसूत्रेण** । व्याचष्टे **नेत्यादिना** । शब्देनेत्यभेदे तृतीया । तस्य च सगुणमित्यत्रैकदेशेऽन्वयः । तथाच शब्दाभिन्नगुणसहितमित्यर्थः । इन्द्रियं न भवति शब्दग्राहकं न भवतीत्यर्थः । अत्र निषेधो विशेषणान्वयी "स विशेषणे हीति"न्यायात् । तदिदं स्पष्टयति **नेत्यादि** । व्यञ्जकः सहकारितया ग्राहकः । घ्राणादीनां स्वगुणग्राहकत्वे प्रमाणाभाव इत्याह **नचेत्यादिना** । तर्ह्याकाशस्यापि शब्दग्राहकत्वमास्त्वित्यत आह **अनुमीयते त्विति** । शब्द-

( भा० ) आकाशस्येति । परिशेषश्चानुमानं वेदितव्यम् । आत्मा तावच्छ्रोता, न करणम् । मनसः श्रोत्रत्वे बधिरत्वाभावः । पृथिव्यादीनां घ्राणादिभावे सामर्थ्यं श्रोत्रभावे चासामर्थ्यम् । अस्ति चेदं श्रोत्रम् । आकाशं च शिष्यते । परिशेषादाकाशं श्रोत्रमिति ॥ ७३ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्याद्यमाह्निकम् ॥

---

(भा० चं०) गुणत्वं शब्दग्राहकत्वं च द्वयमप्यनुमीयत इत्यर्थः । अत्र किमनुमानमित्यत आह **परिशेषश्चेति** । परिशेषं दर्शयति **आत्मेत्यादिना** । न करणं न श्रवणं बधिरत्वाभावः प्रसज्यत इति शेषः ।

अत्र वार्त्तिकम्—स्वगुणान्नोपलभन्ते इन्द्रियाणीति । तदयुक्तम् । स्वगुण उपलभ्यते आकाशेन शब्द इति । ( सत्यम् । उपलभ्यते ) न पुनः श्रोत्रं सशब्दमिन्द्रियमिति । यथेतराणीन्द्रियाणि सगुणानि नैवमाकाशमिति । कस्मात् ? शब्दस्येतरगुणवैधर्म्यात् आकाशस्य इतरद्रव्यवैधर्म्यात् । अस्यार्थस्य ज्ञापनार्थं "तदुपलब्धिरितरेतरद्रव्यगुणवैधर्म्यादिति" सूत्रम् । न शब्दः शब्दव्यञ्जको नाकाशं सगुणामिन्द्रियमिति । किं पुनरिदं श्रोत्रं ? आकाशमेव परिशेषात् । तत्रात्मा तावन्न श्रोत्रं कर्तृत्वात् । श्रोता आत्मा न श्रोत्रम् । मनः श्रवणं भविष्यतीत्यपि न, मनसः श्रोत्रत्वे बधिराद्यभावः प्रसज्यते इति । सर्वविषयत्वाच्च मनसः सर्वविषयं श्रोत्रं प्राप्नोति । पृथिव्याद्यपि न श्रोत्रं घ्राणादिभावेन विनियोगात् घ्राणादिभावे विनियुक्ताः पृथिव्यादयः । श्रोत्रभावे च घ्राणादीनां तद्वैकल्ये शब्दाऽनुपलब्धिप्रसङ्गः । त्वचः श्रोत्रभावे बधिराभावप्रसङ्गः । सर्वोपघाते च प्रायणम् । दिक्कालयोः श्रोत्रभावे च शब्दस्यान्यगुणत्वादग्रहणप्रसङ्गः । तद्गुणत्वमेवेति चेत् ? नाम्नि विवादः । यस्य शब्दो गुणस्तदाकाशं भवतां संज्ञामात्रं भिद्यते तौ दिक्कालाविति । आकाशप्रत्याख्यानञ्च अन्यगुणत्वाच्छब्दस्य । यदि शब्दो दिक्कालगुणो भवति आकाशं तर्हि प्रत्याख्यातं न हि शब्दमन्तरेणाकाशास्तित्वे लिङ्गमिति ।

(भा०चं०)यथा दिक्कालयोः परापरादि लिङ्गमिति । न च द्रव्यान्तरं शिष्यते । न च गुणानां श्रोत्रभावो युक्तः न कर्मणाम् । नच सामान्यविशेषसमवायानां सामर्थ्यानुपलब्धेः । नं चेदं श्रोत्रं नास्ति शब्दोपलब्धिलिङ्गत्वात् । शिष्यते चाकाशं तस्मादाकाशं श्रोत्रमितीतिं ॥७५॥

इति श्रीवात्स्यायनीये न्यायभाष्येऽर्थपरीक्षाप्रकरणभाष्यचन्द्रिका ।

समाप्तं तृतीयाध्यायस्य प्रथममाह्निकम् ।



## अथ तृतीयाध्यायस्य द्वितीयमाह्निकम् ।

### (१)बुद्ध्यनित्यताप्रकरणम् ।

(भा०) परीक्षितानीन्द्रियाण्यर्थाश्च । बुद्धेरिदानीं परीक्षाक्रमः । सा किमनित्या नित्या वेति ?

कुतः संशयः ?

**(सू०) कर्माकाशसाधर्म्यात्संशयः ॥ १ ॥**

---

(ख०)परीक्षितानीति । बाह्यप्रमेयपरीक्षां विधाय शरीरान्तर्वृत्तिप्रमेयपरीक्षामारभते—इति परिशुद्धिः । तत्र निबन्धप्रकाशकृतः—शरीरान्तर्वृत्तित्वं न तावच्छरीरान्तस्समवेतत्वम्, बुद्धिमनसोरतथात्वात् । नापि तत्संयुक्तत्वम्, बुद्धौ तदभावात् शरीराद्यतिव्यापकत्वाच्च ॥ एवं च शरीरावच्छेदव्याप्यभोगानुकूलसम्बन्धवद्वृत्तिकारणप्रमेयविभाजकोपाधिमत्प्रमेयपरीक्षैव द्वितीयाह्निकार्थ इति वक्तुं युक्तम् ॥ तद्रूपस्य निर्वेदोपयोगेन तत्र जिज्ञासोत्पत्तेः । न चातिव्याप्तिः । आत्मादिचतुष्के भोगानुकूलसम्बन्धस्य शरीरानवच्छेद्यत्वात् । अतिप्रसक्तेनापि रूपेणैकवाक्यतानिर्वाहाद्वा । तेन रूपेण बुद्धिमनसोरेव विवक्षितत्वात् ॥ यद्यप्येतावताऽपि नाह्निकयोः सङ्गतिरुक्ता बुद्धिमात्रस्याह्निकार्थाभावेनोत्तराह्निकार्थानभिधानात्—तथाऽपि बुद्धिपदस्योपलक्षणतया मनसोऽप्युपग्रहो भवत्येवेति ॥

---

(भा०चं०)कर्तृकर्मकरणानि आत्मादीनि चत्वारि प्रमेयाणि परीक्षितानि । इदानीं चतुर्भिः साध्या बुद्धिः क्रिया विचार्यते । तत्र सङ्गतिं दर्शयति **परीक्षितानीति** । इदानीमवसरप्राप्तौ इयमुक्तिः शिष्टावधानार्था । विचाराङ्गं संशयकोटिं दर्शयति **सा किमित्यादिना** । नित्या सदातनी अनित्या कादाचित्की । संशये हेतुं पृच्छति **कुत इति** । तत्रोत्तरं **कर्मेत्यादिसूत्रम्** । व्याचष्टे **अस्पर्शवत्त्वमि-**

( भा० ) अस्पर्शवत्त्वं ताभ्यां समानो धर्म उपलभ्यते बुद्धौ । विशेषश्चोपजनापायधर्मवत्त्वं विपर्ययश्च यथास्वमनित्यनित्ययोस्तस्यां बुद्धौ नोपलभ्यते । तेन संशय इति ॥ १ ॥

( भा० ) "अनुपपन्नः खल्वयं संशयः । सर्वशरीरिणां हि प्रत्यात्मवेदनीया अनित्या बुद्धिः सुखादिवत् । भवति च संवित्तिः— ज्ञास्यामि जानामि अज्ञासिषमिति । न चोपजनापायावन्तरेण

(ख०) विशेषश्चेति । 'विशेषश्च—उपजनापायधर्मवत्त्वम्—अनित्यनित्ययोः विपर्ययः बुद्धौ नोपलभ्यते'—इति सम्बन्धः ।

नचोपजनेति । यद्युपलभ्यमानज्ञानविषयः संशयः सोऽनुपपन्नः, साङ्ख्यानामपि तदनित्यत्वस्याभ्युपगमात् । अथ साङ्ख्याभिमतमहत्तत्त्वविषयः, तस्य महत्तत्त्वस्य सत्त्व एव विप्रतिपत्तिरिति, कुतस्तद्गतधर्मविचारः । सति धर्मिणि धर्मश्चिन्त्यते न सान्दिग्धसत्त्व इति ॥

(भा०चं०)ति । ताभ्यां कर्माकाशाभ्यां सह बुद्धौ समानो धर्म इत्यन्वयः । संशयनिर्वर्तककोटिद्वयं दर्शयति **उपजनापायधर्मवत्त्वं विपर्ययश्चेति** । उपजन उत्पत्तिरपायो विनाशः तदुभयधर्मवत्त्वं विपर्ययस्तदुभयधर्माभाववत्त्वं । यथास्वं यथास्वाश्रयं नोपलभ्यते न प्रमीयते । तेन विशेषधर्मादर्शनेन हेतुना संशयः ॥ १ ॥

प्रकरणमिदं नारम्भणीयं संशयासम्भवादित्याह **अनुपपन्न इत्यादि संशयप्रक्रियानुपपत्तिरित्यन्तेन** । त्रैकाल्यव्यक्तिस्त्रैकाल्यसम्बन्धः । त्रैकाल्यञ्च त्रिविधा क्रिया उत्पत्तिस्थितिविनाशरूपा । तदिदमुपपादयति **न चोपजनापायावन्तरेणेति** । त्रैकाल्यव्यक्तेः उत्पत्तिस्थितिविनाशशालित्वात् । अनित्याऽसार्वदिकी । सिद्धं प्रमितम् । युक्तिसिद्धमिदं शास्त्रेऽप्युक्तमित्याह **प्रमाणसिद्धमित्यादिना** । प्रमाणसिद्धं प्रमात्रनुभवसिद्धम् । तदुक्तं **ज्ञास्यामीत्यादिना** । तस्यार्थश्च स्वज्ञानमुत्पादयिष्यामी-

(भा० ) त्रैकाल्यव्यक्तिः । ततश्च त्रैकाल्यव्यक्तेरनित्या बुद्धि रित्येतात्सिद्धम् । प्रमाणसिद्धं चेदं शास्त्रेऽप्युक्तम्–'इन्द्रियार्थसन्निकर्षोत्पन्नम्,—युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' इत्येवमादि । तस्मात्संशयप्रक्रियानुपपत्तिरिति" ।

दृष्टिप्रवादोपालम्भार्थं तु प्रकरणम् ।

एवं हि पश्यन्तः प्रवदन्ति साङ्ख्याः–"पुरुषस्यान्तःकरणभूता नित्या बुद्धिरिति" ।

साधनं च प्रचक्षते–

---

(ख०) दृष्टिप्रवादेति । साङ्ख्यानां हि दर्शने प्रवादो महदन्तःकरणं बुद्धिरिति—तदुपालम्भनार्थं प्रकरणमिति । अयमभिप्रायः–नेह नित्यानित्यविचारः प्रधानतः, अपि त्वनया द्वारा वृत्तेरतिरिक्ता साङ्ख्याभिमता बुद्धिर्निराक्रियते सामान्यतो बुद्धिमात्रस्य नित्यानित्यत्वविचारेण । यदि हि नित्या बुद्धिः स्यात्ततो वृत्तिभ्य उदयवतीभ्यो व्यतिरिक्तं महत्तत्त्वमन्तःकरणं स्यात् । अथ तु नित्यत्वसाधनानि प्रतिसन्धानादीनि न बुद्धिनित्यत्वसाधनायालमिति वृत्तय एव बुद्धयो न तदतिरिक्तं बुद्धितत्त्वं सिध्यति । 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्'(सूत्र १।१।१५) इति हि बुद्धिलक्षणम् । तथा चास्य विचारस्य लक्षण एव सङ्गतिः । इतरथा तु प्रधानतो नित्यानित्यविचारो न लक्षणेन सङ्गच्छते॥

---

(भा० चं०)त्यादिः । युगपज्ज्ञानानुत्पत्तिरित्यनेन क्रमिकज्ञानोत्पत्तिरुक्ता एकविशेषप्रतिषेधेऽपरविशेषविधिलाभादन्यथा विशेषवैयर्थ्यापत्तेः । अनुपपत्तिमुपसंहरति **तस्मादिति** ।

पूर्वपक्षं निराकरोति **दृष्टिप्रवादेत्यादिना** । दृष्टिः सांख्यमतं सांख्यसिद्धान्तः तत्प्रयुक्तप्रवादः–सांख्यमतं सम्यक् नैयायिकमतं नेत्यादिरूपः तदर्थं प्रकरणमित्यर्थः । तेषां दृष्टिमनुवदति **एवं हीत्यादिना** । अन्तःकरणभूता मनोरूपा । नित्याऽविनाशिनी ।

( सू० ) "विषयप्रत्यभिज्ञानात्" ॥ २ ॥

( भा० ) "किं पुनरिदं प्रत्यभिज्ञानम् ? पूर्वमज्ञासिषमर्थं तमिमं जानामीति ज्ञानयोः समानेऽर्थे प्रतिसन्धिज्ञानं प्रत्यभिज्ञानम् एतच्चावस्थितताया बुद्धेरुपपन्नम्। नानात्वे तु बुद्धिभेदेषूत्पन्नापवर्गिषु प्रत्यभिज्ञानानुपपत्तिः । नान्यज्ञातमन्यः प्रत्यभिजानातीति" ॥ २ ॥

( सू० ) साध्यसमत्वादहेतुः ॥ ३ ॥

---

(ख०) बुद्धिनित्यत्वसाधनप्रदर्शनपरं सूत्रम्—विषयप्रत्यभिज्ञानादिति । वृत्तिमान् किल विषयं प्रत्यभिजानन् आत्मानमपि प्रत्यभिजानाति । न च चेतनो वृत्तिमान्, तस्य कूटस्थनित्यत्वात् । अन्यथा तु पूर्वापरावस्थाभेदवान्न कूटस्थनित्यः स्यात् । परिणामिनित्या तु बुद्धिरुदयव्ययवदनेकवृत्तिमती युज्यत इति भावः ॥

पूर्वसूत्रोक्तसाधनदूषणपरं सूत्रम्—साध्यसमत्वादिति ।

---

(भा०चं०)साधनं ज्ञापकं प्रचक्षते ब्रुवन्ति । चक्षिङ्व्यक्तायां वाचीति धातुः । **विषयेत्यादिसूत्रम्** । प्रत्यभिज्ञानं लक्षयितुं पृच्छति **किं पुनरिति** । तं पूर्वज्ञातं । इमं वर्तमानप्रमाणसन्निकर्षवन्तं । जानामि ज्ञानानुकूलवर्तमानकृतिमानस्मि । इति ज्ञानयोः पूर्वापरयोः । समानेऽर्थे एकस्मिन् विषये । प्रतिपत्तिज्ञानं स्वप्राप्तिज्ञानं । इदं प्रत्यभिज्ञानं प्रत्यभिज्ञानसंज्ञकम् । अवस्थिततायाः पूर्वकालवर्तमानायाः । एकस्या हेतोरुपपन्नं भवतीति शेषः । अनेकस्यास्त्वनुपपन्नमित्याह **नानात्वेत्यादि** । भेदेषु भिन्नभिन्नबुद्धिषु । उत्पन्नाः स्वरूपप्राप्ताः अपवर्गिणः त्यक्तस्वरूपाः कर्मधारयेण तेषु प्रत्यभिज्ञानानुपपत्तिः । अयं भावः—सा बुद्धिः कर्त्री पूर्वापरयोरेकैवेति । तदिदमाह **नान्येत्यादिना** ॥२॥

तमिमं हेतुं दूषयति **साध्येत्यादिसूत्रेण** । व्याचष्टे **यथे-**

( भा० ) यथा खलु नित्यत्वं बुद्धेः साध्यमेवं प्रत्यभिज्ञानमपीति । किं कारणम् ? चेतनधर्मस्य करणेऽनुपपत्तिः । पुरुषधर्मः खल्वयं-ज्ञानं दर्शनमुपलब्धिर्बोधः प्रत्ययोऽध्यवसाय इति । चेतनो हि पूर्वज्ञातमर्थं प्रत्यभिजानाति । तस्यैतस्माद्धेतोर्नित्यत्वं युक्तमिति । करणचैतन्याभ्युपगमे तु चेतनस्वरूपं वचनीयम् । नानिर्दिष्टस्वरूपमात्मान्तरं शक्यमस्तीति प्रतिपत्तुम् । ज्ञानं चेद्बुद्धेरन्तःकरणस्याभ्युपगम्यते चेतनस्येदानीं किं स्वरूपं को

---

(ख०) वृत्तयो हि वृत्तिमतो भिन्नाः । तेन तासामनित्यत्वेऽपि न वृत्तिमान् कौटस्थ्याच्च्यवते । तथा च प्रत्यभिज्ञानात् प्रत्यभिज्ञाता आत्मैव नित्यः स्यात्, न त्वन्तःकरणं बुद्धिसंज्ञकम् । न हि तत् प्रत्यभिज्ञाने प्रकाशत इत्याशयः ।

---

(भा०चं०)त्यादिना । बुद्धेर्भावभूतायाः करणभूताया वा । नित्यत्वं साध्यम् । एवं बुद्धेर्धर्मं प्रत्यभिज्ञानमपि नास्माभिर्बुद्धितत्करणयोर्धर्मं ज्ञानं मन्यत इति भावः । तत्र पृच्छति **किं कारणमिति** । उत्तरमाह **चेतनधर्मस्येति** । करणेऽन्तःकरणे । सप्तम्याधिकरणे । अनुपपत्तिरसम्भवः । स्वमते उपपत्तिमाह **पुरुषधर्म इति** । खल्वनिश्चितः । बुद्धेः पर्यायान् भावसाधनानाह ज्ञानं दर्शनमित्यादीन् । एतदनुभवेन द्रढयति **चेतनो हीत्यादिना** । चेतनश्चेतयिता पुरुषः यस्य बुद्धिश्चेतना स च मनसा बुध्यते मनोपि बुद्धिरित्युच्यतेऽस्माभिः करणव्युत्पत्त्या । तया हि बुद्ध्या प्रतिजानामीति व्यवहरति । तस्य चेतयितुः । एतस्मात्प्रत्यभिज्ञानात् । हेतोर्ज्ञापकात् । नित्यत्वं युक्तं प्रमितम् । भवतु करणधर्मश्चैतन्यमित्यत्राह **करणेत्यादि** । चेतनस्वरूपवचनं चैतन्यकर्तृस्वरूपवचनं प्रसक्तमिति शेषः । स्वमात्मा रूप्यते लक्ष्यतेऽनेनेति स्वरूपम् । नानिर्दिष्टस्वरूपं नादर्शितलक्षणकम् । आत्मान्तरं त्वदभिमतात्मभिन्न आत्मा । तदिदं व्याचष्टे

(भा० ) धर्मः किं तत्त्वम् ? ज्ञानेन च बुद्धौ वर्तमानेनायं चेतनः किं करोतीति ?

"चेतयते इति चेत्" न, ज्ञानादर्थान्तरवचनम् । पुरुषश्चेतयते बुद्धिर्जानातीति नेदं ज्ञानादर्थान्तरमुच्यते । चेतयते जानीते बुध्यते पश्यति उपलभते इत्येकोऽयमर्थ इति । "बुद्धिर्ज्ञापयतीति चेत्" अद्धा जानीते पुरुषो बुद्धिर्ज्ञापयतीति सत्यमेतत्। एवं चाभ्युपगमे ज्ञानं पुरुषस्येति सिद्धं भवति, न बुद्धेरन्तःकरणस्येति ।

---

(भा०चं०)**ज्ञानमित्यादिना** । रूपधर्मतत्त्वानि लक्षणपर्यायाः। परधर्मः परस्य निष्प्रयोजन इति पृच्छति **ज्ञानेन च बुद्धौ वर्तमानेनेति** । किं करोति किं साधयति ।

उत्तरमाशङ्के **चेतयत इति चेदिति** । चेतयते चेतनां साधयति । दूषयति **नेति** । ज्ञानादर्थान्तरवचनं युक्तमिति शेषः । एकार्थत्वेनायुक्तत्वं दर्शयति **नेदं ज्ञानादर्थान्तरमुच्यत इति** । ज्ञानात् बुद्धिलक्षणात् । इदं चेतयतिवाच्यं चैतन्यं पुरुषलक्षणं नार्थान्तरम् । तथा च पुरुषबुद्ध्योरेकलक्षणकत्वात् अभेदः प्रसक्त इति भावः । पर्यायैरेकार्थतां दर्शयति **चेतयते इत्यादिभिः पञ्चभिः** । इत्येकोऽर्थः । एषामेकोऽर्थ इत्यर्थः । इतिशब्दोऽयमव्ययमिदमर्थकः । पुरुषो जानीते बुद्धिर्ज्ञापयतीत्याशयमाशङ्कते **बुद्धिर्ज्ञापयतीति चेदिति** । इदमङ्गीकरोति **अद्धेति** ।**एवञ्चेति** । एवमुक्तप्रकारेण । नान्तःकरणस्येत्यस्यायमभिप्रायः । स्वनिष्ठं ज्ञानं कुर्वन् जानातीत्युच्यते परनिष्ठं ज्ञानं कारयन् ज्ञापयतीत्युच्यते तथा च ज्ञानज्ञापनयोर्भिन्नत्वात् न बुद्धेर्ज्ञानधर्मकत्वमिति ।

बुद्धेर्ज्ञानधर्म्मित्वे खण्डिते पुरुषस्य ज्ञानधर्मित्वे साधिते पुरुषभे-

(भा०)प्रतिपुरुषं च शब्दान्तरव्यवस्थाप्रतिज्ञाने प्रतिषेधहेतुवचनम् । यश्च प्रतिजानीते—"कश्चित्पुरुषश्चेतयते कश्चिद्बुध्यते कश्चिदुपलभते कश्चित्पश्यतीति" पुरुषान्तराणि खल्विमानि—चेतनो बोद्धोपलब्धा द्रष्टेति नैकस्यैते धर्मा इति। अत्र कः प्रतिषेधहेतुरिति।

"अर्थस्याभेद इति चेत्"—समानम् । "अभिन्नार्था एते शब्दा इति तत्र व्यवस्थानुपपत्तिः"—इत्येवं चेन्मन्यसे—समानं भवति-पु

(ख०) अर्थस्य अभेद इति वार्तिकसम्मतः पाठः । 'चेतयते'-'बुध्यते'—इत्यादिशब्दानामेकमेवाभिधेयम्—ततश्च एकेनैव ज्ञात्रा पुरुषेण तेषां सर्वेषामभिसम्बन्ध इति न युक्तम्भवति । एवं यदि पूर्वपक्षिणोऽभिप्रायस्तर्हि स एवार्थाभेदस्तस्यापि पक्षे न युज्यते एव । तथा हि 'बुद्धिर्जानाति'—'पुरुषश्चेतयते'—इत्यनयोर्वाक्ययोः ज्ञानचेतनयोरेकार्थत्वात्तयोः सम्बन्धस्य बुद्धिपुरुषयोर्द्वयोः कर्तुमयुक्तमेव भवति । वरमेकस्यैव सम्बन्धोऽभ्युपगन्तुमित्याशयः ॥

प्राचीनतालपत्रपुस्तकानुसारेण 'अर्थस्य भेद' इत्येव पाठः।

(भा० चं०) देन चेतनाज्ञानादयोऽपि क्रिया भिन्ना भिन्ना इति परस्य पक्षमाशङ्क्य दूषयति **प्रतिपुरुषमित्यादिना** । प्रतिपुरुषं भिन्ने भिन्ने पुरुषे इत्यर्थः । नाव्ययीभावादतोऽम्त्वपञ्चम्या_इति सप्तम्या अम् । तृतीयासप्तम्योर्बहुलमिति वचनात् । शब्दान्तराणि चेतयत इत्यादीनि । तेषां व्यवस्था भिन्नभिन्नपुरुषविषयिता । तत्प्रतिज्ञाने त्वया क्रियमाणे इति शेषः । प्रतिषेधः यश्चेतयते स न जानातीत्यादिरूपः । तस्य हेतुवचनं ज्ञापकवचनं त्वया कर्तव्यमिति शेषः । नहि निर्हेतुका प्रतिज्ञा प्रतिपन्नं बोधयितुं समर्थेति भावः । परप्रतिज्ञातस्वरूपाणि दर्शयति **कोपीत्यादिपञ्चभिर्वाक्यैः** । एते ज्ञानादयो धर्माः नैकस्य पुरुषस्येति प्रतिज्ञानेऽत्र कः प्रतिषेधहेतुः स वाच्य इति शेषः ।

हेतुं शङ्कते**ऽर्थस्य भेद इति चेदिति** । अपर्यायशब्दानां

( भा० ) पुरुषश्चेतयते बुद्धिर्जानीते इत्यत्राप्यर्थो न भिद्यते । तत्रो-भयोश्चेतनत्वादन्यतरलोप इति ।

"यदि पुनर्बुध्यतेऽनयेति बोधनं बुद्धिर्मन एवोच्यते, तच्च नित्यम्"—अस्त्येतदेवम् । न तु मनसो विषयप्रत्यभि-ज्ञानान्नित्यत्वम् । दृष्टं हि करणभेदे ज्ञातुरेकत्वात् प्रत्याभिज्ञा-

(ख०) स एव च भाष्यचन्द्रसम्मतः । तदनुसारेण सन्दर्भस्यास्यार्थ-श्चन्द्रादेवावगन्तव्यः ॥

(भा०चं०)चेतयतिप्रभृतीनामर्थस्य भेद इत्यर्थः । अर्थभेदमनङ्गीकृ-त्याह समानमित्यादि । समानं मदुत्तरमिति शेषः । अभिन्नार्था एकार्थाः । तथाच कोषः—

"बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः ।
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्तिचेतनाः" ॥ इति ।

इति अर्थाभेदात् । तत्र पुरुषेषु शब्देषु वा । व्यवस्थानु-पपत्तिः भेदकतानुपपत्तिर्भेद्यतानुपपत्तिर्वा । इत्येवं विचारसिद्धं चेद-र्थं मन्यसेऽङ्गीकरोषि तर्हि वक्ष्यमाणेऽपि समानं भवति । तद्दर्शयति पुरुषश्चेतयते बुद्धिर्जानीते इति । अर्थः चेतयतिजानात्योर-र्थः । उभयोः बुद्धिपुरुषयोः । चेतनत्वात् स्वनिष्ठज्ञानकर्तृत्वात् अन्य-तरलोपः अन्यतरस्य चेतनत्वानङ्गीकार इत्यर्थः । एकस्मिन् शरीरे द्वयोश्चेतनयोर्भोक्तृमात्रयोरसम्भवादिति भावः ।

बुद्धिर्न कर्त्री किन्तु करणमित्याशङ्क्याह यदि पुनरित्यादि । बोधनबुद्धिशब्दयोर्ल्युट्क्ती करणे प्रसिद्धतरप्रसिद्धार्थे । तदिदमङ्गी-करोति अस्त्येतदेवमेवेति । बुद्धिरूपं मनः नित्यं करणत्वमस्त्येवेत्यर्थः । किन्तु न तज्ज्ञानाश्रय इत्याह न-त्विति । प्रत्यभिज्ञानात् प्रत्यभिज्ञानसमवायित्वात् । प्रत्यभिज्ञानं तु ज्ञानकर्तुरेकत्वादित्याह दृष्टं हीति । करणभेदे इन्द्रियभेदे

( भा० ) नम्–'सव्यदृष्टस्येतरेण प्रत्याभिज्ञानादिति' चक्षुर्वत्, प्रदीपवच्च प्रदीपान्तरदृष्टस्य प्रदीपान्तरेण प्रत्यभिज्ञानमिति । तस्माज्ज्ञातुरयं नित्यत्वे हेतुरिति ॥ ३ ॥

( भा० ) यच्च मन्यते–"बुद्धेरवस्थिताया यथाविषयं वृत्तयो ज्ञानानि निश्चरन्ति, वृत्तिश्च वृत्तिमतो नान्येति"

तच्च—

## ( सू० ) न, युगपदग्रहणात् ॥ ४ ॥

(ख०) न युगपदिति सूत्रम् । वृत्तिमतोऽवस्थानात् वृत्त्यवस्थानप्रसङ्ग इति तदर्थः ।

---

(भा०चं०) योऽहं चक्षुषाऽद्राक्षं सोऽहं त्वचा स्पृशामीति । ज्ञातुरेकत्वमनुभूतं न तु करणस्येति भावः । तदिदमाह **सव्येत्यादिना**। एकत्वं चक्षुषि नास्तीति विवदमानं प्रत्याह **प्रदीपवदिति** । प्रदीपान्तरेणेति तृतीया । करणाङ्गमपि करणमित्युच्यते उपचारात् । प्रत्यभिज्ञानं हि द्विधा भवति विषयैकत्वात् कर्त्रैकत्वाद्वा विषयैकत्वं तु उपचारादप्युच्यते कर्त्रैकत्वं तु मुख्यमेव जातिस्मृत्याद्यनुपपत्तेः । न ह्यन्योऽनुभवत्यन्यः स्मरतीति । तदिदं प्रत्यभिज्ञानं ज्ञातुरेकत्वे हेतुर्नान्यस्येत्युपसंहरति **तस्मादिति**। ज्ञातुः स्वस्मिन् समवायेन ज्ञानकर्तुः३॥

करणत्वेऽपि ज्ञानाश्रयत्वं न विरुध्यत इत्याह **यच्चेति** । यथा कुलालः कर्ता दण्डोऽपि कर्ता कृत्याश्रय एव तथा मनोऽपि ज्ञानकर्तृ ज्ञानाश्रयो भविष्यतीति भावः । अवस्थितायाः स्थिरायाः । वृत्तयो व्यापाराः । **ज्ञानानीति** । तद्विशेषणमिच्छादिव्यावर्तकं । निश्चरन्ति प्रकृतिविकृतिभावेनोत्पद्यन्ते । बुद्धिर्हि प्रकृतिः ज्ञानेच्छादिर्हि विकृतिः। प्रकृतिविकृतिरप्यभेद इत्याह **वृत्तिश्चेति** । वृत्तिमतो वृत्तिं प्रकुर्वतः। नान्याऽभिन्नेत्यर्थः तथाच समवाये यदाश्रितं कार्यमुच्यते भवद्भिस्त-

(भा०) वृत्तिवृत्तिमतोरनन्यत्वे वृत्तिमतोऽवस्थानाद् वृत्तीनामवस्थानमिति यानीमानि विषयग्रहणानि तान्यवतिष्ठन्त इति युगपद् विषयाणां ग्रहणं प्रसज्यत इति ॥ ४ ॥

(सू०) अप्रत्यभिज्ञाने च विनाशप्रसङ्गः ॥ ५ ॥

(भा०) अतीते च प्रत्यभिज्ञाने वृत्तिमानप्यतीत इत्यन्तःकरणस्य विनाशः प्रसज्यते विपर्यये च नानात्वमिति ॥ ५ ॥

(भा०) अविभु चैकं मनः पर्यायेणेन्द्रियैः संप्रयुज्यत इति—

---

(ख०) अप्रत्यभिज्ञान इति सूत्रम्। वृत्तीनामपगमे वृत्तिमतोऽप्यपगम इति तदर्थः।

---

(भा०चं०)दस्माभिस्तादात्म्येनोच्यत(१) इति भावः। तादात्म्यञ्च भेदाभेदौ। तदिदं सांख्यमतं दूषयति **तच्चेति**। **न युगपदित्यादि सूत्रम्**। व्याचष्टे **वृत्तीत्यादि**। अनन्यत्वेऽभेदे एकत्वे इति यावत्। अवस्थानात् स्थिरत्वात् अवस्थानं स्थिरत्वमेव प्रसज्यत इति शेषः। इष्टापत्तौ दूषणमाह **युगपदित्यादि** ॥ ४ ॥

वृत्तिवृत्तिमतोरभेदे दूषणान्तरमप्याह **अप्रत्यभिज्ञाने चेत्यादि सूत्रम्**। व्याचष्टे **अतीते चेत्यादि**। सूत्रस्थनञ्पदस्य व्याख्यानमतीतेति। तथाच अप्रत्यभिज्ञान इत्यस्य नष्टे प्रत्यभिज्ञाने इत्यर्थः। विनाशप्रसङ्गः प्रत्यभिज्ञातुर्मनस इत्यर्थः। तदिदमध्याहृत्य व्याचष्टे **अन्तःकरणस्येति**। विपर्यये वृत्तिनाशेऽपि अन्तःकरणस्याविनाशे नानात्वं भेदः। प्रसज्यत इत्यनुषङ्गः ॥ ५ ॥

सांख्यसिद्धान्तं दूषयित्वा स्वसिद्धान्तमाह **अविभु चैकं मन इति**। पर्यायेण क्रमेण कालभेदेनेत्यर्थः। संप्रयुज्यते आत्मना कर्त्रा इन्द्रियेण चक्षुरादिना सह संयोज्यते। **क्रमेत्यादि सूत्रम्**। मनस इत्यध्याहृत्य

---

(टि०)१नैय्यायिकमते ययोः समवायस्तयोः सांख्यमते तादात्म्यमित्यर्थः।

**( सू० ) क्रमवृत्तित्वादयुगपद्ग्रहणम् ॥ ६ ॥**

( भा० ) इन्द्रियार्थानाम् । वृत्तिवृत्तिमतोर्नानात्वमिति । एकत्वे च प्रादुर्भावतिरोभावयोरभाव इति ॥ ६ ॥

**( सू० )अप्रत्यभिज्ञानं च विषयान्तरव्यासङ्गात् ॥ ७ ॥**

( भा० ) अप्रत्यभिज्ञानमनुपलब्धिः । अनुपलब्धिश्च कस्यचिदर्थस्य विषयान्तरव्यासक्ते मनस्युपपद्यते वृत्तिवृत्तिमतोर्नानात्वात् एकत्वे हि अनर्थको व्यासङ्ग इति ॥ ७ ॥

---

(ख०) क्रमवृत्तित्वादयुगपद्ग्रहणमिति सूत्रम् । 'अयुगपद्ग्रहणम्' 'इन्द्रियार्थानाम्'–इति भाष्येण सम्बन्धः ।

वृत्तीति । यत इन्द्रियार्थानामयुगपद्ग्रहणं भवति तत एव वृत्तिवृत्तिमतोर्नानात्वमिति ।

---

(भा०चं०) तेनान्वयः । व्याचष्टे **इन्द्रियेत्यादि** । इन्द्रियार्थानाम्–इन्द्रियाणि च अर्थाश्च ते तथा तेषां वृत्तिं कुर्वतां नानात्वमित्यन्वयः । वृत्तिमान् वृत्त्याश्रयः तदस्यास्त्यस्मिन्निति मतुबिति आश्रयाभिधानात् । वृत्तिर्ज्ञानं सन्निकर्षश्च तयोरपि नानात्वमेव । एवञ्च इन्द्रियार्थवृत्तीनां(१) न्यायसिद्धान्ते भेद एव । तथा चेतनचैतन्ययोरपि सांख्यमते दूषणं भवतीत्याह **एकत्वे चेति** । चस्त्वर्थे । प्रादुर्भावो जन्म तिरोभावो विनाशः । तदुभयधर्माऽनित्य इति बुद्धिरप्यनित्या स्यादिति भावः ॥ ६ ॥

स्वमते प्रत्यभिज्ञाऽप्रत्यभिज्ञे उपपादयति **अप्रत्यभिज्ञानञ्चेत्यादिसूत्रेण** । सूत्रे मनस इति शेषः । **व्याचष्टेऽनुपलब्धिश्चेत्यादि** । अनुपलब्धिर्मानसी मानसोपलब्ध्यभाव इत्यर्थः । व्यासक्ते व्याप्रियमाणे तद्विषयज्ञानाय तत्र संयोगं कुर्वतीत्यर्थः ॥ ७ ॥

क्रमेण संयोगोऽक्रमेण ज्ञानानि भविष्यन्तीत्याशङ्क्य दूषयति वि-

---

(टि०) १ इन्द्रियवृत्तिरिन्द्रियसन्निकर्षः ।

( भा० ) विभुत्वे चान्तःकरणस्य पर्यायेणेन्द्रियैः संयोगः

( सू० ) न, गत्यभावात् ॥ ८ ॥

(भा०)प्राप्तानीन्द्रियाण्यन्तःकरणेनेति प्राप्त्यर्थस्य गमनस्याभावः । तत्र क्रमवृत्तित्वाभावादयुगपद् ग्रहणानुपपत्तिरिति । गत्यभावाच्च प्रतिषिद्धं विभुनोऽन्तःकरणस्यायुगपद्ग्रहणं न लिङ्गान्तरेणानुमीयते इति । यथा चक्षुषो गतिः प्रतिषिद्धा सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणात्पाणिचन्द्रमसोर्व्यवधानेन प्रतीघाते सानुमीयत इति ।

---

(ख०)न गत्यभावादिति सूत्रम् । प्राप्तान्यन्तःकरणेनेन्द्रियाणीति तदर्थः ।

---

(भा०चं०)भुत्वे चेति । तन्मते विभु मनः अतः क्रमिकसंयोगो न सम्भवतीति अन्वयः सूत्रस्थनञा । **न गत्यभावादिति सूत्रम्।** गतिर्देशाद्देशान्तरं प्रति चलनं । तच्च मनसो न संभवति विभुत्वात् । अस्मन्मते मूर्तत्वात्संभवतीति भावः । सूत्रमिदं व्याचष्टे **प्राप्तानीति ।** प्राप्तपदमिदं कर्मक्तान्तं । संयुक्तानीत्यर्थः । अन्तःकरणेनेति कर्तरि तृतीया स्वभावेनैवेति शेषः । प्राप्त्यर्थमिति क्रियाविशेषणं । क्रिया चेह द्विविधा फलं व्यापारश्च तत्र फलविशेषणं न भवति । प्राप्त्यर्थमिति प्राप्तिपदेन फलस्योपादानात् प्राप्त्यर्थायाः प्राप्तेरसंभवात् । व्यापारस्यापि न विशेषणं व्याधिकरणत्वादिति चेन्न गमनस्येत्यत्र व्यापारस्य द्विधोक्तत्वात्—प्रकृत्या गतित्वेन ल्युटा भावत्वेन । तत्र प्रकृत्यर्थविशेषणं प्राप्त्यर्थमिति । प्रकृतिर्हि धातुः तदर्थस्य क्रियात्वादिति सूक्ष्मतरोऽर्थो ज्ञेयः । तत्क्रमवृत्तित्वाभावात् संबन्धक्रमवृत्तित्वाभावात् । अयुगपद्ग्रहणानुपपत्तिः क्रमिकज्ञानानुपपत्तिः । गत्यभावात् स्पन्दाभावात् । प्रतिषिद्धमसंभवादित्यर्थः । अयुगपद्ग्रहणं क्रमिकग्रहणं न लिङ्गान्तरेण न क्रमिकवृत्तिकत्वाभिन्नेन लिङ्गेनेत्यर्थः । व्यतिरेके दृष्टान्तमाह **यथा च-**

(भा०)सोऽयं नान्तःकरणे विवादो न तस्य नित्यत्वे। सिद्धं हि मनोऽन्तःकरणं नित्यं चेति ।

"क्व तर्हि विवादः" ।

तस्य विभुत्वे । तच्च प्रमाणतोऽनुपलब्धेः प्रतिषिद्धमिति ।

एकं चान्तःकरणं नाना चैता ज्ञानात्मिका वृत्तयः–चक्षुर्विज्ञानं घ्राणविज्ञानं रूपविज्ञानं गन्धविज्ञानम् । एतच्च वृत्तिवृत्तिमतोरेकत्वेऽनुपपन्नमिति । पुरुषो जानीते नान्तःकरणमिति।

---

(ख०) पुरुषो जानीत इति–स्वमतसाधनपरं भाष्यम् । यस्य पुनर्वृत्तिवृत्तिमतोर्नानात्वं तस्यान्तःकरणसाधनः चक्षुरादिसाधनश्चात्माऽर्थानुपलभत इति युक्तमेवेत्यर्थः ॥

---

(भा०चं०)क्षुषो गतिरित्यादि । तुल्यकालग्रहणादित्यस्य इत्यनेनेति शेषः । सा चक्षुषो गतिः । मनसो नित्यत्वे करणत्वे चाविवादं दर्शयति सोऽयमित्यादिना ।

नैयायिकं पृच्छति क्व तर्हि विवाद इति । विवादो विप्रतिपत्तिः । तवेति शेषः ।

उत्तरमाह तस्य विभुत्वे इति । विवाद इत्यनुषङ्गः । ममेत्यध्याहारः । तर्हि विवाद एवावशिष्यते नान्यतरमतमित्यनुशयेनाह तच्चेति । तच्च प्रतिषिद्धमित्यन्वयः । हेतुमाह प्रमाणतोऽनुपलब्धेरिति । नास्मान्प्रति मनसो विभुत्वे त्वया प्रमाणं दर्शयितुं शक्यमिति भावः ।

वृत्तिवृत्तिमतोरेकत्वेऽनुपपत्त्यन्तरमाह एकश्चेत्यादि । नानाऽनेकाः । तथा चैकानेकयोर्विरुद्धधर्मत्वात्तयोरभेदोऽनुपपन्न इति भावः। स्वमतमुपसंहरति पुरुषो जानीते नान्तःकरणमिति।

(भा०) एतेन विषयान्तरव्यासङ्गः प्रत्युक्तः। विषयान्तरग्रहणलक्षणो विषयान्तरव्यासङ्गः पुरुषस्य नान्तःकरणस्येति। क्वचिदिन्द्रियेण सन्निधिः क्वचिदसान्निधिरित्ययं तु व्यासङ्गोऽनुज्ञायते मनस इति॥ ८॥

(भा०) "एकमन्तःकरणं नानावृत्तय इति सत्यभेदे वृत्ते-

---

(ख०) एतेनेति—यदपि साङ्ख्या आचचक्षिरे "विषयान्तरव्यासक्तेऽन्तःकरणे चक्षुरादिसम्बद्धस्याप्यर्थस्याज्ञानादन्तःकरणवृत्तिर्ज्ञानमिति"—तन्निराकरणपरं भाष्यम्। 'एतेन'—पुरुषो जानीते नान्तःकरणमिति हेतुना—'विषयान्तरव्यासङ्गः'—अन्तःकरणस्य—'प्रत्युक्तः'। व्यासक्तो हि स भवति यो जानीते। न चान्तःकरणं जानीते, किन्तु पुरुष इति एतस्यैवेदृशो विषयान्तरग्रहणरूपो व्यासङ्गो, नान्तःकरणस्य। अन्यादृशस्त्वन्तःकरणस्य व्यासङ्ग इन्द्रियसंयोगरूपो न निषिध्यत इत्याशयः।

एकमन्तःकरणमिति चोद्यभाष्यम्॥ 'वृत्तेः'—(वृत्तिमतः)

---

(भा० चं०) **एतेनेति**। एतेन विभुत्वप्रतिषेधेन विषयाग्रहणलक्षणः (१)विषयान्तराग्रहणलक्षणः। न गृह्यतेऽनेनेत्यग्रहणं लक्षणं स्वरूपं यस्य स तथा। विषयान्तरव्यासङ्गः वर्तमानविषयान्तरज्ञानं पुरुषस्यात्मनः ज्ञानसमवायिनः नान्तःकरणस्य ज्ञानकरणस्य इति तव मतं प्रतिषिद्धमित्यर्थः। अस्मन्मते तु शृणु (२)**क्वचिदित्यादिना मनस इत्यन्तेन॥ ८॥**

---

(१) अत्र भाष्ये विषयान्तरग्रहणलक्षण इति पाठश्चन्द्रकृतो नाभिप्रेत इति द्रष्टव्यम्।

(२) अत्र केन क्वचिदिति भाष्यपाठः क्वाचित्को युक्त इति भाति चिदित्यस्य प्रत्येकमन्वयात्।

(भा०) रिदमुच्यते—

(सू०) "स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमानः" ॥९॥

(भा०) "तस्यां वृत्तौ नानात्वाभिमानः। यथा द्रव्यान्तरोपहितस्फटिकद्रव्येऽन्यत्वाभिमानो—नीलो लोहित इति। एवं विषयान्तरोपधानादिति"।

न, हेत्वभावात्। स्फाटिकान्यत्वाभिमानवदयं ज्ञानेषु नाना-

---

(ख०) 'अभेदे' (सति), 'एकमन्तःकरणं नानावृत्तय'-इति-'इदम् उच्यते' यत्-तत्र 'स्फटिकान्यत्वाभिमानवत्तदन्यत्वाभिमान' एवेति सूत्रेण सम्बन्धः॥ अयं च पूर्वपक्षाशयः—यद्यपि वृत्तयो नाना प्रतिभान्ति, तथाऽपि भ्रान्तिरियम्, एकस्मादन्तःकरणादभिन्नानां नानात्वानुपपत्तेः। तस्मात् स्फटिकस्य यथैकस्यापि तापिच्छजपाकर्णिकादिकुसुमोपधानाद् भेद औपाधिकः—एवमन्तःकरणस्यापि स्वच्छस्येन्द्रियप्रणालिकया तत्तदर्थोपरक्तस्यौपाधिकं नानात्वम्—इति॥

सूत्रोक्तं दूषयति न हेत्वभावादिति। योऽत्र दृष्टान्त उक्तः

---

(भा०चं०)प्रतिषिद्धमतः पुनः प्रत्यवतिष्ठते **एकमन्तःकरणमित्यादिना**। वृत्तयो ज्ञानानि वृत्तीनां वृत्तिमताऽभेदेऽपि सति उपचारान्नानात्वमित्याशयः। तत्र सूत्रं **स्फटिकेत्यादि**। तदन्यत्वाभिमानः वृत्त्यन्यत्वारोपः। सूत्रमिदं व्याचष्टे **तस्यामित्यादि**। वृत्तावन्तःकरणाभिन्नायामेकस्यां नानात्वाभिमानः नानात्वारोपः। द्रव्यान्तराणि रक्तनीलादिपुष्पादीनि तैरुपहितः समीपितः स्वप्रतिबिम्बितः स्फटिकः स चासौ द्रव्यञ्चेति तस्मिन् द्रव्यान्तरोपहितस्फटिकद्रव्ये अन्यत्वाभिमानः—रक्तोऽयं स्फटिको नीलस्फाटिकाद्भिन्नः नीलोऽयं स्फटिको रक्ताद्भिन्न इत्यादिरूपः। तादिदमाह **नीलो लोहित इत्येवमित्यन्तेन**। एवमित्यस्य विषयान्तरेत्यादावनुषङ्गः।

( भा० ) त्वाभिमानो गौणो न पुनर्गन्धाद्यन्यत्वाभिमानवदिति-हेतुर्नास्ति। हेत्वभावादनुपपन्न इति।

"समानो हेत्वभाव इति चेत्"—न, ज्ञानानां क्रमेणोपजनापायदर्शनात्। क्रमेण हीन्द्रियार्थेषु ज्ञानान्युपजायन्ते चापयन्ति चेति दृश्यते। तस्माद् गन्धाद्यन्यत्वाभिमानवदयं ज्ञानेषु नानात्वाभिमान इति ॥ ९ ॥

(ख०) स्फटिकवदिति—तत्र विकल्पः—अत्र किमयं स्फटिक उपधानभेदेन भिद्यते उत नेति। यदि भिद्यते—न दृष्टान्तः। अथ न भिद्यते नानात्वाभिमानः कथम्। यद्युपधानभेदान्नानात्वाभिमान इति—तर्हि भिन्नमुपधानमित्येव कथम्प्रतिपद्यसे। यदि प्रत्ययभेदात्—तर्हि भवति व्याघातः, प्रत्ययपर्यायत्वात् वृत्तेः। न च प्रत्ययाभेदवादिनः स्फटिके नीलादिप्रत्ययभेदो युक्तः॥

(भा०चं०) तदिदं दूषयति नैयायिकः(१) **न हेत्वभावादिति** सूत्रेण **स्फटिकेत्यादिना**। गौण आहार्यारोपः। यथा श्वेततुरगे सिंह इति। उभयसंमतदृष्टान्तमाह **न पुनर्गन्धेत्यादिना**। मुख्य इति शेषः। नानात्वाभिमान इत्यनेनान्वितः। हेतुर्नास्ति तव मते इति शेषः।

तवापि मतमनुपपन्नमित्याह सांख्यः **समान इति**। नैयायिकः प्रत्याचष्टे **न ज्ञानानामिति**। ज्ञानानामनेकेषां क्रमेण कालभेदेन। उपजनापायौ जनिविनाशौ स्वरूपप्राप्तित्यागौ तयोर्दर्शनात्। उपजायन्ते स्वरूपं प्राप्नुवन्ति। अपयन्ति स्वरूपं त्यजन्ति। धातूपात्तकर्मकत्वादकर्मकाविमौ। मुख्यं पक्षमुपसंहरति **तस्मादिति**। नानात्वाभिमानो मुख्य इति शेषः ॥ ९ ॥

इतिश्रीभाष्यचन्द्रे बुध्यानित्यत्वपरीक्षाप्रकरणभाष्यचन्द्रिका।

( टि० ) १ न हेत्वभावादिति सूत्रं वृत्तिकृदसम्मतमपि भाष्यचन्द्रे व्याख्यातत्वात्तत्सम्मतमेव।

( भा० ) 'स्फटिकान्यत्वाभिमानवत्' इत्येतदमृष्यमाणः क्षणिकवाद्याह—

( सू० ) "स्फटिकेऽप्यपरापरोत्पत्तेः क्षणिकत्वाद्व्यक्तीनामहेतुः" ॥ १० ॥

---

(ख०) एवं स्वमतेन साङ्ख्यपक्षं दूषयित्वा बौद्धैर्यत् साङ्ख्यसिद्धान्ते दूषणमुक्तं तद् दूषयितुं बौद्धमतमुपन्यस्यत्यत्र प्रकरणे। प्रयोजनं चास्य सर्वशास्त्रार्थोपकाराविशेषेऽपि प्राधान्यत आत्मासिद्धिरेव। स्थैर्ये हि सत्येव दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येवमादयः प्रतिसन्धानहेतवो निष्प्रत्यूहा भवन्ति । गुणगुणिभेदासिद्धौ चेच्छादयः क्वचिदाश्रिताः कार्यत्वात् गुणत्वाद्वेत्येवमादयश्च ॥

एतत्प्रकरणं केचित्पूर्वप्रकरणाङ्गत्वेनैव व्याचख्युः। तत्साधकत्वेन चैतत्प्रकरणोपसंहारवाक्यं सप्तदशसूत्रभाष्यस्थम्—'इत्युपपन्नमनित्या बुद्धिरिति' उपन्यस्तवन्तः॥ तत्त्वतस्त्वेतत्प्रकरणविषयो नितान्तं भिन्न एव। उक्तं भाष्यवाक्यं च केवलमुभयोः प्रकरणयोस्सम्बन्धप्रदर्शनार्थमित्यवधेयम् ॥

स्फटिकेऽपीत्यादि बौद्धोक्तिरूपं सूत्रम्। 'स्फटिकत्वाभिमानवदिति गोतमसूत्रोक्तम् हेतुः'—'स्फटिकेऽपि अपरोपरात्पत्तेः'। प्रतिक्षणं विलक्षणस्फटिकोत्पत्तेः। तत्र मानम्—'व्यक्तीनां क्षणिकत्वादिति।

---

(भा०चं०) औपोद्घातिकं क्षणभङ्गप्रकरणमारभ्यते **स्फटिकादिसूत्रभाष्याभ्याम्**। अमृष्यमाणोऽसहमानःक्षणिकवादी क्षणभङ्गविज्ञानवादी बौद्धः। आहेत्यस्य स्फटिकेत्यादिसूत्रमित्यन्वयः।

**स्फटिकेऽपीत्यादि सूत्रम्**। क्षणिकत्वात् क्षणमात्रावच्छिन्नसत्त्वकत्वात् व्यक्तीनां ज्ञानज्ञेयव्यक्तीनामित्यर्थः। व्याचष्टे **स्फटिकस्येत्यादिना**। पक्षः प्रतिज्ञातोऽर्थः स चा-

( भा० ) "स्फटिकस्याभेदेनावस्थितस्योपधानभेदान्नानात्वाभिमान इत्ययमविद्यमानहेतुकः पक्षः । कस्मात् ? स्फटिकेऽप्यपरापरोत्पत्तेः । स्फटिकेऽपि अन्या व्यक्तय उत्पद्यन्ते अन्या निरुद्ध्यन्त इति । कथम् ? क्षणिकत्वाद् व्यक्तीनाम् । क्षणश्चाल्पीयान्कालः-क्षणस्थितिकाः क्षणिकाः । कथं पुनर्गम्यते क्षणिका व्यक्तय इति ? उपचयापचयप्रबन्धदर्शनाच्छरीरादिषु । पक्तिनिर्वृत्तस्याहाररसस्य शरीरे रुधिरादिभावेनोपचयोऽपचयश्च प्रबन्धेन प्रवर्त्तते । उपचयाद्व्यक्तीनामुत्पादः, अपचयाद्व्यक्तिनिरोधः । एवं च सत्यवयवपरिणामभेदेन वृद्धिः शरीरस्य

---

(ख०)उपचयेति । 'शरीरादिषु उपचयापचयप्रबन्धदर्शनात् गम्यते यत् क्षणिका व्यक्तय' इति सम्बन्धः । अत्र प्रयोगः—प्रतिक्षणं शरीमन्यचान्यच्च भवति—बाह्यप्रत्ययाभेदे सत्यन्ते विशेषदर्शनात्—पच्यमानभूमिपाकजवदिति ।

एवञ्चेति । अयमत्र बौद्धोक्तेराशयः । यत् सत् तत् सर्वं क्षणिकम्—यथा शरीरम्—तथा च स्फटिकः । शरीरस्य च कालपरिपाक-

---

(भा०चं०) विद्यमानहेतुको मन्यतेऽसद्धेतुक इत्यर्थः । अक्षणिकवादी पृच्छति **कस्मादिति** । स्फटिके स्फटिकत्वाभिमते वस्तुनि समूहभूते इत्यर्थः । निरुध्यन्त इति कर्मकर्त्तरि प्रयोगः । क्षणलक्षणमाह **अल्पीयः काल इति** । यतो नाल्पीयान् कालस्तं क्षणमाचक्ष्महे अल्पीयानल्पतरः । क्षणिकपदस्य प्रकृत्यर्थमुक्त्वा प्रत्ययार्थमाह **क्षणस्थितिकाः क्षणिका इति** । स्थितिः सत्ता । तथाच प्रत्ययार्थः सन् क्षणावच्छिन्नात्मधारणकर्तेति समुदायार्थः । स्थिरवादी पृच्छति **कथं पुनरिति** । कस्माज्ज्ञापकादित्यर्थः । उत्तरमाह **उपचयेत्यादिना** । उपचयो वृद्धिः अपचयो ह्रासः तयोः प्रबन्धः समूहः । तस्य

( भा० ) कालान्तरे गृह्यते इति । सोऽयं व्यक्तिविशेषधर्मो व्यक्तिमात्रे वेदितव्य इति" ॥ १० ॥

( सू० ) नियमहेत्वभावाद्यथादर्शनमभ्यनुज्ञा ॥ ११ ॥

( भा० ) सर्वासु व्यक्तिषु उपचयापचयप्रबन्धः शरीरवदिति नायं नियमः । कस्मात् ? हेत्वभावात् । नात्र प्रत्यक्षमनुमानं वा प्रतिपादकमस्तीति । तस्माद्यथादर्शनमभ्यनुज्ञा । यत्र यत्रोपचयापचयप्रबन्धो दृश्यते तत्र तत्र व्यक्तीनामपरापरोत्पत्तिरुपचया-

(ख०) वशेन स्थौल्यस्य ह्रासस्य च दर्शनात् प्रतिक्षणं सूक्ष्मः परिणतिभेदोऽनुमीयते । स चान्तरा विनाश एवेति । यस्यापि स्फटिकादेस्तादृशस्थौल्यं ह्रासो वा न दृश्यते तस्यापि सत्त्वेन शरीरवदेव प्रतिक्षणं विनाशोत्पादावनुमीयेते इति ॥

बौद्धोक्तनियमनिराकरणपरं सूत्रम्—नियमेति ।

(भा०चं०)दर्शनात् ।पक्तिः पाकः विनाशविशेषः वृत्तस्य अतीतस्य विनष्टस्य आहाररसस्य भुक्तान्नपानादिद्रव्यस्य । रसोऽन्नपानादिसारः उत्कृष्टभागः दधिसारनवनीतवत् । रुधिरं तद्विकारभूतं शोणितम् । आदिशब्देन शुक्रपर्यन्तो धातुर्गृहीतः । प्रबन्धेन कार्यकारणभावेन वर्तते प्रवर्तते ॥ १० ॥

व्याप्तिममन्यमानो नैयायिकः प्रत्यवतिष्ठते **नियमेत्यादिसूत्रेण** । व्याचष्टे **सर्वासु व्यक्तिष्विति** । नायं नियमो नेयं व्याप्तिः । व्यक्तित्वावच्छेदेन उपचयापचयप्रबन्धो न व्यापक इत्यर्थः । क्षणिकवादी हेतुं पृच्छति **कस्मादिति** । अक्षणिकवाद्युत्तरं **हेत्वभावादिति** । हेत्वभावात् प्रमाणाभावात् । प्रमाणं विभागेनाशङ्क्य निषेधति **नात्रेत्यादिनाऽस्तीत्यन्तेन** । व्यवस्थामुपसंहरति **तस्माद्यथादर्शनमिति** । द्विधा दृश्यते व्यक्तिः कालभेदेऽपि स्फटिकादिव्यक्तिरेकरूपैव । शरीरादिव्यक्तिस्तु बाल्यादिकालभेदेन नाना-

(भा०) पचयप्रबन्धदर्शनेनाभ्यनुज्ञायते यथा शरीरादिषु। यत्र यत्र न दृश्यते तत्र तत्र प्रत्याख्यायते यथा ग्रावप्रभृतिषु। स्फटिकेऽप्युपचयापचयप्रबन्धो न दृश्यते। तस्मादयुक्तं स्फटिकेऽप्यपरापरोत्पत्तिरिति। यथा चार्कस्य कटुकिम्ना सर्वद्रव्याणां कटुकिमानमापादयेत्तादृगेतदिति ॥ ११ ॥

(भा०) यश्च—'अशेषनिरोधेनापूर्वोत्पादं निरन्वयं द्रव्यसन्ताने क्षणिकतां मन्यते' तस्यैतत्—

**(सू०) नोत्पत्तिविनाशकारणोपलब्धेः ॥ १२ ॥**

---

(ख०) नोत्पत्तीति सूत्रम्। उपचयापचयोत्पत्तिविनाशकारणोपलब्धेरित्यर्थः। उपचयापचयौ च तावुत्पत्तिविनाशकारणे चेति कर्मधारयसमासः।

---

(भा०चं०) रूपा। तदिदं स्फुटयति **यथा शरीरादिष्विति**। व्यतिरेकोदाहरणं **यथा ग्रावप्रभृतीत्यादि**। तस्मान्नियमवादुयुक्तिरयुक्तेत्याह **तस्मादयुक्तमिति**। शरीरदृष्टान्ते स्फटिकेऽपरापरोत्पत्तिसाधनमुपहसति **यथार्कस्य कटुकिम्नेत्यादिना**। कटुकिमा कटुकत्वं तेन सर्वद्रव्याणां गुडादीनामपि कटुकिमानं कटुरसमापादयेत्। गुणिनि विद्यमानाद्भावप्रत्ययेन गुणे वर्त्तमानात्तु सा जातिरभिधीयत इति ध्येयम्। आपादयेत् साधयेत् कश्चिन्मूढ इति शेषः। तादृगेतच्छरीरप्रबन्धेन स्फटिकप्रबन्धसाधनमित्यर्थः ॥ ११ ॥

नियमं दूषयित्वा क्षणभङ्गमपि दूषयितुमनुवदति **यश्चेत्यादिना मन्यत इत्यन्तेन**। अशेषनिरोधेन सर्वावयवभङ्गेन सर्वविनाशेन हेतुना तादृक्समूहोत्पादं निरन्वयं पूर्वांशासम्बद्धं द्रव्यसन्ताने द्रव्यसमूहे क्षणिकतां क्षणिकत्वाभिन्नं मन्यते स्वीकरोति। एतत्क्षणिकत्वं नेति सूत्रस्थेनान्वितम्। **नोत्पत्तीत्यादि सूत्रम्**। व्याचष्टे **उत्पत्ती-**

( भा० ) उत्पत्तिकारणं तावदुपलभ्यते अवयवोपचयो वल्मीकादीनाम् । विनाशकारणं चोपलभ्यते घटादीनामवयवविभागः । यस्य-तु अनपचितावयवं निरुध्यते अनुपाचितावयवं चोत्पद्यते-तस्याशेषानिरोधे निरन्वये वाऽपूर्वोत्पादे न कारणमुभयत्राप्युपलभ्यते इति ॥ १२ ॥

( सू० ) "क्षीरविनाशे कारणानुपलब्धिवद्दध्युत्पत्तिवच्च तदुत्पत्तिः" ॥ १३ ॥

( भा० ) "यथानुपलभ्यमानं क्षीरविनाशकाणं दध्युत्पत्तिकारणं चाभ्यनुज्ञायते तथा स्फटिके परापरासु व्यक्तिषु विनाशकारणमुत्पादकारणं चाभ्यनुज्ञेयमिति" ॥ १३ ॥

( सू० ) लिङ्गतो ग्रहणान्नानुपलब्धिः ॥ १४ ॥

(भा०चं०) **त्यादिना** । अवयवोपचयो वृद्धिरूपायामुत्पत्तौ कारणम् । अवयवापचयस्तु खण्डावयव्युत्पत्तौ कारणम् । उपलभ्यते वल्मीकवृक्षादीनां विभागः—आरम्भकावयवसंयोगनाशको गुणविशेषः । यस्य तु क्षणिकवादिनस्तु अनपचितावयवमभग्नावयवं विभक्तारम्भकावयवमिति यावत् । निरुध्यते नश्यति स्वरूपं जहाति । कर्मकर्तरि भाष्यप्रयोगः । उपचितावयवम् अधिकसंयुक्तावयवं न तथाऽनुपाचितावयवम् उत्पद्यते वर्द्धते । तस्य क्षणिकवादिनो मते । अविशेषनिरोधे इति षष्ठीतत्पुरुषसमासः । निरन्वये पूर्वावयवैरन्वयं विना । कारणं जनकम् । उपलभ्यते प्रमाणेनेति शेषः ॥ १२ ॥

एवं दूषितमपि स्वमतं क्षणिकवादी स्थापयति **क्षीरविनाशेत्यादि सूत्रेण** । व्याचष्टे **यथेत्यादिना** । दृष्टान्तसिद्धं दार्ष्टान्तिके स्थापयति **तथेत्यादिनाभ्यनुज्ञेयमित्यन्तेन** ॥ १३ ॥

इदमक्षणिकवादी दृष्टान्तासिद्ध्या निराचष्टे **लिङ्गत इत्यादि**-

( भा० ) क्षीरविनाशलिङ्गं क्षीरविनाशकारणं दध्युत्पत्तिलिङ्गं दध्युत्पत्तिकारणं च गृह्यतेऽतो नानुपलब्धिः । विपर्ययस्तु स्फटिकादिषु द्रव्येषु अपरापरोत्पत्तीनां न लिङ्गमस्तीत्यनुत्पत्तिरेवेति ॥ १४ ॥

---

(भा०च०) **सूत्रेण** । व्याचष्टे **क्षीरेत्यादिना** । क्षीरविनाशलिङ्गं तदवयवेषु दध्युत्पत्तिः समवायेन द्रव्योत्पत्तौ तेन द्रव्यान्तरस्य प्रतिबन्धकत्वात् । तथा चेमे क्षीरावयवाः क्षीरविनाशवन्तः क्षीरविरोध्यवयवोत्पत्तेः । विनाशेऽनुमिते कार्यत्वात्कारणमनुमीयत इत्याह **कारणं गृह्यत इति** । दध्युत्पत्तिलिङ्गं दधिप्रत्यक्षं तेन गृहीतायामुत्पत्तौ कार्यत्वात्कारणमनुमीयते । अतो ग्रहणात् नानुपलब्धिः । **विपर्यय इति** । न हि स्फटिकादिष्वपरापरोत्पत्तौ लिङ्गमस्तीति भावः । तदिदमुत्तरवाक्येनानुत्पत्तिरेवेत्यन्तेन स्पष्टयति ।

**अत्र वार्त्तिकम्** । स्फटिकादिव्यक्तीनामपरापरोत्पत्तौ लिङ्गं न नास्ति शीतोष्णस्पर्शभेदस्य नानात्वसाधनत्वात् । शीतोष्णस्पर्शभेदो नानात्वे दृष्टः । यथाऽभावुदके च । अस्ति चायं शीतोष्णस्पर्शभेदः स्फटिके । न । स तु निमित्तान्तराद्भवतीति । किं पुनर्निमित्तम् । अप्तेजोऽवयवानुप्रवेशः । अप्तेजोऽवयवाऽनुप्रवेशो न युक्तः अल्पतरबहुतरानुप्रवेशे हेत्वभावात्—हेमन्ते ह्याकाशे पर्युषितानां काष्ठभूम्यश्मलोहानां शैत्यस्योत्तरोत्तरो विशेषो दृष्टः । यथा पुनर्ग्रीष्मातपसन्तप्तानां तेषां पुनरौष्ण्यस्य, न हि तेष्वल्पतरबहुतरप्रवेशे कारणं पश्यामः । तस्मात्स्वगतमहाभूतविशेषापेक्षाणि आसादितबाह्यनिमित्तानि भूतान्येव तथोत्पद्यन्त इति युक्तम् । न युक्तं—न ह्यप्तेजोऽवयवाऽनुप्रवेशेन भूतस्वभावो निवार्यत इति । भूतस्वभावस्य चोभयपक्षसाम्यात् असाधनं भूतस्वभाव इति । विरुद्धश्चायं हेतुः । कस्मात् ? एकस्य विशेषाऽभ्युपगमात् । एकं वस्तु एकस्मिन् काले कठिनमुष्णं गच्छति चेति त्रिस्वभावकं प्राप्नोति ।

(भा०चं०)ततश्च विशेषदर्शनादित्ययं हेतुः "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः" इति विरुद्धो भवति। अथ मन्यसे विशेषमात्रं नानात्वं न प्रतिपादयति अपि तु विरोधी विशेषः। न। अभिप्रायापरिज्ञानात्—वयमपि न ब्रूमो विशेषमात्रं नानात्वसाधनमपि तु विरोधी विशेषः। इतरेतरव्यावृत्तो लक्षणत्वेनोपपन्नः स विरुद्धः। यद्यविरुद्धः स्यान्न लक्षणं स्यात्। एकवृत्तित्वे वा लक्षणत्रयस्य तत्तद्वस्तु किमभिधीयते। यदि तावत्पृथिवी तन्न युक्तमौष्ण्यदर्शनात्। अथ तेजः तदपि न। काठिन्यदर्शनात्। एतेन वायुर्व्याख्यातः। सोऽयं हेतुर्भूतलक्षणं बाधते नानात्वसाधनं वा न भवति। एतेन जले तापग्रहणं प्रत्युक्तम्। जलेऽग्निरूपग्रहणप्रसङ्गस्तु न युक्तः। अभिभवादित्येके। तन्न। सिद्धान्तापरिज्ञानात्—नायं सिद्धान्तो–जलरूपेणाग्निरूपमभिभूयत इति, अपि तु तेजसश्चातुर्विध्यात्(१)। अनुद्भुतरूपादि तेजसश्चातुर्विध्यं प्रतिपादितमिन्द्रियप्रकारणे। या चेयं प्रतिज्ञा अन्यश्चान्यश्च स्फटिके इति। अस्याः कोऽर्थः। यदि भिन्नत्वमात्रं तर्हि सिद्धासाधनं स्तम्भादेरन्यः स्फटिक इति। अथ स्फटिकान्तरादन्य इति। इदमपि तथैव। अथ पूर्वस्फटिकादन्यः। कतमोऽसौ पूर्वः स्फटिको यतोऽयमन्य इति। व्यवच्छेदस्याशक्यत्वादनभिधानम्—यथोभयपक्षसंप्रतिपन्ना रूपादयस्तेभ्योऽन्यानन्यविचारो घटादेर्युक्तः। न खलु पूर्वस्फटिकान्तरम् उभयपक्षसंप्रतिपन्नं यतो वर्तमानमन्यत्वेन साध्यते। अथोभयपक्षसंप्रतिपन्नं पूर्वस्फटिकान्तरम् तदा व्यर्थं साधनम्। अथ वर्तमानं स्फटिकमभ्युपगम्य यदतीतं स्फटिकान्तरं तदन्यदिति साध्यते एवं सति शीतोष्णस्पर्शभेदो

---

(टि०) १ तेजसश्चातुर्विध्यमुक्तं भाष्यकारेणेन्द्रियप्रकरणे तद्यथा उद्भूतरूपस्पर्शप्रत्यक्षम् उद्भूतरूपमनुद्भूतस्पर्शं प्रत्यक्षं उद्भूतस्पर्शमनुद्भूतरूपमप्रत्यक्षम् अनुद्भूतरूपस्पर्शमप्रत्यक्षमेवं चातुर्विध्यम्। उदाहरणानि भाष्यादनुसंधेयानि।

( भा० ) अत्र कश्चित्परिहारमाह—

( सू० ) न पयसः परिणामगुणान्तरप्रादुर्भावात् ॥ १५ ॥

(ख०)परीहारमिति—त्रयोदशसूत्रोक्तवौद्धकृताक्षेपस्येति यावत् ।

(भा०चं०) न तद्धर्मः वर्तमानस्फटिकधर्मत्वात् । वर्तमानाच्च स्फटिकादन्यदतीतमिति केनैतन्न प्रतिपन्नम् । अथ तदेवान्यदिति, व्याघातः—तर्हि तदेवान्यच्चेति । एवं यथायथा सूत्रमिदं विचार्यते तथातथा सिद्धसाधनं भवति सिद्धान्तञ्च वाधते इति । इत्थमन्यदप्यत्र वार्त्तिकं द्रष्टव्यम् ।

अथाक्षणिकत्वे किं प्रमाणम् । आधाराधेयभावात् एककालानुभाविनी कार्यकारणे कुण्डबदरवत् इति । अतश्च विप्रतिपन्ना अयुगपत्कालाः प्रत्यया एकविषयाः अव्युत्थायितत्प्रत्ययसामानाधिकरणत्वे सति समानशब्दवाच्यत्वात् वर्तमानैकक्षणानेकपुरुषप्रत्ययवत् । यथा वर्तमानक्षणविषयाणामनेकपुरुषप्रत्ययानामव्युत्थापितत्प्रत्ययसामानाधिकरण्ये सति समानशब्दवाच्यानामेकविषयत्वं तथाचाव्युत्थायितत्प्रत्ययसमानाधिकरणाः समानशब्दवाच्याश्च विप्रतिपन्ना अयुगपत्कालाः प्रत्ययाः । तेप्येकविषया इति । प्रत्यात्मं नानैककर्तृकाः प्रत्ययाः अप्रतिसन्धानप्रसङ्गात् देवदत्तादिप्रत्ययवदिति । रूपरसगन्धप्रत्ययाः एकानेकनिमित्ताः मयेति प्रतिसन्धानात् कृतसमयानां बहूनां वर्तमानक्षणानेकविज्ञानवदिति । श्वस्तनाद्यतनविज्ञानानि एकसन्ततौ एकानेकनिमित्तानि मयेति प्रतिसन्धानात् पूर्ववत् । शास्त्रार्थप्रत्ययाः एकानेकनिमित्ताः प्रतिसन्धानात्पूर्ववत् । नानाविषयाणामनेककर्तृकाणाञ्च प्रत्ययानामप्रतिसन्धानादिति पूर्ववन्न्याय इति ॥ १४ ॥

अत्र बाह्यनैयायिकयोर्विवादे सांख्यः समाधत्ते इत्याह **अत्र कश्चिदिति**। न **पयस इत्यादि सूत्रम्** । विनाश इत्यध्याहृत्य नेत्यनेनान्वयः । सूत्रमिदं व्याचष्टे **पयसः परिणाम इति**।

(भा० ) पयसः परिणामो न विनाश—इत्येक आह । परिणामश्च—अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिरिति ।

गुणान्तरप्रादुर्भाव—इत्यपर आह । गुणान्तरप्रादुर्भावश्च—सतो द्रव्यस्य पूर्वगुणनिवृत्तौ गुणान्तरमुत्पद्यत इति । स खल्वेकपक्षीभाव इव ॥ १५ ॥

( भा० ) अत्र तु प्रतिषेधः—

( सू० ) व्यूहान्तराद् द्रव्यान्तरोत्पत्तिदर्शनं पूर्वद्रव्यानिवृत्तेरनुमानम् ॥ १६ ॥

---

(ख०)गुणान्तरेति ।द्रव्यं तावत्सदेव, गुणोऽपि सन्नेव केवलमनुद्भूत आसीत्—एकश्चोद्भूतो गुणः तत्र य उद्भूतस्तिरोभवति पूर्वगुणस्य निवृत्तौ तिरोभूतौ गुणान्तरमुत्पद्यते तद् 'भवती'त्यर्थः ।

स खल्विति । उभयोरपि पक्षयोरेकमेवावसानम् । उभयत्र द्रव्यमवतिष्ठते—एकस्याविर्भावतिरोभावौ एकस्य च विनाशप्रादुर्भावाविति हृदयम् ।

---

(भा०चं०) स्वसिद्धान्तमाह सांख्यः । नैयायिकनास्तिकयोर्मतं पराचष्टे **न विनाशः पयस इति** । एकः सांख्यो ब्रूते । परिणामलक्षणमाह **परिणामश्चेत्यादिना** । अवस्थितस्य अपरित्यक्तस्वरूपस्य । द्रव्यस्य दुग्धादेः पूर्वधर्मनिवृत्तौ दुग्धत्वादिनिवृत्तौ धर्मान्तरोत्पत्तिर्दधित्वाद्युत्पत्तिः । इतिपदं सांख्योक्तसमाप्त्यर्थम् ॥

दुग्धत्वदधित्वादिसामान्यं नित्यं नोत्पद्यते न नश्यतीत्यतः परिणामान्यदन्य आह **गुणान्तरेत्यादि** । गुणान्तरमाकृत्यन्तरं तस्य प्रादुर्भाव उत्पत्तिः । अपर उत्तरोत्तरसांख्याः । गुणान्तरप्रादुर्भावं लक्षयति **सत इत्यादिना** । सतोऽवस्थितस्य । पूर्ववद्व्याख्यानम् । मतद्वयमेकीकृत्य निराकर्त्तुमाह **स खल्विति** । एकपक्षीभावो धर्मिणोऽविनाशात् ।१५।

( भा० ) सम्मूर्छनलक्षणादवयवव्यूहाद् द्रव्यान्तरे दध्न्युत्पन्ने गृह्यमाणे पूर्वं पयोद्रव्यमवयवविभागेभ्यो निवृत्तमित्यनुमीयते । यथा मृदवयवानां व्यूहान्तराद् द्रव्यान्तरे स्थाल्यामुत्पन्नायां पूर्वं मृत्पिण्डद्रव्यं मृदवयवविभागेभ्यो निवर्तते इति । मृद्वच्चावयवान्वयः पयोदध्नोर्नाशेषनिरोधे निरन्वयो द्रव्यान्तरोत्पादो घटत इति ॥ १६ ॥

---

(ख०) सम्मूर्च्छनेति । क्षीरावयवा एव हि क्षीराविनाशे सत्युत्पन्नपाकजाविलक्षणं द्रव्यमुत्पादयन्ति । यदि तु सर्वं कार्यं सदेव कारणव्यापारात्प्रागपि—तर्हि व्यर्थः कारणव्यापारः, अभिव्यक्तेरपि कार्यत्वेन सत्त्वात् । असत्त्वे वा यथा सैव न सती क्रियते एवं कार्यान्तराण्यपीत्याशयः ।

घटत इति । न ह्यनप्रवृत्तस्य पूर्वावस्थातोऽभिव्यक्ती भवतो विनाशप्रादुर्भावौ वेति तस्मादयुक्तमवस्थितस्य परिणाम इति ।

---

(भा०चं० ) नैयायिकसिद्धान्तमाह **अत्र तु प्रतिषेध इति** । **व्यूहान्तरादित्यादि सूत्रम्** । व्यूहान्तरं व्याचष्टे **संमूर्च्छनलक्षणादिनि** । समूर्च्छनं पूर्वव्यूहभङ्गे सति दध्यारम्भकहेतुसंयोगे सति दध्यारंभकावयवसंयोगः तल्लक्षणं यस्य तस्मात् । दध्नि दध्यादौ । उप उपपन्ने स्वरूपं प्राप्ते सति गृह्यमाणे दृश्यमाणेऽवयवविभागेभ्यो हेतुभ्यः निवृत्तं विनष्टं त्यक्तस्वरूपमिति यावत् । अत्र दृष्टान्तमाह **यथेत्यादिना** । **पूर्वपिण्डमिति** । पिण्डमिति नपुंसकप्रयोगो यजुःशाखिनां साधुः मृद्वच्चावयवान्वयः मृद्वत् मृत्पिण्डस्येव घटादौ दुग्धनाशो दध्नि अवयवान्वय इत्यर्थः । पयोदध्नोर्द्वयोरपि अभिन्नावयवसम्बन्ध इत्यर्थः । अवयवास्तन्त्रं अवयवी न तु भावः । नन्ववयवान्वयं विनैवोत्पद्यतां द्रव्यान्तरमित्यत आह **निरन्वयो न घटत इति** ॥ १६ ॥

( भा० ) अभ्यनुज्ञाय च निष्कारणं क्षीरविनाशं दध्युत्पादं च प्रतिषेध उच्यते इति—

( सू० ) क्वचिद्विनाशकारणानुपलब्धेः क्वचिच्चोपलब्धेरनेकान्तः ॥ १७ ॥

( भा० ) क्षीरदधिवन्निष्कारणौ विनाशोत्पादौ स्फटिकव्यक्तीनामिति नायमेकान्त इति। कस्मात्? हेत्वभावाद्—नात्र हेतुरस्ति—अकारणौ विनाशोत्पादौ स्फटिकादिव्यक्तीनां क्षीरदधिवद्, न पुनर्यथा विनाशकारणभावात् कुम्भस्य विनाश उत्पत्तिकारणभावा चोत्पत्तिः। एवं स्फटिकादिव्यक्तीनां विनाशोत्पत्तिकारणभावाद्विनाशोत्पत्तिभाव इति।

निरधिष्ठानं च दृष्टान्तवचनम्। गृह्यमाणयोर्विनाशो-

---

(ख०)गृह्यमाणयेरिति। धर्मिणमाश्रित्य तत्समानधर्मा दृष्टान्तो भवति। स्फटिकोत्पादविनाशौ च धर्मिणौ। तत्समानधर्मतया क्षीरदधिविनाशोत्पादयोर्दृष्टान्तवचनेन भवितव्यम्। न पुनः स्फटिकोत्पादविनाशौ धर्मिणौ गृह्येते तस्मान्न तत्समानधर्मतया दृष्टान्तावुक्तौ भवत इति तात्पर्यम् ॥

---

( भा० चं० ) अभ्युपगमवादेनापि दूषणं वक्तुं सूत्रमवतारयति **अनुभ्यज्ञाय चेत्यादिना**। **क्वचिदित्यादि सूत्रम्**।

व्याचष्ट **क्षीरेत्यादि**। एकान्तो नियमः नेयं व्याप्तिरित्यर्थः। पृच्छति **कस्मादिति**। उत्तरमाह **हेत्वभावादिति**। हेत्वभावात् विनिगमकाभावात्। विनिगमकाभावं प्रकटयति। **नात्रेत्यादिना इतीत्यन्तेन**।

( भा० ) त्पादयोः स्फटिकादिषु स्यादयमाश्रयवान् दृष्टान्तः—क्षिरविनाशकारणानुपलब्धिवद्दध्युत्पत्तिवच्चेति । तौ तु न गृह्येते । तस्मान्निरधिष्ठिनोऽयं दृष्टान्त इति ।

अभ्यनुज्ञाय च स्फटिकस्योत्पादविनाशौ योऽत्र साधकस्तस्याभ्यनुज्ञानादप्रतिषेधः । कुम्भवन्न निष्कारणौ विनाशोत्पादौ स्फटिकादीनामित्यभ्यनुज्ञेयोऽयं दृष्टान्तः—प्रतिषेद्धुमशक्यत्वात् । क्षीरदधिवत्तु निष्कारणौ विनाशोत्पादाविति—शक्योऽयं प्रतिषेद्धुं कारणतो विनाशोत्पत्तिदर्शनात् । क्षीरदध्नोर्विनाशोत्पत्ती पश्यता तत्कारणमनुमेयम् । कार्यलिङ्गं हि कारणम् । इत्युपपन्नमनित्या बुद्धिरिति ॥ १७ ॥

---

( भा० चं० ) निराधिष्ठानं निर्विषयं प्रमाणाभावाद्विषयो नास्तीति भावः । विनाशोत्पत्त्योर्निरधिष्ठानत्वं प्रकटयति **गृह्यमाणयोरित्यादि** । स्फटिकादिषु विनाशोत्पत्त्योर्गृह्यमाणयोः सतोः अयं दृष्टान्त आश्रयवान् स्यादित्यर्थः । **अयं भावः** । स्फटिकादिषु विनाशोत्पादौ यदि गृह्येतां तदा दृष्टान्तः सविषयः स्यादिति । दृष्टान्तो दृष्टान्तवचनम् । उपसंहरति तस्मादिति ।

कार्यानुमेयं कारणं निषेद्धुमशक्यमित्याह **अभ्यनुज्ञाय चेत्यादि शक्यत्वादित्यन्तेन** । अत्र विनाशोत्पादकयोः । तस्य साधकस्य अभ्यनुज्ञानात् स्वीकारात् । अप्रतिषेधः प्रतिषेधाभावः । प्रतिषेद्धुं शक्यं दृष्टान्तमाह **क्षीरेत्यादिना** । प्रासङ्गिकमुपपाद्य प्रकृतमुपसंहरति **अनित्या बुद्धिरिति** ॥ १७ ॥

इति श्रीभाष्यचन्द्रे औपोद्घातिकक्षणभङ्गप्रकरणभाष्यचन्द्रिका ॥

बुद्धेर्नित्यत्वानित्यत्वपरीक्षां कृत्वा इदंधर्मत्वं निश्चेतुं विचारमारभते इदन्त्वित्यादि ॥

## ( ३ ) बुद्ध्यात्मगुणत्वप्रकरणम् ।

( भा० ) इदं तु चिन्त्यते—कस्येयं बुद्धिरात्मेन्द्रियमनोर्थानां गुण इति । प्रसिद्धोऽपि खल्वयमर्थः परीक्षाशेष प्रवर्त्तया-

(ख०)अत्रैव भाष्यचन्द्रस्य विरतिः ।

अतः परम्—

दैवस्य दुर्विपाकात् कालगतेरेव दुर्निवारत्वात् ।
अस्तं गमिते चन्द्रे खद्योतो द्योतते नितराम् ॥

क्षणभङ्गप्रकरणानन्तरं बुद्धेरात्मगुणत्वप्रतिपादनपरम्प्रकरणं प्रारभ्यते । सांख्याभिमतानित्यबुद्धितत्त्वानिराकरणे सति बुद्धेरात्मगुणत्वं सम्भाव्यते । नित्यबुद्धिसद्भावे ज्ञानस्य तद्धर्मत्वादात्मधर्मत्वानुपपत्तिः । अतः पूर्वप्रकरणमुत्तरस्य हेतुर्निर्वाहकं चेति युक्तमिदानीन्तस्यावतारः ।

प्रयोजनं चास्य प्रकरणस्य शरीरादिव्यतिरिक्तात्मसिद्धिरेव । आत्मप्रकरणे हि प्रतिसन्धानबलेन बुद्ध्याऽऽत्मा साधितः, इह तु गुणतयेति विवेकः ।

सर्वस्य क्षणिकत्वे समवायिकारणत्वस्यैवाभावः । तथा चात्मनि बुद्धिर्गुणतया समवैतीति न सभाव्यते । बुद्धेरात्मगुणत्वं यद्यपि तृतीयाध्यायाद्याह्निकस्थचतुर्दशसूत्र एव साधितं तथाऽपि बुद्धिरूपगुणस्याधारत्वेनैवात्मा सन्निति साधितमत्र त्वात्मनो गुणभूता बुद्धिः सतीति साध्यत इति विवेचनीयम् ।

कस्येयमिति । आत्मेन्द्रियमनोऽर्थानां (मध्ये) कस्य गुण इयं बुद्धिरिति सम्बन्धः ।

प्रसिद्धोऽपीति । यद्यप्ययमर्थः प्रागेव । ३ । १ । १ । परीक्षितस्तथाऽप्यवान्तरविशेषपरिज्ञापनार्थं पुनः परीक्ष्यते । तथाहि परलोकिनमात्मानं साधयता बुद्धिप्रतिकर्तृत्ववच्छरीरादिव्यतिरिक्तस्यैव स्मृतिसंस्कारानुभवाश्रयत्वमपि साधितमेवेत्याशयः ।

(भा०)मीति प्रक्रियते । सोऽयं बुद्धौ सन्निकर्षोत्पत्तेः संशयः विशेषस्याग्रहणादिति ।

तत्रायं विशेषः—

( सू० ) नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात् ॥ १८ ॥

(भा०)नेन्द्रियाणामर्थानां वा गुणो ज्ञानं तेषां विनाशे ज्ञानस्य भावात् । भवति खल्विदामिन्द्रियेऽर्थे च विनष्टे ज्ञानमद्राक्षमिति । न च ज्ञातरि विनष्टे ज्ञानं भवितुमर्हति । अन्यत् खलु वै तदिन्द्रियार्थसन्निकर्षजं ज्ञानं यदिन्द्रियार्थविनाशे न भवति । इदमन्यदात्समनःसन्निकर्षजम् । तस्य युक्तो भाव इति ।

---

(ख०)प्रकरणविषये संशयमूलं दर्शयति सोऽयमिति । बुद्ध्युत्पत्तौ आत्मनः इन्द्रियस्य अर्थस्य च सन्निकर्षोऽपेक्ष्यतेऽत एवैतेषामेव गुणः सेति ज्ञायते किन्त्वेतेषां मध्ये कस्यैकस्येति संशयो जागर्त्ति ॥

तत्रेति । आत्मन एव गुणो बुद्धिर्नान्यस्येत्यत्र पक्षे साधकीभूतो 'विशेषः' विशिष्टो हेतुः प्रदर्श्यते सूत्र इति शेषः ॥

नेन्द्रियार्थयोरित्यादि सूत्रम् । न इन्द्रियार्थयोः(गुणो बुद्धिः) तयोः (इन्द्रियार्थयोः) विनाशेऽपि ज्ञानस्य (बुद्धेः, बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरमिति सूत्रम्) अवस्थानात् इतिसम्बन्धः ॥

सूत्राक्षरार्थमाह नेन्द्रियाणामिति । अन्धस्य अद्राक्षमिति ज्ञानं भूतपूर्वं ज्ञानं परामृशति न च तत्काले दर्शनेन्द्रियमस्ति दृष्टोऽर्थो वा । न चैदिन्द्रियार्थयोर्ज्ञातृत्वे सम्भवतीत्याह न चेति । ज्ञातरि विनष्टे द्रष्टुरभावे अद्राक्षमिति ज्ञानन्न सम्भवति । ज्ञानानां प्रकारभेदं प्रदर्शयति अन्यादिति । अयं घट इति ज्ञानमिन्द्रियार्थसन्निकर्षोत्पन्नमिन्द्रियार्थयोरभावे न भवति-तस्मात् भिन्नप्रकारकमपरं ज्ञानमद्राक्षमिति केवलमात्समनस्सान्निकर्षजम् ।

(भा०)स्मृतिः खल्वियमद्राक्षामिति पूर्वदृष्टविषया। न च विज्ञातरि नष्टे पूर्वोपलब्धेः स्मरणं युक्तम्, न चान्यदृष्टमन्यः स्मरति। न च मनसि ज्ञातर्यभ्युपगम्यमाने शक्यमिन्द्रियार्थयोर्ज्ञातृत्वं प्रतिपादयितुम् ॥ १८ ॥

( भा० ) "अस्तु तर्हि मनोगुणो ज्ञानम्"—

( सू० ) युगपज्ज्ञेयानुपलब्धेश्च न मनसः ॥१९॥

---

(ख०) तस्येति—आत्ममनस्सन्निकर्षमात्रजस्य ज्ञानस्य भावोऽस्तित्वम् इन्द्रियार्थयोरभावेऽपि युक्त एव—यतो नात्रेन्द्रियार्थसान्निकर्षस्यावश्यकता। पूर्वोक्तयोर्ज्ञानयोरपरमपि भेदं प्रकटयति स्मृतिरिति। अद्राक्षमिति ज्ञानं स्मृतिरूपं पूर्वदृष्टार्थविषयं भूतवर्तमानकालावस्थायि द्रष्टुरस्तित्वमपेक्षते। ननु मन एव ज्ञातृ भवतु कोऽर्थ आत्मनोऽन्तर्गडुभूतस्येत्यत आह न च मनसीति। मनो यदि ज्ञातृ स्यात् तथाऽपि न भवतीन्द्रियार्थयोर्गुणो बुद्धिरिति। ततश्च नेन्द्रियार्थयोरिति सौत्रः सिद्धान्तः सुस्थित एव। अभ्युपगमवादोऽयम्। न च तत्त्वतो मनसो ज्ञातृत्वं सम्भवति ॥ १८ ॥

अभ्युपगमवादमवलम्ब्य परः प्रत्यवतिष्ठते—अस्तु तर्हीति। यदीन्द्रियार्थयोर्गुणो बुद्धिर्न भवितुमर्हति तर्हि मनस एवास्तु—एवञ्च न बुद्धेरात्मगुणत्वं सिद्ध्यतीत्यर्थः।

बुद्धेर्मनोगुणत्वमपाकरोति—युगपादित्यादि सूत्रम्। त्रिधा व्याख्यातोऽस्य सम्बन्धः ॥ स यथा (१)यन्मनो युगपज्ज्ञेयानुपलब्धेर्हेतोरनुमीयते तस्य मनसो गुणो ज्ञानं न भवतीति। अत्र व्याख्याने 'युगपज्ज्ञेयानुपलब्धे'रिति मनसोऽनुमाने हेतुः,न पुनर्ज्ञानस्य मनोगुणत्वाभावे। (२)यतो युगपज्ज्ञेयोपलब्धिर्न भवति ततो न मनसो गुणो ज्ञानमिति। (३)अणुमनोद्वारा योगिनो युगपज्ज्ञेयोपलब्धिर्या भवति तस्या असम्भवः

(भा०)युगपज् ज्ञेयानुपलब्धिरन्तःकरणस्य लिङ्गम् । तत्र युगपज् ज्ञेयानुपलब्ध्या यदनुमीयते अन्तःकरणं न तस्य गुणो ज्ञानम् । "कस्य तर्हि ?" ज्ञस्य वशित्वात् । वशी ज्ञाता वश्यं करणं, ज्ञानगुणत्वे वा करणभावनिवृत्तिः । घ्राणादिसाधनस्य च ज्ञातुर्गन्धादिज्ञानभावादनुमीयते–अन्तःकरणसाधनस्य सु-

---

(ख०)स्याद्यदि मनोगुणो ज्ञानं स्यात् । अनयैवानुपपत्त्या मनोगुणो न ज्ञानमिति सिध्यतीति । अयं हेतुः सूत्रस्थचकारेण समुच्चितोभवतीति भाष्यकारः ॥

युगपज्ज्ञानानुपलब्धिर्मनसो लिङ्गमिति प्रथमाध्यायगतं सूत्रं स्मारयति भाष्यकारः युगपदिति । सूत्रार्थमाह तत्रेति । युगपज्ज्ञेयानुपलब्धेर्हेतोर्यस्यान्तःकरणस्यास्तित्वं साध्यते तस्य गुणो ज्ञानन्न भवति । यदि न मनसः कस्य द्रव्यस्य तर्हि गुणो ज्ञानमिति परः पृच्छति कस्येति । तत्रोत्तरम् ज्ञस्य वशित्वादिति । एतच्च 'ज्ञस्य वशित्वादिति' वाक्यं सूत्रत्वेन प्रसिद्धमपि भाष्यमेवेति मन्तव्यमिति परिशुद्धिकृतः । तस्यार्थं स्पष्टयति–वशीति । यो वशी स्वतन्त्रः स एव ज्ञाता ज्ञानगुणवानिति यावत्, यच्च वश्यं परतन्त्रं तत् करणमेव । कर्तुरेव स्वातन्त्र्यात्–कर्तृकरणादिसमवधाने चैतन्यं कर्तर्येव दृष्टं न करणादाविति तात्पर्यम् । इष्टापत्तिमाशङ्क्य निराकरोति–ज्ञानगुणत्व इति । यदि मनो ज्ञानगुणवद्भवेत्तर्हि तस्य करणत्वमेवापेयादित्यर्थः यतो न वश्यस्य करणस्य ज्ञानगुणवत्तेति भावः । मनसः करणत्वं द्रढयति–घ्राणादिकरणवत एव पुरुषस्य गन्धादिज्ञानं भवतीति लोके दृश्यते अत एवानुमीयते यन्मनोरूपान्तःकरणवतः पुरुषस्यैव सुखादिज्ञानं स्मृतिश्चेति । घ्राणादि साधनं यस्य–अन्तःकरणं साधनं यस्येत्युभयत्रापि बहुव्रीहिः । ननु भवत्वन्तःकरणसाधनवत एव ज्ञानं गुणः, मन

( भा० )खादिज्ञानं स्मृतिश्चेति । तत्र यज् ज्ञानगुणं मनः स आत्मा, यत्तु सुखाद्युपलब्धिसाधनमन्तःकरणं मनस्तादिति संज्ञाभेदमात्रं नार्थभेद इति ।

युगपज् ज्ञेयानुपलब्धेश्च योगिन इति वा चार्थः । योगी खलु ऋद्धौ प्रादुर्भूतायां विकरणधर्मा निर्माय सेन्द्रियाणि शरीरान्तराणि तेषु युगपज् ज्ञेयान्युपलभते । तच्चैतद्विभौ ज्ञातर्युप-

---

( ख० ) एव तदन्तःकरणसाधनवत्, अतो मनस एव गुणो ज्ञानम्-एवम्भूतस्य साधनवद्रूपस्य मनस आत्मेति संज्ञा—यच्च साधनरूपम्मनस्तस्य संज्ञाऽन्तःकरणमित्यत आह—तत्र यदिति । संज्ञाभेदमात्रं नार्थभेद इति । एवं सति एको ज्ञाता ज्ञानगुणवान् अपरश्च ज्ञानकरणमित्युभयोरावयोः समानमेव । भेदस्तु केवलमेतावन्मात्रमेव यत् यं ज्ञातारं भवान् मन इति व्यपदिशति तमेव वयं आत्मेति व्यपदिशाम इति तात्पर्यम् ।

सूत्रस्थचकारेण सूचितं हेत्वन्तरं प्रकटयति युगपदिति । योगिन इति शेष इत्यर्थः । चार्थ इति सूत्रस्थस्य चकारस्यार्थ इति यावत् । उक्तहेतोस्तात्पर्यं विशदयति योगी खल्विति । ऋद्धाविति योगजसिद्धावित्यर्थः । विकरणेति । विशिष्टं योगजसंस्कारविशेष-सहकृतं करणं 'विकरणम्'-विकरणं धर्मो यस्य स 'विकरणधर्मा' अस्मदादिकरणाविलक्षणकरणवान्—येन व्यवहितविप्रकृष्टसूक्ष्मादिवेदी भवतीति यावत् । निर्मायेति—योगबलेन विशिष्टेन्द्रियवन्ति तत्तत्कार्यविशेषोपयोगीनि शरीरविशेषाण्यात्मनो निर्माय—तेषु तेषु नानाशरीरविशेषेषु युगपदेव ज्ञेयानि जानाति योगी । तच्चैतदिति—योग्यनुभूतयुगपदनेकज्ञेयज्ञानामित्यर्थः । विभाविति—उक्तनानाशरीरवर्ती यदा

( भा० )पद्यते नाणौ मनसीति। विभुत्वे वा मनसो ज्ञानस्य नात्मगुणत्वप्रतिषेधः। विभु च मनस्तदन्तःकरणभूतमिति तस्य सर्वेन्द्रियैर्युगपत् संयोगाद्युगपज् ज्ञानान्युत्पद्येरन्निति ॥ १९ ॥

( सू० ) "तदात्मगुणत्वेऽपि तुल्यम्" ॥ २० ॥

( भा० ) "विभुरात्मा सर्वेन्द्रियैः संयुक्त इति युगपज् ज्ञानोत्पत्तिप्रसङ्ग इति" ॥ २० ॥

---

(ख०)ज्ञातैको भवति तदैवोक्तं युगपज्ज्ञानं सम्भवति। मनस एव कथं न संभवतीत्यत आह नाणाविति। अणु खलु मनो न चाणोरनेकशरीरवर्तित्वं सम्भवति- ततश्चानेकशरीरवर्तिनानायुगपज्ज्ञानानि मनसो न भवितुमर्हन्तीति भावः। ननु मनोऽणुत्वे नास्माकमाग्रहः विभ्वेव तदस्तु तथाच तस्य नानाज्ञानवत्त्वे न काचिदनुपपत्तिरित्यत आह- विभुत्व इति। मनसो विभुत्वेऽनुपपत्त्यन्तरम्भवति, ततश्च तदभ्युपगमो बुद्धेरात्मगुणत्वप्रतिषेधाय न प्रभवति। तामेवानुपपत्तिं दर्शयति-विभु चेति। यद्यन्तःकरणभूतम्मनो विभु तदा तत्सर्वदा सर्वेन्द्रियसंयुक्तं वर्तेत एव ततश्च सर्वदा सर्वेन्द्रियार्थज्ञानानि युगपदेव भवेयुः। न च तत्सम्भवति। नैव कदाचिदपि ज्ञानानि युगपदुत्पद्यन्त इति सार्वजनीना प्रतीतिरिति भावः ॥ १९ ॥

परः प्रत्यवतिष्ठते-तदात्मेति सूत्रेण। ज्ञानस्य 'आत्मगुणत्वेऽपि' 'तत्'-ज्ञानयौगपद्यम्-'तुल्यम्'। आत्मनो विभुत्वेन तस्य सर्वदा सर्वेन्द्रियैः संयुक्तत्वादिति भावः ॥

तदेव व्याचष्टे भाष्यकारः-विभुरात्मेति। 'संयुक्त' इति-सर्वदेति भावः। यथा ज्ञानस्य विभुमनोगुणत्वे युगपज्ज्ञानोत्पत्तिप्रसङ्गस्तथैव विभ्वात्मगुणत्वेऽपीति समानमेवैषाऽनुपपत्तिरुभयोरपि पक्षयोरतश्च नैकम्प्रत्यपरेण पर्यनुयोज्येति हृदयम् ॥ २० ॥

(सू०) इन्द्रियैर्मनसः सन्निकर्षाभावात्तदनुत्पत्तिः॥२१॥

(भा०) गन्धाद्युपलब्धेरिन्द्रियार्थसन्निकर्षवदिन्द्रियमनःसन्निकर्षोऽपि कारणम् । तस्य चायौगपद्यमणुत्वान्मनसः । अयौगपद्यादनुत्पत्तिर्युगपज् ज्ञानानामात्मगुणत्वेऽपीति ॥ २१ ॥

(भा०) यदि पुनरात्मेन्द्रियार्थसन्निकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते—

(सू०) नोत्पत्तिकारणानपदेशात् ॥ २२ ॥

---

(ख०) उक्तं प्रत्यवस्थानमपाकरोति—इन्द्रियैरिति सूत्रम् । आत्मनो विभुत्वात्तस्य सन्निकर्षे सत्यपि ज्ञानोत्पत्ताविन्द्रियमनस्सन्निकर्षस्याप्यपेक्षितत्वादणोश्च मनसोऽनेकेन्द्रियैस्सह युगपत्सान्निकर्षस्यासम्भवान्न युगपज्ज्ञानोत्पत्तिसम्भव इत्यर्थः ॥

सूत्रार्थं वर्णयति गन्धादीति । गन्धादीनामनेकेषामर्थानामुपलब्धौ यथा इन्द्रियार्थयोः आत्ममनसोश्च सन्निकर्षोऽपेक्ष्यते तथैवेन्द्रियमनसोरपीति । अस्त्वेवं किन्तेनेत्यत आह—तस्येति । इन्द्रियमनस्सन्निकर्षस्येत्यर्थः । न चात्मा विभुरतस्तस्य सान्निकर्षस्य युगपत्सम्भवे कथन्न युगपज्ज्ञानोत्पत्तिरित्यत आह—अयौगपद्यादिति । मनसोऽणुत्वान्न तस्य सन्निकर्षोऽनेकैरिन्द्रियैस्सम्भवतीत्यतो मनस्सन्निकर्षासम्भवे युगपज्ज्ञानोत्पत्तेरसम्भव एव । अतो यद्यपि विभोरात्मनो गुणो ज्ञानं तथाऽपि न युगपज्ज्ञानोत्पत्तिसम्भवः ॥ २१ ॥

मनस्सन्निकर्षस्याप्युपलब्धावावश्यकताम्पुनः समर्थयते—यदीति । "मनस्सन्निकर्षानपेक्षं केवलमात्मेन्द्रियार्थसन्निकर्षादेव गन्धादिज्ञानमुत्पद्यते" इति स्यान्मतमित्युपोद्घातभाष्यार्थः ॥

तस्य मतस्योत्तरम्—नोत्पत्तीति सूत्रम् । नैतन्मतमादरणीयम् यतोऽत्र प्रतिज्ञामात्रं क्रियते—ज्ञानोत्पत्तौ मनस्सन्निकर्षो नापेक्ष्यत इत्यत्र 'कारणं'

(भा०)आत्मेन्द्रियसन्निकर्षमात्राद् गन्धादिज्ञानमुत्पद्यते नात्रोत्पत्तिकारणमपदिश्यते येनैतत्प्रतिपद्येमहीति ॥ २२ ॥

( सू० ) "विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः" ॥ २३ ॥

(भा०) "तदात्मगुणत्वेऽपि तुल्यम्–इत्येतदनेन समुच्चीयते । द्विविधो हि गुणनाशहेतुः–गुणानामाश्रयाभावो विरोधी

---

(ख०)प्रमाणं न अपदिश्यते प्रदर्श्यते–इत्यर्थः । यथोक्तं वार्त्तिककृद्भिः–अस्मादेवोत्पद्यतामिति न कारणमपदिश्यत इति सूत्रार्थ इति । अत्र-अस्मादेवेत्यात्मेन्द्रियार्थसन्निकर्षमात्रादित्यर्थः । विश्वनाथस्त्विदमपि सूत्रं पूर्वपक्षत्वेनोपवर्णितवान्। तन्मतेन चैवं सूत्रार्थः–बुद्ध्युत्पत्तौ कारणस्य अनपदेशात् अकथनात् नात्मगुणो बुद्धिः, आत्ममनस्संयोगस्य कारणत्वे ज्ञानस्य सार्वदिकत्वप्रसङ्ग इति ॥

आत्मेन्द्रियसन्निकर्षमात्रादिति । मनस्सन्निकर्षनिरपेक्षादिति मात्रार्थः । उत्पत्तिकारणमिति–आत्मेन्द्रियसन्निकर्षमात्रादुत्पत्तिर्ज्ञानस्येत्यत्र 'कारणं' प्रमाणामित्यर्थः । प्रतिपद्येमहीति–स्वीकुर्यामेति यावत् ॥२२॥

पुनः प्रत्यवस्थानम्-विनाशकारणेत्यादि सूत्रेण । आत्मनो नित्यत्वात् तत्रैव च ज्ञानस्य समवेतत्वात् ज्ञानस्य विनाशकारणमाश्रयनाशादिरूपं न सम्भवति–अतस्तस्य सर्वदा 'अवस्थाने' वर्तमानत्वे तस्य नित्यत्वप्रसङ्ग इति सूत्रार्थः ।

सूत्रस्थचकारार्थं वर्णयति भाष्यकारः-तदात्मेति । एतत्सूत्रोक्त आक्षेपो विंशसूत्रोक्ताक्षेपेण सहैवोद्भाव्यते । अतश्चैवं समुच्चितोऽर्थः–बुद्धेरात्मगुणत्वे तस्या विनाशकारणानुपलब्धेस्तन्नित्यत्वमिति । उक्तां विनाशकारणानुपलब्धिं विशदयति–द्विविध इति । यस्मिन् द्रव्ये यो गुणः समवैति तस्य द्रव्यस्य नाशे तद्गुणस्य

(भा०) च गुणः। नित्यत्वादात्मनोऽनुपपन्नः पूर्वः। विरोधी च बुद्धेर्गुणो न गृह्यते तस्मादात्मगुणत्वे सति बुद्धेर्नित्यत्वप्रसङ्गः" ॥ २३ ॥

(सू०) अनित्यत्वग्रहाद्बुद्धेर्बुद्ध्यन्तराद्विनाशः शब्दवत् ॥ २४ ॥

(भा०) अनित्या बुद्धिरिति सर्वशरीरिणां प्रत्यात्मवेदनीयमेतत्। गृह्यते च बुद्धिसन्तानः। तत्र बुद्धेर्बुद्ध्यन्तरं विरोधी

---

(ख०) नाश इत्येकः प्रकारः—यथा घटनाशे घटगतरक्ततादिगुणनाशः। वर्तमानगुणविरोधिगुणान्तरोत्पत्तावपि पूर्वगुणस्य नाशो भवतीत्यपरः प्रकारः—यथा द्वितीयशब्दोत्पत्तौ प्रथमशब्दस्य नाशः। आत्मगुणे ज्ञाने पूर्वः प्रकारो न सम्भवतीति प्रदर्शयति—नित्यत्वादिति। आत्मैव ज्ञानस्याश्रयस्तस्य नित्यत्वादेव तन्नाशासम्भवादाश्रयनाशान्नाशो ज्ञानस्य न सम्भवति। पूर्व इति आश्रयनाशान्नाश इत्यर्थः। द्वितीयोऽपि नाशप्रकारो न सम्भवतीत्याह—विरोधीति। यस्य गुणान्तरस्योत्पत्तावात्मवृत्तिज्ञानस्य नाशः स्यात्तादृशं गुणान्तरन्नैव गृह्यते। उपसंहरति—तस्मादिति। द्वयोरपि नाशकारणयोरसम्भवान्नित्यत्वमेव ज्ञानस्यावतिष्ठते तच्चासमञ्जसमेवेत्याक्षेपार्थः ॥ २३ ॥

उक्तमाक्षेपं परिहरति—अनित्यत्वेत्यादि सूत्रम्। यथा शब्दस्य शब्दान्तरेण विनाशस्तथैव बुद्धेरपि बुद्ध्यन्तरेण विनाशो भवत्येवेति न तन्नित्यत्वप्रसङ्ग इत्यर्थः।

अनित्यत्वग्रहादिति सौत्रं पदं व्याचष्टे—अनित्येति। ज्ञानमनित्यमिति सर्वेषां जीवानामनुभवसिद्धमेतत्। उक्तमेवानुभवं प्रदर्शयन् ज्ञानस्य नाशकारणमपि प्रदर्शयति—गृह्यत इति। प्रतिज्ञानमस्माभिर्ज्ञानधारोपलभ्यते—प्रथमं घटज्ञानं ततो घटमहं जानामीति ज्ञानमेवं

( भा० )गुण इत्यनुमीयते यथा शब्दसन्ताने शब्दः शब्दान्तर-विरोधीति ॥ २४ ॥

( भा० ) "असङ्ख्येयेषु ज्ञानकारितेषु संस्कारेषु स्मृतिहेतुष्वात्मसमवेतेष्वात्ममनसोश्च सन्निकर्षे समाने स्मृतिहेतौ सति न कारणस्यायौगपद्यमस्तीति युगपत्स्मृतयः प्रादुर्भवेयुः यदि बुद्धिरात्मगुणः स्यादिति ।"

तत्र कश्चित्सन्निकर्षस्यायौगपद्यमुपपादयिष्यन्नाह—

(ख०) क्रमेण । ततश्च स्पष्टमेतत् प्रतीयते—यदेकं ज्ञानमपरेण तदनन्तरभाविना विनाश्यते । तथाच विरोधिगुणान्तरोत्पत्त्यैव ज्ञानस्य नाश इति सुस्थिरम् । सूत्रोक्तं शब्ददृष्टान्तं परिष्करोति—यथा शब्देति । प्रतिशब्दं शब्दसन्तानः सर्वैरुपलभ्यते—तत्र चाद्यः शब्द उत्तरभाविना शब्देन विरोधिगुणान्तरेण नाश्यत इति सर्वैरेवाभ्युपगम्यत इत्यर्थः ॥ २४ ॥

बुद्धेरनित्यत्वे साधितेऽपि तस्या आत्मगुणत्वमसहमानः परः स्मृतिमादाय प्रकारान्तरेण प्रत्यवतिष्ठते-असङ्ख्येयेष्विति । मा भून्नित्या बुद्धिः । अनन्तनानाज्ञानजनिताः संस्कारास्तु सर्वे आत्मनि समवयन्ति—आत्ममनसोश्च सन्निकर्षो वर्तत एव सर्वदा—संस्कार आत्ममनस्सन्निकर्षश्चेत्युभयमेव स्मृतीनां हेतुः—अनयोश्चोक्तप्रकारेण वर्तमानत्वात् अनन्तनानास्मृतीनां कारणानां युगपदेवोपस्थितौ सर्वास्ताः स्मृतयो युगपदेवोत्पद्येरन् । उक्तस्याक्षेपस्य प्रकृते सम्बन्धं प्रदर्शयति—यदि बुद्धिरिति । बुद्धेरात्मगुणत्वे तज्जनितसंस्कारस्याप्यात्मसमवेतत्वमेवेत्यर्थः ।

एकदेशिमतमुपस्थापयति—तत्रेति । तत्र पूर्वोक्ताक्षेपविषये कश्चित् नैयायिकैकदेशी नानाज्ञानजन्यसंस्कारसन्निकर्षाणामयौगपद्यप्रदर्शनेन परिहारमाहेत्यर्थः ।

( सू० ) "ज्ञानसमवेतात्मप्रदेशसन्निकर्षान्मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिः" ॥ २५ ॥

(भा०) "ज्ञानसाधनः संस्कारो ज्ञानमित्युच्यते। ज्ञानसंस्कृतैरात्मप्रदेशैः पर्यायेण मनः सन्निकृष्यते। आत्ममनःसन्निकर्षात्स्मृतयोऽपि पर्यायेण भवन्तीति" ॥ २५ ॥

( सू० ) नान्तःशरीरवृत्तित्वान्मनसः ॥ २६ ॥

(ख०) एकदेशिकृतपरिहारप्रदर्शनपरं सूत्रम्—ज्ञानसमवेतेत्यादि। एकज्ञानजनितः संस्कार एकस्मिन्नेवात्मप्रदेशे समवैति। मनस्सान्निकर्षश्चात्मन एकस्मिन् क्षणे एकेनैवात्मप्रदेशेन भवति। ततश्च यज्ज्ञानजनितः संस्कारो यदात्मप्रदेशावच्छेदेन वर्तते तत्प्रदेशावच्छेदेनैव यस्मिन् क्षणे मनस्सन्निकर्षो भवति तस्मिन् क्षणे तत्संस्कारजमात्रजन्यस्मृतेः प्रादुर्भावः सम्भवति न स्मृत्यन्तरस्येति न युगपदनन्तस्मृतिप्रादुर्भावप्रसङ्ग इति परिहारार्थः।

सूत्रस्थं ज्ञानपदं व्याचष्टे ज्ञानसाधन इति। ज्ञानं साधनं कारणं यस्य स एवम्भूतः संस्कार एवात्र ज्ञानपदेनाभिप्रेत इत्यर्थः। ज्ञानसंस्कृतैः ज्ञानजन्यसंस्कारवद्भिः आत्मनः प्रदेशैर्मनः सान्निकृष्यते—'पर्यायेण' क्रमेण—न तु युगपत्। ततः किमित्यत आह—आत्मेति। उक्तसन्निकर्षाणामयौगपद्यात् तज्जन्यस्मृतीनामप्ययौगपद्यमेवेति भावः॥२५॥

एकदेशिमतं दूषयति—नान्तःशरीरेत्यादि सूत्रम्। (स्मृतियौगपद्यस्य एकदेशिप्रदर्शितपरिहारो) न (युज्यते)। कस्मात्। मनसः अन्तःशरीरवृत्तित्वात्। अन्तःशरीरे वृत्तिः ज्ञानजनकीभूतो व्यापारो यस्य तत्त्वात्। विभोरात्मनः कतिचित्प्रदेशाः शरीरान्तर्वर्तिनः कतिचिद्बहिःप्रदेशवर्तिनः, अणुस्तु मनः शरीराभ्यन्तरमात्रवृत्ति। अतः शरीरातिरिक्तात्मप्रदेशावच्छेदेन नात्ममनोयोगो भवति। किन्तु शरीरावच्छिन्नस्या-

( भा० ) सदेहस्यात्मनो मनसा संयोगो विपच्यमानकर्माशयसहितो जीवनमिष्यते । तत्रास्य प्राक् प्रायणादन्तःशरीरे वर्तमानस्य मनसः शरीराद्बहिर्ज्ञानसंस्कृतैरात्मप्रदेशैः संयोगो नोपपद्यत इति ॥ २६ ॥

( सू० ) "साध्यत्वादहेतुः" ॥ २७ ॥

---

(ख०)त्ममनोयोगस्य ज्ञानहेतुत्वमस्त्येव । ततश्च तच्छरीरावच्छिन्ननानास्मृतियौगपद्यप्रसङ्ग आक्षेपकोद्भावितस्तदवस्थ एवेति- नैकदेशिपरिहारः सम्यगित्यर्थः ।

एतदेव स्पष्टयन् भाष्यकारो जीवितदशायामेव मनस्सन्निकर्षाद्यात्मनो भवतीति जीवनावस्थामेव वर्णयति–सदेहस्येति । शरीरावस्थितस्य चात्मनो मनस्संयोगो, नाकस्मिकः किन्तु व्यवस्थितकारणक एवेति सूचयति विपच्यमानेति विशेषणेन । विपच्यमानकर्माशयः प्रारब्धकर्मेति यावत् । एकस्मिन् जन्मनि सकलानुभवे तज्जन्मप्रारब्धस्यैव कर्मणो व्यापार इति सिद्धान्तः । आत्ममनस्संयोगस्यैव सकलानुभवकारणत्वेन तस्यैव जीवनमिति संज्ञा । उक्तसिद्धान्तं प्रकृते योजयति तत्रास्येति । प्रायणात् मृत्योः प्राक् जीवितदशायां मनः शरीराभ्यन्तर एव वर्तते ततश्च यद्यपि शरीराद्बहिरपि तस्यात्मनः प्रदेशान्तराणि सन्ति तत्तज्ज्ञानसंस्काराश्च तेषु बहिःप्रदेशेषु सन्ति तथापि तैर्मनसो योगो नास्तीति ततो शरीराद्बहिर्मा भूवन् युगपन्नाना स्मृतयः । शरीराभ्यन्तरे तु य आत्मप्रदेशाः सन्ति तेषु यदा नानाज्ञानसंस्काराः समवयन्ति तदा शरीराभ्यन्तरवृत्तिमनसस्तैः प्रदेशैस्संयोगे सति तत्तत्संस्कारजन्यस्मृतीनां यौगपद्यम्भवितुमर्हति । एवं च नानास्मृतियौगपद्यप्रसङ्गो न परिहृत एकदेशिनेति भावः ॥ २६ ॥

एकदेशी शङ्कते–साध्यत्वादिति सूत्रम् । शरीराद्बहिर्मनो ज्ञानादि-

( भा० ) "विपच्यमानकर्माशयमात्रं जीवनम् । एवं च सति साध्यमन्तःशरीरवृत्तित्वं मनस इति" ॥ २७ ॥

( सू० ) स्मरतः शरीरधारणोपपत्तेरप्रतिषेधः ॥२८॥

( भा० ) सुस्मूर्षया खल्वयं मनः प्रणिदधानः चिरादपि कश्चिदर्थं स्मरति । स्मरतश्च शरीरधारणं दृश्यते । आत्ममनःस-

---

(ख०) पुरुषार्थं न साधयतीत्यद्यत्वे न सिद्धम् । एवं च मनसः शरीरवृत्तित्वादिति यो हेतुरुक्तस्तस्य 'साध्यत्वात्' साधनीयत्वात् स 'अहेतुः' हेत्वाभास इत्यर्थः । शरीराद्बहिर्मनः ज्ञानादिपुरुषार्थं न साधयतीत्यद्यत्वेऽपि न सिद्धमिति भावः ।

उक्तं जीवनलक्षणमेव स्वीकारानर्हं प्रदर्शयति–विपच्यमानेति । विपच्यमानकर्माशयसहितो मनसा संयोगो न जीवितमपि तु विपच्यमानकर्माशयमात्रम् । एवं च जीवनस्य लक्षणन्न भवति मनसः शरीराभ्यन्तरवृत्तित्वमित्याशयः । ततश्च तस्याप्यधुनाऽसिद्धत्वात् तन्मूलकमनुमानं दुष्टमेवेति ॥ २७ ॥

एकदेशिकृतां शङ्कां परिहरति–स्मरत इत्यादि सूत्रम् । 'स्मरतः'–यः पुरुषः स्मरणं करोति तस्य–'शरीरधारणोपपत्तेः'–तेन पुरुषेण स्मरणकाले शरीरमपि ध्रियत एव–कदाप्यशरीरस्यात्मनः स्मरणं न दृश्यते–इत्येवंरूपाया 'उपपत्तेः'–शरीरवर्तित्वसाधकप्रमाणस्य सत्त्वात्–पूर्वसूत्रकृतः प्रतिषेधः–मनसः शरीरवृत्तित्वे प्रमाणं नास्तीत्याक्षेपः–'अप्रतिषेधः'–न समीचीनः प्रतिषेध इत्यर्थः ।

स्मृतिप्रक्रियां सूचयति भाष्यकारः–सुस्मूर्षयेति । स्मर्तुमिच्छा 'सुस्मूर्षा'–तयेच्छया प्रेरितो यदा मनः 'प्रणिदधाति' स्मर्तव्यविषये-तदा चिरानुभूतोऽप्यर्थः स्मर्यते । किमेतेनेत्यत आह स्मरतश्चेति । सशरीर एव आत्मा स्मरति नान्यथेति पश्यामः । अत्र आत्मा–मनः–आ-

( भा० )न्निकर्षजश्च प्रयत्नो द्विविधो–धारकः प्रेरकश्च । निःसृते च शरीराद्बहिर्मनसि धारकस्य प्रयत्नस्याभावाद् गुरुत्वात्पतनं स्यात् शरीरस्य स्मरत इति ॥ २८ ॥

( सू० ) "न तदाशुगतित्वान्मनसः" ॥ २९ ॥

( भा० ) "आशुगति मनः । तस्य बहिःशरीरात्मप्रदेशेन ज्ञानसंस्कृतेन सन्निकर्षः–प्रत्यागतस्य च प्रयत्नोत्पादनमुभयं युज्यत इति । उत्पाद्य वा धारकं प्रयत्नं शरीरान्निःसरणं मनसो-

---

(ख०)त्मप्रयत्नपूर्वकम्मनसः प्रणिधानं–ततः स्मरणमित्येतत्सर्वं शरीरवर्त्यैवेति भावः । प्रणिधानकारणीभूतस्यात्मनः प्रयत्नस्य शरीरापेक्षां प्रदर्शयन् प्रयत्नं द्विधा विभजते–आत्ममन इति । धारकः प्रेरकश्च–शरीरस्येति शेषः । द्विविधोऽपि प्रयत्न आत्ममनस्सन्निकर्षादेवोपजायते । एवं च स्मरणकाले यदि शरीरसम्बन्धो नापेक्षितः यदि च मनः शरीराद्बहिरवतिष्ठेत तर्हि स्मृतिकाले तत्सन्निकर्षजस्य प्रयत्नस्यापि शरीराद्बहिरेव सत्त्वात् 'धारणं' शरीरस्य नैव स्यात् ततश्च पतेदेव शरीरमिति ॥२८॥

पुनः परश्चोदयति–न तदाशुगतित्वादिति सूत्रेण । यत् पूर्वसूत्र उक्तं शरीरपतनं तन्न सम्भवति–'तदा' 'मनसो' बहिस्सन्निकर्षे 'आशुगतित्वात्' अतिशीघ्रगामित्वात्–शीघ्रमेव शरीरे परावृत्तेः न शरीरधारणप्रतिबन्ध इत्यर्थः ।

सूत्रं व्याचष्टे–आशुगतीति । मनः आशुगति–शीघ्रगामि–अतः यद्यपि शरीरबहिःस्थितेनात्मप्रदेशेन पूर्वानुभूतज्ञानसंस्कारसहितेन तत् सन्निकृष्यते–तेन च सन्निकर्षेण स्मृतिरुपजायते—तदा पुनरतिशीघ्रमेव शरीरे परावृत्य शरीरस्थात्मप्रदेशसन्निकृष्टं शरीरधारणकारणं प्रयत्नं च सम्पादयतीति 'उभयम्' स्मरणं शरीरधारणं च–'युज्यते' सिध्यतीति न

(भा०)ऽतस्तत्रोपपन्नं धारणमिति" ॥ २९ ॥

( सू० )न स्मरणकालानियमात् ॥ ३० ॥

( भा० ) किञ्चित्क्षिप्रं स्मर्यते किञ्चिच्चिरेण। यदा चिरेण तदा सुस्मूर्षया मनसि धार्यमाणे चिन्ताप्रबन्धे सति कस्यचिदर्थस्य लिङ्गभूतस्य चिन्तनमाराधितं स्मृतिहेतुर्भवति। तत्रैतच्चिरंनिश्चरिते मनसि नोपपद्यत इति। शरीरसंयोगानपेक्षश्चा-

---

(ख०)शरीरपतनप्रसङ्गः। मनोगतेः प्रकारान्तरमपि सूचयति—उत्पाद्येति। बहिर्गमनात्प्रागेव शरीरधारणकारणं प्रयत्नं सम्पाद्य मनो बाहिर्गच्छति गत्वा चातित्वरितमेव स्मरणमपि सम्पाद्य पुनस्तथा परावर्तते शरीरे यथा तद्धारणे कापि बाधा न भवतीत्यर्थः ॥ २९ ॥

चोद्यं परिहरति—न स्मरणेत्यादि सूत्रम्। यदुक्तं तन्न युक्तम्-यतः स्मरणस्य कालनियमो नास्ति। शीघ्रमेव स्मृतिरुपजायत इति नियमो नास्तीत्यर्थः।

कालानियमं प्रदर्शयति—किञ्चिदिति। कदाचित् स्मृतिः शीघ्रमेव भवति कदाचित्तु दीर्घकालप्रणिधानानन्तरं विलम्बेनैवेत्यर्थः। विलम्बप्रदर्शनार्थं स्मृतिप्रक्रियां वर्णयति-यदेति। यदा चिरेण स्मरणं भवति तदेत्थं भवति तत्प्रक्रिया—आदौ स्मरणेच्छा-तदनन्तरं मनसि व्यापारः प्रणिधानरूपः—तदनन्तरं नानाज्ञानसन्तानः—तदा 'लिङ्गभूतस्य' असाधारणचिह्नभूतस्य कस्यचिदर्थस्य 'चिन्तनं' स्मरणं—तदा तदर्थस्मरणं 'आराधितं' सिद्धं सत् चिह्नवतः सुस्मूर्षितस्यार्थस्य स्मृतिं जनयति। भवत्वेवं क्वचिद्विलम्बस्तेन किमित्यत आह—तत्रैतदिति। एवं स्मृतौ मनश्चिरकालं शरीराद्बहिर्व्यावृत्तं भवतीति सिद्धे परेण यदुक्तं 'आशुगतित्वान्मनस' इति तन्नोपपद्यते तन्मात्रेण तस्य पक्षस्य समर्थनं न भवतीत्यर्थः। शरीरापेक्षमेव मनः स्मृतिहेतुर्भवति

(भा०)त्ममनःसंयोगो न स्मृतिहेतुः शरीरस्य भोगायतनत्वात् । उपभोगायतनं पुरुषस्य ज्ञातुः शरीरं न ततो निश्चरितस्य मनस आत्मसंयोगमात्रं ज्ञानसुखादीनामुत्पत्तौ कल्पते । क्लृप्तौ वा शरीरवैयर्थ्यमिति ॥ ३० ॥

(सू०)"आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः"३१

---

(ख०)नान्यथेति समर्थनाय हेत्वन्तरमुपन्यस्यति—शरीरसंयोगेति । शरीरं खल्वात्मनः सकलभोगायतनम्, इतोऽपि तदनपेक्ष आत्ममनसोः संयोगो यदि स्यात् भवतु—किन्तु स तस्यात्मनः स्मृत्यादिकारणं न भवितुमर्हति । एतदेव स्पष्टयति–उपभोगेति । 'ज्ञातुः' ज्ञानकर्तुः 'पुरुषस्य'आत्मनः उपभोगमात्रस्य'आयतनं'आश्रयः शरीरमेव भवति नान्यत् किञ्चित् । अतो यदा मनः शरीराद्बहिर्निर्गच्छति तत्र च बहिरात्मप्रदेशैस्सन्निकृष्यते तदा सन्नप्ययमात्ममनस्सन्निकर्ष आत्मनो ज्ञानं सुखदुःखं स्मरणमित्याद्युपभोगं जनयितुं न क्षमते उपभोगायतनभूतशरीराद्बहिर्वर्तित्वादित्यर्थः । भवतु शरीराद्बहिस्सन्निकर्षस्तेन किमायातं तस्योपभोगजननसामर्थ्य इत्यत्र आह–क्लृप्तौ वेति । यदि शरीराद्बहिरप्यात्ममनस्सन्निकर्ष आत्मन उपभोगजननसमर्थो भवति तदा तदनपेक्षमुपभोगादीनां सम्पन्नत्वाच्छरीरस्य वैयर्थ्यापत्तिः—आत्मोपभोगायतनत्वमात्रेण हि तस्य प्रयोजनवत्तेति भावः ॥ ३० ॥

ज्ञानसमवेतेत्यादि सूत्रोक्तमेकदेशिमतं निराकरिष्णुरपर एकदेश्याह–आत्मप्रेरणेत्यादि सूत्रम् । आत्मनो बहिःप्रदेशे मनस्संयोगो–(१) न स्मृत्यर्थम् 'आत्मप्रेरणेन' सम्भवति [तस्य प्रयत्नस्य स्मरणीयज्ञानपूर्वकतया प्रागेव स्मृत्त्यापत्तेः]–(२)नापि 'यदृच्छया'अकस्मात् [आकस्मिकत्वस्य निषेधात्]–(३)नापि मनसो 'ज्ञतया'ज्ञातृतया [मनसो ज्ञातृत्वानभ्युपगमात्] न चैभ्यस्त्रिभ्योऽन्यः प्रकारो वर्तत इति सूत्रार्थः ॥

( भा० ) "आत्मप्रेरणेन वा मनसो बहिः शरीरात् संयोगविशेषः स्याद् यदृच्छया वाऽऽकस्मिकतया ज्ञतया वा मनसः? सर्वथा चानुपपत्तिः । कथम्? स्मर्तव्यत्वादिच्छातः स्मरणज्ञानासम्भवाच्च । यदि तावदात्मा–अमुष्यार्थस्य स्मृतिहेतुः संस्कारः अमुष्मिन्नात्मदेशे समवेतस्तेन मनः संयुज्यतामिति मनः प्रेरयति तदा स्मृत एवासावर्थो भवति न स्मर्तव्यः । न चात्मप्रत्यक्ष आत्मप्रदेशः संस्कारो वा । तत्रानुपपन्नाऽऽत्मप्रत्यक्षेण संवित्तिरिति । सुस्मूर्षया चायं मनः प्रणिदधानश्चिरादपि कश्चिदर्थं स्मरति

---

(ख०)मनसो बहिःप्रदेशैस्संयोगस्य ये प्रकाराः सम्भवन्ति तान् वर्णयति भाष्यकारः–आत्मप्रेरणेनेति । व्याख्यातमेतत् । प्रकृते तेषां त्रयाणामप्यसम्भवं प्रदर्शयति–सर्वथेति । पृच्छति–कथमिति । यथाक्रममुत्तरयन्नात्मप्रेरणेत्यस्यासम्भवं दर्शयति स्मर्तव्यत्वात्–इच्छातः स्मरणज्ञानासम्भवाच्चेति । आत्मप्रेरणपक्षपरकमिदमुत्तरम् । तत्र प्रथमस्य स्मर्तव्यत्वादित्यस्य तात्पर्यं वर्णयति–यदि तावदिति । आत्मप्रेरणेन मनस्संयोगतत्प्रेरणरूपप्रयत्नस्य स्वरूपं प्रदर्शयति–अमुष्येति । 'अयमर्थविशेषो मया स्मर्त्तव्यः–तत्स्मरणहेतुभूतः संस्कारोऽस्मिन्नात्मप्रदेशे समवैति–अतोऽनेन प्रदेशेन मम मनः संयुज्यतामिति' । एवं चोक्तार्थविशेषस्य स्मरणमादावेव जातमिति नासौ 'स्मर्त्तव्यः' किन्तु 'स्मृत' एवेति प्रयत्नवैयर्थ्यम् । अथ द्वितीयस्य 'इच्छातः स्मरणज्ञानासम्भवाच्चे'त्यस्य तात्पर्यं वर्णयति–न चात्मेति । अस्मिन् मम प्रदेशेऽयं संस्कारविशेषः समवैतीत्यनेन मनो मे संयुज्यतामित्येवं रूप आत्मप्रयत्ने आत्मनः स्वप्रदेशप्रत्यक्षं स्वगतसंस्कारविशेषप्रत्यक्षं चापेक्षितम्—उभयमप्येतन्न सम्भवति । ततश्चात्मप्रत्यक्षेण ज्ञानं स्मरणं वा भवतीति सुदूरमपास्तमित्यर्थः । यदृच्छेत्यस्यासम्भवं प्रदर्शयति–सुस्मूर्षयेति । आदौ स्मरणे-

(भा०)नाकस्मात्। ज्ञत्वं च मनसो नास्ति ज्ञानप्रतिषेधादिति"॥३१॥

(भा०) एतच्च—

(सू०) व्यासक्तमनसः पादव्यथनेन संयोगविशेषेण समानम् ॥ ३२ ॥

(भा०)यदा खल्वयं व्यासक्तमनाः क्वचिद् देशे शर्करया कण्टकेन वा पादव्यथनमाप्नोति तदाऽऽत्ममनःसंयोगविशेष एषितव्यः। दृष्टं हि दुःखं दुःखवेदनं चेति। तत्रायं समानः प्रतिषेधः। यदृच्छया तु न विशेषो नाकस्मिकी क्रिया नाकस्मिकः संयोग इति।

---

(ख०)च्छा ततो मनःप्रणिधानं—चिरकालीनप्रणिधानाच्च स्मरणमित्येवं स्मृतिप्रकारे आकस्मिकत्वानुपपत्तिरेव सर्वथेति भावः। ज्ञतयेत्यस्यानुपपत्तिं दर्शयति—ज्ञत्वमिति। ज्ञत्वं ज्ञातृत्वन्न मनसोऽपि त्वात्मन एवेति प्राक् प्रतिपादितम् ॥ ३१ ॥

अनन्तरोक्तं द्वितीयैकदेशिमतमपाकरोति—एतच्चेति भाष्याक्षराण्यारभ्य व्यासक्तमनस इत्यादिसूत्रेण ॥ 'एतत्'यदुक्तं तत् 'संयोगविशेषेण समानम्' इति सम्बन्धः। व्यासक्तं मनो यस्य तस्य नृत्यादिदृश्यविशेषे दत्तचित्तस्य पुरुषस्य कण्टकादिना अकस्माद् विद्धः पादो यदा व्यथते तदा तदवच्छेदेन यथा आकस्मिक एव मनस्संयोगो जायते तथैवैतदपीति। तथा चाकस्मिको मनस्संयोगो न भवतीति यदुक्तं द्वितीयेनैकदेशिना तन्न तथ्यमिति हृदयम् ॥

शर्करयेति क्षुद्रप्रस्तरखण्डादिभिरित्यर्थः। एषितव्यः इति स्वीकर्तव्य एवेत्यर्थः। तादृशसंयोगं विना दुःखानुभवस्यानुपपत्तेः। एवं च एकदेशिना यः प्रतिषेध आकस्मिकमनस्संयोगस्य उक्तस्स प्रतिषेध उक्तेऽपि पादव्यथाजनकमनस्संयोगे स्यादेव—तच्चानुभवविरुद्धमिति हृदयम्। अनुभवविरोधम्प्रतिबन्दीरूपेणोपन्यस्य तत्त्वत उत्तरं प्रद-

(भा०) "कर्मादृष्टमुपभोगार्थं क्रियाहेतुरिति" चेत् समानम् ।

"कर्मादृष्टं पुरुषस्थं पुरुषोपभोगार्थं मनसि क्रियाहेतुरेवं दुःखं दुःखसंवेदनं च सिध्यतीति" एवं चेन्मन्यसे-समानं स्मृतिहेतावपि संयोगविशेषो भवितुमर्हति । तत्र यदुक्तम् 'आत्मप्रेरणयदृच्छाज्ञताभिश्च न संयोगविशेषः' इत्ययमप्रतिषेध इति । पूर्वस्तु प्रतिषेधो-'नान्तः शरीरवृत्तित्वान्मनस'-इति ॥ ३२ ॥

( भा० ) "कः खल्विदानीं कारणयौगपद्यसद्भावे युगपदस्मरणस्य हेतुरिति"--

---

(ख०)शंयति-यदृच्छयेति । यदृच्छया मनस्संयोगो न भवतीति यदुक्तन्तस्येदमेवोत्तरं यत् किमप्यत्र यदृच्छया न भवतीत्याशयः ।

परः समाधत्ते-कर्मेति । मनस्संयोगादावदृष्टमेव नियामकं भविष्यतीति नाकस्मिकत्वं क्वचिदपीति । तत्रोत्तरम् समानमिति ॥

परोक्तस्याशयमनुवदति कर्मादृष्टमिति । व्यासक्तमनसः कण्टकादिना पादव्यथने मनस्संयोगो य उपन्यस्तस्तादृशसकलसंयोगविशेषेषु पुरुषस्यादृष्टमेव नियामकम्भवति । अदृष्टद्वारैव तस्य सकलसुखदुःखाद्युपभोग इत्येव यदि परोक्तस्याशयस्तर्हि समानमेतत्स्मृतिहेतावपीति । एवं च स्मृतिष्वप्यदृष्टस्य नियामकत्वान्न यौगपद्यसम्भव इति परिहारार्थः ॥ द्वितीयैकदेशिमतप्रतिषेधमुपसंहरति-तत्र यदुक्तमिति-एकत्रिंशसूत्रोक्तमेकदेशिमतं न युक्तमित्यर्थः ॥ ततः कः प्रतिषेधः पञ्चविंशसूत्रोक्तैकदेशिमतस्येत्यत आह पूर्वस्त्विति । षड्विंशसूत्रे यत्तन्मतदूषणमुक्तं-नान्तःशरीरेतिसूत्रे-तदेव तस्योत्तरं सम्यगित्यर्थः ॥ ३२ ॥

परास्तः परः पृच्छति-कः खल्विति । स्मृतिकारणयौगपद्ये सति स्मृतियौगपद्यं कथन्न भवतीति प्रश्नार्थः ।

प्रश्नस्योत्तरमर्पयन् स्मरणायौगपद्यं स्वयमुपपादयति-प्रणिधानेत्या-

(सू० ) प्रणिधानलिङ्गादिज्ञानानामयु-
गपद्भावादयुगपत्स्मरणम् ॥ ३३ ॥

(भा०) यथा खल्वात्ममनसोः सन्निकर्षः संस्कारश्च स्मृति-हेतुरेवं प्रणिधानं लिङ्गादिज्ञानानि । तानि च न युगपद्भवन्ति । तत्कृता स्मृतीनां युगपदनुत्पत्तिरिति ।

"प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्ते यौगपद्यप्रसङ्गः" ।

"यत्खल्विदं प्रातिभमिव ज्ञानं प्रणिधानाद्यनपेक्षं स्मार्त्त-मुत्पद्यते कदाचित्तस्य युगपदुत्पत्तिप्रसङ्गो हेत्वभावात्" ।

सतः स्मृतिहेतोरसंवेदनात् प्रातिभेन समानाभिमानः । ब-

---

(ख०)दिसूत्रेण। प्रणिधानादयः स्मृतिहेतवो वक्ष्यमाणा ऊनविंशसङ्ख्यकाः सन्ति न पुनस्संकारसहितात्ममनस्संयोगमात्रम् । एवं चोक्तसंयोगस्य स-त्त्वेऽप्यन्येषां स्मृतिहेतूनामयौगपद्यात् स्मृतीनामयौगपद्यमित्यर्थः ।

एतदेव स्पष्टयति भाष्यकारः-यथा खल्विति ।

आक्षिपति प्रातिभवदिति । (प्रातिभवत्तु प्रणिधानाद्यनपेक्षे स्मार्त्ते यौगपद्यप्रसङ्ग इति वाक्यं केचित्सूत्रम्मन्यन्ते । तत्प्रमाणाभावादुपेक्ष्य भाष्यस्थमेवेदमाक्षेपवाक्यमिति निर्धारितम् । )

संक्षेपेणोक्तमाक्षेपमनुवदति—यत्खल्विदमिति । अस्ति खलु प्रातिभं ज्ञानं स्मृत्यनुरूपमेव । तच्च प्रणिधानादि विनैव संस्कारसहिता-त्ममनस्संयोगमात्रादुत्पद्यत आकस्मिकमेव । तदिवान्या अपि स्मृतय-स्तत्संयोगमात्रात्प्रादुर्भवितुमर्हन्ति । एतेषां च युगपदुत्पत्तिः सम्भवत्ये-वेत्याक्षेपाशयः । हेत्वभावादिति—प्रणिधानादिहेत्वभावादित्यर्थः ॥

आक्षेपस्योत्तरम्—सतः स्मृतीति । स्मरणादावनुपलभ्यमानान्यपि कारणानि कारणक्रमश्च स्मृतिरूपकार्योत्पादक्रमेणानुमीयन्ते । एवं च प्रातिभमपि ज्ञानं पुरुषादृष्टविशेषापेक्षेभ्य आत्ममनस्सन्निकर्षादिभ्यः का-

(भा०) ह्यर्थान्वेऽयं वै चिन्ताप्रबन्धे कश्चिदेवार्थः कस्यचित्स्मृतिहेतुः तस्यानुचिन्तनात् तस्य स्मृतिर्भवति, न चायं स्मर्ता सर्वं स्मृतिहेतुं संवेदयते–एवं मे स्मृतिरुत्पन्नेत्यसंवेदनात्प्रातिभमिव ज्ञानमिदं स्मार्तमित्यभिमन्यते । न त्वस्ति प्रणिधानाद्यनपेक्षं स्मार्तमिति।

"प्रातिभे कथमिति" चेत् पुरुषकर्मविशेषादुपभोगवन्नियमः।

(ख०)रणेभ्य एव उपजायते न च तदप्यकारणमक्रमं वा । यत्र च प्रातिभे वर्त्तमानान्यप्येतानि कारणानि नोपलभ्यन्ते क्रमश्च नानुभूयते एवमेव स्मृतिष्वपीति । स्मृतिप्रक्रियामेव तत्त्वतो वर्णयन् यौगपद्यभ्रान्तिमूलम्प्रदर्शयति बह्वर्थविषय इति । बहवः अर्थाः विषया यस्य एवम्भूते चिन्ताप्रबन्धे अनुभवसन्ताने । पुरुषस्यानेकविषया अनेकेऽनुभवा जायन्ते । न च सर्व एवानुभवास्सर्वेषां स्वविषयाणां स्मरणजनका भवन्ति । न चैकानुभवसन्तानविषयभूतेष्वर्थेषु सर्वे एव सर्वस्य स्मृतिकारणं भवति अपि तु एतेषाम्मध्ये कश्चिदेवार्थः कस्यचित्स्मरणजनने समर्थः । अस्यैव च स्मरणजननसमर्थस्यार्थस्यानुचिन्तनप्रणिधानादिना तत्सदृशाद्यर्थान्तरस्य स्मरणं भवति ॥ तथापि किमायातं प्रकृत इत्याह–न चायमिति ॥ उक्तप्रकारेण नानाकारणसत्त्वेऽपि स्मर्त्ता पुरुषस्तानि सर्वाणि न चेतयते न च निर्धारयति सकलां स्मृतिप्रक्रियाम् । अतो यदा कारणानि न स्फुटं ज्ञायन्ते तत्रैव 'प्रातिभमेतन्मे स्मरणमाकस्मिकम्' इति भ्रान्तिर्जायते । न तु तत्त्वतः कारणानि न सन्त्येवेत्यर्थः ॥ उपसंहरति–न त्वस्तीति । प्रणिधानाद्यनपेक्षं स्मरणं कदापि न भवतीत्याशयः ॥

नन्वस्त्वेतत् सर्वम्–स्मरणेषु प्रातिभे तु ज्ञाने आकस्मिकत्वं कारणान्तररहितत्वं चानुभवसिद्धमेवेत्याशयवान् पृच्छति–प्रातिभे कथमिति। प्रधानभूतां स्वपक्षोपपत्तिमवतारयितुमेवायं प्रश्नः । तत्रादौ यत्किञ्चिदुत्तरम्–पुरुषकर्मेति । यथा पुरुषस्यादृष्टं तस्योपभोगानां नियामकं तथैव

(भा०) "प्रातिभमिदानीं ज्ञानं युगपत् कस्मान्नोत्पद्यते" । यथोपभोगार्थं कर्म युगपदुपभोगं न करोति एवं पुरुषकर्मविशेषः प्रतिभाहेतुर्न युगपदनेकं प्रातिभं ज्ञानमुत्पादयति ।

"हेत्वभावादयुक्तमिति" चेद् न, करणस्य प्रत्ययपर्याये सामर्थ्यात् ।

"उपभोगवन्नियम इत्यस्ति दृष्टान्तो हेतुर्नास्तीति" चेन्मन्यसे–न । करणस्य प्रत्ययपर्याये सामर्थ्याद् । नैकस्मिन् ज्ञेये युगपदनेकं ज्ञानमुत्पद्यते–न चानेकस्मिन् । तदिदं दृष्टेन प्रत्ययपर्यायेणानुमेयं करणसामर्थ्यमित्थम्भूतमिति न ज्ञातुर्विकरणधर्म-

(ख०)प्रातिभस्येत्यर्थः ॥

प्रश्नस्याशयं प्रकटयति––प्रातिभमिति । प्रातिभे ज्ञाने यौगपद्यन्नास्तीत्यत्र को हेतुरित्यर्थः । उत्तरं विशदयति–यथोपभोगार्थमिति । आविलमेवेदमुत्तरमुत्तरसारस्याग्रे वक्ष्यमाणत्वादिति तात्पर्यकृतः ॥

उत्तरस्याविलत्वमेव प्रकटयितुमाक्षिपति–हेत्वभावादिति । अदृष्टजन्यत्वात् प्रातिभे न यौगपद्यमिति कथामात्रन्न तत्साधकहेतुः कश्चिदुक्तः––उपभोगो दृष्टान्तमात्ररूपेणोक्त इत्याशयः ॥ सम्यगुत्तरमधुना समर्पयति न करणस्येति ।

आक्षेपमनुवदति––उपभोगवदिति । उपभोगदृष्टान्तोपन्यासमात्रेण न किञ्चित्सिध्यतीत्यर्थः ॥ उत्तरमनुवदति––न करणस्येति । तस्यार्थं विवृणोति–नैकस्मिन्निति ॥ सामान्यतः सर्वेषामेव पुरुषाणामेवमेवानुभवो यदेकस्मिन् विषयेऽनेकेष्वपि वा युगपज्ज्ञानानि नैवोत्पद्यन्त इति । अनेनानुभूतेन'प्रत्ययपर्यायेण' ज्ञानानां क्रमिकत्वेन अनुमीयते यत् ज्ञानसाधनानामेवायं धर्मो यत्क्रमिकस्तेषां व्यापारः । अतः ज्ञानायौगपद्यं करणस्वभावमूलकमेव न पुनर्ज्ञातृस्वभावमूलकम् । कथन्न ज्ञातृस्वभावमूलकमित्याह–विकरणेति । विलक्षणं करणं धर्मो यस्य तस्य अस्म-

(भा०)णो देहनानात्वे प्रत्यययौगपद्यादिति ।

अयं च द्वितीयः प्रतिषेधः—अवस्थितशरीरस्य चानेकज्ञान-समवायादेकप्रदेशे युगपदनेकार्थस्मरणं स्यात्। क्वचिद्देशेऽवस्थि-तशरीरस्य ज्ञातुरिन्द्रियार्थप्रबन्धेन ज्ञानमनेकमेकस्मिन्नात्मप्रदेशे समवैति। तेन यदा मनः संयुज्यते तदा ज्ञातपूर्वस्यानेकस्य यु-गपत् स्मरणं प्रसज्यते प्रदेशसंयोगपर्यायाभावादिति। आत्म-प्रदेशानामद्रव्यान्तरत्वादेकार्थसमवायस्याविशेषे स्मृतियौगपद्यप्र-

(ख०)दादिविलक्षणकरणवतो योगिनः 'देहनानात्वे' कायव्यूहावसरे ज्ञाना-नां यौगपद्यमपि दृश्यते। अयौगपद्यस्य ज्ञातृकृतत्वे तु तथा न स्यात्। योगी खलु ऋद्धौ प्रादुर्भूतायां सेन्द्रियाणि शरीराणि नानालोकेष्वात्म-नो निर्माय मुक्तात्मनां च मनांस्यादाय मोक्षाय त्वरमाणो स्वकर्मोपा-र्जितान्यनेकानि सुखदुःखादिज्ञानानि युगपदेव भुङ्क्तेऽद्विषन् विरक्त-श्च। तदत्रैकस्यापि ज्ञातुर्युगपज्ज्ञानानि भवन्ति। अत्र च ज्ञातुरेकत्वेऽ-पि न करणस्यैकत्वम् मुक्तात्मनां मनसामत्र करणभूतत्वात्तेषाञ्च प्रतिज्ञा-नं भिन्नत्वात्।

ज्ञानसमवेतसंस्कृतात्मप्रदेशभेदस्यायौगपद्यसाधकत्वम्प्रथमैकदेश्यु-पन्यस्तम्प्रति परोद्भावितदूषणान्तरमपाकर्त्तुन्तत्दूषणमुपन्यस्यति अयं चेति। यदि ज्ञानसमवेतात्मप्रदेशसन्निकर्षादेव स्मृतीनां न युगपदु-त्पत्तिः तर्हि ये संस्कारा एकदेशास्तेष्ववस्थितशरीरस्यानेकज्ञानसमवा-यादेकदेशे युगदनेकार्थस्मरणं स्यात्। न चैतदस्ति अत एकदेश्युक्तः प-रिहारो न सम्यगिति दूषणस्याशयः॥ व्यवस्थितशरीरस्येति। यत्र आत्मप्रदेशेऽस्य ज्ञानानि नानाविषयाणि जातानि तत्संस्काराश्च तत्रैवा-वस्थितशरीरस्येत्यर्थः। तदनेन शरीरान्तर्गतस्य मनसस्तत्र प्रदेशे सं-योग उपपादितः। आत्मप्रदेशानामिति। एकस्यात्मनो ये नानाप्रदे-शास्ते न द्रव्यान्तराणि। ततश्च सर्वेषां ज्ञानस्मृत्यादीनामेकार्थसमवा-

(भा०)तिषेधानुपपत्तिः ।

शब्दसन्ताने तु श्रोत्राधिष्ठानप्रत्यासत्त्या शब्दश्रवणवत्संस्कारप्रत्यासत्त्या मनसः स्मृत्युत्पत्तेर्न युगपदुत्पत्तिप्रसङ्गः । पूर्व एव तु प्रतिषेधो नानेकज्ञानसमवायादेकप्रदेशे युगपत् स्मृतिप्रसङ्ग इति ॥ ३३ ॥

( भा० ) यत्-पुरुषधर्मो ज्ञानमन्तःकरणस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा इति कस्यचिद्दर्शनं–तत्प्रतिषिध्यते—

(ख०)यत्वमावीशिष्टम्॥ स्मृतियौगपद्येति । स्मृतियौगपद्यस्य यः परिहार एकदेशिनोक्तस्स न सम्यगित्यर्थः ॥

उक्तदूषणनिराकरणपरं भाष्यम्—शब्दसन्तान इति । शब्दसन्ताने यः शब्दः श्रोत्रेन्द्रियेण साक्षात्सम्बद्धः । स एव श्रूयते न तत्सन्तानगतसर्वाः शब्दव्यक्तयः । एवमेवात्मवृत्तिनानासंस्काराणां येन संस्कारविशेषेण यस्मिन् क्षणे मनसः सम्बन्धस्तत्संस्कारजन्याया एव स्मृतेस्तस्मिन् क्षण उत्पत्तिर्नाऽन्यसंस्कारजन्यानामिति न स्मृतियौगपद्यसम्भवः ॥ निष्प्रदेशत्वेऽप्यात्मनः संस्कारस्याव्याप्यवृत्तित्वमुपपादितम् । तेन शब्दवत् सहकारिकारणस्य सान्निधानासन्निधाने कल्प्येते ॥ एवमनन्तरोक्तदूषणे निरस्ते एकदेशिमतस्य का गतिरिति प्रदर्शयति–पूर्व एवेति । एकदेशिमतस्य यः प्रतिषेधोऽस्माभिः षड्विंशसूत्र उक्तस्स एवैकदेशिमतस्य निरासक इत्यर्थः ॥ स्मृत्ययौगपद्यमुपसंहरति–नानेकेति ॥ ३३ ॥

सम्प्रति बुद्धिरेव किमिच्छादिसमानाधिकरणा न वेति विचारं प्रस्तावयन् तद्विषये संशयबीजभूतां सांख्यवैनाशिकानां विप्रतिपत्तिं प्रदर्शयति–पुरुषधर्म इति । 'ज्ञानम्' बुद्धिः 'पुरुषस्य' आत्मनो धर्मः इच्छादयस्त्वन्तःकरणस्येति न सामानाधिकरण्यं बुद्धेरिच्छादिभिरित्यर्थः । अस्य मतस्य सारो वर्णितस्तात्पर्यकृता । पुरुषचैतन्यमेकमेव कूटस्थनित्यं

( सू० ) ज्ञस्येच्छाद्वेषनिमित्तत्वादारम्भनिवृत्त्योः॥३४॥

(भा०)अयं खलु जानीते तावत्-इदं मे सुखसाधनमिदं मे

---

(ख०) सत् तत्तदर्थाकारपरिणतबुद्धितत्त्वप्रतिबिम्बविभ्रमवशात् भिन्न-मिवोपजायमानधर्मकं विज्ञानमिति वृत्तिरिति चाख्यायते। इच्छादयस्तु वस्तुत उपजनापायधर्माणोऽन्तःकरणस्यैवेति॥ अस्य विचारस्य प्रयोजनं प्रदर्शितं परिशुद्धिकृता-यावदिच्छादीनामात्मगुणत्वं न साध्यते तावदिन्द्रियार्थमनोव्यतिरेकसिद्धावपि बुद्धेरात्मगुणत्वं न सिध्यतीति॥ इच्छाया अन्तःकरणगुणत्वम्-ज्ञानस्य चेच्छाजन्यत्वम्-अत इच्छाज्ञा-नयोस्सामानाधिकरण्यस्यावश्यकतया ज्ञानस्याप्यन्तःकरणगुणत्वमेव नात्मगुणत्वमित्यस्य दर्शनस्य तात्पर्यं वर्णितं वृत्तिकृता॥ उक्तदर्शन-प्रतिषेधमवतारयति तत्प्रतिविध्यत इति।

सांख्यदर्शनप्रतिषेधपरं सूत्रम्-ज्ञस्येच्छेति। द्विधा वर्णितमिदं सूत्रं वृत्तिकृता। तद्यथा-'ज्ञस्य' ज्ञानवत एव गुणा इच्छाद्वेषादयः-कुतः-'आरम्भनिवृत्त्योः इच्छाद्वेषनिमित्तत्वात्' इच्छाद्वेषप्रयुक्तत्वादिति यावत्॥ अथवा 'आरम्भनिवृत्त्योः ज्ञस्यैव इच्छाद्वेषनिमित्तत्वात्' ( तस्यैव ज्ञस्य गुणा इच्छादय इति ) 'कस्याचिद्दर्शनं प्रतिषिध्यते' इति भाष्यवाक्येन सम्बन्धः॥ पूर्वं व्याख्यानं न सम्यक् प्रतिभाति। इच्छादयोऽन्तःकरणस्य गुणा इति पूर्वपक्षिणः सिद्धान्तः। ततश्च तदनुसारेण यद्यारम्भनिवृत्ती इच्छाद्वेषजन्ये तर्ह्येते अप्यन्तःकरणस्यैव भवेतां न ज्ञानवतः पुरुषस्येति द्वितीयमेव व्याख्यानं सुष्ठु। एतदेव वर्धमानोपाध्यायानां सम्मतम्। 'आरम्भनिवृत्ती प्रयत्नरूपे ज्ञानसमा-नाधिकरणे एवेति सूत्रार्थः' इत्युक्तं तैरन्वीक्षानयतत्त्वबोधे॥

सूत्रार्थं व्याकुर्वन् ज्ञानेच्छादीनां समानाधिकरणत्वं प्रदर्शयति-अयं खल्विति। 'अयमिति'आत्मेत्यर्थः। 'जानीते'इति ज्ञानवान् भवती-

(भा०)दुःखसाधनमिति—ज्ञात्वा स्वस्य सुखसाधनमाप्तुमिच्छति, दुःखसाधनं हातुमिच्छति । प्राप्तुमिच्छायुक्तस्यास्य सुखसाधनावाप्तये समीहाविशेष आरम्भः, जिहासाप्रयुक्तस्य दुःखसाधनपरिवर्जनं निवृत्तिः । एवं ज्ञानेच्छाप्रयत्नद्वेषसुखदुःखानामेकेनाभिसम्बन्धः । एककर्तृकत्वं ज्ञानेच्छाप्रवृत्तीनां समानाश्रयत्वं च । तस्माज् ज्ञस्येच्छाद्वेषप्रयत्नसुखदुःखानि धर्मा नाचेतनस्येति । आरम्भनिवृत्त्योश्च प्रत्यगात्मनि दृष्टत्वात् परत्रानुमानं वेदितव्यमिति॥३४॥

( भा० ) अत्र भूतचैतनिक आह—

(सू०)"तल्लिङ्गत्वादिच्छाद्वेषयोःपार्थिवाद्येष्वप्रतिषेधः" ३५

---

(ख०)त्यर्थः । प्राप्तुमिच्छतीति इच्छावान् रागवान् भवतीत्यर्थः । हातुमिच्छतीति द्वेषवान् भवतीत्यर्थः । इच्छाऽत्र राग एव । इच्छैव आरम्भकारणमिति प्रदर्शयति प्राप्तुमिति । समीहेति यत्नः । 'आरम्भः'प्रवृत्तिः ॥ फलितमाह—एवमिति । एकेनेति । समानाधिकरणा एवैत इत्यर्थः । ज्ञानेच्छादीनां न केवलं सामानाधिकरण्यमपि त्वेककर्तृकत्वमपीति दर्शयति एककर्तृकत्वमिति । उपसंहरति—तस्मादिति । नाचेतनस्येति—अन्तःकरणस्येत्यर्थः ॥ कथमेतत्सर्वं ज्ञायत इत्याह-आरम्भनिवृत्त्योरिति। 'प्रत्यगात्मनि' स्वस्मिन्नात्मनि । 'दृष्टत्वात्' प्रत्यक्षेणैव ज्ञातत्वात् । 'परत्र'परस्मिन्नात्मनि । 'अनुमानं वेदितव्यम्' अनुमानेनैव ज्ञातव्यम् । एतदुक्तम्भवति—स्वकीयेच्छादीनां साक्षादेव ज्ञानसामानाधिकरण्येनोपलब्धेः अन्यदीयानां चेच्छादीनामन्यस्याप्रत्यक्षीकरणात्'तत्करणे वा मैत्रगतानां चैत्रेण ग्रहणप्रसङ्गात्' अन्तःकरणवृत्तीनां च गुणान्तराणां नित्याप्रत्यक्षत्वात् आत्माश्रिता एवेच्छादयो नान्तःकरणाश्रया इति ॥ ३४ ॥

नन्वस्त्वेकमेवाधिकरणं ज्ञानेच्छादीनाम् । भवतु पार्थिवमिदं शरीरमेव तदेकमधिकरणमित्याशयवान् भूतचैतनिकः भूतचैतन्यवादी चार्वा-

(भा०) "आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति यस्यारम्भनिवृत्ती तस्येच्छाद्वेषौ तस्य ज्ञानमिति प्राप्तं—पार्थिवाप्यतैजसवायवीयानां शरीराणामारम्भानिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति चैतन्यम्" ॥ ३५ ॥

( सू० ) परश्वादिष्वारम्भनिवृत्तिदर्शनात् ॥ ३६ ॥

( भा० ) शरीरे चैतन्यनिवृत्तिः । आरम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग इति प्राप्तं—परश्वादेः करणस्यारम्भनिवृत्तिदर्श-

---

(ख०)कः शङ्कते—तल्लिङ्गत्वादित्यादि सूत्रम् ॥ 'पार्थिवाद्येषु' देहेषु 'अप्रतिषेधः' न प्रतिषेधः 'इच्छाद्वेषयोः तल्लिङ्गत्वात्' आरम्भनिवृत्तिलिङ्गकत्वात् आरम्भानिवृत्त्योश्च शरीरे प्रत्यक्षासिद्धत्वादित्यर्थः ॥

सूत्रार्थं वर्णयति—आरम्भेति । आरम्भानिवृत्तिलिङ्गाविच्छाद्वेषौ यस्यारम्भनिवृत्ती तस्यैच्छाद्वेषौ तस्यैव च ज्ञानमपीति यदुक्तं तत्सत्यम् । ततः किमित्याह—पार्थिवेति । पार्थिवादिशरीरेष्वेवारम्भानिवृत्ती दृश्येतेऽतोऽचेतनशरीरवर्त्तिन एव ज्ञानेच्छादयः सर्वेऽपि न पुनश्चेतनात्मवर्त्तिन इत्यर्थः ॥ ३५ ॥

चार्वाकोक्तिं समाधित्सुः प्रतिबन्धमाह—परश्वादीति सूत्रम् । यद्यारम्भानिवृत्त्याधारत्वेनैव शरीरस्य ज्ञानसुखाद्यधिकरणत्वं तर्हि परश्वादिष्वप्युद्गमनानपतनरूपारम्भानिवृत्तिदर्शनात् तेष्वपि ज्ञानाद्याधारत्वप्रसङ्गः । एवं च पार्थिवाद्येष्वप्रतिषेध इति परस्योक्तमनेकान्तमिति भावः ॥

सूत्रोक्तहेतोर्निगमनं पूरयति—शरीरेति । परश्वादिष्वारम्भनिवृत्तिदर्शनात् शरीरे चैतन्यनिवृत्तिरिति सम्बन्धः ॥ तदेव विशदयति—आरम्भेति । व्याख्यातार्थमेतत् ॥ ननु शरीरे वयं प्रत्यक्षमेव ज्ञानेच्छाद्युपलभामहे परश्वादिषु तु न तथेति न परश्वादिषु ज्ञानाद्याधारत्वप्रसङ्ग इत्यत आह—

(भा०)नाचैतन्यमिति । अथ "शरीरस्येच्छादिभिर्योगः, परश्वादेस्तु करणस्यारम्भानिवृत्ती व्यभिचरतः"न तर्ह्ययं हेतुः–पार्थिवाप्यतेजसवायवीयानां शरीराणामारम्भनिवृत्तिदर्शनादिच्छाद्वेषज्ञानैर्योग—इति ।

"अयं तर्ह्यन्योऽर्थस्तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्व-प्रतिषेधः । पृथिव्यादीनां भूतानामारम्भस्त्रसत्स्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषः । लोष्टादिषु च लिङ्गाभावात् प्रवृत्तिविशेषाभावो निवृत्तिः । आरम्भनिवृत्तिलिङ्गाविच्छाद्वेषाविति । पार्थिवाद्येष्वणुषु तद्दर्शनादिच्छाद्वेषयोगस्तद्योगाज्ज्ञानयोग इति सिद्धं भूतचैतन्यमिति"—

---

(ख०)अथेति । किन्तत इत्याह न तर्हीति । यदि परश्वादौ व्यभिचारस्तर्हि यो हेतुरुक्तस्तल्लिङ्गत्वादितिसूत्रे स व्यभिचारी भवति आरम्भानिवृत्त्योर्ज्ञानेच्छादिसामानाधिकरण्योक्तेः परश्वादावेव व्यभिचरितत्वदर्शनात् ॥

एवं निरस्तो भूतचैतनिकस्तल्लिङ्गत्वादिति स्वोक्तं हेतुं स्वपक्षसिद्ध्यर्थमन्यथा व्याचष्टे–अयं तर्हीति । तदर्थान्तरं विवृणोति–पृथिव्यादीनामिति । 'त्रसत्सु'अस्थिरेषु कृमिप्रभृतीनां शरीरेषु–'स्थावरेषु'देवमनुष्यादीनां शरीरेष्ववयवव्यूहभेददर्शनाच्छरीरारम्भकाणामणूनां प्रवृत्तिरूप आरम्भोऽनुमीयते–ततः प्रवृत्तिभेदादिच्छाद्वेषावनुमीयेते–ताभ्यां च चैतन्यमनुमीयते इत्याशयः। शरीरातिरिक्तजडपदार्थेष्वन्यथाभावं वर्णयति --लोष्टादिष्विति । लोष्टादिषु पुनरुक्तावयवव्यूहरूपलिङ्गस्याभावात् तत्सूचितायाः प्रवृत्तेस्तत्राभावस्तदभावरूपा चात्र निवृत्तिः। एवञ्च जीवशरीरेष्वारम्भस्तद्दर्शिनीमिच्छामनुमापयति लोष्टादिषु च निवृत्तिस्तद्दर्शिनं द्वेषमनुमापयति । एवं चारम्भनिवृत्त्योरुभयोरपि शरीरलोष्टाद्यारम्भकपार्थिवादिपरमाणुष्वेव दर्शनाज्ज्ञानमेतद्वृत्त्येवेति सुस्थिरमित्याशयः ॥

(भा०) कुम्भादिष्वनुपलब्धेरहेतुः ।

कुम्भादिमृदवयवानां व्यूहलिङ्गः प्रवृत्तिविशेष आरम्भः । सिकतादिषु प्रवृत्तिविशेषाभावो निवृत्तिः । न च मृत्सिकतानामारम्भनिवृत्तिदर्शनादिच्छाद्वेषप्रयत्नज्ञानैर्योगः । तस्मात्–तल्लिङ्गत्वादिच्छाद्वेषयोः– इत्यहेतुरिति ॥ ३६ ॥

( सू० ) नियमानियमौ तु तद्विशेषकौ ॥ ३७ ॥

( भा० ) तयोरिच्छाद्वेषयोर्नियमानियमौ विशेषकौ भेदकौ ।

---

(ख०)भूतचैतनिकस्यामुं द्वितीयमपि हेतुं दूषयति–कुम्भादिष्विति । केचिदेतत् सूत्रत्वेनाभिप्रयन्ति । तत्र प्रमाणाभावाद्भाष्यवाक्यमेवेदमिति निर्धारितम् । 'कुम्भादिषु' आरम्भनिवृत्तिसत्त्वेऽपि इच्छादीनां 'अनुपलब्धे;–'अहेतुः' इच्छाद्वेषयोरारम्भनिवृत्तिलिङ्गत्वादिति न सद्धेतुरित्यर्थः ।

स्वोक्तस्य तात्पर्यं विशदयति–अवयवव्यूहरूप आरम्भः कुम्भादिषु दृश्यते–अवयवव्यूहरूपप्रवृत्त्यभावरूपा निवृत्तिश्च सिकतासु दृश्यते–एवं पार्थिवपरमाणुपुञ्जेषु आरम्भनिवृत्त्योः सत्त्वेपि न तत्रेच्छादीनां सत्त्वमुपलभ्यते । ततश्चारम्भनिवृत्ती नेच्छादिसत्त्वसाधकहेतुरिति भावः ॥ ३६ ॥

तदेवं भूतचैतन्यं दूषयित्वा तेभ्योऽन्यस्य चैतन्ये साधनमाह–नियमानियमाविति सूत्रम् । 'तयोः' इच्छाद्वेषयोः 'विशेषकौ'भूतवृत्तित्वव्यावृत्त्या तदन्यगुणत्वव्यवस्थापकौ 'नियमानियमौ'। 'नियमः'क्वचिदेव वृत्तिः सर्वत्रैव वा वृत्तिः विवक्षाभेदात्, 'अनियमः' तद्विपर्ययः । तेन इच्छादीनां पृथिव्यादिगुणत्वे तदेकदेशवृत्तिता न स्यात्–स्याच्च सर्वपृथिव्यादिवृत्तितेति तात्पर्यम् । अयमेव इच्छाद्वेषयोर्विशेषो यद् भूताश्रयत्वमनयोर्व्यावर्त्य तदितराश्रयत्वव्यवस्थितिरिति ।

(भा०)ज्ञस्येच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती,न स्वाश्रये । किंतर्हि ? प्रयोज्याश्रये । तत्र प्रयुज्यमानेषु भूतेषु प्रवृत्तिनिवृत्ती स्तः न सर्वेष्वित्यनियमोपपत्तिः ।

यस्य तु ज्ञत्वाद् भूतानामिच्छाद्वेषनिमित्ते आरम्भनिवृत्ती स्वाश्रये तस्य नियमः स्यात् । यथा भूतानां गुणान्तरनिमित्ता प्रवृत्तिर्गुणप्रतिबन्धाच्च निवृत्तिर्भूतमात्रे भवति नियमेनैवं भूतमात्रे ज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती स्वाश्रये स्याताम् । न तु भवतः ।

(ख०)सूत्राक्षरार्थं वर्णयति तयोरिति । प्रकृते सार्वजनीनानुभवं प्रदर्शयति—ज्ञस्येति । लोके यदेच्छादिद्वारा कश्चिच्चेतनः प्रवर्तते निवर्तते वा तदा ते प्रवृत्तिनिवृत्ती स्पन्दास्पन्दौ तस्मिन् चेतने आत्मनि नोपलभ्येते अपितु तदात्मप्रयोज्ये शरीरादावेव । चेतनप्रयोज्ये किं भवतीत्याह—तत्र प्रयुज्यमानेष्विति । अनियमोपपत्तिरिति । असार्वत्रिकत्वमेवात्रानियमः । न शरीरमिच्छाद्याधारः इच्छादिजनितस्पन्दाधारत्वात् परश्वादिवदिति भावः ।

अनियमं भेदकं व्याचष्टे—यस्य त्विति । 'नियमः स्यादिति' सर्वेषु भूतेषु प्रवृत्तिनिवृत्ती स्यातामित्यर्थः । उक्तमेव स्पष्टयति यथा भूतानामिति । चार्वाकस्य यथा भूतानां गुरुत्वादिगुणान्तरानिमित्ता प्रवृत्तिः पतनादिलक्षणा तस्यैव गुरुत्वादेर्गुणान्तरस्य 'प्रतिबन्धः' आधारद्रव्यसंयोगेन—तस्माच्च निवृत्तिः अपतनादिका—उभयमप्येतद् भूतमात्रे भवति नियमेन व्याप्तं, न पुनः शरीरारम्भकमात्रभूतेषु । एष सार्वजनीनोऽनुभवः । एवं भूतमात्रे तद्गुणभूतज्ञानेच्छाद्वेषनिमित्ते प्रवृत्तिनिवृत्ती अपि स्वाश्रये एव स्याताम् । ये ये पृथिव्यादिगुणास्ते ते यावत्पृथिव्यादिभाविनो दृष्टाः यथा गुरुत्वादयः । ज्ञानेच्छादयोऽपि चेत् पृथिव्यादिगुणास्तैरप्यवश्यं यावत्पृथिव्यादिभाविभिर्भवितव्यम् । न तु घटादौ तथा दृश्यन्ते । तस्मान्न पृथि-

(भा०)तस्मात् प्रयोजकाश्रिता ज्ञानेच्छाद्वेषप्रयत्नाः, प्रयोज्याश्रये तु प्रवृत्तिनिवृत्ती इति सिद्धम् ।

एकशरीरे तु ज्ञातृबहुत्वं निरनुमानम् । भूतचैतनिकस्यैकशरीरे बहूनि भूतानि ज्ञानेच्छाद्वेषप्रयत्नगुणानीति ज्ञातृबहुत्वं प्राप्तम् । ओमिति ब्रुवतः प्रमाणं नास्ति । यथा नानाशरीरेषु नानाज्ञातारो बुद्ध्यादिगुणव्यवस्थानात्, एवमेकशरीरेऽपि बुद्ध्यादिव्यवस्थानुमानं स्याज् ज्ञातृबहुत्वस्येति ।

---

(ख०)व्यादिगुणा ज्ञानादयः । अत्र भाष्यकृता सार्वत्रिकत्वप्रसङ्गविवक्षया नियमशब्दः प्रयुक्तः असार्वत्रिकत्वविवक्षया त्वनियमशब्द इति तात्पर्यकृतः । उपसंहरति–तस्मादिति । प्रयोजकं चेतनम् आश्रिताः–प्रयोज्यं भूतादि आश्रयो ययोस्ते ॥

मदशक्त्योक्तं नियमं व्यभिचारयन पर आह–यथा किल किण्वादयः परिमाणविशेषवन्तो मदिराभावमापन्ना मदयन्ति, एवमेव कार्याकारेणैव परिणतानि पृथिव्यादीनि चेतयन्ते नान्यथेति न घटादिषु चैतन्यप्रसङ्ग इति । तम्प्रत्याह–एकशरीर इति । संक्षेपेणोक्तमर्थं विशदयति–भूतचैतनिकस्येति । यथाहि मादिरावयवेषु प्रत्येकमपि मदशक्तिरस्तु, न पुनःसमुदायमात्रसमवायिनी–एवं शरीरावयवेष्वपि प्रत्येकमेव चैतन्येन भवितव्यम् । तथा चैकस्मिन् शरीरे बहवश्चेतनाः ज्ञानेच्छाद्वेषप्रयत्नगुणवन्तः स्युर्भूतचैतन्यवादिनः । भवत्वेवं का नो हानिरिति परोक्तेष्टापत्तिमनुवदति ओमितीति । तदपकरोति–प्रमाणमिति । निरनुमानपदस्यायमर्थः । प्रमाणाभावमेव स्फोरयति यथा नानेति । नानाशरीरेषु युगपदेव विभिन्नप्रकारकबुद्ध्यादिगुणान् दृष्ट्वा तत्र नानाज्ञातारोऽनुमीयन्ते । एवं च यद्येकस्मिन्नपि शरीरे नानाज्ञातारो भवेयुस्तर्हि तत्रापि युगपद्बुद्धीच्छादयो भवेयुस्तेन चैकस्मिन्नपि शरीरे नानाज्ञातारः स्युरित्यसमञ्जसम् । अत्र तात्पर्यम्–अवयवानां प्रत्येकं चैतन्ये

(भा०) दृष्टश्चान्यगुणनिमित्तः प्रवृत्तिविशेषो भूतानां सोऽनुमानमन्यत्रापि । दृष्टः करणलक्षणेषु भूतेषु परश्वादिषु उपादानलक्षणेषु च मृत्प्रभृतिष्वन्यगुणनिमित्तः प्रवृत्तिविशेषः । सोऽनुमानमन्यत्रापि-त्रसत्स्थावरशरीरेषु तदवयवव्यूहलिङ्गः प्रवृत्तिविशेषो

(ख०) शरीरे एकस्मिन् बहवश्चेतनाः स्युः । भवतु किन्नो बाध्यत इति चेन्न । विरुद्धाभिप्रायत्वे स्वतन्त्राणां न किञ्चिदपि कार्यं जायेत । न च बहूनामेकाभिप्रायनियमो दृष्टः । काकतालीयन्यायेन स्यादेकाभिप्रायत्वम् न पुनरस्य नियमो दृष्टचर इति एतद्दूषणमुपेक्ष्य वार्तिककृता प्रत्ययव्यवस्थानुमानं न भवेदिति दूषणमुक्तम् । एकस्मिन् शरीरे प्रत्ययानां परस्परप्रतिसन्धानं पश्यामो न शरीरान्तर इति व्यवस्था । सेयं यद्येकस्मिन् शरीर एक एव चेतनो न च शरीरान्तरे ततो भवेन्नान्यथेत्यर्थ इति ।

नियमानियमाविति यदुक्तं सूत्रे तत्रानुमानं सूचयति भाष्यकारः-दृष्टश्चान्यगुणेति । संक्षेपेणोक्तं विशदयति-दृष्टः करणलक्षणेष्विति । भूतानि द्विधा विभक्तानि । कानिचित्करणभूतानि यथा परश्वादयः—कानिचिदुपादानभूतानि यथा मृत्प्रभृतयः । उभयप्रकारेष्वपि भूतेषु याप्रवृत्तिरुपलभ्यते सा सर्वा तदन्यस्य कस्यचिद्गुणैर्जनिता । तन्मूलकमेवानुमीयते यत् 'त्रसत्सु' अस्थिरेषु कृमिप्रभृतीनां शरीरेषु 'स्थावरेषु' स्थिरेषु देवमनुष्यादीनां शरीरेषु च प्रवृत्तिस्सान्यगुणनिमित्तैवेति । न केवलं शरीरस्य प्रवृत्तिविशेषोऽन्यगुणनिमित्तः, शरीरारम्भकारणानामपितु भूतानां प्रवृत्तिविशेषः शरीरोपचयापचयरूपोऽन्यगुणनिमित्त एवेत्याह-तदवयवेति ॥ अत्र तात्पर्यम्-हिताहितप्राप्तिपरिहारहेतुः परिस्पन्दः प्रवृत्तिविशेषः । सोऽयं प्रयोगः-त्रसत्स्थावरशरीरेषु प्रवृत्तिः स्वाश्रयव्यतिरिक्ताश्रयगुणनिमित्ता प्रवृत्तिविशेषत्वात् परश्वादिगतप्रवृत्तिवत् इति कोऽसौ गुणो किमाश्रयश्च यन्निमित्तः शरीरे

(भा०)भूतानामन्यगुणनिमित्त इति । स च गुणः प्रयत्नसमानाश्रयः संस्कारो धर्माधर्मसमाख्यातः सर्वार्थः पुरुषार्थाराधनाय प्रयोजको भूतानां प्रयत्नवदिति ।

आत्मास्तित्वहेतुभिरात्मनित्यत्वहेतुभिश्च भूतचैतन्यप्रतिषेधः कृतो वेदितव्यः। 'नेन्द्रियार्थयोस्तद्विनाशेऽपि ज्ञानावस्थानात्' इति च समानः प्रतिषेध इति ।

क्रियामात्रं क्रियोपरममात्रं चारम्भनिवृत्ती इत्यभिप्रेत्योक्तम्-'तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेधः'। अन्यथा त्वि-

---

(ख०) प्रवृत्तिविशेष इत्यपेक्षायामाह—स च गुण इति । सोऽयं गुणः संस्कारविशेष एव धर्माधर्मनाम्ना प्रसिद्धः प्रयत्नसमानाश्रय एव। यस्मिन्नाश्रये प्रयत्नः समवैति तस्मिन्नेव स संस्कारोऽपीत्यर्थः । स च 'सर्वार्थः' पुरुषसम्बद्धसकलार्थप्रयोजकः 'पुरुषार्थाराधनाय' पुरुषस्यार्थानामाराधनाय सम्पादनाय भूतानां तत्पुरुषशरीरारम्भकाणां 'प्रयोजकः' प्रवर्त्तकः। तत्र दृष्टान्तमाह—प्रयत्नवदिति । यथा तत्पुरुषस्य प्रयत्नस्तत्तदर्थसम्पादनाय भूतानि प्रेरयति तथैव तद्गतधर्माधर्मरूपः संस्कारोऽपीत्यर्थः ।

भूतचैतन्यप्रतिषेधे हेत्वन्तराण्यप्यतिदिशति—आत्मेति । भूतव्यतिरिक्त आत्माऽस्ति स चात्मा नित्य इत्युभयसिद्धान्तसाधनाय ये ये हेतवः प्रागुक्तास्ते सर्वेऽपि भूतचैतन्यप्रतिषेधाय कल्पन्त इत्यर्थः। हेत्वन्तरमप्यतिदिशति—नेन्द्रियेति । अष्टादशसूत्रे यो हेतुरुपन्यस्तस्सोऽपि भूतचैतन्याभावपक्षं समर्थयते इन्द्रियार्थयोर्विनाशेपि ज्ञानावस्थानान्नेन्द्रियार्थयोर्गुणो ज्ञानम् । एवं बाल्यकौमारवार्धकावस्थासु शरीरविनाशेऽपि ज्ञानावस्थानान्न शरीरगुणो ज्ञानमित्याशयः ।

तल्लिङ्गत्वादिति( २३ )सूत्रोक्तस्याक्षेपस्य समाधानान्तरमाह क्रियामात्रमिति । ऌस्येच्छेत्यत्र ( ३४ ) सूत्रे आरम्भनिवृत्तिशब्देन न

(भा०)मे आरम्भनिवृत्ती आख्याते, न च तथाविधे पृथिव्यादिषु दृश्येते । तस्मादयुक्तम्—तल्लिङ्गत्वादिच्छाद्वेषयोः पार्थिवाद्येष्वप्रतिषेध इति ॥ ३७ ॥

( भा० ) भूतेन्द्रियमनसां समानः प्रतिषेधो, मनस्तूदाहरणमात्रम्—

( सू० ) यथोक्तहेतुत्वात्पारतन्त्र्यादकृताभ्यागमाच्च न मनसः ॥ ३८ ॥

---

(ख०)प्रवृत्तिनिवृत्तिमात्रमभिमतमस्माकमपि तु हिताहितप्राप्तिपरिहारार्थः स्पन्दविशेषः । तमिमं प्रवृत्तिविशेषमज्ञात्वाऽऽक्षेपकेण प्रवृत्तिसामान्येन प्रत्यवस्थितम् । अतोऽत्र 'अप्रतिपत्ति'स्ते निग्रहस्थानमित्याशयः । तथाविध इति । हिताहितप्राप्तिपरिहारार्थस्पन्दरूप इति भावः ॥ ३७ ॥

शरीरमात्रगुणत्वमपाकृत्य भूतेन्द्रियमनसामपि न सा गुणो भवितुमर्हतीत्युपपादयितुं हेतूनुपन्यासिष्यन् तत्र कथं केवलं मनस एव ग्रहणं कृतं न भूतेन्द्रिययोरिति बहिः पूर्वपक्षे समाधानमाह भूतेन्द्रियमनसामिति । ये हेतवोऽग्रिमसूत्र उपन्यस्तास्ते सर्वे बुद्धेः भूतगुणत्वमिन्द्रियगुणत्वम्मनोगुणत्वं च निषेधयितुं तुल्यमेव समर्थास्तथाऽपि मनोमात्रस्य ग्रहणं केवलमुदाहरणरूपेण कृतम् । भूतेन्द्रियमनसाम्मध्ये आद्ययोरुभयोरपि भौतिकत्वान्मनसश्चाभौतिकत्वादस्यैवाभौतिकेनात्मना यत्किञ्चित्साद‍ृश्यमस्तीति मनोगुणत्वे निषिद्धे सुतरामेव भूतेन्द्रियगुणत्वमपि निषिद्धमेवेति हृदयं सूत्रकारस्येत्याशयः ।

बुद्धेर्मनोगुणत्वप्रतिषेधाय हेतुत्रयसमुच्चयपरं सूत्रम्——यथोक्तहेतुत्वादिति । न मनसः गुणो बुद्धिरिति शेषः । स्वकृताभ्यागमादिति वृत्तिकारसम्मतः पाठः । तदर्थश्च आत्मन एव चेतनत्वे तस्य स्वकृतकर्मणामभ्यातमः फलप्राप्तिर्भवतीति ॥

७६

(भा०)'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्ग'मित्यतः प्रभृति यथोक्तं सङ्गृह्यते। तेन भूतेन्द्रियमनसां चैतन्यप्रतिषेधः।

पारतन्त्र्यात्। परतन्त्राणि भूतेन्द्रियमनांसि धारणप्रेरणव्यूहनक्रियासु प्रयत्नवशात्प्रवर्तन्ते। चैतन्ये पुनः स्वतन्त्राणि स्युरिति।

अकृताभ्यागमाच्च। 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ' इति चैतन्ये

---

(ख०) यथोक्तहेतुत्वादिति पदं व्याचष्टे—इच्छाद्वेषेति। अत्र हेतुशब्देन प्रथमाध्यायगतेच्छादिसूत्र(१।१।१०)गतं सुसंगृहीतम्। त्वप्रत्ययेन च हेतुत्वविषया परीक्षा उपलक्षिता। तेन हेतुजातेन किमित्याह—तेनेति। पूर्वोक्तैर्हेतुभिर्भूतेन्द्रियमनसां चैतन्याभावः साधितो भवतीत्यर्थः।

पारतन्त्र्यादिति द्वितीयं हेतुं व्याकरोति—पारतन्त्र्यादिति। तत्र प्रयोगौ—शरीरेन्द्रियाणि धारणादिक्रियासु यथायोगं परतन्त्राणि भौतिकत्वात् घटादिवत्—मनः परतन्त्रम् करणत्वात् वास्यादिवत्—इति। एवञ्च सर्वाण्येवैतानि शरीरेन्द्रियाणि कस्यचिदन्यस्य प्रयत्नवशात् प्रवर्तन्त इति सिद्धम्। 'धारणं' 'प्रेरणं' 'व्यूहनं' चेति तिस्रः क्रियाः। तास्तु सर्वा एव शरीरवर्त्तिन्यः व्यूहनं तु मनोवृत्त्यपीति ध्येयम्। किमायातमनेन शरीरादिचैतन्यप्रतिषेध इत्याह चैतन्य इति। यद्येतानि चेतनानि स्युस्तर्हि स्वतन्त्र्याण्येव स्युर्न तु तानि तथेत्याशयः।

अकृताभ्यागमादिति तृतीयं हेतुं विशदयति—अकृताभ्यागमादिति। यस्तु कश्चिदभ्युपेतवेदप्रामाण्यः पुरुषमचेतनं फलभागिनमभ्युपेत्य शरीरादीनां चैतन्यं रोचयते तम्प्रति शरीरेन्द्रियाणामचैतन्ये हेतुरयमुक्तो वेदितव्यः। हेत्वर्थं प्रकटयति—प्रवृत्तिरिति। प्रथमाध्यायप्रथमाह्निकगतसप्तदशसूत्रे वाग्बुद्धिशरीरारम्भस्य प्रवृत्तित्वमुक्तम्पुनस्तत्रैव द्वितीयसूत्रभाष्ये प्रवृत्तिजन्यत्वं धर्माधर्मयोरुपवर्णितम्। एवंस्थिते शरी-

(भा०)भूतेन्द्रियमनसां परकृतं कर्म पुरुषेणोपभुज्यत इति स्यात् । अचैतन्ये तु तत्साधनस्य स्वकृतकर्मफलोपभोगः पुरुषस्येत्युपपद्यत इति ॥ ३८ ॥

( भा० ) अथायं सिद्धोपसङ्ग्रहः--

( सू० ) परिशेषाद्यथोक्तहेतूपपत्तेश्च ॥ ३९ ॥

(भा०) आत्मगुणो ज्ञानमिति प्रकृतम् ।

परिशेषो नाम —प्रसक्तप्रतिषेधेऽन्यत्राप्रसङ्गाच्छिष्यमाणे

---

(ख०)रादीनां चैतन्ये चेतनस्य स्वातन्त्र्यात् तान्येव कर्मणः कर्तॄणि स्युः । अथ मरणानन्तरं भस्मीभूतानां तेषामामुष्मिकफलशालिता न सम्भवति । तथा चोभयलोकानुस्यूतस्यात्मन एव तत्फलभोगित्वमभ्युपेतव्यम् । तथाच शरीरादिकृतकर्मफलं तदकर्त्राऽऽत्मनोपभुज्यत इति प्राप्तम् । तत्र च शास्त्रविरुद्धाकृताभ्यागमदोषप्रसङ्ग इति भावः । शरीरादिचैतन्ये दोषमुक्त्वा तदचैतन्ये साधकमाह–अचैतन्य इति । शरीरादीनामचैतन्ये तदतिरिक्तस्य चात्मनश्चैतन्ये पुरुष एव स्वातन्त्र्यात् कर्ता तत्प्रयोज्यतया शरीरादीनि तस्य साधनानीति तत्साधनप्रयोजकस्यात्मनः स्वकृतकर्मफलभोग इति न शास्त्रव्याकोपो न च प्रेक्षावत्प्रवृत्तिविरोध इति सर्वमुपपन्नम् । तत्साधनस्येति । 'तानि' शरीरेन्द्रियाणि साधनानि यस्य तस्य आत्मन इत्यर्थः ॥ ३८ ॥

बुद्धेरात्मगुणत्वमुपसंहरति अथायमिति । 'सिद्धस्य' सिद्धान्तस्य 'उपसङ्ग्रहः' उपसंहार इत्यर्थः ।

हेतूपसंहारपरं सूत्रम्—परिशेषादिति ।

सूत्रवाक्यं पूरयति—आत्मेति । एवं च परिशेषाद् यथोक्तोपपत्तेश्च आत्मगुणो ज्ञानमिति सिद्धान्तसूत्रं पर्यवसितम् ।

परिशेषादिति हेतुं व्याचष्टे—परिशेषो नामेति । प्रथमाध्याय-

(भा०) सम्प्रत्ययः । भूतेन्द्रियमनसां प्रतिषेधे द्रव्यान्तरं न प्रसज्यते, शिष्यते चात्मा । तस्य गुणो ज्ञानमिति ज्ञायते ।

यथोक्तहेतूपपत्तेश्चेति । 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' इत्येवमादीनामात्मप्रतिपत्तिहेतूनामप्रतिषेधादिति ।

परिशेषज्ञापनार्थं प्रकृतस्थापनादिज्ञानार्थं च यथोक्तहेतूपपत्तिवचनमिति ।

---

(ख०)प्रथमाह्निकस्थपञ्चमसूत्रभाष्यस्थान्येतान्यक्षराणि तत्रैव व्याख्यातार्थानि । तत्रोक्तं शास्त्रं प्रकृते योजयति भूतेन्द्रियेति । आत्मभूतेन्द्रियमनांस्येव बुद्ध्याधारत्वेन 'प्रसक्तानि' तेषु तावदुक्तप्रकारेण भूतेन्द्रियमनसां तदाधारत्वेन—'प्रतिषेधे' 'अन्यत्र' आत्मभूतेन्द्रियमनोव्यतिरिक्तद्रव्यान्तरे 'अप्रसङ्गात्' बुद्ध्याधारत्वासम्भवात् 'शिष्यमाणः' अवशिष्टद्रव्यम् आत्मैव । ततश्चात्मन एव गुणो बुद्धिरिति निश्चीयते ॥

यथोक्तहेतूपपत्तेरिति द्वितीयं हेतुमनूद्य व्याचष्टे—यथोक्तेति । तृतीयाध्याये दर्शनस्पर्शनाभ्यामित्यादिग्रन्थेन ये आत्मास्तित्वसाधनहेतव उपन्यस्तास्तेषां सर्वेषामात्मनो बुद्धिगुणत्वसाधनत्वेऽप्यत्वेऽपि कोऽपि प्रतिषेधो नोपलभ्यतेऽतो त एव सर्वेऽत्रातिदिश्यन्ते । 'उपपत्तेश्चेति' अप्रतिषेधादित्यर्थः ॥

यथोक्तहेतूपपत्तेश्चेत्येतस्य व्याख्यान्तरमाह—परिशेषेति । परिशेषादित्यस्यैव हेतोरुपोद्बलकं यथोक्तहेतूपपत्तेश्चेति वाक्यम् यथोक्तहेतोरिति । तथाच यदुक्तमात्मा शिष्यते इति तत्रैव तृतीयाध्यायोक्तहेतवः साधका इति पर्यवसितोऽर्थः । अथ च 'प्रकृतस्य' बुद्धेरात्मगुणत्वस्य स्थापनं साधनं तज्ज्ञापनार्थं च तद्वाक्यम् 'उपपत्तेश्चेति' । तथाच बुद्धेरात्मगुणत्वसाधनेऽपि ते हेतवो न प्रतिषिध्यन्त इति पर्यवसितोऽर्थः ।

(भा०) अथ चोपपत्तेश्चेति हेत्वन्तरमेवेदम् । नित्यः खल्वयमात्मा, यस्मादेकस्मिन् शरीरे धर्मं चरित्वा कायभेदात् स्वर्गे देवेषूपपद्यते, अधर्मं चरित्वा देहभेदाद् नरकेषूपपद्यते इति । उपपत्तिः शरीरान्तरप्राप्तिलक्षणा, सा सति सत्त्वे नित्ये चाश्रयवती । बुद्धिप्रबन्धमात्रे तु निरात्मके निराश्रया नोपपद्यत इति । एकसत्त्वाधिष्ठानश्चानेकशरीरयोगः संसार उपपद्यते । शरीरप्रबन्धोच्छेदश्चापवर्गो मुक्तिरित्युपपद्यते । बुद्धिस-

---

(ख०) अपरं व्याख्यानम्—अथ चेति । उपपत्तेश्चेति तृतीयाध्यायोक्तहेतुभ्योऽन्या 'उपपत्तीः' हेतून् परामृशति । तथाच बुद्धेरात्मगुणत्वसाधकं हेत्वन्तरमप्यस्तीत्यर्थः । तदेव हेत्वन्तरं विवृणोति—नित्यः खल्विति । संसारो मुक्तिश्चात्मनो नित्यत्वे बुद्ध्याश्रयत्वे चैवोपपद्यत इत्यर्थः । 'कायभेदादिति' । 'कायस्य' शरीरस्य 'भेदात्' नाशादित्यर्थः । उपपद्यत इति जायत इत्यर्थः । देहभेदादिति शरीरनाशादित्यर्थः । एतत्प्रसङ्गेन उपपद्यत इत्यत्रोपपत्तिशब्दार्थमाह शरीरेति । उक्तस्वर्गीयनारकीयशरीरप्राप्तिरेवात्मनोऽत्र 'उपपत्तिः'। सा चात्मनो नित्यत्व एव सम्भवतीत्याह सा सतीति । ननु बुद्धिसन्तान एव कर्मकृत् शरीराच्छरीरान्तरं प्रतिपद्यते किम्प्रयोजनमन्तर्गडुभूतस्य बुद्ध्याधारस्यात्मन इत्यत आह—बुद्धिप्रबन्धेति । बुद्ध्याधारस्यात्मनो नित्यस्याभावे शरीरान्तरप्राप्तिलक्षणोपपत्तिर्निराश्रया स्यात् । शरीराच्छरीरान्तरं गन्तृ किमपि सत्त्वं न स्यादिति भावः ॥ उक्तमुपसंहरन् नित्यस्यात्मनोऽभावे न केवलमनेकशरीरप्राप्तिरूपसंसारो नोपपद्यतेऽपि तु सकलशरीरसम्बन्धोच्छेदरूपोऽपवर्गोऽपि नोपपद्यत इत्याह—एकसत्त्वेति । सकलबुद्ध्याधारनित्यात्मसत्त्वे तु संसारापवर्गावुभावप्युपपद्येते इत्यर्थः । नास्ति नित्य आत्मा बुद्धिसन्ततिरेव कर्त्री भोक्त्री चेति पक्षेऽनुपपत्तिं प्रदर्शय-

(भा०)न्ततिमात्रे त्वेकसत्त्वानुपपत्तेर्न कश्चिद्दीर्घमध्वानं सन्धावति न कश्चिच्छरीरप्रबन्धाद्विमुच्यत इति संसारापवर्गानुपपत्तिरिति। बुद्धिसन्ततिमात्रे च सत्त्वभेदात्सर्वमिदं प्राणिव्यवहारजातमप्रतिसंहितमव्यावृत्तमपरिनिष्ठितं च स्यात्। ततः स्मरणाभावो नान्यदृष्टमन्यः स्मरतीति। स्मरणं च खलु पूर्वज्ञातस्य समानेन

(ख०)ति—बुद्धिसन्ततिमात्र इति। बुद्धीनां क्षणिकत्वे नानाशरीरसम्बन्धि किमप्येकं सत्त्वन्न भवेत्—ततश्च एकस्माच्छरीराच्छरीरान्तरं ततश्चान्यच्छरीरमित्यनन्तशरीरसंसरणरूपमतिदीर्घं मार्गमनुधावकं किमपि सत्त्वं न स्यात्, न स्याच्च किमपि नानाशरीरप्राप्त्यनन्तरं तत्साधनमुक्तिमदिति संसारस्य मुक्तेश्चासम्भवः॥ बुद्धिसन्तानमात्रपक्षे दोषान्तरमाह—बुद्धिसन्ततिमात्रे च सत्त्वभेदादिति—प्रतिक्षणभिन्नत्वाद्बुद्धीनामित्यर्थः।

अत्र तात्पर्यम्। पूर्वेद्युरधिकृतानामपरेद्युः परिसमापना दृष्टा समारब्धधर्म्मैव परिसमापनीयमिति प्रतिसन्धाय। अप्रतिसन्धाने तु नासमापयेयुः। परिसमापने वा चैत्रारब्धमचैत्रः समापयेत्। यतः स्वयमारब्धात् परारब्धमव्यावृत्तमविशिष्टम्—स्वस्यापि परत्वात्। अपरिनिष्ठितं च कर्मजातं स्यात्। तथाहि—वैश्यस्तोमे वैश्य एवाधिकारी न ब्राह्मणराजन्यौ—एवं राजसूये राजैव न ब्राह्मणो वैश्यो वा—एवं सोमसाधनके ब्राह्मण एवाधिकृतो न राजन्यवैश्यौ—शूद्रश्चानाधिकृत एवेति 'परिनिष्ठा'। सा बुद्धिसन्ततिमात्रे न स्यात्। कुतः? सल्लक्षणानां सर्वेषामेव त्रैलोक्यवैलक्षण्येन भेदात्—अन्यापोहसामान्यस्य च व्यावर्त्तितत्वादित्यर्थ इति॥

इष्टापत्तिमाशंक्य दोषमाह—तत इति। 'ततः' सकलव्यवहाराणामप्रतिसंहितत्वात् स्मरणाभावः॥ तत्र हेतुः नान्यदृष्टमिति। दर्शनस्मरणकालयोश्चैकस्य सत्त्वस्याभावादित्याशयः। तदेव स्पष्टयति

(भा०)ज्ञात्रा ग्रहणमज्ञासिषममुमर्थं ज्ञेयमिति । सोऽयमेको ज्ञाता पूर्वज्ञातमर्थं गृह्णाति तच्चास्य ग्रहणं स्मरणमिति । तद् बुद्धिप्रबन्धमात्रे निरात्मके नोपपद्यते ॥ ३९ ॥

(सू० ) स्मरणं त्वात्मनो ज्ञस्वाभाव्यात् ॥४०॥

( भा० ) उपपद्यते इति । आत्मन एव स्मरणं न बुद्धिसन्ततिमात्रस्येति । तुशब्दोऽवधारणे । कथम् ? ज्ञस्वभावत्वात् । ज्ञ इत्यस्य स्वभावः स्वो धर्मः । अयं खलु ज्ञास्यति जानाति अज्ञासीदिति त्रिकालविषयेणानेकेन ज्ञानेन सम्बध्यते । तच्चास्य त्रिकालविषयं ज्ञानं प्रत्यात्मवेदनीयं ज्ञास्यामि जानामि अज्ञासिषमिति वर्तते । तद्यस्यायं स्वो धर्मस्तस्य स्मरणं न बुद्धिप्रबन्धमात्रस्य निरात्मकस्येति ॥ ४० ॥

---

(ख०)स्मरणं चेति । एवं च नित्यात्माभावे स्मरणाभावप्रसङ्गोपीत्यर्थः ३९॥

नित्ये त्वात्मनि स्मरणमुपपद्यत एवेत्याह स्मरणं त्विति सूत्रम् ।

सूत्रवाक्यम्पूरयति उपपद्यत इति । तथाच स्मरणमात्मनो ज्ञस्वाभाव्यादुपपद्यत इति सूत्रस्वरूपं पर्यवसितम् ॥ त्रिकालव्यापिनी ज्ञानशक्तिरेव 'ज्ञस्वाभाव्यम्' । ताद्धि आकाशादिभ्यो व्यावृत्तं त्रिकालव्यापिस्वरूपमेवात्मनः । एतत्स्वरूप आत्मनि सत्येव स्मरणमुपपद्यत इति भावः ॥ आत्मन एव स्मरणमित्यवधारणमेव सूत्रगत-'तु'शब्दार्थ इत्याह तुशब्द इति । आत्मन एव स्मरणं न बुद्धिसन्तानस्येत्यत्र को हेतुरिति पृच्छति—कथमिति. । उत्तरम्—ज्ञस्वभावत्वादिति । तदर्थं विवृणोति ज्ञ इत्यस्येति । 'अस्येति'आत्मन इत्यर्थः । उक्तं स्वभावं विशदयति अयमिति—आत्मेत्यर्थः । वर्त्तत इति त्रिकालविषयं ज्ञानमिति शेषः । उपसंहरति तद्यस्यायमिति ॥ ४० ॥

( भा० ) स्मृतिहेतूनामयौगपद्याद्युगपदस्मरणमित्युक्तम् । अथ केभ्यः स्मृतिरुत्पद्यत इति ?

स्मृतिः खलु—

( सू० ) प्रणिधाननिबन्धाभ्यासलिङ्गलक्षणसादृश्यपरिग्रहाश्रयाश्रितसम्बन्धानन्तर्यवियोगैककार्यविरोधातिशयप्राप्तिव्यवधानसुखदुःखेच्छाद्वेषभयार्थित्वक्रियारागधर्माधर्मनिमित्तेभ्यः ॥ ४१ ॥

सुस्मूर्षया मनसो धारणं प्रणिधानं—सुस्मूर्षितलिङ्गचिन्तनं चार्थस्मृतिकारणम् ।

निबन्धः—खल्वेकग्रन्थोपयमोऽर्थानाम् । एकग्रन्थोपयताः खल्वर्था अन्योन्यस्मृतिहेतव आनुपूर्व्येणेतरथा वा भवन्तीति । धारणाशास्त्रकृतो वा प्रज्ञातेषु वस्तुषु स्मर्तव्यानामुपनिःक्षेपो निबन्ध इति ।

---

(ख०) स्मृतिहेतूनामयौगपद्यादिति पूर्वोक्तं स्मारयित्वा स्मृतिहेतुवर्णनपरं सूत्रमवतारयितुं पृच्छति—अथ केभ्य इति ।

पञ्चविंशतिस्मृतिहेतुनिरूपणपरमुत्तरम् -स्मृतिः खल्विति भाष्यमारभ्य प्रणिधानादिनिमित्तेभ्य इत्यन्तम् ॥

प्रणिधानादि प्रत्येकं व्याचष्टे सुस्मूर्षयेति । (१)तत्र प्रथमं प्रणिधानम् । तेषु तेषु प्रसक्तस्य मनसस्ततो निवारणमेव 'धारणम्' । 'सुस्मूर्षितलिङ्गचिन्तनं' च साक्षाद्वा तत्र धारणम्, तल्लिङ्गे वा प्रयत्न इत्यर्थः ।

(२)द्वितीयो निबन्ध इति । यथाऽत्रैव शास्त्रे प्रमाणादयः पदार्था अन्योन्यस्मृतिहेतवो भवन्ति । एतन्निमित्तं च स्मरणमनुक्रमं व्युत्क्रमं च भवतीत्याह आनुपूर्व्येणेति । व्युत्क्रमं यथा क्वचित् निग्रहस्थानानि स्मृत्वा प्रमाणानि स्मरति । निबन्धस्यार्थान्तरमाह-धारणेति । 'धारणाशास्त्र'

(भा०) अभ्यासस्तु समाने विषये ज्ञानानामभ्यावृत्तिः । अभ्यासजनितः संस्कार आत्मगुणोऽभ्यासशब्देनोच्यते । स च स्मृतिहेतुः समान इति । लिङ्गं पुनः संयोगि समवाय्येकार्थसमवायि विरोधि चेति । यथा—धूमोऽग्नेः, गोर्विषाणम्, पाणिः पादस्य, रूपं स्पर्शस्य, अभूतं भूतस्येति । लक्षणं पशववयवस्थं गोत्रस्य स्मृतिहेतुः—विदानामिदं गर्गाणामिदमिति । सादृश्यं चित्रगतं प्रतिरूपकं—देवदत्तस्येत्येवमादि । परिग्रहात्—स्वेन वा स्वामी स्वामिना वा स्वं स्मर्यते । आश्रयाद्—ग्रामण्या तदधीनं संस्मरति । आश्रितात्-तदधीनेन ग्रामण्यमिति । सम्बन्धाद्—अन्तेवासिना युक्तं गुरुं स्मर-

---

(ख०) जैगीषव्यादिप्रोक्तम् । तत्कृतो ज्ञातेषु वस्तुषु नाडीचक्रहृत्पुण्डरीककण्ठकूपनासाग्रताल्वुललाटब्रह्मरन्ध्रादिषु स्मर्त्तव्यानां बीजसंस्थानाभरणभूतानां देवतानाम् 'उपनिक्षेपः' समारोपः । तथाच तत्र तत्र देवताः समारोपितास्तत्तदवयवग्रहणात्स्मर्यन्त इत्यादि तात्पर्ये वर्णितम् । (३) तृतीयोऽभ्यास इति । संस्कार इति । अनेन पदेन सकलस्मृतिकारणानां संस्काराणां समावेशो विवक्षितः ॥ (४) चतुर्थो लिङ्गमिति । तच्चतुर्धा विभजति—संयोगीति । एकार्थसमवायीति । एकस्यावयविनोऽर्थस्य समवायोऽत्रेति समासे पाणिः पादस्येत्युदाहरणम् । एकस्मिन्नर्थे समवायो यस्येति समासे तु रूपं स्पर्शस्येति । (५) पञ्चमो लक्षणमिति । तत्र स्वाभाविकाविनाभावयुक्तं 'लिङ्गम्' साङ्केतिकमात्रं तु 'लक्षण'मित्यनयोर्भेदः ॥ (६) षष्ठः सादृश्यमिति । (७) सप्तमः परिग्रह इति । (८) अष्टमः आश्रय इति । ग्रामणीर्नायकः । (८) नवमः आश्रित इति । (१०) दशमः सम्बन्ध इति । यद्यपि प्रणिधानादिषु सर्वत्र सम्बन्धः सम्प्लवते तथापि सम्बन्धस्य पृथगभिधानादत्र तत्पदेन प्रणिधानादिसूचितसम्बन्धे-

(भा०)ति, ऋत्विजा याज्यमिति। आनन्तर्यादिति—करणीयेष्वर्थेषु। वियोगाद्—येन विप्रयुज्यते तद्वियोगप्रतिसंवेदी भृशं स्मरति। एककार्यात्—कर्त्रन्तरदर्शनात् कर्त्रन्तरे स्मृतिः। विरोधात्—विजिगीषमाणयोरन्यतरदर्शनादन्यतरः स्मर्यते। अतिशयाद्—येनातिशय उत्पादितः। प्राप्तेः—यतोऽनेन किञ्चित्प्राप्तमाप्तव्यं वा भवति तमभीक्ष्णं स्मरति। व्यवधानात्—कोशादिभिरसिप्रभृतीनि स्मर्यन्ते सुखदुःखाभ्यां तद्धेतुः स्मर्यते। इच्छाद्वेषाभ्यां—यमिच्छति यं च द्वेष्टि तं स्मरति। भयाद्—यतो बिभेति। अर्थित्वाद्—येनार्थी भोजनेनाच्छादनेन वा। क्रियया—रथेन रथकारं स्मरति। रागाद्—यस्यां स्त्रियां रक्तो भवति तामभीक्ष्णं स्मरति। धर्मात्—जात्यन्तरस्मरणमिह चाधीतश्रुतावधारणमिति। अधर्मात्—प्रागनुभूतदुःखसाधनं स्मरति।

---

(ख०)भ्योऽन्यः सम्बन्धो विवक्षितः॥ (११)एकादशः आनन्तर्यमिति। (१२)द्वादशो वियोग इति। (१३)त्रयोदश एककार्यमिति। (१४)चतुर्दशो विरोध इति। (१५)पञ्चदशोऽतिशय इति। 'अतिशयः' संस्कार उपनयनादिराचार्यस्य स्मारको भवति। (१६)षोडशः प्राप्तिरिति। (१७)सप्तदशो व्यवधानमिति। (१८)अष्टादशः सुखदुःखेति। (१९)ऊनविंशः इच्छाद्वेषाविति। (२०)विंशो भयमिति। (२१)एकविंशोऽर्थित्वमिति। (२२)द्वाविंशः क्रियेति। (२३)त्रयोविंशो राग इति। (२४)चतुर्विंशो धर्म इति। वेदाभ्यासजनितेन संस्कारेण जातिं ब्राह्मणादिरूपां स्मरति। अथवा जन्मान्तरानुभूतसुखदुःखसाधनयोः प्रागनुभूतसुखादेश्च स्मरणमिह विवक्षितम्। (२५)पञ्चविंशोऽधर्म इति॥

(भा०) न चैतेषु निमित्तेषु युगपत्संवेदनानि भवन्तीति युगपदस्मरणमिति ।

निदर्शनं चेदं स्मृतिहेतूनां न परिसङ्ख्यानमिति ॥ ४१ ॥

( ४ ) बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ।

( भा० ) अनित्यायां च बुद्धौ उत्पन्नापवर्गित्वात् काला-

---

(ख०) उक्तमर्थं प्रकृते योजयन् प्रकरणार्थमुपसंहरति न चैतेष्विति । ननून्मादादयोऽपि स्मृतिहेतवो लोकसिद्धास्तत् किन्तेऽत्र नोक्ता इत्यत आह निदर्शनमिति । परिसंख्यानमिति अशेषाणां स्मतिहेतूनाम्परिगणनमित्यर्थः ॥ ४१ ॥

(४) बुद्धेरुत्पन्नापवर्गित्वप्रकरणम् ॥

बुद्धेरात्मगुणत्वे प्रसाधिते तस्या उत्पन्नापवर्गित्वं निरूपयिष्यते । ज्ञानयौगपद्यनिराकरणप्रसङ्गेन च स्मृतिक्रमोऽपि विचारयिष्यते । ज्ञानस्यैवेच्छाद्येकाश्रयत्वप्रसङ्गेन तन्निर्वाहाय स्मरणं चात्मनो ज्ञस्वाभाव्यादिति (सूत्र ४०) उक्तम् । तदेतत्सर्वं स्मरणे सत्येव स्यात् । तच्च सति संस्कारे । स च ज्ञानस्याशुतरविनाशित्वे–न त्वन्यथेति तदेवाधुना विचार्यते । अत एव तृतीयाध्यायगतबुद्ध्यनित्यताप्रकरणेऽस्या उत्पन्नापवर्गित्वन्न निरूपितम्–तत्र प्रयोजनाभावात् । बुद्धेः सामान्यतोऽनित्यतायामात्मगुणत्वासिद्धिः प्रयोजनम् । तच्च तस्याः कालान्तरावस्थायित्व एव धर्म्माधर्म्मवदुपपद्यते । अतो बुद्धेरनित्यत्वस्य सामान्यतो विचारितस्य विशेषतस्तस्या उत्पन्नापवर्गित्वं (आशुतरविनाशित्वं) अधुना विचार्यते ॥

तत्र संशयकारणं दर्शयति अनित्यायामिति । बुद्धिरनित्येति साधितम् । अनित्यं चोत्पन्नापवर्गि दृष्टं यथा शब्दः, कालान्तरावस्थायि च यथा घटः–इत्युभयथादर्शनात् भवति संशयः । उत्पन्नापवर्गित्वमाशुतरविनाशित्वमिति यावत् ॥ कालान्तरावस्थानाच्च नित्यानामित्येव सर्वत्र पाठ उप-

(भा०) न्तरावस्थानाच्चानित्यानां संशयः—किमुत्पन्नापवर्गिणी बुद्धिः शब्दवदाहोस्वित्कालान्तरावस्थायिनी कुम्भवदिति।

उत्पन्नापवर्गिणीति पक्षः परिगृह्यते।

कस्मात्?—

( सू० )कर्मानवस्थायिग्रहणात् ॥ ४२ ॥

कर्मणोऽनवस्थायिनो ग्रहणादिति। क्षिप्तस्येषोरापतनात् क्रियासन्तानो गृह्यते। प्रत्यर्थनियमाच्च बुद्धीनां क्रियासन्तानोपपत्ति-

---

(ख०) लभ्यते। किन्त्वग्रे कुम्भवदिति दृष्टान्तदृष्ट्याऽनित्यानामिति पाठः सम्यक्प्रतिभाति। नित्यतायामिति पाठे त्वयमर्थः। बुद्धिर्यद्यनित्या तर्हि उत्पन्नापवर्गिणी अथ सा नित्या तर्हि कालान्तरावस्थायिनीति संशय इति। न चायं सङ्गच्छतेऽग्रिमेण ग्रन्थेनेत्ययं पाठ उपेक्षितव्यः॥

सिद्धान्तोपन्यासेनैवोपक्रमते उत्पन्नापवर्गिणीति पक्ष इति। अन्येभ्यो विनाशिभ्य आशुतरं विनश्यतीत्येवोत्पन्नापवर्गित्वस्यार्थः। न त्वयमर्थः 'उत्पत्त्यनन्तरमेव ध्वंसत' इति॥

पृच्छति कस्मादिति। उत्पन्नापवर्गिणीति पक्षः परिगृह्यत इत्यत्र हेतुर्वक्तव्य इत्यर्थः। हेतुप्रदर्शनपरं सूत्रम्—कर्मानवस्थायीति।

सूत्राक्षराणि व्याकुरुते—कर्मण इति। कालान्तरानवस्थाय्येव कर्म गृह्यत इत्यर्थः। तदेव दृष्टान्तेनोपपादयति क्षिप्तस्येति। यदा शरः शरासनात्क्षिप्यते तदा यावत्कालं स भूमौ पतति तावत्कालपर्यन्तं तस्य गतिरूपक्रियासन्तानेऽनेककर्माणि गतिरूपाण्युपलभ्यन्ते। एवमेव यदा बुद्धिसन्तानो भवति तदा तत्रानेकबुद्धिव्यक्तय इति भावः। तत्रोपपत्तिः प्रत्यर्थेति। एका बुद्धिरेकविषया न विषयान्तरविषया, एवमन्या अपि बुद्धयः स्वस्वविषयमात्रे पर्यवसिताः। एवञ्च प्रतिक्षणमपूर्वोत्पन्नान् प्रध्वंसिनः पदार्थान् बुद्धिः प्रत्यर्थनियमेन प्रकाशयति। तस्मादियम-

(भा०)रिति । अवस्थितग्रहणे च व्यवधीयमानस्य प्रत्यक्षनिवृत्तेः। अवस्थिते च कुम्भे गृह्यमाणे सन्तानेनैव बुद्धिर्वर्त्तते प्राग्व्यवधानात् । तेन व्यवहिते प्रत्यक्षं ज्ञानं निवर्तते । कालान्तरावस्थाने तु बुद्धेर्दृश्यव्यवधानेऽपि प्रत्यक्षमवतिष्ठेतेति ।

स्मृतिश्चालिङ्गं बुद्ध्यवस्थाने—संस्कारस्य बुद्धिजस्य स्मृतिहेतुत्वात् । यश्च मन्येत—"अवतिष्ठते बुद्धिः दृष्टा हि बुद्धिविषये

(ख०)प्याशुतरविनाशिनीत्यर्थः ॥

अनवस्थितानां कर्मणां दृष्टान्तेन पक्षं साधयित्वाऽवस्थितानां पदार्थानां दृष्टान्तमुपन्यस्यति अवस्थितग्रहणे चेति । अवस्थितानां घटादिपदार्थानां च ग्रहणे यावत्कालपर्यन्तं ते पदार्थान्तरेण व्यवहिता न भवन्ति तावत्तेषां ग्रहणमनुवर्त्तते व्यवहितेषु तु तेषु तन्निवर्त्तत एव । अनेनापि ज्ञायते यदत्राप्याशुतरविनाशिन्यो नानाज्ञानव्यक्तयः सन्तानरूपेण वर्त्तन्त इति । एतदेव घटदृष्टान्तेन स्पष्टयति अवस्थित इति । बुद्धेः कालान्तरावस्थायित्वेप्येतत्कथन्नोपपद्यत इत्याह—कालान्तरेति । यदि घटग्रहणं कालान्तरावस्थायि स्यात्तर्हि व्यवहितेऽपि घटे तद्ग्रहणमनुवर्त्तेतैवेत्यर्थः । न तु तथा तदनुवर्त्तते । तस्मान्न कालान्तरावस्थायि तद्ग्रहणमित्याशयः ॥

नन्वद्य दृष्टो घटोऽन्येद्युः स्मर्यते । इयं च स्मृतिर्घटज्ञानस्यावस्थायित्वं साधयत्येवेत्यत आह-स्मृतिरिति। बुद्धेः ज्ञानस्य अवस्थाने कालान्तरावस्थायित्वे स्मृतिः अलिङ्गम् 'लिङ्गं' साधकं न भवतीत्यर्थः ॥ कथमिति प्रदर्शयति संस्कारस्येति । यदि ज्ञानमेव साक्षात्स्मृतेः कारणं स्यात्तदैव स्मृतिः स्वकालपर्यन्तं स्वजनकज्ञानस्यावस्थानं साधयेत्—ज्ञानं तु स्मृतेः कारणं न साक्षादपि तु संस्कारद्वारैव—तथाच सति स्मृतिकाले ज्ञानस्यावस्थानं नावश्यकमिति भावः । उक्तमेवार्थं परमतोपन्यासपूर्वकं विशदयति—यश्च मन्येतेति। परमतं प्रकटयति अवतिष्ठत इति । बुद्धिवि-

(भा०) स्मृतिः, सा च बुद्धावनित्यायां कारणाभावान्न स्यादिति"—तदिदमलिङ्गम् । कस्मात् ? बुद्धिजो हि संस्कारो गुणान्तरं स्मृतिहेतुर्न बुद्धिरिति ।

"हेत्वभावादयुक्तमिति चेत्"—बुद्ध्यवस्थानात् प्रत्यक्षत्वे स्मृत्यभावः । यावदवतिष्ठते बुद्धिस्तावदसौ बोद्धव्यार्थः प्रत्यक्षः प्रत्यक्षे च स्मृतिरनुपपन्नेति ॥ ४२ ॥

(सू०) "अव्यक्तग्रहणमनवस्थायित्वाद्विद्युत्सम्पाते रूपाव्यक्तग्रहणवत्" ॥ ४३ ॥

---

(व०) ययं स्मृतिर्दृष्टा—तस्या उत्पत्तिकाले कारणेनावश्यम्भवितव्यम् । बुद्धिरेव तत्कारणम्—यदि बुद्धिः कालान्तरावस्थायिनी न स्यात् तर्हि स्मृतिकाले सा नाभविष्यत्—एवं च तत्काले तस्या अभावात् तज्जन्या स्मृतिर्नैवोत्पद्येतेति पराक्षेपाशयः । तदिदं समाधत्ते—तदिदमिति । यदुक्तं परेण तत् 'अलिङ्गम्' असाधकं बुद्ध्यवस्थायित्वपक्षस्येति शेषः । पृच्छति कस्मादिति । उत्तरयति बुद्धिज इति । स्मृतेः कारणं न बुद्धिरेव साक्षात् अपि तु तज्जन्यं गुणान्तरं संस्काराभिधमिति नोक्तस्याक्षेपस्यावकाश इति भावः ॥

पुनः परः प्रत्यवतिष्ठते-हेत्वभावादिति । यत् समाधानमुक्तं तदयुक्तम्—यतोऽत्र हेतुः कश्चिन्नोपन्यस्त इति भावः ॥ परिहरति बुद्ध्यवस्थानादिति । एतदेव विशदयति—यावदवतिष्ठत इति । यदि बुद्धिरेव कालान्तरावस्थायिनी तर्हि बुद्धिजनकीभूतेन्द्रियसन्निकर्षादिनिवृत्तावप्यवतिष्ठेतैव—ततश्च बहुकालपर्यन्तम्प्रत्यक्षज्ञानस्यैवावस्थानात्स्मृतेरावश्यकताऽवसरो वा न स्यादित्याशयः ॥४२॥

पुनः पर आक्षिपति अव्यक्तग्रहणेत्यादिसूत्रेण ॥ यदि 'ग्रहणं' 'अन-

( भा० ) "यद्युत्पन्नापवर्गिणी बुद्धिः प्राप्तमव्यक्तं बोद्धव्यस्य ग्रहणं-यथा विद्युत्सम्पाते वैद्युतस्य प्रकाशस्यानवस्थानादव्यक्तं रूपग्रहणमिति । व्यक्तं तु द्रव्याणां ग्रहणम् । तस्मादयुक्तमेतदिति" ॥ ४३ ॥

( सू० ) हेतूपादानात् प्रतिषेद्धव्याभ्यनुज्ञा ॥४४॥

( भा० ) उत्पन्नापवर्गिणी बुद्धिरिति प्रतिषेद्धव्यम् । तदेवाभ्यनुज्ञायते 'विद्युत्सम्पाते रूपाव्यक्तग्रहणवदिति' । यत्राव्यक्तग्रहणं तत्रोत्पन्नापवर्गिणी बुद्धिरिति ।

---

(ख०)वस्थायि' स्यात्तर्हि तत् सर्वदाऽव्यक्तमेव स्यात्-यथा विद्युत्सम्पाते यद्रूपग्रहणं भवति तत् क्षणिकं सदव्यक्तमेव भवतीति सूत्रार्थः ।

सूत्रं व्याचष्टे—यद्युत्पन्नेति । विद्युत्सम्पाते रूपग्रहणस्य क्षणिकत्वे हेतुः 'वैद्युतस्य प्रकाशस्यानवस्थानात्' क्षणिकत्वादिति ॥ उपसंहरति व्यक्तमिति । ग्रहणस्य क्षणिकत्वे तदव्यक्तमेव स्यात् न तु तथा दृश्यते—व्यक्तमेव प्रायः सर्वेषां द्रव्याणां ग्रहणं भवति । तस्माद्ग्रहणस्य कालान्तरानवस्थायित्वपक्षोऽयुक्त एवेत्याक्षेपाशयः ॥४३॥

आक्षेपं परिहरति हेतूपादानादिति सूत्रम् । यो हेतुराक्षेप्त्रोपन्यस्तस्तेनैवाक्षिप्तस्य पक्षस्य स्वीकारः कृत इत्यर्थः ।

सूत्रार्थं व्याचष्टे उत्पन्नेति । आशुतरविनाशिनी बुद्धिरित्येष पक्षः परस्य प्रतिषेद्धव्यः । किन्तु 'विद्युत्सम्पाते रूपग्रहणमव्यक्तं भवति' इत्येव तेन तत्प्रतिषेधसाधनाय हेतुरुपन्यस्तः । यदि विद्युत्सम्पाते रूपग्रहणमव्यक्तं तदा तदाशुतरविनाश्यपीत्यभ्युपगतमेव परेण । एवं च यदेव प्रतिषेद्धव्यं-बुद्धिराशुतरविनाशिनीति मतम्—तदेवाभ्यनुज्ञातमिति वदतो व्याघातः परस्येत्याशयः ॥

(भा०)ग्रहणे हेतुविकल्पाद् ग्रहणविकल्पो न बुद्धिविकल्पात्।

यदिदं क्वचिदव्यक्तं क्वचिद्व्यक्तं ग्रहणमयं विकल्पो ग्रहणहेतुविकल्पात् । यत्रानवस्थितो ग्रहणहेतुः तत्राव्यक्तं ग्रहणं यत्रावस्थितस्तत्र व्यक्तम्—न तु बुद्धेरवस्थानानवस्थानाभ्यामिति। कस्मात्? अर्थग्रहणं हि बुद्धिः । यत्र तदर्थग्रहणमव्यक्तं व्यक्तं वा बुद्धिः सेति । विशेषाग्रहणे च सामान्यग्रहणमात्रमव्यक्तग्रहणम्। तत्र विषयान्तरे बुद्ध्यन्तरानुत्पत्तिर्निमित्ताभावात् । यत्र समा-

---

(ख०) आक्षेपं प्रौढिवादेन परिहृत्य तात्त्विकम्परिहारान्तरमाह— ग्रहणे हेत्वित्यादि बुद्धिविकल्पादित्यन्तम् । एतद्वाक्यं केचित्सूत्रत्वेनाभिप्रयन्ति । तत्र प्रमाणाभावाद् भाष्यस्यैव संक्षिप्तोक्तिरियमिति निर्धारितम् ॥

उक्तसंक्षिप्तवाक्यस्याशयं वर्णयति— यदिदमिति । बुद्धेः कालान्तरानवस्थायित्वेऽव्यक्तमेव सर्वं ग्रहणं स्यादिति यदुक्तं तन्न मृष्यामहे । यतो यदिदं ग्रहणं क्वचिद्व्यक्तं क्वचिदव्यक्तमेव भवतीत्यत्र ज्ञानकारणविशेष एव कारणम् न बुद्ध्यवस्थानानवस्थाने इत्यर्थः। एतदेव स्पष्टयति यत्रानवस्थित इति ।। अत्र किम्प्रमाणमिति पृच्छति कस्मादिति । तस्योत्तरे बुद्धेर्व्यक्तत्वाव्यक्तयोरेवार्थं स्फोरयति अर्थग्रहणं हीति । ग्रहणमेव बुद्धिर्न बुद्धित्वे व्यक्तत्वमव्यक्तत्वं वा नियामकमिति भावः। व्यक्तत्वमव्यक्तत्वं च निरूपयति विशेषेति । प्रत्येकं वस्तु सामान्यरूपं विशेषरूपं च । तंत्र यत्र विशेषरूपग्रहणस्य निमित्ताभावात्तन्न गृह्यते सामान्यरूपमात्रं गृह्यते तत्र तस्यार्थस्य सामान्यरूपस्य ग्रहणं व्यक्तमेव। यच्च तस्य विशेषरूपं न गृह्यते तत्तद्ग्रहणान्तरस्य कारणाभावादेवेत्याह तत्र विषयान्तर इति । एकस्यैवार्थस्य सामान्यरूपस्य विशेषरूपं 'विषयान्तरं' विशेषरूपस्य च सामान्यरूपमिति ध्येयम् । यत्र सामान्यविशेषरूपोभयग्रहणनिमित्तसद्भावादुभयमेव गृह्यते तत्र का गति-

(भा०)नधर्मयुक्तश्च धर्मी गृह्यते विशेषधर्मयुक्तश्च तद्व्यक्तं ग्रहणम्। यत्र तु विशेषेऽगृह्यमाणे सामान्यग्रहणमात्रं तदव्यक्तं ग्रहणम्। समानधर्मयोगाच्च विशिष्टधर्मयोगो विषयान्तरम्। तत्र यत्तु ग्रहणं न भवति तद्ग्रहणनिमित्ताभावाद्, न बुद्धेरनवस्थानादिति।

यथाविषयं च ग्रहणं व्यक्तमेव। प्रत्यर्थनियतत्वाच्च बुद्धीनां सामान्यविषयं च ग्रहणं स्वविषयं प्रति व्यक्तं, विशेषविषयं च ग्रहणं स्वविषयं प्रति व्यक्तम्। प्रत्यर्थनियता हि बुद्धयः।

---

(ख०)रित्यत आह—यत्र समानेति। तत्रापि ग्रहणं सामान्यविशेषोभयं प्रति व्यक्तमेवेत्यर्थः। यत्र पुनरुभयग्रहणनिमित्तसद्भावेऽप्येकमेव गृह्यते तत्र किमित्यत आह यत्र त्विति। तत्रैकमात्रग्रहणमव्यक्तमेवेत्यर्थः। एक एव अर्थः कथं स्वस्मादेव विषयान्तरं भवितुमर्हतीति व्याचष्टे—समानधर्मयोगादिति। एकस्यैवार्थस्य द्वे रूपे सामान्यरूपं विशेषरूपं च। तत्र सामान्यरूपाद् विशेषरूपं विशेषरूपाद्वा सामान्यरूपं भवत्येव विषयान्तरं—द्वयोर्ग्रहणयोर्भिन्नत्वादिति भावः। अर्थे गृह्यमाणे कथं तस्य रूपं सामान्यं विशेषं वा न गृह्यत इति व्याचष्टे—तत्र यत्त्विति। यदैकमेव गृह्यते नापरं—ततश्चाव्यक्तताग्रहणस्य—तत्रागृहीतग्रहणे तद्ग्रहणनिमित्तस्याभाव एव कारणम् नतु सूत्र(४३)कथिततद्बुद्धेरनवस्थानं तत्र कारणमित्याह न बुद्धेरिति।

स्वतात्पर्यमधुना प्रकटयति यथाविषयमिति। यत्र यथा वर्त्तते तथैव ग्रहणं तत्र तद्ग्रहणं व्यक्तमेव भवति। ततः किमित्यत आह प्रत्यर्थनियतत्वादिति। एकस्या बुद्धेरेक एव विषयः सामान्यरूपो विशेषरूपो वा। एवं च यत्र सामान्यरूपं गृह्यते तत्र तद्विषयं ग्रहणं व्यक्तमेव, यत्र च विशेषरूपं गृह्यते तत्रापि तद्विषयं ग्रहणं व्यक्तमेवेति। तत्र कारणमाह प्रत्यर्थेति। प्राग्व्याख्यातमिदम्। उक्तमर्थं

(भा०)तदिदमव्यक्तग्रहणं देशितं क्व विषये बुद्ध्यनवस्थाकारितं स्यादिति ?

धर्मिणस्तु धर्मभेदे बुद्धिनानात्वस्य भावाभावाभ्यां तदुपपत्तिः ।

धर्मिणः खल्वर्थस्य समानाश्च धर्मा विशिष्टाश्च । तेषु प्रत्यर्थनियता नानाबुद्धयः । ता उभय्यो यदि धर्मिणि वर्तन्ते तदा व्यक्तं ग्रहणं धर्मिणमभिप्रेत्य । यदा तु सामान्यग्रहणमात्रं तदाऽव्यक्तं ग्रहणमिति । एवं धर्मिणमभिप्रेत्य व्यक्ताव्यक्तयोर्ग्रहणयोरुपपत्तिरिति ॥ ४४ ॥

( भा० )न चेदमव्यक्तं ग्रहणं बुद्धेर्बोद्धव्यस्य वानवस्था-

---

(ख०)परकृताक्षेपे योजयति–तदिदमिति । यदि बुद्धिरनवस्थिता स्यादव्यक्तमेव, ग्रहणं स्यादिति परस्याक्षेपः । तत्र तावद्ग्रहणस्याव्यक्ततैवाप्रसिद्धेति प्रदर्शितम् । तथा चाक्षेपस्य मूलमेवापसारितम्मन्तव्यमिति हृदयम् ।

किन्तर्ह्यव्यक्तता ज्ञानस्य सर्वथाऽप्रसिद्धैवेति–नेति प्रदर्शयितुमव्यक्तत्वस्योपपत्त्यन्तरं निरूपयति–धर्मिण इति । तदुपपत्तिरिति व्यक्तत्वाव्यक्तत्वोपपत्तिरित्यर्थः ।

सङ्क्षेपेणोक्तमर्थं विशदयति धर्मिणः खल्विति । व्याख्यातमेवेदं प्राक् । अनेन प्रकृते किमायातमित्याह एवं धर्मिणमिति । ग्रहणस्य यद्व्यक्तत्वमव्यक्तत्वं वा न तज्ज्ञानस्यावस्थानानवस्थानकारितमपि तु गृहीतार्थस्वरूपकारितमिति भावः । ततश्चाक्षेपः समूलं पराहतो वेदितव्य इति ॥ ४४ ॥

द्वितीयमपि परिहारम्प्रौढिवादमात्रं मत्वा पुनः प्रकारान्तरेण परिहारमाह–न चेदमिति । ग्रहणास्याव्यक्तता ग्रहणानवस्थायित्वकारिता न

(भा०)यित्वादुपपद्यते इति ॥

इदं हि न—

(सू०)प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत्तद्ग्रहणम्॥४५॥

(भा०) अनवस्थायित्वेऽपि बुद्धेस्तेषां द्रव्याणां ग्रहणं व्यक्तं प्रतिपत्तव्यम् । कथम् ? प्रदीपार्चिःसन्तत्यभिव्यक्तग्रहणवत् । प्रदीपार्चिषां सन्तत्या वर्त्तमानानां ग्रहणानवस्थानं ग्राह्यानवस्थानं च, प्रत्यर्थनियतत्वाद् बुद्धीनां–यावन्ति प्रदीपार्चींषि तावत्यो बुद्धय–इति । दृश्यते चात्र व्यक्तं प्रदीपार्चिषां ग्रहणमिति ॥ ४५ ॥

---

(ख०)भवत्यपि तु ग्रहणविषयस्वरूपकारितैवेति प्रसाधितम् । तत्त्वतस्तु ग्रहणगमव्यक्तत्वन्न ग्रहणानवस्थायित्वकारितं न वा तद्विषयानवस्थायित्वकारितमिति तत्त्वम् ।

एवं सति (४३) सूत्रकृतपराक्षेपस्य किमुत्तरमित्यपेक्षायामुत्तरसमर्पकसूत्रमवतारयति 'इदं हि न' इति भाष्यम् । इदमिति परकृतमाक्षेपं परामृशति । नेति यत्परेणोक्तं तन्न सम्यगित्यर्थः ।

कुत इत्याह–प्रदीपार्चिरिति सूत्रम् । परोक्तेरनैकान्तिकत्वप्रदर्शनार्थमेतत् ।

सूत्रार्थं व्याचष्टे अनवस्थायित्वेऽपीति । यदा ग्रहणमनवस्थितं तदापि तद्व्यक्तं भवत्येवेति स्वीकार्यम् । पृच्छति कथमिति । उत्तरमाह प्रदीपार्चिरिति । यदा दीपज्वाला दृश्यते तदा न ज्वालाया एकत्वमपि तु क्षणिकानां नानाज्वालानां सन्ततिरेव गृह्यत इति सर्वसम्मतम् । तत्सन्ततिगतज्वालाव्यक्तीनां क्षणिकत्वात्तद्ग्रहणानामपि क्षणमात्रावस्थायित्वमेव । ततः किमित्याह–दृश्यत इति । यद्यप्यत्र ग्रहणान्यनवस्थितानि तथापि व्यक्तान्येवेति न ग्रहणानवस्थायिताकारितन्तदव्यक्तत्वमिति स्पष्टमिति भावः ॥ ४५ ॥

(५) बुद्धेश्शरीरगुणव्यतिरेकप्रकरणम् ।

( भा० ) "चेतना शरीरगुणः—सति शरीरे भावादसति चाभावादिति"—

( सू० ) द्रव्ये स्वगुणपरगुणोपलब्धेः संशयः ॥ ४६ ॥

(भा०)सांशयिकः सति भावः। स्वगुणोऽप्सु द्रवत्वमुपलभ्यते, परगुणश्चोष्णता । तेनायं संशयः—किं शरीरगुणश्चेतना शरीरे

---

(ख०) उत्पन्नापवर्गित्वं बुद्धेः प्रसाध्य शरीरगुणत्वव्यतिरेकप्रकरणमारम्भणीयम् । उत्पन्नापवर्गित्वे हि सिद्धे वक्ष्यमाणहेतवः सुप्रतिपदा भवन्तीति तदनन्तरमस्यारम्भः । पूर्वं भूतेन्द्रियमनोगुणत्वप्रतिषेधे साधारणैर्हेतुभिः शरीरगुणत्वमपि प्रतिषिद्धमेव । अधुना तु शरीरगुणत्वमेव प्रतिषेद्धुं विशेषहेतवोऽभिधीयन्ते । एतद्विशेषहेतुप्रतिपादनस्य तु बुद्ध्यनवस्थायिताधीनत्वादेव तत्प्रकरणमवान्तरे निवेशितमिति बोध्यम् ।

तत्रोत्सूत्रमेव पूर्वपक्षमुपस्थापयति चेतना शरीरगुण इति। तत्र हेतुमाह सतीति । अन्वयव्यतिरेकसिद्धमेतदिति भावः ।

पूर्वपक्षं संशयग्रस्तत्वेन निराकरोति द्रव्ये स्वेति सूत्रम् । द्रव्येषु स्वगुणानां परगुणानां चोपलब्धिरतः संशय एवेति सूत्रार्थः ।

सूत्रार्थं व्याचष्टे सांशयिक इति । कस्मिंश्चिद्द्रव्ये सति कश्चिद्गुणो गृह्यत इत्येतावन्मात्रेण न किमपि निश्चयात्मकं ज्ञानं जन्यते । अत्र हेतुः सूत्रोक्तः—द्रव्ये स्वगुणपरगुणोपलब्धेरिति । एतदेव दृष्टान्तेन विशदयति स्वगुण इति । अप्सु जले यद्द्रवत्वमुपलभ्यते तत्तस्य स्वकीय एव गुणः, तत्रैव योष्णतोपलभ्यते न सा जलस्य स्वकीयो गुणोऽपि तु तदन्तर्गतस्य तेजस एव । दृष्टान्तार्थं प्रकृते योजयति तेनेति । यतो द्रव्ये स्वकीयपरकीयोभयगुणोपलब्धि-

(भा०)गृह्यतेऽथ द्रव्यान्तरगुण इति ॥ ४६ ॥

( भा० ) न शरीरगुणश्चेतना । कस्मात् ?—

( सू० ) यावच्छरीरभावित्वाद्रूपादीनाम् ॥ ४७ ॥

(भा०) न रूपादिहीनं शरीरं गृह्यते । चेतनाहीनं तु गृह्यते-यथोष्णताहीना आपः । तस्मान्न शरीरगुणश्चेतनेति ।

---

(ख०)दृश्यतेऽतो यद्यपि शरीरे चैतन्यमुपलभ्यते तथाऽपि एतन्न निश्चितं यदिदं शरीरस्यैव गुण आहोस्वित्तदन्तर्गतस्यान्यस्यैव कस्यचि-द्द्रव्यस्येति ॥ ४६ ॥

पूर्वपक्षं सांशयिकत्वेनापाकृत्य सिद्धान्तमुपस्थापयति न शरीरे-ति । हेतुं पृच्छति कस्मादिति ।

तत्रोत्तरम् यावच्छरीरेति सूत्रम् । इदं वैधर्म्येण दृष्टान्तसूत्रम् । रूपादिगुणेष्वेव शरीरेणान्वयव्यतिरेकौ । रूपादय एव यावच्छरीर-भाविनो न पुनश्चैतन्यम् ।

एतदेव स्पष्टयति न रूपेति । यावच्छरीरं वर्त्तते तावद्रूपादयो वर्त्तन्ते यदा शरीरं नास्ति तदा रूपादयो न सन्तीत्यनुभवसिद्धम् । न चैवं चैतन्ये—मृतावस्थायां शरीरे सत्यपि तत्र चैतन्यस्यानुपलब्धेः । एवं च यथा जले औष्ण्यं तथैव शरीरे चै-तन्यमिति सिद्ध्यति । उपसंहति तस्मादिति । तथा चात्र प्रयोगः— न शरीरगुणश्चेतना शरीरेऽपि तस्यानुपलब्धेः जलस्यौष्ण्यवदिति । इदं सूत्रं तर्कोद्भावनपरमिति परिशुद्धिकृतः। तर्काकारश्च—'यदि बुद्ध्या-दिकं शरीरगुणः स्याद्यावच्छरीरभावि स्यात् रूपादिवदिति' । अनुमा-नोद्भावनपरमिति वृत्तिकृतः । तदुक्तमनुमानस्वरूपं च–'बुद्ध्यादिकं न शरीरविशेषगुणोऽयावद्द्रव्यभावित्वात् शब्दवत् , रूपवद्वा (व्यतिरेके) ।' अयावद्द्रव्यभावित्वं चाश्रयत्वाभिमतकालीननाशप्रतियोगित्वम् ।

(भा०) "संस्कारवदिति चेद्" न, करणानुच्छेदात् ।
यथाविधे द्रव्ये संस्कारः तथाविध एवोपरमो न । तत्र कारणोच्छेदादत्यन्तं संस्कारानुपपत्तिर्भवति । यथाविधे शरीरे चेतना गृह्यते तथाविधे एवात्यन्तोपरमश्चेतनाया गृह्यते । तस्मात् संस्कारवदित्यसमः समाधिः ।

"अथापि शरीरस्थं चेतनोत्पत्तिकारणं स्याद् द्रव्यान्तरस्थं

---

(ख०) परः स्वपक्षसाधकं दृष्टान्तान्तरमाह संस्कारवदिति । यथा संस्कारः शरीरगुणो न च यावच्छरीरं वर्त्तते तथा चेतनापीत्याशयः । तत्परिहरति न कारणेति ।

परिहारं विवृणोति यथाविध इति । उपरमो नेत्येतावत्पर्यन्तमस्य वाक्यस्य परिसमाप्तिः । तेनायमाशयः परिहारस्य । संस्कारविषये एतत्स्पष्टं यद् यादृशे द्रव्ये स उपलभ्यते तादृश एवोपरमतेऽपि । अयं संस्कारोपरमस्तत्कारणनाशादेव भवन् अत्यन्तमेव भवति । यथा यदवस्थे बाणे वेगाख्यः संस्कारो जन्यते तदवस्थ एव तस्मिन्नुपरमते च नोदनादितत्कारणोच्छेद इति । शरीरचैतन्यविषये तु न तथा । जीवितावस्थे हि शरीरे चैतन्यमुपलभ्यते मृतावस्थे च तस्मिन् तदुपरमते । न च भवन्मते तत्र चैतन्यकारणोच्छेदः । शरीरमात्रं हि तत्कारणं भवताम्, तच्चानुच्छिन्नमेव मृतावस्थायामपि । परिहारमुपसंहरति तस्मादिति । संस्कारचैतन्ययोर्न किमपि साम्यमिति संस्कारवदिति न सम्यग्दृष्टान्तोपन्यास इत्यर्थः ।

उक्तवैषम्यपरिजिहीर्षया पर एवं ब्रूयात्—'यथैव संस्कारस्य कारणं तदाश्रयभूतद्रव्यादन्यदेव नोदनादि यस्य सत्त्वेन तस्योत्पत्तिर्यस्य चोपरमेण तस्योपरमः एवमेव शरीरगतचैतन्यस्यापि न शरीरमात्रं कारणमपि त्वन्यदेव किमपि तत्सन्निहितमिति' । एतदेव दूषयितुं विकल्पयति

(भा०)वा उभयस्थं वा" । तन्न, नियमहेत्वभावात् । शरीरस्थेन कदाचिच्चेतनोत्पद्यते कदाचिन्नेति नियमे हेतुर्नास्तीति । द्रव्यान्तरस्थेन च शरीर एव चेतनोत्पद्यते न लोष्टादिष्वित्यत्र न नियमहेतुरस्तीति । उभयस्थस्य निमित्तत्वे शरीरसमानजातीयद्रव्ये चेतना नोत्पद्यते शरीर एव चोत्पद्यते इति नियमे हेतुर्नास्तीति ॥ ४७ ॥

---

(ख०)अथापीति । यच्छरीरे चैतन्योत्पत्तिकारणं तत्किं शरीरस्थमुत द्रव्यान्तरस्थमुतोभयस्थमिति विकल्पः । किमप्येकमेतन्न सम्भवतीत्याह तन्नेति । तत्र हेतुः नियमहेत्वभावादिति । शरीरस्थकारणपक्षे नियमहेत्वभावं दर्शयति शरीरस्थेनेति । यदि शरीरस्थमेव चैतन्यकारणं तर्हि कदाचित्तत्र चैतन्यमुद्भवति कदाचिन्नेत्यत्र कोऽपि हेतुर्न स्यात् । द्रव्यान्तरस्थकारणपक्षे नियमहेत्वभावं दर्शयति द्रव्यान्तरस्थेनेति । यदि शरीराद्द्रव्यान्तरस्थमेव चैतन्यकारणं तर्हि शरीर एव चैतन्यमुपलभ्यते नान्यत्र क्वचिदित्यत्र हेतुर्न स्यात् । उभयस्थकारणपक्षे नियमहेत्वभावं दर्शयति उभयस्थस्येति । शरीरद्रव्यान्तरोभयस्थं यदि चैतन्यकारणं तदा शरीरसमानजातीये द्रव्यान्तरे चैतन्यन्नोत्पद्यते शरीर एव एकस्मिन्द्रव्ये तदुत्पद्यत इत्यस्मिन्नियमे हेतुर्न स्यादित्यर्थः । इदमप्यत्रावधेयम् । यच्छरीरे चेतनोत्पत्तिकारणं तत् किं शरीरस्थमुत द्रव्यान्तरस्थम् । शरीरस्थमपि च यावद्द्रव्यभाव्युत नैमित्तिकम् । यदि यावद्द्रव्यभावि न कदाचिच्चेतनाहीनं शरीरमुपलभ्येत, निमित्तस्य सन्निहितत्वात् । अथ नैमित्तिकं, यच्छरीरे चेतनोत्पत्तेर्निमित्तस्य कारणं तत्रापि स एव प्रसङ्गः । अथ द्रव्यान्तरवृत्ति कारणं, शरीरे चेतनां करोति न द्रव्यान्तरेष्वित्यत्रापि नियमहेतुर्वक्तव्यः । द्रव्यान्तरस्थं च तत्कारणं नित्यमनित्यं वा । अनित्यमपि कालान्तरस्थायि प्रतिक्षणध्वंसि वेति स एव प्रस-

( भा० ) यच्च मन्येत-"सति श्यामादिगुणे द्रव्ये श्यामाद्युपरमो दृष्टः एवं चेतनोपरमः स्यादिति"—

( सू० ) न, पाकजगुणान्तरोत्पत्तेः ॥ ४८ ॥

(भा०)नात्यन्तं रूपोपरमो द्रव्यस्य-श्यामे रूपे निवृत्ते पाकजं गुणान्तरं रक्तं रूपमुत्पद्यते। शरीरे तु चेतनामात्रोपरमोऽत्यन्तमिति ॥ ४८ ॥

( भा० ) अथापि—

---

(ख०)ज्ञस्तदवस्थ इत्यादि वार्त्तिके स्पष्टम् ॥ ४७ ॥

परपक्षसाधनं दृष्टान्तान्तरमनुवदति—यच्च मन्येतेति। यद्यपि श्यामादिर्घटस्य गुणस्तथा सत्यपि घटे तत्र पाकानन्तरं श्यामगुणोपरम एवमेव शरीरगुणत्वेऽपि चैतन्यस्य शरीरावस्थान्तरे तद्गुणोपरमः सूपपाद इति भावः ॥

परिहरति न पाकजेति सूत्रम् ॥

तदर्थं व्याचष्टे नात्यन्तेति। क्वचिदपि द्रव्ये तद्गुणस्यात्यन्तोपरमो न भवति। घटगतश्यामत्वे कथमित्यत आह श्याम इति। घटे यदा पाकानन्तरं श्यामता नोपलभ्यते तत्रापि श्यामरूपं निवृत्तं भवति रक्तं च रूपमुद्भवतीति न रूपगुणस्यात्यन्तोच्छेदः पिठरे परमाणौ वा। शरीरे तु मृतावस्थे चैतन्यस्यात्यन्तिक एवाभावो दृश्यते। एवं च दृष्टान्तदार्ष्टान्तिकयोरात्यन्तिकानात्यन्तिकत्वरूपं महद्वैषम्यमिति हृदयम् ॥

वृत्तिकृतस्त्वेतत् सूत्रं पूर्वपक्षत्वेन वर्णितवन्तः। तदर्थश्च-द्रव्ये घटादौ सत्येव तत्र पाकानन्तरं गुणान्तरस्योत्पत्तेः'न'समीचीनं सिद्धान्त्युक्तमिति ॥ तन्मतेनास्यैव पूर्वपक्षस्य परिहारोऽग्रिमे सूत्रे ॥ ४८ ॥

तदेवमात्यन्तिकानात्यन्तिकत्वं वैधर्म्यमुक्त्वा सप्रतिद्वन्द्वित्वासप्रतिद्वन्द्वित्वं वैधर्म्यान्तरमुद्भावयितुमाह अथापीति।

( सू० ) प्रतिद्वन्द्विसिद्धेः पाकजानामप्रतिषेधः ॥४९॥

(भा०) यावत्सु द्रव्येषु पूर्वगुणप्रतिद्वन्द्विसिद्धिस्तावत्सु पाकजोत्पत्तिर्दृश्यते, पूर्वगुणैः सह पाकजानामवस्थानस्याग्रहणात् । न च शरीरे चेतनाप्रतिद्वन्द्विसिद्धौ सहानवस्थायि गुणान्तरं गृह्यते-येनानुमीयेत तेन चेतनाया विरोधः । तस्मादप्रतिषिद्धा चेतना यावच्छरीरं वर्तेत । न तु वर्त्तते । तस्मान्न शरीरगुणश्चेतना इति ॥४९॥

( भा० ) इतश्च न शरीरगुणश्चेतना--

---

(ख०)तद्वैधर्म्यमेवाह–प्रतिद्वन्द्वीति सूत्रम् ॥

सूत्रं व्याचक्षाणो वस्तुगतिं वर्णयति यावत्स्विति । पाकेन गुणान्तरोत्पत्तिस्तत्रैव दृश्यते यत्रैतद्गुणान्तरं तद्द्रव्यगतपूर्वगुण-विरोधि भवति । यथा घटे रक्तगुणः श्यामरूपस्य विरोधी, तयोरेकस्मिन्द्रव्ये सहावस्थानासम्भवात् ॥ किमेतेन प्रकृत इति दर्शयति न च शरीर इति । शरीरे तु किमपि तादृशं गुणान्तरन्नैव दृश्यते यस्य तद्गतचैतन्येन सहावस्थानासम्भवरूपो विरोधः स्यादिति भावः ॥ न च शरीरे अचेतनैव चेतनाविरोधि गुणान्तरं मन्तव्यमिति वाच्यम् । तस्याः स्वरूपतोऽनिर्देश्यत्वात् । यन्नामाचैतन्यं तत्किं चैतन्य-विरोधि गुणान्तरमेवाहोस्विच्चैतन्यप्रतिषेधमात्रमिति निर्धारयितुन्न शक्यते । यदि विरोधि गुणान्तरमभविष्यत्तदा चैतन्यवत् अनुभव-गोचरमभविष्यत् । एवं च यदि चैतन्यप्रतिषेधमात्रं तत्तर्हि न तत् गुणान्तरमित्याशयः ॥ उपसंहरति तस्मादिति । शरीरस्य गुणश्चैतन्यम्, न च तत्र तद्विरोधिगुणान्तरोत्पत्तिसम्भवस्ततश्च यावच्छरीरवर्त्तित्वमस्यावश्यम्भावि–न च तथा दृश्यते–तस्मात्सिद्धन्न शरीरगुणश्चैतन्यमिति॥४९॥

शरीरचैतन्याभावसाधकं हेत्वन्तरं प्रस्तौति इतश्चेति ।

( सू० ) शरीरव्यापित्वात् ॥ ५० ॥

(भा०) शरीरं शरीरावयवाश्च सर्वे चेतनोत्पत्त्या व्याप्ता इति न क्वचिदनुत्पत्तिश्चेतनायाः। शरीरवच्छरीरावयवाश्चेतना इति प्राप्तं चेतनबहुत्वम्। तत्र यथा प्रतिशरीरं चेतनबहुत्वं सुखदुःखज्ञानानां व्यवस्थालिङ्गम्, एवमेकशरीरेऽपि स्यात्। न तु भवति। तस्मान्न शरीरगुणश्चेतनेति ॥ ५० ॥

( भा० ) "यदुक्तं-न क्वचिच्छरीरावयवे चेतनाया अनुत्पत्तिः-इति, सा—

---

(ख०)तदेव हेत्वन्तरमाह-शरीरव्यापित्वादिति सूत्रम्। नैतत्साधनमपि तु शरीरे चेतनां ब्रुवतोऽनेकचेतनत्वप्रसङ्गोद्भावनमात्रमिति वार्तिककृतः। साधनमेवेदमिति परिशुद्धिकृतः ॥ तत्र प्रयोगश्चोक्तः—चेतना न शरीरविशेषगुणः अव्याप्यवृत्तित्वात् शब्दवदिति ॥ भाष्यवार्त्तिकोक्तिस्त्वित्थं व्याख्याता तैः। एष चार्थः शरीरव्यापित्वादित्येतस्य सूत्रस्य स्पष्टत्वाद् भाष्यकारादिभिरुपेक्षितः। उत्तरसूत्रावतारपरैस्त्वेकस्मिन्नपि शरीरे चेतनबहुत्वप्रसङ्गतया सूत्रं व्याख्यातमिति मन्तव्यमिति ॥

सूत्रार्थं व्याचष्टे शरीरमिति। न कश्चिदपि शरीरावयवश्चेतनाहीनो भवतीत्याह न क्वचिदिति। ततः किमित्याह प्राप्तमिति। भवतु चेतनबहुत्वं तथापि किमित्याह तत्र यथेति। विभिन्नेषु विभिन्नचेतनव्याप्तेषु यज्ञदत्तदेवदत्तभवदत्तानां शरीरेषु 'व्यवस्था' दृश्यते यद्यज्ञदत्तस्य ज्ञानादिकं यज्ञदत्त एव प्रतिसन्धत्ते न देवदत्तादय इति। इयमेव व्यवस्थैकस्मिन्नपि शरीरे स्याद्यदि तद्गतनानावयवा नानाचेतनव्याप्ता भवेयुः। यज्ञदत्तस्यैव शरीरे हस्तानुभूतं स्पर्शादिकं हस्त एव प्रतिसन्दध्यादित्यर्थः ॥ एवन्तु नोपलभ्यत इत्याह नत्विति। उपसंहरति तस्मादिति ॥ ५० ॥

आक्षेपसूत्रमवतारयन् सिद्धान्त्युक्तमनुवदति यदुक्तमिति। एकस्मि-

( सू० ) "न, केशनखादिष्वनुपलब्धेः" ॥ ५१ ॥

(भा०) "केशेषु नखादिषु चानुत्पत्तिश्चेतनाया इति अनुपपन्नं शरीरव्यापित्वमिति" ॥ ५१ ॥

(सू०)त्वक्पर्यन्तत्वाच्छरीरस्य केशनखादिष्वप्रसङ्गः॥५२॥

( भा० )इन्द्रियाश्रयत्वं शरीरलक्षणम् । त्वक्पर्यन्तं जीवमनः-सुखदुःखसंवित्त्यायतनभूतं शरीरम् । तस्मान्न केशादिषु चेतनोत्पद्यते । अर्थकारितस्तु शरीरोपनिबन्धः केशादीनामिति ॥ ५२ ॥

---

(ख०)नैव शरीरे प्रत्यवयवं चैतन्यं स्यादिति यदुक्तं सिद्धान्तिना तन्नेति सूत्रस्थनकारेण सम्बन्धः ॥

आक्षेपसूत्रम्–न केशनखेति । दृष्टान्तसूत्रमिदम् । न करचरणादयश्चेतनाः शरीरावयवत्वात् केशनखादिवदित्यर्थः ॥

सूत्रार्थं व्याचष्टे केशेष्विति । सिद्धान्त्युक्तम्प्रत्यवयवचैतन्यं प्रत्यक्षविरुद्धमेवेत्याक्षेपाशयः ॥ ५१ ॥

परिहरति त्वक्पर्यन्तत्वादिति सूत्रम् ।

सूत्रार्थं व्याचष्टे इन्द्रियाश्रयत्वमिति । इन्द्रियाश्रयत्वमिति–शरीरलक्षणम् । अतश्च यदेव जीवमनःसुखदुःखसंवित्त्यायतनं भवति तदेव शरीरपदवाच्यमिति स्थितिः । 'संवित्तिः' ज्ञानम् । चैतन्यस्य शरीरव्यापित्वप्रसङ्ग एव चोद्भावितः सिद्धान्तिना । न चोक्तं शरीरलक्षणं केशनखादिषूपलभ्यते । त्वक्पर्यन्तावयवेष्वेव हि इन्द्रियाश्रयत्वं ज्ञानसुखाद्याश्रयत्वं वानुभूयते न केशनखादिष्विति सार्वजनीनोऽनुभवः । अतो न शरीरावयवाः केशनखादय इत्यर्थः । केशादीनां तर्हि कथं स्थितिरित्याह–अर्थकारित इति । शरीरसंयुक्तद्रव्यमेव नखादयः न तदवयवाः ॥ किं कारितश्चायं संयोगः शरीरस्थकेशनखादिभिरित्याह अर्थकारित इति । शरीरान्तर्वर्तिरक्तमज्जादिधातुव्यापारजनित इत्यर्थः ॥ ५२ ॥

( भा० ) इतश्च न शरीरगुणश्चेतना—

( सू० ) शरीरगुणवैधर्म्यात् ॥ ५३ ॥

(भा०) द्विविधः शरीरगुणो—अप्रत्यक्षश्च गुरुत्वम् इन्द्रियग्राह्यश्च रूपादिः । विधान्तरं तु चेतना—नाप्रत्यक्षा संवेद्यत्वात्, नेन्द्रियग्राह्या मनोविषयत्वात् । तस्माद् द्रव्यान्तरगुण इति ॥ ५३ ॥

( सू० ) "न रूपादीनामितरेतरवैधर्म्यात्" ॥ ५४ ॥

---

(ख०) शरीरे चैतन्याभावसाधकं हेत्वन्तरमुपन्यस्यति इतश्चेति । हेतूद्भावनपरं सूत्रम्—शरीरगुणेति । शरीरे ये गुणा वर्त्तन्ते तेभ्यस्सर्वेभ्योऽपि विलक्षणमेव चैतन्यमित्यर्थः ।

सूत्रार्थं विशदयति द्विविध इति । शरीरगुणा द्विधा विभज्यन्ते । केचिदप्रत्यक्षा अनुमेयाः—यथा गुरुत्वम् । केचित्प्रत्यक्षा इन्द्रियग्राह्याः—यथा रूपम् ॥ द्विविधादपि वैलक्षण्यं चैतन्यस्य प्रदर्शयति विधान्तरमिति । चैतन्यं नाप्रत्यक्षम्—संवेद्यत्वात्—स्वसंवेद्यत्वादेवेत्यर्थः । नापीन्द्रियग्राह्यम् 'मनोविषयत्वात्' मनोमात्रग्राह्यत्वादित्यर्थः ॥ एवं च व्याख्याने मनसोऽनिन्द्रियत्वमभ्युपगतं भवतीति कृत्वा वार्त्तिककारेणान्यथा व्याख्यातमिदं वाक्यम् । तद्यथा चेतना 'न प्रत्यक्षा' न वाह्यकरणप्रत्यक्षा स्वसंवेद्यत्वात्, 'नापि अप्रत्यक्षा' न अतीन्द्रिया मनोविषयत्वादिति ॥ एवं च व्याख्याने एवम्पाठोऽभिप्रेतः—'न प्रत्यक्षा संवेद्यत्वात्, नातीन्द्रियग्राह्या मनोविषयत्वादिति' ॥ उपसंहरति तस्मादिति-चेतना शरीरभिन्नद्रव्याश्रयेत्यर्थः ॥ ५३ ॥

आक्षिपति न रूपादीनामिति सूत्रम् । शरीरगुणवैधर्म्यमात्रान्न शरीरावृत्तित्वं चेतनायाः सिद्ध्यतीत्यर्थः ।

( भा० ) "यथेतरेतरविधर्माणो रूपादयो न शरीरगुणत्वं जहत्येवं रूपादिवैधर्म्याच्चेतना शरीरगुणत्वं न हास्यतीति" ॥५४॥

( सू० ) ऐन्द्रियकत्वाद्रूपादीनामप्रतिषेधः ॥५५॥

( भा० ) अप्रत्यक्षत्वाच्चेति । यथेतरेतरविधर्माणो रूपादयो न द्वैविध्यमतिवर्तन्ते तथा रूपादिवैधर्म्याच्चेतना न द्वैविध्यम-

---

(ख०)सूत्रं व्याचष्टे यथेतरेति । रूपरसादयोऽनेके गुणाः शरीरावृत्तित्वेनोभयवादिसम्मताः । तत्र शरीरगतं रूपं शरीरगतगुणान्तरेभ्यो रसादिभ्यो विधर्माणः । अतो यदि शरीरगुणवैधर्म्यादेव शरीरावृत्तित्वं स्यात्तदा शरीरगतरूपस्याऽपि शरीरावृत्तित्वं स्यात् । न तु तथेति दर्शयति न शरीरगुणत्वमिति । उक्तं रूपं शरीरवृत्तित्वेनैव स्वीक्रियते सर्वैरिति भावः ॥ उक्तहेतुं प्रकृते योजयति एवं रूपेति । यथा शरीरगतगुणान्तरविधर्मापि शरीरगतरूपं न शरीरावृत्त्येवमेव शरीरगुणान्तरविधर्मापि चैतन्यं न शरीरावृत्तीति भावः ॥ ५४ ॥

समाधत्ते ऐन्द्रियकत्वादिति सूत्रम् । शरीरगतरूपादयः परस्परविधर्माणोऽपि मुख्येंऽशे सधर्माण एवेत्यर्थः । 'अप्रतिषेधः' शरीराश्रयत्वस्येति शेषः ॥

सूत्रं पूरयति अप्रत्यक्षत्वादिति । सूत्रार्थं परिष्करोति यथेतरेतरेति । परस्परभिन्नस्वभावा अपि शरीरगुणा रूपादयो पूर्वोक्तविभागद्वयान्तःपातिन एव । अप्रत्यक्षेन्द्रियग्राह्यरूपेण द्विधा विभिन्नाः शरीरगुणाः । सर्वेषां तद्गतरूपादीनां केचिदप्रत्यक्षाः केचिदिन्द्रियग्राह्या एवेति सर्वे ते तत्रैवान्तर्भवन्तीति न भिन्नाश्रयाः-न तेषां समानाश्रयत्वप्रतिषेधः ॥ चैतन्येऽपि तथैव किन्न स्यादित्याह तथेति । शरीगतरूपादिगुणविधर्मापि चैतन्यं यदि शरीरवृत्ति स्यात् तदा तदप्युक्तविभागद्वयान्तः पाती-

(भा०)तिवर्तेत यदि शरीरगुणः स्यादिति । अतिवर्तते तु । तस्मान्न शरीरगुण इति ।

भूतेन्द्रियमनसां ज्ञानप्रतिषेधात् सिद्धे सत्यारम्भो विशेषज्ञापनार्थः । बहुधा परीक्ष्यमाणं तत्त्वं सुनिश्चिततरं भवतीति ॥५५॥

## ( ६ ) मनःपरीक्षाप्रकरणम् ।

( भा० ) परीक्षिता बुद्धिः । मनस इदानीं परीक्षाक्रमः । तत् किं प्रतिशरीरमेकमनेकमिति विचारे—

---

(ख०)ति ॥ न तु तदन्तःपाति भवतीत्याह अतिवर्त्तत इति । नाप्रत्यक्षं नापीन्द्रियग्राह्यमिति पूर्वोक्तमेव स्मारयति । उपसंहरति तस्मादिति ।

यथोक्तहेतुत्वादित्यादि (३८)सूत्रोक्तेन बुद्धेर्भूतेन्द्रियमनोऽवृत्तित्वेनैतत्प्रकरणस्य पौनरुक्त्यमाशङ्कमानः समाधत्ते भूतेन्द्रियमनसामिति । सिद्धेऽप्यर्थे विशेषज्ञापनार्थमेतत्प्रकरणम् ॥ व्याख्यातमेतत्समाधानमेतत्प्रकरणारम्भे 'द्रव्य' इत्यादि (४६) सूत्रव्याख्याने ॥ विशेषज्ञापनस्य फलमाह बहुधेति ॥

युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमिति मनोलक्षणम् । तच्च मनसः एकस्मिन् शरीरे बहुत्वेनासञ्चारित्वेन विभुत्वेन वा स्यात् । एवं चास्य विचारस्य साम्प्रत्ययिकव्यवहाराविरोधेन धारणायामेकाग्रतासिद्धिः प्रयोजनं स्यात् । अन्यथा त्वेकस्मिन् प्रत्याहृतेऽपि मनोन्तरविक्षेपादसञ्चारित्वे विभुत्वे वा प्रत्याहर्त्तुमशक्यत्वात् न प्रत्याहारादिसिद्धिः । तथाच निदिध्यासनासिद्धौ मननानुपयोगे न्यायविद्यावैयर्थ्यमापद्येत । अतएव प्रतिशरीरम्मन एकमनेकं वेति विचारस्यावश्यकता ॥ तस्य क्रममाह परीक्षितेति । प्रथमाध्यायनवमसूत्रे प्रमेयाणामुद्देशे बुद्ध्यनन्तरम्मन एव पठितमत एव बुद्धिपरीक्षानन्तरम्मनसः परीक्षावसरः ॥ विचारविषयं प्रस्तौति तत्किं प्रतिशरीरमिति । विचार इति । अस्य

( सू० ) ज्ञानायौगपद्यादेकं मनः ॥ ५६ ॥

(भा०) अस्ति खलु वै ज्ञानायौगपद्यमेकैकस्येन्द्रियस्य यथाविषयम्—करणस्यैकप्रत्ययनिर्वृत्तौ सामर्थ्यात् । न तदेकत्वे मनसो लिङ्गम् । यत्तु खल्विदमिन्द्रियान्तराणां विषयान्तरेषु ज्ञानायौगपद्यमिति तल्लिङ्गम् । कस्मात् ? सम्भवति खलु वै बहुषु मनःस्विन्द्रियमनः-संयोगयौगपद्यमिति ज्ञानयौगपद्यं स्यात् । न तु भवति । तस्माद्विषये प्रत्ययपर्यायादेकं मनः ॥ ५६ ॥

---

(ख०)विचारे सति अयं सूत्रोक्तः सिद्धान्त इति वाक्यशेषः ।

तत्र सिद्धान्तेनोपक्रमते ज्ञानायौगपद्यादिति सूत्रम् । यस्माज्ज्ञानानि न युगपदुत्पद्यन्ते तस्मान्मनः प्रतिशरीरमेकमेवेत्यर्थः ।

सूत्रार्थं व्याचक्षाणो किन्नाम ज्ञानायौगपद्यं यन्मनस एकत्वे लिङ्गमिति निर्णेतुं ज्ञानायौगपद्यं द्विधा विभजते अस्ति खल्विति । एकेन्द्रियकरणकानां ज्ञानानामयौगपद्यमेकम् नानेन्द्रियकरणकानां ज्ञानानामयौगपद्यमित्यपरम् । तत्राद्यं यथा एकमिन्द्रियमेकविषयं ज्ञानमुत्पाद्य तज्ज्ञाननिवृत्तावेव द्वितीयं ज्ञानमुत्पादयितुं समर्थं भवतीति । किमिदमेवाद्यमयौगपद्यम्मनस एकत्वं साधयतीति प्रश्ने उत्तरमाह—न तदिति । एकेन्द्रियग्राह्येषु यज्ज्ञानानामयुगपद्भावस्स न मनस एकत्वे साधनमित्यर्थः । अस्यायौगपद्यस्य करणमात्रस्वभावमूलकत्वात् । सर्वस्यैव करणस्यैष स्वभावो यदेकस्मिन् क्षणे एकमेव कार्यं जनयतीति । अतो नैतन्मनस एकत्वेऽनेकत्वे वा हेतुरिति भावः । किन्तु तज्ज्ञानायौगपद्यं यत्तत्साधकमित्याह—यत्त्विति । नानेन्द्रियाणां नानाविषयेषु यत् ज्ञानानामयौगपद्यन्तदेव मनस एकत्वं साधयतीत्यर्थः । पृच्छति कस्मादिति । तत्रोत्तरम्—सम्भवतीति । यदि बहूनि मनांसि स्युः प्रतीन्द्रियं युगपदपि मनःसन्निकर्षे युगपदनेकार्थसन्निधाने युगपदनेकानि ज्ञानान्युत्पद्येरन् । न तु तथा

(सू०) "न, युगपदनेकक्रियोपलब्धेः" ॥५७॥

(भा०) "अयं खल्वध्यापकोऽधीते व्रजति कमण्डलुं धारयति पन्थानं पश्यति शृणोत्यरण्यजान् शब्दान् बिभेति व्याललिङ्गानि बुभुत्सते स्मरति च गन्तव्यं स्थानीयमिति क्रमस्याग्रहणाद्युगपदेताः क्रिया इति प्राप्तं मनसो बहुत्वमिति ॥५७॥

(सू०) अलातचक्रदर्शनवत्तदुपलब्धिराशुसंचारात् ॥५८॥

(भा०) आशुसञ्चारादलातस्य भ्रमतो विद्यमानः क्रमो न गृह्यते । क्रमस्याग्रहणादविच्छेदबुद्ध्या चक्रवद्बुद्धिर्भवति । तथा बुद्धीनां क्रियाणां चाशुवृत्तित्वाद्विद्यमानः क्रमो न गृह्यते ।

---

(ख०) क्वचिदपि दृश्यते । ततः किमित्युपसंहरति तस्मादिति । प्रत्ययानां ज्ञानानां पर्यायात् क्रमिकत्वात् अयौगपद्यात् । एकमेव मन इति सिद्धमित्यर्थः ॥ ५६ ॥

आक्षिपति न युगपदिति सूत्रम् । ज्ञानायौगपद्यमेवाप्रसिद्धमित्यसिद्धो हेतुरित्यर्थः ।

सूत्रार्थं व्याचक्षाण एकस्यैव पुरुषस्य युगपन्नाना क्रिया भवन्तीत्युदाहरणेन प्रकटयति अयं खल्विति । 'बुभुत्सते' अन्विष्यति । 'स्थानीयम्' गन्तव्यं स्थानम् । संस्त्यायनामिति तात्पर्यसम्मतः पाठस्तद्व्याख्यानञ्च स्थापनमिति ॥ ५७ ॥

परिहरति अलतेति सूत्रम् । उदाहृतक्रियास्वप्ययौगपद्यमेवेति सूत्रार्थः ।

सूत्रं व्याचष्टे आशुसञ्चारादिति । यदाऽलातचक्रं भ्राम्यते तदा नानाभ्रमणानि क्रमिकाण्येवोत्पद्यन्ते तथाप्ययं क्रमो न लक्ष्यते प्रत्युत ज्वालाया नानात्वमपि न लक्ष्यते ज्वालापङ्क्तिरेकैव चक्राकारा भासते

(भा०)क्रमस्याग्रहणाद्युगपत् क्रिया भवन्तीत्यभिमानो भवति ।

"किं पुनः क्रमस्याग्रहणाद् युगपद् क्रियाभिमानः अथ युगपद्भावादेव युगपदनेकक्रियोपलब्धिरिति ? नात्र विशेषप्रतिपत्तेः कारणमुच्यते इति" ।

उक्तम्–इन्द्रियान्तराणां विषयान्तरेषु पर्यायेण बुद्धयो भवन्ति–इति । तच्चाप्रत्याख्येयमात्मप्रत्यक्षत्वात् । अथापि दृष्टश्रुतानर्थान् चिन्तयतः क्रमेण बुद्धयो वर्तन्ते न युगपत् । अनेनानुमातव्य-

---

(ख०)तत्र च कारणमतिवेगेन ज्वालानां भ्रमणक्रियास्तासां विच्छेदा न गृह्यन्त इति ॥ अलातचक्रदृष्टान्तं प्रकृते योजयति तथा बुद्धीनामिति । ज्वालाभ्रमणानामिव ज्ञानानामपि क्षणिकत्वादतिशीघ्रमुत्पद्यमानानां विद्यमानोऽपि क्रमो नोपलभ्यतेऽत एव यौगपद्यभ्रमो भवतीति । अभिमानो भ्रम इति यावत् ।

परिहारं सांशयिकत्वेन व्युदस्यति किम्पुनरिति । अलातचक्रभ्रमिषु ज्ञानेषु च या यौगपद्यबुद्धिर्भवति लोकानां सा क्रमस्य सद्भावाद् भ्रान्तिरूपा आहोस्वित्क्रमस्यासद्भावात् प्रमैवेत्येकतरपक्षसाधकं किञ्चिन्नोच्यते सिद्धान्तिना येन भ्रान्तिपक्ष एकः प्रामाणिकत्वेन स्वीक्रियेत । तथाच ज्ञानायौगपद्यं संशयग्रस्तमेवेति भावः ॥

तत्रोत्तरम्–उक्तमिति । नानाविषयाणि ज्ञानानि क्रमिकाण्येव भवन्तीत्युभयवादिसम्मतम् प्रत्यात्मवेदनीयत्वादित्याह अप्रत्याख्येयमिति ॥ उक्तमेवोपोद्बलयति—अथेति । पूर्वानुभूतज्ञानान्यपि यदा पर्यालोच्यन्ते तत्रापि क्रमिकत्वमेव दृश्यते इत्यर्थः । ननु भवत्वेवं नानाविषयेषु ज्ञानेषु किमायातमनेनैकविषयज्ञानायौगपद्य इत्यत आह–अनेनेति । नानाविषयेषु ज्ञानेषु क्रमिकत्वस्य दर्शनादेकविषयज्ञानेष्वपि क्रमिकत्वमनुमीयत इत्यर्थः । तत्र प्रयोगः—घटज्ञानानि क्रमिकाणि ज्ञानत्वात् घ-

(भा०)मिति। वर्णपदवाक्यबुद्धीनां तदर्थबुद्धीनां चाशुवृत्तित्वात् क्रमस्याग्रहणम्। कथम्? वाक्यस्थेषु खलु वर्णेषूच्चरत्सु प्रतिवर्णं तावच्छ्रवणं भवति। श्रुतं वर्णमेकमनेकं वा पदभावेन प्रतिसन्धत्ते। प्रतिसन्धाय पदं व्यवस्यति। पदव्यवसायेन स्मृत्या पदार्थं प्रतिपद्यते। पदसमूहप्रतिसन्धानाच्च वाक्यं व्यवस्यति। सम्बद्धांश्च पदार्थान् गृहीत्वा वाक्यार्थं प्रतिपद्यते। न चासां क्रमेण वर्तमानानां बुद्धीनामाशुवृत्तित्वात् क्रमो गृह्यते। तदेतदनुमानमन्यत्र बुद्धिक्रियायौगपद्याभिमानस्येति।

न चास्ति मुक्तसंशयं युगपदुत्पत्तिर्बुद्धीनां यया मनसां बहुत्वमेकशरीरेऽनुमीयेत इति ॥ ५८ ॥

---

(ख०)टपटमठविषयज्ञानवदिति। पदघटकनानावर्णानां वाक्यघटकनानापदानां निबन्धघटकनानावाक्यानां वा ज्ञानानि युगपदेव जायन्ते अन्यथा तदर्थावबोधासम्भवात्-एवं च न सर्वत्र ज्ञानायौगपद्यमेवेति कस्यचिन्मतमपाकरिष्णुराह-वर्णपदेति। वर्णादिज्ञानेष्वपि क्रमो वर्त्तमानोऽपि यदि न गृह्यते तत्र कारणं ज्ञानानामाशुवृत्तित्वमेवेति भावः॥ पृच्छति कथमिति। क्रमस्याग्रहणं न सम्यगपि तु भ्रान्तिरेवेत्यत्र किम्प्रमाणमित्यर्थः। तत्रोत्तरम्-वाक्यस्थेष्विति। उक्तस्थलेषु सर्वेष्वेव स्पष्ट एवोपलभ्यत एवेत्यर्थः॥ यश्चक्रमो न गृह्यते तत्र कारणमाह-न चासामिति। उपसंहरति-तदेतदिति। उक्तज्ञानेषु क्रमिकत्वदर्शनमेव हेतुर्भवति ज्ञानयौगपद्यबुद्धेर्भ्रान्तित्वसाधने-इत्यर्थः। 'यौगपद्याभिमानो' यौगपद्यभ्रान्तिरिति यावत्। तस्य अनुमानं साधनभूतं लिङ्गमित्यर्थः॥

परोद्भावितान् ज्ञानयौगपद्यसाधकान् दृष्टान्तान् व्युदस्य प्रकरणार्थमुपसंहरति—न चास्तीति। 'मुक्तसंशयम्' उभयवादिसम्मतमित्यर्थः। कुत्रापि दृष्टान्ते ज्ञानयौगपद्यमुभयवादिसम्मतन्नोपलभ्यते--एवं

( सू० ) यथोक्तहेतुत्वाच्चाणु ॥ ५९ ॥

( भा० ) अणु मन एकं चेति धर्मसमुच्चयो ज्ञानायौगपद्यात् । महत्त्वे मनसः सर्वेन्द्रियसंयोगाद्युगपद्विषयग्रहणं स्यादिति॥५९॥

( ७ ) शरीरादृष्टनिष्पाद्यत्वप्रकरणम् ।

( भा० ) मनसः खलु भोः सेन्द्रियस्य शरीरे वृत्तिलाभो,

---

(ख०)च ज्ञानानामयौगपद्यासिद्धौ प्रतिशरीरं मनसो बहुत्वन्नैव सिद्ध्यतीत्यर्थः ॥ ५८ ॥

मनस एकत्वम्प्रसाध्य तस्य धर्मान्तरं समुच्चिनोति—यथोक्तेति सूत्रम् । तदर्थं व्याचष्टे अण्विति । ज्ञानायौगपद्यादेव हेतोर्मनसोऽणुत्वमेकत्वं च सिद्ध्यत इत्यर्थः । कथमित्याह—महत्त्व इति । यदि मनो महत् स्यात्तर्हि नानेन्द्रियैस्सह तस्य युगपदेव संयोगस्सम्भवेत् ततश्च युगपदेव ज्ञानान्युत्पद्येरन् । न च तथा भवति । तस्मादण्वेव मन इति भावः ॥ ५९ ॥

अत्राग्रिमप्रकरणस्य पूर्वापरसम्बन्धम्प्रदर्शयन्नाह—मनसः खल्विति॥

'परीक्षा' नाम 'परितः ईक्षा' सा च रूपतः सम्बन्धितश्च । शरीरं च मनस आश्रयस्तस्मात् तत्सम्बन्धि । तस्मान्मनस एवेयं परीक्षा या शरीरस्येत्यर्थः। अत्र परिशुद्धिकृतः—प्रयोजनं चास्य प्रकरणस्य—विग्रहव्यवस्था संसारापवर्गव्यवस्था प्रायणव्यवस्था च । अदृष्टनिमित्तसम्भवे च वर्णाश्रमवृत्तयस्तदर्थालोचनशास्त्राणि च सार्थकानि स्युः । अन्यथा सर्वमेतदनुकारनृत्यमरण्यरुदितं च स्यात् । तदनेन प्रकरणेन सर्वाण्येवाततानि प्रकरणान्युपक्रियन्ते उत्तराध्यायश्चेति ॥ शरीरमेव पुरुषस्योपभोगायतनम् । मनसश्चेन्द्रियवच्छरीर एव वृत्तिः । एतदुभयमपि शरीरस्यादृष्टनिमित्तत्व एवोपपद्यते। अत एवैतत्परीक्षावश्यकत्वम् । शरीरपरीक्षानन्तरमेव तददृष्टनिमित्तत्वपरीक्षाया अवसर इति प्रतिभाति ।

(भा०)नान्यत्र शरीरात् । ज्ञातुश्च पुरुषस्य शरीरायतना बुद्ध्यादयो विषयोपभोगो जिहासितहानमीप्सितावाप्तिश्च, सर्वे च शरीराश्रया व्यवहाराः । तत्र खलु विप्रतिपत्तेः संशयः—किमयं पुरुषकर्मनिमित्तः शरीरसर्गः ? आहो भूतमात्रादकर्मनिमित्त इति ? श्रूयते खल्वत्र विप्रतिपत्तिरिति ।

तत्रेदं तत्त्वम्—

( सू० ) पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ६० ॥

(भा०) पूर्वशरीरे या प्रवृत्तिर्वाग्बुद्धिशरीरारम्भलक्षणा तत्पूर्वकृतं

---

(ख०)किन्तु पुरुषोपभोगप्रधानकरणभूतस्य मनसः परीक्षानन्तरमेव तस्याः सम्यगवसर इति ज्ञेयम् ॥

मनसः सेन्द्रियस्येति । इन्द्रियसहितस्य मनसः, इन्द्रियाणां मनसश्चेत्यर्थः । मनस आश्रयत्वेन शरीरमुपवर्ण्योपभोगायतनत्वेन च तद्दर्शयति ज्ञातुरिति ॥ प्रकरणप्रवर्त्तकसंशयम्प्रदर्शयति—तत्र खल्विति । अदृष्टोद्भावितभूतपरमाण्वारब्धं शरीरमिति प्रथमः कल्पः । अदृष्टानिरपेक्षैरेव भूतपरमाणुभिरारब्धमित्यपरः । कथं ज्ञायतेऽस्तीयं विप्रतिपत्तिरित्याह—श्रूयत इति । नानादर्शनग्रन्थेषूपलभ्यत इत्यर्थः ॥

अत्र विप्रतिपत्तौ निषेधकोटिस्त्रेधा समुल्लसति—(१)अदृष्टाभावात्—(२)शरीरहेतुत्वाभावात—(३)अदृष्टस्य पुरुषसमवायाभावाद्वेति । तत्र सिद्धान्तमुपक्रममाण आद्यां विप्रतिपत्तिकोटिन्निरस्यति—पूर्वकृतेति सूत्रम् । 'पूर्वकृतस्य' पूर्वकृतकर्मणो यागदानहिंसादेः 'फलस्य' धर्माधर्मरूपस्य 'अनुबन्धात्' आत्मनि समवायात् 'तस्य' शरीरस्य 'उत्पत्तिः' इति सम्बन्धः । धर्माधर्मप्रयुक्तेभ्य एव भूतेभ्यः शरीरस्योत्पत्तिर्न स्वतन्त्रेभ्य इत्यर्थः ॥

सूत्रं व्याचक्षाणः शरीरोत्पत्तिकारणं वर्णयति पूर्वशरीर इति ।

(भा०)कर्मोक्तम् । तस्य फलं तज्जनितौ धर्माधर्मौ । तत्फलस्यानुबन्ध आत्मसमवेतस्यावस्थानम् । तेन प्रयुक्तेभ्यो भूतेभ्यस्तस्योत्पत्तिः शरीरस्य, न स्वतन्त्रेभ्य इति । यदधिष्ठानोऽयमात्माऽयमहमिति मन्यमानो यत्राभियुक्तो यत्रोपभोगतृष्णया विषयानुपलभमानो धर्माधर्मौ संस्करोति तदस्य शरीरम् । तेन संस्कारेण धर्माधर्मलक्षणेन भूतसहितेन पतितेऽस्मिन् शरीरे उत्तरं निष्पद्यते । निष्पन्नस्य चास्य पूर्वशरीरवत्पुरुषार्थक्रिया । पुरुषस्य च पूर्वशरीरवत् प्रवृत्ति-

---

(ख०)आत्मनः पूर्वस्मिन् जन्मनि यच्छरीरं तस्मिन् या तस्य प्रवृत्तिः वाचिकमानसिककायिकक्रियारूपा—तत्प्रवृत्तिजनितौ यौ धर्माधर्मौ—तयोरेव तस्मिन्नात्मनि समवायेनैव प्रयुक्तानि भूतानि तस्यात्मनः शरीरान्तरमारभन्ते नोक्तधर्माधर्मनिरपेक्षाण्येवेत्यर्थः ॥ उक्तमेव 'विशदयम् आत्मनः शरीरविशेषेण सम्बन्धं परिष्करोति यदधिष्ठान इति । आत्मा स्वत एव केवलः स्वोपभोगान् सम्पादयितुमसमर्थः किमपि भौतिकमायतनमपेक्षते—तेनायतनेन सहातिघनसम्बन्धात्तदेव 'अहम्' इति मन्यते तत्रैव च 'अभियुक्तः' सम्बद्धो वर्त्तमानो सुखदुःखादिभोगान् लिप्समानः तत्सम्पादनाय कर्माणि कुरुते-तत्तत्कर्मजनितधर्माधर्मावुत्पाद्य ताभ्यां संस्कृतो भवति । एतदेवात्मन आयतनमुपभोगप्रवृत्तिधर्माधर्मसाधनं तस्य शरीरमिति कथ्यते ॥ ननु किमेतेन प्रकृते शरीरोत्पत्तिविषय इत्यत आह—तेन संस्कारेणेति । यदाऽऽत्मनो मरणे तस्यैकं शरीरं नष्टं भवति तदोक्तधर्माधर्मसंस्कारप्रयुक्तैरेव भूतैस्तस्य शरीरान्तरमुत्पद्यते । किम्फलमनेनैवं निष्पन्नेन शरीरेणात्मन इत्याह—निष्पन्नस्येति । यदैतच्छरीरान्तरं निष्पन्नं भवति तदा तत्रैवात्मनः सम्बन्धात्तच्छरीरं पूर्वशरीरवदेव तस्योपभोगाद्यर्थान् साधयति । आत्मा च यथा पूर्वशरीरे चकार तथाऽत्रापि शरीरे वर्त्तमानो नानावि-

(भा०)रिति। कर्मापेक्षेभ्यो भूतेभ्यः शरीरसर्गे सत्येतदुपपद्यते इति। दृष्टा च पुरुषगुणेन प्रयत्नेन प्रयुक्तेभ्यो भूतेभ्यः पुरुषार्थ-क्रियासमर्थानां द्रव्याणां रथप्रभृतीनामुत्पत्तिः। तथाऽनुमातव्यं-शरीरमपि पुरुषार्थक्रियासमर्थमुत्पद्यमानं पुरुषस्य गुणान्तरा-पेक्षेभ्यो भूतेभ्य उत्पद्यते इति ॥ ६० ॥

(भा०) अत्र नास्तिक आह—

---

(ख०)यानि कर्माणि कुरुते तज्जनितौ धर्माधर्मौ चार्जयतीत्यर्थः॥ कि-मेतेन शरीरस्यादृष्टानिष्पाद्यत्व इत्याह कर्मापेक्षेभ्य इति। 'कर्म' धर्मा-धर्मरूपमदृष्टम्। यैषा शरीरोत्पत्तिप्रक्रिया प्रदर्शिता सा तदैव उपपद्यते यदि धर्माधर्मप्रयुक्तेभ्य एव भूतेभ्यः शरीरस्योत्पत्तिर्नान्यथेत्यर्थः। उक्तार्थे दृष्टान्तमाह—दृष्टेति। रथाद्यो भौतिकाः पदार्थाः पुरुषस्य रथसञ्चरणाद्यर्थसम्पादकाः पुरुषगुणेन प्रयत्नेन प्रेरितैरेव भूतैर्निष्पाद्यन्ते न स्वतन्त्रैरिति दृष्टं लोके। उक्तं दृष्टान्तं दार्ष्टान्तिके योजयति—तथा-नुमातव्यमिति। यथा दृष्टान्ते तथा प्रकृते पि पुरुषोपभोगाद्यर्थसम्पा-दकं शरीरमपि पुरुषगुणेनैव केनापि प्रेरितैर्भूतैर्निष्पन्नम्भवतीत्यनुमे-यम्भवति। स च पुरुषगुणो धर्माधर्मरूपमदृष्टमेवेत्यर्थः। अत्र प्रयो-गाः—पुरुषगुणविशेषप्रेरितभूतनिष्पन्नं शरीरं कार्यत्वे सति पुरुषार्थ-सम्पादनसामर्थ्यात्। यद्यत्पुरुषार्थसम्पादनसमर्थं तत्तत्पुरुषगुणविशेष-प्रेरितभूतनिष्पन्नमेव दृष्टं यथा रथादि पुरुषगुणेन प्रयत्नेन प्रेरितैर्भूतैरार-भ्यमाणं पुरुषार्थसंपादनसमर्थं दृष्टं—तथाच शरीरं—तस्मादिदमपि पुरुष-गुणविशेषसापेक्षैरेव भूतैरारभ्यते—सुखदुःखनिमित्तत्वात् घटादिवत—कार्यत्वात् रथादिवदिति। बाह्यकरणप्रत्यक्षत्वे सति रूपादिमत्त्वात् घटादिवदित्यादयः ॥ ६० ॥

परकृतमाक्षेपं प्रस्तौति-अत्रेति। नास्ति परलोको न धर्माधर्माविति यस्याभ्युपगमः स एव नास्तिकपदवाच्यः ॥

(सू० ) "भूतेभ्यो मूर्त्युपादानवत्तदुपादानम्" ॥६१॥

(भा०) "यथा कर्मनिरपेक्षेभ्यो भूतेभ्यो निर्वृत्ता मूर्तयः सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतयः पुरुषार्थकारित्वादुपादीयन्ते तथा कर्मनिरपेक्षेभ्यो भूतेभ्यः शरीरमुत्पन्नं पुरुषार्थकारित्वादुपादीयते इति" ॥ ६१ ॥

(सू० ) न, साध्यसमत्वात् ॥ ६२ ॥

(भा० ) यथा शरीरोत्पत्तिरकर्मनिमित्ता साध्या तथा

(ख०)नास्तिककृताक्षेपमाह-भूतेभ्य इति सूत्रम् । पुरुषादृष्टकृतं शरीरम् पुरुषार्थक्रियासामर्थ्यादिति हेतोरनैकान्तिकत्वोद्भावनपरमिदं सूत्रम् । 'भूतेभ्यः' परमाणुभ्यो 'मूर्तेः' सिकतादेः' उपादानं' आरम्भो यथा भवति—पुरुषादृष्टनिरपेक्षेभ्य एवेति शेषः- तथैव शरीरस्यापीत्यर्थो वृत्तिकारवर्णितः । 'भूतेभ्यः' कर्मनिरपेक्षेभ्यः परमाणुभ्यो निष्पन्नायाः 'मूर्तेः' सिकतादिमूर्तद्रव्याणाम् 'उपादानं'आसादनं यथा पुरुषेण क्रियते तथैव शरीरस्यापीति भाष्यकारीयं व्याख्यानम् ।

सूत्रं व्याचष्टे यथा कर्मेति । लोके पुरुषाः स्वार्थसाधकानि द्रव्याणि पाषाणादीनि समासादयन्ति—न चैतानि तत्पुरुषीयादृष्टप्रेरितभूतैरारब्धानि—एवमेव पुरुषोपभोगसाधनं शरीरमपि स समासादयिष्यति—तच्च शरीरं तदीयादृष्टनिरपेक्षैरेव भूतैः सम्पत्स्यत इति कृतमदृष्टजन्यत्वेनेत्याक्षेपस्याशयः ॥ ६१ ॥

आक्षेपं परिहरति—न साध्यसमत्वादिति सूत्रम् । पूर्वसूत्रे यदुद्भावितं तस्य दृष्टान्तमात्रत्वादसाधकत्वमेव ॥ "अथ निरपेक्षाणि भूतानि शरीरमारभन्ते पुरुषार्थक्रियासामर्थ्यात् सिकतादिवत्"—इत्यनुमानमाक्षेप्तुरभिमतम् । तत्रापि न सन् हेतुः, तस्याद्यत्वेऽप्यसिद्धत्वादेवेत्यर्थः ।

सूत्रं व्याचष्टे यथा शरीरेति ।'साध्या' नोभयवादिसम्मता ।। साध्यः

(भा०) सिकताशर्करापाषाणगैरिकाञ्जनप्रभृतीनामप्यकर्मनिमित्तः सर्गः साध्यः। साध्यसमत्वादसाधनमिति ॥ ६२ ॥

( भा० ) भूतेभ्यो मूर्त्युत्पादनवदिति चानेन साम्यम्-

( सू० ) नोत्पत्तिनिमित्तत्वान्मातापित्रोः॥ ६३ ॥

(भा०) विषमश्चायमुपन्यासः। कस्मात्? निर्बीजा इमा मूर्तय उत्पद्यन्ते, बीजपूर्विका तु शरीरोत्पत्तिः। मातापितृशब्देन लोहि-

---

(ख०)उभयवाद्यनभ्युपगतत्वादसिद्ध एवेति। यच्च नोभयवादिसम्मतं तन्न दृष्टान्तत्वेन उपादातुं योग्यमित्यर्थः। सिकतादीनामपि पुरुषकर्मनिमित्तक एव सर्गोऽस्माकमभिमतस्तथाच न सिकतादिदृष्टान्तोऽपि तूभयवादिसम्मतो रथादिरेव दृष्टान्तस्स च पुरुषगुणविशेषप्रयत्नपूर्वक एव दृष्टः—न च तथाऽकर्मनिमित्तकसर्गस्य क्वचिद्दृष्टान्त उभयवादिसम्प्रतिपन्नो लभ्यत इति हृदयम् ॥ ६२ ॥

परोद्भावितं दृष्टान्तमसिद्धत्वेन निरस्य तस्य प्रकृते दृष्टान्तत्वमेव न भवतीत्याह—भूतेभ्य इति। भूतेभ्यो मूर्त्युपादानवदिति यदुक्तमाक्षेप्त्रा तस्य 'अनेन' प्रकृतेन शरीरसर्गेण 'साम्यम्' 'न' भवतीति सूत्रस्थेन नकारेण सम्बन्धः।

असाम्यं प्रदर्शयति—नोत्पत्तीति सूत्रम्। शरीरे मृदादिसाम्यम् 'न' भवति—कथम्—शरीरोत्पत्तौ हि मातापितरावेव निमित्तमित्यर्थः।

सूत्रतात्पर्यं वर्णयति विषम इति। सिकतापाषाणाद्युपन्यासो 'विषमः' न तेषां प्रकृतेन साम्यमित्यर्थः। पृच्छति कस्मादिति। उत्तरम्—निर्बीजा इति। सिकतापाषाणादीनि मूर्तानि द्रव्याणि निर्बीजान्येवोत्पद्यन्ते—शरीरस्य तु बीजादेवोत्पत्तिरिति महद्वैषम्यम्। ननु मातापितरौ शरीरोत्पत्तौ न साक्षात् कारणम्भवत इत्यत आह—मातापितृशब्देनेति। लोहितरेतसी च साक्षाच्छरीरोत्पत्तौ कारणे इति निर्विवादमि-

(भा०)तरेतसी बीजभूते गृह्येते । तत्र सत्त्वस्य गर्भवासानुभवनीयं कर्म पित्रोश्च पुत्रफलानुभवनीये कर्मणी मातुर्गर्भाश्रये शरीरोत्पत्तिं भूतेभ्यः प्रयोजयन्तीत्युपपन्नं बीजानुविधानमिति ॥ ६३ ॥

( सू० ) तथाऽऽहारस्य ॥ ६४ ॥

( भा० ) उत्पत्तिनिमित्तत्वादिति प्रकृतम् । भुक्तं पीतमाहारस्तस्य पक्तिनिर्वृत्तं रसद्रव्यं मातृशरीरे चोपचिते बीजे गर्भाशयस्थे बीजसमानपाकं, मात्रया चोपचयो बीजे यावद् व्यूहसमर्थः सञ्चय इति । सञ्चितं चार्बुदमांसपेशीकललकण्डरशिरःपा-

---

(ख०)त्यर्थः । उक्तमर्थं प्रकृते योजयन् शरीरोत्पत्तिप्रक्रियां वर्णयन् तत्र पुरुषकर्मसापेक्षतां दर्शयति तत्र सत्त्वस्येति । मातुर्गर्भाशयगतलोहितेन यदा पितृरेतस्संयुज्यते तदाऽस्य संयोगस्य कारणं पुरुषकर्मैव भवति—तदेतत् कर्म जनिष्यमाणस्यात्मनः गर्भवाससुखदुःखाद्यनुभावकमित्येकम्—पित्रोश्च पुत्रजन्मसुखाद्यनुभावकमित्यपरम् । अनुभवनीये इत्यत्र कर्तरि कृत्यप्रत्ययः ॥ उपपन्नमिति—उक्तप्रकारेण सिद्धम्भवति यच्छरीरोत्पत्तौ लोहितरेतोरूपं बीजमेव साक्षात्कारणम्—पुरुषकर्म च तत्कारणप्रयोजकतयैव निमित्तमिति भावः॥ ६३ ॥

शरीरोत्पत्तौ निमित्तान्तरं प्रदर्शयति तथेति सूत्रम् ।

सौत्रं वाक्यं पूरयितुमाह—उत्पत्तीति । एवं च तथाऽऽहारस्योत्पत्तिनिमित्तत्वादिति सूत्रस्वरूपं पर्यवसितम् । आहारस्य शरीरोत्पत्तिनिमित्तत्वं वर्णयन्नाहारशब्दार्थं विवृणोति भुक्तम्पीतमिति । तस्य शरीरनिर्वर्त्तकत्वं प्रदर्शयति तस्येति । तस्य (आहारस्य) पक्तिनिर्वृत्तं पाकेनोत्पन्नं रसद्रव्यं मातृशरीरे उपचिते गर्भाशयस्थे बीजे बीजसमानपाकं (बीजानुविधानेन परिणतं) भवति—तस्मिंश्च बीजे तावन्मात्रया उपचयो भवति यावत् तस्य सञ्चयो व्यूहसमर्थो भवतीति सम्बन्धः ॥ रसस्य सञ्चयं व-

(भा०)ण्यादिना च व्यूहेनेन्द्रियाधिष्ठानभेदेन व्यूह्यते। व्यूहे च गर्भनाड्यावतारितं रसद्रव्यमुपचीयते यावत्प्रसवसमर्थमिति। न चायमन्नपानस्य स्थाल्यादिगतस्य कल्पत इति। एतस्मात्कारणात्कर्मनिमित्तत्वं शरीरस्य विज्ञायत इति ॥ ६४ ॥

(सू०) प्राप्तौ चानियमात् ॥ ६५ ॥

(भा०) न सर्वो दम्पत्योः संयोगो गर्भाधानहेतुर्दृश्यते। त-

---

(ख०)र्णयति सञ्चितमिति। 'व्यूह्यते' अवयविभावमापद्यते॥ अशितपीतमाहारः—तस्य पाकाद्रसद्रव्यं निर्वर्त्यते—तत् मातृशरीरे उपचीयते—गर्भशरीरे चोपचितं कललादिभावेनोपचीयमानं पुरुषादृष्टसापेक्षैर्भूतैः पाण्यादिभावमापद्यते इत्यर्थः। तत्र कललादयः शरीरारम्भकयोर्लोहितरेतसोः क्रमिकाः परिणामभेदाः। उक्तसञ्चयानन्तरमवस्थां वर्णयति व्यूह इति। पाण्याद्यवयवनिष्पन्नावयविनि पुनरुक्तमेवाहारपाकजनितरसद्रव्यं गर्भनाडीद्वाराऽवतरत् तस्यावयविनः पुष्टिं करोति। कियत्कालपर्यन्तमियं प्रक्रिया प्रवर्त्तत इत्याह यावदिति। प्रसवकालपर्यन्तमाहाररसं शरीरं पोषयतीत्यर्थः॥ अनया प्रक्रियया प्रकृते शरीरस्यादृष्टनिष्पन्नत्वे किमायातमित्याह न चायमिति। अयं प्रदर्शित उपचयः मातृशरीरबहिःस्थाल्यादौ स्थिते आहारे न दृश्यते—तस्मादुपपन्नमिदं यदाहाररसस्य शरीरनिष्पादकत्वे पित्रोरदृष्टमपि प्रयोजकं भवतीत्यर्थः॥ ६४॥

आहारस्यादृष्टसहकारित्वे विपक्षे बाधकमाह प्राप्ताविति सूत्रम्। 'प्राप्तिः' दम्पत्योः संयोगः—तस्यां 'अनियमः' शरीरोत्पादस्य—तस्मात्—दृष्टस्य दम्पतीयोगस्य व्यभिचरितत्वात्—अस्ति तददृष्टं यतः शरीरोत्पत्तिर्भवतीति सिद्धमिति सूत्रार्थः।

सूत्रं व्याचक्षाणः स्त्रीपुरुषसंयोगस्य व्यभिचारितां प्रदर्शयति न सर्व इति। संयोगस्य विफलत्वे हेतुमाह—तत्रासतीति। स्त्रीपुरुषसं-

(भा०)त्रासति कर्मणि न भवति सति च भवतीत्यनुपपन्नो नियमाभाव इति। कर्मनिरपेक्षेषु भूतेषु शरीरोत्पत्तिहेतुषु नियमः स्यात् । न ह्यत्र कारणाभाव इति ॥ ६५ ॥

( भा० ) अथापि—

( सू० )शरीरोत्पत्तिनिमित्तवत्संयोगोत्पत्तिनिमित्तं कर्म६६

---

(ख०)योगमात्रे शरीरमुत्पद्यत एवेति नियमस्य योऽभावस्तत्रेदमेव कारणं यत् यदा जनिष्यमाणस्यात्मनो मातापित्रोर्वाऽदृष्टस्य व्यापारो नास्ति तदा न शरीरनिष्पत्तिर्यदा तु तददृष्टस्य व्यापारस्तदा तन्निष्पत्तिरिति अदृष्टमेव नियामकमिति भावः । विपक्षे बाधकमाह—कर्मनिरपेक्षेष्विति । यद्यदृष्टनिरपेक्षं स्त्रीपुरुषसंयोगमात्रेण शरीरनिष्पत्तिः स्यात्तर्हि सर्वोऽपि संयोगः गर्भाधानस्य कारणं भवेदेवेति नियमः स्यात् । कथमित्याह-न ह्यत्रेति । स्त्रीपुरुषसंयोगमात्रं तव शरीरोत्पत्तौ कारणं—तत्सत्त्वे च कारणे समग्रे सति शरीररूपकार्यस्योत्पत्तिरवश्यं स्यादेव । न तु तथा दृश्यते । अयं च शरीरोत्पत्त्यभावस्तव मतेनोपपादयितुं न शक्यते। मम तु पक्षेऽदृष्टव्यापारस्यापि कारणकोटौ प्रविष्टत्वात् तदभावादेव कारणसामग्र्या अभावे उपपद्यत एव कार्यानुत्पत्तिरित्याशयः ॥६५॥

सम्भाव्यमानदोषपरिहारपरं सूत्रमवतारयति अथापीति ।

नन्वात्मनां विभुत्वात् सकलशरीरैः समं सम्बन्धात् 'इदं शरीरमस्यैवैकस्यात्मन' इत्यत्र किन्नियामकमित्यस्योत्तरम्—शरीरोत्पत्तीति सूत्रम् ॥ यथा प्रत्यात्मशरीरस्योत्पत्तौ तत्तदात्मनोऽदृष्टं निमित्तम्भवति तथैव आत्मविशेषस्य शरीरविशेषेण संयोगस्य सम्बन्धस्याप्यदृष्टमेव कारणमिति सूत्रार्थः ॥

केचित्तु सूत्रमिदमेवं व्याचक्षते—ननु प्रत्यात्मशरीरोत्पत्तौ भवत्वदृष्टं निमित्तं मातापित्रोस्तु संयोगे किन्निमित्तमित्यत आह—श-

(भा०)यथा खल्विदं शरीरं धातुप्राणसंवाहिनीनां नाडीनां शुक्रान्तानां धातूनां च स्नायुत्वगस्थिशिरापेशीकललकण्डराणां च शिरोबाहूदराणां सक्थ्नाञ्च कोष्ठगानां वातपित्तकफानां च मुखकण्ठहृदयामाशयपक्वाशयाधःस्रोतसां च परमदुःखसम्पादनीयेन सन्निवेशेन व्यूहनमशक्यं पृथिव्यादिभिः कर्मनिरपेक्षैरुत्पादयितुमिति कर्मनिमित्ता शरीरोत्पत्तिरिति विज्ञायते। एवञ्च प्रत्यात्मनियतस्य निमित्तस्याभावान्निरतिशयैरात्मभिः सम्बन्धात्सर्वात्मनां च समानैः पृथिव्यादिभिरुत्पादितं शरीरं पृथिव्यादिगतस्य च नियमहेतोरभावात् सर्वात्मनां सुखदुःखसंवित्त्या-

---

(ख०)रीरोत्पत्तीति सूत्रम्। यथा शरीरोत्पत्तावदृष्टं कारणं तथैव मातापित्रोस्संयोगेऽप्यदृष्टमेव निमित्तमित्यर्थ इति॥

सूत्रार्थं व्याचष्टे भाष्यकारः यथा खल्विदमिति। शरीररूपकार्यस्यातिसूक्ष्मावयवारब्धत्वात्तस्य जडभूतव्यापारमात्रनिष्पाद्यत्वमसम्भवमिति दर्शयितुं शरीरारम्भकाण्यवयवानि कतिचित् परिगणयति धातुप्राणेत्यादि॥ एतेषामनन्तानां स्थूलसूक्ष्माणामवयवानामेकत्रावयविनि शरीर एकत्रीकरणमतिकष्टसम्पाद्यमित्याह—परमदुःखेति। न केवलं कष्टसाध्यमपि त्वशक्यमेव केवलपृथिव्यादिस्थूलभूतव्यापारैरित्याह अशक्यं पृथिव्यादिभिरिति। तत्र कस्य निमित्तान्तरस्यापेक्षेति सूचयितुमाह कर्मनिरपेक्षैरिति। फलितमाह कर्मनिमित्तेति। पुरुषादृष्टप्रयुक्तपृथिव्यादिभूतव्यापारनिष्पन्नमेव शरीरमित्यर्थः॥

पूर्वनिर्णीतसिद्धान्तमनूद्य परोद्भावितदोषमनुवदति एवञ्च प्रत्यात्मेति। सर्वे आत्मानो विभवः—अतः सर्वेषामात्मनां शरीरारम्भकपृथिव्यादिभिस्समाने सम्बन्धे प्रत्येकमात्मनः प्रत्येकशरीरे प्रतिनियमने कारणाभावः। आत्मगतनियमहेत्वभावमनूद्य पृथिव्यादिगतोऽपि निय-

(भा०)यतनं समानं प्राप्तम् । यत्तु प्रत्यात्मं व्यवतिष्ठते तत्र शरीरोत्पत्तिनिमित्तं कर्म व्यवस्थाहेतुरिति विज्ञायते । परिपच्यमानो हि प्रत्यात्मनियतः कर्माशयो यस्मिन्नात्मनि वर्तते तस्यैवोपभोगायतनं शरीरमुत्पाद्य व्यवस्थापयति । तदेवं 'शरीरोत्पत्तिनिमित्तवत्संयोगनिमित्तं कर्म' इति विज्ञायते । प्रत्यात्मव्यवस्थानं तु शरीरस्यात्मना संयोगं प्रचक्ष्महे इति ॥ ६६ ॥

---

(ख०)महेतुर्नास्तीत्याह पृथिव्यादिगतस्य चेति । एवञ्च नियमहेतोरभावात् सर्वेषामात्मनामुपभोगायतनमेकमेव शरीरमिति प्राप्तम् ॥

एवं परोद्भावितं दोषमनूद्य तत्परिहारमुपन्यस्यति—यत्तु प्रत्यात्ममिति । प्रत्येकमात्मना सम्बद्धमेकमेव शरीरमिति प्रत्यात्मवेदनीयमेतत् । तत्र विभोरप्यात्मन एकशरीरमात्रनियामको हेतुस्तस्यादृष्टमेव । यादृशसुखदुःखाद्युपभोगो यस्यात्मनो यस्मिन् जन्मनि तत्पूर्वकर्मार्जितधर्माधर्मप्रयुक्ततया प्राप्तस्तस्यात्मनस्तस्मिन् जन्मनि तादृशोपभोगसाधनशरीरमात्रेण संयोगो न शरीरान्तरैः । यस्य त्वात्मनस्तादृशोपभोगो न प्राप्तस्तस्य तादृशोपभोगयोग्यशरीरेण न किमपि प्रयोजनं न च कोपि सम्बन्ध इत्याह—परिपच्यमान इति । धर्माधर्मौ च प्रत्यात्मानियतावेवेति निर्विवादम् । व्यवस्थापयतीति—एकमात्मानमेकेनैव शरीरेण संयोजयतीत्यर्थः ॥ उपसंहरति तदेवमिति—यथा प्रत्यात्मशरीरोत्पत्तिनिमित्तं तस्य कर्मेति प्रदर्शितं तथैवात्मनः शरीरसंयोगेऽपि तदेव निमित्तमिति सिद्धान्तः । एवं च येनैवादृष्टेन शरीरमुत्पाद्यते तदेवादृष्टमुक्तं संयोगमपि नियमयतीति भावः॥ यच्च सूत्रे संयोगपदेनोक्तं तदेतदेव यत्प्रत्यात्ममेकस्य शरीरस्य नियमनमित्याह प्रत्यात्मव्यवस्थानमिति ॥ ६६ ॥

तदेवमात्मगुणनिबन्धने शरीरसर्गे व्यवस्था दर्शिता ॥ अत्र सांख्या मन्यन्ते—''न कर्मनिबन्धनः शरीरसर्गोऽपि तु प्रकृत्यादिनिबन्ध-

( सू० ) एतेनानियमः प्रत्युक्तः ॥ ६७ ॥

( भा० ) योऽयमकर्मनिमित्तशरीरसर्गमतेऽनियम इत्युच्यते । अयं शरीरोत्पत्तिनिमित्तवत् संयोगोत्पत्तिनिमित्तं कर्मेत्यनेन प्रत्युक्तः । कस्तावदयं नियमः ? यथैकस्यात्मनः शरीरं तथा सर्वेषामिति नियमः । अन्यस्यान्यथान्यस्यान्यथेत्यनियमो—भेदो व्यावृत्तिर्विशेष इति । दृष्टा च जन्मव्यावृत्तिः—उच्चाभि-

---

(ख०)नः । प्रकृतयो हि स्वयमेव धर्माधर्मरूपनिमित्तानपेक्षाः सत्त्वरजस्तमोरूपतया प्रवृत्तिशीलाः स्वं स्वं विकारमारभन्ते—प्रतिबन्धापगममात्रे तु धर्माधर्मावपेक्षन्ते" इति । तान्प्रत्याह—एतेनानियम इति सूत्रम् । तस्यार्थः—'एतेन' कर्मसापेक्षैरेव भूतैः शरीरनिष्पत्तिरिति व्यवस्थापनेन 'अनियमः' प्रत्यात्मं शरीरभेदः कस्याचिदात्मनः किञ्चिदेव शरीरं कस्याचित् किञ्चिदन्यदेवेत्येवं रूपः—'प्रत्युक्तः' व्यतिरेकमुखेनेति शेषः—साङ्ख्यमतेऽनुपपद्यमानतया प्रदर्शित इति भावः ॥

एतदेव सूत्रव्याख्यानम्भाष्यवार्तिकतात्पर्यवृत्त्यादिसम्मतम् । केचित्त्वन्यथैव व्याख्यानमाभिप्रयन्ति । तद्यथा—'एतेन' शरीरोत्पत्तेरदृष्टनिष्पाद्यत्वेन 'अनियमः' सर्वेषामात्मनां सर्वाण्येव शरीराणीत्येवंरूपः परोद्भावितः 'प्रत्युक्तः' परिहृत इत्यर्थः ॥

सूत्रार्थमाह भाष्यकारः योऽयमिति । 'योऽयमनियम इत्युच्यते सोऽकर्मनिमित्तशरीरसर्गमते प्रत्युक्त' इति सम्बन्धः । 'प्रत्युक्तः' असम्भवत्वेन प्रदर्शितः । केन प्रत्युक्त इत्यपेक्षायामाह शरीरोत्पत्तीति । शरीरोत्पत्त्यादिसूत्रे यदुक्तन्तेनेत्यर्थः । कस्तावदयं नियमपदार्थो यस्याभावोऽनियमोऽत्र विवक्षित इति पृच्छति कस्तावदिति ॥ तत्रोत्तरम् यथैकस्येति । नियमो व्याप्तिः साधारणशरीरवत्त्वं सर्वात्मनामिति यावत् । अनियमपदार्थं विवृणोति—अन्यस्येति । उक्तस्य नियमस्यैवाभावो-

(भा०)जनो निकृष्टाभिजन इति, प्रशस्तं निन्दितमिति, व्याधिबहुलमरोगमिति, समग्रं विकलमिति, पीडाबहुलं सुखबहुलमिति, पुरुषातिशयलक्षणोपपन्नं विपरीतमिति, प्रशस्तलक्षणं निन्दितलक्षणमिति, पट्विन्द्रियं मृद्विन्द्रियमिति । सूक्ष्मश्च भेदोऽपरिमेयः । सोऽयं जन्मभेदः प्रत्यात्मनियतात्कर्मभेदादुपपद्यते । असति कर्मभेदे प्रत्यात्मनियते निरतिशयित्वादात्मनां समानत्वाच्च पृथिव्यादीनां पृथिव्यादिगतस्य नियमहेतो-

---

(ख०)ऽव्याप्तिः भिन्नमेव शरीरं प्रत्यात्ममिति । तदेव स्पष्टयति भेदः—व्यावृत्तिः—विशेष इति पर्यायत्रयेण । प्रत्यात्मशरीरव्यावृत्तिं सकलजनानुभवसिद्धां प्रदर्शयति दृष्टा चेति । 'जन्मव्यावृत्तिः' प्रतिशरीरं जन्मत एव विशेष इति । प्रतिशरीरं विशेषान्दर्शयति उच्चाभिजन इति । एकस्य शरीरस्य उच्चकुले जन्म अपरस्य नीचकुल इत्येको विशेषः । एकं शरीरं प्रशस्तमपरं गर्हितमिति द्वितीयः । एकं रोग्यपरमरोगमिति तृतीयः । एकं सकलाङ्गपरिपूर्णमपरं विकलाङ्गमिति तृतीयः । एकं दुःखबहुलमपरं सुखीति चतुर्थः । एकं सत्पुरुषचिह्नलक्षितमपरं कापुरुषचिह्नलक्षितमिति पञ्चमः । एकं सुलक्षणमपरं कुलक्षणमिति षष्ठः । एकस्मिन्निन्द्रियाणि पटून्यपरस्मिन्नपटूनीति सप्तमः ॥ एवं सकलजनदृश्यान् स्थूलान् विशेषान् प्रदर्श्य सूक्ष्माननेकविधान् सूचयति सूक्ष्मश्चेति ।

प्रतिशरीरं विशेषान् प्रदर्श्य तद्भेदकारणं निरूपयति सोऽयमिति । शरीरोत्पत्तेः प्रत्यात्मादृष्टनिमित्तत्व एवैष प्रतिशरीरं भेदः सम्भवति नान्यथेत्याह असतीति । यदि प्रत्यात्मनियतमदृष्टं भिन्नं न स्यात् तदा सर्वेषामात्मनां समानगुणत्वात् शरीरारम्भकपृथिव्यादिभूतेषु भेदहेतोरभावात्तेषामपि सर्वानात्मनः प्रति समानभावात् सर्वा-

(भा०)रभावात्सर्वं सर्वात्मनां प्रसज्येत । न त्विदमित्थम्भूतं जन्म । तस्मान्नाकर्मनिमित्ता शरीरोत्पत्तिरिति ।

उपपन्नश्च तद्वियोगः कर्मक्षयोपपत्तेः । कर्मनिमित्ते शरीरसर्गे तेन शरीरेणात्मनो वियोग उपपन्नः । कस्मात् ? कर्मक्षयोपपत्तेः । उपपद्यते खलु कर्मक्षयः । सम्यग्दर्शनात् प्रक्षीणे मोहे वीतरागः पुनर्भवहेतु कर्म कायवाङ्मनोभिर्न करोति इत्युत्तरस्यानुपचयः । पूर्वोपचितस्य विपाकप्रतिसंवेदनात्प्रक्षयः । एवं

(ख०)णि शरीराणि सर्वेषामात्मनां स्युरिति प्रकृतिनिबन्धने शरीरसर्गे तस्या एकत्वात् सर्वात्मसाधारण्याच्च न शरीराणामस्त्यसाधारणो हेतुरित्यर्थः । ननु भवत्वेवं का नो हानिरित्यत आह नत्विदमिति । सर्वात्मनां साधारणशरीरवत्त्वन्नैवोपलभ्यत इत्यर्थः । उपसंहरति तस्मादिति ।

शरीरोत्पत्तेरदृष्टनिमित्तत्वे हेत्वन्तरमाह उपपन्न इति । एतद्वाक्यं केचित्सूत्रत्वेनाभिप्रयन्ति । तत्र प्रमाणाभावाद्भाष्यमेवेति निर्धारितम् । शरीरस्य पुरुषादृष्टनिमित्तत्व एव तस्य कर्मक्षयाच्छरीरवियोगोऽप्युपपद्यते नान्यथेत्यर्थः । उक्तमेव विशदयति कर्मनिमित्त इति । पृच्छति कस्मादिति । उत्तरयति कर्मक्षयेति । कर्मणां भोगेन क्षयो भवति तस्य क्षये च तज्जन्यशरीरोत्पत्त्यसम्भव इति भावः । तदेव विवृणोति–उपपद्यत इति । शरीरोत्पत्तिनिमित्तभूतानां कर्मणां क्षयः सम्भवति न च सांख्याभिमततन्निमित्तभूतायाः प्रकृतेरित्याशयः । कर्मक्षयमुपपादयति सम्यगिति । प्रमाणादिपदार्थानां तत्त्वज्ञानात् 'मोहे' अज्ञाने नष्टे सति अज्ञानमूलो रागोऽपैति–रागापायाच्च पुरुषः किमपि तादृशं कर्म न करोति यदुपभोगार्थं तस्य पुनः शरीरोत्पत्तिः स्यात्–एवं च तादृशकर्मोपचयस्याभावः–पूर्वकृतानां च कर्मणां सुखदुःखादिभोगेन प्रक्षयः प्रक्षीणकारणभावत्वमित्यर्थः । तेन किमायातम्प्रकृत

(भा०)प्रसवहेतोरभावात् पतितेऽस्मिन् शरीरे पुनः शरीरान्तरानुपपत्तेरप्रतिसन्धिः । अकर्मनिमित्ते तु शरीरसर्गे भूतक्षयानुपपत्तेस्तद्वियोगानुपपत्तिरिति ॥ ६७ ॥

(सू०)"तददृष्टकारितमिति चेत्" पुनस्तत्प्रसङ्गोऽपवर्गे६८

(भा०) "अदर्शनं खल्वदृष्टमित्युच्यते । अदृष्टकारिता भूते-

---

(ख०)इत्याह एवम्प्रसवेति । पूर्वसञ्चितकर्मणामुपभोगेन क्षये सति अग्रिमसञ्चयस्य चाभावे वर्त्तमानशरीरपातानन्तरं पुनः शरीरान्तरोत्पत्तेः कारणन्नास्तीति नोत्पद्यते तस्य शरीरान्तरमेवं च तस्य 'अप्रतिसन्धिः' बन्धाभाव इत्यर्थः ॥ ननु प्रकृतिनिमित्तत्वेऽपि शरीरस्य किमिति नोत्पद्यतेऽयमित्यत आह—अकर्मनिमित्त इति । पुरुषादृष्टनिरपेक्षया जडया प्रकृत्यैव शरीरनिष्पत्तौ प्रकृतेः प्रक्षयाभावात् शरीरबन्धमोक्षो नोपपद्यत इत्यर्थः ॥ ६७ ॥

साङ्ख्योद्भावितशरीरवियोगोपपत्तिं प्रदर्श्य दूषयति–तददृष्टेति सूत्रम् । चेदन्तम्पराभिमतोपपत्तिप्रदर्शनम्पुनरित्यादि तद्दूषणम् । अदृष्टमित्यस्य क्तप्रत्ययस्य भावार्थत्वे 'अदृष्टम्' अदर्शनम् । तच्चादर्शनमुपभोग्यशब्दादेर्विषयस्य प्रकृतिपुरुषभेदस्य चाभिप्रेतम् । तत्कारित एव शरीरवियोग इति पराभिमतम् । तस्य दूषणम्–पुनस्तत्प्रसङ्ग इति । एवं हि अपवर्गे सत्यपि पुनः शरीरोत्पत्तिप्रसङ्ग इत्यर्थः ॥

सूत्रार्थं व्याचक्षाणः परपक्षेऽप्युपपत्तिं शरीरवियोगस्योद्भावयति-अदर्शनमिति । सूत्रस्थमदृष्टपदस्यार्थमाह अदर्शनमिति । 'अदृष्टकारिता भूतेभ्यः शरीरस्योत्पत्ति'रिति सिद्धान्तोक्तिं वयमप्यभ्युपगच्छामः किन्त्वदृष्टपदस्यार्थोऽत्र 'अदर्शनमिति' न तु सिद्धान्त्यभिमतधर्माधर्मरूपम् । अदृष्टकारिता शरीरोत्पत्तिरित्येतस्य वाक्यस्यार्थं स्वमतेन

(भा०)भ्यः शरीरोत्पत्तिः। न जात्वनुत्पन्ने शरीरे द्रष्टा निरायतनो दृश्यं पश्यति। तच्चास्य दृश्यं द्विविधं—विषयश्च नानात्वं चाव्यक्तात्मनोः। तदर्थः शरीरसर्गः। तस्मिन्नवसिते चरितार्थानि भूतानि न शरीरमुत्पादयन्तीत्युपपन्नः शरीरवियोग इति"।

---

(ख०)परो व्याचष्टे—न जात्विति। यस्माच्छरीरं विना दर्शनं न भवत्यतः शरीरमुत्पद्यत इति तस्यार्थः। कथमेतदित्याह निरायतन इति। यावच्छरीरं नोत्पद्यते तावत् पुरुषस्य भोगायतनं भोगकरणानीन्द्रियाणि च न सन्तीति तस्य दर्शनं न सम्भवति ततश्चास्य दृश्यमदृष्टमेव वर्त्तते। किन्तद्दृश्यं यस्यादर्शनमित्याह तच्चास्येति। दृश्यं खलु द्विधा भिन्नम्—शब्दाद्युपभोगविषयरूपमेकम् व्यक्ताव्यक्तज्ञातृभेदरूपमपरम्। उभयोरप्यनयोर्दर्शनमस्यापेक्षितम्। शब्दादिविषये 'दर्शनम्' भोगः, व्यक्ताव्यक्तज्ञातृविषये च 'दर्शनम्' विवेकज्ञानमेवेति विवेकः। अत एतद्दृश्यदर्शनसम्पत्त्यर्थं शरीरोत्पत्तिरावश्यकी। अयमेव चार्थः। 'अदृष्टकारिता शरीरोत्पत्ति'रित्येतस्य वाक्यस्येत्याह तदर्थ इति। उक्तोभयदृश्यदर्शनमेव प्रयोजनं शरीरसंसर्गेण पुरुषस्य। पुरुषोपभोगापवर्गसम्पादनमेव प्रकृतेः शरीरादिसृष्टौ प्रयोजनमिति साङ्ख्याः। एवं शब्दादिविषयभोगसम्पत्त्यर्थमपवर्गकारणीभूतव्यक्ताव्यक्तज्ञातृविवेकसिद्ध्यर्थं च प्रकृतिः शरीरमुत्पादयतीति पर्यवसितोऽर्थः॥ किमायातमनेन प्रकृते शरीरवियोगविषये इत्यत आह—तस्मिन्नवसिते इति। 'तस्मिन्' शब्दाद्युपभोगे व्यक्ताव्यक्तज्ञविवेकज्ञाने च 'अवसिते' सम्पन्ने 'भूतानि' शरीरारम्भकाणि चरितार्थानि—चरितौ पुरुषस्योपभोगाविवेकज्ञानरूपावर्थौ येषां तानि तथाभूतानि—सन्ति पुनस्तस्य शरीरान्तरं नोत्पादयन्ति। एवं च प्रकृतिपुरुषयोस्सतोरपि तस्य पुरुषस्य शरीरान्तरोत्पत्तौ प्रयो-

(भा०)एवं चेन्मन्यसे ? पुनस्तत्प्रसङ्गोऽपवर्गे । पुनः शरीरोत्पत्तिः प्रसज्यत इति । या चानुत्पन्ने शरीरे दर्शनानुत्पत्तिरदर्शनाभिमता—या चापवर्गे शरीरानिवृत्तौ दर्शनानुत्पत्तिरदर्शनभूता—नैतयोरदर्शनयोः क्वचिद्विशेष इत्यदर्शनस्यानिवृत्तेरपवर्गे पुनः शरीरोत्पत्तिप्रसङ्ग इति ।

"चरितार्थता विशेष इति चेत्"

---

(ख०)जनाभावान्न तदुत्पत्तिरिति । तथाचोक्तम् कारिकायाम्—

दृष्टा मयेत्युपेक्षक एको दृष्टाऽहमित्युपरमत्यन्या ।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गस्य ॥ इति ।

अयमेवार्थः शरीरवियोगस्येत्यर्थः ॥

एवं परोद्भावितदर्शनमनूद्य तद्दूषणपरं 'पुनस्तत्प्रसङ्गोपवर्गे' इति सूत्रांशं व्याख्यातुमुपक्रमते—एवं चेन्मन्यस इति । तदेव विवृणोति पुनः शरीरोत्पत्तिरिति । तद्विशदयति या चेति । यद्द्विधा भिन्नमदर्शनं ( शब्दाद्युपभोगाभावो व्यक्ताव्यक्तज्ञविवेकज्ञानाभावश्चेति ) शरीरोत्पत्तिनिमित्तमभिमतं तद्यथा शरीरोत्पत्तेः प्राक् तथाऽपवर्गानन्तरं शरीरपातादनन्तरमपि तुल्यमेव । तथा चापवर्गानन्तरमपि तददर्शनस्य सत्त्वाच्छरीरोत्पत्तिनिमित्तसद्भावे पुनः शरीरोत्पत्तिप्रसङ्गो दुर्वारः ॥

शरीरोत्पत्तेः प्राग्यददर्शनं यच्चापवर्गानन्तरमदर्शनं तदेतयोरदर्शनयोर्महान् भेदोऽस्तीति नापवर्गानन्तरं शरीरोत्पत्तिप्रसङ्ग इति मनसि कृत्वा परस्तयोरदर्शनयोर्भेदमाविष्करोति चरितार्थतेति । शब्दाद्युपभोगव्यक्ताव्यक्तज्ञविज्ञानयोस्साधनमेव प्रकृतेः प्रतिपुरुषं शरीरोत्पादने प्रयोजनम् । एवं च तत्प्रयोजनसिद्धेः प्राक् यद् 'अदर्शनं' तस्य तत्प्र-

(भा०)न, करणाकरणयोरारम्भदर्शनात्। "चरितार्थानि भूतानि दर्शनावसान्न शरीरान्तरमारभन्ते इत्ययं विशेष" एवं चेदुच्यते? न, करणाकरणयोरारम्भदर्शनात्। चरितार्थानां भूतानां विषयोपलब्धिकरणात्पुनः पुनः शरीरारम्भो दृश्यते, प्रकृतिपुरुषयोर्नानात्वदर्शनस्याकरणान्निरर्थकः शरीरारम्भः पुनः पुनर्दृश्यते।

---

(ख०)योजनसिद्धेरनन्तरं यद् 'अदर्शनं' तस्मान्महान् भेदः। तत्प्राक् प्रकृतिरचरितार्था तदनन्तरं च चरितार्था सेति न चरितार्थायां तस्यां पुनः शरीरोत्पत्तिप्रसङ्ग इति भावः॥

परिहरति न करणाकरणयोरारम्भदर्शनादिति। केचिदेतद्वाक्यं सूत्रत्वेनाभिप्रयन्ति। प्रमाणाभावात् तदुपेक्षितम्। परोक्तस्याशयं विवृणोति चरितार्थानीति। दर्शनावसानादिति। 'दर्शनस्य' शब्दाद्युपभोगस्य व्यक्ताव्यक्तज्ञविज्ञानस्य चेत्युभयरूपस्य 'अवसानात्' सम्पत्तेः हेतोरित्यर्थः। शिष्टं व्याख्यातम्॥ स्वोक्तपरिहारस्याशयं व्याचक्षाणस्तमनुवदति न करणेति। तस्याशयं वर्णयति चरितार्थानामिति। 'विषयोपलब्धिकरणात् चरितार्थानामपि भूतानां पुनः पुनः शरीरारम्भो दृश्यते' इति सम्बन्धः। विषयोपलब्धिर्व्यक्ताव्यक्तज्ञविज्ञानमिति द्वे प्रयोजने प्रकृत्या शरीरारम्भे। तत्रामुक्तानां पुरुषाणां विषये दृश्यते यद् यद्यपि विषयोपलब्धिः प्रचुरं कृता तावता च शरीरारम्भकभूतानि 'चरितार्थानि' सम्पादितप्रयोजनानि, तथापि व्यक्ताव्यक्तज्ञविज्ञानं न सम्पादितमिति तावता तान्यचरितार्थान्येव पुनः शरीरान्तरमारभन्ते। नानाशरीरग्रहणानन्तरमेव चापवर्गः कदाचिदेव सम्पद्यते। ततश्चाद्यशरीर एव विषयोपलब्धिरूपस्यार्थस्य सम्पन्नत्वात् द्वितीयादावपि शरीरे अनन्तशरीरग्रहणपूर्वकविवेकज्ञानजनितापवर्गपर्यन्तं तावन्मा-

(भा०)तस्मादकर्मनिमित्तायां भूतसृष्टौ न दर्शनार्था शरीरोत्पत्ति-र्युक्ता । युक्ता तु कर्मनिमित्ते सर्गे दर्शनार्था शरीरोत्पत्तिः । कर्म-विपाकः संवेदनं दर्शनमिति ।

"तददृष्टकारितमिति चेत्" कस्यचिद्दर्शनम्—"अदृष्टं नाम पर-माणूनां गुणविशेषः क्रियाहेतुः । तेन प्रेरिताः परमाणवः सम्मूर्छि-ताः शरीरमुत्पादयन्तीति—तन्मनः समाविशति स्वगुणेनादृष्टेन प्रेरितम् । समनस्के शरीरे द्रष्टुरुपलब्धिर्भवतीति" ।

---

(ख०)त्रस्य पुनः पुनः करणादवान्तरशरीराणामुत्पादनं निरर्थकमेव प्राप्त-मित्यर्थः । नानात्वदर्शनस्याकरणादितिं—आऽपवर्गप्राप्तेः व्यक्ताऽव्यक्तज्ञ-विवेकज्ञानस्यासम्पन्नत्वादित्यर्थः । निरर्थक इति । विषयोपलब्धिरूप-स्यार्थस्याद्य एव शरीरे निष्पन्नत्वात् द्वितीयशरीरस्य सार्थकता तदैव स्याद्यदि तस्मिन्नपवर्गसाधकऽव्यक्ताव्यक्तज्ञविज्ञानं सम्पन्नम्भवेत्—न चैतत्सम्पन्नं भवति—तस्मान्निष्प्रयोजनमेव द्वितीयादिशरीरमित्याशयः ॥

उपसंहरति तस्मादिति । उक्तहेतोः पुरुषादृष्टनिरपेक्षैर्भूतैः शरीरो-त्पत्तिर्दर्शनार्था भवतीति रिक्तं वच इत्यर्थः ॥ कः पक्षो युक्त इत्यत आह युक्ता त्विति । यदि पुरुषादृष्टाधीनैर्भूतैः शरीरोत्पत्तिस्तदा भवति सा दर्शनार्था । अस्मिन् पक्षे अदृष्टस्य प्रतिपुरुषं भिन्नत्वात् कस्यचित् कदाचिदेव दर्शनद्वयसम्पत्तिरिति सूपपादं सर्वमित्याह कर्मविपाक इति । दर्शनं नाम संवेदनम्, तच्च विषयोपलब्धिरपवर्गकारणव्यक्ता-व्यक्तज्ञविज्ञानं चेत्युभयम् । तच्च कर्मणां विपाकादेव भवतीत्यर्थः ॥

आर्हतमतनिरसनपरं सूत्रस्य व्याख्यानान्तरमुपन्यस्यन् परोद्भावि-तपक्षमुत्थापयति तददृष्टकारितमिति चेदिति । परमतमनुवदति—अदृष्टं नामेति । आर्हतास्तावददृष्टं परमाणुगुणं वर्णयन्ति । पार्थिवादीनामणूनां

(भा०)एतस्मिन् वै दर्शने गुणानुच्छेदात्पुनस्तत्प्रसङ्गोऽपवर्गे। अपवर्गे शरीरोत्पत्तिः परमाणुगुणस्यादृष्टस्यानुच्छेद्यत्वादिति ॥ ६८ ॥

(सू०) मनःकर्मनिमित्तत्वाच्च संयोगानुच्छेदः॥६९॥

( भा० ) मनोगुणेनादृष्टेन समावेशिते मनसि संयोगव्युच्छेदो न स्यात् । तत्र किंकृतं शरीरादपसर्पणं मनस इति। कर्माशयक्षये तु कर्माशयान्तराद्विपच्यमानादपसर्पणोपपत्तिरिति ।

---

(ख०)मनसश्च गुणोऽदृष्टम् । तत्र पार्थिवाद्या अणवः स्वादृष्टप्रयुक्ताः शरीरमारभन्ते । मनश्च स्वगुणप्रयुक्तं शरीरमाविशति । तच्च स्वकादेवादृष्टात् पुद्गलस्य ( जीवस्य ) सुखदुःखोपभोगं साधयति । न तु पुद्गलस्य धर्मोऽदृष्टमिति तेषाम्मतम् ॥ तद्दूषयति एतस्मिन्निति। अत्रापि पुनस्तत्प्रसङ्गोऽपवर्गे । तत्र हेतुः गुणानुच्छेदादिति । उक्तं प्रसङ्गं विशदयति अपवर्ग इति । परमाणुगुणस्यादृष्टस्य नित्यत्वादात्मन अपवर्गानन्तरमपि तस्य सत्त्वात् पुनः शरीरोत्पत्तिर्दुर्वारेत्याशयः ॥६८॥

आर्हतमते दोषान्तरमाह—मनःकर्मेति । मनोऽदृष्टनिमित्तं यदि शरीरं स्यात्तर्हि मनसः शरीरसंयोगोच्छेद एव न स्यात्ततश्च मरणाभावप्रसङ्ग इत्यर्थः । अदृष्टस्य मनोगुणत्वमेव न सम्भवतीत्यर्थ इति वृत्तिकृतः ।

सूत्रं व्याचष्टे मनोगुणेनेति । कथन्न स्यान्मनसः संयोगोच्छेद इत्यत आह तत्रेति । 'तत्र' तस्मिन् मते मनसः शरीरादपसर्पणे हेत्वभावात्तदपसर्पणं नैव स्यादित्यर्थः ॥

ननु सिद्धान्तेऽपि कथन्तदपसर्पणमित्यत आह—कर्माशयक्षय इति। अस्मन्मते वर्त्तमानशरीरारम्भककर्माशयस्य क्षये भविष्यद्देहारम्भककर्मा-

(भा०)"अदृष्टादेवापसर्पणमिति" चेत् "योऽदृष्टः शरीरोपसर्पणहेतुः स एवापसर्पणहेतुरपीति"। न, एकस्य जीवनप्रायणहेतुत्वानुपपत्तेः। एवं च सति एकमदृष्टं जीवनप्रायणयोर्हेतुरिति प्राप्तं—नैतदुपपद्यते ॥ ६९ ॥

(सू०) नित्यत्वप्रसङ्गश्च प्रायणानुपपत्तेः ॥ ७० ॥

(भा०) विपाकसंवेदनात् कर्माशयक्षये शरीरपातः 'प्रायणम्' कर्माशयान्तराच्च पुनर्जन्म। भूतमात्रात्तु कर्मनिरपेक्षाच्छरी-

---

(ख०)शयान्तरस्य विपाकात् भवत्येवापसर्पणं मनस इति युक्तमेव मरणमित्यर्थः। परोऽपि स्वमतेनापसर्पणमुपपादयति अदृष्टादेवेति। यदेवादृष्टम्मनसः शरीरसमावेशो हेतुस्तदेव तस्य तस्मादपसर्पणेऽपीति भावः॥ तद्दूषयति नैकस्येति। एकमेवादृष्टं शरीरसमावेशरूपजीवनस्य तदपसर्पणरूपमरणस्य च हेतुरित्यसमञ्जसमित्यर्थः॥ ६९ ॥

ननु यः संयोगानुच्छेदः पूर्वसूत्र उद्भावितः सोऽत्यन्तमप्रसिद्धः। यत् सदकरणं च तदेव नित्यं दृष्टं—शरीरं च सत् सकरणं चातः कथं तत् नित्यं भवेदित्यत आह—नित्यत्वेति सूत्रम्। मनसः शरीरादपसर्पणासम्भवे जीवस्य मरणानुपपत्तेर्भवत्येव नित्यत्वप्रसङ्गः शरीरस्येत्यर्थः।

सूत्रं व्याचक्षाणः शरीस्यानित्यत्वस्य मूलं स्पष्टीकरोति विपाकेति। 'विपाकस्य' कर्मफलस्य 'संवेदनात्' भोगात् प्रारब्धकर्मणः क्षये सति यः शरीरस्य पातस्तदेव 'प्रायणं' मरणमिति यावत्। पुनः प्रारब्धावशिष्टसञ्चितकर्मवशात् शरीरोत्पत्तौ 'पुनर्जन्म'—इत्येषैव यथावद्वस्तुस्थितिः। एतच्च सर्वं कर्मनिमित्तकशरीरोत्पत्तावेव सम्भवति नान्यथेति प्रदर्शयितुमाह—भूतमात्रादिति। शरीरघटकपृथिव्यादिभूतानामवस्थितत्वात् तत्पातासम्भवे मरणानुपपत्तिः तदनुपपत्तौ च नित्यत्वमेव

(भा०)रोत्पत्तौ कस्य क्षयाच्छरीरपातः प्रायणमिति—प्रायणानुपपत्तेः खलु वै नित्यत्वप्रसङ्गं विद्मः। यादृच्छिके तु प्रायणे प्रायणभेदानुपपत्तिरिति ॥ ७० ॥

( भा० ) पुनस्तत्प्रसङ्गोऽपवर्गे इत्येतत्समाधित्सुराह—

(सू०)"अणुश्यामतानित्यत्ववदेतत्स्यात्" ॥ ७१ ॥

(भा०)"यथा अणोः श्यामता नित्या अग्निसंयोगेन प्रतिविद्धा न पुनरुत्पद्यते, एवमदृष्टकारितं शरीरमपवर्गे पुनर्नोत्पद्यत इति" ७१॥

(सू०) नाकृताभ्यागमप्रसङ्गात् ॥ ७२ ॥

---

(ख०)शरीरस्य प्रसज्यत इत्यर्थः। ननु माभूत्कर्मनिमित्तकः शरीरपातः अकरणक एव स भविष्यतीत्यत आह यादृच्छिक इति। 'यादृच्छिके' अकारणके मरणे पुरुषाणां मरणे प्रकारभेदो न स्यात्। भवति त्वयं भेदः। कश्चिद् गर्भस्थ एव प्रैति काश्चिज्जातमात्रः कश्चित्कुमारक इत्यादिः। अकारणस्य तु प्रायणस्य नित्यं सत्त्वमसत्त्वं वा स्याद् गगनवद् गगनकुसुमवच्चेत्यर्थः ॥ ७० ॥

पुनस्तत्प्रसङ्गोऽपवर्ग इति यत्सिद्धान्तिनोद्भावितन्तस्य परेण कृतं समाधानं प्रस्तावयति पुनस्तादिति ॥ परकृतं समाधानमाह—अणुश्यामतेति सूत्रम्। यथाऽणूनां नित्यत्वेऽपि तेषां श्यामतादिगुणा अनित्या एव तथैव तेषां गुणोऽदृष्टमप्यनित्यमेवेत्यर्थः ॥

सूत्रं व्याचष्टे यथाऽणोरिति। अणोर्नित्यस्यापि श्यामतागुणः अग्निसंयोगेन नश्यति न च पुनरुद्भवति। एवमेव तद्गुणेनादृष्टेन कारितमपि शरीरमपवर्गे नष्टं सन्न पुनरुत्पद्यत इत्यर्थः ॥ ७१ ॥

परकृतसमाधानमपाकरोति नाकृतभ्यागमेति सूत्रम्। 'अकृतम्' प्रमाणेन अविषयीकृतम् प्रत्युत प्रत्यक्षागमविरुद्धमिति यावत्—तस्य 'अभ्यागमः' अभ्युपगमः—तत्प्रसङ्गादित्यर्थः।

( भा० ) नायमस्ति दृष्टान्तः । कस्मात् ? अकृताभ्यागमप्रसङ्गात् । अकृतं प्रमाणतोऽनुपपन्नं—तस्याभ्यागमोऽभ्युपपत्तिर्व्यवसायः । एतच्छ्रद्दधानेन प्रमाणतोऽनुपपन्नं मन्तव्यम् । तस्मान्नायं दृष्टान्तः । न प्रत्यक्षं न चानुमानं किञ्चिदुच्यत इति । तदिदं दृष्टान्तस्य साध्यसमत्वमभिधीयत इति ।

अथ वा 'नाकृताभ्यागमप्रसङ्गात्' । अणुश्यामतादृष्टान्तेनाकर्मनिमित्तां शरीरोत्पत्तिं समादधानस्याकृताभ्यागमप्रसङ्गः ।

(ख०) सूत्रं व्याचष्टे नायमस्तीति । अणुश्यामतादृष्टान्तो न सम्यगित्यर्थः । पृच्छति कस्मादिति । तत्रोत्तरं अकृताभ्यागमप्रसङ्गादिति । तद्व्याचष्टे अकृतमिति । प्रमाणविरुद्धमित्यर्थः । 'अभ्यागमः' अभ्युपगमः । तदेव स्पष्टयति-एतदिति । अणुश्यामताप्रसङ्गेन यदुक्तम्परेण तदत्यन्तं प्रमाणविरुद्धमतस्तस्याभ्युपगमोऽभ्युपगन्तुर्जडश्रद्धायाः पराकाष्ठैव मन्तव्यत्यर्थः । पर्यवसितमाह—तस्मादिति । अप्रामाणिकत्वाद् दृष्टान्तार्थस्य तत्समर्थकस्यानुमानस्य प्रत्यक्षस्य वाऽनुपन्यासाच्च स उपेक्षणीय एवेत्यर्थः । प्रत्युत अणुश्यामताया यन्नित्यत्वमुक्तम्परेण तद्विरुद्धमेवानुमानमास्ति । तद्यथा -परमाणुश्यामताऽपि नाकारणा पार्थिवरूपत्वात् लोहितादिरूपवदिति । ननु को नाम दोषोऽयं दृष्टान्तस्येत्यत आह-तदिदमिति । यदस्माभिरुक्तं तेन दृष्टान्तस्य 'साध्यसमत्वं' असिद्धत्वमेव स्पष्टीभवतीत्यर्थः ॥

सूत्रस्य यथाश्रुति व्याख्यानान्तरमाह—अथवेति । अकृतस्य कर्मणः 'अभ्यागमः' फलोपभोगः तत्प्रसङ्गादित्यर्थः । यदा खलु परमाणुगुण एव नित्यः शरीराद्यारम्भकः तदासौ नित्यत्वान्न केनचित् क्रियते । तस्याकृतस्यैव फलं पुरुषैरुपभुज्यते । ततश्चायमास्तिकानां विहितनिषिद्धप्रवृत्तिनिचयोऽनर्थकः शास्त्रप्रणयनं चानर्थकं भवेदिति भावः । सूत्राक्षरं व्याचष्टे अणुश्यामतेति ॥ ननु भवत्वेवमकृताभ्यागमः का नो

(भा०) अकृते सुखदुःखहेतौ कर्मणि पुरुषस्य सुखं दुःखमभ्यागच्छतीति प्रसज्येत। ओमिति ब्रुवतः प्रत्यक्षानुमानागमविरोधः।

प्रत्यक्षाविरोधस्तावत्—भिन्नमिदं सुखदुःखं प्रत्यात्मवेदनीयत्वाव प्रत्यक्षं सर्वशरीरिणाम्। को भेदः? तीव्रं मन्दं चिरमाशु नानाप्रकारमेकप्रकारमित्येवमादिर्विशेषः। न चास्ति प्रत्यात्मनियतः सुखदुःखहेतुविशेषः। न चासति हेतुविशेषे फलविशेषो दृश्यते। कर्मनिमित्ते तु सुखदुःखयोगे कर्मणां तीव्रमन्दतोपपत्तेः कर्मसञ्चयानां चोत्कर्षापकर्षभावान्नानाविधैकविधभावाच्च कर्मणां सुखदुःखभेदोपपत्तिः। सोऽयं हेतुभेदाभावाद् दृष्टः सुखदुःखभेदो न स्यादिति-प्रत्यक्षविरोधः।

तथाऽनुमानविरोधः—दृष्टं हि पुरुषगुणव्यवस्थानात्सुखदुःखव्यवस्थानम्। यः खलु चेतनावान् साधनानिर्वर्तनीयं सुखं बुद्धा तदीप्सन् साधनावाप्तये प्रयतते स सुखेन युज्यते, न विपरीतः।

---

(ख०) हानिरित्यत आह—ओमिति ब्रुवत इति। एतादृशोऽकृताभ्यागमः प्रत्यक्षादिसकलप्रमाणविरुद्ध इत्यर्थः॥

तत्र प्रत्यक्षविरोधं दर्शयति प्रत्यक्षविरोध इति। 'भिन्नम्' प्रतिपुरुषं भिन्नप्रकारकम्। सुखदुःखादिभेदं पृच्छति को भेद इति। तत्रोत्तरम् तीव्रमिति। अयं च भेदः परमतेन नोपपद्यते इत्याह—न चास्तीति। अदृष्टव्यापारमनभ्युपगन्तुस्तस्य भेदहेतोरभावात्। सिद्धान्ते तस्य भेदस्योपपत्तिं दर्शयति कर्मनिमित्त इति। प्रतिपुरुषकर्माशयस्य उत्कर्षापकर्षादिभिन्नरूपत्वाद्युक्त एव तत्फलस्य सुखदुःखादेर्भेद इत्यर्थः। परमतेऽनुपपत्तिमुपसंहरति सोऽयमिति। प्रत्यात्मवेदनीयोऽयं भेदो नोपपद्यते परमत इति तस्य प्रत्यक्षविरोव इत्यर्थः॥

तत्रैवानुमानविरोधं प्रदर्शयति तथानुमानविरोध इति। पुरुषगुणानुरोधेनैव तस्य सुखाद्युत्पद्यते। तदेव स्पष्टीकरोति यः खल्विति।

(भा०)यश्च साधननिर्वर्तनीयं दुःखं बुद्ध्वा तज्जिहासुः साधनपरिवर्जनायायतते स च दुःखेन त्यज्यते,न विपरीतः। अस्ति चेदं यत्नमन्तरेण चेतनानां सुखदुःखव्यवस्थानम्। तेनापि चेतनगुणान्तरव्यवस्थाकृतेन भवितव्यम् इत्यनुमानम्। तदेतदकर्मनिमित्ते सुखदुःखयोगे विरुध्यते इति । तच्च गुणान्तरमसंवेद्यत्वाददृष्टं विपाककालानियमाच्च व्यवस्थितम् । बुद्ध्यादयस्तु संवेद्याश्चापवर्गिणश्च—इति ।

अथागमविरोधः—बहु खल्विदमार्षमृषीणामुपदेशजातमनुष्ठानपरिवर्जनाश्रयमुपदेशफलं च। शरीरिणां वर्णाश्रमविभागेनानुष्ठानलक्षणा प्रवृत्तिः, परिवर्जनलक्षणा निवृत्तिः । तच्चोभयमेत-

---

(ख०)'साधनावाप्तये' तत्सुखसाधकोपायानां सङ्ग्रहाय। 'विपरीतः'यो न तदवाप्तये यतते । एवं पुरुषस्य सुखं तत्प्रयत्नादिगुणाधीनमेवेत्यर्थः ॥ सर्वजनप्रसिद्धे पुरुषप्रयत्नाधीने सुखदुःखे प्रदर्श्य यानि न तथा प्रसिद्धानि तानि प्रदर्शयति अस्ति चेदमिति । कदाचित् प्रत्यक्षतः पुरुषप्रयत्नं विनाऽप्यतर्कितोपपन्नानि सुखदुःखान्यापतन्ति । सर्वजनप्रसिद्धसुखदुःखभेदानुविधानं पुरुषगुणप्रयत्नोपपादितं परामृश्य यः सुखदुःखभेदः साक्षात्पुरुषप्रयत्नोपपादितो न दृश्यते सोपि केनचिदन्येन पुरुषगुणविशेषणोपपादित इत्यनुमीयते । उपपद्यते चैतत्सिद्धान्तपक्षे न परपक्ष इत्याह—तदेतदिति । अकर्मनिमित्तमेव यदि सुखदुःखादिकं स्यात्तदोक्तभेदव्यवस्थोपपत्तिर्दुरुपपादेत्यर्थः । किञ्च तत्पुरुषस्य गुणान्तरं येन सुखदुःखादिभेदव्यवस्थोपपद्यते इत्यत आह तच्चेति । इदं च गुणान्तरं न प्रत्यक्षं नापि क्षणिकमतो बुद्ध्यादिपुरुषगुणविलक्षणमेवेति । इदं च गुणान्तरं धर्माधर्मरूपमप्रत्यक्षत्वाददृष्टमिति कीर्त्यते ॥

(भा०) स्यां दृष्टौ नास्ति कर्म सुचरितं दुश्चरितं वा। कर्मनिमित्तः पुरुषाणां सुखदुःखयोग-इति विरुद्ध्यते।

सेयं पापिष्ठानां मिथ्यादृष्टिरकर्मनिमित्ता शरीरसृष्टिरकर्मनिमित्तः सुखदुःखयोग इति ॥ ७२ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये तृतीयाध्यायस्य द्वितीयमाह्निकम् ॥ २ ॥

समाप्तश्चायं तृतीयोऽध्यायः ।

---

(ख०) परपक्ष आगमविरोधं दर्शयति आगमविरोध इति। 'एतस्यां दृष्टौ' परकीये दर्शने। यदि न कर्मनिमित्तः शरीरसर्गः सुखदुःखादि वा तदा शास्त्रविहितकर्त्तव्यानुष्ठानेन धर्मस्ततः सुखम् शास्त्रनिषिद्धाचरणेनाधर्मस्ततो दुःखमित्यादिव्यवस्था न स्यात्। अयं च व्यवस्थाभावः सकलागमविरुद्ध एव ॥

परपक्षदोषमुपसंहरति सेयमिति ॥

॥ इति द्वितीयाह्निकम् ॥

॥ इति खद्योते तृतीयाध्यायः ॥

यत्किञ्चिदाविलं ग्रन्थे बुद्धिदोषेण जायते।
पित्रोः पुण्यप्रभावेण सर्वं तद्विमलीभवेत् ॥

---

## अथ चतुर्थाध्यायस्याद्यमाह्निकम् ॥

### (१)प्रवृत्तिदोषसामान्यपरीक्षाप्रकरणम् ॥

( भा० ) मनसोऽनन्तरा प्रवृत्तिः परीक्षितव्या । तत्र खलु यावद्धर्माधर्माश्रयशरीरादि परीक्षितं सर्वा सा प्रवृत्तेः परीक्षेत्याह—

( सू० ) प्रवृत्तिर्यथोक्ता ॥ १ ॥

(भा०) तथा परीक्षितेति ॥ १ )

---

## अथ चतुर्थोऽध्यायः ।

### प्रथममाह्निकम् ।

(ख०)चतुर्थेऽध्याये आत्मशरीरेन्द्रियार्थबुद्धिमनोरूपकारणस्वरूपप्रमेयषट्कं क्रमप्राप्तं परीक्ष्यते । स एवाध्यायार्थः । तत्र प्रथमाह्निके प्रवृत्त्यादयो विधर्मिणो विषयाश्चिन्तनीयाः । द्वितीये त्ववसरतः सर्वप्रमेयाणां विषयी धर्मस्तत्त्वबोधो निरूपणीयः ॥

अध्यायक्रमं निरूपयन्नाह मनसोनन्तरेति । प्रथमाध्यायगतोद्देशसूत्रे नवमे मनोनन्तरं प्रवृत्तेरेवोद्दिष्टत्वात् मनःपरीक्षानन्तरम्प्रवृत्तेरेव परीक्षावसरः इत्यर्थः ।

पूर्वकृतपरीक्षातिदेशनपरं सूत्रमवतारयन्नाह तत्र खल्विति । सकलायाः प्रवृत्तेर्धर्मान्तःपातित्वात्तत्परीक्षणेन साऽपि परीक्षिता वेदितव्येत्यर्थः ।

उक्तातिदेशपरं सूत्रम्—प्रवृत्तिर्यथोक्तेति । सूत्रार्थं व्याचक्षाणस्तस्य शेषं पूरयति तथेति । एवं च 'प्रवृत्तिः यथा उक्ता तथा परीक्षिता' इति सूत्रस्वरूपं पर्यवसितम् । यथा लक्षिता तथा परीक्षिता अस्या लक्षणेनैव परीक्षाऽपि सम्पन्नेत्यर्थः । एतत्सूत्रपूरणं वृत्तिकृतोऽनभिमतम् । तथाचोक्तं तैः—अत्र तथैवेति शेषं पूरयन्ति । तदयुक्तम् ।

(भा०) प्रवृत्त्यनन्तरास्तर्हि दोषाः परीक्ष्यन्तामित्यत आह–

## ( सू० ) तथा दोषाः ॥ २ ॥

(भा०)परीक्षिता इति। बुद्धिसमानाश्रयत्वादात्मगुणाः प्रवृत्तिहेतुत्वात् पुनर्भवप्रतिसन्धानसामर्थ्याच्च संसारहेतवः संसारस्यानादित्वादनादिना प्रबन्धेन प्रवर्तन्ते। मिथ्याज्ञाननि·

( ख० ) तथासत्यत्रैव यथाशब्दस्याकांक्षाशान्तावग्रिमसूत्रस्थतथाशब्देपि यथाशब्दान्तरस्य पूरणीयतया प्रकरणभेदापत्तेः। तस्मादग्रिमसूत्रस्थतथाशब्देनान्वयो युक्तः। प्रवृत्तिर्यथोक्तलक्षणवती तथा दोषा अप्युक्तलक्षणवन्त इत्यग्रिमसूत्रसम्बलितोऽर्थ इति ॥ १ ॥

अग्रिमसूत्रावतारकमाक्षेपमाह प्रवृत्त्यनन्तरा इति। यदि प्रवृत्तिपरीक्षा तल्लक्षणेनैव गतार्था तर्हि तदनन्तरमुद्दिष्टानां दोषाणामेव परीक्षा प्रवर्त्यतामित्यर्थः।

उक्तशङ्कापरिहारमाह—तथा दोषा इति।

सूत्रशेषं पूरयति परीक्षिता इति। प्रवृत्तितुल्यतया प्रवृत्तिपरीक्षयैव तावद्दोषाणामपि सत्त्वं परीक्षितमेवेत्यर्थः। उक्तसमर्थनाय दोषाणां कार्यरूपप्रवृत्तितुल्यतामाह—बुद्धीति। अभीष्टानभीष्टविषयानुचिन्तनप्रभवा वक्ष्यमाणा दोषा नार्थचिन्तनबुद्धिव्यधिकरणा भवितुमर्हन्ति—तथासति चैत्रस्य विषयानुचिन्तने मैत्रस्य रागद्वेषादिप्रसङ्गात्। तस्माद्बुद्धिसमानाश्रयत्वाद्बुद्धीनां चात्माश्रयत्वादात्मगुणा एव दोषाः। आत्मगुणत्वाच्च कार्यप्रवृत्तितुल्यतया प्रवृत्तिपरीक्षयैव ते परीक्षिता इत्यर्थः। दोषाणां परीक्षा कथं वृत्तेति प्रदर्शयन् तद्विषये यत्किञ्चित् प्रागुक्तं तत्संक्षेपेण स्मारयति प्रवृत्तिहेतुत्वादिति। दोषाणां प्रवर्त्तनालक्षणत्वात् तेषां प्रवृत्तिहेतुत्वं तस्माच्च पुनर्जन्मकारणान्यपि तेऽत एव संसारहेतवोऽपि। संसारश्चानादिस्तत्कारणभूता दोषा अप्य·

(भा०) निवृत्तिस्तत्त्वज्ञानात्, तन्निवृत्तौ रागद्वेषप्रबन्धोच्छेदेऽपवर्ग इति । प्रादुर्भावतिरोधानधर्मकाः। इत्येवमाद्युक्तं दोषाणामिति ॥२॥

(२)दोषत्रैराश्यप्रकरणम् ।

(भा०) प्रवर्तनालक्षणा दोषा इत्युक्तम् । तथा चेमे—मानेर्ष्यासूयाविचिकित्सामत्सरादयः, ते कस्मान्नोपसङ्ख्यायन्ते इत्यत आह—

**(सू०) तत्त्रैराश्यं रागद्वेषमोहार्थान्तरभावात् ॥ ३ ॥**

---

(ख०)नादिसन्तानरूपेण वर्त्तन्ते तथाच तत्त्वज्ञानान्मिथ्याज्ञाननिवृत्तिस्तन्निवृत्तौ रागद्वेषादिदोषनिवारणम्, ततश्चापवर्गः । एवं च सन्तानवृत्तित्वात्तेषामुत्पत्तिनाशवत्त्वमपि ॥ एवमादि दोषाणां प्रसङ्गेनोक्तमेव प्राक् सूत्रेषु (१।१।२, १।१।१८, ३।१।२५)। इदमेव च तेषां परीक्षात्वेन मन्तव्यमित्याशयः ॥ २ ॥

अत्र प्रकरणविभागविषये केषाञ्चिद्विप्रतिपत्तिः । आद्यसूत्रात्मकमेकम्प्रकरणम्प्रवृत्तिपरीक्षात्मकम्—द्वितीयं तु सूत्रमारभ्य नवमसूत्रपर्यन्तम्परमेकमेव प्रकरणं दोषपरीक्षापरमित्येव विभागः समीचीनः प्रतिभातीति तेषाम्मतम् । तत्समाधानं यथा—उक्तेन विभागेनाद्यं प्रकरणमेकसूत्रात्मकमेव स्यात् । न च तत्सम्यक् अनेकसूत्रसमूहस्यैव प्रकरणपदवाच्यत्वात् । अतः प्राचीन एव विभागः सम्यक्—येन आद्यसूत्रद्वयात्मकमेकं प्रकरणं प्रवृत्तिदोषोभयसामान्यपरीक्षापरं तृतीयसूत्रमारभ्य नवमसूत्रपर्यन्तन्त्वपरं दोषविशेषपरीक्षापरकमिति वर्द्धमानोपाध्यायाः ॥

तदेवं बहु परीक्षितं दोषाणाम्—यत्तु किञ्चित्तेषामपरीक्षितं तत्परीक्षितुं प्रश्नेनोपक्रमते प्रवर्तनेति । दोषाणां प्रवर्त्तनालक्षणत्वमुक्तम्प्राक् । मानेर्ष्यादयोऽपि प्रवर्त्तनालक्षणाः । तत एतेऽपि दोषपरिगणने कथन्नोच्यन्ते इति प्रश्नार्थः ।

(भा०)तेषां दोषाणां त्रयो राशयस्त्रयः पक्षाः। रागपक्षः-कामो मत्सरः स्पृहा तृष्णा लोभ इति । द्वेषपक्षः-क्रोध ईर्ष्याऽसूया द्रोहोऽमर्ष इति । मोहपक्षो-मिथ्याज्ञानं विचिकित्सा मानः प्रमाद इति । त्रैराश्यान्नोपसङ्ख्यायन्ते इति ।

"लक्षणस्य तदभेदात्त्रित्वमनुपपन्नम्" ।

---

(ख०)तदुत्तरम्—तत्त्रैराश्यमिति सूत्रम् । मानेर्ष्यादयः सर्व एव दोषास्त्रिष्वेव रागद्वेषमोहेष्वन्तर्भवन्त्यतस्ते सर्वे एष्वेव त्रिषु यथायोगं विभक्ताः । अतो न तेषां पृथक् परिगणनस्यावश्यकतेत्यर्थः ।

सूत्रं व्याचक्षणो रागादिषु सर्वेषां दोषाणामन्तर्भावं प्रदर्शयति तेषामिति । काममत्सरस्पृहातृष्णालोभानां रागस्वरूपत्वाद् राग एवान्तर्भावः । एवं क्रोधेर्ष्यासूयाद्रोहामर्षाणां द्वेषस्वरूपत्वाद् द्वेष एवान्तर्भावः । तथा च मिथ्याज्ञानविचिकित्सामानप्रमादानाम्मोहस्वरूपत्वान्मोह एवान्तर्भावः। एवमेव त्रिष्वेव दोषेषु सर्वेषां दोषाणामन्तर्भावः। तत्र स्त्रीगतोऽभिलाषः कामः, अक्षीयमाणवस्त्वपरित्यागेच्छा मत्सरः, अस्वपरस्वादानेच्छा स्पृहा, पुनर्भवप्रतिसन्धानहेतुभूता तृष्णा, प्रमाणविरुद्धपरद्रव्यापहारेच्छा लोभः । शरीरेन्द्रियाधिष्ठानवैकृत्यहेतुः क्रोधः, साधारणे वस्तुनि पराभिनिवेशप्रतिषेधेच्छा ईर्ष्या, परगुणाक्षमताऽसूया, परापकारेच्छा द्रोहः, अपकाराक्षमताऽमर्षः । विचिकित्सा संशयः, विद्यमानाविद्यमानगुणाध्यारोपेणात्मोत्कर्षप्रत्ययो मानः, कर्तव्याकरणं प्रमादः । उपसंहरति त्रैराश्यादिति। यस्मात त्रिष्वेव वर्गेषु सर्वे दोषा अन्तर्गतास्तस्मात् तेषां परिगणनं न क्रियते इत्यर्थः ॥

त्रित्वानुपपत्तिमेव शङ्कते लक्षणस्येति । प्रवर्त्तनालक्षणा दोषा इति हि दोषसामान्यलक्षणम् तथा च एकलक्षणसमाक्रान्तत्वादेकत्वमेवोचितन्न त्रित्वमपीति त्रैराश्यानुपपत्तिरित्याक्षेपार्थः ॥

(भा०)नानुपपन्नम्-रागद्वेषमोहार्थान्तरभावात् । आसक्तिलक्षणो रागः,अमर्षलक्षणो द्वेषः,मिथ्याप्रतिपत्ति लक्षणो मोह इत्येतत्प्रत्यात्मवेदनीयं सर्वशरीरिणाम् । विजानात्ययं शरीरी रागमुत्पन्नम्-अस्ति मेऽध्यात्मं रागधर्म-इति । विरागं च विजानाति-नास्ति मेऽध्यात्मं रागधर्म इति । एवमितरयोरपीति । मानेर्ष्यासूयाप्रभृतयस्तु त्रैराश्यमनुपतिता इति नोपसङ्ख्यायन्ते ॥ ३ ॥

( सू० ) "नैकप्रत्यनीकभावात्"॥ ४ ॥

( भा० ) "नार्थान्तरं रागादयः । कस्मात्? एकप्रत्यनीक-

---

(ख०) परिहरति नानुपपन्नमिति । कथमित्यत आह रागद्वेषेति । प्रवर्त्तनालक्षणा दोषा इत्येकलक्षणाक्रान्तत्वेऽपि रागद्वेषमोहानाम्परस्परं वैलक्षण्यं स्पष्टमेवानुभूयते सर्वेषां मनुष्याणाम् । तदेव वैलक्षण्यं प्रदर्शयति आसक्तीति । नानाप्रकारकेऽपि रागे इष्टे वस्तुन्यासक्तिस्सर्वत्रानुस्यूता, न चैवं द्वेषमोहयोः । एवं नानाप्रकारकेऽपि द्वेषेऽनिष्टवस्तुन्यसहिष्णुतारूपोऽमर्षः सर्वत्र वर्त्तते, न तथा रागमोहयोः । एवमेव नानाप्रकारकेऽपि मोहे मिथ्याज्ञानं सर्वत्रानुस्यूतम्, न तथा रागद्वेषयोः॥

किमिदं कल्पितमेवोत तात्त्विकमित्यत आह-एतदिति । सर्वेषाम्मनुष्याणामनुभवसिद्धमेतदित्यर्थः । तमेवानुभवं प्रदर्शयति विजानातीति । मेध्यात्ममिति । ममात्मनीत्यर्थः । इतरयोरिति । द्वेषमोहयोरित्यर्थः ॥ उपसंहरति मानेति । मानादयः सर्वे रागादिवर्गत्रय एवान्तर्भवन्तीति तेषां नामानुकीर्त्तनं नावश्यकमित्यर्थः ॥ ३ ॥

शङ्कते नैकेति । यदुक्तं दोषत्रैराश्यं तन्न, एकमात्रविरोधित्वात् त्रयाणामित्यर्थः ॥

सूत्रार्थं वर्णयति नार्थान्तरमिति । रागद्वेषमोहा मार्थान्तराणि न पृथङ्निर्देश्यानि । पृच्छति कस्मादिति । तत्रोत्तरम्-एकेति । तद्विवृणोति

(भा०)भावात् । तत्त्वज्ञानं सम्यग्मतिरार्यप्रज्ञा सम्बोध इत्येकमिदं प्रत्यनीकं त्रयाणामिति" ॥ ४ ॥

( सू० ) व्यभिचारादहेतुः ॥ ५ ॥

( भा० ) एकप्रत्यनीकाः पृथिव्यां श्यामादयोऽग्निसंयोगेनैकेन, एकयोनयश्च पाकजा इति ॥ ५ ॥

---

(ख०) तत्त्वेति । किं नाम तत्त्वज्ञानमिति पर्यायत्रयेण कथयति सम्यगिति । आराद्याता तत्त्वेभ्य इत्यार्या—आर्या चासौ प्रज्ञा चेति 'आर्यप्रज्ञा' । सम्यक्बोधः 'सम्बोधः' । यस्मादेकमेव तत्त्वज्ञानं रागादीनां त्रयाणां 'विरोधि' नाशकम् तस्मात्तेषामप्येकत्वमेव युक्तं न पृथङ्निर्देश इति भावः ॥ ४ ॥

समाधत्ते व्यभिचारादिति । एकप्रत्यनीकभावादिति यो हेतुरुक्त एकत्वसाधने स व्यभिचारीत्यर्थः ।

सूत्रं व्याचक्षाणो व्यभिचारं प्रदर्शयति एकेति । पृथिव्यां श्यामादयो गुणाः एकेनैव अग्निसंयोगेन नाश्यन्ते अपि चैते गुणा भिन्ना एव नैक एव । एवं चैकविरोधित्वे गुणानामेकत्वं न दृश्यते । अत एकविरोधित्वं नैकत्वसाधने हेतुरित्यर्थः ॥ ननु माभूदेकप्रत्यनीकत्वादेकत्वं रागादीनाम् एकयोनित्वात्तु भवत्येवैकत्वं शब्दवदित्यत आह—एकयोनय इति । रूपादयो गुणाः पाकरूपैककारणजन्या न चैषां तावतैकत्वमित्यर्थः ।

सति चार्थान्तरभाव इति पूर्वान्वय्येव । तथा चायं सम्बन्धः—'अर्थान्तरभावे सत्यपि ( चोऽप्यर्थः ) श्यामादयः अग्निसंयोगेन एकप्रत्यनीका इति-यद्यप्येते गुणा भिन्ना एव तथाप्येकप्रत्यनीका इत्यर्थः ॥ अयमेवान्वयः सम्यक् प्रतिभाति । वार्तिककृतस्तात्पर्यकृतस्तु मते 'सति चार्थान्तरभावे' इति वाक्यस्याग्रिमसूत्रेणैवान्वयः ॥५॥

(भा०) सति चार्थान्तरभावे—

(सू०) तेषां मोहः पापीयान्नामूढस्येतरोत्पत्तेः ॥ ६ ॥

(भा०) मोहः पापः पापतरो वा द्वावभिप्रेत्योक्तम् । कस्मात्? नामूढस्येतरोत्पत्तेः । अमूढस्य रागद्वेषौ नोत्पद्येते । मूढस्य तु यथासङ्कल्पमुत्पत्तिः । विषयेषु रञ्जनीयाः सङ्कल्पा रागहेतवः, कोपनीयाः सङ्कल्पा द्वेषहेतवः । उभये च सङ्कल्पा न

---

(ख०) दोषोच्छेदं वर्णयितुकामः कारणोच्छेद एव कार्योच्छेद इति मनसि कृत्वा मोहस्यैव सकलदोषमूलत्वं प्रदर्शयितुं त्रिष्वपि रागद्वेषमोहेषु तारतम्यं वर्णयति तेषामिति सूत्रम् ॥ 'तेषाम्' रागद्वेषमोहानाम्मध्ये 'मोहः पापीयान्—' अनर्थमूलं 'न अमूढस्य इतरोत्पत्तेः' । 'अमूढस्य' मोहरहितस्य 'इतरयोः' रागद्वेषयोः 'उत्पत्तिः' न भवति यस्मात् तस्मात् मोह एव सर्वप्रधानमिति भावः ।

सूत्रार्थं वर्णयति—मोह इति । पापीयानितीयसुन्नन्तस्य पदस्य तात्पर्यमाह द्वाविति । रागमोहयोर्द्वेषमोहयोर्वा मोह एव पापतर इत्यर्थः । यदि त्रयोऽप्यभिप्रेताः स्युस्तारतम्योक्तौ तर्हि पापिष्ठ इत्येवावक्ष्यत् । पृच्छति कस्मादिति । तत्रोत्तरम्—नामूढस्येति । तदर्थमाह—अमूढस्येति । 'अमूढस्य' मोहरहितस्य पुरुषस्य रागद्वेषौ नोत्पद्येते मोहसहितस्य तूत्पद्येते इत्यन्वयव्यतिरेकसिद्धो मोहस्य हेतुभाव इत्यर्थः । यथासङ्कल्पमित्यत्र सङ्कल्पपदार्थमाह विषयेष्विति । मोहाद्विषयस्य सुखसाधनत्वानुस्मृतिर्दुःखसाधनत्वानुस्मृतिश्च 'सङ्कल्पः' । ते च सङ्कल्पा द्विविधाः । केचित् 'रञ्जनीयाः' रञ्जका रागोत्पादकाः, केचिच्च 'कोपनीयाः' कोपका द्वेषोत्पादकाः । रञ्जनीयाः कोपनीया इत्युभयत्र कर्त्तरि कृत्यप्रत्ययः ॥ उक्तमर्थं प्रकृते योजयति उभय इति । द्विविधा अपि सङ्कल्पा मोहात्मका एव मिथ्याज्ञानरूपत्वात्तेषाम् । मिथ्याज्ञा-

(भा०) मिथ्याप्रतिपत्तिलक्षणत्वान्मोहादन्ये। ताविमौ मोहयोनी रागद्वेषाविति। तत्त्वज्ञानाच्च मोहनिवृत्तौ रागद्वेषानुत्पत्तिरित्येकप्रत्यनीकभावोपपत्तिः।

एवं च कृत्वा तत्त्वज्ञानाद्–"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग" इति व्याख्यातमिति ॥ ६ ॥

( भा० ) "प्राप्तस्तर्हि—

(सू०) निमित्तनैमित्तिकभावादर्थान्तरभावो दोषेभ्यः" ॥७॥

( भा० ) "अन्यद्धि निमित्तमन्यच्च नैमित्तिकमिति दोषनिमित्तत्वाददोषो मोह इति" ॥ ७ ॥

( सू० ) न, दोषलक्षणावरोधान्मोहस्य ॥ ८ ॥

(ख०) नलक्षणत्वमेव च मोहस्यातो मोहलक्षणं नातिवर्त्तन्ते सङ्कल्पा इति। 'सङ्कल्पा मोहादन्ये न भवन्ति मिथ्याप्रतिपत्तिलक्षणत्वादिति' सम्बन्धः। उपसंहरति ताविमाविति। मोह एव योनिर्ययोस्तावित्यर्थः। परोद्धावितैकप्रत्यनीकत्वस्य तात्पर्यं वर्णयन्नाह–तत्त्वज्ञानादिति। तत्त्वज्ञानेन अज्ञानरूपो मोहो नाश्यते तन्नाशे च युक्त एव तत्कार्ययोः रागद्वेषयोरपि नाश इत्यर्थः॥

उक्तार्थसमर्थकत्वेन पूर्वोक्तं सूत्रं स्मारयति--एवं चेति ॥ ६ ॥

शङ्कते-प्राप्तस्तर्हीति भाष्यवाक्यमारभ्य दोषेभ्य इति सूत्रान्त्यपदपर्यन्तम्। तर्हि दोषेभ्योऽर्थान्तरभावः प्राप्त इति सम्बन्धः।

सूत्रार्थं वर्णयति अन्यद्धीति। कारणं कार्याद्भिन्नमिति सर्वेषां सम्मतम्। एवं च यदि मोहो दोषाणां कारणम् तर्हि स तेभ्यो भिन्न एव। तथाच मोहस्य न दोषत्वमित्याक्षेपार्थः ॥ ७ ॥

मोहो न दोषो दोषनिमित्तत्वाद् रूपादिवदित्यस्य हेतोरप्रयोजकत्व-

( भा० ) 'प्रवर्त्तनालक्षणा दोषा' इत्यनेन दोषलक्षणेनाव-रुध्यते दोषेषु मोह इति ॥ ८ ॥

( सू० ) निमित्तनैमित्तिकोपपत्तेश्च तुल्य-जातीयानामप्रतिषेधः ॥ ९ ॥

( भा० ) द्रव्याणां गुणानां वाऽनेकविधविकल्पो निमित्त-नैमित्तिकभावे तुल्यजातीयानां दृष्ट इति ॥ ९ ॥

(३) प्रेत्यभावपरीक्षाप्रकरणम् ।

( भा० ) दोषानन्तरं प्रेत्यभावः ।

---

(ख०)म्प्रदर्शयन्नाक्षेपम्परिहरति न दोषेति सूत्रम् ।

सूत्रार्थं वर्णयति प्रवर्त्तनेति । दोषनिमित्तत्वेऽपि मोहस्य दोषलक्ष-णाक्रान्तत्वान्न तस्य दोषत्वमपैतीत्याशयः । अवरुध्यत इति । अन्त-र्भाव्यत इत्यर्थः ॥ ८ ॥

दोषनिमित्तत्वादित्यस्य हेतोरनैकान्तिकत्वमाह निमित्तेति सूत्रम् । तुल्यजातीयानामपि द्रव्याणां गुणानां च निमित्तनैमित्तिकभावो दृश्य-ते । यथा बुद्धिर्बुद्ध्यन्तरनिमित्तं बुद्धिजातीया च -तुर्यादयो द्रव्य-निमित्तं द्रव्यजातीयाः-नोदनादयः कर्माणि संस्कारस्य गुणस्य निमि-त्तानि ॥ एवञ्च निमित्तनैमित्तिकभावादेव मोहस्य दोषप्रतिषेधो न युज्यत इत्यर्थः ।

सूत्रार्थं वर्णयति द्रव्याणामिति। तुल्यजातीयानां द्रव्याणां गुणानां न्निमित्तनैमित्तिकाभावेऽनेकविधविकल्पो दृष्ट इति सम्बन्धः । समा-नजातीययोरसमानजातीययोश्च द्रव्ययोर्गुणयोर्वा बहुधा दृश्यते निमि-त्तनैमित्तिकभावः । तथाच निमित्तनैमित्तिकभावो हेतुर्विजातीयत्वसा-धनेऽनैकान्तिक एवेत्याशयः ॥ ९ ॥

क्रमप्राप्तं प्रेत्यभावं परीक्षयिष्यमाणस्तत्र क्रमं प्रदर्शयति दोषानन्तर-

(भा०)"तस्यासिद्धिः—आत्मनो नित्यत्वात् । न खलु नित्यं किंचिज्जायते म्रियत इति जन्म मरणयोर्नित्यत्वादात्मनोऽनुपपत्तिः । उभयं च प्रेत्यभाव" इति ।

तत्रायं सिद्धानुवादः—

( सू० ) आत्मनित्यत्वे प्रेत्यभावसिद्धिः ॥ १० ॥

---

(ख०)मिति । प्रमेयोद्देशे दोषादनन्तरं प्रेत्यभाव एवोक्तस्ततः परीक्षायामपि दोषानन्तरं स एव परीक्ष्यत इत्यर्थः । प्रेत्यभाव इत्यत्र 'ल्यब्'मुखं व्यादाय स्वपितीतिवद् द्रष्टव्यः । तथाच भूत्वा प्रायणमिति भवनप्रायणयोः समानकर्त्तृकत्वमप्युपपन्नम् ॥ एतद्विषये च संशयः—अयं प्रेत्यभावः शरीरस्योत बुद्धेरुतात्मन इति तात्पर्यकृतः । तत्र केषांचिदाक्षेपः—पुनरुत्पत्तिः प्रेत्यभाव इत्यत्र सूत्रे ( १ । १ । १९ ) प्रेत्यभाव आत्मन एवेत्यस्य सिद्धत्वादुक्तसंशयस्यावकाशो नास्तीति । तत्र च परिहारः—प्रेत्यभावस्योत्पत्तिनाशरूपत्वात्तस्य च नित्य आत्मन्यसम्भवादुपपद्यत एव संशयः, एवं चास्य संशयस्य परीक्षावसरः प्रेत्यभावपरीक्षावसर एवेति ॥

प्रेत्यभावस्योत्पत्तिनाशरूपत्वपक्षं सिद्धान्तिनि समासज्य परोक्तं संशयमुद्भाव्य तत्रात्मपक्षे दोषमुपंन्यसितुमाह— तस्यासिद्धिरिति । प्रेत्यभावस्य सर्वथाऽभाव एवेत्यर्थः । तत्र हेतुः—आत्मन इति । तदेव स्पष्टयति न खल्विति । उत्पत्तिनाशरूप एव प्रेत्यभावः स च सिद्धान्ते नित्यस्यानुत्पत्तिनाशशीलस्यात्मनो नोपपद्यते । वैनाशिकानान्तु नित्यमात्मानमनभ्युपगच्छतो सत्त्वमात्रस्योत्पादनिरोधाभ्यां युक्त एव प्रेत्यभाव इत्याशयः ।

उक्ताक्षेपपरिहाररूपेण सिद्धान्तमुपक्रमते—तत्रायमिति । सिद्धस्य, सिद्धान्तस्य अनुवादो वर्णनम् ॥

( भा० ) नित्योऽयमात्मा प्रैति-पूर्वशरीरं जहाति-म्रियत इति, प्रेत्य च पूर्वशरीरं हित्वा भवति-जायते-शरीरान्तरमुपादत्त इति । तच्चैतदुभयं 'पुनरुत्पत्तिः प्रेत्यभावः' इत्यत्रोक्तं--पूर्वशरीरं हित्वा शरीरान्तरोपादानं प्रेत्यभावः--इति । तच्चैतन्नित्यत्वे सम्भवतीति ।

यस्य तु--सत्त्वोत्पादः सत्त्वनिरोधः प्रेत्यभावः--तस्य कृतहानमकृताभ्यागमश्च दोषः । उच्छेदहेतुवादे ऋष्युपदेशाश्चानर्थ-

(ख०) सिद्धान्तमाह आत्मनित्यत्व इति सूत्रम् । सूत्रार्थं वर्णयति नित्योऽयमात्मेति । 'प्रेत्यभाव'इत्यस्याक्षरार्थं वर्णयन् तस्यात्मन्येव नित्ये सम्भवं दर्शयतिप्रैतीति । प्रेत्येत्यत्र प्रपूर्वकस्येण्धातोरर्थः 'पूर्वशरीरं जहाति' इति । तस्यैवार्थो 'म्रियते' इति । एवं च 'प्रेत्य' इत्यस्यार्थः 'पूर्वशरीरं हित्वा' इति । भाव इत्यत्र भूधातोरर्थो 'जायते' इति-तस्य चार्थः 'शरीरान्तरमुपादत्ते' इति ॥ एतदेवोभयं मरणं मरणानन्तरं जन्म चोक्तं प्रथमाध्यायगतप्रेत्यभावलक्षणसूत्र इति स्मारयति तच्चैतदिति । तस्यैव लक्षणस्य तात्पर्यम्प्रकृतोपयोगि वर्णयति पूर्वशरीरमिति । अनेन प्रकृते किमायातमित्यत आह तच्चैतदिति । पूर्वशरीरत्यागापरशरीरादानपरम्परा तदैव सम्भवति यदा समग्रतत्परम्पराव्यापी कश्चिदस्ति-स एव चास्माकमात्मेत्यर्थः ॥

विपक्षे बाधकमाह--यस्य त्विति । वैनाशिकमते य आत्मनो मरणे तस्य नितान्तमेव सत्त्वस्योच्छेदः जन्मनि च पुनः सत्त्वस्योत्पत्तिरित्येवंरूप एव प्रेत्यभावः । एवं च यस्य मरणं जातं तस्यात्यन्तं नष्टत्वात् यस्य च जन्म तस्य प्रथममेव जातत्वादुभयोरेकान्ततो भेद एव-तथा चोत्तरशरीरे य उपभोगा आत्मन आपतन्ति न ते सर्वे तस्य स्वप्राक्तनकर्मकृताः, यानि च तस्य पूर्वशरीरे स्वकृतानि कर्माणि तज्जन्याश्चोपभोगास्तस्य नैवापतन्तीति महान् दोषः । एवं सत्यभ्युदयनिःश्रेयसार्थं प्रवृत्त्यभावः प्रसजयत इत्यर्थः ॥

(भा०) का इति ॥ १० ॥

( भा० ) "कथमुत्पत्तिरिति" चेत्—

( सू० ) व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात् ॥ ११ ॥

( भा० ) "केन प्रकारेण किन्धर्मकात् कारणाद्व्यक्तं शरीराद्युत्पद्यत इति"

व्यक्ताद् भूतसमाख्यातात्पृथिव्यादितः परमसूक्ष्मान्नित्या-

(ख०) पुनर्विपक्षे बाधकमाह—उच्छेदेति । यद्यात्मोच्छेदविनाशशीलस्तर्हि यस्यात्मन उपदेशः कृतस्तस्योत्तरक्षणे प्रणष्टत्वादुपदेशानुष्ठानासम्भवे सकलोपदेशानर्थक्यप्रसङ्ग इत्यर्थः ॥ नित्यात्मपक्षे तु स्वदेहेन्द्रियबुद्धिसंवेदनासम्बन्धोत्पादविनाशौ नित्यस्यात्मनो जन्मप्रायणे—तथा चोपपन्नः प्रेत्यभाव इति सिद्धान्तः ॥ १० ॥

ननु प्रेत्यभाव उत्पत्तिनिरूप्यः । उत्पत्तिश्चात्मनो नित्यत्वादेव न सजातीयाद्विजातीयाद्वा सम्भवति । अतस्तत्प्रेत्यभावोऽप्रसिद्ध इत्यतः प्रसङ्गादुत्पत्तिप्रकारं दर्शयितुकामः प्रश्नमुत्थापयति कथमिति ।

अत्र च प्रावादुकानां नानाविधा विप्रतिपत्तयः सन्ति । तत्राभिमतं पक्षं गृह्णन्नुत्तरम्प्रस्तौति—व्यक्तादिति सूत्रम् । 'व्यक्तं' नामोपलब्धिलक्षणप्राप्तं रूपादिमद् द्रव्यम्—तस्योत्पत्तिर्व्यक्तात् परमाणोः भवतीत्यर्थः । अत्राप्रत्यक्षोऽपि परमाणू रूपत्वादिसामान्याद् 'व्यक्तम्' उच्यते तदेव पृथिव्यादेः कारणमिति ।

सूत्रार्थं व्याचक्षाण उक्तं प्रश्नमनुवदति केन प्रकारेणेति ॥ शरीरोत्पत्तेः कारणधर्मतद्व्यापारप्रकारजिज्ञासात्मकः प्रश्नः ।

तत्रोत्तरं व्यक्तादिति । रूपादिगुणयुक्तेभ्यः सूक्ष्मेभ्यः पृथिव्यादिपरमाणुभ्यः ( व्यक्तेभ्यः ) शरीराद्युपादानकारणभूतानि स्थूलानि पृथिव्यादीनि ( व्यक्तानि ) उत्पद्यन्त इत्यर्थः । 'परमसूक्ष्मात्' परमाणोः । शरीरेति—शरीरं च इन्द्रियाणि च विषयाश्च उपकरणानि

(भा०) व्यक्तं शरीरेन्द्रियविषयोपकरणाधारं प्रज्ञातं द्रव्यमुत्पद्यते । व्यक्तं च खल्विन्द्रियग्राह्यम् । तत्सामान्यात्कारणमपि व्यक्तम् ।

"किं सामान्यम्" ।

रूपादिगुणयोगः । रूपादिगुणयुक्तेभ्यः पृथिव्यादिभ्यो नित्येभ्यो रूपादिगुणयुक्तं शरीराद्युत्पद्यते ।

प्रत्यक्षप्रामाण्यात् । दृष्टो हि रूपादिगुणयुक्तेभ्यो मृत्प्रभृतिभ्यस्तथाभूतस्य द्रव्यस्योत्पादः, तेन चादृष्टस्यानुमानमिति । रूपादीनामन्वयदर्शनात् प्रकृतिविकारयोः पृथिव्यादीनां नित्यानामतीन्द्रियाणां कारणभावोऽनुमीयत इति ॥ ११ ॥

---

(ख०) च तेषामाधारभूतं पृथिव्यादीति यावत् । प्रज्ञातमिति—व्यक्तमित्यर्थः ॥

परमाणुशरीरयोः किन्तत्सादृश्यं यन्मूलकमुभयोरनयोर्व्यक्तमिति सामान्यं नामेति प्रदर्शयितुम्पृच्छति किमिति । सादृश्यमन्तरेण न सम्भवति समाननाम्नाऽभिधेयत्वमित्याशयः । तत्रोत्तरम् रूपादीति । यथा परमाणू रूपादिगुणवान् तथैव शरीरादीत्यत एवोभयोरपि नाम व्यक्तमिति । गुणयोगमेव प्रदर्शयति रूपादीति । ननु व्यक्तादेव व्यक्तोत्पत्तिरित्यत्र को न्याय इत्यत आह प्रत्यक्षप्रामाण्यादिति । एतत्सूत्रावयवं व्याचष्टे दृष्टो हीति । रूपादिगुणयुक्तान्मृत्पिण्डाद् रूपादिगुणयुक्तस्य घटस्योत्पत्तिं दृष्ट्वा तेनैवादृष्टानामपि तथैव कारणभावोऽनुमीयते । एतदेव स्पष्टयति रूपादीनामिति । पृथिव्यादीनाम् 'प्रकृतिविकारयोः कार्यकारणयोः मृद्घटयोः रूपादीनां गुणानामन्वयदर्शनात् 'नित्यानामतीन्द्रियाणाम्'परमाणूनामपि तथैव सामान्यगुणयोगेनैव 'कारणभावः' शरीरादिकारणत्वम् अनुमीयत इत्यर्थः ॥ ११ ॥

( सू० ) "न, घटाद् घटानिष्पत्तेः" ॥ १२ ॥

( भा० ) "इदमपि प्रत्यक्षं-न खलु व्यक्ताद् घटाद्व्यक्तो घट उत्पद्यमानो दृश्यते-इति व्यक्ताद् व्यक्तस्यानुत्पत्तिदर्शनान्न व्यक्तं कारणमिति" ॥ १२ ॥

( सू० ) व्यक्ताद् घटनिष्पत्तेरप्रतिषेधः ॥ १३ ॥

( भा० )न ब्रूमः-सर्वं सर्वस्य कारणमिति, किन्तु यदुत्पद्यते व्यक्तं द्रव्यं तत्तथाभूतादेवोत्पद्यत इति । व्यक्तं च तन्मृद् द्रव्यं कपालसंज्ञकं यतो घट उत्पद्यते । न चैतन्निह्नुवानः क्वचिदभ्यनुज्ञां लब्धुमर्हतीति । तदेतत्तत्त्वम् ॥ १३ ॥

(४) शून्यतोपादानप्रकरणम् ।

( भा० ) अतः परं प्रावादुकानां दृष्टयः प्रदर्श्यन्ते—

---

( ख० ) सिद्धान्ताशयमबुद्ध्वा परः शङ्कते न घटादिति सूत्रम् ॥

सूत्रं व्याचष्टे इदमपीति । व्यक्ताद् व्यक्तमुत्पद्यत इत्यत्र व्यभिचारः यतो नोत्पद्यते व्यक्तो घटो व्यक्ताद् घटात् । तथाच शरीरादीनामपि न व्यक्तं कारणमुपपद्यत इत्याशयः ॥ १२ ॥

समाधत्ते व्यक्तादिति सूत्रम् । 'अप्रतिषेधः' व्यक्तकारणत्वस्येति शेषः । यद्यपि घटो घटान्नोत्पद्यते तथाऽपि सोऽपि व्यक्तादेव मृत्पिण्डादुत्पद्यते इत्यत्रापि भवत्येव व्यक्ताद्व्यक्तोत्पत्तिरित्याशयः ।

सूत्रं व्याचष्टे न ब्रूम इति । व्यक्ताद् व्यक्तोत्पत्तिरित्यस्य नायमर्थो यत् सर्वेभ्यो व्यक्तेभ्यः सर्वेषां व्यक्तानामुत्पत्तिरपि तु यत् किञ्चिद् व्यक्तमुत्पद्यते तद् व्यक्तादेव कारणादित्येवेत्यर्थः । एतदेव दृष्टान्ते योजयति व्यक्तं चेति । व्यक्तं घटो व्यक्तादेव मृत्पिण्डादुत्पद्यते । यदि कश्चिद् ब्रूयान्नैतदेवमिति तान्प्रत्याह न चैतदिति । प्रत्यक्षं वृत्तमपलपन् प्रेक्षावद्भिरुपेक्षणीय एव भवतीत्यर्थः ॥ १३ ॥

(सू०)"अभावाद्भावोत्पत्तिर्नानुपमृद्य प्रादुर्भावात्" ॥१४॥

(भा०)"असतः सदुत्पद्यत इत्ययं पक्षः । कस्मात् ? उपमृद्य प्रादुर्भावात् । उपमृद्य बीजमङ्कुर उत्पद्यते नानुपमृद्य । न चेद्बीजोपमर्दोऽङ्कुरकारणम्—अनुपमर्देऽपि बीजस्याङ्कुरोत्पत्तिः स्यादिति" ॥ १४ ॥

---

(ख०)व्यक्तादेव व्यक्तमुत्पद्यत इति मतमुपोद्बलयितुं पृथिव्याद्युत्पत्तिविषये यानि मतान्तराणि दार्शनिकैरुपन्यस्तानि तन्निराकरणपरं प्रकरणाष्टकम् । तत्रादौ शून्यतोपादानप्रकरणम् । एतदेवावतारयति अतःपरमिति । 'प्रावादुकानाम्' दार्शनिकानाम् । 'दृष्टयः' मतानि 'प्रदर्श्यन्ते'—कानिचित्प्रतिषेद्धुं यथा शून्यतोपादानदर्शनम् कानिचिदभ्यनुज्ञातुम्-यथेश्वरकारणतावादः । ईश्वरकारणतावादमभिलक्ष्यैवैष यत्नो वार्त्तिककृतः । अत्र तु यदीश्वरकारणतादर्शनमुपन्यस्तमग्रे तद् वेदान्त्यभिमतेश्वरस्योपादानकारणत्वमेव समर्थयतेऽतस्तदपि सिद्धान्तिनः प्रतिषेध्यकोटावेवान्तःपततीति नावसरो वार्त्तिककृदभिमतविवेकस्येत्यादि तात्पर्यादवगम्यते । विशदं निरूपयिष्यत एतदग्रिमे ईश्वरोपादनताप्रकरणे ।

तत्र प्रथममसत एव सदुत्पद्यत इति शून्यतोपादानतादर्शनमुपन्यस्यति अभावादिति सूत्रम् ॥ एके प्राहुः 'अभावादेव भावानां कार्याणामुत्पत्तिः । कुतः ? यतो नानुपमृद्य प्रादुर्भावः कस्याचिदपि भावस्य भवति—यथा बीजमुपमृद्यैवाङ्कुरो जायते—इत्यर्थः ।

सूत्रं व्याचष्टे—असत इति । इदमत्राकूतम्—विश्वं हि शून्यताया एव जायते । एवं किल श्रूयते—असदेवेदमग्र आसीदिति । अत एवाद्याप्यसत एव जन्म दृश्यते न सतः । तत्कस्य हेतोः ? अभावस्तस्य कारणमिति । 'अनुपमृद्य प्रादुर्भावादिति' उपलक्षणमेतत् । असत उत्पादादित्यपि द्रष्टव्यम् । तस्मादसदुपादानं विश्वमिति सिद्धम् ॥ १४ ॥

(भा०) अत्राभिधीयते—

(सू०) व्याघातादप्रयोगः ॥ १५ ॥

(भा०) उपमृद्य प्रादुर्भावादित्ययुक्तः प्रयोगो—व्याघातात्। यदुपमृद्नाति न तदुपमृद्य प्रादुर्भवितुमर्हति- विद्यमानत्वात्। यच्च प्रादुर्भवति न तेनाप्रादुर्भूतेनाविद्यमानेनोपमर्द इति ॥ १५ ॥

(सू०) "नातीतानागतयोः कारकशब्दप्रयोगात्" ॥ १६ ॥

(भा०) "अतीते चानागते चाविद्यमाने कारकशब्दाः प्रयुज्यन्ते। पुत्रो जनिष्यते—जनिष्यमाणं पुत्रमभिनन्दति—पुत्रस्य जनिष्यमाणस्य नाम करोति—अभूत्कुम्भो—भिन्नं कुम्भमनु-

---

(ख०) शून्यतोपादानतानिराकरणमवतारयति अत्राभिधीयत इति। शून्यतोपादानतावादं निराकरोति व्याघातादिति सूत्रम्। पूर्वपक्षोद्भावितो हेतुर्व्याहतोऽत एव 'अप्रयोगः' अहेतुः हेत्वाभासः स इत्यर्थः।

सूत्रं व्याचक्षाणो व्याघातं प्रदर्शयति उपमृद्येति। यत् उपमृद्नाति तत् अस्ति—न ह्यसत् उपमर्दकारणं भवितुमर्हति—यच्च प्रादुर्भवति तन्नास्ति—यत् सत् तत् सत्त्वादेव नोत्पत्तिमपेक्षते—तदिदम् 'उपमृद्नाति प्रादुर्भवति' चेति व्याहतमेवोच्यते ॥ १५ ॥

यच्च प्रादुर्भवति तत्प्रादुर्भावात् प्रागसदेव यच्चासदेव तत् कथमुपमर्दं करिष्यतीत्यर्थः।

सिद्धान्त्यभिसन्धिमविद्वान् पूर्वपक्षी दूषयति नातीतेति सूत्रम् ॥ यदुक्तं सिद्धान्तिना पूर्वस्मिन् सूत्रे तन्न, यतो ह्यविद्यमानेऽप्यर्थे कारकशब्दः प्रयुज्यत इत्यर्थः।

सूत्रार्थं व्याचष्टे अतीत इति। अविद्यमान इति यद्यपि सूत्रे नोक्तं तथाऽपि भाष्यकारेण योजितं वेदितव्यम्। भविष्यत्यर्थे कारकप्रयोगमुदाहरति पुत्र इति। अत्र त्रिषूदाहरणेषु पुत्रेऽनागत एव यथा-

(भा०) शोचति–भिन्नस्य कुम्भस्य कपालानि–अजाताः पुत्राः पितरं तापयन्तीति–बहुलं भाक्ताः प्रयोगा दृश्यन्ते।

का पुनरियं भक्तिः?

आनन्तर्यं भक्तिः। आनन्तर्यसामर्थ्यादुपमृद्य प्रादुर्भावार्थः–प्रादुर्भविष्यन्नङ्कुर उपमृद्नातीति भाक्तं कर्तृत्वमिति"॥ १६॥

---

(ख०) क्रमं कर्तृ–कर्म–सम्बन्धकारकशब्दा प्रयुक्ताः। अतीतेऽर्थे कारकप्रयोगमुदाहरति अभूदिति। अत्र त्रिषूदाहरणेष्वतीत एव घटे कर्तृकर्मसम्बधकारकशब्दाः प्रयुक्ताः। पुत्रस्य नाम करोति–भिन्नस्य कुम्भस्य कपालानीत्युभयत्र यद्यपि न साक्षात्कारकशब्दस्तथापि षष्ठ्या सम्बन्धाभिधानात् तस्य क्रियागर्भत्वात् क्रियायाश्च कारकानान्तरीयकत्वात् पारम्पर्येण कारकशब्दता द्रष्टव्या॥ अविद्यमानेऽर्थे कारकशब्दप्रयोगमुदाहरति अजाता इति। यस्य पुत्रो न जातस्तस्याविद्यमान एव पुत्रो दुःखजनक इति भावः। भाक्ता इति लाक्षणिका इत्यर्थः। यथैतेषु प्रयोगेष्वविद्यमान एवार्थे कारकाः प्रयुक्तास्तथैव प्रादुर्भावात् प्रागविद्यमानमपि ( अङ्कुरम् ) जनिष्यमाणमेव बीजमुपमृद्नातीति प्रयोगो युज्यत एव। यद्यप्यविद्यमाने वस्तुनि साक्षात्कारकप्रयोगो न युज्यते तथाऽप्युक्तदृष्टान्तबलेन भाक्त एवायं प्रयोगः स्वीकर्त्तुं योग्य एवेति न कश्चिद् व्याघात इत्याशयः॥

ननु भाक्तप्रयोगे सर्वत्र सादृश्यादि किञ्चिन्मूलमपेक्ष्यते प्रकृते किन्तन्मूलमिति पृच्छति का पुनरिति।

तत्रोत्तरम् आनन्तर्यमिति। तदेव विशदयति आनन्तर्यसामर्थ्यादिति। अङ्कुरमुपमृद्य प्रादुर्भवतीत्यस्यायमेवार्थो यत् प्रादुर्भविष्यन्नङ्कुरो बीजमुपमृद्नातीति–अत्र चाविद्यमानस्याप्यङ्कुरस्य कर्तृत्वं भाक्तमेव तत्र च मूलं बीजनाशादनन्तरमेवाङ्कुर उत्पद्यत इत्यानन्तर्यमेवेति भावः॥१६॥

( सू० ) न विनष्टेभ्योऽनिष्पत्तेः ॥ १७ ॥

( भा० ) न विनष्टाद्बीजादङ्कुर उत्पद्यते इति। तस्मान्नाभावाद्भावोत्पत्तिरिति ॥ १७ ॥

( सू० ) क्रमनिर्देशादप्रतिषेधः ॥ १८ ॥

( भा० ) उपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः। स खल्वभावाद्भावोत्पत्तेर्हेतुर्निर्दिश्यते। स च न प्रतिषिध्यते इति। व्याहतव्यूहानामवयवानां पूर्वव्यूहनिवृत्तौ व्यूहान्तराद् द्रव्यनिष्प-

---

(ख०)परोक्तं परिहरति न विनष्टेभ्य इति सूत्रम्। यदुक्तमभावाद्भावोत्पत्तिरिति, तन्न। कुतः? यतो विनष्टेभ्यो बीजेभ्यो नैवोत्पद्यतेऽङ्कुरमित्यर्थः ॥

सूत्रं व्याचष्टे न विनष्टादिति। बीजाविनाशश्चेदङ्कुरोत्पादहेतुः, अथ विनष्टे बीजे तदवयवेषु परस्परविच्छिन्नेषु-असति तेषां व्यूहान्तरे कस्मादङ्कुरो न भवति—सति तु तेषां व्यूहो भवति। तस्माद्विनष्टेभ्यो बीजेभ्योऽङ्कुरानुत्पत्तेरसति व्यूहे न बीजाविनाशः कारणमिति सूत्रार्थः ॥ १७ ॥

परोक्तौ यत्किञ्चिदभ्युपगमार्हं तदभ्युगच्छन्नाह क्रमनिर्देशादिति सूत्रम्। 'अप्रतिषेधः' तावन्मात्रस्य परोक्तस्येति शेषः।

सूत्रार्थं व्याचष्टे उपमर्देति। सूत्रस्थक्रमपदस्यार्थमाह पौर्वेति। निर्दिश्यत इति परेणेति शेषः। ननु यद्ययं क्रमो न प्रतिषिध्यते स एव च क्रमोऽस्माभिरभावाद्भावोत्पत्तिसाधकतयोपन्यस्तः ततः किमिति साधनं स्वीकृत्य तत्साध्यन्न स्वीकरोषीत्यत आह व्याहतेति। बीजोपमर्दाङ्कुरोत्पत्त्योर्यः पौर्वापर्यक्रमः स न प्रतिषिध्यते किन्तु तस्य क्रमस्याभावाद्भावोत्पत्तिसाधनत्वम्प्रतिषिध्यत एव। यतोऽत्र बीजस्यानुवृत्तिर्भवत्येव केवलं तस्यैकमवयवव्यूहं नश्यति अपरं च व्यूहमुत्पद्यते अस्मादेव च व्यूहान्तरात् अङ्कुरमुत्पद्यते एवं च सत

(भा०)त्तिर्नाभावात् बीजावयवाः कुतश्चिन्निमित्तात्प्रादुर्भूतक्रियाः पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते । व्यूहान्तरादङ्कुर उत्पद्यते । दृश्यन्ते खल्ववयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः । न चानिवृत्ते पूर्वव्यूहे बीजावयवानां शक्यं व्यूहान्तरेण भवितुमित्युपमर्दप्रादुर्भावयोः पौर्वापर्यनियमः क्रमः । तस्मान्नाभावाद्भावोत्पत्तिरिति । न चान्यद्बीजावयवेभ्योऽङ्कुरोत्पत्तिकारणमित्युपपद्यते बीजोपादाननियम इति ॥ १८ ॥

---

(ख०)एव बीजादङ्कुरोत्पत्तिर्नासत इत्याशयः । अनन्यप्रयुक्तं ह्यानन्तर्यं कार्यकारणभावसाधनम्-इह त्वानन्तर्यं व्यूहान्तरप्रयुक्तमेवेति न तदभावस्य कारणत्वं गमयितुमर्हतीति हृदयम् । बीजादङ्कुरोत्पत्तिप्रकारं वर्णयति बीजावयवा इति । न खल्वयमस्माकं तर्क एवापि तु प्रत्यक्षमेवात्र प्रमाणमिति दर्शयति दृश्यन्त इति । ननु परोक्तः क्रमोऽपि कस्मान्न प्रतिषिध्यत इत्यत आह नचेति । बीजावयवव्यूहान्तरादङ्कुरोत्पत्तिरिति स्वीकृतम् एकस्यावयवव्यूहस्य नाशानन्तरमेवापरस्य व्यूहस्य सम्भवः अत उभयोर्व्यूहयोः क्रमोऽवश्यमेवाभ्युपगन्तव्य इत्यर्थः । उपसंहरति तस्मादिति । ननु किमुपादानकमङ्कुरोत्पादानमित्यत आह न चान्यदिति । बीजावयवानामङ्कुरोपादानत्वमवर्जनीयमिति दृष्टम्-ततश्च बीजोपादानकत्वमङ्कुरस्याशक्यप्रत्याख्यानमित्यर्थः ॥ १८ ॥

अत्र प्रकरणे वार्त्तिकतात्पर्ययोर्मतभेदो दृश्यते । जगत ईश्वरकर्तृकत्वसाधनपरमिदमिति वार्तिकम्-वेदान्त्यभिमतेश्वरोप दानकारणत्वनिराकरणपरमिति तात्पर्यम् ॥ प्रावादुकानां दृष्टयः प्रदर्श्यन्त इति भाष्यावतरणिकां विभाव्य तात्पर्यव्याख्यानमेव सम्यक् प्रतिभाति न्यायदर्शनप्राणभूतस्येश्वरकर्तृकत्वस्य प्रावादुकदृष्ट्यभिधानासम्भवात् ॥ किन्तु कुत्राप्यन्यत्र सूत्रकारेणेश्वरकर्तृकत्वं जगतो नैवोपपादितमिति

( ५ ) ईश्वरोपादानताप्रकरणम् ।

( भा० ) अथापर आह—

( सू० ) ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात् ॥१९॥

(ख०)विभाव्यैव वार्त्तिककृत उक्तावतरणिकाभाष्यव्याख्यानावसर उक्तवन्तः'अत्र कानिचिद् दर्शनानि प्रतिषिध्यन्ते कानिचिदभ्युपगम्यन्ते'इति। अभ्युपगम्यते त्विदमेवेश्वरकर्तृकत्वदर्शनं तन्मतेनेति विचारणीयम् ॥ ईश्वरकर्तृकत्वस्य न्यायदर्शनप्राणभूतत्वाद्वार्त्तिककारीयमेव व्याख्यानमत्र प्रधानतयोपन्यस्यते । किन्तु तात्पर्यकृतो व्याख्यानमेव सूत्रभाष्याक्षरानुकूलमिति तदपि नोपेक्षणीयमिति तदपि लिख्यते ॥ एवं च ईश्वरः कारणमिति सूत्रे ( १९ ) सिद्धान्तस्यैवोपक्रमः-तत्राक्षेपः न पुरुषकर्मेति सूत्रे ( २० )-तत्परिहारस्तत्कारित्वादिति सूत्रे ( २१ ) इति वार्तिकव्याख्यानम् । ईश्वरः कारणमित्यत्र सूत्रे ( १६ ) वेदान्तिकृतेश्वरोपादानकारणत्वपूर्वपक्षः—न पुरुषकर्मेति सूत्रे ( २० ) पूर्वपक्षभूतवेदान्त्यभिमतोपादानकारणत्वानपेक्षनिमित्तकारणत्वनिरासः—तत्कारितत्वादिति सूत्रे ( २१ ) ईश्वरस्य निमित्तकारणत्वसिद्धान्तोपन्यासः इति तात्पर्यव्याख्यानमिति विवेचनीयम्। अत्र प्रसङ्गे ईश्वरस्य निमित्तकारणत्वं प्राचीनतमन्यायाचार्याणामभिमतं न वेत्येतदपि विचारमर्हति। तृतीयाध्यायद्वितीयाह्निकगत ६६ सूत्रवार्त्तिके सर्गादेरनभ्युपगमादित्युक्तम्—तदेव पुनरत्रत्य २१ सूत्रवार्त्तिके । एवं सर्गादेरनभ्युपगमात् सर्गस्य निमित्तकारणस्य क्वोपयोगः । तथा चेश्वरः केवलं नियन्तैवेति न्यायमतं प्रतिभाति । भाष्यकारोऽप्यग्रे ईश्वरो द्रष्टा बोद्धा सर्वज्ञातेत्येवोक्तवान् न पुनः कर्ता स्रष्टा वेति ॥

ईश्वरकर्तृकत्वसिद्धान्तोपन्यासमवतारयति अथापर इति । न परः 'अपर.' स्वयूथ्यो नैयायिक इति यावत्-इति वार्त्तिकाभिमतं व्याख्यानम्।

( भा० ) पुरुषोऽयं समीहमानो नावश्यं समीहाफलं प्राप्नोति । तेनानुमीयते-पराधीनं पुरुषस्य कर्मफलाराधनमिति । यदधीनं स ईश्वरः । तस्मादीश्वरः कारणमिति ॥ १९ ॥

( सू० ) "न, पुरुषकर्माभावे फलानिष्पत्तेः" ॥ २० ॥

---

(ख०) तात्पर्यव्याख्याने त्वीश्वरोपादानवादी वेदान्त्येव अपरः । सिद्धान्तेनैवोपक्रमते ईश्वर इति । ईश्वर एव निरपेक्षः शरीरादेः निमित्तकारणम् ।कुतः। पुरुषकर्मणां प्रयत्नानां बहुधा नैष्फल्यदर्शनात् ॥

सूत्रं व्याचष्टे पुरुषोऽयमिति । 'समीहा' प्रयत्नः ।

तात्पर्यपरिशुद्धिप्रकाशकाराणां तु मतेऽत्र सूत्रे वेदान्तिनाम्पूर्वपक्ष एवोद्भावितः। स चैवमुल्लसति-माभूदयं नामरूपप्रपञ्चः शून्यतोपादानोऽपि तु ब्रह्मोपादानो भविष्यति । ब्रह्मैव प्रपञ्चरूपेण परिणमते-मृत्तिकेव घटशरावादिभावेन । न चैवं नित्यत्वव्याघातः, परिणामेऽपि तत्त्वानपायात् तल्लक्षणत्वाच्च नित्यतायाः । एतदेकं दर्शनम्परिणामवादिनाम् । अपरं च विवर्त्तवादिनां यथा-ब्रह्मैवानाद्यविद्योपधानभेदान्नामरूपप्रपञ्चभेदेन विवर्त्तते-मुखमिवैकमनेकमणिकृपाणादर्शभेदान्नैकविधप्रतिबिम्बभेदेनेति ॥ तदेतद्दर्शनद्वयमनेन सूत्रेण सूचितम् । 'ईश्वरो' ब्रह्म, ईशनायोगात् । 'ईशना' च चेतनाशक्तिः क्रियाशक्तिः । सा चास्ति ब्रह्मणीति ब्रह्म 'ईश्वरः' । स एव 'कारणं' जगतः । न चाभावो वा प्रधानं वा परमाणवो वा चेतयन्ते । ननु जीवा एव चेतनास्तत्कर्मनिबन्धनो नामरूपप्रपञ्चो भविष्यति—कृतमत्र भगवतेश्वरेणेत्यत आह-पुरुषकर्माफल्यदर्शनात् ।पुरुषश्चेच्चेतयते नैव निष्फलं कर्मारभेत । निष्फलं विद्वान् प्रवर्त्तमानः कथं चेतनो नाम । तस्मात्पुरुषकर्माफल्यदर्शनादीश्वर एवोपादानमिति सर्वमवदातम्-इति पूर्वपक्षः ॥ १९ ॥

(वार्तिकव्याख्यानेन) सिद्धान्तमाक्षिपति न पुरुषकर्मेति-ईश्वरस्य

( भा० ) "ईश्वराधीना चेत्फलनिष्पत्तिः स्यादपि तर्हि पुरुषस्य समीहामन्तरेण फलं निष्पद्येतेति" ॥ २० ॥

( सू० ) तत्कारितत्वादहेतुः ॥ २१ ॥

(ख०)निमित्तकारणत्वं 'न'कुतः-यतः पुरुषप्रयत्नाभावे किमपि फलं न निष्पद्यत इत्यर्थः॥सूत्रं व्याचष्टे ईश्वरेति। यदि निरपेक्ष एवेश्वरः कारणं तर्हि पुरुषप्रयत्नमन्तरेणापि कर्मनिष्पत्तिसम्भवः। ततश्च कर्मलोपोऽनिर्मोक्षश्च-ईश्वरस्यैकरूपस्यैकरूपाया एव क्रियायाः सम्भवात्। अथेश्वरः कारणभेदानुविधानेन कार्यं निर्वर्त्तयति-यदपेक्षते तन्न करोतीति प्राप्तम्। एवं कर्मापेक्षश्चेदीश्वरो जगदुत्पत्तिकारणं स्यात् कर्मणीश्वरो नेश्वरः स्यादित्याक्षेपाशयः॥

तात्पर्यव्याख्यानं यथा-न तावन्मृत्तिकेव नामरूपप्रपञ्चरूपेण ब्रह्म परिणमते। तद्धि सर्वात्मना वा परिणमते एकदेशेन वा। तत्र सर्वात्मना परिणामे तत्त्वविघातादनित्यत्वम्। एकदेशेन परिणामे सावयवत्वात्तदवनित्यत्वम्। न च निरंशे स्वसंवेदनप्रत्यक्षे ब्रह्मणि तत्त्वरूपाग्रहः सामान्याग्रहो वा भवति। तस्मादीश्वरो जगद्भेदेन परिणमते विवर्त्तते वेत्ययुक्तम्॥ निमित्तं तु स्यादीश्वरो जगतः। स चेदनपेक्ष एव जगत्कारणमित्युच्येत तत्रेदमुपतिष्ठते-न पुरुषकर्माभाव इति सूत्रम्॥ २०॥

आक्षेपं परिहरति (वार्त्तिकव्याख्याने)-तदेवमीश्वरोपादानत्वं ब्रह्मविवर्त्तत्वं च निरपेक्षेश्वरनिमित्तत्वं च प्रत्याख्यायाभिमतं पक्षं गृह्णाति (तात्पर्यव्याख्याने)-तत्कारित्वादिति सूत्रम्॥ सिद्धान्तोपवर्णनपरमिदमित्यत्र सर्वेषां सम्मतिः॥ 'ईश्वरकारितत्वात् पुरुषकारस्य तत्सहाय एवेश्वरो जगतो निमित्तकारणम्'-इत्यस्य पक्षस्य निराकरणे 'पुरुषकर्माभावे फलानिष्पत्तेः' इति 'अहेतुः' असाधनमिति सूत्रार्थः।

(भा०) पुरुषकारमीश्वरोऽनुगृह्णाति । फलाय पुरुषस्य यतमानस्येश्वरः फलं सम्पादयतीति । यदा न सम्पादयति तदा पुरुषकर्माफलं भवतीति । तस्मादीश्वरकारितत्वादहेतुः—'पुरुषकर्माभावे फलानिष्पत्ते'रिति ।

गुणविशिष्टमात्मान्तरमीश्वरः । तस्यात्मकल्पात् कल्पान्त-

---

(ख०) सूत्रं व्याचष्टे पुरुषकारमिति। 'पुरुषकारमिति' पुरुषस्य प्रयत्नमिति यावत् । अनुगृह्णातीति—यत्कर्म यथाभूतं यस्य कर्मणो यदा विपाककालस्तत् तथा तदा विनियुङ्क्ते इत्यर्थः । तदेव स्पष्टयति फलायेति । कथं तर्हि पुरुषकर्माफल्यमित्यत आह यदेति । ईश्वरानुग्रहाभाव एव कर्मनैष्फल्ये हेतुरित्यर्थः । सूत्रार्थमुपसंहरति तस्मादिति । परमाणूपादानस्य जगतः पुरुषकर्मापेक्ष ईश्वरो निमित्तम् । यच्च तेनापेक्षणीयं पुरुषकर्म तदपीश्वरनिमित्तकमेव । न च यदपेक्षते तत्तस्यानिमित्तम्—वास्यादेस्तक्षसहकारिणस्तक्षनिमित्तकत्वदर्शनात् । तस्मादीश्वरकारितत्वात्पुरुषकारस्य तत्सहाय ईश्वरो निमित्तकारणं जगत इत्यस्य पक्षस्य निराकरणे 'पुरुषकर्माभावे फलानिष्पत्ते'रित्यहेतुः-निरपेक्षेश्वरनिमित्तत्वनिराकरणे तु भवेदेवायं हेतुरिति निर्गलितोऽर्थः ॥

ईश्वरनिमित्तकत्वं जगतो विचार्याधुना 'ईश्वर एव क' इत्यपेक्षायामीश्वरं परिचाययति-गुणविशिष्टमिति । जीवात्मभ्योऽन्य इत्यात्मान्तरम् परमात्मेति यावत्—स च गुणैर्विशिष्टः । ते च गुणाः सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागबुद्धय एवेति वार्त्तिकम् । तत्र तात्पर्यम्—बुद्धिवदिच्छाप्रयत्नावप्यस्य नित्यौ तत्कर्तृत्वसाधनान्तर्गतौ मन्तव्यौ, ज्ञानचिकीर्षाप्रयत्नसमवायलक्षणत्वात्कर्तृत्वस्येति ॥ नन्वात्मानः सर्वेऽनित्यज्ञानयोगिन एव दृष्टास्तद्वैलक्षण्येन नित्यज्ञानयोगी परमात्मा नात्मजातीयो भवितुमर्हतीत्यत आह तस्यात्मेति । 'आत्मकल्पात्'

(भा०)रानुपपत्तिः।अधर्ममिथ्याज्ञानप्रमादहान्या धर्मज्ञानसमाधिसम्पदा च विशिष्टमात्मान्तरमीश्वरः। तस्य च धर्मसमाधिफलमणिमाद्यष्टविधमैश्वर्यम्। सङ्कल्पानुविधायी चास्य धर्मः। प्रत्यात्मवृत्तीन् धर्माधर्मसञ्चयान् पृथिव्यादीनि च भूतानि प्रवर्तयति।

---

(सू०)आत्मजातीयादिति यावत्। इदमत्राकूतम्। यद्यप्यात्मान्तराण्यनित्यज्ञानयोगीनि—अयं च नित्यबुद्ध्यादियुक्तः—तथाऽप्यात्मजातीय एव बुद्ध्यादिगुणयोगित्वात्। अन्यथा तोयादिपरमाणूनामतोयादित्वप्रसङ्गो नित्यरूपादियोगात्॥ ननु सामान्यत आत्मकोटावेव किमित्ययं न निवेश्यते—किमर्थं चास्यात्मभ्योऽन्यत्वं वर्ण्यत इत्यत आह—अधर्मेति। आत्मत्वसामान्येऽपि ईश्वरस्य महान् भेदो लक्ष्यतेऽस्य गुणानात्मान्तरगुणेभ्यः। तथाहि जीवात्मस्वधर्मोऽज्ञानं प्रमादश्च-एतेषां तु परमात्मनीश्वरे'हानिः'अभावः प्रत्युतास्मिन् धर्मो-ज्ञानं-समाधिश्चेत्येतेषां गुणानां सम्पत्तिर्लक्ष्यते। एतदेव च वैशिष्ट्यम्-वैलक्षण्यम्-अस्य जीवात्मभ्य इत्यर्थः॥ ईश्वरे धर्मादिगुणयोगम्प्रदर्शयति तस्य चेति। अणिमा—महिमा—लघिमा—गरिमा—प्राकाम्यम्—ईशित्वम्—प्राप्ति-र्वशित्वमिति सिद्ध्यष्टकमीश्वरस्य तत्कारणीभूतधर्मस्यास्तित्वं सूचयतीत्यर्थः। अभ्युपेत्येश्वरे धर्ममेतदुक्तं भाष्यकृता—परमार्थतस्त्वीश्वरस्य धर्मसद्भावे प्रमाणं नास्ति—नित्याभ्यामेव ज्ञानक्रियाशक्तिभ्यां सकलकार्योत्पत्तिसिद्धेरिति वार्तिकतात्पर्ययोः स्पष्टम्। नन्वीश्वरस्य कर्मानुष्ठानाभावात् कुतोऽस्य धर्मः—तथा चाणिमादिकमस्यैश्वर्यं कार्यरूपं विनैव कर्मणेत्यकृताभ्यागमप्रसङ्ग इत्यत आह सङ्कल्पेति। तदेव विशदयति प्रत्यात्मेति। मा भूद्बाह्यानुष्ठानमीश्वरस्य—सङ्कल्पलक्षणं जीवात्मपृथिव्यादिप्रवर्तनरूपं चानुष्ठानं तस्य भवत्येव तज्जनितस्यैव धर्मस्य फलमस्यैश्वर्यादिकम्भवतीति नाकृताभ्यागमप्रसङ्गः। किमाया-

(भा०)एवं च स्वकृताभ्यागमस्यालोपेन निर्माणप्राकाम्यमीश्वरस्य स्वकृतकर्मफलं वेदितव्यम् ।

आप्तकल्पश्चायम् । यथा पिताऽपत्यानां तथा पितृभूत ईश्वरो भूतानाम् ।

न चात्मकल्पादन्यः कल्पः सम्भवति । न तावदस्य बुद्धिं विना कश्चिद्धर्मो लिङ्गभूतः शक्य उपपादयितुम् ।

---

(ख०)तमनेनेश्वरस्य जगत्कर्तृत्व इत्यत आह निर्माणप्राकाम्यमिति।जगन्निर्माणशक्तिरप्यस्य धर्मफलमेवेत्यर्थः। ईश्वरस्य ज्ञानक्रियाशक्ती नित्ये इत्यैश्वर्यं नित्यमणिमादिकं त्वनित्यम्-तदभिप्रायं च भाष्यस्य धर्मफलत्वाभिधानम् । अत एवैश्वर्यनित्यत्वे धर्मवैयर्थ्यन्तदनित्यत्वे तत्कारणकल्पनयाऽनवस्थेति चोद्यस्य नावकाशः । प्रत्यात्मवृत्तिधर्माधर्मसञ्चयाधिष्ठानं सङ्कल्पानुविधायिन ईश्वरधर्मस्य प्रयोजनम् ॥

ननु प्रयोजनं विना प्रेक्षावतां न प्रवृत्तिः—न च प्राप्तसकलप्राप्तव्यस्यास्ति प्रापणीयं किञ्चिदीश्वरस्य-तस्मात् कृतमस्य जगन्निर्माणेनेत्यत आह—आप्तकल्प इति । मा भूदस्य भगवतः स्वार्थः परानुग्रहार्थमेव प्रवर्त्तेत इत्यर्थः । उक्तमर्थं दृष्टान्तेन स्पष्टयति—यथा पितेति । यथा लोकेऽपि पिता बहुधा स्वार्थं विनैव-प्रत्युत स्वार्थहान्यापि पुत्रकल्याणाय प्रवर्तते तथैवायमीश्वरः स्वार्थं विनैव 'भूतानां' जीवानामनुग्रहायैव प्रवर्त्तेत इत्यर्थः ।

पूर्वमुक्तमेवेश्वरस्यात्मजातीयत्वं पुनर्द्रढयति न चात्मेति । आत्मजातीय एवेश्वरो नान्यजातीय इत्यर्थः। कथमेतदित्यत आह न तावदिति । बुद्धिरेवेश्वरस्य प्रधानभूतो गुणः—बुद्धिश्चात्माश्रयैव । तथा च यद्यप्यस्य बुद्धिर्नित्या आत्मान्तराणां चानित्या तथापि बुद्धिगुणयोगादात्मजातीय एवासौ नान्यजातीय इति सिद्धम् ॥ नायमर्थः

(भा० ) आगमाच्च द्रष्टा बोद्धा सर्वज्ञाता—ईश्वर इति । बुद्ध्यादिभिश्चात्मलिङ्गैर्निरुपाख्यमीश्वरं प्रत्यक्षानुमानागमविषयातीतं कः शक्त उपपादयितुम् ।

स्वकृताभ्यागमलोपेन च प्रवर्तमानस्यास्य यदुक्तं—प्रतिषेधजातमकर्मनिमित्ते शरीरसर्गे—तत्सर्वं प्रसज्यते इति ॥२१॥

---

(ख०)केवलं लिङ्गगम्योऽपि त्वागमलभ्योऽपीत्याह आगमादिति । द्रष्टृत्वं बोद्धृत्वं सर्वज्ञातृत्वं चेश्वरस्य बुद्धिगुणयोगमेव सूचयतीत्यर्थः। विपक्षे बाधकमाह—बुद्ध्यादिभिरिति । यद्ययं बुद्ध्यादिगुणयोगैर्नोपाख्यायेत प्रमाणाभावादनुपपन्न एव स्यादित्यर्थः ।

स्यादेतत् यदि कारुण्यादीश्वरो जगन्निर्माणे प्रवर्त्तेत सुखिनमेव सृजेन्न दुःखिनम् । न च क्षेत्रगतधर्माधर्मसहकारितया निर्माणवैचित्र्यं वाच्यम्, सुखिदुःख्यादिभेदेन जगद्वैचित्र्यदर्शनान्नानुकम्पाप्रयुक्त ईश्वरः करोतीत्यत आह स्वकृताभ्यागमेति । अयमभिसन्धिः—कारुणिकोऽप्ययमात्मान्तरातिशायिमहिमाऽपि न वस्तूनां सामर्थ्यमन्यथाकर्त्तुं पारयति । तस्मादधर्मेणोत्पत्तिमता नेश्वरप्रभावादपि नित्येन भवितुं युक्तम् । न च स्वफलविरोधिना फलमप्रदाय विनष्टुमपि शक्यम् । अतः क्षेत्रज्ञानां नियतिमलङ्घयतेश्वरेण नाधर्मः शक्योऽनधिष्ठातुम् । तस्मात् कारुणिकोऽप्ययं वस्तुस्वभावमनुविधीयमानो धर्माधर्मसहकारी जगद्वैचित्र्यं विधत्ते इति सर्वमधिकृत्याह—स्वकृताभ्यागमलोपेन प्रवर्त्तमानस्येति। पुरुषैर्यत् कृतं तत्फलाभ्यागमलोपेन प्रवर्त्तमानस्येत्यर्थः । यदि तथाप्रवृत्तिरीश्वरः स्यात्तर्हि अकर्मनिमित्तसर्गपक्षे ये दोषा उक्तास्तृतीयाध्यायाद्याह्निकस्यान्ते ते सर्व एव प्रसज्येरन्नित्यर्थः ॥ २१ ॥

इदानीं व्यक्ताद् व्यक्तनिष्पत्तिं निराकर्त्तुमाकास्मिकवादं गुडजि-

(६) आकस्मिकत्वप्रकरणम् ।

( भा० ) अपर इदानीमाह—

( सू० ) "अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात् ॥ २२ ॥

( भा० ) "अनिमित्ता शरीराद्युत्पत्तिः । कस्मात् ? कण्टकतैक्ष्ण्यादिदर्शनात् । यथा कण्टकस्य तैक्ष्ण्यम्, पर्वतधातूनां चित्रता, ग्राव्णां श्लक्ष्णता, निर्निमित्तं चोपादानवच्च दृष्टं तथा शरीरादिसर्गोऽपीति" ॥ २२ ॥

---

(ख०)ह्निकया शरीरादौ निमित्तकारणनिराकरणमुखेन चार्वाक उपतिष्ठत इति परिशुद्धिकृतः। अत्र कारणमात्रनिरासे तात्पर्यमिति वर्धमानोपाध्यायाः॥यदि कार्याणामाकस्मिकत्वं तदा न परमाण्वादीनामुपादानत्वं न वेश्वरस्य निमित्तत्वम्–अत आकस्मिकत्वनिराकरणप्रकरणमारभते. इति वृत्तिकृतः ।

आकस्मिकवादमवतारयति अपर इति । अपरोऽत्र चार्वाकः ।

आकस्मिकवादमुपन्यस्यति अनिमित्तत इति सूत्रम् । भावानामुत्पत्तिः 'अनिमित्ततः' अनिमित्तैव (प्रथमास्थाने सार्वविभक्तिकस्तसिल्) भवति–यथा दृश्यते कण्टकतैक्ष्ण्यादावित्यर्थः ।

सूत्रार्थं विवृणोति–अनिमित्तेति । निमित्तकारणं विनैवेत्यर्थः । तैक्ष्ण्यादीतिसूत्रगतादिपदसूचितान्यर्थान्तराणि दर्शयति पर्वतेति । निर्निमित्तमिति । निमित्तकारणं विनैवैतान्युत्पद्यन्ते इत्यर्थः । निमित्तकारणवत् किमेतेषामुपादानकारणमपि नास्तीति–नेत्याह उपादानवदिति । यद्यप्येतेषामुपादानकारणमस्ति तथाऽपि निमित्तकारणं नास्तीत्यर्थः । दृष्टान्तं दार्ष्टान्तिके योजयति तथा शरीरेति । कण्टकादीनां संस्थानभेदवतां निमित्तादर्शनेनानिमित्ततामन्वानस्तेनैव दृष्टान्तेन शरीरादीनामपि संस्थानवतामनिमित्ततां मन्यते पूर्वपक्षी ॥ २२ ॥

( सू० ) अनिमित्तनिमित्तत्वान्नानिमित्ततः ॥२३॥

(भा०) अनिमित्ततो भावोत्पत्तिरित्युच्यते। यतश्चोत्पद्यते तन्निमित्तम्। अनिमित्तस्य निमित्तत्वान्नानिमित्ता भावोत्पत्तिरिति ॥ २३ ॥

(सू०)निमित्तानिमित्तयोरर्थान्तरभावादप्रतिषेधः॥२४॥

( भा० ) अन्याद्धि निमित्तमन्यच्च निमित्तप्रत्याख्यानम्। न च प्रत्याख्यानमेव प्रत्याख्येयम्। यथाऽनुदकः कमण्डलुरिति नोदकप्रतिषेध उदकं भवतीति। स खल्वयं वादोऽकर्मनिमित्तः शरीरादिसर्ग इत्येतस्मान्न भिद्यते। अभेदात्तत्प्रतिषेधेनैव प्रतिषिद्धो वेदितव्य इति ॥ २४ ॥

---

(ख०)भ्रान्त एकदेशी पूर्वपक्षं दूषयति अनिमित्तनिमित्तत्वादिति सूत्रम्। अनिमित्ततो भावोत्पत्तिरित्यभ्युपगच्छन् भवान् अनिमित्तस्यैव तदुत्पत्तिनिमित्ततामभ्युपगच्छति। तथा चानिमित्ता भावोत्पत्तिरिति रिक्तं वच इत्यर्थः।

सूत्रार्थं विवृणोति अनिमित्तत इति। व्याख्यातार्थमेतत् ॥२३॥

एकदेशिदूषणं दूषयति निमित्तानिमित्तयोरिति सूत्रम्। तदर्थं विवृणोति अन्यद्धीति। अनिमित्तमेव निमित्तन्न भवितुमर्हतीत्यर्थः॥

आकस्मिकवादस्य दूषणं स्वयमेव भाष्यकार आह—स खल्वयमिति। तृतीयाध्यायान्तिमप्रकरणे योऽकर्मनिमित्तकशरीरसर्गवादो निराकृतस्तत्समानक्षेमत्वादाकस्मिकवादस्य तन्निरासेनैवायमपि निरस्तो मन्तव्य इत्यर्थः। अस्मादेव कारणात्सूत्रकारेणास्याकस्मिकवादस्य निरासे पृथक् प्रयत्नो न कृत इत्यपि सूचितम् ॥ २४ ॥

त्रयोविंशचतुर्विंशसूत्रयोर्व्याख्यानान्तरमप्युपन्यस्तं वृत्तिकृता। त-

(७) सर्वानित्यत्वनिराकरणप्रकरणम् ।

( भा० ) अन्ये तु मन्यन्ते—

( सू० ) "सर्वमनित्यमुत्पत्तिविनाशधर्मकत्वात्" ॥ २५ ॥

( भा० ) "किमनित्यं नाम ? यस्य कदाचिद् भावस्तदनित्यम् । उत्पत्तिधर्मकमनुत्पन्नं नास्ति, विनाशधर्मकं च विनष्टं

---

(ख०)यथा नव्यास्तु सूत्रद्वयीमेवं व्याचक्षते।द्वाविंशसूत्रगतमाक्षेपं समाधत्ते अनिमित्तेति ( सू० २३ )। 'अनिमित्तस्य' अनिमित्तत्वसाधकस्य 'निमित्तत्वात्' अनिमित्तत्वानुमितिजनकत्वात् 'अनिमित्तत' इति व्याहतम् । अनिमित्तत्वानुमितिजनकत्वानभ्युपगमेऽनिमित्तत्वं न सिध्यत इति । कण्टकतैक्ष्ण्यादिकम् नानिमित्तकम्—अदृष्टविशेषसहकृतैरणुभिस्तदुत्पादनादिति हृदयम् ॥ दोषान्तरमाह निमित्तेति सू० २४ । इदमत्र निमित्तमिदमनिमित्तमिति प्रतीत्या तयोर्भेदसिद्धेर्निमित्तप्रतिषेधो न युक्तः । इतरथा च सार्वलौकिकी प्रतीतिर्नोपपद्येतेति भावः॥२३-२४॥

कारणसामग्री किमनित्यानामेव पदार्थानां समुच्चयोऽथवा नित्यानामुत नित्यानित्यानामितीदानीं विचारणा । प्रथमद्वितीयपक्षयोरभिमतः प्रेत्यभावो न सिद्ध्यति। ततस्तौ निराकरणीयौ। तत्र प्रथमं निराकर्तुमिदं प्रकरणम् । न च क्षणभङ्गनिराकरणेनैवैतद्गतम्—स्थैर्यमाश्रित्य पुनरारम्भादिति परिशुद्धिकृतः ॥ सर्वस्यैवानित्यत्वे आत्मादेरपि नित्यत्वं न स्यादतः सर्वानित्यत्वनिराकरणप्रकरणमिति वृत्तिकृतः ॥

सर्वानित्यत्वपक्षमवतारयति—अन्ये त्विति ।

तत्र प्रमेयत्वं नित्यत्वव्याप्यं न वेति संशये पूर्वपक्षसूत्रम् सर्वमनित्यमिति ।

सूत्रार्थं व्याचक्षाणोऽनित्यपदार्थं पृच्छति किमनित्यमिति । तत्रोत्तरम्- यस्येति । तदेव विशदयति उत्पत्तीति । यद्वस्तूत्पत्तिशीलं तदु-

(भा०)नास्ति। किं पुनः सर्वम्? भौतिकं च शरीरादि अभौतिकं च बुद्ध्यादि। तदुभयमुत्पत्तिविनाशधर्मकं विज्ञायते। तस्मात्तत्सर्वमनित्यमिति" ॥ २५ ॥

( सू० ) नानित्यतानित्यत्वात् ॥ २६ ॥

( भा० ) यदि तावत्सर्वस्यानित्यता नित्या,—तन्नित्यत्वान्न सर्वमनित्यम्। अथानित्या,—तस्यामविद्यमानायां सर्वं नित्यमिति ॥ २६ ॥

---

(ख०)त्पत्तेः प्राक् नास्ति यच्च विनाशशीलं तद्विनाशादनन्तरं नास्ति। एवं च यदुत्पत्तिविनाशधर्मकं तदेव कदाचिदस्ति कदाचिन्नास्तीति। एवं पूर्वापरयोः कालयोरभावात् मध्ये च भावात् सिद्धं कदाचिद्भावलक्षणमनित्यत्वमुत्पत्तिविनाशधर्मकत्वादित्यर्थः॥ अनित्यपदार्थमुक्त्वा किन्तद्वस्तु यदनित्यमिति पृच्छति किम्पुनरिति। तत्रोत्तरम्-सर्वं भौतिकमिति। यत् किञ्चिदुत्पत्तिविनाशधर्मकं तत्सर्वमनित्यम्-भौतिकं शरीरादि सर्वं अभौतिकं च बुद्ध्यादि सर्वं उत्पत्तिविनाशधर्मकं—न च भौतिकाभौतिकयोरन्यत् किमप्यस्ति—तस्मात्सर्वमनित्यमेव। एवं च पृथिव्यादिपरमाणवो-ऽनित्याः भौतिकत्वात् शरीरवत्—आत्मा चानित्योऽभौतिकत्वात् बुद्धिवदिति पूर्वपक्षहृदयम् ॥ २५ ॥

पूर्वपक्षमेकदेशिमतेन परिहरति नानित्यतेति। यदुक्तं सर्वमनित्यमिति। तन्न, कुतः-अनित्यताया एव नित्यत्वादित्यर्थः।

सूत्रं व्याचष्टे यदि तावदिति। सर्वमनित्यमित्यस्यायमेवार्थो यत्सर्वस्यानित्यत्वं नित्यम्। एवं चानित्यत्वस्य नित्यत्वे सर्वमनित्यमिति व्याहतमनित्यत्वस्यापि सर्वपदाभिधेयान्तःपातित्वादित्याशयः॥ ननु सर्वस्यानित्यत्वेऽप्यनित्यत्वं न नित्यमित्यत आह—अथानित्येति। यद्यनित्यत्वं न नित्यं तर्हि न सर्वं नित्यमिति प्राप्तमित्यर्थः। उत्पत्ति-

(सू०) तदनित्यत्वमग्नेर्दाह्यं विनाश्यानुविनाशवत् ॥ २७ ॥

(भा०) तस्या अनित्यताया अप्यनित्यत्वम् । कथम् ? यथा अग्निर्दाह्यं विनाश्यानुविनश्यति एवं सर्वस्यानित्यता सर्वं विनाश्यानुविनश्यतीति ॥ २७ ॥

(सू०) नित्यस्याप्रत्याख्यानं यथोपलब्धि व्यवस्थानात् ॥ २८ ॥

(भा०) अयं खलु वादो नित्यं प्रत्याचष्टे । नित्यस्य च प्रत्याख्यानमनुपपन्नम् । कस्मात् ? यथोपलब्धि व्यवस्थानात् । यस्योत्पत्तिविनाशधर्मकत्वमुपलभ्यते प्रमाणतस्तदनित्यं, यस्य

---

(ख०) मत्त्वं न विनाशित्वसाधकम्—ध्वंसस्य नित्यत्वात्तत्र व्यभिचारादिति हृदयम् ॥ २६ ॥

एकदेशिमतं दूषयति तदनित्यत्वमिति सूत्रम् । सूत्रार्थं विवृणोति तस्या इति । अनित्यत्वमप्यनित्यमेव । पृच्छति कथमिति । उत्तरयति यथा अग्निरिति । यथाऽग्निर्वस्तूनि दग्ध्वा स्वयमपि शाम्यति तथैवानित्यत्वमपि सर्वं विनाश्य स्वयमपि नश्यत्येवेति नानित्यत्वस्य नित्यत्वमित्यर्थः ॥ २७ ॥

एकदेशिमतं निरस्य परमसिद्धान्तमुपक्रमते नित्यस्येति सूत्रम् । नित्यत्वस्य सर्वथा प्रत्याख्यानं न युक्तम्-कुतः—यथा यदुपलभ्यते तथैव तस्य नित्यत्वमनित्यत्वं व्यवस्थापनीयमित्यर्थः ।

सूत्रार्थं व्याचक्षाणः पूर्वपक्षमनुवदति अयं खल्विति । 'अयं वादः' सर्वानित्यत्ववादः सर्वं नित्यं प्रत्याचष्टे प्रतिषेधतीत्यर्थः ॥ तन्निराकरोति नित्यस्येति । नित्यत्वस्य सर्वथा निषेधो नोचितः । पृच्छति कस्मादिति । उत्तरयति यथोपलब्धीति । तदेव व्याचष्टे यस्येति । सर्वमनित्यमिति

(भा०) नोपलभ्यते तद्विपरीतम् । न च परमसूक्ष्माणां भूतानामाकाशकालदिगात्ममनसां तद्गुणानां च केषाञ्चित्सामान्यविशेषसमवायानां चोत्पत्तिविनाशधर्मकत्वं प्रमाणत उपलभ्यते । तस्मान्नित्यान्येतानीति ॥ २८ ॥

(८) सर्वनित्यत्वनिराकरणप्रकरणम् ।

( भा० ) अयमन्य एकान्तः—

( सू० ) "सर्वं नित्यं पञ्चभूतनित्यत्वात्" ॥२९॥

"भूतमात्रमिदं सर्वम् । तानि च नित्यानि—भूतोच्छेदानुपपत्तेरिति" ॥ २९ ॥

---

(ख०)नास्त्येकान्तः ।यत् किलोत्पत्तिविनाशशीलं यथार्थत उपलभ्यते तदेवानित्यमिति मन्तव्यम्–यच्च न तथोपलभ्यते तस्यानित्यत्वन्नैवेत्यध्यवसेयम् । विवेकानियममुपन्यस्य तस्योपयोगमाह न च परमेति।परमाण्वादीनामुत्पत्तिविनाशधर्मकत्वन्नैव यथार्थत उपलभ्यते–तस्मादेतानि नित्यान्येवेति मन्तव्यमित्यर्थः ॥ सर्वस्य पक्षत्वे परमाण्वादिषु हेत्वभावेन भागासिद्धिरुत्पत्तिविनाशधर्मकत्वादित्यस्य हेतोः- कस्यचित्पक्षत्वे च सिद्धसाधनमेवेति ॥ २८ ॥

सर्वनित्यत्वेऽपि न प्रेत्यभावसिद्धिरिति तन्निराकरणप्रकरणारम्भः।

सर्वनित्यतावादमवतारयति अयमिति । एकान्त इति सर्वपदार्थपक्षकप्रतिज्ञावाक्यमित्यर्थः ।

सर्वनित्यतावादमुपन्यस्यति सर्वं नित्यमिति सूत्रम् । सूत्रार्थमाह भूतमात्रमिति । पञ्चभूतात्मकं खल्वेतद् गोघटादिकार्यमुपलभ्यते–व्यपदिशन्ति हि 'मृद्घटो मृच्छरीरमिति' । भूतानि च नित्यानि, तेषामुच्छेदस्य नैयायिकैरनभ्युपगमात् । तेन भूतात्मनां गोघटादीनां नित्यतेति पूर्वपक्षार्थः ॥ २९ ॥

( सू० ) नोत्पत्तिविनाशकारणोपलब्धेः ॥ ३० ॥

( भा० ) उत्पत्तिकारणं चोपलभ्यते विनाशकारणं च । तत् सर्वनित्यत्वे व्याहन्यते इति ॥ ३० ॥

( सू० ) "तल्लक्षणावरोधादप्रतिषेधः" ॥ ३१ ॥

(भा०) "यस्योत्पत्तिविनाशकारणमुपलभ्यते इति मन्यसे,—न तद्भूतलक्षणहीनमर्थान्तरं गृह्यते । भूतलक्षणावरोधाद् भूतमात्रमिदमित्ययुक्तोऽयं प्रतिषेध इति" ॥ ३१ ॥

( सू० ) नोत्पत्तितत्कारणोपलब्धेः ॥ ३२ ॥

---

(ख०) सिद्धान्तमाह नोत्पत्तीति सूत्रम् । यदुक्तं तन्न—कुतः—यतो बहूनां भूतानामुत्पत्तिविनाशकारणान्युपलभ्यन्त इत्यर्थः ।

सूत्रार्थमाह-उत्पत्तीति । भूतेभ्यो भौतिकानि भिन्नानि । न हि परमसूक्ष्माः परमाणवो गोघटादयः । परमाणुवत्तेषामतीन्द्रियत्वे सर्वाग्रहणप्रसङ्गादित्युक्तं द्वितीयाध्याये । तस्माद् ग्रहणाग्रहणविरुद्धधर्मयोगादन्ये भौतिका भूतेभ्यः । तथाच तेषामुत्पत्तिविनाशकारणोपलब्धेर्न नित्यत्वं भूतनित्यत्वेऽपीति सिद्धान्तार्थः ॥ ३० ॥

भूतसारूप्येण तादात्म्यम्मन्यमानः पुनरपि पूर्वपक्षवाद्याह—तल्लक्षणेति सूत्रम् । 'तल्लक्षणावरोधात्' भूतलक्षणाक्रान्तत्वाद् गोघटादीनाम्—'भूतानां च नित्यत्वात्—'अप्रतिषेधः' गोघटादिनित्यत्वस्येत्यर्थः ।

सूत्रार्थं व्याचक्षाणः पूर्वसूत्रोक्तं स्मारयति यस्योत्पत्तीति । यस्योत्पत्तिविनाशकारणमुपलभ्यते तदनित्यमित्युक्तं तच्च वस्तु भूतलक्षणलक्षितमेव लक्ष्यते—एवं च भूतलक्षणलक्षितत्वात् भूतमेव तदिति भूतनित्यतावत्तस्यापि नित्यता स्वीकार्यैव भवति न प्रतिषेध्येत्यर्थः ॥ ३१ ॥

पूर्वपक्षिण उक्तिं परिहरति नोत्पत्तीति सूत्रम् । यदुक्तं तन्न—कुतः-

( भा० ) कारणसमानगुणस्योत्पत्तिः कारणं चोपलभ्यते । न चैतदुभयं नित्यविषयम् । न चोत्पत्तितत्कारणोपलब्धिः शक्या प्रत्याख्यातुम् । न चाविषया काचिदुपलब्धिः । उपलब्धिसामर्थ्यात्कारणेन समानगुणं कार्यमुत्पद्यत इत्यनुमीयते । स खलूपलब्धेर्विषय इति ।

एवं च तल्लक्षणावरोधोपपत्तिरिति ।

---

(ख०) यतो गोघटादीनामुत्पत्तिस्तदुत्पत्तिकारणं चोपलभ्यते–तस्मादनित्यान्येवैतानीति मन्तव्यम् । गोघटादीनां भूतसारूप्यं भूतकार्यत्वेऽप्युपपद्यमानं न भूतात्मकत्वं भूतवन्नित्यत्वं वाऽवगमयतीत्याशयः ॥

सूत्रार्थमाह–कारणेति । सर्वे गोघटादयो यदा यदोत्पद्यन्ते तदा तदा तेषां प्रत्येकं कारणान्युपलभ्यन्ते ये च तेषु गुणा उपलभ्यन्ते ते सर्वे तत्तत्कारणगुणपूर्वका एव । तेन किम्प्रकृत इत्याह–न चैतदिति । नित्यानां पदार्थानां नोत्पत्तिर्न च कारणानि- ततश्च सुतरां तद्गुणा अपि न कारणगुणपूर्वका इत्यर्थः । ननु न वयमभ्युपगच्छाम उक्तां कारणाद्युपलब्धिमित्यत आह–न चोत्पत्तीति । सर्वजनानुभवसाक्षिका ह्युपलब्धिर्गोघटादीनां कारणस्य तत्समानगुणोत्पत्तेश्च -अत एव न निषेधयितुं शक्यत इत्यर्थः । नन्वस्तूपलब्धिर्न तु सोपलब्धतत्तदुत्पत्तितत्कारणगुणपूर्वकगुणानां च साधिकेत्यत आह न चाविषयेति । यद्युपलब्धिरभ्युपगम्यते तर्हि तस्या निर्विषयत्वासम्भवात् तद्विषयाणामस्तित्वमवश्यमभ्युपगन्तव्यमित्यर्थः । फलितमाह उपलब्धीति । उक्ताया उपलब्धेरनुमीयते यत् यदा यदा कार्यमुत्पद्यते तदा तदा स्वकारणसमानगुणमेवेति–तदेव च कार्यं गोघटादिरूपं तस्या उपलब्धेर्विषय इति । उपसंहरति एवं चेति । यदेव किल गोघटादीनां स्वकारणेन समानगुणत्वं तदेव तेषां स्वकारणीभूतभूतसमानस्वरूपं तल्लक्ष-

(भा०)उत्पत्तिविनाशकारणप्रयुक्तस्य ज्ञातुः प्रयत्नो दृष्ट इति ।

प्रसिद्धश्चावयवी तद्धर्मा । उत्पत्तिविनाशधर्मा चावयवी सिद्ध इति ।

शब्दकर्मबुद्ध्यादीनां चाव्याप्तिः । पञ्चभूतनित्यत्वात् तल्लक्षणावरोधाच्चेत्यनेन शब्दकर्मबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नाश्च न व्याप्ताः तस्मादनेकान्तः ।

---

(ख०)णावरुद्धत्वमिति नैतत्साम्यं तेषां भूतात्मकत्वं नित्यत्वं वाऽवगमयतीत्याशयः ॥

स्वपक्षसाधकमनुभवान्तरमाह—उत्पत्तिविनाशेति । यदि भावानामुत्पत्तिविनाशौ न वस्तुसन्तौ तर्हि प्रेक्षावतामभिमतवस्तूत्पत्तिकारणासादनायानभिमतवस्तुविनाशकारणासादनाय च तदर्थिनाम्प्रवृत्तिर्नैव स्यादित्यर्थः ।

उपपत्त्यन्तरमाह—प्रसिद्ध इति । यः कश्चिदवयवी स सर्व एवोत्पत्तिविनाशधर्मेति सार्वजनीनोऽनुभव इत्यर्थः ।

परोक्तस्य हेतुद्वयस्याव्यापकत्वम्प्रदर्शयति शब्दकर्मेति । शब्दादयोऽपि 'सर्वस्मिन्नन्तर्भूताः—अतस्सर्वं नित्यं पञ्चभूतनित्यत्वात्तल्लक्षणावरोधाच्चेति ब्रुवता शब्दादीनामपि पञ्चभूतात्मकत्वं तल्लक्षणावरोधश्च विवक्षितः । तत्त्वतस्तु शब्दादीनां न भूतात्मकत्वं न च तल्लक्षणावरोधः । तस्मात् पञ्चभूतनित्यत्वात्—तल्लक्षणावरोधाच्चेत्युभयमपि न शब्दादीन् व्याप्नोति—ततश्च हेतुद्वयमप्यव्यापकमेवेति । ततः किमित्यत आह—तस्मादिति । परोक्तो हेतुरनैकान्तिकः पर्यवसित इत्यर्थः । अत्राव्यापक एवानैकान्त उक्तः । पक्षो हि सर्वं नित्यमिति—तस्मिन् पक्षे उक्तहेतुद्वयस्य सत्त्वमप्युपलभ्यते (पृथिव्यादौ) असत्त्वमप्युपलभ्यते (शब्दादौ)—तस्मादयं हेतुरनेकान्तः—'अनेकः' सत्त्वासत्त्वलक्षणः 'अन्तः' अवस्था यस्य स इत्यर्थः ।

(भा०) "स्वप्नविषयाभिमानवन्मिथ्योपलब्धिरिति चेत्"-भूतोपलब्धौ तुल्यम् । "यथा स्वप्ने विषयाभिमान एवमुत्पत्तिकारणाभिमान इति" । एवं चैतद् भूतोपलब्धौ तुल्यं-पृथिव्याद्युपलब्धिरपि स्वप्नविषयाभिमानवत् प्रसज्यते ।

"पृथिव्याद्यभावे सर्वव्यवहारविलोप इति चेत्"-तदितरत्र समानम् । उत्पत्तिविनाशकारणोपलब्धिविषयस्याप्यभावे सर्वव्यवहारविलोप इति । सोऽयं नित्यानामतीन्द्रियत्वादविषयत्वाच्चोत्पत्तिविनाशयोः—स्वप्नविषयाभिमानवदिति—अहेतुरिति ॥ ३२ ॥

---

(ख०) ननूदाहृतोपलब्धिर्मिथ्यैव स्वप्नवदिति चोदयति स्वप्नेति । निराकरोति भूतोपलब्धाविति । चोद्यं परिष्करोति—यथेति । यथा स्वप्न उपलब्धा अपि विषया असन्त एव तथैव गोघटादीनामुत्पत्तिकारणानि चोपलब्धान्यप्यसन्त्येवेत्याशयः । चोद्यनिराकरणं परिष्करोति एवं चैतदिति । यदि स्वप्नविषयदृष्टान्तेन गोघटादयोऽसन्तस्तर्हि तेनैव दृष्टान्तेन पृथिव्यादीनि भूतान्यपि मिथ्यैव । एवं चासति बाधके मिथ्यात्वकल्पनायामतिप्रसङ्ग इत्यर्थः ।

पृथिव्यादिमिथ्यात्वसाधके बाधकं परः प्रदर्शयति पृथिव्यादीति । तत्सिद्धान्तपक्षेऽपि तुल्यमिति प्रत्युत्तरमाह सिद्धान्ती तदितरत्रेति । यदि पृथिव्यादीनि न सन्ति तर्हि सकलव्यवहारलोपः प्रसज्यत इति सत्यम्—किन्त्वेवमेवास्मदुपन्यस्तगोघटाद्युत्पत्तिविनाशकारणानामुपलब्धेर्निर्विषयत्वेऽपि सर्वव्यवहारविलोपप्रसङ्ग इति पक्षद्वयेऽपि तुल्यमित्यर्थः । उपसंहरति सोऽयमिति । स्वप्नविषयोपलब्धिवदुत्पत्तिविनाशकारणोपलब्धिर्मिथ्येति 'अहेतुः' असाधकं गोघटादीनां भूतात्मकत्वस्य—कुतः—नित्यानामतीन्द्रियत्वात् नित्यानाञ्चोत्पत्तिविनाशाविषयत्वात् यत्किञ्चिदुभयवादिसम्मतं नित्यं द्रव्यं तत्सर्वमतीन्द्रियमे-

( भा० ) "अवस्थितस्योपादानस्य धर्ममात्रं निवर्तते, धर्ममात्रमुपजायते । स खलूत्पत्तिविनाशयोर्विषयः । यच्चोपजायते तत्प्रागप्युपजननादस्ति, यच्च निवर्तते तन्निवृत्तमप्यस्तीति । एवं च सर्वस्य नित्यत्वमिति" ।

---

(ख०)वाविषयश्चोत्पत्तिविनाशयोः । परमाण्वाकाशकालदिगात्मानो हि नित्याः न चैते इन्द्रियगोचरा न चैषामुत्पत्तिविनाशौ भवत इत्यर्थः ॥ ३२ ॥

तदेवं साङ्ख्यानां मतमपास्य स्वायंभुवानाम्मतं दूषयिष्यन् तन्मतेन सिद्धान्त्युपन्यस्तोत्पत्तिविनाशयोरन्यथोपपत्तिं प्रदर्श्य तत्साधकत्वमाक्षिपति अवस्थितस्येति । त्रिविधः खल्वयं धर्मिणः परिणामो धर्म—लक्षणा—ऽवस्थारूपः । तद्यथा—सुवर्णं धर्मि—तस्य वर्धमानरुचकादिर्धर्मपरिणामः ॥ लक्षणपरिणामोऽनागतादिः । यदा खलु सुवर्णकारो वर्धमानकं भङ्क्त्वा रुचकमारचयति तदा वर्धमानको वर्त्तमानलक्षणं हित्वाऽतीतलक्षणमापद्यते, रुचकस्त्वनागवतालक्षणं हित्वा वर्तमानतामापद्यते ॥ वर्तमानतामापन्न एव च रुचको नवपुराणभावमापद्यमानोऽवस्थापरिणामवान् भवति । नवपुराणावस्थाश्च वर्त्तमानलक्षणाश्रया लक्षणपरिणामः । सोऽयं त्रिविधः परिणामो धर्मिणः । धर्मलक्षणावस्थाश्च धर्मिणो भिन्नाश्चाभिन्नाश्च । धर्मिणाऽभिन्नाः सन्तो धर्मा अपि नित्याः । तस्माद्भिन्नाश्चोत्पत्तिनाशविषया अनित्याः । तथाच नानाविधेषु परिणामेष्वेक एव धर्म्यनुवर्त्तते—एवञ्चावर्तमानो नित्य एवेति । 'अवस्थितस्य' नित्यस्य 'उपादानस्य' समवायिकारणस्य धर्ममात्रमुत्पद्यते नश्यति च—एवं च धर्ममात्रमुत्पत्तिनाशयोर्विषयो न वस्तुभूतो धर्मी गोघटादिः । अभ्युपेत्यवादोयम्—वस्तुतस्तु धर्माणामपि नोत्पत्तिविनाशौ—प्रागुत्पत्तेरर्वाक्च विनाशाद् धर्मिरूपेण तेषां वर्तमानत्वादिति सर्वनित्यत्वं तदवस्थमेवेत्याक्षेपाशयः ॥

( सू० ) न व्यवस्थानुपपत्तेः ॥ ३३ ॥

( भा० ) अयमुपजनः इयं निवृत्तिरिति व्यवस्था नोपपद्यते–उपजातनिवृत्तयोर्विद्यमानत्वात् । अयं धर्म उपजातोऽयं निवृत्त इति सद्भावाविशेषादव्यवस्था । इदानीमुपजननिवृत्ती नेदानीमिति कालव्यवस्था नोपपद्यते—सर्वदा विद्यमानत्वात् । अस्य धर्मस्योपजननिवृत्ती नास्येति व्यवस्थानुपपत्तिः उभयोरविशेषात् । अनागतोऽतीत इति च कालव्यवस्थानुपपत्तिः–वर्तमानस्य सद्भावलक्षणत्वात् ।

---

(ख०)उक्तं स्वायम्भुवानामाक्षेपं परिहरति न व्यवस्थेति सूत्रम् । उपजनापाययोः स्वरूपतः कालतो विशेषतश्च सम्बन्धितोऽनागतत्वादितश्च व्यवस्थानुपपत्तेरित्यर्थः । एतदुक्तं भवति । न तावद् भेदाभेदौ परस्परपरिहारव्यवस्थितधर्मावेकत्र समवेतौ । तस्मादुपजनापायव्यवस्थायै धर्मलक्षणावस्थानां धर्मिणो भेदमिच्छता तेषामनित्यत्वमप्यभ्युपेतव्यमिति ।

वृत्तिकारमतेन तु उत्पादविनाशप्रत्ययस्य भ्रान्तत्वं स्यादित्याशङ्क्याह न व्यवस्थेति सूत्रम् । सार्वलौकिकप्रमात्वेन सिद्धस्यापि भ्रमत्वशङ्कायां प्रमाभ्रमव्यवहारविलोपः स्यादिति च तस्यार्थः ॥

सूत्रार्थं व्याचक्षाणः व्यवस्थानुपपत्तिं विवृणोति अयमुपजन इति । यदि उपजातं वस्तु प्रागुत्पत्तेरपि विद्यमानमेव–नष्टं च वस्तु यदि नाशानन्तरमपि विद्यमानमेव–तर्हि उत्पत्तिविनाशविषयिणी सर्वलोकानुभवसिद्धा व्यवस्था मिथ्यैव स्यादित्यर्थः ॥

स्वरूपतोऽव्यवस्थां प्रदर्शयति अयं धर्म इति । कालतोऽव्यवस्थां प्रदर्शयति इदानीमिति । सम्बन्धितोऽव्यवस्थां प्रदर्शयति अनागत इति ।

(भा०)अविद्यमानस्यात्मलाभ उपजनो विद्यमानस्यात्महानं निवृत्तिरित्येतस्मिन् सति नैते दोषाः। तस्माद्यदुक्तं—प्रागप्युपजनादस्ति निवृत्तं चास्ति—तदयुक्तमिति ॥ ३३ ॥

(९) सर्वपृथक्त्वनिराकरणप्रकरणम् ।

( भा० ) अयमन्य एकान्तः—

(सू०) "सर्वं पृथग्भावलक्षणपृथक्त्वात्" ॥ ३४ ॥

( भा० ) "सर्वं नाना । न कश्चिदेको भावो विद्यते ।

---

(ख०)उक्ताः व्यवस्थाः सर्वा अपि सिद्धान्त उपपद्यन्त इति स्वपक्षे साधकमाह अविद्यमानस्येति ।

उपसंहरति तस्मादिति ॥ ३३ ॥

एवन्तावद् गुणगुणि–भावाभाव–चेतनाचेतन–दृष्टादृष्ट–नित्यानित्यसमुच्चयः सामग्रीति समर्थितम् । इदानीं समुच्चयविरुद्धोऽर्थो निराकर्त्तव्यः। स चैकत्वनिराकरणवादः ( सू० ३४–३६ ) शून्यतावादः ( सू० ३७–४० ) सङ्ख्यैकान्तवादश्चेति ( सू० ४१–४३ ) त्रिधा। एकाभावे हि कस्य कः समुच्चयः । एवमद्वैतवादेऽपि । तत्र सर्वाभावे शून्यतायां निरुपाख्ये जगति कः समुच्चयः। प्रथममेकत्वनिराकरणवादमुत्थापयति अयमन्य इति। अयं वादो बौद्धानामिति तात्पर्यकृतः ॥

सर्वपृथक्त्ववादमाह सर्वं पृथगिति सूत्रम् । 'सर्वं पृथक्' घटादिकं स्वस्मादपि पृथक्—कस्मात्—'भावलक्षणपृथक्त्वात्' भावलक्षणानां गन्धरसादीनां च पृथक्त्वात् घटादेश्च तदभेदात् । न रूपाद्यतिरिक्तं द्रव्यं नाम किञ्चिदस्ति नाप्यवयवातिरिक्तः कश्चिदवयवी रूपादयः अवयवाश्च परस्परं पृथगेवेति सौत्रान्तिका वैभाषिकाश्च प्रतिपन्नाः ॥

(भा०)कस्मात् ?भावलक्षणपृथक्त्वात् । भावस्य लक्षणमभिधानम् येन लक्ष्यते भावः स समाख्याशब्दः–तस्य पृथग्विषयत्वात् ।सर्वो भावसमाख्याशब्दः समूहवाची कुम्भ इति संज्ञाशब्दो गन्धरसरूपस्पर्शसमूहे बुध्नपार्श्वग्रीवादिसमूहे च वर्त्तते । निदर्शनमात्रञ्चेदमिति" ॥ ३४ ॥

( सू० ) नानेकलक्षणैरेकभावनिष्पत्तेः ॥ ३५ ॥

( भा० ) अनेकविधलक्षणैरिति मध्यपदलोपी समासः ।

---

(ख०)सूत्रं व्याचष्टे सर्वमिति । सर्वमित्युद्देश्यपदं नानेति विधेयपदम् सर्वे पदार्थाः पृथगेवेत्यर्थः । उक्तस्य फलितार्थमाह न कश्चिदेक इति । समष्टिरूपं न किञ्चिदप्येकं वर्त्तते । पृच्छति कस्मादिति । उत्तरयति भावेति । तदेव विवृणोति भावस्येति । भावलक्षणमित्यस्य समाख्यैवार्थःसमाख्या च वस्तूनां समूहाभिधायिन्येव । तत्र दृष्टान्तमाह कुम्भ इति । कुम्भपदं घटगतगन्धादिगुणांस्तदारम्भकबुध्नाद्यवयवांश्चाभिधत्ते । ते च गुणाः परस्परं भिन्ना एव । तथा चावयवा अपि परस्परं भिन्ना एव–तथा कुम्भपदं न कञ्चिदेकमर्थमभिधत्ते । न चैतत्कुम्भपदमात्रेऽपि तु सर्वेषु नामस्विति सूचयन्नाह निदर्शनमात्रमिति । कुम्भपददृष्टान्तेनैतत् सिद्धं यदनेकवाचि किमपि पदं नास्ति ततश्च सिद्धम् न किमप्येकमस्तीति पूर्वपक्षसङ्क्षेपः ॥ ३४ ॥

पूर्वपक्षं निरस्यन् सिद्धान्तमाह–नानेकेति सूत्रम् । यदुक्तं तन्न–कुतः–यतः अनेकैः'लक्षणैः' भावैः एकस्यैव भावस्य तत्समष्ट्यात्मकस्य निष्पत्तिर्भवति–गुणानामाश्रयोऽवयवैरारब्ध एक एवावयवीति भावः ॥

सूत्रार्थमाह–अनेकविधेति । भिन्नस्वरूपाणां गुणानामवयवानां चावरोधार्थमनेकलक्षणैरित्यत्रानेकविधलक्षणैरिति मध्यमपदलोपिसमा-

(भा०)गन्धादिभिश्च गुणैर्बुध्नादिभिश्चावयवैः सम्बद्ध एको भावो निष्पद्यते। गुणव्यतिरिक्तं च द्रव्यमवयवातिरिक्तश्चावयवीति। विभक्तन्यायं चैतदुभयमिति ॥ ३५ ॥

(भा०) अथापि—

(सू०) लक्षणव्यवस्थानादेवाप्रतिषेधः ॥ ३६ ॥

---

(ख०)साश्रयणम्। कुम्भदृष्टान्तं योजयति गन्धादिभिरिति। एको भाव इति। घटरूपोऽवयवीत्यर्थः। तत्र हेतुमाह—गुणव्यतिरिक्तमिति। घटो नाम न गन्धादिगुणा एवापि तु गन्धादिगुणानामाश्रयभूतमेकमेव द्रव्यम् गुणेभ्यो व्यतिरिक्तम्—एवं घटो नाम न बुध्नाद्यवयवा एवापि त्ववयवैरारब्ध एक एवावयव्यवयवेभ्यो व्यतिरिक्तः। एवं च नानागुणानामाश्रयो नानावयवैरारब्ध एको भाव इति सिद्धमित्यर्थः। तथा चोक्तं वृत्तिकृता—एकस्य धर्मिणः प्रत्यक्षादिप्रमाणसिद्धत्वात् तस्य च चाक्षुषत्वरासनत्वादिविरुद्धधर्माध्यस्तरूपरसाद्यात्मकत्वाभावात् अवयवानां च कारणत्वात् कार्यकारणयोरभेदासम्भवाच्च न तत्तदात्मकत्वं घटादेः सम्भवतीति भाव इति ॥

ननु गुणातिरिक्तत्वमवयवातिरिक्तत्वं च किन्तव वाङ्मात्रेण सिद्धम् भवतीत्यत आह—विभक्तेति। उभयमप्येतत्—गुणातिरिक्तं गुणाश्रयो द्रव्यमवयवातिरिक्तोऽवयवीत्युभयमपि—'विभक्तन्यायम्' विभक्ताः सुस्पष्टं व्युत्पादिता न्यायाः हेतवो यस्य तत्तथाभूतम्। साधितावेवार्थाविमौ प्राक्द्वितीयाध्यायगतद्वितीयाह्निकस्थत्रयस्त्रिंशादिसूत्रैरतो नात्र पुनः प्रपञ्च्यते तत्साधनमित्याशयः ॥ ३५ ॥

पूर्वपक्षनिरासे हेत्वन्तरमवतारयति अथापीति। अपि चेत्यर्थः। तद्धेतुमाह—लक्षणेति सूत्रम्।

तदर्थमाह न कश्चिदिति। पूर्वपक्षिणोद्भावितो यः 'प्रतिषे-

(भा०) न कश्चिदेको भाव इत्ययुक्तः प्रतिषेधः । कस्मात् ? लक्षणव्यवस्थानादेव । यदिह लक्षणं भावस्य संज्ञाशब्दभूतं तदेकस्मिन्व्यवस्थितं–यं कुम्भमद्राक्षं तं स्पृशामि यमेवास्प्राक्षं तं पश्यामीति । नाणुसमूहो गृह्यत इति, अणुसमुहे चागृह्यमाणे यद् गृह्यते तदेकमेवेति ।

अथाप्येतदनूक्तं—"नास्त्येको भावो यस्मात्समुदायः" ।

---

(ख०) धः' न कश्चिदेको भाव इति–स 'अप्रतिषेधः' अयुक्तः प्रतिषेधः । पृच्छति कस्मादिति । उत्तरयति लक्षणेति सूत्रपदेन । तत्पदं विवृणोति यदिहेति । गोघटादेरर्थस्यैकं 'लक्षणं' संज्ञारूपं वर्त्तते तद् भवानभ्युपगच्छति–सर्वं संज्ञापदमेकसंज्ञिवाचीति सार्वजनीनोऽनुभवः । तदेव दृष्टान्तेन द्रढयति यं कुम्भमिति । अस्मिन् वाक्ये यान्यद्राक्षमिति बहुवचनं न प्रयुज्यत इति हृदयम् । ननु यद् दृश्यते स्पृश्यते च तन्नानावयवानां समूह एव–ततश्च नैकं किञ्चित् सिध्यतीत्यत आह नाणुसमूह–इति । यद् गृह्यते इन्द्रियैर्न तदणुसमूहमात्रं भवितुमर्हति–तथासति तददृश्यमेव स्यादणूनां परमसूक्ष्मत्वेनातीन्द्रियत्वात् । ततोऽपि किमित्यत आह अणुसमूह इति । घटादिर्गृह्यत इति–नापलपितुं शक्यम्–अणुसमूहमात्रमतीन्द्रियमित्यपि सर्वसम्मतम्–एवं च यद् गृह्यते तदणुभ्यो व्यतिरिक्तं तैरारब्धं किञ्चिदेकमेवावयवीति सिद्धमित्यर्थः ।

दूषणान्तरमभिधास्यन् पूर्वपक्षतात्पर्यमनुवदति अथाप्येतदिति । अनुक्तमिति–भावलक्षणपृथक्त्वादिति हेतुमुक्त्वा पश्चादपरं हेत्वन्तरमुच्यत इत्यर्थः । तदेव हेत्वन्तरमनुवदति नास्त्येक इति । घटादिरेको भावो नास्ति किन्त्वनेकगुणानामनेकावयवानां च समुदायरूप एवासावित्यर्थः ॥

(भा०)एकानुपपत्तेर्नास्त्येव समूहः।"नास्त्येको भावो यस्मात्समूहे भावशब्दप्रयोगः"। एकस्य चानुपपत्तेः समूहो नोपपद्यते—एकसमुच्चयो हि समूह इति। व्याहतत्वादनुपपन्नं—नास्त्येको भाव-इति। यस्य प्रतिषेधः प्रतिज्ञायते समूहे भावशब्दप्रयोगादिति हेतुं ब्रुवता-स एवाभ्यनुज्ञायते-एकसमुच्चयो हि समूह इति। समूहे भावशब्दप्रयोगादिति च समूहमाश्रित्य प्रत्येकं समूहिप्रतिषेधो—नास्त्येको भाव—इति। सोऽयमुभयतो व्याघाताद्यत्किञ्चन वाद इति॥ ३६॥

---

(सू०)तन्निराकरोति एकानुपपत्तेरिति। समुदायोऽपि बहुभिः प्रत्येकं भिन्नैरेव समुदायिभिः सम्पद्यतेऽतो यदि एकः कश्चिन्नास्ति तर्हि समुदायस्याप्यभाव एवेत्यर्थः। अनुक्तस्यैव पूर्वपक्षहेतोस्तात्पर्यं स्फोरयति नास्तीति। यस्माद् घटादिसंज्ञाशब्दो गुणानामवयवानां च समूहमेव वक्त्यतो नास्ति कश्चिदेको भाव इत्यर्थः॥ प्रागुक्तमेव दूषणम्पुनराह—एकस्येति। उक्तार्थमेतत्। ततः किमित्यत आह—व्याहतत्वादिति—एको भावो नास्ति—समुदायश्चास्तीति मिथो व्याहतं वच इत्यर्थः। तदेव स्पष्टयति यस्य प्रतिषेध इति। 'नास्त्येको भाव इति' यस्य भावस्यैकत्वप्रतिषेधः प्रतिज्ञायते स एवैको भावोऽभ्यनुज्ञायते 'समूहे भावशब्दप्रयोगात्' इति हेतुं ब्रुवतेत्यर्थः। कथमभ्यनुज्ञायत इत्यत आह एकेति। समूहो हि बहुभिरनेकैरेव सम्पादितो भवतीत्यतः समूहं स्वीकुर्वता भावानां पृथक्त्वमेकत्वं च स्वीकृतम्भवतीत्यर्थः।एवं प्रतिज्ञया हेतोर्व्याघातमुक्त्वाऽधुना हेतुना प्रतिज्ञाया व्याघातमाह समूहे भावेति। समूहे भावशब्दप्रयोगादिति हेतुवाक्ये समूहोऽभ्युपगम्यते—अथ च नास्त्येको भाव इति प्रतिज्ञावाक्ये समूहगतसमूही प्रतिषिध्यते—प्रत्येकं सकलसमूहिप्रतिषेधश्च समूहस्यापि प्रतिषेधे पर्यवस्यतीत्यर्थः। उपसंहरति सोऽयमिति। उक्तव्याघातद्वयेन पराहतत्वादे-

## ( १० ) सर्वशून्यतानिराकरणप्रकरणम् ।

( भा० ) अयमपर एकान्तः—

(सू०) "सर्वमभावो भावेष्वितरेतराभावसिद्धेः" ॥३७॥

( भा० ) "यावद्भावजातं तत्सर्वमभावः । कस्मात् ? भावेष्वितरेतराभावसिद्धेः । असन् गौरश्वात्मना—ऽनश्वो गौरसन् अश्वो गवात्मना—ऽगौरश्व- इत्यसत्प्रत्ययस्य प्रतिषेधस्य च भावशब्देन सामानाधिकरण्यात् सर्वमभाव इति" ॥

---

(ख०)कप्रतिषेधवादः सर्वथाऽनादरणीय एवेत्यर्थः ॥ ३६ ॥

सर्वशून्यतायां हि कार्यकारणभावासम्भव इति तन्निराकरणाय प्रकरणमारभमाणः सर्वशून्यतावादं प्रस्तौति-अयमपर इति ।

शून्यतावादमुत्थापयति सर्वमभाव इति सूत्रम् । 'सर्वमभाव' इति प्रतिज्ञा-तत्र हेतुः 'भावेष्वितरेतराभावसिद्धेः' सर्वेषां पदार्थानां परस्पराभावरूपतैव यत इत्यर्थः ।

सूत्रार्थं विवृणोति यावदिति । भावजातमिति । सर्वे भावा इति यावत् । पृच्छति कस्मादिति । तत्रोत्तरम्—भावेष्विति । तत् विवृणोति असन् गौरिति । यथा गौरनश्वस्तथाऽश्वोऽप्यगौरेव—एवं च सर्वे भावशब्दाः पदार्थसंज्ञाशब्दाः 'असत्प्रत्ययस्य' अभावज्ञानस्य 'प्रतिषेधस्य' निषेधस्य च समानाधिकरणाः—यथाऽसति पटे उच्यते 'अपट' इति तथैव—गव्यप्युच्यते 'अनश्व' इति । तस्माच्च सर्वेषामभावरूपतैवेत्याशयः । प्रयोगश्च—सर्वे भावशब्दा असद्विषयाः असत्प्रत्ययप्रतिषेधाभ्यां सामानाधिकरण्यात् अनुत्पन्नप्रध्वस्तपटशब्दवदिति ॥

शून्यतावादश्चेत्थं समुल्लसति—प्रमाणादयः खल्वमी परस्परानात्मतयाऽसदितिप्रत्ययस्य नञश्च गोचरा अनुभूयन्ते । अतस्तद्वाचिनां शब्दानां तत्सामानाधिकरण्यम् । ततः प्रमाणादयोऽसन्तोऽनुत्पन्नप्रध्व-

( भा० ) प्रतिज्ञावाक्ये पदयोः प्रतिज्ञाहेत्वोश्च व्याघातादयुक्तम् ।

अनेकस्याशेषता सर्वशब्दस्यार्थो भावप्रतिषेधश्चाभावशब्दस्यार्थः । पूर्वं सोपाख्यमुत्तरं निरुपाख्यम् । तत्र समुपाख्यायमानं कथं निरुपाख्यमभावः स्यादिति । न जात्वभावो निरुपाख्योऽने-(ख०)स्तपटवत्॥अपि चामी भावा नित्या अनित्या वा । नित्यत्वे सर्वसामर्थ्यरहितस्यासत्त्वम् । न हि नित्यं क्वचित्कार्ये उपयुज्यते क्रमाक्रमानुपपत्तेरित्युक्तम् । अनित्यत्वे तु विनाशस्वभावाश्चेद् द्वितीयादिक्षणेष्विव प्रथमक्षणेऽपि न स्युः । सत्त्वे वा नामी विनाशस्वभावाः । अतत्स्वभावत्वे वा क्षणान्तरेऽपि न नश्येयुः । नो खलु नीलं स्वकारणादुपजातं कारणसहस्रैरपि पीतं कर्तुं शक्यमिति विनाशस्वभावकत्वमकामेनाप्यनित्यानामेषितव्यम् । तस्माद् भावानां शून्यतैव पारमार्थिकी । काल्पितया त्ववस्तुसत्या सन्त इव भासन्ते भावा इति ॥

शून्यवादमनूद्योत्सूत्रमेव तावद् दूषयति प्रतिज्ञावाक्य इति । पूर्वपक्षवाक्ये प्रतिज्ञापदयोः प्रतिज्ञाहेत्वोश्चेति व्याघातद्वयम् ।

तत्र तावत् 'सर्वमभाव' इति प्रतिज्ञावाक्ये तद्गतपदयोर्व्याघातम्प्रदर्शयति अनेकस्येति । 'सर्वम्'–'अभावः' इति द्वे पदे–तत्र सर्वपदाभिधेयमनेकस्य भावस्याशेषतेति अभावपदस्य चाभिधेयो भावस्य प्रतिषेध इति । ततः किमित्यत आह पूर्वमिति । अशेषा अनेके हि 'सोपाख्या' यत्किञ्चित्स्वभाववन्तः भावप्रतिषेधस्वभावरूपो 'निरुपाख्यो' निःस्वभाव एव । तयोः परस्परं सामानाधिकरण्यासम्भवं प्रदर्शयति तत्रेति । यत् 'सोपाख्यं' तत् कदापि 'निरुपाख्यं' न भवितुमर्हतीति सोपाख्यं 'सर्वं' निरुपाख्याभावतया प्रतिज्ञातुं न शक्यते । ननु मा भूत्सोपाख्यस्य सर्वस्य निरुपाख्याभावतया प्रतिज्ञानं विपरीतं तु भवितुमर्हतीत्यत आह न जात्विति । निरुपाख्योऽभावोऽपि सोपा-

( भा० ) कतयाऽशेषतया शक्यः प्रतिज्ञातुमिति ।

"सर्वमेतदभाव इति चेत्—यदिदं सर्वमिति मन्यसे तदभाव इति"। एवं चेत्—अनिवृत्तो व्याघातः। अनेकमशेषं चेति नाभावे प्रत्ययेन शक्यं भवितुम्। अस्ति चायं प्रत्ययः सर्वमिति। तस्मान्नाभाव इति।

प्रतिज्ञाहेत्वोश्च व्याघातः। सर्वमभाव-इति भावप्रतिषेधः-

(ख०)ख्यसर्वशब्दाभिधेयानेकाशेषतया प्रतिज्ञातुं न शक्यत इत्यर्थः। न ह्यत्यन्तासन्निरुपाख्यं 'सर्वमिति' वा 'भाव इति' वा ज्ञानस्य गोचरः—असद्वाऽनिर्वचनीयं वा न ज्ञानगोचरः—अपि तु सदेव सदन्तरात्मना। तथाच कुतोऽत्यन्तासतः कल्पनागोचरत्वमपीति तात्पर्यकृतः। व्याघातपरिजिहीर्षया परः प्रतिज्ञातार्थस्याभिप्रायं प्रकटयति सर्वमेतदिति। सर्वमभाव इति प्रतिज्ञावाक्यस्यायमेवार्थो यत् 'यद्भवान् सर्व इति व्यपदिशति स अभाव एवेति'—एवं च प्रतिज्ञातं सामानाधिकरण्यं सुसम्पादमेवेत्यर्थः। तत्परिहरति एवं चेदिति। 'अनेकमशेषं चेति प्रत्ययेन अभावे न भवितुं शक्यमिति' सम्बन्धः। यद् वयं सर्व इति व्यपदिशामस्तदभाव एवेति प्रतिज्ञावाक्यम्—अनेकस्याशेषतामेव च वयं सर्व इति व्यपदिशामः—तथाच अनेकमशेषमभाव इति प्रतिज्ञार्थः पर्यवस्यति सोऽपि व्याहत एवेति, तथाहि अभावविषये 'अनेकमशेषं चेति' ज्ञानं न भवितुमर्हति। ननु मा भूदेवं प्रत्ययः ततः किमित्यत आह—अस्ति चायमिति। अनेकमशेषमिति प्रत्ययः सर्वशब्देन जन्यत एव—तथाच सर्वमभाव इति वदतोऽनेकमशेषं चाभाव इत्येवार्थ उक्तो भवति—स च व्याहत एवेत्यर्थः। उपसंहरति तस्मादिति—'नाभावः' सर्वमिति शेषः॥

प्रतिज्ञापदयोर्व्याघातं प्रदर्श्य प्रतिज्ञाहेत्वोर्व्याघातं प्रदर्शयति प्रतिज्ञाहेत्वेरिति। 'सर्वमभाव' इति वाक्ये सर्वस्याभावत्वमुक्तम्—पुनश्च

(भा०)प्रतिज्ञा, भावेष्वितरेतराभावासिद्धेरिति हेतुः।भावेष्वितरेतराभावमनुज्ञायाश्रित्य चेतरेतराभावसिद्धौ सर्वमभाव इत्युच्यते यदि सर्वमभावो-भावेष्वितरेतराभावसिद्धेरिति नोपपद्यते। अथ भावेष्वितरेतराभावसिद्धिः सर्वमभाव इति नोपपद्यते ॥ ३७ ॥

सूत्रेण चाभिसम्बन्धः—

( सू० ) न, स्वभावसिद्धेर्भावानाम् ॥३८॥

( भा० ) न सर्वमभावः । कस्मात् ? स्वेन भावेन सद्भावाद्भावानाम् । स्वेन धर्मेण भावा भवन्तीति प्रतिज्ञायते । "कश्च

---

(ख०)भावेष्विति हेतुवाक्ये भावेष्विति पदं प्रयुक्तं तेन च नानाभावानामस्तित्वमुररीकृतम् । तेष्वितरेतराभावरूपताऽऽरोपिता। व्याघातं स्पष्टयति यदीति ॥ ३७ ॥

उत्सूत्रं दूषणमुक्त्वा भाष्यकारः सौत्रं दूषणमुपस्थापयति सूत्रेण चेति । 'अभिसम्बन्धो'—दूषणस्येति शेषः ।

शून्यवादं दूषयति न स्वभावेति सूत्रम् । 'स्वो भावो' धर्मो द्रव्यादीनां सदादिः—अथवा 'स्वभावः'स्वरूपं भावानाम्—येनामी भावाः स्वभावात् व्यावर्तन्ते तस्य 'सिद्धेः' । अथवा असन्निति प्रत्ययस्य गवि 'अश्वात्मनेति' विशेषणात्—गौरित्यस्य गाम्परिहृत्याश्वादिभिः सम्बन्धाद् गोभावसिद्धेः । एवमश्वादिष्वपीति—'स्वभावसिद्धेर्भावानां नाभाव' इत्यर्थः ।

सूत्रं व्याचष्टे-न सर्वमिति । पृच्छति कस्मादिति । तत्रोत्तरभूतं स्वभावसिद्धेर्भावानामिति सूत्रोक्तं हेतुं विवृणोति स्वेन भावेनेति । भावानां स्वेन भावेन 'सिद्धेः' सद्भावात् सत्त्वादिति यावत् । तदेव व्याचष्टे स्वेन धर्मेणेति । यस्मात् भावाः स्वेन धर्मेणैव भवन्ति वर्त्तन्ते—न तेऽभावरूपा इति प्रतिज्ञास्वरूपम् । स्वभावसिद्धेरिति यदुक्तं तत्र

(भा०) स्वो धर्मो भावानाम्?" द्रव्यगुणकर्मणां सदादि सामान्यम्। द्रव्याणां क्रियावदित्येवमादिर्विशेषः। स्पर्शपर्यन्ताः पृथिव्या इति च प्रत्येकं चानन्तो भेदः। सामान्यविशेषसमवायानां च विशिष्टा धर्मा गृह्यन्ते। सोऽयमभावस्य निरुपाख्यत्वात् सम्प्रत्यायकोऽर्थभेदो न स्यात्। अस्ति त्वयम्। तस्मान्न सर्वमभाव इति।

(ख०) भावो धर्म इत्युक्तम्—अधुना कः स धर्मो येन भावा भवन्तीति पृच्छति कश्चेति। तत्रोत्तरम् द्रव्येति। स्वधर्मो भावानां बहुधा विभक्तः। तत्र तावत् द्रव्यगुणकर्मसु सर्वेषु धर्मः 'सदादिः' सत्त्वाभिधेयत्वप्रमेयत्वादिरूपः। स च सर्वेषु द्रव्यगुणकर्मसु साधारण इत्याह सामान्यमिति। क्रियावत्त्वम् गुणाश्रयत्वमित्यादिश्च धर्मो सकलद्रव्येषु साधारणः सन् द्रव्याणि गुणकर्मभ्यो विशिनष्टीति स 'विशेष' इत्युक्तम्। एवमेव स्पर्शपर्यन्ता गुणा पृथिव्या अन्येभ्यो द्रव्येभ्यो विशेषका इत्येवमनन्तो 'भेदः' प्रकारः भावानां स्वधर्मस्य। न खलु द्रव्यगुणकर्मणामेव स्वधर्मा अपि त्वन्येषामपि पदार्थानामित्याह सामान्येति। वक्तव्यमुपसंहरति सोऽयमिति। उक्तोऽर्थभेदः सकललोकप्रत्यक्षसाक्षिकः अर्थानाम्परस्परव्यवच्छेदको धर्मविशेषो न स्याद् यदि सर्वोऽभाव एव स्यात्। तत्र हेतुः निरुपाख्यत्वादिति। अभावोऽभावत्वादेव निर्विशेषणो निर्धर्मको भवति—अतो यदि सर्वमभावः स्यान्न स्युर्भावानामुक्ता व्यवच्छेदका धर्मा इत्यर्थः। 'सम्प्रत्यायक' इति सकललोकप्रत्ययसाक्षिक इति—अथवा परिचायको व्यवच्छेदक इति यावत्। भावानामर्थभेदस्तु सकलजनप्रत्ययसाक्षिकोऽस्त्येवेत्याह अस्ति त्विति। अयमिति अर्थभेद इति यावत्। निगमयति तस्मादिति। एवं च 'न सर्वमभावः भावानां परस्परव्यवच्छेदकधर्माणां सत्त्वात् अभावस्य निरुपाख्यत्वात्तादृशधर्मासम्भवात्' इति पर्यवसितोऽर्थः।

स्वभावसिद्धेरित्यस्य सूत्रस्थपदस्य व्याख्यानान्तरमुपन्यस्यति

(भा०)अथवा न स्वभावसिद्धेर्भावानामिति-स्वरूपसिद्धेरिति।गौरिति प्रयुज्यमाने शब्दे जातिविशिष्टं द्रव्यं गृह्यते,नाभावमात्रम् । यदि च सर्वमभावः गौरित्यभावः प्रतीयेत गोशब्देन चाभाव उच्येत। "कस्मान्न गोशब्देन चाभाव उच्यते ?"यस्मात्तु गोशब्दप्रयोगे द्रव्यविशेषः प्रतीयते नाभावः। तस्मादयुक्तमिति।

अथवा न स्वभावसिद्धेरिति। असन् गौरश्वात्मनेति असन् गौर्गवात्मना इति कस्मान्नोच्यते ? अवचनाद्गवात्मना गौरस्तीति स्वभावसिद्धिः। अनश्वोऽश्व इति वा गौरगौरिति वा कस्मान्नोच्यते ? अवचनात्स्वेन रूपेण विद्यमानता द्रव्यस्येति विज्ञायते।

---

(ख०)अथ वेति।'स्वभावः'अस्मिन् पक्षे स्वरूपमेव,न स्वो धर्मः। किन्तत् स्वरूपमिति स्पष्टयति गौरितीति । गोत्वजातिविशिष्टो व्यक्तिविशेषः गोशब्दार्थः प्रतीयते—स च भावरूप एव नाभावरूप इत्यर्थः । उक्तमर्थं प्रकृते योजयति यदीति—सर्वस्याभावरूपत्वे गवादयोऽभावरूपा एव गृह्येरन् गवादिशब्देभ्यश्चाभाव एव प्रतीयेत । ननु भवत्वेवम्—का नो हानिः—भवतु गवादिशब्देभ्योऽभावप्रतीतिरेवेति पृच्छति—कस्मान्नेति । तत्रोत्तरं यस्मादिति। यदा यदा गोशब्दः प्रयुज्यते तदा तदा द्रव्यविशेष एव प्रतीयते नाभावमात्रमिति सर्वजनप्रतीतिस्तस्मात् सर्वमभाव इति वचनमयुक्तमित्यर्थः ।

स्वभावसिद्धेरित्यस्य तृतीयव्याख्यानमाह अथ वेति । यदि सर्वं निरुपाख्यमेव तर्हि यत्र भवान् गामश्वात्मना असन्तं ब्रवीति—तत्र को हेतुरित्यपेक्षायामाह गवात्मनेति । यत्तथा न ब्रवीति भवान् तत्रायमेव हेतुर्यद् यथा गौरश्वात्मनाऽसन् न तथा गवात्मना अपितु गवात्मना स सन्नेव । एवं च गवादीनां सत्स्वभावसिद्धिरेव सूत्रस्थस्वभावसिद्धिपदेन विवक्षितेत्यर्थः। उक्तमेवार्थं प्रकारान्तरेण द्रढयति अनश्व इति । एवं चाश्वो द्रव्यान्तरात्मनाऽसन्नप्यश्वात्मना सन्नेवेत्यर्थः ॥

( भा० ) अव्यतिरेकप्रतिषेधे च ( असंयोगादिसम्बन्धो व्यतिरेको ऽत्राव्यतिरेकोऽभेदाख्यसम्बन्धः, तत्प्रतिषेधे) भावेनासत्प्रत्ययस्य सामानाधिकरण्यम्। यथा–न सन्ति कुण्डे बदराणीति। असन् गौरश्वात्मनाऽनश्वो गौरिति च गवाश्वयोरव्यतिरेकः प्रतिषिध्यते-गवाश्वयोरेकत्वं नास्तीति। तस्मिन्प्रतिषिध्यमाने भावेन गवा सामानाधिकरण्यमसत्प्रत्ययस्य–असन् गौरश्वात्मनेति। यथा–न सन्ति कुण्डे बदराणीति–कुण्डे बदरसंयोगे प्रतिषिध्य-

---

(ख०) ननु यदि सर्वेषां भावानां भावरूपतैव–कथं तर्हि गोरनश्वत्वमश्वस्य वाऽगोत्वमित्यत आह अव्यतिरेकेति। अत्रैवं वाक्यसम्बन्धः-अव्यतिरेकप्रतिषेधे च भावेनाप्यसत्प्रत्ययस्य सामानाधिकरण्यं दृश्यते यथा न सन्ति कुण्डे बदराणीति–असंयोगादिसम्बन्धो व्यतिरेकोऽत्राव्यतिरेकोऽभेदाख्यसम्बन्ध' इति। यथा कस्यचिद् भावस्य 'अव्यतिरेकप्रतिषेधे' तादात्म्यप्रतिषेधो भवति तदा भावोऽप्यसत्प्रत्ययसमानाधिकरणो भवति यथा कुण्डे बदराणि न सन्तीत्यत्र भावानामपि बदराणामसत्प्रत्ययसामानाधिकरण्यम् भवत्येव। अव्यतिरेकप्रतिषेध इत्यत्राव्यतिरेकपदस्यार्थं विवृणोत्यवान्तरवाक्येनासंयोगादिसम्बन्ध इत्यादिनाऽभेदाख्यसम्बन्ध इत्यन्तेन। एवं च अव्यतिरेकोऽपृथक्त्वम् अभेदः तादात्म्यमिति पर्यायाः॥ उक्तं नियमं प्रकृते योजयति असन् गौरिति। 'असन् गौरश्वात्मना 'अनश्वो गौ'रित्यत्र च गव्यश्वस्याभेदः प्रतिषिध्यते। तस्य फलितमाह गवाश्वयोरेकत्वमिति। एवमप्युक्तस्याव्यतिरेकप्रतिषेध इत्यादिनियमस्य कथमत्रोपयोग इत्यत आह तस्मिन्निति। गवाश्वयोरभेदे प्रतिषिध्यमाने–'असन् गौरश्वात्मने'त्यत्र–'भावेन गवा' भाववाचिना गोपदेन–'असत्प्रत्ययस्य'–असन् इति प्रत्ययस्य–सामानाधिकरण्यं 'दृश्यते'। उक्तं कुण्डबदरदृष्टान्तं योजयति यथा न सन्तीति। कुण्डबदरसंयोगोऽत्र प्रतिषिध्यते–एवं चात्र 'सद्भिः'–भावैर्-

(भा०)माने सद्भिरसत्प्रत्ययस्य सामानाधिकरण्यमिति ॥ ३८ ॥

( सू० ) "न स्वभावसिद्धिरापेक्षिकत्वात्" ॥ ३९ ॥

( भा० ) "अपेक्षाकृतमापेक्षिकम् । ह्रस्वापेक्षाकृतं दीर्घं दीर्घापेक्षाकृतं ह्रस्वम् । न स्वेनात्मनावस्थितं किञ्चित् । कस्मात्? अपेक्षासामर्थ्यात् । तस्माच्च स्वभावसिद्धिर्भावानामिति" ॥ ३९ ॥

---

(ख०)दरैः असत्प्रत्ययसामानाधिकरण्यं दृश्यते॥एवं चासत्प्रत्ययसामानाधिकरण्यात् सर्वमभाव इति यत्पूर्वपक्षभाष्य उक्तं तन्न युक्तम्-यतोऽसत्प्रत्ययसामानाधिकरण्यं भावैरपि बहुधा भवत्येवेति प्रदर्शितम् । ततश्चासत्प्रत्ययसामानाधिकरण्यादिति अभावत्वसाधनेऽहेतुरनैकान्तिकत्वादिति निर्गलितोऽर्थः ।

सर्वमेतत्स्पष्टीकृतं तात्पर्यकृद्भिः तद्यथा—असच्छब्दः खलु भावविशेषणं सदेवाभिधत्ते । एवमसत्प्रत्ययोऽपि भावविशेषणं सदेवावलम्बते । यथा शुक्लशब्दः शुक्लगुणविशिष्टे पटे वर्त्तते । तथा सत्प्रत्ययाभिधानयोरुपपन्नं भाववाचिना पदेन सामानाधिकरण्यमित्यर्थः । भावश्च कश्चिन्नित्यः कश्चिदनित्यः । तत्र नित्यस्य अर्थक्रियाकारित्वमुपपादितं क्षणभङ्गभङ्गे । अनित्योऽपि न विनाशस्वभावो भावः । कारणान्तरात्तु विनश्यति । यत्तूक्तं न शक्यं नीलं पीतं कर्त्तुमिति-तत्र ब्रूमः-शक्य एव नीलः पीतः कर्त्तुम् । आमश्यामः कुम्भो वह्निसंयोगाद्रक्त इति ॥३८॥

स्वभावसिद्धेरिति सिद्धान्त्युक्तं हेतुमाक्षिपति शून्यवादी—न स्वभावेति सूत्रम् । भावानां स्वभावसिद्धिरेव नास्ति-कुतः-सर्वेषां भावानामापेक्षिकत्वात् । तथा च सिद्धान्तिनो हेतुरसिद्ध इति सूत्रार्थः ।

सूत्रार्थं विवृणोति अपेक्षेति । ननु भवतु सर्वमापेक्षिकं ततः किमित्यत आह न स्वेनेति । पृच्छति कस्मादिति । उत्तरयति अपेक्षेति । उपसंहरति तस्मादिति । स्वभावो नाम न किञ्चिदस्ति यस्य

( सू० ) व्याहतत्वादयुक्तम् ॥ ४० ॥

(भा०)यदि ह्रस्वापेक्षाकृतं दीर्घं, ह्रस्वमनापेक्षिकम्। किमिदानीमपेक्ष्य ह्रस्वमिति गृह्यते। अथ दीर्घापेक्षाकृतं ह्रस्वं, दीर्घमनापेक्षिकम्। किमिदानीमपेक्ष्य दीर्घमिति गृह्यते। एवमितरेतराश्रययोरेकाभावे पराभावादुभयाभाव इति-दीर्घापेक्षाव्यवस्थाऽनुपपन्ना।

स्वभावसिद्धावसत्यां समयोः परिमण्डलयोर्वा द्रव्ययोरापेक्षिके दीर्घत्वह्रस्वत्वे कस्मान्न भवतः? अपेक्षायामनपेक्षायां

(ख०)सिद्धेर्भावानां सत्त्वं सिध्येदित्यर्थः। सर्वे भिन्नस्वभावा भावा इति सार्वजनीना प्रतीतिः। भिन्नत्वं च सर्वमन्यापेक्षम्। तथाहि नीलं 'भिन्नं' पीताद्यपेक्षया, न तु स्वभावतः। एवं ह्रस्वत्वदीर्घत्वे परत्वापरत्वे पितापुत्रादयः परापेक्षा एव दृश्यन्ते। यच्च परापेक्षं न तद् भाविकम् तात्त्विकम्। यथाजपाकुसुमापेक्षः स्फटिकस्यारुणिमेत्याक्षेपाशयः॥३९॥

आक्षेपं परिहरति व्याहतत्वादिति सूत्रम्। सूत्रं व्याचष्टे यदीति। नास्त्यापेक्षिकत्वं धर्माणामतोऽसिद्धो हेतुरित्यर्थः। आपेक्षिकत्वाभावमेव प्रकटयति ह्रस्वापेक्षेति। यदि परस्परापेक्ष एव ह्रस्वत्वदीर्घत्वे तर्ह्युभयाभाव एव पर्यवसन्न इति भावः। ततः किमित्यत आह दीर्घत्वह्रस्वत्वादीनामापेक्षिकत्वानुपपत्तिरित्यर्थः।

परोक्तं हेतुं दूषयित्वा स्वभावस्य सिद्धौ साधकान्तरमाह स्वभावसिद्धाविति। यदि स्वभावो नाम न किञ्चिदस्ति तर्हि अपेक्षैव न सम्भवति। यदि स्वभावसिद्धिं विनैवापेक्षाभेदाद्दीर्घादिभेदा भवन्ति तदा सर्वमपेक्ष्य सर्वस्य सर्वत्र दीर्घह्रस्वादिप्रत्ययः स्यात्। न तु तुल्यपरिमाणौ परमाणू उपलभमान ईश्वरः परमाणुमपेक्ष्य परमाण्वन्तरे दीर्घह्रस्वादिप्रत्ययान् करोति अतो नापेक्षाकृताः प्रत्यया इत्यर्थः॥ अपेक्षायामिति-यदि परमाणूनां स्वभावो न कश्चिदस्ति

(भा०)न द्रव्ययोरभेदः । यावती द्रव्ये अपेक्षमाणे तावती एवानपेक्षमाणे । नान्यतरत्र भेदः । आपेक्षिकत्वे तु सत्यन्यतरत्र विशेषोपजननः स्यादिति ।

"किमपेक्षासामर्थ्यमिति चेत्"—द्वयोर्ग्रहणेऽतिशयग्रहणोपपत्तिः । द्वे द्रव्ये पश्यन्नेकत्र विद्यमानमतिशयं गृह्णाति तद्दीर्घमिति व्यवस्यति । यच्च हीनं गृह्णाति तद्ध्रस्वमिति व्यवस्यतीति । एतच्चापेक्षासामर्थ्यमिति ॥ ४० ॥

---

(ख०)तर्हि यथापेक्षायां सत्यां 'द्वौ परमाणू'इति बुद्धिस्तथैवापेक्षायामसत्यामपि । एवं च यथा 'अपेक्षमाणे'–अपेक्षायां सत्याम् 'यावती' यावत्संख्यके (प्रकृते द्विसंख्यके) द्रव्ये तावती एव 'अनपेक्षमाणे' अपेक्षायामसत्यामपीति भावः । ततः किमित्यत आह–आपेक्षिकत्व इति । उक्तप्रकारेण 'द्वौ परमाणू' इति बुद्धेः सर्वत्र सत्त्वात् तयोः परस्परापेक्षाकृता ह्रस्वत्वदीर्घत्वबुद्धिः स्यादेवेत्यर्थः ॥

ननु किमापेक्षिकत्वं नाम नैव किञ्चिदस्ति–यद्यस्ति तदा सा किं करोतीति पृच्छति किमपेक्षेति।उत्तरम् द्वयोरिति।द्वे द्रव्ये इति बुद्धेरनन्तरम् तयोर्विषये 'अयं ह्रस्वोऽयं दीर्घ' इति परस्परभेदः प्रतीयते–स चापेक्षाकृत एवेत्यर्थः । एतदेव विशदयति द्वे द्रव्ये इति । उपसंहरति एतदिति–द्वयोर्द्रव्ययोः परस्परभेद एवापेक्षाकृतो न तु वस्तूनां स्वभावोऽपि तथेत्याशयः ॥ उपपादितश्चायं विशदं तात्पर्यकृता । तथा–परिमाणभेदो हि दीर्घत्वं ह्रस्वत्वं च । स च भावानामौत्पत्तिकः । केवलं तस्यातिशयानतिशयौ परस्परग्रहणाधीनौ । तथाहीक्षुयष्टेर्वेणुयष्टितो 'ह्रस्वत्वं' अल्पीयस्संख्यायोगिहस्तपरिमितत्वमेव 'अनातिशयः'–वेणुयष्टेस्तु दीर्घत्वमतिशयः,तच्च भूयस्संख्यायोगिहस्तपरिमितत्वम् । तच्चेदमतिशयानतिशयादि प्रतियोगिनिरूपणाधीननिरूपणम्, न तु प्रतियोग्यधीनोत्पत्तीति न वस्तुधर्मोऽयं परापेक्षः ।

## (११)सङ्ख्यैकान्तवादनिराकरणप्रकरणम् ।

( भा० ) अथेमे सङ्ख्यैकान्ताः—

(ख०) भिन्नत्वं च भेदः । स च वस्तुविशेषनिरूपणे एव वस्त्वन्तरमपेक्षते, न चोत्पत्तौ । एवं पितृत्वमपि व्यवस्थिता जनकशक्तिरेव-सा जन्यनिरूपणाधीननिरूपणा, न तु तदधीनोत्पत्तिः । परत्वापरत्वादयस्त्वपेक्षाबुद्धिनिमित्ततया परापेक्षोत्पत्तिका अपि लोकयात्रां वहन्तो न शक्याः प्रत्याख्यातुम् । तावता 'तेषामधिकरणे निरपेक्षो भावो न भवतीति' न । इति सर्वमवदातमिति ।

व्याहतत्वादिति सूत्रे व्याघात एवोद्भावितः । स च व्याघातो व्याख्यातो वार्तिककृता । सर्वमभाव इति सर्वथा चायं वादो व्याहतः । कुतो व्याघातः। (१)आदौ तावत् प्रमाणोपपत्त्यनुपपत्ती। सर्वमभाव इति ब्रुवाणः प्रमाणं पर्यनुयोज्यः । यदि ब्रूते–व्याहतं भवति । अथ नाभिधत्ते-अर्थोऽस्य न सिध्यति प्रमाणाभावादेव। (२) पुनः सर्वमभाव इति वाक्यम्–तस्य यद्यभिधेयमर्थम्प्रतिपद्यते, पूर्ववद्व्याघातः । अथ न प्रतिपद्यते वर्णोच्चारणमात्रमनर्थकमिति । (३)पुनः सर्वमभाव इति च वाक्यस्य प्रतिपादयितारं प्रतिपत्तारं च यदि प्रतिपद्यते पूर्ववद्व्याघातः । (४)पुनः 'सर्वमभावः' 'सर्वं भाव' इति च वाक्ये । यद्यनयोर्भेदं प्रतिपद्यते व्याहतं भवति, अथ न प्रतिपद्यते विशेषोपादानं व्यर्थम् ॥ सोऽयं सर्वाभाववादो यावद्यावद् विचार्यते तावत्तावदुपपत्तिं न सहते-इति ॥ ४० ॥

एकमेव तत्त्वम्–द्वे एव तत्त्वे-त्रीण्येव तत्त्वानि–चत्वार्येव तत्त्वानि-पञ्चैव तत्त्वानीत्येते सङ्ख्यैकान्तवादा–सङ्ख्या 'एकान्ता' नियमिता येषु वादेषु ते तथोक्ताः न्यायसिद्धान्तविरुद्धा अधुना शून्यवादानन्तरं परीक्ष्यन्ते ॥ न च वाच्यम्-"तत्त्वद्वयादिवादाः किमर्थमुपन्यस्यन्ते-न हि तेषु न्यायाभिमतसमुच्चयविरोध" इति । एका-

(भा०)सर्वमेकं सदाविशेषात्। सर्वं द्वेधा नित्यानित्यभेदात् ।

(ख०)न्तिके हि द्वैते (द्वे एव तत्त्वे इत्यस्मिन् वादे) द्वयोरपि सदातनत्वे कार्योपयोगे कादाचित्कसामग्र्यसम्भव एव। एवं त्रित्वादिवादेष्वपि द्रष्टव्यम् ।

तत्र प्रथमः सर्वैक्यैकान्तवादो ब्रह्माद्वैतवादिनाम् । तं सङ्क्षेपेण सूचयति-सर्वमेकमिति । एकमेव तत्त्वम्-कुतः-सत्त्वेनानुगमात्सर्वेषामिति । इदमस्याकूतम् । न तावदयं नामरूपप्रपञ्चः प्रकाशाद्भिन्नः सन् प्रकाशितुमर्हति-जडस्य स्वयं प्रकाशासम्भवात् । तथाच ज्ञानाद्भिन्नस्य नामरूपप्रपञ्चस्य प्रकाशासम्भवात् ज्ञानस्यैवैकस्येदं सर्वं विवर्त्त इति युक्तमभ्युपगन्तुम् । न च प्रकाशात्मानो घटादय एवोदयव्ययधर्मिणः परस्परव्यावृत्ताः सन्त्विति साम्प्रतम्-तद्व्यावृत्तिग्रहणे प्रमाणाभावात् । सा हि यद् यतो व्यावर्त्तते तदुभयग्रहे गृह्येत । न च विज्ञानानि विलक्षणानि स्वरूपमात्रावस्थितानि परस्परवार्त्तानभिज्ञानि ज्ञानान्तरमपि गृहीतुमुत्सहन्ते प्रागेव स्वस्माद् व्यावर्त्तयितुम् । न च निषेध्यनिषेधाधिकरणग्रहकरणो व्यावृत्तिग्रहः स्वकारणेन समसमयोत्पादो भवितुमर्हति-तादृशोः सव्येतरविषाणयोरिव कार्यकारणभावाभावात्। न चैकं विज्ञानं क्षणिकं निषेध्यनिषेधाधिकरणे गृहीत्वा पश्चाद्भेदं गृह्णातीति युक्तम्-क्षणिकस्य क्रमाक्रमवद्व्यापारायोगात्। न चैकं विज्ञानं निषेध्यानिषेधाधिकरणे गृह्णात्यथ ज्ञानान्तरं निषेधतीति युक्तम्-चैत्रगृहीतेऽपि तस्मिन् मैत्रस्य निषेधज्ञानप्रसङ्गात् । न च ज्ञानस्वरूपग्रह एवास्य निषेधग्रह इति इति साम्प्रतम् । एवं हि संभवेद्यदि स्वरूपतदन्यव्यावृत्त्योरेकत्वं स्यात्। तत्र व्यावृत्तिस्वभावो वा भावो-भावस्वरूपा वा व्यावृत्तिः। तत्र पूर्वस्मिन् कल्पे व्यावृत्तेस्तुच्छत्वात् तत्स्वभावाभावभेदास्तुच्छाःस्युः। ततश्च वचोभङ्ग्यन्तरेण शून्यवादप्रसङ्गः। इतरस्मिंस्तु कल्पे विधिरूपो भाव एव व्यावृत्तिरिति विधिरूपतया च ते न

(भा०)सर्वं त्रेधा ज्ञाता ज्ञानं ज्ञेयमिति। सर्वं चतुर्द्धा प्रमाता प्रमाणं प्रमेयं प्रमितिरिति। एवं यथासम्भवमन्येऽपीति।

तत्र परीक्षा—

---

(ख०) व्यावर्त्तन्ते इति न व्यावृत्ताभावाः परस्परं परमार्थतः॥ सर्वमिदमभिप्रेत्योक्तम् सदविशेषादिति। अनाद्यनिर्वचनीयाविद्यानिबन्धनं तु भावानां भेदं न व्यासेधामः। न च ज्ञातुरपि ज्ञानाद्भेदग्राहकमस्ति प्रमाणम्—उक्तादेवाविशेषात्। यस्मान्न ज्ञेयानां परस्परतश्च ज्ञानाद्भेदो नापि ज्ञातुर्ज्ञानादस्ति भेदो नापि ज्ञानानामन्योन्यस्य। तस्मात् प्रकाश एव प्रपञ्चो ब्रह्मेत्यद्वैतसिद्धिरिति।

द्वितीयो वादः सर्वं द्वेधेति। न हि नित्यानित्याभ्यामन्यो राशिरस्ति यमाश्रित्य पदार्थास्त्रित्वादिके व्यवतिष्ठेरन्नित्यर्थः।

तृतीयो वादः सर्वं त्रेधेति। ज्ञानपदमत्र ज्ञानकरणपरं ज्ञेयम्—'ज्ञप्तिरपि ज्ञायमानत्वात् ज्ञेयान्नातिरिच्यत इति भावः' इति तात्पर्योक्तिस्वरसात्॥

चतुर्थो वादः सर्वं चतुर्धेति। यदि प्रमितिर्नाम तत्त्वं प्रमाणादिभ्यो भिन्नं नाश्रियते—प्रमायाः प्रधानक्रियाया अभावात् कथं प्रमात्रादयः। कथं च प्रधानक्रियामन्तरेणैकवाक्यता स्यात्, कारकवैचित्र्यं वा। प्रमायाः फलत्वावस्थाया उपरि प्रमेयव्यपदेशं न वारयामः। न चैतावता तत्त्वान्तरं न भवति।

अन्येऽपि संख्यैकान्तवादाः सन्ति—तान् सूचयति एवं यथेति। प्रकृतिपुरुषाविति द्वे एव तत्त्व इत्यपरो द्वैतवादः। रूपसंज्ञासंस्कारवेदनानुभवाः पञ्च स्कन्धा इति पञ्चत्ववादः। पशु—पाश—तदुच्छेदेश्वरा इति चतुष्ट्ववादोऽपरः।

सर्वेषामेतेषां परीक्षां निराकरणपर्यन्तां प्रस्तौति तत्र परीक्षेति।

( सू० ) सङ्ख्यैकान्तासिद्धिः कारणानुपप-
त्त्युपपत्तिभ्याम् ॥ ४१ ॥

( भा० ) यदि साध्यसाधनयोर्नानात्वम् —एकान्तो न सिद्ध्यति, व्यतिरेकात् । अथ साध्यसाधनयोरभेदः—एवमप्येकान्तो न सिध्यति, साधनाभावात् । न हि तदन्तरेण कस्यचित्सिद्धिरिति ॥ ४१ ॥

---

(ख०) संख्यैकान्तवादनिराकरणमुपक्रमते संख्यैकान्तासिद्धिरिति सूत्रम् । संख्यैकान्ताः न सिध्यन्ति—कुतः—कारणस्य( साधनस्य प्रमाणस्य) अनुपपत्तौ ( असत्त्वे ) उपपत्तौ सत्त्वे वा तादृशैकान्तासम्भवात्—इत्यर्थः ।

सूत्रार्थं वर्णयति यदीति । सूत्रस्थोपपत्तिपदार्थं वर्णयति साध्येति । यदि 'साध्यसाधनयोः' यदि ज्ञेयात् (सङ्ख्यैकान्ततारूपात् ) तज्ज्ञानसाधनं प्रमाणं भिन्नं तर्हि तयोरानन्त्यात् संख्यैकान्तता न सिध्यति । सूत्रस्थानुपपत्तिपदार्थमाह अथ साध्येति । यदि ज्ञेयाद् भिन्नं ज्ञानसाधनं प्रमाणं नास्ति तर्हि प्रमाणाभावादेव प्रमेयस्य न सिद्धिरित्यर्थः । विस्तरेण वर्णितः सिद्धान्ताशयोऽत्र तात्पर्यकृता । अनवयवेन सर्वं चेदेकं द्वेधा त्रेधा चतुर्धा वेति प्रतिज्ञार्थः । तदतिरिक्तं साधनं वाच्यम् । नहि साध्यमेव साधनं भवति । तथाच साधनस्य व्यतिरेकान्न संख्यैकान्तसिद्धिः । न च किञ्चिदपि स्वसंवेद्यमस्ति—ज्ञानप्रदीपादीनामपि परसंवेद्यत्वात् । यथाच ज्ञानातिरिक्तोऽप्यर्थो विषयस्तथा विज्ञानवादनिराकरणावसरे वक्ष्यते । न च विज्ञानादर्थभेदोऽशक्यग्रहः । तथाहि नीलमुपलभ इत्यनहङ्कारास्पदमपीतादिरूपं नीलं प्रत्यात्ममनुभवगोचरः । एवं नीलादीनामपि परस्परम् । अन्यथा घटमानयेति देशितो लोचने निमील्य शयीत—शयीथा इति देशितस्तोयमेवाहरेत्—कस्यचित्कथंचि-

(ख०) द्विवेकाभावात्। न चानिर्वचनीयाविद्यानिबन्धनोऽयं भेदव्यवहार इति साम्प्रतम्। अनिर्वचनीयख्यातेः पूर्वमेवापाकृतत्वात्।तस्मात्सर्वजन-संवेदनसिद्धोऽयं भेदप्रत्ययो न कारणमुखनिरीक्षणेन युक्तो निराकर्तु-मपि तु स्पष्टदृष्टकार्यभेदप्रत्ययात्तादृशं तत्कारणं कल्पनीयं यादृशेन कारणेन प्रपञ्चप्रत्ययोऽप्रत्यूहमुत्पत्तुमर्हति। तच्च प्रत्यक्षमेव। तथाहि नीलं परिच्छिन्दन् पीतादिभ्योऽस्य भेदं परिच्छिनत्ति—संयुक्तविशेष-णलक्षणादिन्द्रियार्थसन्निकर्षात्। नीलं हि नीलमित्यनुभवन्नयं पीतं च पीतमित्यनुभवन् स्मरन् वा शक्नोति निषेध्यनिषेधाधिकरणतया समा-कलयितुं रूपमात्रेणागृहीतपरस्परभेदमपि। न हि तत्र भेदेन प्रथत इत्यभेदेन प्रथेत येनानयोर्नीलपीतयोर्गृहीतस्वरूपयोरवध्यवधिमद्भावो न स्यात्। तथा च तौ गृहीत्वा प्रत्यक्षेण शक्नोत्ययमनयोर्भेदं गृहीतु-मित्यसाम्प्रतमेतत्।

अन्योन्यसंश्रयाद् भेदो न प्रमान्तरसाधनः।
तस्मिन्निदं नायमिति वस्तुभेदं विना न धीः॥ इति॥

एतेन प्रमातुरपि प्रमाया भेदो व्याख्यातः। प्रमातारश्चानेक-विधसुखदुःखोपभोगव्यवस्थानाद्बधिरान्धादिकोविदजाला मुक्तसंसारि-विभागोपपत्तेश्च भेदवन्तोऽनुमीयन्ते एकस्मिन्नपर्यायेण विरुद्धधर्मसंस-र्गाभावात्। कल्पनया कथंचित्सम्भाव्यमानोऽप्ययं गोमयपायसीयन्याय-मावहति। तदेवं प्रत्यक्षादिविरोधादनुपपन्नार्थाः श्रुतय एकमेवाद्वितीय-मित्याद्याः प्रथमां वृत्तिमुल्लङ्घ्य जघन्यामालम्बन्ते-यजमानः प्रस्त-र आदित्यो यूपवदिति। तस्मान्नाद्वैतमिति।

साध्यात्साधनभेदेन सङ्ख्यान्तरैकान्ता अप्यपाकृता मन्तव्या इति॥ ४१॥

( सू० ) "न कारणावयवभावात्" ॥ ४२ ॥

( भा० ) "न सङ्ख्यैकान्तानामसिद्धिः। कस्मात्? कारणस्यावयवभावात्। अवयवः कश्चित् साधनभूत इत्यव्यतिरेकः। एवं द्वैतादीनामपीति" ॥ ४२ ॥

( सू० ) निरवयवत्वादहेतुः ॥ ४३ ॥

( भा० ) कारणस्यावयवभावादित्यहेतुः। कस्मात्? सर्वमेकमित्यनपवर्गेण प्रतिज्ञाय कस्यचिदेकत्वमुच्यते। तत्र व्यपवृक्तोऽवयवः साधनभूतो नोपपद्यते। एवं द्वैतादिष्वपीति।

---

(ख०) पूर्वपक्षवाद्याक्षिपति—न कारणेति सूत्रम्। यदुक्तं कार्यकारणभेदेन नाद्वैतमिति तत् 'न'—कुतः—कारणस्य अवयवभावात् कार्यावयवरूपत्वादित्यर्थः।

सूत्रं व्याचष्टे न सङ्ख्येति। संख्यैकान्तानां नासिद्धिरिति। पृच्छति कस्मादिति। तत्रोत्तरम् कारणेति। तदेव स्पष्टयति अवयव इति। 'अवयवः' साध्यस्येति शेषः। 'अव्यतिरेकः' अभेदः साध्यसाधनयोरिति शेषः। एकस्य च द्वयादीनां वा कश्चिदेकदेश एव साधनम्—तथा च न सङ्ख्यान्तरम् न च साधनाभाव इत्यर्थः ॥४२॥

परिहरति सिद्धान्ती निरवयवत्वादिति सूत्रम्।

सूत्रार्थं विवृणोति कारणस्येति। कारणस्यावयवभावादिति यो हेतुरद्वैतसाधनायोद्भावितः पूर्वपक्षिणा सोऽयमसद्धेतुः। पृच्छति कस्मादिति। उत्तरयति—सर्वमेकमिति। 'अनपवर्गेण' अव्यावृत्या—'व्यपवृक्तः' व्यावृत्तः। यदि साध्यस्य कश्चिदवयवो भवेन्न सङ्ख्यैकान्तः स्यात्। सर्वमेकमित्येतस्मिन् प्रतिज्ञातेऽर्थे न कश्चिद् व्यावर्त्तते यतस्तत्साधनं स्यादित्याशयः।

उक्तमद्वैतवादपरिहारं सङ्ख्यैकान्तवादान्तरेष्वतिदिशति एवमिति।

(भा०)ते खल्विमे सङ्ख्यैकान्ता यदि विशेषकारितस्यार्थभेदविस्तारस्य प्रत्याख्यानेन वर्त्तन्ते-प्रत्यक्षानुमानागमविरोधान्मिथ्यावादा भवन्ति। अथाभ्यनुज्ञानेन वर्त्तन्ते समानधर्मकारितोऽर्थसङ्ग्रहो विशेषकारितश्चार्थभेद इति, एवमेकान्तत्वं जहतीति।
ते खल्वेते तत्त्वज्ञानप्रविवेकार्थमेकान्ताः परीक्षिता इति॥४३॥

(१२)फलपरीक्षाप्रकरणम्।

(भा०) प्रेत्यभावानन्तरं फलम्, तस्मिन्—

(सू०) "सद्यः कालान्तरे च फलनिष्पत्तेः संशयः" ॥ ४४ ॥

---

(ख०) सङ्ख्यैकान्तवादान् विकल्प्य दूषयितुमुक्तम् ते खल्विम इति। वक्रकोटरपाण्यादिविशेषकारितो योऽर्थविशेषः स्थाणुपुरुषादिः स उक्तवादिभिरभ्यनुज्ञायते न वेति विकल्पार्थः। यदि नाभ्यनुज्ञायते तदाऽऽपत्तिमाह प्रत्यक्षेति। एवं सति सकलप्रमाणासिद्धप्रत्याख्यानादप्रामाणिकतया सर्वे एव ते वादा मिथ्यैवेति पर्यवस्यति। यद्यभ्यनुज्ञायते तदा प्रतिज्ञाहानिरेवेत्याह अथाभ्यनुज्ञानेनेति। भेदानामानन्त्यात् तेषामभ्युपगमेन सङ्ख्यैकान्ताः सर्वे एव प्रतिक्षिप्ता भवन्तीत्यर्थः।

प्रकरणार्थमुपसंहरति ते खल्वेत इति। अद्वैतादिष्वेकान्तेषु प्रेत्यभावो न तात्त्विको भवेदपि तु काल्पनिकः। न केवलं प्रेत्यभावोऽपि तु षोडशापि पदार्थाः। तस्मादेतेषां यत् तत्त्वज्ञानं तत्प्रविवेकेन ज्ञानप्रविवेक इति तदर्थमेते परीक्षिताः। यावच्चात्र विचारितं तावदप्रकृतमपि प्रकृतं प्रेत्यभावमुपकरोतीत्यर्थः। एवमेव किल पूर्वानुवृत्ताष्टप्रकरण्यप्रकृतार्थापि सङ्गच्छते सम्बध्यते चाग्रिमप्रकरणार्थेनेति ॥ ४३ ॥

अथोद्देशक्रमानुरोधेन फलस्य परीक्षां प्रस्तौति प्रेत्यभावानन्तरमिति। तद्विषये परीक्षाङ्गभूतसंशयमुपन्यस्यति तस्मिन्निति भाष्यांशमारभ्य सं-

( भा० ) "पचति दोग्धीति सद्यः फलमोदनपयसी । कृषति वपतीति कालान्तरे फलं सस्याधिगम इति । अस्ति चेयं क्रिया–अग्निहोत्रं जुहुयात्स्वर्गकाम–इति । एतस्याः फले संशयः" ॥ ४४ ॥

( सू० ) न सद्यः कालान्तरोपभोग्यत्वात् ॥ ४५ ॥

---

(ख०)शय इति सूत्रांशपर्यन्तम्।सूत्रार्थं विवृणोति पचतीति।पाकादिक्रिया क्रियानन्तरमेव फलं ददाति कर्षणवपनादिक्रिया तु किञ्चित्कालानन्तरं फलं ददाति–अत एवाग्निहोत्रादिक्रियाविषये भवति संशयः–किमेताः क्रियानन्तरं सद्य एव फलं ददत्युत कालान्तर इति ।

तस्याः फले संशय इति भाष्योक्तावस्वरसः प्रदर्शितः परिशुद्धिकृता । फलसामान्यमादाय तत्कालान्तरभावि वा स्यात् सद्यो वेति सन्देहो नोपपद्यते–लोके पक्त्यादीनां फलत्वेऽनन्तरभावित्वस्य धर्मिग्राहकप्रमाणानिर्णीतत्वात् । एवं स्वर्गस्यापि फलत्वे कालान्तरभावित्वस्योभयवादिसिद्धत्वात् । एवं सद्योभावि लोकपक्त्यादिफलं कालान्तरभावि स्वर्गादि वेत्येषोऽपि संशयोऽनुपपन्नो धर्मिभेदादिति । एवं च संशयस्य स्वरूपान्तरम्प्रदर्शितं तेनैव । क्रियैव यागादिका संशयविषयः–क्रियात्वं च संशयकारणम् । चेतनप्रवृत्तिर्हि काचित् सद्यःफला भवति–यथा पचनदोहनानि, काचित्तु कालान्तरभाविफला भवति–यथा कर्षणसेवनादि । अतः साधकबाधकप्रमाणाभावे सति प्रकृते संशय इति ॥ ४४ ॥

संशयं प्रदर्श्य–तत्र ऐहिककीर्त्यकीर्त्यादीनामेव फलत्वसम्भवे नादृष्टस्वर्गादिकल्पनामित्युत्सूत्रे पूर्वपक्षे सिद्धान्तेनोपक्रमते–न सद्य इति सूत्रम् । यद्यप्येतत् सूत्रं न्यायसूचीनिबन्धे नोपलभ्यते तात्पर्यकृता चेदं भाष्यत्वेनैव परिगृहीतम्, –तथापि नानाप्राचीनसूत्रपुस्तकानाम-

( भा० ) स्वर्गः फलं श्रूयते । तच्च भिन्नेऽस्मिन्देहभेदादुत्पद्यते इति न सद्यो ग्रामादिकामानामारम्भफलमिति ॥४५॥

(ख०) नुरोधात् सूत्रमेवेदमिति निर्धारितम् । वार्त्तिकस्वरसोऽप्येवमेव।

सूत्रार्थं विवृणोति स्वर्ग इति । तच्चेति । अस्मिन्देहे 'भिन्ने' नष्टे सति 'देहभेदात्' शरीरान्तराद् उत्पद्यते । पतितेऽस्मिन्देहे देहान्तरापन्नस्यैव स्वर्गादिफलं भवतीत्यर्थः । तत्र दृष्टान्तमाह ग्रामादीति । यथा ग्रामाद्युपार्जनरूपं फलं सेवादिक्रियाया अनन्तरं सद्यो नैवोत्पद्यते तथैव स्वर्गादिफलमपि यागादिक्रियाया अनन्तरं सद्यो नैवायातीत्यर्थः।

अधिकरणार्थो विस्तरेण प्रदर्शितस्तात्पर्यटीकृता । कर्मानन्तरं दुःखं लोकपक्त्यादिकं फलं चोपलभ्यते । प्रशंसन्ति हि लौकिकाः—धार्मिकोयं साधुतम—इति । तत्किमेतावदेवास्य फलमस्त्वथामुष्मिकं स्वर्गादीति संशयः । किन्तावत्प्राप्तम् । स्वर्गादिफलत्वे कर्मणः स्वरूपेणाकारणत्वाच्चिरनिर्वृत्ते तस्मिंस्तदुत्पत्तेरपूर्वकल्पनायां च प्रधानाङ्गापूर्वाणि भूयांसि कल्पनीयानि । न च तान्युत्पन्नमात्राणि जनयन्ति फलमिति तत्सहकार्यन्तराणि कल्पनीयानीत्यदृष्टकल्पनागौरवात्तदनन्तरं दृष्टफलाबाधनाच्च नास्यामुष्मिकं स्वर्गादिफलमपि त्वनन्तरदृश्यमानमेव । तत्रापि दुःखफलत्वे उपदेशव्याघातात्लोकपक्तिलाभख्यात्यादिकमेव फलम् । तच्च सुखहेतुतया स्वर्गादिफलत्वेनोच्यते । दृष्टो हि सुखहेतौ स्वर्गपदप्रयोगो लोके । यथा 'चन्दनं स्वर्गः' 'सूक्ष्माणि वासांसि स्वर्ग' इति प्राप्तम् । एवं प्राप्ते ब्रूमः । स्वर्गपदस्य तावदर्थवादतो—

यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्पदं स्वःपदास्पदमिति—

सुखं प्रति वाचकत्वमवधारितम् । न च तद्वाचकत्वेनैव चन्दनादौ तत्प्रयोगोपपत्तावनेकार्थत्वकल्पना युक्ता । यथाहुः—'अन्याय्यश्चानेकार्थत्वमिति' । तस्मान्मुख्योऽयं स्वर्गशब्द उक्तभेदे सुखे । त-

( सू० ) "कालान्तरेणानिष्पत्तिर्हेतुविनाशात्" ॥४६॥

( भा० ) "ध्वस्तायां प्रवृत्तौ प्रवृत्तेः फलं न कारणमन्तरेणोत्पत्तुमर्हति । न खलु वै विनष्टात्कारणात्किञ्चिदुत्पद्यते इति" ॥ ४६ ॥

( सू० ) प्राङ् निष्पत्तेर्वृक्षफलवत्तत्स्यात् ॥ ४७ ॥

( भा० ) यथा फलार्थिना वृक्षमूले सेकादि परिकर्म क्रियते । तस्मिँश्च प्रध्वस्ते पृथिवीधातुरब्धातुना सङ्गृहीत आ-

---

(ख०)स्मात्स्वर्गकाम इत्यत्र मुख्यार्थसम्भवे नोपचरितार्थता युक्ता। न चानेकार्थकल्पनाभयान्मुख्यार्थ परित्यागो न्याय्यः—प्रमाणसिद्धे नियोगपर्यनुयोगानुपपत्तेः । यथाहुः—श्रुतसिद्धयर्थमश्रुतोपलब्धौ यत्नवता भवितव्यम्, न तु श्रुतशैथिल्यमादरणीयमिति । तथा 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपीति' । न चानन्तरदृश्यमानलोकपक्त्यादि होमाद्यनुष्ठानफलमपि तु तदुपलम्भफलमदाम्भिकानां प्रच्छन्नमनुतिष्ठतामपि लोकपक्त्यादेरभावात् । तस्मात्सुष्ठूक्तं न सद्य इति ॥ ४५ ॥

परः शङ्कते कालान्तरेणेति सूत्रम् । कालान्तरेण तत्कर्मणः फलं न सम्भवति—'हेतोः' तत्फलकारणस्य कर्मणः 'विनाशात्' विनष्टत्वादित्यर्थः ।

सूत्रार्थमाह ध्वस्तायामिति । कर्मसमाप्तौ कर्मणि नष्टे सति तत्कार्यभूतं फलं नोत्पत्तुमर्हति—तत्र हेतुः कारणमन्तरेणेति । तदुत्पत्तिकाले तत्कारणभूतस्य कर्मणोऽभावादित्यर्थः ॥ ४६ ॥

समाधत्ते प्राङ्निष्पत्तेरिति । स्वर्गादिनिष्पत्तेः 'प्राक्' 'तत्' फलस्य द्वारं किञ्चित् 'स्यात्'—वृक्षफलवदित्यर्थः ।

सूत्रार्थं विवृण्वन् सूत्रोक्तं दृष्टान्तं विशदयति यथा फलार्थिनेति । वृक्षमूले सेकादिकर्म यस्मिन् काले क्रियते तस्मिन्नेव काले न तस्य

(भा०)न्तरेण तेजसा पच्यमानो रसद्रव्यं निर्वर्तयति। स द्रव्यभूतो रसो वृक्षानुगतः पाकविशिष्टो व्यूहविशिषेण सन्निविशमानः पर्णादि फलं निर्वर्तयति। एवं परिषेकादिकर्म चार्थवत्। न च विनष्टात्फलनिष्पत्तिः। तथा प्रवृत्त्या संस्कारो धर्माधर्मलक्षणो जन्यते। स जातो निमित्तान्तरानुगृहीतः कालान्तरे फलं निष्पादयतीति। उक्तश्चैतत्—'पूर्वकृतफलानुबन्धात्तदुत्पत्तिः' इति॥ ४७॥

( भा० ) "तदिदं प्राङ् निष्पत्तेर्निष्पद्यमानम्—

(सू०) नासन्न सन्न सदसत्सदसतोर्वैधर्म्यात्" ॥ ४८॥

---

(ख०)फलोत्पत्तिरपि तु बहुकालानन्तरम्। वृक्षसेकफलोत्पत्त्योर्मध्ये च बहूनि द्वाराणि भवन्ति तैश्च द्वारैः सेकादेरेव फले वृक्षफलमिति व्यवहारो भवति—न च विनष्टादेव सेकादेस्तत्फलमिति कोऽपि मन्यते इति दृष्टान्तार्थः। उक्तं दृष्टान्तं दार्ष्टान्तिके योजयति तथा प्रवृत्त्येति। एवमेव कर्मणि निष्पन्ने तन्निष्पत्तितत्फलोत्पत्त्योरन्तराले तत्कर्मगतधर्माधर्मरूपः संस्कारोऽवान्तरकारणान्तरसहकृतः फलनिष्पत्तिद्वारभूत उत्पद्यते तेन च द्वारेणोत्पन्नं स्वर्गादिफलमुक्तकर्मण एवेति मन्यन्ते प्रेक्षावन्त इत्याशयः। एष तु संस्कारो न स्नानादिजन्य इव बोद्धव्योऽपि तु पुरुषधर्मतामात्रेण संस्कार इत्युच्यते। परमार्थतस्त्वयं धर्मः पुरुषाश्रयोऽपि कर्मणा फले जनयितव्ये तस्य वास्तवव्यापार इति तात्पर्यकृतः। उक्तेऽर्थे पूर्वोक्तं स्मारयति पूर्वकृतेति। तृतीयाध्यायगतद्वितीयाह्निकस्थषष्ठितमं सूत्रमेतत्॥ ४७॥

इदमिदानीं चिन्त्यते—किमेतत्फलमुत्पत्तेः प्रागसद्वा सद्वा सदसद्वाऽनुभयं वेति। तत्र समस्तपक्षाक्षेपेण फलाभावमभिधित्सुः पूर्वपक्षयति—तदिदमिति भाष्याक्षराण्यारभ्य वैधर्म्यादिति सूत्राक्षरपर्यन्तम्।

( भा० ) "प्राङ् निष्पत्तेर्निष्पत्तिधर्मकं नासत्-उपादानानियमात् । कस्यचिदुत्पत्तये किञ्चिदुपादेयं न सर्वं सर्वस्येत्यसद्भावे नियमो नोपपद्यते इति । न सत्-प्रागुत्पत्तेर्विद्यमानस्योत्पत्तिरनुपपन्नेति । सदसत् न-सदसतोर्वैधर्म्यात् । सदित्यर्थाभ्यनुज्ञा । असदिति अर्थप्रतिषेधः।एतयोर्व्याघातो वैधर्म्यम्।

(ख०)'तदिदं निष्पद्यमानं'फलं 'निष्पत्तेः प्राक्' 'नासन्न सन्न सदसत्'-कस्मात्-'सदसतोर्वैधर्म्यात्'-इति सम्बन्धः । कार्यकारणभाव एव न विचारसह इति पूर्वपक्षहृदयम् ।

यद्यप्यनुभयपक्षो न धृतः सूत्रकारेण भाष्यकारेण वा तथापि वार्त्तिककारोक्त्यनुरोधेन सोऽप्युक्तस्तात्पर्यकारेणेत्यवसेयम् ।

सूत्रार्थं विवृण्वन् कार्यन्नासदिति प्रथमं कल्पं गृह्णाति प्राङ् निष्पत्तेरिति । 'निष्पत्तिधर्मकं' यस्य उत्पत्तिर्भवति तत् कार्यम् फलमिति यावत्-न असत् प्रागुत्पत्तेरित्यर्थः । कुत इत्यत आह उपादानेति । तद् विवृणोति कस्यचिदिति । घटस्योत्पत्तये मृदेवोपादीयते नान्यत् किञ्चित् । कार्यस्यासत्त्वे सर्वस्योत्पत्तये सर्वमेवोपादीयेत नियमो न भवेत् । अत्र च हेतुरयमेव यत् घटः यत्किञ्चिद्रूपेण प्रागुत्पत्तेरपि मृदि सन्नेव वर्त्तत इति । यथोक्तं-'असदकरणादुपादानग्रहणा'दिति ।

प्राङ्निष्पत्तेः कार्यन्न सदिति द्वितीयं कल्पं गृह्णाति न सदिति । तत्र हेतुमाह विद्यमानस्येति । यद्वर्त्तत एव तस्य पुनरुत्पत्तिर्न सम्भवतीत्यर्थः ।

कार्यन्न सदसदित्युभयमिति तृतीयं कल्पं गृह्णाति सदसदिति । तत्र हेतुमाह सदसतोरिति । सत्त्वासत्त्वयोरत्यन्तविरुद्धत्वान्नैकत्र समावेशः सम्भवतीत्यर्थः । विरोधं प्रकटयति सदित्यर्थेति । 'घटादि सत्' इत्यस्यायमर्थो यद् घटादि अस्तीति-'घटाद्यसदिति' अस्यायमर्थो यद् घटादि नास्तीति । एवं चानयोः 'वैधर्म्यं' 'व्याघातः' परस्परविरुद्ध-

(भा०)व्याघातादव्यतिरेकानुपपत्तिरिति" ॥ ४८ ॥

( भा० ) प्रागुत्पत्तेरुत्पत्तिधर्मकमसदित्यद्धा । कस्मात्?-

( सू० ) उत्पादव्ययदर्शनात् ॥ ४९ ॥

( भा० ) यत्पुनरुक्तं-प्रागुत्पत्तेः कार्यं नासदुपादाननियमादिति—

( सू० ) बुद्धिसिद्धं तु तदसत् ॥ ५० ॥

( भा० ) इदमस्योत्पत्तये समर्थं न सर्वमिति प्रागुत्पत्ते-

(ख०) त्वमिति यावत् ।

नन्वस्तु विरोधस्ततोऽपि किमित्यत आह—व्याघातादिति । परस्परविरुद्धयोरपृथक्त्वं नोपपद्यते-तथाच सदसतोरैकाधिकरण्यं नैव सम्भवतीत्यर्थः ॥ ४८ ॥

सिद्धान्तं प्रस्तौति प्रागुत्पत्तेरिति । असदेव कार्यं प्रागुत्पत्तेरित्येव 'अद्धा' सत्यमित्यर्थः । पृच्छति कस्मादिति ।

तत्रोत्तरं वदन् प्रागुत्पत्तेरसदेव कार्यमिति सिद्धान्तमाह—उत्पादेति सूत्रम् । यदि प्रागुत्पत्तेरपि कार्यं घटादि सदेव स्यात् तर्हि तस्य 'उत्पादः' उत्पत्तिः 'व्ययः' नाशश्च न स्यात्—दृश्यते तु कार्यजातस्योत्पादविनाशौ-तस्मात्तदसदेव प्रागुत्पत्तेरिति सूत्रार्थः स्पष्टत्वाद् भाष्यकरेण नोक्तः ॥ ४९ ॥

असत्त्वपक्षे यो दोष उद्भावितस्तस्यापहारं करिष्यन् तमनुवदति यत्पुनरिति । उपादाननियमात् कार्यं नासदिति यदुक्तं तत्परिहारे सूत्रमग्रिममित्यर्थः ।

उक्तदोषपरिहारमाह बुद्धीति सूत्रम् । 'तत्' कार्यम् 'असत्' प्रागभावप्रतियोगि 'बुद्धिसिद्धम्' बुद्धिविषयीकृतमित्यर्थः ।

सूत्रार्थमाह इदमस्येति । भाविकार्यमनेनैव 'कारणेन जन्यते नान्येनेत्यनुमानाद् बुद्धयैव सिद्धं कार्यमसदित्यर्थः । नन्वसत्कार्यपक्षे

(भा०)नियतकारणं कार्यं बुद्ध्या सिद्धमुत्पत्तिनियमदर्शनात्। तस्मादुपादाननियमस्योपपत्तिः । सति तु कार्ये प्रागुत्पत्तेरुत्पत्तिरेव नास्तीति ॥ ५० ॥

( सू० ) "आश्रयव्यतिरेकाद् वृक्षफलोत्पत्तिवदित्यहेतुः" ॥ ५१ ॥

( भा० ) "मूलसेकादि परिकर्म फलं चोभयं वृक्षाश्रयम् ।

---

(ख०)तन्तव एव पटस्योपादानं न वीरणादीत्ययं नियमो न स्यात्—यथोक्तमुपादाननियमादितीत्यत आह तस्मादिति । असत्त्वाविशेषेऽपि स्वकारणादुत्पन्नं किञ्चिदेव किञ्चित्कार्यं जनयितुं समर्थं नान्यदिति स्वभावविशेषादेवोपपद्यत इत्यर्थः । सत्कार्यपक्षे दोषमाह सति त्विति। यद्युत्पत्तेः प्रागपि सदेव कार्यं तर्हि तस्य कार्यस्योत्पत्तिरेव न भवति व्यर्थत्वात्—यदि चोत्पत्तिर्न भवत्येव तर्हि कुतस्तस्याः कारणं कुतश्च तत्कारणे नियम इत्याशयः । [ अथवा यदि सदेव कार्यम् तर्हि तस्या उत्पत्तिरेवासतीति प्राप्तं असद्यत्किञ्चिदित्यर्थः । पूर्वोक्त एवार्थः साधीयान् प्रतिभाति ]। सत्कार्यवाद्यभिमते विश्वस्य प्रधानोपादानत्वे-तस्याभेदात्—कारणात्मकत्वाच्च कार्यजातस्य—सर्वं सर्वात्मकमितीदमिदं नेदमिदानीं नेदानीमिति नियमः सत्कार्यपक्ष एव न स्यात्, कस्याचित् कुतश्चिद्विवेकहेतोरभावादित्याद्यवधेयम् ॥ ५० ॥

देहाद्यतिरिक्तमात्मानं नित्यं परलोकिनमसन्तम्मन्यमानः कश्चित् पारलौकिकफलमाक्षिपति आश्रयेति सूत्रम् । 'वृक्षफलवदिति' यो दृष्टान्तः सिद्धान्तिनोद्भवितः स 'अहेतुः' असाधकः परलोकभाविफलस्य, कुतः—'आश्रयव्यतिरेकात्' सुखदुःखादिरूपफलाश्रयस्योभयलोकानुगतस्याभावादित्यर्थः ।

सूत्रार्थमाह मूलेति । मूलसेकफलोत्पादयोरेक एव वृक्ष आश्रयः।

(भा०)कर्म चेह शरीरे फलं चामुत्रेत्याश्रयव्यतिरेकादहेतुरिति"५१

( सू० ) प्रीतेरात्माश्रयत्वादप्रतिषेधः ॥ ५२ ॥

( भा० ) प्रीतिरात्मप्रत्यक्षत्वादात्माश्रया । तदाश्रयमेव कर्म धर्मसंज्ञितं-धर्मस्यात्मगुणत्वात् । तस्मादाश्रयव्यतिरेकानुपपत्तिरिति ॥ ५२ ॥

( सू० ) "न पुत्रस्त्रीपशुपरिच्छद-
हिरण्यान्नादिफलनिर्देशात्" ॥ ५३ ॥

( भा० ) "पुत्रादि फलं निर्दिश्यते न प्रीतिः-'ग्रामकामो

---

(ख०)कर्मणस्तु होमादेराश्रयो वर्त्तमानं शरीरम् । न च तच्छरीरमामुष्मिकस्य फलस्य स्वर्गादेराश्रयो भवितुमर्हति शरीरे नष्ट एव स्वर्गादेर्भावात् । तस्मात् 'आश्रयव्यतिरेकात्, स्वर्गादेः 'वृक्षफलोत्पत्तिवत्' इत्ययं दृष्टान्तो होमादेः स्वर्गफलत्वसाधने 'अहेतु'रित्यर्थः ॥ ५१ ॥

उक्तमाक्षेपं परिहरति प्रीतेरिति सूत्रम् । अस्त्यात्मा स्वर्गोपभोगसमर्थः शरीरव्यतिरिक्त एव कर्मणां कर्त्तेत्युपपादितमेवास्माभिरित्युपपद्यत एवात्राप्येकाश्रयत्वमेव कर्मफलयोरित्याशयः ।

सूत्रार्थमाह प्रीतिरिति । 'प्रीतिः' सुखम्-स्वर्गश्च सुखविशेष एवेति प्रीतेरेवात्रोपादानम् । सुखमात्रमात्मनः प्रत्यक्षमित्युपपादितम्प्राक् । तथाचात्मैवाश्रयः सुखस्य । ननु भवतु सुखस्याश्रय् आत्मा कर्मणस्त्वाश्रयः शरीरमेवेति कर्मफलयोर्भिन्नाश्रयत्वं तदवस्थमेवेत्यत आह कर्म चेहेति । यत्किल स्वर्गादिफलं जनयति न तत् शरीरं चेष्टात्मकमपि तु स होमादिजन्यो धर्म एव स चात्मन्येव सम्भवैतीति नाश्रयभेदः कर्मफलयोरित्याशयः ॥ ५२ ॥

अस्त्वात्माश्रयं स्वर्गादि तथाऽप्यव्यापको हेतुः पुत्रादिफलेभ्यो निवृत्तेरित्याशयवान् पर आक्षिपति-न पुत्रेति सूत्रम् ॥

(भा०)यजेत' 'पुत्रकामो यजेतेति' । तत्र यदुक्तं-प्रीतिः फलम्-इत्येतदयुक्तमिति" ॥ ५३ ॥

( सू० ) तत्सम्बन्धात् फलनिष्पत्तेस्तेषु फलवदुपचारः ॥ ५४ ॥

( भा० ) पुत्रादिसम्बन्धात् फलं प्रीतिलक्षणमुत्पद्यत इति पुत्रादिषु फलवदुपचारः । यथान्ने प्राणशब्दः-अन्नं वै प्राणा-इति ॥ ५४ ॥

( १३ ) दुःखपरीक्षाप्रकरणम् ।

( भा० ) फलानन्तरं दुःखमुद्दिष्टमुक्तं च-बाधनालक्षणं दुःखम्-इति ।

---

(ख०)सूत्रार्थमाह पुत्रादीति । न केवलं प्रीतिरेव यागादिफलत्वेनोपवर्ण्यते श्रुतिवाक्येष्वपि तु पुत्रादिप्राप्तिरपि । एवं च प्रीतेरात्माश्रयत्वेऽपि न सर्वस्य फलस्य तथेति अव्यापक एव हेतुरित्यर्थः ॥५३॥

आक्षेपं परिहरति तत्सम्बधादिति ।

सूत्रार्थमाह पुत्रादीति । स्वर्गोऽपि यावत् स्वर्गतयैव न काम्यते, किन्तु भोग्यतया । एवं पुत्रादयोऽपि भोग्यतयैव काम्यन्ते । न च स्वर्गस्य पुत्रादेर्वा स्वरूपमेव भोग्यम्-भोग्यं तु तत्साध्यं सुखमेव । तस्मात् 'तेषां' पुत्रादीनां 'सम्बन्धात्' 'फलस्य' सुखस्य 'निष्पत्तेः' उत्पत्तेः 'तेषु' पुत्रादिषु 'फलवदुपचारः' फलशब्दप्रयोग इत्यर्थः । औपचारिकप्रयोगस्य दृष्टान्तमाह-यथान्न इति ॥ ५४ ॥

दुःखपरीक्षायाः क्रमप्राप्तिं प्रदर्शयति फलानन्तरमिति ।

अस्यां परीक्षायामाक्षेपः-"ननु किमिह परीक्षणीयम् । नहि कश्चिद् दुःखस्वरूपे विप्रतिपद्यते-नापि तद्धेयमहेयं वेति कश्चित् सन्दिग्धे । नित्यमनित्यं वा दुःखमित्यत्र परीक्षा प्रकृतोपयोगिनी

(भा०) "तत्किमिदं प्रत्यात्मवेदनीयस्य सर्वजन्तुप्रत्यक्षस्य सुखस्य प्रत्याख्यानम्। आहोस्विदन्यः कल्प इति?"

अन्य इत्याह। कथम्? न वै सर्वलोकसाक्षिकं सुखं श-

(ख०)स्यात्-तन्नित्यत्वे हि शास्त्रानर्थक्यप्रसङ्गः-अस्ति च संशयकारणं वादिविप्रतिपत्तिः-साङ्ख्या हि सर्वनित्यत्ववादिनो दुःखमपि नित्यमाहुः-तथाऽपि तन्मतानिरासादनन्तरं च सत्कार्यबाधनिषेधादियमपि निरःवशेषिता। कारणं च दुःखस्य दृष्टरूपमहिकण्टकादि न विप्रतिपत्तिविषयः। अदृष्टरूपा च प्रवृत्तिः परीक्षितैव। तदवान्तरकार्यरूपं च जन्मादि परीक्षितमेव। कारणनिवृत्तौ च कार्यं निवर्त्तत इति प्रथमाध्यायद्वितीयसूत्रे परीक्षितम्। तत् किमपरमवशिष्यते यदर्थोयमारम्भ" इति ॥ तत्परिहारश्चेत्थम्-बाधनालक्षणं दुःखमिति लक्षितं दुःखम्। तत्र बाधनाशब्देन बाधबुद्धिरुच्यते। अनेन च लक्षणेन दुःखायतनानि दुःखसाधनानि सुखं च व्याप्यते। अतो मुख्यां बाधनाबुद्धिमादाय पूर्वपक्षावकाश इति ॥

तत्र पूर्वपक्षिणः प्रश्नः तत्किमिति। भवतु बाधनालक्षणं दुःखमनुभूयमानम्। यत्पुनरिदं प्रत्यात्ममनुकूलवेदनीयं सुखं तत्कथं दुःखम् अनुभवविरोधात्। शरीरेन्द्रियबुद्धयश्च यदि दुःखहेतुतया 'दुःखं' कस्मात्सुखहेतुतया सुखमेव न भवन्ति। सेयमतिभीरुता सकललोकयात्राविरोधिनी। यथा मांसार्थी कण्टकानुद्धृत्य मांसमश्नन्न कण्टकजन्यदुःखमाप्नोत्येवमेव प्रेक्षावान् दुःखमुद्धृत्येन्द्रियसाधनं सुखमेव भोक्ष्यते। सन्ति च विविधदुःखपरिवर्जनहेतवो दृष्टाः परिदृष्टसामर्थ्या अन्वयव्यतिरेकाभ्यामिति पूर्वपक्षप्रश्नाशयः।

तत्रोत्तरम् अन्य इति। उत्तरस्याशयं बुभुत्समानः पृच्छति कथमिति। स्वाशयं विशदयति सिद्धान्ती न वै सर्वेति। सुखप्रत्याख्यानादन्यदेव तात्पर्यमस्माकमित्यर्थः। ततः किं तात्पर्यं सर्वं

(भा०)क्यं प्रत्याख्यातुम् । अयं तु जन्ममरणप्रबन्धानुभवनिमित्ताद् दुःखान्निर्विण्णस्य दुःखं जिहासतो दुःखसंज्ञाभावनोपदेशो दुःखहानार्थ इति । कया युक्त्या ? सर्वे खलु सत्त्वनिकायाः सर्वाण्युत्पत्तिस्थानानि सर्वः पुनर्भवो बाधनानुषक्तो दुःखसाहचर्याद्बाधनालक्षणं दुःखमित्युक्तमृषिभिर्दुःखसंज्ञाभावनमुपदिश्यते । अत्र च हेतुरुपादीयते--

---

(ख०)दुःखमिति सिद्धान्तोपदेशस्येत्यत आह अयं त्विति । 'जन्ममरणप्रबन्धस्य अनुभवः' प्राप्तिः-तन्निमित्तात् दुःखात दुःखोपदेशपरिशीलनेन निर्विण्णस्य विरक्तस्य अलम्प्रत्ययवतः-अत एव 'दुखं जिहासतः, हातुमिच्छतः पुरुषस्य दुःखहानार्थं एवायमुपदेश इति सम्बन्धः ॥ केन प्रकारेणायमुपदेशो दुःखहानाय कल्पत इति पृच्छति कयेति । तत्रोत्तरम् सर्वे खल्विति । 'सत्त्वानां' जीवानां 'निकायाः' शरीराणि-'उत्पत्तिः' सुखदुःखहेतुभूता विषयसम्पत्तिस्तस्याः 'स्थानानि'भुवनानि आ चोत्तमात्सत्यलोका दाचाधस्तादवीचेः-सर्वश्च पुनर्जन्मप्रबन्धः-सर्वमेतत् दुःखेनानुस्यूतं अत एव 'बाधनया' प्रतिकूलवेदनया 'अनुषक्तं' सम्बद्धं सत् 'बाधनालक्षणं दुःखमिति' दुःखलक्षणाक्रान्तमेव भवति । एतन्मूलक एव च सर्वमेतद्दुःखमित्युपदेशः ॥ एतदुक्तम्भवति । यदि दुःखपरिवर्जनेन शक्येत सुखमुपादातुं ततस्तादृशमनुकूलवेदनीयं कः प्रेक्षावान् प्रजह्यात् । न तु तादृशमस्ति सुखं क्वचिदपि-सर्वस्य दुःखाविनाभाविनः केवलस्य सुखस्योपादातुमशक्यत्वात् नहि मधुविषसम्पृक्तमन्नं विषमपहृत्य शक्यम्मधुमात्रमुपादातुम् । तस्मान्नेदं सुखस्यात्यन्तं प्रत्याख्यानमपि तु सुख एव दुःखभावनमात्रमुपदिश्यते ऋषिणेति ॥

सूत्रमवतारयति अत्रेति । 'अत्र' सुखे दुःखभावना कार्येत्यस्मिन्नुपदेशे, तत्समर्थनाय 'हेतुः उपादीयते' सूत्रकारेणेत्यर्थः ॥

( सू० ) विविधबाधनायोगाद् दुःखमेव जन्मोत्पत्तिः ॥ ५५ ॥

( भा० ) जन्म–जायते इति–शरीरेन्द्रियबुद्धयः। शरीरादीनां संस्थानविशिष्टानां प्रादुर्भाव-उत्पत्तिः। विविधा च बाधना–हीना मध्यमा उत्कृष्टा चेति। उत्कृष्टा नारकिणाम्। तिरश्चां तु मध्यमा। मनुष्याणां तु हीना। देवानां हीनतरा वीतरागाणां च। एवं सर्वमुत्पत्तिस्थानं विविधबाधनानुषक्तं पश्यतः सुखे तत्साधनेषु च शरीरेन्द्रियबुद्धिषु दुःखसंज्ञा व्यवतिष्ठते। दुःखसंज्ञाव्यवस्थानात्सर्वलोकेष्वनभिरतिसंज्ञा भवति। अनभिरतिसंज्ञामुपासीनस्य सर्वलोकविषया तृष्णा विच्छिद्यते। तृष्णाप्रहाणात्सर्वदुःखाद्विमुच्यत इति। यथा विषयोगात्पयो

---

(ख०)सूचितं हेतुमाह विविधेति सूत्रम्। 'जन्मनः' शरीरादेः 'उत्पत्तिः' दुःखम्' इत्येव भावयितव्या–कुतः–विविधबाधनायोगादिति योजना।

सूत्रार्थमाह जन्मेति। सूत्रस्थजन्मपदं व्याकरोति जायत इति। ततश्च फलितार्थमाह शरीरेति। यज्जायते तज्जन्मेति व्युत्पत्त्या शरीरादीन्येव 'जन्म'पदेन विवक्षितानीत्यर्थः। उत्पत्तिपदं व्याचष्टे शरीरादीनामिति। विविधबाधनापदं व्याचष्टे विविधेति। काश्च ता नानाविधा इति प्रदर्शयति हीनेति। ता वर्णयति उत्कृष्टा नारकिणामिति॥ फलितार्थमाह एवमिति। सर्वमेतच्छरीरादि दुःखमूलमिति भावयन् सुखं तत्साधनं शरीरादि च दुःखमेव मन्यत इत्यर्थः। ततः किमित्यत आह दुःखसंज्ञेति। 'दुःखसंज्ञा' सर्वमिदं दुःखमेवेति बुद्धिः यदा व्यवतिष्ठते तदा सर्वस्माद् विरक्तो भवति–विरक्तिं भजमानः सर्वसुखतृष्णाविलोपः–तृष्णालोपे च सर्वदुःखविमोक्ष

(भा०)विषमिति बुध्यमानो नोपादत्ते । अनुपाददानो मरणदुःखं नाप्नोति ॥ ५५ ॥

(भा०) दुःखोद्देशस्तु न सुखस्य प्रत्याख्यानम् । कस्मात्?-

(सू०) न, सुखस्याप्यन्तरालनिष्पत्तेः ॥५६॥

(भा०) न खल्वयं दुःखोद्देशः सुखस्य प्रत्याख्यानम् । कस्मात् ? सुखस्याप्यन्तरालनिष्पत्तेः । निष्पद्यते खलु बाधनान्तरालेषु सुखं प्रत्यात्मवेदनीयं शरीरिणाम् । तदशक्यं प्रत्याख्यातुमिति ॥ ५६ ॥

(भा०) अथापि—

(सू०) बाधनानिवृत्तेर्वेदयतः पर्येषणदोषादप्रतिषेधः ॥ ५७ ॥

---

(ख०)इत्यर्थः । उक्तेऽर्थे दृष्टान्तमाह यथा विषेति । 'नोपादत्ते' पय इति शेषः । 'मरणदुःखम्' विषजन्यमरणम् ॥ ५५ ॥

सर्वं दुःखमिति भावनोपदेशस्य यथोक्तमेव तात्पर्यन्न पुनः सुखस्यात्यन्तप्रत्याख्यानमित्येव द्रढयन् पुनराह दुःखोद्देश इति । पृच्छति कस्मादिति । सुखमत्यन्तं कस्मान्न प्रत्याख्यायत इति प्रश्नार्थः ।

तत्रोत्तरम् न सुखस्येति सूत्रम् । 'न' सुखस्यात्यन्तं प्रत्याख्यानम्- कुतः—सुखस्यापि दुःखानामन्तरालेषु 'निष्पत्तेः'इति योजना ।

सूत्रार्थमाह- न खल्विति ॥ ५६ ॥

सुखस्यात्यन्तम्प्रत्याख्यानं न सम्भवतीत्येतस्मिन्नर्थे हेत्वन्तरमवतारयति अथापीति ।

तदेव हेत्वन्तरमाह बाधनानिवृत्तेरिति सूत्रम् । 'अप्रतिषेधः' अप्रत्याख्यानं (सुखस्येति शेषः)—कुतः—(सुखं) 'वेदयतः'

(भा० ) सुखस्य दुःखोद्देशेनेति प्रकरणात् । पर्येषणं-प्रार्थना-विषयार्जनतृष्णा । पर्येषणस्य दोषो-यदयं वेदयमानः प्रार्थयते तस्य प्रार्थितं न सम्पद्यते, सम्पद्य वा विपद्यते, न्यूनं वा सम्पद्यते, बहुप्रत्यनीकं वा सम्पद्यते—इत्येतस्मात्पर्येषणदोषान्नानाविधो मानसः सन्तापो भवति । एवं वेदयतः पर्येषणदोषाद्बाधनाया अनिवृत्तिः । बाधनाऽनिवृत्तेर्दुःखसंज्ञाभावनमुपदिश्यते। अनेन कारणेन दुःखं जन्म, न तु सुखस्याभावादिति।

अथाप्येतदनूक्तम्—

कामं कामयमानस्य यदा कामः समृध्यते ।
अथैनमपरः कामः क्षिप्रमेव प्रबाधते ॥

---

(ख०) अनुभवतः—'पर्येषणदोषात्' तृष्णाया अनुवर्त्तनात्—'बाधनानिवृत्तेः' बाधनाबुद्धेः 'अनिवृत्तेः' इति योजना ॥

सूत्रं व्याचक्षाणः सूत्रवाक्यम्प्रपूरयति सुखस्येति । दुःखोद्देशेन सुखस्य न प्रतिषेध इति सम्पूर्णं वाक्यम् । तत्र हेतुमाह प्रकरणादिति। उक्तस्यैवार्थस्येदं प्रकरणं भवति यत इत्यर्थः । पर्येषणपदस्यार्थमाह पर्येषणमिति । तृष्णारूपस्य पर्येषणस्य दोषं वर्णयति यदयमिति । इदं मे सुखसाधनमिति वेदयन् सुखसाधनं प्रार्थयते । इयं च प्रार्थना बहुप्रकारकपीडाहेतुरिति दर्शयति तस्य प्रार्थितमिति । 'विपद्यते' नश्यति । ( बहुप्रत्यनीकम् ) अनेकप्रतिकूलानुषक्तम् । एवञ्च बहुविधतापस्य सत्त्वात् बाधनाया अनिवृत्तिः ॥ एतन्मूलक एव सुखस्य दुःखभावनोपदेश इत्याह बाधनेति । सन्तापकारणबहुलत्वादेव जन्म दुःखमिति वर्ण्यते न तु सुखस्यान्ताभावादेवेत्याह अनेनेति ॥

उक्तेऽर्थे वृद्धसम्मतिद्वयमवतारयति अथाप्येतदिति । तत्राद्यम्-काममिति । 'कामं' काम्यं कामयमानस्य 'यदा कामः समृध्यति' सम्पन्नो भवति—'अथ' अनन्तरम् (एनम्) पुरुषम् 'अपरः कामः'

(भा०)'अपि चेदुदनेमि समन्ताद् भूमिमिमां लभते सगवाश्वां न स तेन धनेन धनैषी तृप्यति किन्नु सुखं धनकाम'इति ॥५७॥

( सू० ) दुःखविकल्पे सुखाभिमानाच्च ॥५८॥

( भा० ) दुःखसंज्ञाभावनोपदेशः क्रियते । अयं खलु सुखसंवेदने व्यवस्थितः सुखं परमपुरुषार्थं मन्यते-न सुखादन्यन्निःश्रेयसमस्ति । सुखे प्राप्ते चरितार्थः कृतकरणीयो भवति । मिथ्यासङ्कल्पात्सुखे तत्साधनेषु च विषयेषु संरज्यते । संरक्तः सुखाय घटते । घटमानस्यास्य जन्मजराव्याधिप्रायणानिष्टसंयोगेष्टवियोगप्रार्थितानुपपत्तिनिमित्तमनेकविधं यावद् दुःखमुत्पद्यते तं दुःखविकल्पं सुखमित्यभिमन्यते । सुखाङ्गभूतं दुःखम् । न दुःखमनासाद्य शक्यं सुखमवाप्तुम् । तादर्थ्यात्सुखमेवेदमिति सुखसंज्ञोपहतप्रज्ञो जायस्व म्रियस्व सन्धावेति सं-

---

(ख०)इच्छा—क्षिप्रं बाधते—स्वर्गादिप्राप्तावपि स्वाराज्यादि कामयते एवं तत्प्राप्तौ प्राजापत्यादीत्यस्येच्छा तदुपायप्रार्थनादिना दुःखेन प्रबाधत इत्यर्थः ॥

अपरं वाक्यम्—अपि चेदिति । 'समन्तादुदनेमि यथाभवति तथा भूमिं लभत' इति योजना ॥ ५७ ॥

नन्वयं यद्यप्यन्तराले सुखान्यनुभवति तथापि दुःखसम्भेदमाकलयन्ननुपदिष्टोऽप्युपदेशं विनैव स्वयमेव निवर्त्स्यति-कृतमस्य दुःखभावनोपदेशेनेत्यत आह-दुःखविकल्प इति सूत्रम् । दुःखस्य विविधे कल्पे ( निषिद्धहिंसाभोजनादिरूपे ) सुखाभिमानो दृश्यत एवाविवेकिनाम् अत एवोपदेशस्यावसर इत्याशयः ।

सूत्रार्थं व्याचक्षाणः सूत्रवाक्यं पूरयति दुःखेति । आशयं वर्णयति अयं खल्विति । अयमिति प्राकृतः पुरुषः । जायस्वेति-

(भा०)सारं नातिवर्त्तते।तदस्याः सुखसंज्ञायाः प्रतिपक्षो दुःखसंज्ञा- भावनमुपदिश्यते-दुःखानुषङ्गाद् दुःखं जन्मेति-न सुखस्या- भावात्।

"यद्येवं कस्माद् दुःखं जन्मेति नोच्यते ? सोऽयमेवं वाच्ये यदेवमाह दुःखमेव जन्मेति-तेन सुखाभावं ज्ञापयतीति"।

जन्मविनिग्रहार्थीयो वै खल्वयमेवशब्दः।कथम् ? न दुःखं जन्म

(ख०)पुनर्जायते पुनर्म्रियते-जनित्वा म्रियते-मृत्वा जायते-तदिदं सन्धा- वनव्यापारप्रचय इत्यर्थः। शास्त्रशिष्टानां विवेकिनां खलु विविधबाधनानु- षङ्गादनवयवेन सुखमात्रं दुःखमेवेति विनिश्चयः। अविवेकिनस्तु प्रणय- कलहकुपितकुरङ्गशावलोचनाङ्गनाऽलक्तकरसार्द्रपादपल्लवपातमपि शि- रसि रहसि सुखमभिमन्यमाना घनपुलककञ्चुकाञ्चिततनवः सार्द्रा- नन्दाश्रुप्लुतनयना निर्वृण्वन्तीति तान् प्रत्ययमुपदेशोऽर्थवानेवेत्यर्थ इति तात्पर्यकृतः।

उपसंहरति दुःखानुषङ्गादिति। एवञ्च न सुखस्यात्यन्तम्प्रत्या- ख्यानमित्यर्थः।

चोदयति यद्येवमिति। यदि दुःखानुषङ्गमात्रादेव जन्म दुःख- मिति मतं किमर्थन्तर्हि 'एव'कारप्रयोगः 'दुःखमेव जन्मे'त्यत्र। एवकारप्रयोगेण सूच्यते यत्सुखस्य सर्वथा प्रत्याख्यानमेवाभीष्टं सि- द्धान्तिनः। तच्चानुभवविरुद्धमेवेत्याशयः।

परिहरति जन्मविनिग्रहार्थीय इति। 'जन्मविनिग्रहो' जन्म- निवृत्तिः-स एवार्थोऽत्र वर्तत इति। एतदुक्तम्भवति-यद्यपि स्वरू- पतो जन्म न दुःखमेव तथापि तद्दुःखमेवेति भावयित- व्यम्। न मनागपि सुखबुद्धिः कर्त्तव्या-अनेकानर्थपरम्परापातेनापवर्ग- प्रत्यूहप्रसङ्गादिति। एवञ्च 'दुःखमेव जन्मेत्य'नुशासनं जन्मनो विनिग्रह- मेव शास्ति-सर्वं दुःखमिति भावयन् दुःखसाधनानि नोपादत्ते-अनु-

(भा०)स्वरूपतः,किन्तु दुःखोपचारात् । एवं सुखमपीति।एतदनेनै-
व निर्वर्त्यते न तु दुःखमेव जन्मेति ॥ ५८ ॥

( १४ ) अपवर्गपरीक्षाप्रकरणम् ।

( भा० ) दुःखोपदेशानन्तरमपवर्गः । स प्रत्याख्यायते—

(सू० ) "ऋणक्लेशप्रवृत्त्यनुबन्धादपवर्गाभावः"॥५९॥

( भा० ) "ऋणानुबन्धान्नास्त्यपवर्गः । 'जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणैर्ऋणवान् जायते–ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य'–इति ऋणानि । तेषामनुबन्धः-स्वकर्मभिः सम्बन्धः । कर्मसम्बन्धवचनात्–'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ चेति जरया ह एष तस्मात्सत्राद्विमुच्य-

---

(ख०) पाददानश्च विमुच्यत इत्याशयः ॥

उपसंहरति एतदनेनेति । उक्तप्रकारेण जन्मनिवृत्तिरेवोपदेशेन सम्पाद्यते न तु सुखं सर्वथा नास्त्येवेति साध्यत इत्यर्थः ॥ ५८ ॥

क्रमप्राप्तामपवर्गपरीक्षामुपक्रमते दुःखेति । अपवर्ग इति–उद्दिष्टो लक्षितश्चेति शेषः । तत्र तावत्पूर्वपक्षं प्रस्तौति स प्रत्याख्यायत इति । नास्त्यपवर्ग इति पूर्वपक्षः । तत्र सूत्रम् ऋणेति । नास्त्यपवर्ग इति प्रतिज्ञावाक्यम् । तत्र त्रयो हेतवः ऋणानुबन्धात्–क्लेशानुबन्धात्–प्रवृ-त्त्यनुबन्धादिति । तत्र प्रथमहेत्वर्थं वर्णयति ऋणानुबन्धादिति । 'अनु-बन्धः' सर्वदा करणीयतेति वार्त्तिककृतः । तत्र शातपथवाक्यमुदाहरति जायमान इति । ब्रह्मचर्येण ऋषिभ्य इति–मुच्यत इति शेषः । एवं देवेभ्यः पितृभ्य इत्युभयत्रापि । ऋणानुबन्धादित्यत्र ऋणशब्दा-र्थमुक्त्वाऽनुबन्धशब्दार्थमाह स्वकर्मभिरिति । एतेषामृणानामपाकरणं कर्त्तव्यकोटौ पठितमित्यर्थः । तत्र श्रुतिवाक्यं प्रमाणयति जरामर्य-मिति । अत्र वाक्येऽग्निहोत्रानुष्ठानं जरामृत्युनिवारकत्वेनोक्तम्–न

(भा०) ते मृत्युना ह वेति'। ऋणानुबन्धादपवर्गानुष्ठानकालो नास्तीत्यपवर्गाभावः।

"क्लेशानुबन्धान्नास्त्यपवर्गः। क्लेशानुबद्ध एवायं म्रियते क्लेशानुबद्धश्च जायते। नास्य क्लेशानुबन्धविच्छेदो गृह्यते।

"प्रवृत्त्यनुबन्धान्नास्त्यपवर्गः। जन्मप्रभृत्ययं यावत्प्रायणं वाग्बुद्धिशरीरारम्भेणाविमुक्तो गृह्यते। तत्र यदुक्तं—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग-इति तदनुपपन्नमिति" ॥ ५९ ॥

---

(ख०) चोक्तर्णत्रयापाकरणं विनाऽग्निहोत्रेऽधिकार इति तदपाकरणावश्यकताऽनेनैव वाक्येन सूचिता भवतीत्यर्थः। नन्वस्त्वेतदावश्यकता: किमायातमेतावताऽपवर्ग इत्यत आह ऋणेति। उक्तं च—

ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्।

अनपाकृत्य मोहेन मोक्षमिच्छन् व्रजत्यधः ॥ इति। एवं च ऋणत्रयापाकरणेनैव वयःसमासेर्मोक्षनिवेशक्षणो नास्त्येवेत्यपवर्गाभावः।

क्लेशानुबन्धान्नास्त्यपवर्ग इति द्वितीयं सौत्रवाक्यम्। अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा इति योगसूत्रम्। आजन्मसमयादा च मरणान्तात् पुरुषोऽविद्यादिभिः क्लेशैर्ग्रस्त एव वर्त्तते। एत एव च क्लेशा जीवस्य संसारनिदानभूताः। तथा चामरणं क्लेशैर्ग्रस्तत्वात्पुरुषस्यानुच्छिन्ननिदानः संसारो न शक्य उच्छेत्तुमित्यर्थः।

प्रवृत्त्यनुबन्धान्नास्त्यपवर्ग इति तृतीयं सौत्रवाक्यम्। जन्मसमयमारभ्य मरणपर्यन्तं वाग्बुद्धिशरीरारम्भरूपया प्रवृत्त्या पराक्रान्त एव जीवो वर्त्तते—न च प्रवृत्तिनिवृत्तिमन्तरेणापवर्गसम्भव इति स्पष्टीकृतं प्रथमाध्यायद्वितीयसूत्रे। एवं चापवर्गो न सम्भवत्येवेत्यर्थः ॥५९॥

( भा० ) अत्राभिधीयते । यत्तावदृणानुबन्धादिति ऋणै-रिव ऋणैरिति—

( सू० ) प्रधानशब्दानुपपत्तेर्गुणशब्देनानुवादो निन्दाप्रशंसोपपत्तेः ॥ ६० ॥

( भा० ) ऋणैरिति नायं प्रधानशब्दः । यत्र खल्वेकः प्र-त्यादेयं ददाति द्वितीयश्च प्रतिदेयं गृह्णाति तत्रास्य दृष्टत्वात् प्र-धानमृणशब्दः । न चैतदिहोपपद्यते—प्रधानशब्दानुपपत्तेः । गुण-शब्देनायमनुवाद ऋणैरिव ऋणैरिति । प्रयुक्तोपमं चैतद् यथाऽग्नि-

---

(ख०) सिद्धान्तमुपक्रमते अत्राभिधीयत इति । तत्रादौ पूर्वपक्षीयप्रथम-वाक्यस्य तात्पर्यं सिद्धान्तानुगुणं वर्णयति यत्तावदिति । यत्तावद्याव-ज्जीवमृणमनुवर्त्तेत इति श्रुतिवाक्येषु वर्णितं तत्र ऋणशब्दो गौणार्थो न मुख्यार्थ इति सौत्रं सिद्धान्तं सङ्क्षेपेण सूचयति ऋणैरिवेति ॥

ऋणशब्दस्यौपचारिकत्वं साधयति प्रधानेति सूत्रम् । यत्र यत्र शब्दस्य मुख्यार्थानुपपत्तिस्तत्र तत्र गौण एवार्थः परिगृह्यते—एवं चो-दाहृतं ऋणवाक्यं निन्दाप्रशंसापरतया नेतव्यमित्यर्थः ।

सूत्रार्थमाह—ऋणैरिति । जायमानो ब्राह्मणस्त्रिभिर्ऋणैरित्यत्र वा-क्ये ऋणशब्दस्य मुख्यार्थो नोपपद्यत इत्यर्थः । अनुपपत्तिं प्रदर्शयि-ष्यन् ऋणशब्दस्य मुख्यार्थं वर्णयति यत्र खल्विति । अत्रैव ऋणशब्दो मुख्यार्थपरो गृह्यत इत्यर्थः । उक्तस्य मुख्यार्थस्य , प्रकृतवाक्येऽनुपप-त्तिरेव सूत्रकाराभिप्रेता इति दर्शयति न चैतदिति । ननु कीदृशोऽत्र गुणवादोऽभिप्रेत इत्यत आह ऋणैरिवेति । ऋणशब्दोऽत्र ऋणसदृश-स्यैव लक्षक इत्यर्थः । किञ्चात्र लक्ष्यत इत्याह प्रयुक्तेति ।—'प्रयुक्ता' लक्षिता 'उपमा' सादृश्यं येन तत्तथाभूतमेतत्पदमित्यर्थः । दृष्टान्तरूपेण गौणं प्रयोगान्तरमाह यथेति । अग्निर्माणवक इत्यत्राग्निशब्दस्य मुख्या-

(भा०) माणवक इति । अन्यत्र दृष्टश्चायमृणशब्द इह प्रयुज्यते यथाऽग्निशब्दो माणवके । कथं गुणशब्देनानुवादः ? निन्दाप्रशंसोपपत्तेः । कर्मलोपे ऋणीव ऋणादानान्निन्द्यते कर्मानुष्ठाने च ऋणीव ऋणदानात्प्रशस्यते स एवोपमार्थ इति ।

जायमान इति गुणशब्दो विपर्ययेऽनधिकारात् । जायमानो ह वै ब्राह्मण इति च शब्दो—गृहस्थः सम्पद्यमानो जायमान—इति । यदायं गृहस्थो जायते तदा कर्मभिरधि-

(ख०)र्थस्य माणवके मनुष्येऽनुपपत्त्या सोऽग्निसदृशमेवार्थं लक्षयतीति गृह्यते तथैव ऋणशब्दस्य मुख्यार्थस्य यागाध्ययनादावनुपपत्त्या स ऋणसदृशमेवार्थं लक्षयतीत्यर्थः । किं प्रयोजनमिदं गुणवादाश्रयणमिति पृच्छति कथमिति ॥

अस्यैव प्रश्नस्योत्तरं सूत्रान्त्यपदस्यार्थ इत्याह निन्दाप्रशंसेति । गुणवादेन लब्धौ निन्दाप्रशंसार्थौ वर्णयति कर्मलोप इति । यथा ऋणादानेन ऋणी निन्द्यते तथैव यागाध्ययनादिधर्माननुष्ठानेन द्विजो निन्द्यत इति निन्दार्थः-यथा च ऋणप्रत्यादानेन ऋणी प्रशस्यते तथैव यागाध्ययनादिधर्मानुष्ठानेन द्विजः प्रशस्यत इति प्रशंसार्थः । इदमेव तात्पर्यं गौणार्थस्य सादृश्यस्येत्याह स एवेति ॥

न केवलमृणशब्द एवोक्तवाक्ये गौणार्थोऽपि तु जायमान इत्यपि पदमित्याह जायमान इति ।

अस्य गुणवादत्वे को हेतुरित्यत आह विपर्यय इति । जायमानशब्दस्यार्थो जातमात्र इति-जातमात्रस्य तु द्विजस्योपनयनादिसंस्काररहितस्य नास्त्येवाधिकारो यागाध्ययनाद्यनुष्ठान इति तस्य तत्कर्त्तव्यत्वोक्तिरनुपपन्नैवेत्यर्थः ॥ कोऽसौ गौणोऽर्थ इत्यत आह जायमानो हेति । जायमान इत्यस्य 'गृहस्थः सम्पन्न' इत्येवार्थः । अत्र को हेतुरित्यत आह यदाऽयमिति । द्विजो यदा संपन्नसकलसंस्कारो गार्हस्थ्याश्रमं

(भा०) क्रियते । मातृतो जायमानस्यानधिकारात् । यदा तु मातृतो जायते कुमारो न तदा कर्मभिरधिक्रियते । अर्थिनः शक्तस्य चाधिकारात् । आर्थिनः कर्मभिरधिकारः कर्मविधौ कामसंयोगस्मृतेः—'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्येवमादि । शक्तस्य च प्रवृत्तिसम्भवात् । शक्तस्य कर्मभिरधिकारः—प्रवृत्तिसम्भवात् । शक्तः खलु विहिते कर्मणि प्रवर्त्तते नेतर इति । उभयाभावस्तु प्रधानशब्दार्थे । मातृतो जायमाने कुमारे उभयम-

(ख०)प्राप्नोति तदैव यागादिकर्मास्य कर्त्तव्यमापद्यते ॥ जायमान इत्यस्य मुख्यार्थासम्भवं पुनराह--मातृत इति । मातृगर्भाज्जातमात्रस्योक्तकर्मसु नास्त्यधिकारो द्विजस्येत्यर्थः । तदेव स्पष्टयति यदा त्विति । जातमात्रस्यानधिकारे हेतुमाह अर्थिन इति ॥ कर्मफले यस्यार्थिता कर्मानुष्ठाने च यः शक्तः तस्यैव तस्मिन् कर्मणि प्रवृत्तिः सम्भवति । कथमर्थिन एवाधिकार इति दर्शयति कर्मविधाविति ॥ यागादिकर्मविधौ कामा उक्ताः यथाऽग्निहोत्रं जुहुयात्स्वर्गकाम इति—एवं च यस्यैव स्वर्गार्थिनो तत्कर्मसम्पत्स्यमानफलेष्टसाधनताज्ञानं तस्यैवाग्निहोत्रेऽधिकार इति स्पष्टम् । शक्तस्यैव कथमधिकार इति—दर्शयति शक्तस्येति । यस्मिन् कर्मणि यस्य पुरुषस्य कृतिसाध्यताज्ञानं तस्यैव तत्कर्मानुष्ठाने प्रवृत्तिः सम्भवतीत्यर्थः ॥

जायमान इत्यस्य मुख्यार्थत्वे नार्थित्वन्नापि शक्तत्वं सम्भवतीत्याह उभयाभाव इति । प्रधानशब्दार्थेति - जायमानशब्दस्य मुख्यार्थत्व इत्यर्थः । तदेव स्पष्टयति मातृत इति । जातमात्रो बालको भवेदपि सामान्यतः सुखदुःखप्राप्तिपरिहारकामः- यागादिफलं स्वर्गपुत्रादि तु प्रति तस्य कामो नैव सम्भवति—अपेक्षितवेदवेदाङ्गज्ञानरहितत्वाच्चासावशक्तोऽपि यागाद्यनुष्ठाने इत्यर्थः। न केवलं वैदिकव्यवहार एवेदृशोऽपि तु लौकिकोऽपीत्याह न भिद्यत इति । कथं

(भा०)र्थिता शक्तिश्च न भवतीति।

न भिद्यते च लौकिकाद्वाक्याद्वैदिकं वाक्यं प्रेक्षापूर्वकारिपुरुषप्रणीतत्वेन। तत्र लौकिकस्तावदपरीक्षकोऽपि न जातमात्रं कुमारकमेवं ब्रूयात्—अधीष्व यजस्व ब्रह्मचर्यं चर-इति। कुत एष ऋषिरुपपन्नानवद्यवादी उपदेशार्थेन प्रयुक्त उपदिशति? न खलु वै नर्त्तकोऽन्धेषु प्रवर्त्तते न गायको बधिरेष्विति।

उपदिष्टार्थविज्ञाता चोपदेशविषयः। यश्चोपादिष्टमर्थं विजानाति तं प्रत्युपदेशः क्रियते, न चैतदस्ति जायमानकुमारक इति।

गार्हस्थ्यलिङ्गं च मन्त्रब्राह्मणं कर्माभिवदति। यच्च मन्त्र-

---

(ख०)न भिद्यत इत्यत आह प्रेक्षापूर्वेति। वैदिकोपदेशवाक्यान्यपि ऋषिप्रणीतत्वेन प्रेक्षापूर्वपुरुषप्रणीतान्येवेत्यर्थः। ततः किमित्यत आह तत्र लौकिक इति। 'अपरीक्षकः' विवेकरहितोऽपि जातमात्रं बालकं नोपपादिशति 'यजस्वे'त्यादि—यदा च विवेकज्ञानरहितोऽपीदृशमुपदेष्टुन्नार्हति कुतः पुनस्त्रिकालदर्शी अनवद्यविद्यासम्पन्नो लोककल्याणोपदेशानुकम्पाप्रयुक्तो वेदर्षिरेवमुपदिशेदित्यर्थः। उपपन्नानवद्यवादीति—'उपपन्नं प्रमाणेन 'अनवद्यं' पुनरुक्तादिदोषराहितम्—यदनपेक्षितमुपदेष्टव्यन्न भवति तत्तथाभूतं वेदितुं शीलं यस्य स इत्यर्थः। अनपेक्षितोपदेशो लोकेऽपि न भवतीत्याह—न खल्विति।

जायमानशब्दो न जातमात्रबालकबोधक इत्यत्र हेत्वन्तरमाह—उपदिष्टेति। उपदेशविषयस्य किमपि ज्ञानं यस्य वर्त्तते तम्प्रत्येव तद्विषये उपदेशविशेषः क्रियते। 'उपदेशविषय इति'—उपदेशपात्रमित्यर्थः। न च जात मात्रो बालको यागादिविषये किमपि जानाति—अतो न तम्प्रति यागाद्युपदेशसम्भव इत्यर्थः॥

जातमात्रो बालको न जायमानशब्दस्यार्थोऽपि तु प्राप्तगार्हस्थ्य

(भा०) ब्राह्मणं कर्माभिवदति- तत्पत्नीसम्बन्धादिना गार्हस्थ्यलिङ्गेनोपपन्नम्। तस्माद् गृहस्थोऽयं जायमानोऽभिधीयते इति।

अर्थित्वस्य चाविपरिणामे जरामर्यवादोपपत्तिः। यावच्चास्य फलेनार्थित्वं न विपरिणमते—न निवर्तते, तावदनेन

(ख०) एवेत्यस्य साधको न केवलं न्यायोऽपि तु वैदिकं लिङ्गमपीत्याह गार्हस्थ्येति। 'गार्हस्थ्यस्य लिङ्गम्' पत्नी यस्मिन् कर्मणि तत् तथाविधमेव कर्म मन्त्रब्राह्मणवाक्यान्यभिवदन्तीति सम्बन्धः। पत्नीसत्त्वसूचकानि वाक्यानि यथा—'पत्न्यवेक्षितमाज्यम्' 'पत्न्य उद्गायन्ति' 'क्षौमे वसानावग्नी आदधीयाता'मित्यादीनि॥ उपसंहरति तस्मादिति॥ गृहस्थ एव जायमानशब्दस्यार्थ इति॥

तदनेन गार्हस्थ्यात् पूर्वावस्था ऋणानुबद्धा न भवतीत्युक्तम्। सम्प्रत्युत्तरावस्थाऽपि न ऋणानुबद्धेत्याह—अर्थित्वस्येति। यदा चार्थिन एव कर्मस्वधिकारस्तदाऽर्थित्वस्य 'अविपरिणामे' अनिवृत्तावेव 'जरामर्यवाद' उपपद्यते इत्यर्थः। संक्षेपेणोक्तं विस्तरेणोपपादयति यावच्चास्येति। यावत्कालपर्यन्तम्पुरुषस्य फलेच्छा वर्तते तावत्कालपर्यन्तमेवास्य तत्तत्फलजनककर्मसु प्रवृत्तिस्तावत्कालपर्यन्तमेवैनम्प्रति पूर्वपक्षोदाहृतस्य 'जरामर्यं वा एतत्सत्रं यदग्निहोत्रम्' इत्यादिवाक्यस्योपपत्तिरित्यर्थः। तेन फलवासनावत्त्वमेवोक्तकर्माधिकारहेतुर्न प्राणधारणमात्रमिति यदुक्तम् 'ऋणापाकरणेन वयःपर्यवसानान्नास्ति मोक्षावसर' इति तदपाकृतं भवतीत्याशयः॥

स्वपक्षसाधकं वाक्यान्तरमुदाहरति जरया ह वेति। 'जरया ह वा एष एतस्माद्विमुच्यते' इत्यस्य वाक्यस्यायमेवार्थो यत् जरायां प्राप्तायामग्निहोत्राद्यनुष्ठानाद् विमुच्यते पुरुष इति। एवं च जरैवोक्तकर्मानुष्ठानस्यावधिर्न मरणमिति हृदयम्। अत्र वाक्ये जराशब्दार्थमाह आयुष इति। जीवनस्य चतुर्थभागे एव प्रव्रज्याया

(भा०)कर्मानुष्ठेयमित्युपपद्यते जरामर्यवादस्तं प्रतीति।

'जरया ह वा' इत्यायुषस्तुरीयस्य चतुर्थस्य प्रव्रज्यायुक्तस्य वचनं—जरया ह वा एष एतस्माद्विमुच्यते—इति। आयुषस्तुरीयं चतुर्थं प्रव्रज्यायुक्तं जरेत्युच्यते। तत्र हि प्रव्रज्या विधीयते। अत्यन्तजरासंयोगे 'जरया ह वा' इत्यनर्थकम्। 'अशक्तो विमुच्यते' इत्येतदपि नोपपद्यते। स्वयमशक्तस्य बाह्याशक्तिमाह—'अन्तेवासी वा जुहुयाद् ब्रह्मणा स परिक्रीतः, क्षीरहोता वा जुहुयाद्धनेन स परिक्रीत' इति।

---

(ख०) विहितत्वात् चतुर्थाश्रमप्राप्तिरेव जरापदेनोच्यते इत्यर्थः। ननु जराशब्दस्य जीर्णावस्थेत्येवार्थः प्रसिद्धो न जीवनचतुर्थभाग इत्यत आह अत्यन्तेति। यदि शरीरस्यात्यन्तजीर्णावस्थैव जराशब्देनोच्येत तर्हि उक्तस्य वाक्यस्यायमेवार्थः पर्यवस्येत यत् 'यदाऽत्यन्तजीर्णशरीरोऽसमर्थो भवति तदैवाग्निहोत्रादिकर्मणो विरमेत्' इति—एवञ्चोपदेशोऽनर्थक एव स्यात् असमर्थस्य स्वत एव कर्मविरामप्राप्तत्वात्॥ न केवलमनर्थक एवायमुपदेशः स्यादपि त्वेतादृश उपदेश उपदेशान्तरविरुद्ध एव स्यादित्याह अशक्त इति। असामर्थ्यमात्रं न कर्मविरामकारणम्। कथमेतदित्यत आह स्वयमिति। गृहस्थस्य स्वयं कर्मानुष्ठानसामर्थ्यरहितस्यानुष्ठानार्थमुपायान्तरं यतः श्रुतिरेवोपदिशति—येन अन्तेवासिनः क्षीरहोतुर्वा साहाय्यमवलम्ब्य स्वयमशक्तेन कर्माण्यनुष्ठेयानीति स्पष्टमेव वर्णितमित्यर्थः। 'ब्रह्मणा परिक्रीत इति'—'ब्रह्म' वेदः तच्छिक्षणेन शिष्यः 'परिक्रीतः' 'क्षीरहोता'ऽपि ऋत्विग्विशेषः सोऽपि 'धनेन' दक्षिणारूपेण परिक्रीतः। दास इव कर्म कारयितुमर्हं इत्यर्थः॥

"यद्यपि यज्ञादिविधानान्तराणि गृहस्थस्यैव सन्ति तथापि 'जाय-

(भा०)अथापि विहितं वानूद्येत कामाद्वार्थः परिकल्प्येत। विहितानुवचनं न्याय्यमिति। ऋणवानिवास्वतन्त्रो गृहस्थः कर्मसु प्रवर्त्तते इत्युपपन्नं वाक्यस्य सामर्थ्यम्। फलस्य हि साध-

---

(ख०)मानस्त्रिभिर्ऋणै'रिति वाक्यं बालस्यापि यज्ञादि विधास्यतीति''एतां शङ्कां विमर्शपूर्वकमपाकरोति अथापीति। तत्र जायमान इति वाक्यमन्यत्र विहितमेव यागाध्ययनाद्यनुवदत्याहो स्वित् स्वेच्छामात्रेणेदं स्वतन्त्रमेवार्थं जातमात्रस्य यागादिविधानरूपं वक्तीति परिकल्पितव्यमिति विमर्शस्य कोटिद्वयम्। संशयमुक्त्वा निर्णयं वक्ति विहितेति। अयमभिप्रायः। न तावज्जायमान इत्यादिवाक्ये विधिविभक्तिरस्ति। तेन अन्यत्र विहितस्यानुवाद एवायमिति स्वरसतः प्रतीयते। यदि तु तस्यार्थसिद्धिर्वाक्यान्तराद्वा प्रमाणान्तराद्वा कथमपि न कल्पेत ततो 'वचनानि त्वपूर्वत्वादिति' न्यायेन विधित्वमस्य कल्प्येत। सन्ति तु शतशस्तदर्थविधायकानि वाक्यानि साक्षाद् विधिविभक्तिमन्तीति—को जात्विच्छामात्रेण विध्यर्थतां कल्पयेत्। तस्माद्विहितानुवाद एवेदमिति न्याय्यम्। एवञ्च जायमानशब्दो गौणार्थ एव नेय इति युक्तमुत्पश्याम इति। न्यायमुक्त्वा प्रकृतवाक्यस्य फलितार्थमाह ऋणवानिवेति। यथा ऋणापाकरणेऽधमर्णः परवश एव प्रवर्त्तते तथा गृहस्थोऽपि यागाध्ययनादौ परवश एव प्रवर्त्तेत इत्येवार्थो वाक्यसामर्थ्यलब्ध इत्यर्थः॥ ''ननु जायमानशब्दोऽनुपचरितार्थः स्वभावतो मातुरुदराद्विभागमाह। स कथञ्चिदनुवादानुरोधेन जघन्यवृत्तिः कल्पनीयः। तद्वरं मुख्यार्थानुरोधेन विधानमेव कल्प्यताम्। एवं सति श्रुतिरनुरोधिता भवति। अस्ति च बालकस्यापि फलोत्पादनयोग्यता—तदात्मनः फलं प्रति समवायिकारणत्वात्। तेन यद्यपि जातमात्रस्य फलसाधनानुष्ठानयोग्यता नास्ति तथाऽपि फलोत्पादं प्रति योग्यताऽस्त्येव। फलेन

(भा०)नानि प्रयत्नविषयो न फलम् । तानि सम्पन्नानि फलाय कल्पन्ते । विहितं च जायमानं विधीयते च । तेन यः सम्बद्ध्यते सोऽयं जायमान इति ।

"प्रत्यक्षविधानाभावादिति चेद्" न, प्रतिषेधस्यापि प्रत्य-

(ख०)च प्रयोजनं न तत्साधनेन"इत्यत आह फलस्य साधनानीति। अयमभिसन्धिः । विधिर्हि स्वव्यापारे कर्तृतया पुरुषं नियुङ्क्ते । प्रयत्नश्चास्य व्यापारः । स च निर्विषयो न शक्यो निर्वर्त्तयितुमिति स्वविषयमपेक्षते । न च फलमेवास्य साक्षात्प्रयत्नविषयो भवितुमर्हति । तदुद्देशतामात्रेण तु भवेत् । न चैतावता प्रयत्नोस्य निर्वृणोति यावदयं साक्षादभिनिर्वर्तनीयं न प्राप्नोति । फलसाधनं त्वस्य साक्षादभिनिर्वर्तनीयम् इति फलोद्देशप्रवृत्तस्य पुरुषप्रयत्नस्य निर्वृणोति । तदेव च साधनं विषयः । न च बालस्यापि तदुपायमविदुषस्तत्र सामर्थ्यमस्ति। असमर्थश्चाकर्त्ता कथमेनं प्रयत्नेन प्राप्नुयात् । अव्याप्नुवंश्च कथमधिकारीति जायमानशब्दो जघन्यवृत्तिरेव न्याय्य इति सिद्धम् । ननु भवतु फलसाधनं प्रयत्नविषयो न तत्र विवदामहे-एतदेव तु प्रकृतवाक्येन बालकस्य विधीयत इत्यत्रैवास्माकमाग्रह इति मतमपाकुर्वन्नाह- विहितामिति । उक्तफलसाधनस्य यागाध्ययनादेर्जायमानत्वं प्रकृतवाक्यात् प्रागेव वाक्यान्तरै'र्विहितमेव'—तद्वाक्यानन्तरमपि वाक्यान्तरैः 'विधीयते च' । तथाच तस्यैवार्थस्य प्रकृतेऽपि वाक्ये विधानमिति मृषैव कल्पनेत्याशयः । फलितमाह तेनेति । यः पुरुषः फलसाधनेन सम्बध्यते स एव जायमानशब्देनोच्यते—सम्बध्यते च फलसाधनेन गृहस्थ एव न बालकस्ततश्च प्रकृतवाक्ये गृहस्थ एव जायमानशब्देनोच्यत इति निर्गलितोऽर्थः ॥

यदुक्तमायुषश्चतुर्थे भागे प्रव्रज्या विधीयत इति-तदमृष्यमाणः शङ्कते प्रत्यक्षेति । शङ्कां परिहरति न, प्रतिषेधस्येति । शङ्कां विभजते

(भा०)क्षविधानाभावादिति । "प्रत्यक्षतो विधीयते गार्हस्थ्यं ब्राह्मणेन, यदि चाश्रमान्तरमभविष्यत्तदपि व्यधास्यत् प्रत्यक्षतः, प्रत्यक्षविधानाभावान्नास्त्याश्रमान्तरमिति" । न, प्रतिषेधस्यापि प्रत्यक्षतो विधानाभावात्—न प्रतिषेधोऽपि वै ब्राह्मणेन प्रत्यक्षतो विधीयते । 'न सन्त्याश्रमान्तराणि एक एव गृहस्थाश्रम' इति प्रतिषेधस्य प्रत्यक्षतोऽश्रवणादयुक्तमेतदिति । अधिकाराच्च विधानं विद्यान्तरवत् । यथा शास्त्रान्तराणि स्वे स्वेऽधिकारे प्रत्यक्षतो विधायकानि नार्थान्तराभावात् ,—एवमिदं ब्राह्मणं गृहस्थशास्त्रं स्वेऽधिकारे प्रत्यक्षतो विधायकं ना-

---

(ख०)प्रत्यक्षत इति। परमाप्तो हि भगवानीश्वरोऽनुकम्पया भूतोपदेशाय प्रवृत्तो यद् गार्हस्थ्यमेवाश्रममुपदिशति-नाश्रमान्तरम्- ततोऽवगच्छामो न सन्त्येवाश्रमान्तराणि भूतेभ्यो विहितानि। ततश्च प्रव्रज्या नैव विहितेत्यर्थः । तथाचोक्तं गौतमीये धर्मशास्त्रे -'ऐकाश्रम्यं त्वाचार्याः प्रत्यक्षविधानाद्गार्हस्थ्यस्येति'—इति शङ्काशयः। निराकरणं विभजते-न, प्रतिषेधस्येति । स्मृतीतिहासपुराणानि तावदविवादं चातुराश्रम्यं विदधन्त्युपलभ्यन्ते । तत्र विहितानां प्रतिषेधो यदि प्रत्यक्षश्रुतौ कुत्राप्युपलभ्येत भवेयुस्तान्यप्रमाणानीति । न तु चातुराश्रम्यप्रतिषेधः कुत्रापि साक्षाच्छ्रुतावुपलभ्यते । तस्मात् स्मृत्यादिविहितं चातुराश्रम्यं श्रुत्याऽप्रतिषिद्धं न शक्यं परित्यक्तुमित्यर्थः॥ ननु माभूत्साक्षात्प्रतिषेधः—साक्षादविधानेनैव तु सोऽनुमीयत इत्यत आह अधिकारादिति । भवेदविधानेनाश्रमान्तरप्रतिषेधानुमानं यदि तेषामभावादेवाविधानं स्यात् । तत्त्वतस्तु यद्गार्हस्थ्यमेवैकं साक्षाच्छ्रुत्या विधीयते नाश्रमान्तरम्—तत्र कारणं नाश्रमान्तराणामभावोऽपि तु गार्हस्थ्यमात्रोपदेशस्य तत्राधिकार

(भा०) श्रमान्तराणामभावादिति ।

ऋग्ब्राह्मणं चापवर्गाभिधाय्यभिधीयते । ऋचश्च ब्राह्मणानि चापवर्गाभिवादीनि भवन्ति । ऋचश्च तावत्—

कर्मभिर्मृत्युमृषयो निषेदुः प्रजावन्तो द्रविणमिच्छमानाः ।
अथापरे ऋषयो मनीषिणः परं कर्मभ्योऽमृतत्वमानशुः ॥
न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥
परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ।
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।
(वाजसनेयिसंहिता ३१।१८। तैत्तिरीयारण्यक ३।१२।७)

---

(ख०) इत्येव । यथा व्याकरणादिशास्त्रान्तरं स्वविषयं शब्दानुशासनं विदधत् शास्त्रान्तराधिकृतविषयप्रमाणाद्यभावन्नाक्षिपति-तथैव गार्हस्थ्योपदेशश्रुतिरपि स्वविषयं गार्हस्थ्यं विदधन्नाश्रमान्तराभावमाक्षिपतीति शास्त्रान्तरोदाहरणार्थः ॥

अपि च माभूत् प्रत्यक्षविधानं श्रुतौ ससाधनापवर्गाभिधानानि च प्रत्यक्षाण्युपलभ्यन्ते वचनानि ऋग्रूपाणि ब्राह्मणरूपाणि च । तान्यपूर्वत्वाद्विधानान्यपवर्गस्य ससाधनस्य चातुराश्रम्यस्य च भवन्तीत्याशयेन ऋचो ब्राह्मणानि चोदाहरति—ऋग्ब्राह्मणमिति । मृत्युं निषेदुरित्यत्र 'मृत्युं' प्रेत्यभावमित्यर्थः । परं कर्मभ्य इति कर्मपरित्यागमपवर्गसाधनं सूचयति । अमृतत्वमिति चापवर्गो दर्शितः । सूचितं कर्मत्यागमपवर्गसाधनं श्रुत्यन्तरेण विशदयति न कर्मणा न प्रजयेति ॥ नाकमित्यविद्यामुपलक्षयति । परेण नाकमिति अविद्यातः परमित्यर्थः । निहितं गुहायामिति लौकिकप्रमाणागोचरत्वं दर्शयति । तमसः परस्तादिति—अविद्या 'तमः'

(भा०)अथ ब्राह्मणानि—

"त्रयो धर्मस्कन्धा-यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयो, ब्रह्मचार्याचार्यकुलवासीति तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्, सर्व एवैते पुण्यलोका भवन्ति। ब्रह्मसंस्थोऽमृतत्वमेति। (छान्दोग्योपनिषद् २।२३।१) एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्तीति"(बृहदारण्यक ४।४।२२)। "अथो खल्वाहुः-काममय एवायं पुरुष इति स यथाकामो भवति तथाक्रतुर्भवति। यथाक्रतुर्भवति तथा तत्कर्म कुरुते। यत्कर्म कुरुते तदभिसम्पद्यते" (बृहदारण्यक ४।४।५) इति कर्मभिः संसरणमुक्त्वा प्रकृतमन्यदुपदिशन्ति "इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति न तस्य प्राणा उत्क्रामन्ति इहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीति"।

तत्र यदुक्तम्-ऋणानुबन्धादपवर्गाभाव-इत्येतदयुक्तमिति। 'ये चत्वारः पथयो देवयाना' (तैत्तिरीयसंहिता ५।७।२।३) इति

---

(ख०)तस्य परस्तादिति। आदित्यवर्णमिति नित्यप्रकाशमित्यर्थः। तदनेनेश्वरप्रणिधानस्यापवर्गोपायत्वमुक्तम्॥ ऋच उदाहृत्य ब्राह्मणमुदाहरति-अथ ब्राह्मणानीति। यज्ञ इत्यादिना गृहस्थाश्रमो दर्शितः। तप एवेति वानप्रस्थाश्रमः। ब्रह्मचारीति ब्रह्मचर्याश्रमः॥ एषामाश्रमाणामभ्युदयलक्षणं फलमाह सर्व एवैत इति। चतुर्थाश्रममाह ब्रह्मसंस्थ इति। तथाक्रतुरिति 'क्रतुः' सङ्कल्पः। तदभिसम्पद्यत इति-तत्कर्मानुसार्येवास्याग्रिमं जन्मेत्यर्थः। कामयमान इति। कामयमानो य आसीत् स एवाथाकामयमानो भवति। अकामयमानः कामं परिहरन् तत्परिहारसिद्धौ सोऽकामयमानः। तस्य व्याख्यानं निष्काम इति। आत्मकाम इति। कैवल्योपेतात्मकामस्तत्प्राप्त्या 'आप्तकामो' भवति। न तस्य प्राणा इति। शाश्वतो भवतीत्यर्थः॥ प्रकृतमुपसंहरति तत्र यदु-

(भा०)च चातुराश्रम्यश्रुतेरैकाश्रम्यानुपपत्तिः ॥६०॥

(भा० ) फलार्थिनश्चेदं ब्राह्मणं-'जरामर्यं वा एतत्सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च'-इति। कथम् ?

( सू० ) समारोपणादात्मन्यप्रतिषेधः ॥ ६१ ॥

'प्रजापत्यामिष्टिं निरूप्य तस्यां सार्ववेदसं हुत्वा आत्मन्यग्नीन्समारोप्य ब्राह्मणः प्रव्रजेत्'- इति श्रूयते। तेन विजानीमः- प्रजावित्तलोकैषणाभ्यो व्युत्थितस्य निवृत्ते फलार्थित्वे समारोपणं विधीयते-इति ।

---

(ख०)क्तमिति। अपरामपि चातुराश्रम्याभिधायिनीं श्रुतिमाह ये चत्वार इति ॥ एवं च न गार्हस्थ्यमात्रैकाश्रम्यपक्षः साधुरिति निर्गलितोऽर्थः ॥ ६० ॥

फलार्थिनो गृहस्थस्यैव 'जरा'पर्यन्तमग्निहोत्राद्यनुष्ठानं जरामर्यवाक्येनोच्यत इति गतसूत्रस्य फलितार्थं हेत्वन्तरविधित्सया स्मारयति फलार्थिन इति। कोऽत्र हेतुरिति पृच्छति कथमिति ॥

तत्रोत्तरम् समारोपणादिति सूत्रम् । आत्मन्यग्नीनां 'समारोपणात्' ऋण नुबन्धेन अपवर्गस्य 'अप्रतिषेधः' प्रतिषेधोऽयुक्त इत्यर्थः ।

सूत्रार्थमाह प्राजापत्यामिति । साग्निकस्य चतुर्थाश्रमप्रवेशविधानमेतत् । मनुरप्याह—

प्राजापत्यां निरूप्येष्टिं सार्ववेदसदक्षिणाम् ।

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद् गृहात्॥ इति। किमनेनेत्यत आह तेनेति। उक्तायामिष्टौ सर्वस्वदानं तदैव सम्भवति यदा पुरुषः पुत्रधनलोकसम्बन्धिनीभ्य इच्छाभ्यो विनिर्मुक्तः फलार्थित्वादपैति,एवञ्च फलार्थिन एव गार्हस्थ्यं तत्सहचारिणो यागादिधर्माः, निवृत्ते च फलार्थित्वे गार्हस्थ्यमपैति—अपेते च गार्हस्थ्ये ते धर्मा अपियन्ति तदैव

(भा०)एवं च ब्राह्मणानि–'सोऽन्यद् व्रतमुपाकरिष्यमाणो याज्ञवल्क्यो मैत्रेयीमिति होवाच–प्रव्राजिष्यन्वा अरे अहमस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्या सहान्तं करवाणि–इति। अथाप्युक्तानुशासनासि मैत्रेयि एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज–इति'(बृहदारण्यकोपनिषद्) ॥ ६१॥

( सू० ) पात्रचयान्तानुपपत्तेश्च फलाभावः ॥ ६२ ॥

( भा० ) जरामर्ये च कर्मण्यविशेषेण कल्प्यमाने सर्वस्य पात्रचयान्तानि कर्माणीति प्रसज्यते। तत्रैषणाव्युत्थानं न श्रूयेत–

---

(ख०)चाग्नीनामात्मनि समारोपणमित्युक्तवाक्यात्सिद्धमित्यर्थः। उक्तेऽर्थे ब्राह्मणवाक्यस्यापि स्वरसं प्रदर्शयति ब्राह्मणानीति। यदैषणाभ्यो व्युत्थितस्य प्रव्रज्याविधानं तदा तदभिधायीनि ब्राह्मणान्यप्युपपन्नानीत्यर्थः। 'अन्यद्व्रतमिति' चतुर्थाश्रमग्रहणं परामृशति ॥ ६१ ॥

स्वपक्षे साधकान्तरमाह पात्रचयेति सूत्रम्।

सूत्रार्थमाह जरामर्य इति। साग्निकस्य मरणे तदग्निहोत्रसंबन्धिसकलयज्ञीयपात्राणि तस्य शरीरेण सहैव दह्यन्त इति विधिः। एवं सति जरामर्यमग्निहोत्रमिति यदि सर्वपुरुषसाधारणं भवेन्न च फलार्थिगृहस्थमात्रपरम्–तदोक्तयज्ञीयसकलपात्रदहनस्य सर्वेषां प्राप्तौ चतुर्थाश्रमस्थस्यापि तत्प्राप्तम्। ननु भवत्वेवं का हानिरित्यत आह तत्रैषणेति। प्रव्रजितस्य चतुर्थाश्रमस्थस्यापि शरीरेण सह यज्ञीयपात्रदहनं यद्यावश्यकं तर्ह्यामरणं तेनापि सकलानि यज्ञीयपात्रादीन्यात्मनः सकाशे रक्षणीयान्येव प्राप्नुवन्ति। एवं च सति कुतस्तस्य प्रव्रजनात् प्राक् विहितमेषणाभ्यो व्युत्थानं सर्वस्वप्रदानं वेत्येते सर्व एव विषयः प्रकुप्येरन्नित्याशयः। उक्तैषणाव्युत्थानविधायकं ब्राह्मणवाक्यमुदाहरति एतद्ध

(भा०)'एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्तीति' (बृहदारण्यकोपनिषद्) एषणाभ्यश्च व्युत्थितस्य पात्रचयान्तानि कर्माणि नोपपद्यन्ते इति नाविशेषेण कर्त्तुः प्रयोजकं फलं भवतीति।

चातुराश्रम्यविधानाच्चेतिहासपुराणधर्मशास्त्रेष्वैकाश्रम्यानुपपत्तिः। "तदप्रमाणमिति चेद्-"न, प्रमाणेन प्रामाण्याभ्यनुज्ञानात्। प्रमाणेन खलु ब्राह्मणेनेतिहासपुराणस्य प्रामाण्यमभ्यनुज्ञायते।

---

(ख०)स्मेति। ननु भवत्वेषणाभ्यो व्युत्थानं किन्तेनेत्यत आह एषणाभ्य इति। यः खल्वेषणाभ्यो व्युत्थितः सर्वस्वदक्षिणां प्राजापत्येष्टिं निरुप्य प्रवव्राज तस्य पात्राणामभावादेव पात्रचयान्तानि कर्माणि न सम्भवन्तीत्यर्थः॥ तदनेन पूर्वपक्षस्यैषणाव्युत्थानश्रुतिविरोधो दर्शितः। यागादिकर्मणां सकलपुरुषसाधारण्यासम्भवे हेत्वन्तरं फलाभाव इति सूत्रावयवस्य तात्पर्यमाह नाविशेषेणेति। यत्फलेच्छया यागादयोऽनुष्ठीयन्ते तत्फलेच्छा सर्वेषाम्पुरुषाणां प्रवर्त्तिका न भवति—यस्यैव फलेच्छा तस्यैव तत्फलजनककर्मणि प्रवृत्तिरिति न सम्भवति सर्वसाधारण्यं कर्मणामित्याशयः॥

चातुराश्रम्यसाधिकाः श्रुतीरुदाहृत्य सम्प्रति स्मृत्यादयोऽपि चातुराश्रम्यस्योपदेशकाः सन्तीत्याह चातुराश्रम्यविधानाच्चेति॥ स्मृत्यादीनामप्रामाण्यमुद्भावयति तदप्रमाणमितीति॥ जगन्निर्मातुः परमकारुणिकस्य सर्वज्ञस्येश्वरस्यागमे भवतु प्रामाण्यमाप्तोक्तत्वात् मनुव्यासादीनां त्वाप्तत्वानिश्चयात् कथं तत्प्रणीतानां प्रामाण्यनिश्चय इत्यर्थः॥ तत्रोत्तरम् न, प्रमाणेनेति। उभयवादिसिद्धप्रामाण्येन ब्राह्मणवाक्येनैव स्मृत्यादीनामपि प्रामाण्यमभ्यनुज्ञायते एवेत्यर्थः। स्मृत्यादिप्रामाण्यसू-

(भा०)'ते वा खल्वेते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यवदन्नि-तिहासपुराणं पञ्चमं वेदानां वेद' इति । तस्मादयुक्तमेतदप्रामाण्य-मिति । अप्रामाण्ये च धर्मशास्त्रस्य प्राणभृतां व्यवहारलोपाल्लो-कोच्छेदप्रसङ्गः । द्रष्टृप्रवक्तृसामान्याच्चाप्रामाण्यानुपपत्तिः । य एव मन्त्रब्राह्मणस्य द्रष्टारः प्रवक्तारश्च ते खल्वितिहासपुरा-णस्य धर्मशास्त्रस्य चेति ।

विषयव्यवस्थानाच्च यथाविषयं प्रामाण्यम् । अन्यो मन्त्रब्राह्मणस्य विषयोऽन्यश्चेतिहासपुराणधर्मशास्त्राणामिति ।

---

( ख० ) उक्तं ब्राह्मणवाक्यमुदाहरति ते वा खल्वेत इति ॥ ननु भ-वतु वेदेनाभ्यनुज्ञानात् स्मृतीतिहासादीनाम्प्रामाण्यम्—धर्मशास्त्राणां तु मन्वादिप्रणीतानां कुतः प्रामाण्यनिश्चय इत्यत आह—अप्रामाण्ये चेति । निखिलार्यजनपरिग्रहात्तेषामपि प्रामाण्यमपरिहार्यमित्यर्थः । स्मृ-त्यादीनां प्रामाण्ये हेत्वन्तरमाह द्रष्टृप्रवक्तृसामान्याच्चेति । य एव वेदस्य द्रष्टारोऽनुष्ठातारश्च तदर्थस्य त एव स्मृतीतिहासादीनां प्रवक्तारः प्रा-चेतसकृष्णद्वैपायनमनुप्रभृतय इत्यर्थः ॥ अथायमितिहासादिगोचरो-ऽर्थः कस्मात् प्रत्यक्षेण वेदेन नोच्यते—तदनभिधानादवगच्छति न नूनमयमनभिमतो वेदानामित्यत आह विषयव्यवस्थानाच्चेति ।

तदेव स्पष्टयति यथाविषयमिति । यज्ञो श्रुतेर्विषयो लोकव्यवहारः स्मृतीतिहासादीनामित्येवं व्यवस्थितविषयत्वे श्रुत्यादीनां—यदि स्मृत्या-दीनां प्रामाण्यन्नाभ्युपगम्यते तर्हि निष्प्रमाणक एव सर्वो लोकव्यवहारः प्रसज्येत—तथाच सकललौकिकव्यवहारस्योच्छेद एव स्यादित्याशयः ॥ अपि च यथा बहूनि स्मार्तानि कर्माणि वैदिकानि मन्त्रादीन्यपेक्षन्ते तथैव वैदिकान्यपि यज्ञादीनि बह्वीं स्मार्तीमितिकर्त्तव्यतामपेक्षन्त—इति श्रौतकर्मसम्पत्त्यर्थमप्यभ्युपगन्तव्यमेव स्मृतीनामपि प्रामाण्यम् ।

(भा०) यज्ञो मन्त्रब्राह्मणस्य, लोकवृत्तमितिहासपुराणस्य, लोकव्यवहारव्यवस्थानं धर्मशास्त्रस्य विषयः। तत्रैकेन न सर्वं व्यवस्थाप्यत इति, यथाविषयमेतानि प्रमाणानीन्द्रियादिवदिति ॥ ६२ ॥

( भा० ) यत्पुनरेतत् 'क्लेशानुबन्धस्याविच्छेदा'दिति—

(सू०) सुषुप्तस्य स्वप्नादर्शने क्लेशाभावादपवर्गः॥६३॥

(भा०) यथा सुषुप्तस्य खलु स्वप्नादर्शने रागानुबन्धः सुखदुःखानुबन्धश्च विच्छिद्यते तथापवर्गेऽपीति। एतच्च ब्रह्मविदो मुक्तस्यात्मनो रूपमुदाहरन्तीति ॥ ६३ ॥

---

(ख०) उपसंहरति तत्रैकेनेति। 'एकेन' मन्त्रमात्रेण ब्राह्मणमात्रेण मन्त्रब्राह्मणात्मकेन वेदमात्रेण वा—'सर्वं' यज्ञादि लोकव्यवहारान्तम् 'न व्यवस्थाप्यते' न व्यवस्थापयितुं निरूपयितुं शक्यते इत्यर्थः ॥ ६२॥

पूर्वपक्षसूत्रोक्तमृणानुबन्धादपवर्गाभावमपाकृत्य क्लेशानुबन्धादपवर्गाभाव इति मतमपाकरिष्यन् तदनुवदति यत्पुनरिति।

तद्दूषयति सुषुप्तस्येति सूत्रम् ॥

सूत्रं व्याचष्टे यथा सुषुप्तस्येति। रागादिक्लेशाविच्छेद एवाप्रसिद्धः सुषुप्तावस्थायां तद्विच्छेददर्शनादित्यर्थः। ननु भवतु सुषुप्तावेवम्—किमायातं तेनापवर्गसिद्धावित्यत आह एतच्चेति। सुषुप्तावस्थासदृश्येवापवर्गावस्थेति बहुश उपनिषद्वाक्येषूदाहृतं न शक्यमपलपितुमित्यर्थः॥ सकललोकप्रसिद्धतया सुषुप्तावस्थोदाहृता। महाप्रलयेऽपि क्लेशमुक्ता एवात्मानस्तिष्ठन्तीत्यपि प्रसिद्धमेव शिष्टानाम्। एतावांस्तु मुक्तावस्थायां विशेषो यदस्यां क्लेशानां वासनाऽपि निरस्ता सुषुप्तावस्थायां प्रलयावस्थायां च क्लेशानां विच्छेदेऽपि तद्वासनाऽनुवर्तत एवेति ॥ ६३ ॥

( भा० ) यदपि 'प्रवृत्त्यनुबन्धा'दिति--

(सू०) न प्रवृत्तिः प्रतिसन्धानाय हीनक्लेशस्य ॥६४॥

( भा० ) प्रक्षीणेषु रागद्वेषमोहेषु प्रवृत्तिर्न प्रतिसन्धानाय । प्रतिसन्धिस्तु पूर्वजन्मनिवृत्तौ पुनर्जन्म । तच्च तृष्णाकारितम् । तस्यां प्रहीणायां पूर्वजन्माभावे जन्मान्तराभावोऽप्रतिसन्धानमपवर्गः ।

"कर्मवैफल्यप्रसङ्ग" इति चेद् न, कर्मविपाकप्रतिसंवेदनस्याप्रत्याख्यानात् । पूर्वजन्मनिवृत्तौ पुनर्जन्म न भवतीत्युच्यते, न

---

(ख०) प्रवृत्त्यनुबन्धादपवर्गाभाव इति पूर्वपक्षोक्तं तृतीयं हेतुमपाकरिष्यन् अनुवदति यदपीति ।

तद्दूषयति न प्रवृत्तिरिति सूत्रम् । 'हीनक्लेशस्य' देहिनः 'प्रवृत्तिः' 'प्रतिसन्धानाय' पुनर्जन्मने 'न' भवतीत्यर्थः ।

सूत्रं व्याचष्टे प्रक्षीणेष्विति । प्रतिसन्धानशब्दार्थमाह प्रतिसन्धिरिति । कुतो न प्रवृत्तिः पुनर्जन्मापादयतीत्यत आह तच्चेति । तृष्णाकारितमेव पुनर्जन्म भवति प्रहीणरागादेस्तृष्णायां नष्टायां यदा वर्त्तमानजन्मापैति मरणे तदा तृष्णारूपकारणाभावादेव तत्कार्यं पुनर्जन्म नैव भवतीत्यर्थः । दोषतुषावनद्धमेव कर्मबीजं जन्माङ्कुराय कल्पते नान्यथेत्यर्थः । नन्वस्तु पुनर्जन्माभावः किमायातमनेन प्रकृतेऽपवर्गविचार इत्यत आह अप्रतिसन्धानमपवर्ग इति । उक्तः पुनर्जन्माभाव एवापवर्गशब्दार्थ इत्यर्थः ।

शङ्कते कर्मवैफल्येति । कर्मणां वैफल्ये कर्मणाम्फलसाधनताप्रतिपादकस्य शास्त्रस्याप्रामाण्यप्रसङ्ग इत्यर्थः । निराकरोति कर्मेति । कर्मफलोपभोगो न प्रतिषिध्यतेऽस्माभिरपवर्गवादिभिरित्यर्थः । स्वसिद्धान्ताशयं विवृणोति पूर्वजन्मेति । वर्त्तमानजन्मनिवृत्तौ पुनर्जन्म न भ-

(भा०) तु कर्मविपाकप्रतिसंवेदनं प्रत्याख्यायते। सर्वाणि पूर्व-कर्माणि ह्यन्ते जन्मनि विपच्यन्त इति ॥ ६४ ॥

(सू०) "न क्लेशसन्ततेः स्वाभाविकत्वात्" ॥ ६५ ॥

(भा०) "नोपपद्यते क्लेशानुबन्धविच्छेदः। कस्मात्? क्लेश-सन्ततेः स्वाभाविकत्वात्। अनादिरियं क्लेशसन्ततिः। न चाना-दिः शक्य उच्छेत्तुमिति" ॥ ६५ ॥

(भा०) अत्र कश्चित्परीहारमाह—

(सू०) प्रागुत्पत्तेरभावानित्यत्ववत्स्वाभाविके-ऽप्यनित्यत्वम् ॥ ६६ ॥

(भा०) यथाऽनादिः प्रागुत्पत्तेरभाव उत्पन्नेन भावेन निवर्त्यते एवं स्वाभाविकी क्लेशसन्ततिरनित्येति ॥ ६६ ॥

---

(ख०) वतीत्येतावन्मात्रमेवास्माभिरुच्यते न तु कर्मफलोपभोगो निषिध्यते येनोक्तशास्त्रस्याप्रामाण्यप्रसङ्गः स्यादित्यर्थः॥ कथमेतत सङ्गच्छतेऽपव-र्गसिद्धान्तेनेत्यत आह सर्वाणीति। 'अन्ते जन्मनि' यज्जन्मानन्तरम्पुन-र्जन्म न भवति तस्मिन्नेव जन्मनि सर्वेषामेव पूर्वकृतकर्मणां फलान्युप-भुज्यन्ते—क्षीणे च सकले कर्मण्युपभोगात् नास्ति कारणं पुनर्जन्मव इत्यर्थः ॥ ६४ ॥

क्लेशाभावमसहमानः पूर्वपक्ष्याह—न क्लेशसन्ततेरिति सूत्रम्। सूत्रं व्याचष्टे—नोपपद्यत इति। क्लेशानामत्यन्तप्रक्षयो न सम्भ-वति। पृच्छति कस्मादिति। उत्तरयति क्लेशेति। अनादेरत्यन्तो-च्छेदासम्भवादित्यर्थः ॥ ६५ ॥

सिद्धान्त्येकदेशी परिहरति प्रागुत्पत्तेरिति सूत्रेण। सूत्रं व्याचष्टे यथाऽनादिरिति। दध्यादेरुत्पत्तेः प्राक् क्षीरादिषु योऽभावस्तस्यानि-त्यत्ववत्स्वाभाविकस्यापि क्लेशस्यानित्यत्वे तद्विच्छेदोऽप्युपपद्यत एवे-त्यर्थः ॥ ६६ ॥

( भा० ) अपर आह--

(सू०) अणुश्यामतानित्यत्ववद्वा ॥ ६७ ॥

( भा० ) यथाऽनादिरणुश्यामता, अथ चाग्निसंयोगादनित्या तथा क्लेशसन्ततिरपीति।

सतः खलु धर्मो नित्यत्वमनित्यत्वं च। तत्त्वं भावेऽभावे भाक्तमिति। अनादिरणुश्यामतेति हेत्वभावादयुक्तम्। अनुत्पत्तिधर्मकमनित्यमिति नात्र हेतुरस्तीति ॥ ६७ ॥

---

(ख०) अभावदृष्टान्तोपादानेऽतुष्यन् उक्तामेव शङ्कामपर एकदेशी भावमेव दृष्टान्तयित्वा परिहरति–तत्परिहारमवतारयति अपर इति। परिहारमाह अणुश्यामतेति सूत्रेण।

सूत्रं व्याचष्टे यथेति। यथा घटारम्भकपरमाणूनां श्यामताऽनादिरप्यग्निसंयोगेनापैत्येच–एवमेव क्लेशसन्ततिरनादिरपि ज्ञानाग्निसंयोगेन विच्छिद्यते एवेत्याशयः।

सिद्धान्ती स्वमतेन शङ्कां परिहरिष्यन् प्रथमं तावदेकदेशिमतद्वयं दूषयितुमुपक्रमते–तत्रादौ प्रथममेकदेशिनं दूषयति सतः खल्विति। नित्यत्वानित्यत्वादयो धर्मा भावरूपस्यैव पदार्थस्य सम्भवन्ति नाभावरूपस्य–यत्र कुत्राप्युपलभ्यतेऽभावस्य नित्यत्वाद्युक्तिस्सा गौण्येवेति न युक्तमभावदृष्टान्तोपादानमित्यर्थः॥ द्वितीयमेकदेशिनं दूषयति अनादिरिति। अणुश्यामता कार्या पृथिवीरूपत्वात् लोहितादिवदिति प्रत्युतानित्यत्वसाधनमेवाणुश्यामताया भवति–न भवति तथा कोऽपि हेतुस्तस्या नित्यत्वसाधनमित्यर्थः। नन्वनुत्पत्तिमत्त्वादेव सिद्ध्यति नित्यत्वमणुश्यामताया इत्यत आह अनुत्पत्तीति। यद्यदनुत्पत्तिधर्मकं तत्सर्वं नित्यमेवेत्येतादृशी व्याप्तिर्नास्तीत्यर्थः। अप्रयत्नपूर्वकत्वमात्रेण त्वणुश्यामतादावनादितान्यवहारो न तन्नित्यतयेति हृदयम्॥६७॥

( भा० ) अयं तु समाधिः--

(सू०) न, सङ्कल्पनिमित्तत्वाच्च रागादीनाम् ॥ ६८ ॥

( भा० ) कर्मनिमित्तत्वादितरेतरनिमित्तत्वाच्चेति समुच्चयः। मिथ्यासङ्कल्पेभ्यो रञ्जनीयकोपनीयमोहनीयेभ्यो रागद्वेषमोहा उत्पद्यन्ते। कर्म च सत्त्वनिकायनिर्वर्तकं नैयमिकान् रागद्वेषमोहान्निर्वर्त्तयति, नियमदर्शनात्। दृश्यते हि कश्चित्सत्त्वनिकायो

---

(ख०) तदेवमेकदेशिनौ दूषयित्वा परमं समाधिमुपन्यस्यति अयन्त्विति।

परमं समाधिमाह न सङ्कल्पेति सूत्रम्। उत्पत्तिमत्त्वादेव रागादीनां न नित्यत्वमित्यर्थः॥

सूत्रं व्याचक्षाणः सूत्रस्थचकारेण समुच्चितं हेत्वन्तरद्वयं सूचयति कर्मनिमित्तत्वादिति। 'समुच्चय' इति अनुक्तस्येति शेषः।

तत्राद्यं हेतुं सङ्कल्पनिमित्तत्वादिति विभजते मिथ्यासङ्कल्पेभ्य इति। यद्यप्यनुभूतविषयप्रार्थना 'सङ्कल्पः' तथाऽपि तस्य पूर्वभागोऽनुभवो ग्राह्यः--प्रार्थनायाः रागत्वात्। तेन मिथ्यानुभव एवात्र सङ्कल्पपदेन विवक्षितः। एवं च मिथ्यानुभवादुत्पद्यन्ते रागादयो दोषा इत्यर्थः। नन्वेकस्मान्मिथ्याज्ञानात्कुतो नानारागादिकार्यवैचित्र्यमित्यत आह रञ्जनीयेति। भव्यगेयादिषु पाठात् कर्त्तरि कृत्यप्रत्ययः--तेन रञ्जककोपकविमोहकेभ्यो मिथ्याज्ञानेभ्यो यथाक्रमं रागद्वेषमोहा उत्पद्यन्त इत्यर्थः पर्यवसितः॥

द्वितीयं हेतुं कर्मनिमित्तत्वं रागादीनां विभजते- कर्म च सत्त्वेति। निकायेन जातिरुपलक्ष्यते। नैयमिकान् व्यवस्थितान्। नियमं दर्शयति दृश्यत इति। पुरुषेषु रागद्वेषादीन् व्यवस्थितान् दृष्ट्वा व्यवस्था तत्पुरुषकर्मनिमित्तैव भवतीति निश्चिनुम इत्यर्थः।

(भा०) रागबहुलः कश्चिद्द्वेषबहुलः कश्चिन्मोहबहुल इति । इतरेतरनिमित्ता च रागादीनामुत्पत्तिः । मूढो रज्यति मूढः कुप्यति रक्तो मुह्यति कुपितो मुह्यति ।

सर्वमिथ्यासङ्कल्पानां तत्त्वज्ञानादनुत्पत्तिः । कारणानुत्पत्तौ च कार्यानुत्पत्तेरिति,— रागादीनामत्यन्तमनुत्पत्तिरिति ।

अनादिश्च क्लेशसन्ततिरित्ययुक्तम् । सर्वे इमे खल्वाध्यात्मिका भावा अनादिना प्रबन्धेन प्रवर्तन्ते शरीरादयः । न जात्वत्र कश्चिदनुत्पन्नपूर्वः प्रथमत उत्पद्यतेऽन्यत्र तत्त्वज्ञानात् । न

---

(ख०) तृतीयं हेतुमितरेतरनिमित्तत्वं रागादीनां प्रदर्शयति—इतरेतरेति । मूढो रज्यतीत्यत्र मोहादुत्पन्नो रागः–मूढः कुप्यतीत्यत्र मोहादुत्पन्नो द्वेषः–रक्तो मुह्यतीत्यत्र रागादुत्पन्नो मोहः–कुपितो मुह्यतीत्यत्र कोपादुत्पन्नो मोहः ॥

ननु भवन्त्वनित्याः क्लेशाः तथाऽपि यदेषां निर्वर्तकं मिथ्याज्ञानं तस्य निवृत्तिहेतोरभावात् तस्मादेव क्लेशानुबन्धादपवर्गाभावस्तदवस्थ एवेत्यत आह सर्वमिथ्येति । सर्वेषां मिथ्याज्ञानानां तत्त्वज्ञानेनोच्छेद इति सुप्रसिद्धमेव शिष्टानामित्याशयः ॥ एवञ्च मिथ्याज्ञानरूपकारणस्योच्छेदे तत्कार्यस्य रागादेरनुत्पत्तिः सुतरामेव सिद्ध्यतीत्याह कारणानुत्पत्ताविति ।

अनादिः क्लेशसन्ततिरिति यदुक्तं तत्प्रतिषेधति अनादिरिति । तस्यायुक्तत्वे हेतुमाह सर्व इम इति । आत्मानमधिकृत्य प्रवर्त्तमानाः शरीरेन्द्रियादयो भवन्त्याध्यात्मिका इति । तेषां च प्रबन्धोऽनादिरेवेति प्रदर्शयति न जात्विति । कश्चिदिति आत्मेति यावत् । किं सर्वमेवानाद्येव–नेत्याह अन्यत्रेति । तत्त्वज्ञानस्य त्वादिरस्त्येवेत्यर्थः ॥

ननु यद्यनादीनामपि निवृत्तिर्भवति हन्तानुत्पत्तिधर्मकाणामपि निवृत्तिप्रसङ्ग इत्यत आह न चैवमिति । रागादीनामुत्पत्तिधर्मकाणामेव

(भा०)नैवं सत्यनुत्पत्तिधर्मकं किञ्चिद्व्ययधर्मकं प्रतिज्ञायते इति। कर्म च सत्त्वनिकायनिर्वर्तकं तत्त्वज्ञानकृतान्मिथ्यासङ्कल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति । सुखदुःखसंवित्तिफलं तु भवतीति ॥ ६८ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थाध्यायस्याऽऽद्यमाह्निकम् ।

(ख०) निवृत्त्यभ्युपगमादित्याशयः ॥

ननु मा भूवान्मिथ्याज्ञाननिमित्ता रागादयो मिथ्याज्ञाननिवृत्तौ-ये पुनरमी कर्मनिमित्तास्तेषां कुतो निवृत्तिः—न च कर्मनिवृत्तौ रागादिनिवृत्तिः, रागादिमतः कर्मनिवृत्तेरभावात्-तस्मान्नापवर्ग इत्यत आह कर्म चेति । अयमभिप्रायः। कर्म च निकायनिर्वर्तकं तत्त्वज्ञानकृतान् मिथ्याज्ञानरूपसङ्कल्पविघातान्न रागाद्युत्पत्तिनिमित्तं भवति । सर्वेषां रागादीनां मिथ्याज्ञानमेव निमित्तम् । कर्माणि तु निकायनियमेन रागादीन् प्रवर्त्तयन्तीति कर्मनिमित्तत्वमुक्तमिति । ननु यथा रागादयः सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या निवर्त्तन्ते एवं सत्यपि कर्मणि मिथ्याज्ञाननिवृत्त्या फलमपि मा भूदित्यत आह सुखदुःखेति । कर्माशयप्रपञ्चमुच्छेत्तुम् अमूढोऽप्यसक्तोऽप्यद्विष्टोऽपि—मूढ इव सक्त इव द्विष्ट इव-तत्फलं भुङ्क्त इति रागाद्यनपेक्षमेव कर्म स्वफलं जनयति । तेनासौ फलोपभोगो न बन्धहेतुः । मूढादीनां तु भवत्येव बन्धहेतुः फलोपभोगः । स च तादृशो रागादिसहायैः कर्मभिः क्रियते न रागादिनिरपेक्षैरित्यवदातम् ॥ ६८ ॥

इति चतुर्थाध्याये प्रथमं प्रस्फुरणम् ।

## अथ चतुर्थाध्यायस्य द्वितीयमाह्निकम्।

### (१) तत्त्वज्ञानोत्पत्तिप्रकरणम्।

( भा० ) "किं नु खलु भोः ! यावन्तो विषयास्तावत्सु

---

अथ चतुर्थाध्याये द्वितीयमाह्निकम्।

(ख०) तदेवं संशयप्रमाणप्रमेयाणि परीक्षितानि, प्रयोजनादयोऽपि 'यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्ग' (सू० २।१।७) इत्यातिदेशेन परीक्षिता इति षोडशापि प्रमाणादयः परीक्षिताः। तेषां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरित्युक्तम् ( सू० १।१।१ )। तत्रापि प्रमेयतत्त्वज्ञानं साक्षान्निःश्रेयसहेतुरितरेषां तु तत्त्वज्ञानाङ्गतयेत्युक्तम्। इदमिदानीम्परीक्ष्यते—किम्प्रत्येकमात्मादीनां तत्त्वज्ञानं निःश्रेयसाधिगमहेतुरुत कस्याचिदेषामेकदेशस्येति तात्पर्यम्॥ तत्र परिशुद्धिः। एवम्प्रथमाह्निके चतुर्दशभिः प्रकरणैः प्रमेयषट्कन्निरूपितम्। इदानीन्तस्य धर्मस्तत्त्वज्ञानं परीक्षणीयम्—किंलक्षणम्-किं विषयं—कथमुत्पद्यते—कथं परिपाल्यते-कथं विवर्धते चेति तत्त्वज्ञानपरीक्षैवाह्निकार्थः। तत्र यस्मिन्विषये यथोत्पद्यते तत्त्वज्ञानं तत्क्रमेण प्रतिपादनमिति ।। वर्धमानोपाध्यायाश्च न्यायनिबन्धप्रकाशे—तत्त्वज्ञानस्यानुद्दिष्टस्यालक्षितस्य कथं परीक्षा प्रवर्त्तते कथं चाह्निकद्वयस्य समानविषयत्वं येनैतयोरेकाध्यायावयवत्वमित्याशङ्क्य तत्त्वज्ञानमुद्दिष्टमाद्ये सूत्रे लक्षितं च द्वितीये सूत्रे—कार्यरूपप्रमेयपरीक्षैव चतुर्थाध्यायविषयस्तत्त्वज्ञानमपि कार्यरूपमेवेत्यस्त्येव समानविषयतेत्युक्तवन्तः॥ तथा च तत्त्वज्ञानस्यापवर्गहेतुत्वादपवर्गात्प्रागेव तस्य परीक्षोचितेत्याशङ्क्य—तत्त्वज्ञानस्य परीक्षणात्प्राक् येषां तत्त्वज्ञानमपेक्षितं तेषां सर्वेषाम्प्रमेयाणाम्परीक्षणमुचितमपवर्गश्च प्रमेयविशेष एवातो युक्तमेव तस्य परीक्षणम्प्रमेयेष्विति समाहितवन्तः॥

तामिमां परीक्षामाक्षेपमुखेनावतारयति भाष्यकारः किन्नु खल्विति। कोटिद्वयमाह यावन्त इति। किं सकलपदार्थज्ञानमेवापवर्ग-

(भा०) प्रत्येकं तत्त्वज्ञानमुत्पद्यते—अथ क्वचिदुत्पद्यत इति। कश्चात्र विशेषः? न तावदेकैकत्र यावद्विषयमुत्पद्यते—ज्ञेयानामानन्त्यात्। नापि क्वचिदुत्पद्यते—यत्र नोत्पद्यते तत्रानिवृत्तो मोह इति मोहशेषप्रसङ्गः। न चान्यविषयेण तत्त्वज्ञानेनान्यविषयो मोहः शक्यः प्रतिषेद्धुमिति।"

मिथ्याज्ञानं वै खलु मोहो न तत्त्वज्ञानस्यानुत्पत्तिमात्रम्। तच्च मिथ्याज्ञानं यत्र विषये प्रवर्त्तमानं संसारबीजं भवति स विषयस्तत्त्वतो ज्ञेय इति।

---

(ख०) हेतुरुत कतिपयपदार्थतत्त्वज्ञानमेवेत्याशयः। प्रश्नस्याशयमविद्वान् पृच्छति कश्चेति। प्रश्नस्याशयं प्रकटयन् प्रथमकोटिं निरस्यति न तावदिति। यदि सर्वपदार्थतत्त्वज्ञानमपवर्गायापेक्षितं तर्हि ज्ञानविषयाणामानन्त्यात्तादृशं तत्त्वज्ञानमसम्भवमेवेत्यपवर्गासम्भवः। द्वितीयकोटिं निरस्यति नापि क्वचिदिति। यावत्किल सर्वे पदार्था न तत्त्वतो ज्ञाता भवन्ति तावद्ये विषया अज्ञातास्तद्विषयमज्ञानमेव वर्त्तते। तत्र हेतुमाह न चान्येति। ज्ञातविषयज्ञानेनाज्ञातविषयमज्ञानं न निवर्त्तत इत्यर्थः। अज्ञानरूपश्च मोहस्तस्मान्मोहे सति रागद्वेषावपि प्रवर्तेते—रागद्वेषमोहाश्च बन्धनहेतव इत्यनिर्मोक्षप्रसङ्ग इति पूर्वपक्षहृदयम्।

समाधत्ते मिथ्याज्ञानमिति। 'वै' इति पूर्वपक्षाक्षमां सूचयति, 'खलु' इति हेतुं सूचयति। एवं च 'अयुक्तः पूर्वपक्षः—कस्मात्—यतो मोहस्य मिथ्याज्ञानरूपता न तु ज्ञानाभावरूपतेति' वाक्यार्थः। न तत्त्वज्ञानमज्ञाननिवृत्तिमात्रेण निःश्रेयसोपयोग्यपि तु संसारनिदानोच्छेदद्वारेण—न च तत्त्वज्ञानं संसारहेतुरपि तु मिथ्याज्ञानम्-तदेव विरोधितयोच्छिन्दत्तत्त्वज्ञानमपवर्गहेतुरिति भावः। तेन किमायातमित्यत आह तच्च मिथ्याज्ञानमिति। स्वसम्बन्धिनो ह्यात्मादयो विपर्ययेण परिच्छिन्नाः संसारहेतव इति तद्विषयमेव मिथ्याज्ञानमपनेयम्, नात्मा-

(भा०) "किं पुनस्तन्मिथ्याज्ञानम्" ?

अनात्मन्यात्मग्रहः—अहमस्मीति मोहोऽहङ्कार इति । अनात्मानं खल्वहमस्मीति पश्यतो दृष्टिरहङ्कार इति ।

"किं पुनस्तदर्थजातं यद्विषयोऽहङ्कारः ?"

शरीरेन्द्रियमनोवेदनाबुद्धयः ।

"कथं तद्विषयोऽहङ्कारः संसारबीजं भवति ?"

अयं खलु शरीराद्यर्थजातमहमस्मीति व्यवसितः तदुच्छेदे-

(ख०) द्यन्तरविषयम् । तेन तत्र मिथ्याज्ञानं मा निवर्त्तिष्ट निवर्तितं वा स्वात्मादिदृष्टान्तेन न तु तस्य संसारनिवृत्तिम्प्रत्युपयोगः यस्य तूपयोगस्तस्य तत्त्वज्ञानं न दुष्करमित्याशयः ।

पृच्छति किम्पुनरिति । सन्ति खल्वस्मिन् विषये वादिनां विप्रतिपत्तयः विधूतविधिनामरूपप्रपञ्चोपप्लवविशुद्धचिदानन्दघनाद्वैतब्रह्मसाक्षात्कारस्तत्त्वज्ञानं तद्विरुद्धमेव मिथ्याज्ञानमिति वेदान्तिनः । सत्त्वपुरुषान्यताख्यातिरेव तत्त्वज्ञानन्तद्विरोधि मिथ्याज्ञानमिति साङ्ख्याः । धर्मपुद्गलनैरात्म्यज्ञानमेव तत्त्वज्ञानं तद्विरुद्धं मिथ्याज्ञानमिति केचिद्बौद्धाः । शरीरेन्द्रियाद्यनित्यव्यतिरिक्तनित्यात्मदर्शनं तत्त्वज्ञानं तद्विरुद्धं मिथ्याज्ञानमिति नैयायिकाः । तदेवं विप्रतिपत्तेरेवायम्प्रश्न इत्यवधेयम् ॥

न्यायसिद्धान्तेनोत्तरम् अनात्मनीति । तदेव स्पष्टयति अनात्मानमिति । पृच्छति किम्पुनरिति । उत्तरम् शरीरेति । अहङ्कारस्य संसारहेतुत्वं वर्णयितुं पृच्छति कथमिति । उत्तरम् अयं खल्विति । इदमत्राकूतम् । न तावद् वेदान्ताभिमतमद्वैतानन्दघनात्मज्ञानं तत्त्वज्ञानम् भेदस्य प्रत्यक्षस्यासति बाधकेऽपह्नोतुमशक्यत्वात् । न च प्रकाशानन्दावात्मधर्मावात्मातिरिक्तावात्मस्वभावौ भवितुमर्हतः । "सत्यं विज्ञानमानन्दं ब्रह्मेति" श्रुतिरानन्दचैतन्यशक्त्यभिप्राया । भेद एव च

(भा०)नात्मोच्छेदं मन्यमानोऽनुच्छेदतृष्णापरिप्लुतः पुनः पुनस्तदुपादत्ते, तदुपाददानो जन्ममरणाय यतते, तेनात्रियोगान्नात्यन्तं दुःखाद्विमुच्यत इति। यस्तु दुःखं दुःखायतनं दुःखानुषक्तं सुखं च सर्वमिदं दुःखमिति पश्यति, स दुःखं परिजानाति। परिज्ञातं च दुःखं प्रहीणं भवत्यनुपादानात् सविषान्नवत्। एवं दोषान् कर्म च दुःखहेतुरिति पश्यति। न चाप्रहीणेषु दोषेषु दुःखप्रबन्धोच्छेदेन शक्यं भवितुमिति दोषान् जहाति। प्रहीणेषु च दोषेषु न प्रवृत्तिः प्रतिसन्धानायेत्युक्तम्।

(ख०)तद्वत्तया कथंचित् सामानाधिकरण्यमुपपद्यते। अभेदे त्वानन्दविज्ञानयोस्तत्पदयोः पर्यायतया सहप्रयोगानुपपत्तिः। न च प्रकृष्टप्रकाशः सवितेत्यत्र प्रकृष्टप्रकाशयोरभेदो ऽप्रकाशस्यापि प्रकर्षसम्भवात् अप्रकृष्टस्यापि खद्योतादेः प्रकाशसम्भवात्। नापि साङ्ख्यसिद्धान्तो युक्तिसहः। सत्त्वपुरुषान्यताख्यातिर्हि सत्त्वस्य प्रकृतेरेवासम्भवादयुक्ता। सत्कार्यवादमूलत्वात्प्रकृतिसाधनस्य तद्वादनिराकरणेनैव सा निराकृता वेदितव्या॥ धर्मपुद्गलनैरात्म्यवादस्तु क्षणभङ्गभङ्गे नित्यात्मसद्भावकथनेनैव निराकृतः॥ तस्मात्सुष्ठूक्तमनात्मन्यात्मग्रहोऽहमस्मीति मोहोऽहङ्कार एव मिथ्याज्ञानमिति। अस्मादेव च कारणात्सर्वस्यैवमात्माशीः कृमेरपि–'मा न भूवम् भूयासमिति'। सोऽयमीदृशोऽभिनिवेशः शरीरादीनामात्मत्वेनाध्यवस्यतो भवति नात्मतत्त्वविदुषः। स खल्वहिनिर्व्लयिनीमिवाहिस्ततो व्यतिरिक्तं शरीरादि पश्यन्न तत्र स्निह्यति स्नेहविरहान्न तप्यते नाप्यनुशोचतीत्यादि तात्पर्ये स्पष्टम्॥

साहङ्कारस्य तत्त्वज्ञानवतः संसारं दर्शयित्वा निरहङ्कारस्य तत्त्वज्ञानवतः संसारनिवृत्तिमाह यस्तु दुःखमिति। प्रहीणेष्विति। दोषाणामेव प्रवर्तनालक्षणत्वाद् यथोक्तं प्रथमाध्यायस्याष्टादशे सूत्रे। उक्तमिति। चतुर्थाध्यायद्वितीयाह्निकस्य चतुःषष्टितमसूत्र इति शेषः।

(भा०) प्रेत्यभावफलदुःखानि च ज्ञेयानि व्यवस्थापयति-कर्म च दोषांश्च प्रहेयान् । अपवर्गोऽधिगन्तव्यस्तस्याधिगमोपायस्तत्त्वज्ञानम् ।

एवं चतसृभिर्विधाभिः प्रमेयं विभक्तमासेवमानस्याभ्यस्यतो भावयतः सम्यग्दर्शनं यथाभूतावबोधस्तत्त्वज्ञानमुत्पद्यते । एवं च--

(सू०) दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिः ॥१॥

( भा० ) शरीरादि दुःखान्तं प्रमेयं दोषनिमित्तं-तद्विषयत्वान्मिथ्याज्ञानस्य । तदिदं तत्त्वज्ञानं तद्विषयमुत्पन्नमहङ्कारं नि-

---

(ख०) प्रमेयेषु प्रथमवर्गमहङ्कारविषयं शरीरादि प्रदर्श्य तेष्वपरं वर्गत्रयं दर्शयितुमुपक्रमते प्रेत्यभावेति। यस्मादुक्तेन प्रकारेण मोहतत्त्वज्ञानयोर्यथाक्रमं संसारापवर्गहेतुत्वं तस्मान्मोक्षमाणैः प्रेत्यभावफलदुःखान्यपि ज्ञेयानि-कर्म च दोषाश्च प्रहेया-अपवर्गोऽधिगन्तव्यस्तदधिगमोपायश्च तत्त्वज्ञानमित्यादिव्यवस्थापनमावश्यकमित्यर्थः ।

उपसंहरति एवं चतसृभिरिति । शरीरेन्द्रियमनोवेदनाबुद्धिरूपः प्रथमः प्रमेयवर्ग आत्मत्वाभिमानविषयः-प्रेत्यभावफलदुःखरूपो द्वितीयः प्रमेयवर्गो ज्ञेयः-कर्मदोषरूपस्तृतीयः प्रमेयवर्गो हेयः-अपवर्गरूपश्च चतुर्थः प्रमेयवर्गोऽधिगन्तव्य इत्येतेषु चतुर्षु वर्गेषु विभक्तं प्रमेयं परिसमाप्तमित्यर्थः । एवम्भूतं प्रमेयम् 'आसेवमानस्य अभ्यस्यतः भावयत.' ( पर्यायत्रयकथनं भावनादार्ढ्यप्रदर्शनार्थम् ) यत् सम्यग्ज्ञानं सकलपदार्थानां यथार्थज्ञानमुत्पद्यते तदेव 'तत्त्वज्ञानम्' इत्यर्थः ।

अर्थगतिं परिशोध्य तत्रैवार्थे सूत्रम् दोषनिमित्तानामिति ।

सूत्रार्थमाह शरीरादीति । शरीरादेर्दोषनिमित्तत्वे हेतुमाह तद्विषयत्वादिति । तद्विषयमिति-शरीरादिदुःखान्तप्रमेयविषयमित्यर्थः ।

(भा०)वर्त्तयति–समानविषये तयोर्विरोधात् । एवं तत्त्वज्ञानाद् 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तराभावादपवर्ग' इति । स चायं शास्त्रार्थसङ्ग्रहोऽनूद्यते नापूर्वो विधीयत इति ॥ १ ॥

( भा० ) प्रसङ्ख्यानानुपूर्वी तु खलु––

(सू०) दोषनिमित्तं रूपादयो विषयाः सङ्कल्पकृताः॥२॥

( भा० ) कामविषया इन्द्रियार्था इति रूपादय उच्यन्ते। ते मिथ्या सङ्कल्प्यमाना रागद्वेषमोहान् प्रवर्त्तयन्ति । तान् पूर्वं प्रसङ्ख्-

---

(ख०)तयोरिति। तत्त्वज्ञानाहङ्कारयोरिति यावत्। तत्त्वज्ञानफलं पूर्वोक्तं स्मारयति एवमिति । दुःखेत्यादि प्रथमाध्यायगतद्वितीयसूत्रम् ॥ ननु सर्वं चैतदुक्तमेव तत्र सूत्रे किमर्थं पुनरिहोच्यत इत्यत आह स चायमिति । द्वितीयसूत्रेण कृतः 'शास्त्रार्थसङ्ग्रहः' अस्मिन् सूत्रे 'अनूद्यते'–तत्रोक्तस्य तत्त्वज्ञानस्योत्पत्तिप्रकारं वर्णयितुमित्याशयः॥१॥

शरीरादिष्वनात्मस्वात्मबुद्धिर्निवर्तनीयेत्युक्तम्–तत्रादौ कस्मिन्नात्मबुद्धिर्निवर्तनीयेत्यपेक्षायां क्रमप्रदर्शनमवतारयति प्रसङ्ख्यानेति । 'प्रसङ्ख्यानस्य' समाधिजस्य तत्त्वज्ञानस्य 'आनुपूर्वी' क्रमः-अधुना प्रदर्श्यत इति शेषः ।

तत्त्वज्ञानं विषय एव सुकरमिति तत्रैव प्रथमः प्रयत्नो युक्त इति । तत्रैवार्थे सूत्रम् दोषनिमित्तमिति ॥ 'सङ्कल्पः' मिथ्याज्ञानम्–तेन 'कृताः'–'रूपादयो विषयाः' 'दोषाणां निमित्तं' कारणं भवन्तीति शेषः ॥ 'सङ्कल्पः' समीचीनोऽयमिति मानमिति वृत्तिकृतः ॥

सूत्रार्थमाह कामविषयेति । ननु भवन्तु रूपादयो 'विषया' रागादिप्रवर्त्तकाः तेन किमायातम्प्रकृत इत्यत आह तान् पूर्वमिति । रागादिदोषजनकत्वात् रूपादयो विषया एवादौ तत्त्वतो ज्ञातव्या इत्यर्थः।

(भा०) क्षीत । ताँश्च प्रसञ्चक्षाणस्य रूपादिविषयो मिथ्यासङ्कल्पो निवर्तते । तन्निवृत्तावध्यात्मं शरीरादि प्रसञ्चक्षीत । तत्प्रसङ्ख्यानादध्यात्मविषयोऽहङ्कारो निवर्त्तते । सोऽयमध्यात्मं बहिश्च विविक्तचित्तो विहरन्मुक्त इत्युच्यते ॥ २ ॥

( भा० ) अतः परं काचित्संज्ञा हेया काचिद्भावयितव्येत्युपदिश्यते, नार्थनिराकरणमर्थोपादानं वा ।

---

(ख०) रूपादितत्त्वज्ञानस्य फलमाह तांश्चेति । एतेषां तत्त्वज्ञानेनैतद्विषयकं मिथ्याज्ञानं निवर्त्तते । ममैवैते विषया इति व्यवसाय एवैतद्विषयं मिथ्याज्ञानम्–तद्विरोधि तत्त्वज्ञानं च–'नैते ममैव किन्तु चौराग्निदायादसाधारणा एवेति' ॥ रूपादिविषयज्ञानानन्तरं कस्य ज्ञानस्य क्रम इति दर्शयितुमाह–तन्निवृत्ताविति । रूपादिविषयमिथ्याज्ञाने निवृत्ते सति आत्मनः साक्षादिव सम्बद्धानि यानि शरीरेन्द्रियादीनि तान्येव ज्ञेयानि । शरीरादिज्ञानस्य फलमाह तत्प्रसङ्ख्यानादिति । शरीरादिषु तत्त्वतो ज्ञातेषु तेष्वात्मबुद्धिरपैतीत्यर्थः । सर्वस्यास्य ज्ञानस्य चरमं फलमाह सोऽयमिति–रूपादिविषयान् शरीराणि च तत्त्वतो ज्ञात्वा तद्गतरागद्वेषादिविमुक्तचित्तो 'मुक्त' इत्युच्यते ॥ २ ॥

प्रकृतविषय एवोपदेशविशेषमवतारयति अतः परमिति । प्रत्येकविषयस्य बहवोंशास्तेषु केचिदत्यन्तहेया केचिद्विभावनीया इत्युपदिश्यत इत्यर्थः । उपदेशस्य विषयान्तरपरतां निराकरोति नार्थेति । कस्यार्थस्योपादानं कस्य निराकरणमित्यादि नैवात्रोपदिश्यते–यथावस्थित एव विषये किञ्चिद्विभावनीयं किञ्चिन्निराकरणीयमित्येतावानेवोपदेशस्यार्थ इत्याशयः ॥

किंविधोऽयमुपदेश इति पृच्छति कथमितीति ।

(भा०)कथमिति?—

(सू०) तन्निमित्तं त्ववयव्यभिमानः ॥ ३ ॥

( भा० )तेषां दोषाणां निमित्तं त्ववयव्यभिमानः। सा च खलु स्त्रीसंज्ञा सपरिष्कारा पुरुषस्य पुरुषसंज्ञा च स्त्रियाः सपरिष्कारा—निमित्तसंज्ञा अनुव्यञ्जनसंज्ञा च। निमित्तसंज्ञा—रसनाश्रोत्रम्, दन्तोष्ठम, चक्षुर्नासिकम्। अनुव्यञ्जनसंज्ञा—इत्थं

---

(ख०)उत्तरम्-तन्निमित्तमिति सूत्रम्। 'अवयविनि' तरुण्यादिशरीरे यो 'ऽभिमानः' स एव दोषाणां निमित्तमित्यर्थः॥

सूत्रार्थमाह—तेषामिति। सूत्रार्थं दृष्टान्तेन स्पष्टयति सा चेति। यथा स्त्रीविषये पुरुषस्य 'इयं स्त्री' इति भावना भवति—सा च भावना तस्य बन्धनकारणं भवतीत्याह सपरिष्कारेति। यथा स्त्रीविषये पुरुषस्य तथैव पुरुषविषयेऽपि स्त्रिया अपीत्याह पुरुषसंज्ञेति। न तु केवलमियं स्त्री — अयम्पुरुष इत्येतावन्मात्रमेव बन्धनकारणं भवत्यपि तु तत्तद्विषये स्वरूपान्तरभावनैवेति प्रदर्शयितुं कामुकविषये भावनाविशेषद्वयं सूचयति निमित्तेति॥ 'निमित्तसंज्ञाऽनुव्यञ्जनसंज्ञा' ( इत्युभयरूपा ) 'स्त्रीसंज्ञा पुरुषस्य सपरिष्कारा' ( भवति ) 'पुरुषसंज्ञा च स्त्रियाः सपरिष्कारा' ( भवति ) इत्यन्वयः। कामुकविषयां स्त्रीसंज्ञां विशिनष्टि निमित्तसंज्ञा रसनेति। 'निमित्तं' दन्तत्वादि तद्विशिष्टाः 'संज्ञाः' विषयाः प्रियायाः कामुको रसनोष्ठनासिकादीनवयवान् केवलान् सम्मुग्ध इव भावयति सैव भावनाभिप्रेता। अनुव्यञ्जनसंज्ञां विशिनष्टि अनुव्यञ्जनसंज्ञा इत्थमिति। 'व्यञ्जनानि' अवयविनोऽवयवाः ( तैस्सहैव तस्योपलम्भात् ) तेषां—'अनुव्यञ्जनम्' तत्सादृश्यम्—तेन तदारोपः—'इत्थं दन्ता इत्थमोष्ठौ' इति रूपकादिद्वारेण कामुकः प्रियाया अङ्गानि भावयति सैव भावनाऽत्राभिप्रेता। उक्तसं-

(भा०) दन्तौ इत्थमोष्ठाविति । सेयं संज्ञा कामं वर्धयति तदनुषक्ताँश्च दोषान् विवर्जनीयान् । वर्जनं त्वस्या भेदेनावयवसंज्ञा केशलोममांसशोणितास्थिस्नायुशिराकफपित्तोच्चारादिसंज्ञा । ताम-

---

(ख०)ज्ञाद्वयस्य फलमाह—सेयमिति । प्रियाया दन्तौष्ठादीनवयवान् तत्तद्रूपेणैव भावयन्नथ च तानेव दाडिमीबीजविम्बादिरूपेण भावयन् कामुकस्तस्यामासक्तो भवतीत्यर्थः ॥ अनुव्यञ्जनसंज्ञोदाहृता तात्पर्यकृता—

द्रवत्कनकनिर्मलद्युतिरनङ्गलीलैकभू-
मेंहेभकटविभ्रमस्तनभरालसाङ्गी यदि ।
प्रिया न परिरभ्यते तुलितसिद्धसञ्जीविनी
सहेमहि कुतोऽन्यथा विषमबाणबाणव्यथाम् ॥
मदनसरितमेनां गाहमानो जनोऽयं
जघनपुलिननाभीमण्डलावर्त्तरम्याम् ।
मुखनलिनसनाथामुल्लसद्भ्रूलतोर्मिं
चिरविरहहुताशायासमुज्झाञ्चकार ॥ इति ॥

स्त्रीविषये आसक्तिजनकं संज्ञाद्वयं प्रदर्श्य तस्यैव स्त्रियाः संज्ञान्तरेण भावनया तस्यां विरक्तिरपि जनयतीति प्रदर्शयितुं तदेव संज्ञान्तरमाह वर्जनमिति । 'अस्याः' स्त्रियाः 'वर्जनम्' वर्जयतीति वर्जनम् परित्यागोपायः तस्या एव 'अवयवसंज्ञा' भवतीत्यर्थः । का चेयमवयवसंज्ञेति विशदयति केशेति । उच्चार उत्सर्गो मूत्रपुरीषादिः । अत्राप्युदाहरणश्लोकस्तात्पर्यकृता वर्णितः—

मज्जामस्थनामथ प्लीहां यकृतां शकृतामपि ।
पूर्णाः स्नायुशिरास्यूताः स्त्रियश्चर्मप्रसेविकाः ॥
स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्निधनादपि ।
कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः ॥ इति ।

(भा०)शुभसंज्ञेत्याचक्षते। तामस्य भावयतः कामरागः प्रहीयते।
सत्येव च द्विविधे विषये काचित्संज्ञा भावनीया काचित्परिवर्जनीयेत्युपदिश्यते। यथा विषसम्पृक्तेऽन्नेऽन्नसंज्ञोपादानाय विषसंज्ञा प्रहाणायेति ॥ ३ ॥

(२) प्रासङ्गिकमवयविप्रकरणम्। प्रासङ्गिकम् ॥

(भा०) अथेदानीमर्थं निराकरिष्यताऽवयव्युपपाद्यते—

---

(ख०)उक्ताया अवयवसंज्ञाया नामान्तरमाह तामशुभेति। अशुभसंज्ञाभावनायाः प्रयोजनमाह तामस्येति। स्त्रियां योऽनुरागोऽनुव्यञ्जनसंज्ञयोत्पद्यते तस्याशुभसंज्ञाभावनया नाशो भवतीत्यर्थः ॥

शुभाशुभसंज्ञयो रागोत्पादकनाशकतारूपं भेदमुक्त्वा तयोरेव भेदान्तरमाह सत्येवेति। द्विविध एवासौ कामिनीलक्षणो विषयः–रागादिदोषप्रहाणार्थं तस्यानुव्यञ्जनसंज्ञागोचरत्वमेवोपाददीत वैराग्योत्पादनायेत्येवोपदेशार्थः। अत्रैव दृष्टान्तमाह यथा विषेति। न हि विषमधुनी परमार्थतो न स्तः–अपि तु वैराग्याय विषसंज्ञैव तत्रोपादीयते एवमेव स्त्रीरूपोऽवयवी नास्त्येवेति न, अपि तु तस्यामेवाशुभसंज्ञोपादातव्येत्यर्थः ॥ परिशुद्धिकृतस्त्वाहुः–वस्तुतस्तु मुमुक्षोः सर्वं हेयमेव (नोपादेयं किञ्चिदपि)–हेये चोपादेयबुद्धिर्विपर्यय एव–तथाऽपि द्विविध एवासाविति बुभुक्षुमुमुक्षुपुरुषभेदाभिप्रायेणोक्तमिति द्रष्टव्यमिति ॥ ३ ॥

तदेवं स्वमतेन प्रसंख्यानोपदेशमुपवर्ण्य पराभिमतं प्रसंख्यानं निराकर्तुमुपन्यस्यति अथेदानीमिति। 'अर्थम् निराकरिष्यता' विज्ञानवादिना 'अवयविनिराकरणं' उपपाद्यते। निमित्तानुव्यञ्जनसंज्ञयोरवयव्येव विषयः–ते एते संज्ञे वर्जितुमशुभसंज्ञोपादेयेत्युपदेश इति व्यवस्था-

(सू०) "विद्याऽविद्याद्वैविध्यात् संशयः" ॥ ४ ॥

(भा०) "सदसतोरुपलम्भाद्विद्या द्विविधा । सदसतोरनुपलम्भादविद्यापि द्विविधा । उपलभ्यमानेऽवयविनि विद्याद्वैविध्यात्संशयः । अनुपलभ्यमाने चाविद्याद्वैविध्यात्संशयः । सोऽयमवयवी यद्युपलभ्यते, अथापि नोपलभ्यते, न कथञ्चन संशयान्मुच्यते इति" ॥ ४ ॥

(सू०) तदसंशयः पूर्वहेतुप्रसिद्धत्वात् ॥ ५ ॥

---

(ख०)पितम्—तत्रार्थमात्रस्याभावात् कुतो निमित्तानुव्यञ्जनसंज्ञे—इति तन्निराकरणाय प्रथममवयवी निराक्रियते, पश्चात्परमाणुस्ततश्च ज्ञानमात्रमर्थरहितं सिद्धं भवतीत्यभिप्रायो विज्ञानवादिनः ॥

तत्र तावत्संशयपूर्वकत्वात्सर्वस्योपपादनस्य प्रथमं संशयमेवोपन्यस्यति—विद्येति सूत्रम् ॥

सूत्रार्थं व्याचक्षाणस्तत्रोक्तं विद्याया द्वैविध्यमाह सदसतोरुपेति । उपलब्धिरेवात्र 'विद्या' । अविद्याया द्वैविध्यमाह सदसतोरनुपेति । अनुपलब्धिरेवात्र 'अविद्या' । सदुपलभ्यते—यथा तडागगतं तोयम् । असच्चोपलभ्यते—यथा मरुमरीचिकायामुदकम् । एवं सदपि नोपलभ्यते यथा चिरनिखातं भूमौ निध्यादि । असच्च नोपलभ्यते—यथा भूतले दृश्यमाने तत्तुल्योपलम्भयोग्यो घटादिः ॥ उक्तदृष्टान्तं दार्ष्टान्तिके योजयति उपलभ्यमान इति । तदेव विशदयति सोऽयमिति । अथावयव्युपलभ्यते तत्र संशयः—किं सन्नेवोपलभ्यतेऽथवासन्नेव । अथ नोपलभ्यते तथाऽपि संशयः—किमसन्नोपलभ्यतेऽथवा सन्नेव नोपलभ्यत इति सर्वथा संशय एवेत्यर्थः ॥ ४ ॥

तत्र सिद्धान्ती वक्ष्यमाणमवयविनिराकरणहेतुम्पश्चान्निराकरिष्या-

(भा०) तस्मिन्ननुपपन्नः संशयः । कस्मात् ? पूर्वोक्तहेतूनामप्रतिषेधादस्ति द्रव्यान्तरारम्भ इति ॥ ५ ॥

(सू०) "वृत्त्यनुपपत्तेरपि न संशयः" ॥ ६ ॥

(भा०) "संशयानुपपत्तिः । नास्त्यवयवीति" ॥ ६ ॥

(भा०) तद्विभजते—

---

(ख०) मीत्यादौ प्रौढिवादेन तावत्संशयमेव निराकरोति तदसंशय इति सूत्रम् । 'तस्मिन्' अवयविनि 'असंशयः' नास्त्येव संशयः—कस्मात् 'पूर्वहेतुप्रसिद्धत्वात्' पूर्वोक्तैर्हेतुभिरवयविनः साधितत्वादित्यर्थः ।

सूत्रार्थमाह—तस्मिन्निति—अवयविनीत्यर्थः । संशयाभावसाधनमाह पूर्वेति । अवयवैरवयविरूपं द्रव्यान्तरमेवारभ्यत इत्यस्य पक्षस्य साधनहेतवोऽस्माभिः द्वितीयाध्याये प्रदर्शितास्तेषामपाकरणं त्वद्यत्वेऽपि न कृतम्—ततश्चावयविनः सत्त्वे निश्चिते कुतस्तत्र संशय इत्याशयः ॥ ५ ॥

पूर्वपक्षी स्वपक्षमिदानीं प्रतिबन्दिरूपेणाह वृत्त्यनुपपत्तेरिति । अवयविनि नास्त्येव संशयः इत्यत्रास्माकमप्यनुमतिः—अवयविनः 'वृत्त्यनुपपत्तेः, यस्मात्तत्सत्त्वं नैवोपपद्यते तस्मात् तत्र 'न संशयः' इत्यर्थः ।

न संशय इत्यस्य सूत्रावयवस्यार्थमाह संशयानुपपत्तिरिति । अवयविविषये नास्त्येव संशय इत्यर्थः । परः स्वाशयं प्रकटयति नास्त्यवयवीति । यस्मान्नास्त्येवावयवीति सिद्धमेव तस्मात्तस्यासत्त्वस्य निश्चितत्वात्सत्त्वासत्त्वसंशयो न सम्भवत्येवेत्यर्थः ॥ ६ ॥

अवयव्यभावसाधनहेतूक्तिमवतारयति तद्विभजत इति । 'तत्' अवयव्यसत्त्वपक्षं 'विभजते' उपपादयति ।

(सू०) "कृत्स्नैकदेशावृत्तित्वादवयवानामवयव्यभावः" ॥ ७ ॥

(भा०) "एकैकोऽवयवो न तावत् कृत्स्नेऽवयविनि वर्त्तते। तयोः परिमाणभेदादवयवान्तरसम्बन्धाभावप्रसङ्गाच्च । नाप्यवयव्येकदेशेन, न ह्यस्यान्ये अवयवा एकदेशभूताः सन्तीति" ॥७॥

(भा०) अथावयवेष्वेवावयवी वर्त्तते—

(सू०) "तेषु चावृत्तेरवयव्यभावः" ॥ ८ ॥

---

(ख०) अवयव्यसत्त्वपक्षसाधकहेतूनाह—कृत्स्नैकेति सूत्रम् । यदवयवोऽवयविनि वर्त्तते तत् किं कार्त्स्न्येनोतैकदेशेन । तत्र कार्त्स्न्यें पक्षं निषेधयति एकैक इति । उक्तार्थे हेतुमाह तयोरिति । अणुपरिमाणोऽवयवो महापरिमाणोऽवयवीत्यणुपरिमाणेन महापरिमाणस्याव्याप्तेरित्यर्थः । हेत्वन्तरमाह अवयवान्तरेति । यद्येकेनैवावयवेन कृत्स्नोऽवयवी व्याप्तस्तर्हि तस्य अवयवान्तरैः सम्बन्धो नैव स्यात् तथा चैकावयव एवावयवी स्यादित्यर्थः । अवयव्येकदेश एवावयवो वर्त्तत इति द्वितीयं पक्षं निषेधति नापीति । तत्र हेतुमाह न ह्यस्येति । न ह्यस्य अवयविनः अवयवेभ्योऽन्ये 'एकदेशाः' सन्ति—तथा चावयवे एवावयवो वर्त्तते इति प्राप्तम्—एवञ्च यावदवयवमवयव्युत्पद्येत—यावन्तोऽवयवास्तावन्त एवावयविन इति स्यात्—न च अवयव्यनवरुद्धः कदाचिदपि कोऽप्यवयवो दृश्येतेत्यापत्त्यर्थः ॥ ७ ॥

अवयवा अवयविनि वर्त्तन्त इति पक्षं दूषयित्वाऽधुनाऽवयव्येवावयवेषु वर्त्तते इति पक्षं दूषयितुमवतारयति अथेति ।

तद्दूषयति तेष्विति सूत्रम् । 'तेषु' अवयवेषु 'अवृत्तेः' वर्त्तमानत्वानुपपत्तेः 'अवयव्यभावः' अवयवी नास्त्येवेति मन्तव्यमित्यर्थः ।

(भा०) "न तावत्प्रत्यवयवं वर्त्तते—तयोः परिमाणभेदाद्, द्रव्यस्य चैकद्रव्यत्वप्रसङ्गात् । नाप्येकदेशेन—सर्वेष्वन्यावयवाभावात् । तदेवं न युक्तः संशयः नास्त्यवयवीति" ॥ ८ ॥

(सू०) "पृथक् चावयवेभ्योऽवृत्तेः" ॥ ९ ॥

(भा०) "अवयव्यभाव इति वर्तते । न चायं पृथगवयवेभ्योवर्तते

---

(ख०) सूत्रं व्याचक्षणोऽवयवी कृत्स्नः प्रत्यवयवं वर्तते उतैकदेशेनैव प्रत्यवयवमिति विकल्प्याद्यं दूषयति न तावदिति । तत्र हेतुमाह तयोरिति । पूर्ववदणुपरिमाणोऽवयवो महापरिमाणश्चावयवी न च महापरिमाणः कृत्स्नोऽणुपरिमाणे वर्त्तितुं शक्नोतीत्यर्थः । हेत्वन्तरमाह द्रव्यस्येति । एकावयववृत्तित्वादेकद्रव्योऽवयवी प्राप्नोति । एकद्रव्यश्चावयव्येकेनैव द्रव्येणारभ्यत इति सततोत्पत्तिप्रसङ्गः । अपरं च—एकद्रव्यवृत्तित्वादेकद्रव्योऽवयव्येकास्मिन् परमाणौ वर्त्तते यदि तर्हि कारणविभागविनाशाभावादवयवी नित्यः प्राप्नोति उत्पत्तिमांश्च नित्य इति न दृष्टान्तोऽस्ति इत्यादि वार्त्तिके स्पष्टम् ॥

अवयव्येकदेशेनैव प्रत्यवयवं वर्त्तते इति द्वितीयं विकल्पं दूषयति नाप्येकदेशेनेति । तत्र हेतुमाह सर्वेष्विति । उक्ते कल्पेऽवयविन आरम्भकावयवव्यतिरिक्ता अप्यवयवाः प्राप्नुवन्ति यैरवयवैः स प्रत्यवयवं वर्त्तते । किञ्च प्रत्यवयवं वर्तमानोऽवयवी तत्रावयवे तेनैवावयवेन वर्त्ततेऽन्येन वा । नाद्यः, स्वस्मिन् वृत्तिविरोधात् । नान्त्यः, अवयवान्तरस्यावयवान्तरावृत्तेरित्यर्थः ।

उपसंहरति तदेवमिति । अवयवी वर्तते न वेति संशयो न युक्त इत्यर्थः । ततः को निस्संशयः सिद्धान्त इत्यत आह नास्तीति ॥८॥

अवयविवृत्तिप्रतिषेधे हेत्वन्तरमाह पृथगिति सूत्रम् ।

सूत्रार्थं व्याचक्षाणस्तदपेक्षितमंशं पूरयति अवयव्यभाव इति । व-

(भा०)अग्रहणात् नित्यत्वप्रसङ्गाच्च। तस्मान्नास्त्यवयवीति"॥९॥

(सू०) न चावयव्यवयवाः॥ १०॥

(भा०)न चावयवानां धर्मोऽवयवी–कस्मात्–धर्ममात्रस्य धर्मिभिरवयवैः पूर्ववत् सम्बन्धानुपपत्तेः। पृथक् चावयवेभ्यो

---

(ख०)र्त्तत इति पूर्वसूत्रादनुवर्तत इत्यर्थः। एवञ्च अवयवेभ्यः पृथक्(अवयविनः) अवृत्तेः अवयव्यभाव इति सूत्रम्पर्यवसितम्। सूत्रार्थं स्पष्टयति न चायमिति। 'अयम्' अवयवी अवयवेभ्यः पृथक् न वर्त्तते। तत्र हेतुमाह अग्रहणादिति। नैव गृह्यतेऽवयव्यवयवेभ्यः पृथगित्यर्थः। हेत्वन्तरमाह नित्यत्वप्रसङ्गाच्चेति। यद्यवयवेभ्यः पृथक् वर्त्ततेऽवयवी ततोऽनाधारत्वान्नित्यः प्राप्नोतीत्यर्थः। उपसंहरति तस्मादिति॥

सूत्रस्यास्यार्थत्रयमुक्तं वृत्तिकृता। तद्यथा–(१)नन्वास्तामवृत्तिरेवावयवीति शङ्कायां पूर्वपक्षिसूत्रमिदम्–अवयवेभ्यः पृथगवयवी नास्त्येवेति शेषः। अवयव्यभाव इत्यष्टमसूत्रादनुवर्त्तते। अवयवेषु वृत्त्यभावेऽवयविनो नित्यत्वप्रसङ्गः। नास्ति तु नित्यः। अतो नास्त्यवयवीति॥ (२) कृत्स्नैकदेशाभ्यामवयवी न वर्त्तते किन्तु स्वरूपेणैवेति शङ्कायां पूर्वपक्षिसूत्रमेतत्। अवयवेभ्यः पृथक् अवयवी नास्ति–कुतः–अवृत्तेः अवृत्तित्वप्रसङ्गात्। तथासति नित्यं स्यादित्यर्थः। (३)कश्चित्तु अवयवातिरिक्तोऽवयवी वर्त्ततामित्यत्र पूर्वपक्षिणः सूत्रमिदम्। पूर्वोक्तयुक्त्याऽवयवेभ्यः पृथगप्यवृत्तेरित्यर्थः इति॥ ९॥

यस्तु मन्यते–"अवयवानां धर्ममात्रमवयवी' न त्ववयवेभ्योऽत्यन्तं भिन्नोऽभिन्नो वा इति––तम्प्रत्याह पूर्वपक्षी न चेति सूत्रम्।

सूत्रार्थं व्याचष्टे न चावयवानामिति। अवयवी अवयवानां धर्मो न भवितु मर्हति। पृच्छति कस्मादिति–तत्रोत्तरम्। धर्ममात्रस्येति। पूर्वोक्तहेतुभिः धर्मभूतस्यावयविनो धर्मिभूतैरवयवैस्सम्बन्धः कोऽपि न

(भा०) धर्मिभ्यो धर्मस्याग्रहणादिति समानम्” ॥ १० ॥

(सू०) एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेरप्रश्नः ॥ ११ ॥

(भा०) किं प्रत्यवयवं कृत्स्नोऽवयवी वर्त्तते, अथैकदेशेनेति-नोपपद्यते प्रश्नः—कस्मात् ?—एकस्मिन् भेदाभावाद् भेदशब्दप्रयोगानुपपत्तेः। कृत्स्नमित्यनेकस्याशेषाभिधानम् , ए

---

(ख०)सम्भवतीत्यर्थः। हेत्वन्तरमाह पृथगिति। न चात्र धर्मिभ्योऽवयवेभ्यो धर्मोऽवयवी पृथगुपलभ्यते-तथासति स नित्यः स्यादित्यपि प्राक् प्रदर्शितमेवेत्याह समानमिति-पूर्वोक्तेनेति शेषः॥ किञ्च न तावद्भेदाभेदौ परस्पराभावात्मानावेकत्र समवेत इत्युक्तम्। नाप्यात्यन्तिकेऽभेदे धर्मधर्मिभावः। तस्माद्यथा आत्यन्तिके भेदेऽपि केषाञ्चिदेव कार्यकारणभावस्तथा केषाञ्चिदेव धर्मधर्मिभाव इत्येषितव्यम्। तत्र चानिष्टप्रप्रसङ्ग एवेति॥ १०॥

अत्र पूर्वपक्षस्य द्वौ भागौ अवयवानामवयविनि वृत्त्यभाव इति प्रथमः। स चानभ्युपगमादेव निरस्तः। न कोऽपि नैयायिकः कारणस्यावयवस्य कार्येऽवयविनि समवायमभ्युपगच्छति। अवयविनोऽवयवेषु वृत्त्यभाव इत्यपरः। तमेवं द्वितीयं पूर्वपक्षभागमुपलक्ष्य सिद्धान्तवादी तन्निरस्यति एकस्मिन्निति सूत्रम्॥ 'एकस्मिन्' अवयविनि 'भेदाभावात्' भेदघटितशब्दप्रयोगस्य अयुक्तत्वात् 'अप्रश्नः' पूर्वपक्षिणोपन्यस्तस्य प्रश्नस्य नावकाश इत्यर्थः।

सूत्रं व्याचक्षाणः पूर्वपक्ष्युपन्यस्तप्रश्नमनुवदति किमिति। प्रश्नस्यैवानुपपत्तिं प्रदर्शयति नोपपद्यत इति। पृच्छति कस्मादिति-केन हेतुना प्रश्नो नोपपद्यत इत्यर्थः। तत्रोत्तरम् एकस्मिन्निति सूत्रानुवादः। तदर्थं व्याचक्षाणः प्रश्नगतकृत्स्नैकदेशपदयोरर्थं विशिनष्टि कृत्स्नमिति।

(भा०)कदेश इति नानात्वे कस्यचिदभिधानम्। ताविमौ कृत्स्नैकदेशशब्दौ भेदविषयौ नैकस्मिन्नवयविन्युपपद्येते भेदाभावादिति ॥ ११ ॥

(भा०) अन्यावयवाभावान्नैकदेशेन वर्त्तते इत्यहेतुः—

(सू० ) अवयवान्तरभावेऽप्यवृत्तेरहेतुः ॥ १२ ॥

( भा० )अवयवान्तराभावादिति–यद्यप्येकदेशोऽवयवान्तरभूतस्तथाप्यवयवेऽवयवान्तरं वर्त्तेत नावयवीति। अन्योऽवयवीति अन्यावयवभावेऽप्यवृत्तेरवयविनो नैकदेशेन वृत्तिरन्यावयवाभावादित्यहेतुः।

---

(ख०) यत्र विभिन्ना बहवोऽर्थाः सन्ति सर्वे च ते परामृश्यन्ते तत्रैव कृत्स्नशब्दप्रयोगः–एवमेव विभिन्नेष्वर्थेषु यदा केचिदेव विवक्षिता न सर्वे तदा 'एकदेश' शब्दप्रयोगः। प्रकृते प्रश्ने एतच्छब्दद्वयप्रयोगस्यानुपपत्तिं प्रदर्शयति ताविमाविति। उभयोरप्यनयोः शब्दयोः प्रयोगो भेदसापेक्ष एव–ततश्च एकस्मिन् अत एव भेदशून्ये अवयविनि तयोः प्रयोगो नैव युज्यत इत्याशयः ॥ ११ ॥

अष्टमसूत्रभाष्ये यदुक्तम् नाप्यकदेशे वर्ततेऽवयवी सर्वेष्वन्यावयवाभावादिति–तन्निरस्यति अन्यावयवेति। एक एव चावयवी न स्वावयवेषु वर्तते इत्यत्र प्रतिज्ञार्थे 'अन्यावयवाभावात्' इति अहेतुरित्यर्थः।

संक्षेपेण सूचितमहेतुत्वम्प्रदर्शयति अवयवान्तरेति सूत्रम्। 'अन्यावयवाभावादिति' उक्तप्रतिज्ञासाधने 'अहेतुः'–कस्मात्–'अवयवान्तरभावेऽप्यवृत्तेः' इति सम्बन्धः। एकस्यावयवस्य 'अवयवान्तरे 'भावे' सत्त्वेपि–अवयविनः 'अवृत्तेरेवे'त्यर्थः।

सूत्रं व्याचष्टे अवयवान्तराभावादिति। अन्यावयवाभावादिति पूर्वोक्तस्य हेतोरेवायमनुवादः। यद्यप्यवयवी एकदेशेन अवयवे वर्तते

(भा०)वृत्तिः कथमिति चेत् ? एकस्यानेकत्राश्रयाश्रितसम्बन्धलक्षणा प्राप्तिः ।

आश्रयाश्रितभावः कथमिति चेत् ? यस्य यतोऽन्यत्रात्मलाभानुपपत्तिः स आश्रयः । न कारणद्रव्येभ्योऽन्यत्र

---

(ख०)तथापि एकमवयवमेवान्यस्मिन्नवयवे वर्त्तते इत्येव स्यात्—यतोऽवयविनः 'एकदेशः' अवयवमेव—येनैकदेशेनावयवी वर्त्तते स एव यस्मिन्नवयवे वर्त्तते स तदपेक्षया 'अवयवान्तरम्' इत्युच्यते ॥

एवञ्चावयवान्तराभावादिति सूत्रांशं व्याख्याय 'अवृत्तेः' इत्यंशं व्याचष्टे नावयवीति। एकमवयवमन्यस्मिन्नवयवे वर्त्तत इत्येवं सति किमायातमवयविनो वृत्तेरवृत्तेर्वा । तस्मादवयवान्तराभावादिति अवयविनः सत्त्वेऽसत्त्वे वा न किमपि साधयितुमलमित्याशयः ॥

उक्तमेवार्थं पुनर्विशदयति अन्य इति । अवयवी अवयवेभ्यो भिन्न एवेति पक्षे 'अन्यावयवाभावे'—एकस्यावयवस्यान्यस्मिन्नवयवे सत्त्वेऽपि—नावयविनः एकदेशेन सत्त्वं तदिति प्रकृतो हेतुरहेतुरेवेत्यर्थः।

पृच्छति वृत्तिरिति । यदि न कात्स्न्र्येन न वैकदेशेनावयविनोऽवयवेषु वृत्तिस्तर्हि किम्प्रकारिका तस्य तेषु वृत्तिरिति प्रश्नार्थः ।

उत्तरम्—एकस्येति । 'एकस्य' अवयविनः 'अन्यत्र' अवयवेषु प्राप्तिः' एव वृत्तिः । सा च किंरूपिकेत्यत आह 'आश्रयाश्रितसम्बन्धलक्षणेति' ।समवायाख्यः सम्बन्ध इत्यर्थः । आश्रयाश्रितभावस्यार्थं पृच्छति आश्रयाश्रितभावः कथमिति । तमर्थं विशदयति यस्य यत इति । यस्यार्थस्य यस्मादर्थादन्यत्र नात्मलाभः स तस्याश्रय इतरश्च आश्रित इत्यर्थः । उक्तं लक्षणं प्रकृते योजयति न कारणेति । कारणद्रव्येभ्योऽवयवेभ्यः अन्यत्र 'कार्यद्रव्यं' अवयवी आत्मानं नैव लभतेऽतो भवति कार्यद्रव्यं कारणद्रव्याश्रितमित्यर्थः । विपर्ययेण कारणद्रव्यमेव कस्मान्न कार्य-

(भा०)कार्यद्रव्यमात्मानं लभते । विपर्ययस्तु कारणद्रव्येष्विति ।

नित्येषु कथमिति चेत् ? अनित्येषु दर्शनात्सिद्धम् ।

नित्येषु द्रव्येषु कथमाश्रयाश्रयिभाव इति चेत् ? अनित्येषु द्रव्यगुणेषु दर्शनादाश्रयाश्रितभावस्य नित्येषु सिद्धिरिति ।

तस्मादवयव्यभिमानः प्रतिषिध्यते निःश्रेयसकामस्य, नावयवी । यथा रूपादिषु मिथ्यासङ्कल्पो, न रूपादय इति ॥१२॥

---

(ख०) द्रव्याश्रितमभ्युपगम्यते—इत्यत आह—विपर्यय इति । यथा कार्यद्रव्यं कारणद्रव्यादन्यत्रात्मानं न लभते—न तथा कारणद्रव्यम् । घटो मृत्पिण्डादन्यत्रात्मानं न लभते मृत्पिण्डस्तु घटादन्यत्रापि कुलालगृहादौ लभत एवात्मानमिति कार्यद्रव्यमेव कारणद्रव्याश्रितन्न, कारणद्रव्यं कार्यद्रव्याश्रितमित्यर्थः ॥

शङ्कते नित्येष्विति । समाधत्ते अनित्येष्विति । शङ्कार्थमनुवदति नित्येषु द्रव्येष्विति । उक्तेन प्रकारेण यदि कार्यकारणभावलक्षणः सम्बन्ध एवाश्रयाश्रितभावः समवायो वेति भवति तर्हि नित्येषु द्रव्येषु कार्यकारणभावलक्षणसम्बन्धस्यासम्भवात् कथमाश्रयाश्रितभावो भवतीत्यर्थः । समाधानार्थमाह अनित्येषु द्रव्यगुणेष्विति । सिद्धिरिति । आश्रयाश्रितभावस्येति शेषः । यत्र यल्लभ्यते तत्रैव तस्य वृत्तिस्तदेव तस्याश्रय इत्यनित्येषु द्रव्येषु गुणेषु च दृष्ट्वा नित्येष्वप्येवमेव भवतीत्यनुमीयत इत्याशयः ।

प्रकरणार्थमुपसंहरति तस्मादिति । यस्मादवयवी सर्वथा अस्त्येवेति सिद्धमतो यत्तृतीयसूत्रे प्रतिषिध्यते स 'अवयविष्वभिमानो' मिथ्याज्ञानमेव, न त्ववयव्येवेति । दृष्टान्तमाह यथेति । रूपादिविषये रागादिदोषजनकमिथ्याज्ञानमेव निषिध्यते न पुना रूपादेस्सत्त्वमेव तथैवावयविविषयं मिथ्याज्ञानं निरसनीयमित्येवोपदेशार्थः । मिथ्यासङ्कल्पिता एवार्था

(भा०) सर्वाग्रहणमवयव्यसिद्धेरिति प्रत्यवस्थितेऽपे-तदाह—

(सू०)"केशसमूहे तैमिरिकोपलब्धिवत्तदुपलब्धिः" १३

(भा०)"यथैकैकः केशस्तैमिरिकेण नोपलभ्यते, केश-समूहस्तूपलभ्यते तथैकैकोऽणुर्नोपलभ्यते। अणुसञ्चयस्तूपल-भ्यते। तदिदमणुसमूहविषयं ग्रहणमिति" ॥ १३ ॥

(सू०) स्वविषयानतिक्रमेणेन्द्रियस्य पटुमन्दभावाद्वि-षयग्रहणस्य तथाभावो नाविषये प्रवृत्तिः ॥ १४ ॥

---

(ख०) अनर्थाय कल्पन्ते नान्यथेत्यस्मिन्नर्थे श्लोक उद्धृतो वार्तिककारेण-

इन्द्रियार्था ह्यनर्थाय यदि स्युरविकल्पिताः [ 'न मिथ्यासङ्कल्पिता अपीत्यर्थः' ]।

सर्वोऽनर्थेन सज्येत चरन्निन्द्रियगोचरः ॥ इति ॥ १२ ॥

अवयविनिराकरणवादिनो हेत्वन्तरमवतारयति सर्वाग्रहणेति। 'सर्वाग्रहणमवयव्यसिद्धेरित्यस्मिन् सूत्रे द्वितीयाध्याये यद्यप्यवयविनि-राकरणवादी प्रत्यवस्थितः परास्तस्तथाऽप्यत्रापि प्रकरणे पञ्चमसूत्रग-तपूर्वहेतुपदेन द्वितीयाध्यायार्थं स्मारितः परः पुनस्तमेवार्थमाक्षि-पतीत्यर्थः।

अवयव्यसिद्धौ सर्वाग्रहणप्रसङ्गो यो द्वितीयाध्याये उद्भावितः सिद्धान्तिना तस्य प्रसङ्गस्य वारणमाह—केशसमूह इति सूत्रम्। तद-र्थमाह यथैकैक इति। यथा 'तैमिरिकस्य' तिमिरग्रस्तचक्षुषो न एकः केशः प्रत्यक्षः किन्तु तत्समूहः—एवमेकः परमाणुर्यद्यपि न गृह्यते त-थापि तत्समूहः प्रत्यक्षः स्यात्। तथा च परमाणुपुञ्जैरेवोपपत्तेरवय-व्यभावेऽपि न सर्वाऽग्रहणप्रसङ्ग इत्यर्थः ॥ १३ ॥

निराकरोति स्वविषयेति सूत्रम्। इन्द्रियाणां पाटवे ग्रहणस्य पा-

( भा० ) यथाविषयमिन्द्रियाणां पटुमन्दभावाद्विषयग्रहणानां पटुमन्दभावो भवति । चक्षुः खलु प्रकृष्यमाणं नाविषयं गन्धं गृह्णाति, निकृष्यमाणं च न स्वविषयात् प्रच्यवते । सोऽयं तैमिरिकः कश्चिच्चक्षुर्विषयं केशं न गृह्णाति, कश्चिद् गृह्णाति केशसमूहम् । उभयं ह्यतैमिरिकेण चक्षुषा गृह्यते । परमाणवस्त्वतीन्द्रिया इन्द्रियाविषयभूता न केनचिदिन्द्रियेण गृह्यन्ते, समुदितास्तु गृह्यन्ते, इत्यविषये प्रवृत्तिरिन्द्रियस्य प्रसज्येत । न जात्व-

---

(ख०) टवम् इन्द्रियाणां मान्द्ये ग्रहणस्य मान्द्यम् । येनेन्द्रियेण ग्रहणम्भवति तदिन्द्रियमात्रग्राह्यस्य ग्रहणे एवैतद्भवति । तदिदमाह स्वविषयानतिक्रमेणेति । न हि कदाचिदपि पटुतरं चक्षुः शब्दं गृह्णाति । फलितमाह नाविषये प्रवृत्तिरिति । इन्द्रियाणामिति शेषः । तथाच यदि परमाणुर्न कस्यापीन्द्रियस्य 'स्वविषयः' तर्हि न शक्यते तत्समूहोऽपि केनापीन्द्रियेण गृहीतुमित्याशयः ॥

सूत्रं व्याचष्टे यथाविषयमिति । येनेन्द्रियेण योऽर्थो गृह्यते तस्येन्द्रियस्य पटुत्वे तद्विषयग्रहणस्यापि पटुत्वम्—तस्य मन्दत्वे तद्विषयग्रहणस्यापि मन्दत्वमित्यर्थः ॥

परोक्तस्य दृष्टान्तस्य वैषम्यं प्रकटयति सोऽयमिति । केश एको यद्यपि तिमिरग्रस्तचक्षुषा न दृश्यते तथाप्यन्येन पटुतरचक्षुष्मता दृश्यत एव—एवं केशस्यैकस्य तत्समूहस्य च चक्षुरिन्द्रियविषयत्वादुपपद्यत एव तदुपलब्धिः । परमाणुषु तु न तथा । परमाणवो हि न कस्यापि प्रत्यक्षाः । अतो न ते कस्यापीन्द्रियस्य स्वविषयाः । तथा च सति यदि परमाणुसमूहाः प्रत्यक्षाः स्युरिन्द्रियस्य स्वाविषये एव प्रवृत्तिः प्रसज्येत । कथमेतदित्यत आह न जात्विति । पूर्वपक्षदृष्ट्या परमाणुव्यतिरिक्तं न किञ्चिदस्तीति—यदि किञ्चिदपि गृह्यते परमाणुरेव तद्दृष्ट्या गृह्यते स च इन्द्रियाणां स्वाविषय एवेत्याशयः ॥

(भा०)र्थान्तरमणुभ्यो गृह्यते इति। ते खल्विमे परमाणवः सन्निहिता गृह्यमाणा अतीन्द्रियत्वं जहति। वियुक्ताश्चागृह्यमाणा इन्द्रियविषयत्वं न लभन्ते इति। सोऽयं द्रव्यान्तरानुत्पत्तावतिमहान् व्याघात इत्युपपद्यते द्रव्यान्तरं यद्ग्रहणस्य विषय इति।

"सञ्चयमात्रं विषय इति चेत्"। न। सञ्चयस्य संयोगभावात्तस्य चातीन्द्रियस्याग्रहणादयुक्तम्। सञ्चयः खल्वनेकस्य संयो-

---

(ख०) पूर्वपक्षदर्शने व्याघातं दर्शयितुं तस्याशयमनुवदति ते खल्विम इति। यथैकः केशः पृथक् स्थितो न गृह्यते यदा तु केशान्तरैः संयुक्तो भवति तदा गृह्यते एवमेव परमाणुरेको यद्यपि न गृह्यते तथाप्यनेके परमाणवः सम्मिलिता गृहीता भवेयुः। एवञ्च यद्यपि वियुक्तावस्थाः परमाणवो नेन्द्रियविषयास्तथापि संयुक्तावस्थास्तु भवन्त्येवेन्द्रियगोचरा इत्येव परस्याशय इत्यर्थः।

परस्याशयमनूद्य तत्र विरोधं दर्शयति सोऽयमिति। य एव परमाणुरतीन्द्रियः स एवेन्द्रियगोचर इति महान् व्याघातः। सिद्धान्ते तर्हि कथमिति सूचयितुमाह द्रव्यान्तरानुत्पत्ताविति। सिद्धान्ते हि परमाणुभिर्बहुभिस्तेभ्यो द्रव्यान्तरमेवावयवी उत्पाद्यत इति परमाणुरूपद्रव्यस्यातीन्द्रियत्वेप्यवयविरूपद्रव्यान्तरस्येन्द्रियगोचरत्वेऽपि न कोऽपि व्याघातः। परस्य तु परमाणुभ्यो द्रव्यान्तरमवयवी नास्त्येवेति तत्रोक्तो व्याघातो दुर्निवार एवेत्यर्थः॥ उपसंहरति इत्युपपद्यत इति। अवयवेभ्यः परमाणुभ्योऽन्यदेव द्रव्यमवयवी य इन्द्रियैर्गृह्यत इति।

पुनः शङ्कते सञ्चयेति। यद्यप्येकैकशः परमाणुर्नेन्द्रियगोचरस्तथापि समुच्चिताः परमाणवो भवन्त्येव चक्षुर्ग्राह्या इत्यर्थः। परिहरति न सञ्चयस्येति। परिहारस्याशयं विवृणोति सञ्चयः खल्वनेकस्येति। परमाणूनां संयोग एव 'समुच्चयः'—इन्द्रियगोचराणामेव च द्रव्याणां संयो-

(भा०)गः। स च गृह्यमाणाश्रयो गृह्यते,नातीन्द्रियाश्रयः। भवति हीदमनेन संयुक्तमिति। तस्मादयुक्तमेतदिति । गृह्यमाणस्य चेन्द्रियेण विषयस्याऽऽवरणाद्यनुपलब्धिकारणमुपलभ्यते । तस्मान्नेन्द्रियदौर्बल्यादनुपलब्धिरणूनाम् । यथा नेन्द्रियदौर्बल्याच्चक्षुषाऽनुपलब्धिर्गन्धादीनामिति ॥ १४ ॥

(सू०) अवयवावयविप्रसङ्गश्चैवमाप्रलयात् ॥ १५ ॥

(भा०) यः खल्ववयविनोऽवयवेषु वृत्तिप्रतिषेधादभावः,

---

(ख०)गोऽपि इन्द्रियग्राह्यो नान्येषाम् तथाच यदि परमाणवोऽतीन्द्रियास्तर्हि तत्संयोगोऽपि तथैवेति संयुक्ता अपि नेन्द्रियविषयास्ते इत्यर्थः । ननु परमाणोरग्रहणे किमप्यावरणादिकं कारणं भविष्यति यदपाकरणेन तत्समूहो भवेदिन्द्रियगृहीत इत्यत आह गृह्यमाणस्येति । यश्चार्थो बहुधेन्द्रियैरुपलभ्यते स यदि कदाचिन्नोपलभ्यते तदा तदनुपलब्धिकारणमावरणादिकमुपलभ्यत एव । परमाणवस्तु कदाऽपि नोपलभ्यन्तेऽतो तेषामग्रहणान्नावरणादिकारणं कल्पितुं शक्यमित्यर्थः । उपसंहरति तस्मादिति । यदि कदाचिदप्युपलभ्येत परमाणुरिन्द्रियैस्तर्हि तस्यानुपलब्धिरेकदा इन्द्रियदौर्बल्यमूलकेति कल्प्येत—नतु तस्य कदाऽप्युपलब्धिरतस्तस्यानुपलब्धिरिन्द्रियागोचरत्वादेवेति सिद्धम् । दृष्टान्तमाह यथेति । यत्किल गन्धश्चक्षुषा न गृह्यते तत्र न चक्षुर्दौर्बल्यं कारणमपि तु गन्धस्य चक्षुरग्राह्यतैवेत्यर्थः ॥ १४ ॥

अवयव्यभावपक्षे दोषान्तरमाह—अवयवावयवीति सूत्रम् । अवयवावयविविषये योऽयं वृत्तिविकल्पः पूर्वपक्षिणोद्भावितस्तेन सर्वाभाव एव स्यात्तथा चाश्रयव्याघातादेव स विकल्पोऽयुक्त इत्यर्थः ॥

सूत्रार्थमाह यः खल्विति । योऽयमवयवेष्ववयविवृत्तिविकल्पानुपपत्त्याऽवयविनोऽभावप्रसङ्ग आपाद्यते पूर्वपक्षिणा सोऽवयवस्यापि स्व-

(भा०)सोऽयमवयवस्यावयवेषु प्रसज्यमानः सर्वप्रलयाय वा कल्पेत । निरवयवाद्वा परमाणुतो निवर्त्तेत । उभयथा चोपलब्धिविषयस्याभावः । तदभावादुपलब्ध्यभावः । उपलब्ध्याश्रयश्चायं वृत्तिप्रतिषेधः । स आश्रयं व्याघ्नन्नात्मघाताय कल्पत इति॥१५॥

(भा०) अथापि—

---

(ख०)कीयावयवेषु वृत्तिविषये तदवस्थ एवेत्यवयवस्याप्यभावं साधयन् सर्वस्यापि सावयवस्यार्थस्याभावं साधयतीत्यर्थः ॥ पक्षान्तरं गृह्णाति निरवयवादिति । यद्युक्तो हेतुरवयविनोऽभावं साधयति तर्हि सर्वस्यावयवस्याभावं साधयति तथाच केवलं निरवयवः परमाणुरेवाप्रतिषिद्धस्तिष्ठतीत्यर्थः । एवमप्यनिवृत्तो व्याघात इत्याह उभयथेति । सावयवस्य सर्वस्य प्रतिषिद्धत्वात्परमाणोश्चाग्राह्यत्वात् किमपि न ग्राह्यमित्येव प्रसज्येत–ग्राह्याभावे च ग्रहणस्याप्यभाव इति सर्वव्यवहारोच्छेदप्रसङ्गः । एवमपि कथं व्याघात इत्यत आह–उपलब्धीति । वृत्तिविकल्पेन योऽवयविनः प्रतिषेध उक्तः पूर्वपक्षिणा स उपलब्धिमूलक एव–उपलब्धिश्चात्र सर्वथा प्रतिषिद्धेति महानयं व्याघात इत्यर्थः। फलितमाह–स आश्रयमिति । वृत्तिविकल्पः स्वाश्रयभूतामुपलब्धिं निराकुर्वन्नात्मानमेव निराश्रयं कुर्वन् व्याहन्तीत्यर्थः ॥

अत्र तात्पर्यम्–अत्र त्रय पक्षाः सम्भवन्ति । योऽयमवयवेष्ववयविवृत्तिविकल्पानुपपत्त्याऽवयविनोऽभावप्रसङ्गः आपाद्यते स प्रलयाद्वा निवर्त्तते–परमाणोर्वा–न क्वचिदपि वा निवर्त्तते–इति । तत्र प्रथमाद्वितीयविकल्पावाश्रित्येदं सूत्रम् । यथैष वृत्तिविकल्पः स्थूले घटादौ एवं तदवयवेषु तदवयवेष्विति तदभावात्प्रलये व्यवतिष्ठते । न च प्रलयः सर्वाख्यारहितो दर्शनविषयः सम्भवतीति दर्शनविषयाभावादनाश्रयो विकल्प आत्मानमेव न लभते । उपलक्षणं चेदमाप्रलयादिति ।

(सू०) न प्रलयोऽणुसद्भावात्॥ १६॥

( भा० ) अवयवविभागमाश्रित्य वृत्तिप्रतिषेधादभावः प्रसज्यमानो निरवयवात्परमाणोर्निवर्त्तते, न सर्वप्रलयाय कल्पते। निरवयवत्वं खलु परमाणोर्विभागैरल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात्। लोष्टस्य खलु प्रविभज्यमानावयवस्या-

---

(ख०)आ परमाणोरित्यपि द्रष्टव्यम्। परमाणूनामतीन्द्रियत्वेन दर्शनविषयत्वाभावादनाश्रयता विकल्पस्य तदवस्थैव। तादिदमुक्तम् निरवयवाद्वा परमाणुतो निवर्त्तेतेति भाष्ये इति॥

वृत्तिकृतस्तु एवमुक्तप्रकारेण वृत्तिविकल्पदोषोऽवयवेऽवयविनि च प्रसक्तः 'आप्रलयात्'-प्रलयोऽभावस्तत्पर्यन्तम् तथाच सर्वाभाव एव स्यात्। न कस्यापि ग्रहणम्। तस्मात् साधूक्तं-सर्वाग्रहणमवयव्यसिद्धेरिति॥ १५॥

पूर्वपक्षप्रतिषेधे हेत्वन्तरमवतारयति अथापीति। अपि चेत्यर्थः।

प्रलयमभ्युपेत्यैतदुक्तमाप्रलयादिति-वस्तुस्तु 'प्रलयः' सर्वाभावो नास्त्येव-अणोः सर्वदा सत्त्वादित्याह न प्रलय इति सूत्रम्।

सूत्रार्थमाह अवयवेति। उक्तो वृत्तिविकल्पोऽवयवविभागमेवाश्रित्योद्भावितो यत्रैवावयवास्तत्रैव विरमति-एवं च सर्वस्यान्यस्य सत्त्वं प्रतिषेधन्नपि न; परमाणोस्सत्त्वं स्पृशति, निरवयवत्वात्तस्य-तथाच निरवयवात्परमाणोर्निवृत्तः स प्रसङ्गो न परमाणुसत्त्वं प्रतिषेधतीत्यर्थः। परमाणोर्निरवयवत्वे हेतुमाह निरवयवत्वमिति। घटादेरवयविद्रव्यस्य विभागानन्तरं विभाग इत्यनेन क्रमेणाल्पाल्पतराल्पतमावयवपर्यवसायी यदा विभागो भवति ततः परं विभागो न याति तत्रावयवविभागस्य विरमात्तस्य निरवयवत्वं परमाणुसंज्ञत्वं चाभ्युपगम्यते। उक्तेऽर्थे दृष्टान्तमाह लोष्टस्येति॥ १६॥

(भा०)ल्पतरमल्पतममुत्तरमुत्तरं भवति । स चायमल्पतरपसङ्गो यस्मान्नाल्पतरमस्ति यः परमोऽल्पस्तत्र निवर्त्तते । यतश्च नाल्पीयोऽस्ति तं परमाणुं प्रचक्ष्महे इति ॥ १६ ॥

(सू०) परं वा त्रुटेः ॥ १७ ॥

( भा० ) अवयवविभागस्यानवस्थानाद् द्रव्याणामसङ्ख्येयत्वात् त्रुटित्वनिवृत्तिरिति ॥ १७ ॥

( ३ ) परमाणुनिरवयवत्वप्रकरणम् औपोद्घातिकम् ।

( भा० ) अथेदानीमानुपलम्भिकः सर्वं नास्तीति मन्यमान

---

(ख०)अथानन्तोऽयं विभागः कस्मान्न भवति कस्माच्च परमाणुपर्यन्त एवायमित्यत आह परमिति सूत्रम्। त्रुटिस्त्रसरेणुरिति तात्पर्यकृतः। द्व्यणुक एवेत्यन्ये । त्रुटेः परं यदतिसूक्ष्मं स एव परमाणुरित्यर्थः ।

सूत्रार्थमाह अवयवविभागस्येति । जालसूर्यमरीचिस्थं त्रसरेणुरजः स्मृतम्—यदि त्रुटेः परं द्वित्रिपदकेऽवयवविभागो न विरमेत ततोऽवयवविभागस्यानवस्थानात् सर्वद्रव्येष्ववयवानामसङ्ख्येयत्वात् त्रुटेस्त्रुटित्वमेवापेयात् त्रुटिरपि च सुमेरुणा तुल्यपरिमाणः स्यात्—उभयोरनन्तावयववत्त्वात् ॥ १७ ॥

एवमवयविप्रकरणं समाप्य तदुपोद्घातेन निरवयवमपि वस्त्वस्तीति साधयितुं निरवयवपरीक्षाप्रकरणमारभ्यत इति परिशुद्धिकृतः। अथ विश्वस्य शून्यत्वात् क परमाणुसम्भावनेति मतनिराकरणाय निरवयवप्रकरणमिति वृत्तिकृतः ॥ तत्र सर्वशून्यवादिनः पूर्वपक्षमवतारयति अथेदानीमिति ॥ आनुपलम्भिकोऽत्र पूर्वपक्षमाहेत्यर्थः । कश्चासावानुपलम्भिक इत्यत आह सर्वं नास्तीति । सर्वशून्यवादीति यावत् । चतुर्थाध्याये तावज्जगतः शून्यतोपादानता निराकृता—अधुना तु सर्वशून्यता निराक्रियत इति विवेकः ॥

(भा०)आह—

(सू०) "आकाशव्यतिभेदात् तदनुपपत्तिः" ॥ १८ ॥

(भा०) "तस्याणोर्निरवयवस्य नित्यस्यानुपपत्तिः । कस्मात्? आकाशव्यतिभेदात् । अन्तर्बहिश्चाणुराकाशेन समाविष्टो–व्यतिभिन्नः । व्यतिभेदात्सावयवः । सावयवत्वादनित्य इति ॥ १८ ॥

(सू०) "आकाशासर्वगतत्वं वा" ॥१९॥

(भा०)"अथैतन्नेष्यते-परमाणोरन्तर्नास्त्याकाशम्–इत्यसर्वगतत्वं प्रसज्यते इति" ॥ १९ ॥

---

(ख०)तत्र पूर्वपक्षसूत्रम्–आकाशेति । आकाशेन 'व्यतिभेदात्' अन्तर्भिद्यमानत्वात्–'तस्य' परमाणोर्निरवयवस्य 'अनुपपत्तिः' इत्यर्थः।

सूत्रं व्याचक्षाणस्तदनुपपत्तिरिति पदार्थमाह तस्येति । आकाशेति पदस्यार्थं वक्तुं पृच्छति–कस्मादिति । तत्रोत्तरम् आकाशेति । तस्य तात्पर्यमाह अन्तरिति । अयमत्र प्रयोगः–परमाणुः सावयवः आकाशेन समाविष्टत्वात् जलेन समाविष्टघटवत् । स चानित्यः सावयवत्वाद्घटवदेवेति । सावयवत्वे च परमाणोः 'वृत्तिविकल्पात्तदभाव' इति पूर्वपक्षसूत्रोक्तदिशा तस्याभाव एवेति शून्यतैव तत्त्वं भावानाम्–अनाश्रितोऽपि विकल्पो लोकप्रतीत्यनुसारेण कल्पनामात्रनिर्मितस्तात्त्विकीं शून्यतां गमयति, मिथ्याज्ञानानामपि तत्त्वावगमहेतुत्वदर्शनात् यथा रेखागवयो गवयत्वप्रतिपत्तेर्हेतुरित्यादि पूर्वपक्षहृदयम् ॥ १८ ॥

नन्वाकाशव्यतिभेद इत्येव न मृष्यामहे–कुतस्तद्द्वाराऽणुनिरवयवत्वनिराकरणमित्यतः पूर्वपक्षी व्यतिभेदस्यैव साधनमाह–आकाशासर्वगतेति सूत्रम् । तदर्थमाह–अथैतदिति । 'एतत्' आकाशव्यतिभेदः।यद्याकाशं परमाणोरभ्यन्तरे न समाविष्टन्तर्हि तस्य सर्वगतत्वं नैयायि-

(सू०) अन्तर्बहिश्च कार्यद्रव्यस्य कारणान्तरवचनादकार्ये तदभावः ॥ २० ॥

( भा० ) अन्तरिति–पिहितं कारणान्तरैः कारणमुच्यते। बहिरिति च–व्यवधायकमव्यवहितं कारणमेवोच्यते। तदेतत्कार्यद्रव्यस्य सम्भवति, नाणोरकार्यत्वात्। अकार्ये हि परमाणावन्तर्बहिरित्यस्याभावः। यत्र चास्य भावोऽणुकार्यं तत्, न परमाणुः। यतो हि नाल्पतरमस्ति स परमाणुरिति ॥ २० ॥

---

(ख०)कांभिमतं व्याहतमित्यर्थः ॥ १९ ॥

पूर्वपक्षं दूषयति सिद्धान्ती–अन्तर्बहिरिति सूत्रम्। 'अन्तः'शब्दो 'बहिः'शब्दश्चावयवाभिधायकौ। अतः 'कार्यद्रव्यस्य' अवयविनः 'कारणान्तरम्' कारणविशेषभूतम् अवयवमेवाभिदधाति–ततश्चाकार्ये परमाणौ न तयोः सम्भव इत्यर्थः।

सूत्रार्थमाह–अन्तरिति। पिहितमिति। घटस्य 'अन्तः' तमेव घटावयवमभिदधाति यो घटाभ्यन्तरे तस्य बाह्यैरवयवैः पिहितो वर्त्तते। एवं घटस्य 'बहिः' आभ्यन्तरावयवानामपिधायकान् बाह्यानवयवान् वक्ति। अत्र 'कारणम्' 'अवयवम्' इत्यनर्थान्तरम्। उभयमप्येतदवयववाचकत्वात्सावयव एव द्रव्य उपपद्यते न निरवयवे परमाणावित्यर्थः। एवं परमाणोराभ्यन्तरस्यैवाप्रसिद्धत्वात् कुत्राकाशस्य व्यतिभेद इत्याशयः। ननु यदि परमाणौ नान्तर्बहिःशब्दप्रयोगसम्भवस्तर्हि किं सर्वथाऽसम्भव एवानयोः प्रयोग इत्यत आह–यत्र चास्येति। उपपद्यत एवानयोः प्रयोगः परमाण्वारब्धे सावयवद्रव्ये न तु परमाणावित्यर्थः। कुत एतदित्यत आह यत इति। परमाणोः परमल्पीयःपरिमाणासम्भवान्न तस्य सावयवत्वमित्यर्थः ॥ २० ॥

यदुक्तमाकाशस्यासर्वगतत्वं स्यादिति तदपाकुर्वन्नाकाशस्य सर्वगत-

(सू०) शब्दसंयोगविभवाच्च सर्वगतम् ॥ २१ ॥

( भा० ) यत्र क्वचिदुत्पन्नाः शब्दा विभवन्त्याकाशे तदाश्रया भवन्ति । मनोभिः परमाणुभिस्तत्कार्यैश्च संयोगा विभवन्त्याकाशे । नासंयुक्तमाकाशेन किञ्चिन्मूर्त्तद्रव्यमुपलभ्यते । तस्मान्नासर्वगतमिति ॥ २१ ॥

(सू०) अव्यूहाविष्टम्भविभुत्वानि चाकाशधर्माः ॥२२॥

---

(ख०)त्वसाधनमाह–शब्दसंयोगेति सूत्रम् । सर्वगतमाकाशम्–कस्मात्–'शब्दसंयोगाविभवात्' शब्दश्च संयोगश्च तयोः विभवः विभुत्वं सार्वत्रिकत्वम्–तस्मादित्यर्थः ॥ अथवा आकाशगुणस्य शब्दस्य ये संयोगास्तेषां विभुत्वादाकाशं सर्वगतमित्यर्थः ॥

सूत्रार्थमाह यत्र क्वचिदिति । विभवन्तीति व्याप्नुवन्तीत्यर्थः । तस्यैवार्थमाह–तदाश्रया इति–आकाशाश्रया इत्यर्थः । संयोगशब्दार्थमाह मनोभिरिति । ननु कथं ज्ञायत एते संयोगा आकाशाश्रिता भवन्तीत्यत आह नासंयुक्तमिति । यत्किञ्चिन्मूर्तद्रव्यं तत्सर्वमाकाशसंयुक्तमेवेत्यर्थः । मनसोऽप्यणुत्वान्मूर्तत्वमेव । उपसंहरति तस्मादिति ।

सर्वसंयोगशब्दविभवाच्च सर्वगतमिति सूत्रपाठोऽत्र वार्तिककारसम्मतः । तदर्थश्च यस्मात्सर्वमूर्त्तिमद्भिः संयोगा विभवन्त्याकाशे तदाश्रया भवन्ति–शब्दाः स्वकारणसन्निधानादुपजायमानाः सर्व एवाकाशमाश्रयन्ते तस्मात् सर्वगतमाकाशमिति ॥ २१ ॥

ननु आकाशं चेत्सर्वगतं ततो मूर्त्तिमतां द्रव्याणां तेन प्रतिबन्धाद्गतेरावरणं (विष्टम्भः) व्यूहान्तरापादनं च जलौघस्येव नावादिना–भवेत्–न चास्ति–तस्मान्न सर्वगतमाकाशमित्यत आह–अव्यूहेति सूत्रम् । 'व्यूहो' नाम प्रतिहतस्य परावर्त्तनम्–तस्याभावः 'अव्यूहनम्' ।

( भा० ) संसर्पता प्रतिघातिना द्रव्येण न व्यूह्यते-यथा काष्ठेनोदकम् । कस्मात्? निरवयवत्वात् । सर्पच्च प्रतिघाति द्रव्यं न विष्टभ्नाति-नास्य क्रियाहेतुं गुणं प्रतिबध्नाति । कस्मात् ? अस्पर्शत्वात् । विपर्यये हि विष्टम्भो दृष्ट इति-स भवान् सावयवे

(ख०)'विष्टम्भः' उत्तरदेशगतिप्रतिबन्धः-तदभावः 'अविष्टम्भः' । यत एवाकाशे व्यूहो विष्टम्भश्च नोपलभ्येते अत एवाप्रत्यूहं तस्य विभुत्वमिति हृदयम् ॥

सूत्रार्थं व्याचक्षणोऽव्यूहपदार्थमाह-संसर्पतेति । 'संसर्पता' क्रियावता अत एव 'प्रतिघातिना द्रव्येण 'न व्यूह्यते' न रूपान्तरेण परावर्त्यते आकाशमिति शेषः । दृष्टान्तमाह यथेति । यदा काष्ठेन प्रतिहन्यते जलम् तदा जलस्य रूपान्तरं क्रियते-न तथा आकाशस्येत्यर्थः । तत्र हेतुं पृच्छति कस्मादिति । उत्तरम् निरवयवत्वादिति । सावयवस्यैव द्रव्यस्य प्रतिघातिना द्रव्येणावयवव्यूहः परावर्त्यते-अतो निरवयवस्याकाशस्य न तथेत्यर्थः ॥

अविष्टम्भशब्दार्थमाह-सर्पदिति । आकाशं प्रति संसर्पत् प्रतिघाति द्रव्यं चाकाशेन न विष्टभ्यते । अस्यैवार्थं स्पष्टयाति नास्येति । संसर्पतः क्रियावतो द्रव्यस्य क्रियाहेतुर्गुणो न प्रतिबध्यते आकाशेनेत्यर्थः । तत्र हेतुं पृच्छति-कस्मादिति । उत्तरम् अस्पर्शत्वादिति । यदेव स्पर्शवद् द्रव्यं तदेव प्रतिघातिद्रव्यस्य क्रियाहेतुं गुणं प्रतिबध्नाति-आकाशं तु न स्पर्शवत्-तस्मात्तेन न प्रतिबध्यत इत्यर्थः । वार्त्तिककारस्त्वव्यूहे विष्टम्भे चोभयत्रापि 'अस्पर्शवत्त्वात्, इत्येव हेतुमुपन्यस्तवान् । उक्तं च-यत् स्पर्शवत् भवति तदेव व्यूह्यते प्रतिबध्नाति च न त्वेवंधर्ममाकाशमिति ।

अस्पर्शवतोऽव्यूहनमविष्टम्भं च प्रदर्श्य स्पर्शवतो व्यूहनं विष्टम्भं चाह विपर्यय इति । उपसंहरति स भवानिति । व्यूहनं विष्टम्भनं च

(भा०)स्पर्शवति द्रव्ये दृष्टं धर्मं विपरीते नाशङ्कितुमर्हति।

अण्ववयवस्याणुतरत्वप्रसङ्गादणुकार्यप्रतिषेधः। सावयवत्वे चाणोरण्ववयवोऽणुतर इति प्रसज्यते। कस्मात्? कार्यकारणद्रव्ययोः परिमाणभेददर्शनात्। तस्मादण्ववयवस्याणुतरत्वम्। यस्तु सावयवोऽणुकार्यं तदिति। तस्मादणुकार्यमिदं प्रतिषिध्यते इति।

कारणविभागाच्च कार्यस्यानित्यत्वं नाकाशव्यतिभेदात्।

---

(ख०)सावयवे स्पर्शवति द्रव्ये दृष्टं 'विपरीते' निरवयवेऽस्पर्शवति आकाशे न शङ्कितव्यमित्यर्थः। परमाणुरनित्यः कार्यत्वाद् घटवदिति परमाण्वनित्यत्वसाधकमनुमानं निरस्यन्नाह—अण्ववयवेति। अणु च तत् कार्यमित्यणुकार्यम्—तस्य प्रतिषेधः कर्त्तव्य इति शेषः—कस्मात्—यदि अणुकार्यं स्यात् कार्यत्वादेव तत् सावयवं स्यात्। एवं चाणोरप्यवयवाः स्युस्ते च परमाण्वपेक्षयाऽल्पतरपरिमाणाः स्युस्तथा चानन्तावयवपरम्पराकल्पनेऽनवस्था स्यादित्यर्थः।

उक्तमेवार्थं विशदयति सावयवत्व इति। अणोरवयवस्तदपेक्षयाऽल्पपरिमाण एव स्यात्। पृच्छति कस्मादिति। उत्तरम् कार्यकारणेति। कार्यापेक्षया कारणमल्पपरिमाणमिति सर्वत्र घटादौ दृश्यत इत्यर्थः। उपसंहरति तस्मादिति। ननु किमायातमनेनाणुकार्यप्रतिषेध इत्यत आह यस्त्विति। यत् अणुकार्यं तत् सावयवमेव स्यादित्यर्थः-सावयवत्वे च तस्य दोष उक्त एव। अनेनैव कारणेनाणुकार्यं प्रतिषिध्यत इत्यर्थः।

आकाशव्यतिभेदादिति परोक्तं हेतुं दूषयति कारणेति। कार्यस्य विनाशः कारणानां तदवयवानां विभागादेव भवति नाकाशव्यतिभेदात्। तथाच यदि परमाणोर्विनाशोऽनित्यत्वं वा स्यात् तदारम्भका-

(भा०)लोष्टस्यावयवविभागाद्निसत्त्वं नाकाशसमावेशादिति॥२२॥

(सू०)"मूर्त्तिमतां च संस्थानोपपत्तेरवयवसद्भावः"॥२३॥

(भा०) "परिच्छिन्नानां हि स्पर्शवतां संस्थानं त्रिकोणं चतुरस्रं समं परिमण्डलमित्युपपद्यते। यत्तत्संस्थानं सोऽवयवसन्निवेशः। परिमण्डलाश्चाणवस्तस्मात्सावयवा इति" ॥ २३ ॥

(सू०) "संयोगोपपत्तेश्च" ॥२४॥

---

(ख०)वयवविभागादेव स्यात् नाकाशव्यतिभेदादित्यर्थः। दृष्टान्तमाह लोष्टस्येति। लोष्टस्य यदा नाशो भवति तदा तदवयवानां विभागादेव भवतीत्यर्थः। न च परमाणोरारम्भका अवयवा वर्त्तन्त इति प्रदर्शितम्--अत एव अवयवाभावादेवावयवविभागस्याभावात्तन्नाशानुपपत्तिरिति परमाणोर्नित्यत्वमेवानवद्यमिति हृदयम् ॥ २२ ॥

पुनः शून्यतावादी प्रत्यवतिष्ठते मूर्तिमतामिति सूत्रम्। चशब्दस्त्वर्थः। तुकारश्च सिद्धान्तं निवर्तयति। परमाणोः 'अवयवसद्भावः'--कस्मात्--'मूर्त्तिमतां' (तेषां) 'संस्थानोपपत्तेः' इति सम्बन्धः। मूर्त्तिमतामिति पदं षष्ठ्यन्तमपि हेतुपदतया नेतव्यम्। तथाच 'सावयवाः परमाणवः मूर्त्तिमत्वात् संस्थानवत्त्वाच्च' इत्यर्थः पर्यवसितः। वृत्तिकृतस्तु मूर्त्तिमतामित्येतत् संस्थानवत्त्वे हेतुमभिप्रयन्ति--मूर्त्तिमत्त्वादेव संस्थानवत्त्वं परमाणूनामित्यर्थः॥

सूत्रं व्याचष्टे परिच्छिन्नानामिति। संस्थानमिति आकार इति यावत्। आकारोऽवयवसन्निवेश एव--अतो यत्रावयवास्तत्रैवाकारस्सम्भवति--भवति च परमाणुः परिमण्डलाकारः--अतः स सावयव एव। संस्थानवत्त्वं च परमाणोर्मूर्त्तत्वादेवावगम्यत इत्याशयः ॥ २३ ॥

परमाणोः सावयवत्वे हेत्वन्तरमाह परः संयोगेति ॥ सावयवाः परमाणवः--कस्मात्--संयोगोपपत्तेरिति सम्बन्धः। तत्र प्रयोगः--प-

( भा० ) "मध्ये सन्नणुः पूर्वापराभ्यामणुभ्यां संयुक्तस्तयोर्व्यवधानं कुरुते । व्यवधानेनानुमीयते–पूर्वभागेन पूर्वेणाणुना संयुज्यते परभागेन परेणाणुना संयुज्यते । यौ तौ पूर्वापरौ भागौ तावस्यावयवौ । एवं सर्वतः संयुज्यमानस्य सर्वतो भागा अवयवा इति" ॥

( भा० ) यत्तावत्–मूर्त्तिमतां संस्थानोपपत्तेरवयवसद्भाव–

---

(ख०)रमाणवः सावयवाः संयोगवत्त्वादिति ।

सूत्रार्थमाह–मध्ये सन्निति । यदा अधिकपरिमाणावयविन आरम्भे परमाणुरेकोऽपरेण परमाणुद्वयेन संयुज्यते तदा तयोर्द्वयोर्मध्ये वर्तमान एकेनात्मनो भागेनैकेन परमाण्वन्तरेण संयुज्यतेऽपरेण च भागेनापरेण परमाण्वन्तरेणेत्यवश्यमभ्युपगन्तव्यम्–अन्यथाऽधिकपरिमाणावयव्यारम्भणासम्भवात् । उक्तौ च पूर्वापरौ भागौ परमाणोरवयवा एवेति सावयवत्वमनिवार्यमित्यर्थः ॥

अत्र वार्त्तिकम्–"नन्विदं सूत्रं संस्थानवत्त्वादित्यनेनैव चरितार्थम्–संयोगविशेषस्य संस्थानवत्त्वेनाभिधानात्" ॥ न चरितार्थम्–अवयवसंयोगविशेषस्य संस्थानवत्त्वेनाभिधानात्–संयोगमात्रं च संयोगशब्देनाभिधीयत इति न दोषः ( पौनरुक्त्यम् )॥ पौनरुक्त्यमेवापाकुर्वन् मूर्तिसंस्थानयोर्भेदं स्पष्टीकरोति । तत्र मूर्त्तिर्नामाव्यापिद्रव्यस्य षड्विधं परिमाणम्–अणु महद्दीर्घं ह्रस्वं परमह्रस्वं परमाण्विति । ( संस्थानं ) नाम प्रचयाख्यः संयोगः । 'संयोगो'ऽप्राप्तिपूर्विका प्राप्तिरिति ॥

तदेवं सर्वशून्यतामतं प्रासङ्गिकमुपपाद्य तदपाकर्तुं तत्सूत्रमेवोपक्रमते भाष्यकारः यत्तावदिति । त्रयोविंशसूत्रोक्तस्य परमाणुसावयवत्वसाधकहेतोरनुवादः ॥ तदपाकरिष्यन् पूर्वोक्तमेव स्मारयति अत्रोक्त–

१००

(भा०)इति, अत्रोक्तम् । किमुक्तम् ? विभागेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्र निवृत्तेरण्ववयवस्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध इति ।

यत्पुनरेतत्–"संयोगोपपत्तेश्चेति स्पर्शवत्त्वाद्व्यवधानम्, आश्रयस्य चाव्याप्त्या भागभक्तिः ।" उक्तं चात्र स्पर्शवानणुः–स्पर्शवतोरण्वोः प्रतिघाताद्व्यवधायको न सावयवत्वात् ।

"स्पर्शवत्त्वाच्च व्यवधाने सत्यणुसंयोगो नाश्रयं व्याप्नोतीति भागभक्तिर्भवति भागवानिवायमिति" । उक्तं चात्र–विभा-

---

(ख०)मिति । विस्मरणशीलः परः पृच्छति किमुक्तमिति । यदुक्तं तत् स्मारयति विभाग इति अण्ववयवस्येति च । पूर्वं तावत् षोडशसूत्रभाष्यस्थमपरं च द्वाविंशसूत्रभाष्यस्थमिति ॥

अत्र वार्त्तिककारोऽपरमपि दूषणमाह । तद्यथा–'सावयवः परमाणुरिति प्रतिज्ञापदे व्याहते । सावयवशब्दस्यार्थः समानजातीयारब्धं समानजातीयाश्रितमिति । अवयवश्च तस्याधार इति । एवं सावयवः परमाणुरिति ब्रुवता कार्यविशेषः परमाणुश्चेत्युक्तं भवति । कार्यविशेषः परमाणुश्चेति व्याहतम्'–इत्यादि तत एवानुसन्धेयम् ।

चतुर्विंशसूत्रोक्तं पराभिमतं हेतुमनुवदति यत् पुनरेतदिति । तस्याशयं विवृणोति स्पर्शवत्त्वादिति । यदा परमाणुत्रयेणैकमवयव्यारब्धं तदा मध्यवर्त्तिना परमाणुना पूर्वापरयोः परमाण्वोर्व्यवधानं परमाणोः स्पर्शवत्त्व एव सम्भवति संयोगश्च स्वाश्रयं न व्याप्नोतीति संयोगवत्त्वादेव परमाणोर्भागाः सन्तीति सिद्धम्भवतीत्यर्थः । भागभक्तिरिति । पूर्वापरभागाभ्यां विभाग इत्यर्थः । पूर्वेण भागेन पूर्वपरमाणुना संयुज्यतेऽपरेण चापरपरमाणुनेति प्राप्तम्परमाणोस्सावयवत्वमित्याशयः ॥

(भा०)गेऽल्पतरप्रसङ्गस्य यतो नाल्पीयस्तत्रावस्थानात् तदवयव-स्य चाणुतरत्वप्रसङ्गादणुकार्यप्रतिषेध—इति ॥ २४ ॥

"मूर्तिमतां च संस्थानोपपत्तेः संयोगोपपत्तेश्च परमाणूनां सावयवत्वमिति" हेत्वोः—

(सू०)अनवस्थाकारित्वादनवस्थानुपपत्तेश्चाप्रतिषेधः ॥२५॥

( भा० ) यावन्मूर्त्तिमद्यावच्च संयुज्यते तत्सर्वं सावयवमि-

---

(ख०)एतत्परिहारमपि द्वाविंशसूत्रभाष्योक्तमेव स्मारयति उक्तं चात्रेति। परिहारस्याशयं विवृणोति-स्पर्शवानिति। यत् किल परमाणुना परमाणुद्वयव्यवधानं तत्तस्य स्पर्शवत्त्वं तन्मूलकं च प्रतिघातमेव सूचयति न सावयवत्वमित्याशयः ॥

उक्तं परिहारं दूषयति परः—स्पर्शवत्त्वादिति। भवतु स्पर्शवत्त्वाद् व्यवधानम्—किन्तु एवमपि परमाणुसंयोगो वर्तत एव—तस्य च स्वाश्रयाव्यापित्वात् परमाणोर्भागाः सन्तीति प्राप्तमेव तस्य सावयवत्वमिति भावः। परोद्भावितं दूषणमपाकुर्वन् पूर्वोक्तमेव स्मारयति उक्तं चात्रेति। विभागेऽल्पतरेति षोडशसूत्रभाष्यस्थं वाक्यं तदवयवस्येति द्वाविंशसूत्रभाष्यस्थम् ॥ २४ ॥

एवं त्रयोविंशचतुर्विंशसूत्रोक्तस्योत्सूत्रमेव परिहारमुक्त्वा सौत्रं परिहारमुपक्रमयितुं परोक्तौ हेतू अनुवदति—मूर्तिमतामिति ॥ अनयोः 'हेत्वोः'(१) 'अनवस्थाकारित्वात्(२) अनवस्थाऽनुपपत्तेश्च'—'अप्रतिषेधः' परमाणुनिरवयवत्वस्येति सम्बन्धः ॥

परमाणुसावयवत्वसाधकहेतुनिराकरणपरं सूत्रम् अनवस्थेति। पूर्वपक्षयुक्त्या परमाणुनिरवयवत्वप्रतिषेधो न युक्तः—कस्मात्? यस्मादुक्तौ हेतू अनवस्थां प्रवर्तयतः—अनवस्था चानुपपन्नेत्यर्थः ॥

सूत्रार्थं व्याचक्षाणः परोक्तौ हेतू अनुवदति यावन्मूर्तिवदिति। य-

(भा०)त्यनवस्थाकारिणाविमौ हेतू । सा चानवस्था नोपपद्यते । सत्यामनवस्थायां सत्यौ हेतू स्याताम् । तस्मादप्रतिषेधोऽयं निरवयवत्वस्येति ।

विभागस्य च विभज्यमानहानिर्नोपपद्यते तस्मात्प्रलयान्तता नोपपद्यते इति ।

अनवस्थायां च प्रत्यधिकरणं द्रव्यावयवानामानन्त्यात्

---

(ख०)द्यन्मूर्तिमद् यद्यत्र संयुज्यते तत्सर्वमेव सावयवं दृष्टमित्येव हेतू परस्याभिमतौ परमाणोः सावयवत्वसाधनायेत्यर्थः । उक्तहेतुदूषणमाह–अनवस्थेति । उभावपीमौ हेतू अनवस्थामापादयत इत्यर्थः । परमाणोः सावयवत्वेऽवयवावयविविभागादानन्त्यमेवात्रानवस्थेति भावः । ननु भवत्वनवस्था किन्तेनेत्यत आह सा चेति । 'सत्यामिति' उपपन्नायामित्यर्थः । यद्यनवस्थाया उपपत्तिः सम्भवेत्तदैव तस्या अदोषाधायकत्वादुपपद्येयातां हेतू न त्वनवस्थायाः काचिदुपपत्तिरस्ति–तस्माद्धेतू अप्यनुपपन्नावेवेति भावः । हेत्वोश्चानुपपन्नयोस्तत्साध्यम्परमाणुसावयवत्वमपैतीत्याह–तस्मादप्रतिषेध इति ।

ननु मूर्तिमत्त्वहेतुर्नानवस्थामापादयति । तथाहि–मूर्तिमद्धि तावदेव विभज्यते यावत्तस्यान्तः । न चान्त्यस्यावयवस्य निरवयवत्वम्प्राप्नोति-यदन्तत्वेनाभिप्रेतं स विभाग एव न त्ववयवद्रव्यमिति शङ्काम्मनसि निधायाह–विभागस्येति । यदुक्तं–अवयवविभाग एवान्तत्वेनाभिप्रेत इति, तन्न युक्तम्–विभज्यमानैर्द्रव्यैर्विना विभागगुणस्यानुपपत्तेः–नासति गु[णि]नि गुणोऽस्तीति । अस्मात्कारणात् द्रव्यस्यैव विभागान्तत्वं तस्य च नि[र]वयवत्वं स्वीकार्यम्, अथवा विभागस्यानन्त्यादनवस्था दुर्निवारेत्याशयः ॥

एवमनवस्थाकारित्वादि[ति] सूत्रांशं व्याख्याय अनवस्थानुपपत्तेश्चेत्येतद

(भा०)परिमाणभेदानां गुरुत्वस्य चाग्रहणं समानपरिमाणत्वं चावयवावयविनोः परमाण्ववयवविभागादूर्ध्वमिति ॥ २५ ॥

(४)बाह्यार्थभङ्गनिराकरणप्रकरणम्-प्रासङ्गिकम् ।

( भा० ) "यदिदं भवान्बुद्धीराश्रित्य बुद्धिविषयाः सन्तीति मन्यते मिथ्याबुद्धय एताः। यदि हि तत्त्वबुद्धयः स्युर्बुद्ध्या विवेचने क्रियमाणे याथात्म्यं बुद्धिविषयाणामुपलभ्येत—

( सू० ) "बुद्ध्या विवेचनात्तु भावानां याथात्म्यानुपलब्धिस्तन्त्वपकर्षणे पटसद्भावानुपलब्धिवत् तदनुपलब्धिः" ॥ २६ ॥

---

(ख०)व्याचष्टे अनवस्थायामिति । परमतानुसारेण प्रतिद्रव्यमवयवानामानन्त्यम् ततश्च सर्वेषां द्रव्याणामनन्तावयवारब्धत्वान्न तेषाम्परिमाणभेदस्य ग्रहणम्–परिमाणभेदाग्रहणे च गुरुत्वस्यापि ग्रहणासम्भवः–एवं च परमाणोरप्यवयवविभागे मेरुसर्षपयोरपि तुल्यपरिमाणतेति बह्वनिष्टापात इति सर्वथाऽनुपपन्नैवानवस्थेति सर्वमवदातम् ॥ २५ ॥

एवं तावद् द्वाभ्यां प्रकरणाभ्यां सावयवं निरवयवं चार्थं प्रसाध्य तत्प्रसङ्गागतं बाह्यार्थापह्नवनिराकरणार्थम्प्रकरणान्तरमिदमारब्धव्यम्भवति ॥ यदि बाह्योऽर्थो नैवास्ति तर्हि नास्त्येवावकाशोऽवयवावयविव्यवस्थाया इत्यस्याः सामञ्जस्यार्थं बाह्यार्थनिराकरणमपाकरणीयम् ॥

अत्र प्रमेयत्वं ज्ञानत्वव्याप्यन्न वेति संशये पूर्वपक्षमाह विज्ञानवादी यदिदमिति । बुद्धीनां विषयाः सन्तीति मतं मिथ्येति भावः । तत्त्वबुद्धय इति । सत्याः यथार्था बुद्धय इत्यर्थः । याथात्म्यमिति स्वभाव इति यावत् ॥ न च गृह्यते विवेचने कृतेऽपि वस्तूनां स्वभाव इति पूर्वपक्षसूत्रम्-बुद्ध्येति । बुद्ध्या विविच्यमानानां 'भावानाम्' अर्थानाम् 'याथात्म्यस्य' स्वभावस्य 'अनुपलब्धिः'–इयं च 'तस्य' त-

( भा० ) "यथाऽयं तन्तुरयं तन्तुरिति प्रत्येकं तन्तुषु विविच्यमानेषु नार्थान्तरं किञ्चिदुपलभ्यते, यत्पटबुद्धेर्विषयः स्यात् । याथात्म्यानुपलब्धेरसति विषये पटबुद्धिर्भवन्ती मिथ्याबुद्धिर्भवति । एवं सर्वत्रेति" ॥ २६ ॥

( सू० ) व्याहतत्वादहेतुः ॥ २७ ॥

(भा० ) यदि बुद्ध्या विवेचनं भावानां, न सर्वभावानां याथात्म्यानुपलब्धिः । अथ सर्वभावानां याथात्म्यानुपलब्धिर्न

---

(ख०)स्तुस्वभावस्य 'अनुपलब्धिः' 'तन्तूनामपकर्षणे पटसद्भावस्य अनुपलब्धिवत्'—तन्तूनामपसारणे पटो यन्नोपलभ्यते तत्तस्याभावादेव-एवं यद्वस्तुस्वभावो नोपलभ्यते तत्तस्याभावादेवेत्यर्थः ।

सूत्रार्थमाह यथाऽयमिति । पटबुद्धिदृष्टान्तेन सकलबाह्यार्थबुद्धीनां मिथ्यात्वं सिध्यतीत्यर्थः । यदि पटस्तन्तुभ्यो भिन्नो भवेत् तन्त्वतिरेकेण ( गौरिवाश्वातिरेकेण ) उपलभ्येत न चोपलभ्यते इत्यस्मात्पट इत्यसद्वस्तुविषया बुद्धिरियम्मिथ्यैव तन्तुरित्यपि बुद्धिर्मिथ्या–अंशुभ्यो भेदेनानुपलम्भात् । एवमंशुबुद्धिरपि । एवं क्रमेण परमाणुष्वपि बुद्ध्या विविच्यमानेषु याथात्म्यानुपलब्धेर्न बाह्यवस्तु स्थूलं वा क्षोदीयो वास्तीति सर्वा एव बुद्धयः स्वाकारमबाह्यं बाह्यतयाऽऽलम्बमाना मिथ्याभूता इति पूर्वपक्षहृदयम् । तथाचोक्तम्माध्यमिकैः—

बुद्ध्या विविच्यमानानां स्वभावो नावधार्यते ।
अतो निरभिलप्यास्ते निस्स्वभावाश्च देशिताः ॥ इति ॥ २६ ॥

पूर्वपक्षहेतुं सिद्धान्ती दूषयति—व्याहतत्वादिति सूत्रम् ।

सूत्रं व्याचष्टे यदि बुद्ध्येति । वस्तुस्वभावं विना न तस्य विवेचनं सम्भवतीति भावः । यस्य विविच्यमानस्य स्वभावानुपलब्धिं भवान् हेतुत्वेनोपन्यस्यति तत् कुतश्चिदन्यस्मात् विवेचनीयम्–अवश्य-

(भा०)बुद्ध्या विवेचनम् । भावानाम् बुद्ध्या विवेचनं याथात्म्या-नुपलब्धिश्चेति व्याहन्यते । तदुक्तम्—अवयवावयविप्रसङ्गश्चैवमा प्रलयात्—इति ॥ २७ ॥

( सू० ) तदाश्रयत्वादपृथग्ग्रहणम् ॥ २८ ॥

( भा० ) कार्यद्रव्यं कारणद्रव्याश्रितं तत्कारणेभ्यः पृथङ् नोपलभ्यते । विपर्यये पृथग्ग्रहणात् । यत्राश्रयाश्रितभावो नास्ति

---

(ख०)भावे विवेचनानुपपत्तेः । तथाच तेनावधिभूतेन वस्त्वन्तरेण क्वचिदवस्थातव्यम् । अनवस्थायां त्रुटेरमेयत्वप्रसङ्गादित्युक्तम् । तस्मात् परमाणुषु वा तत्संयोगेषु वा तेनावस्थातव्यम् । तथाच यतो विवि-च्यते भावः स एवास्यावधिर्याथात्म्येनोपलभ्यत एवेति बुद्ध्या वि-विच्यमानस्य सर्वभावानुपपत्त्या व्याघात इति सिद्धम् । प्रकृतविष-यकं पूर्वमुक्तं स्मारयति तदुक्तमिति । पञ्चदशसूत्रे प्रागित्यर्थः ॥

अत्र वार्त्तिककारो दूषणान्तरमप्याह । सर्वभावानामनुपपत्तिरिति ब्रुवाणः प्रमाणं पर्यनुयोज्यः । यदि प्रमाणं ब्रवीति व्याहतं भवति प्रमा-णस्यापि भावरूपत्वात् । अथ न ब्रवीति अर्थोऽस्य प्रमाणाभावादेव न सिध्यतीति ॥ २७ ॥

यत् पुनरेतत्—"यदि व्यतिरिक्तं घटादि द्रव्यं स्यात् तन्तुषु बु-द्ध्या विविच्यमानेषु पृथगुपलभ्येत"—इति तत्र समाधत्ते तदाश्रयत्वा-दिति सूत्रम् । यत् पटस्तन्तुभ्यः पृथक् न गृह्यते तत्र कारणं तन्तुप-टयोराश्रयाश्रितभाव एवेत्यर्थः ॥

सूत्रार्थमाह—कार्यद्रव्यमिति । तदिति । तस्मादित्यर्थः । कथमेत-ज्ज्ञायते यदाश्रयाश्रितभावादेवापृथग्ग्रहणमित्यत आह—विपर्यय इति । यत्र नास्त्याश्रयाश्रितभावस्तत्र पृथक् ग्रहणं भवत्येव । अपृथग्ग्रहणादिति ब्रुवाणः प्रष्टव्यो जायते—किं विलक्षणव्यवहाराभावः, उत भेदाभावः, उत

(भा०) तत्र पृथग्ग्रहणमिति। बुद्ध्या विवेचनात्तु भावानां पृथग्ग्रहणमतीन्द्रियेष्वणुषु यदिन्द्रियेण गृह्यते तदेतया बुद्ध्या विविच्यमानमन्यदिति ॥ २८ ॥

(सू०) प्रमाणतश्चार्थप्रतिपत्तेः ॥ २९ ॥

(भा०) बुद्ध्या विवेचनाद्भावानां याथात्म्योपलब्धिः। यदस्ति यथा च यत्रास्ति यथा च तत्सर्वं प्रमाणत उपलब्ध्या

---

(ख०)तन्तुव्यतिरेकेण देशान्तरेऽनुपलम्भ इति। न तावदाद्यः तन्तवो हि भिन्नाभबुद्धिवेद्या पटस्तु अभिन्नाभबुद्धिवेद्य इति। नापि द्वितीयः। तन्तूनामंशुदेशत्वात् पटस्य तन्तुदेशत्वात्। तस्मात् तन्तुभ्योऽन्यत्रादर्शनम्पटस्यापृथग्ग्रहणम्। तच्च भेदेऽपि तदाश्रितत्वेनोपपद्यमानं नाभेदम् तन्तुपटयोर्गमयितुमर्हतीत्याशयः।

बुद्ध्या विविच्यमानानामर्थानाम्पृथग्भावोऽपि गृह्यत एवेत्याह-बुद्ध्येति। यत्र खल्ववयवावयविनावैन्द्रियकौ तत्र पृथग्ग्रहणमविवेचकानामस्फुटतरम्—अतीन्द्रियेभ्यस्त्वणुभ्य आनुमानिकेभ्यः प्रत्यक्षदृश्यानां तदाश्रितानामवयवानां पृथग्ग्रहणमतिस्फुटमित्याशयः॥२८॥

अतीन्द्रियेष्ववयवेषु परमाणुष्वैन्द्रियकावयविभेदः स्पष्टो गृह्यत इति प्रदर्शितम्—अधुना ऐन्द्रियकेऽप्यवयवेऽवयविनो विविच्यमानस्य याथात्म्येन पृथग्ग्रहणम्प्रदर्शयति—प्रमाणत इति सूत्रम्॥ 'प्रमाणतः' प्रमाणाधीनत्वात् 'अर्थस्य' पटादेः 'प्रतिपत्तेः' ज्ञानस्य प्रामाणिके चार्थे न बाधकस्य सम्भव इत्यर्थः।

सूत्रार्थमाह—बुद्ध्या विवेचनादिति। 'यदस्ति पटादिकं द्रव्यम्—'यथाच' स्वावयवसमवेतत्वेन गुणाधारतया च—'यत् नास्ति' शशविषाणादि—'यथा च' कार्यकारणभावेन—सर्वमेतत् प्रमाणत एवोपलब्ध्या सिध्यति। यदेव यथा प्रमाणेनोपलभ्यते तदेव तथाऽस्तीति सिद्धम्स-

(भा०) सिध्यति। यां च प्रमाणत उपलब्धिस्तद्बुद्ध्या विवेचनं भावानाम्। तेन सर्वशास्त्राणि सर्वकर्माणि सर्वे च शरीरिणां व्यवहारा व्याप्ताः। परीक्षमाणो हि बुद्ध्याऽध्यवस्यति—इदमस्तीदं नास्ति—इति।

तत्र न सर्वभावानुपपत्तिः ॥ २९ ॥

( सू० ) प्रमाणानुपपत्त्युपपत्तिभ्याम् ॥ ३० ॥

(भा०) एवं च सति सर्वं नास्तीति नोपपद्यते। कस्मात् ?—

---

(ख०)वतीत्यर्थः। ननु भवत्वेवं किन्तेनेत्यत आह या चेति। यया प्रामाणिकोपलब्ध्या वस्तुसिद्धिर्भवति सैव 'बुद्ध्या विवेचनं भावानाम्'। तथाच बुद्ध्या विवेचनादपि भावानां याथात्म्यावधारणं भवत्येवेति यदुक्तं षड्विंशे सूत्रे तदपाकृतमिति हृदयम्। उक्ताया उपलब्धेः सर्वजनप्रतीतिसाक्षिकत्वमाह तेनेति। उक्तव्याप्तिप्रकारमाह परीक्षमाण इति। इदमस्तीदं नास्ति एवमस्त्येवं नास्तीत्याद्यध्यवसाय एव शास्त्राणां कर्मणां व्यवहाराणां च विषयः। स चाध्यवसायः प्रमाणद्वारकविवेचनेनैव भवतीत्यर्थः॥

उपसंहरति—तत्र नेति। सर्वभावानुपपत्तिरिति यदुक्तं पूर्वपक्षिणा तत् 'न' युक्तमिति शेषः॥ २९॥

पूर्वपक्षे दोषान्तरमाह—प्रमाणेति सूत्रम्। व्याघातान्न बाह्याभाव इति शेषः।

'बाह्यं नास्ति' इत्यत्र प्रतिज्ञायां यदि प्रमाणम् 'उपपद्यते' वर्तते तदा तत्प्रमाणस्य बाह्याभावज्ञानाद् 'बाह्यस्य' सत्त्वात् न बाह्याभावः। अथ तत्र प्रमाणं 'न उपपद्यते' तदा निष्प्रमाणकत्वादेव तत्प्रतिज्ञा न सिद्ध्यतीत्यर्थः।

सूत्रार्थं व्याचक्षाणः सूत्रशेषं पूरयति एवमिति। पूर्वोक्तयुक्तिपरम्परायां प्रदर्शितायां सर्वं नास्तीति पूर्वपक्षिणः पक्षो नोपपद्यते इत्यर्थः।

(भा०)प्रमाणानुपपत्त्युपपत्तिभ्याम् । यदि सर्वं नास्तीति प्रमाणमुपपद्यते सर्वं नास्तीत्येतद्व्याहन्यते । अथ प्रमाणं नोपपद्यते सर्वं नास्तीत्यस्य कथं सिद्धिः । अथ प्रमाणमन्तरेण सिद्धिः सर्वमस्तीत्यस्य कथं न सिद्धिः ॥ ३० ॥

( सू० ) "स्वप्नविषयाभिमानवदयं प्रमाणप्रमेयाभिमानः" ॥ ३१ ॥

"मायागन्धर्वनगरमृगतृष्णिकावद्वा" ॥ ३२ ॥

( भा० ) "यथा स्वप्ने न विषयाः सन्त्यथ चाभिमानो भवति । एवं न प्रमाणानि प्रमेयानि च सन्त्यथ च प्रमाणप्रमेयाभिमानो भवति" ॥ ३१ ॥ ३२ ॥

---

(ख०)पृच्छति कस्मादिति । तत्रोत्तरम् प्रमाणेति सूत्रम् । सूत्रार्थमाह–यदि सर्वमिति । शेषं सुगमम् ॥ ३० ॥

यदुक्तं प्रमाणोपपत्त्यनुपपत्तिभ्यां न सर्वाभावसिद्धिरिति तत्र विज्ञानवादी प्रत्यवतिष्ठते–स्वप्नेति मायेति चेति सूत्रद्वयेन । यः प्रमाणप्रमेयभावः सिद्धान्तिनोपन्यस्तः स न वास्तवोऽपि त्वनादिवासनानिबन्धनकल्पनाधीनः । यथाहि न स्वप्ने सान्ति विषया–अथ च प्रतिभान्ति कल्पनामात्रेण, तथाच सांवृतेनापरमार्थसता प्रमाणप्रमेयभावेन बाह्यार्थशून्यता सिद्ध्यति परमार्थसती प्रत्ययानाम् । दृष्टा च मिथ्याप्रत्ययानामपि तत्त्वप्रतिपत्तिहेतुतेत्याशयः प्रथमसूत्रस्य । ननु स्वप्नप्रत्ययानामस्त्वेवंधर्मकत्वम् । ये पुनरमी जाग्रत्प्रत्ययाः–स्तम्भ इति वाकुम्भं इति वा–तत्र किमायातम्, तेषां स्वप्नप्रत्ययेभ्योऽत्यन्तवैलक्षण्यादित्यत आह मायेति द्वितीयं सूत्रम् । जाग्रत्प्रत्यया अप्येवंविधाः सहस्रशो दृश्यन्ते–न चैते स्तम्भकुम्भादिप्रत्ययास्ततो विलक्षणा इत्यर्थः ॥ सूत्रार्थमाह भाष्यकारः यथा स्वप्न इति । व्याख्यातमेतत् ३१–३२ ।

( सू० ) हेत्वभावादसिद्धिः॥ ३३ ॥

( भा० ) स्वप्नान्ते विषयाभिमानवत्प्रमाणप्रमेयाभिमानो न पुनर्जागरितान्ते विषयोपलब्धिवदित्यत्र हेतुर्नास्तीति हेत्वभावादसिद्धिः । स्वप्नान्ते चासन्तो विषया उपलभ्यन्ते इत्यत्रापि हेत्वभावः ।

"प्रतिबोधेऽनुपलम्भादिति चेत्" प्रतिबोधविषयोपलम्भादप्रतिषेधः । "यदि प्रतिबोधेऽनुपलम्भात्स्वप्ने विषया न सन्तीति" । तर्हि य इमे प्रतिबुद्धेन विषया उपलभ्यन्ते उपल-

---

(ख०)परोक्तं दूषयति सिद्धान्ती हेत्वभावादिति सूत्रम् । स्वप्नप्रत्ययवत् जाग्रत्प्रत्ययेष्वप्यविद्यमानेष्वेव विषयेष्वभिमानो भवतीत्यत्र नास्ति हेतुरित्यर्थः ॥

सूत्रं व्याचष्टे स्वप्नान्त इति । प्रमाणप्रमेयबुद्धिः स्वप्नप्रत्ययसदृशी न जागत्प्रत्ययसदृशीत्यत्र हेतुर्नास्तीत्यर्थः । स्वप्नान्त इति स्वप्नावस्थायामित्यर्थः ।

ननु स्वप्नप्रत्ययदृष्टान्तबलेनैव सर्वबुद्धीनां मिथ्यात्वं सिध्यति । तथा चात्र प्रयोगः–प्रमाणप्रमेयबुद्धिर्मिथ्याऽसद्विषया बुद्धित्वात् स्वप्नबुद्धिवदिति । एवं च यदुक्तं हेत्वभावादसिद्धिरिति तदयुक्तमित्यत आह–स्वप्नान्ते चासन्त इति । दृष्टान्त एवासिद्धो यतः स्वप्नज्ञानस्यैवासद्विषयत्वमद्यत्वेऽपि न सिद्धमित्यर्थः । स्वप्नप्रत्ययानामसद्विषयत्वे हेतुमाह–परः प्रतिबोध इति । तद्दूषयति प्रतिबोधेति । परोक्तं हेतुमनुवदति यदि प्रतिबोध इति । ये विषयाः स्वप्नोपलब्धास्ते प्रतिबोधानन्तरं नैवोपलभ्यन्ते अयमेवानुपलम्भस्ताद्विषयाणामसत्त्वं साधयतीत्यर्थः । उक्तहेतुदूषणमनुवदति तर्हीति । यदि स्वप्नप्रत्ययविषयाः प्रबोधेऽनुपलम्भादसन्त इति तर्हि प्रबोधे येषामुपलम्भो विषयाणां

(भा०)म्भात्सन्तीति ।

विपर्यये हि हेतुसामर्थ्यम् । उपलम्भात् सद्भावे सत्यनुपलम्भादभावः सिद्ध्यति । उभयथा त्वभावे नानुपलम्भस्य सामर्थ्यमस्ति । यथा प्रदीपस्याभावाद्रूपस्यादर्शनमिति तत्र भावेनाभावः समर्थ्यत इति ।

---

(ख०)ते सन्त एवेति प्राप्तम् । तथा 'जागरितान्ते विषयोपलब्धिर्धार्मिथ्येति' व्याहन्यते । व्याघातमेव स्पष्टयति विपर्यय इति । स्वप्नप्रत्ययदृष्टान्त एव भवता विषयासत्त्वसाधनायोपन्यस्तः स चोक्तप्रकारेण जागरितप्रत्ययविषयाणां सत्त्वमेव भवदीयप्रतिज्ञाविरुद्धं साधयतीत्यर्थः । एतदुक्तम्भवति । स्वप्नविज्ञानस्यायाथार्थ्यमिच्छता बाधकमन्तरेण तदनुपपत्तेर्जाग्रत्प्रत्यय एवास्य बाधको वक्तव्यः । न चासावसमीचीनस्तद्बाधितुमुत्सहत इति समीचीनत्वं जाग्रत्प्रत्ययस्याभ्युपगन्तव्यमिति । ननु किमनुपलम्भः कदाप्यभावं विषयस्य नैव साधयतीत्यत आह उपलम्भादिति । यस्यार्थस्योपलम्भात् सत्त्वं सिध्यति तस्यैवानुपलम्भोऽसत्त्वं साधयति नान्यथेत्यर्थः । ननु यथानुपलम्भादसत्त्वं तथैवोपलम्भादप्यसत्त्वं कुतो न सिध्यतीत्यत आह उभयथेति । यद्युभयथाऽप्यभाव एव सिध्यति भावानां तर्ह्यभावस्य साधनसामर्थ्यमेव न भवतीत्यर्थः । उक्तार्थस्याशयं दृष्टान्तेन स्पष्टयति—प्रदीपस्येति । यत्र प्रदीपो नास्ति तत्र रूपस्यादर्शनमिति दृष्ट्वा रूपादर्शनसाधने सामर्थ्यं प्रदीपाभावस्य तदैव सिध्यति यदा कदाचित् प्रदीपसत्त्वे रूपमुपलब्धवतो द्रष्टुरेवं बुद्धिः स्याद् 'यदि प्रदीपोऽभविष्यत्तर्हि रूपमद्रक्ष्यत' इति । इयं च बुद्धिः प्रदीपस्य रूपस्य च यत्र क्वचन सत्त्वं विना नोपपद्यत इत्यनयोः सत्त्वमेव प्रदीपाभावस्य सामर्थ्यमापादयतीत्यर्थः ।

( भा० ) स्वप्नान्तविकल्पे च हेतुवचनम् स्वप्नविषयाभिमानवदिति ब्रुवता स्वप्नान्तविकल्पे हेतुर्वाच्यः। कश्चित्स्वप्नो भयोपसंहितः कश्चित्प्रमोदोपसंहितः कश्चिदुभयविपरीतः, कदाचित्स्वप्नमेव न पश्यतीति। निमित्तवतस्तु स्वप्नविषयाभिमानस्य निमित्तविकल्पाद्विकल्पोपपत्तिः ॥ ३३ ॥

( सू० ) स्मृतिसङ्कल्पवच्च स्वप्नविषयाभिमानः ॥३४॥

( भा० ) पूर्वोपलब्धविषयः। यथा स्मृतिश्च सङ्कल्पश्च पूर्वोपलब्धविषयौ न तस्य प्रत्याख्यानाय कल्पेते, तथा स्वप्ने विषयग्रहणं पूर्वोपलब्धविषयं न तस्य प्रत्याख्यानाय कल्पत इति।

---

(ख०)परोक्तौ दूषणान्तरमाह स्वप्नान्तविकल्प इति। हेतुवचनमिति। हेतुर्वाच्य इत्यर्थः। स्वाशयं वर्णयति स्वप्नविषयेति। स्वप्नज्ञानानि विचित्राणि भवन्ति तत्र वैचित्र्ये को हेतुरिति वक्तव्यम्। वैचित्र्यं स्वप्नज्ञानस्य प्रदर्शयति कश्चिदिति। यदि स्वप्नकारणं किञ्चित् सन्नास्त्येव तर्हि किन्निमित्तं वैचित्र्यमित्युपपादयितुं न शक्यत इत्याशयः। सिद्धान्ते कथन्तदुपपत्तिरित्यत आह निमित्तवत इति। अस्माकं तु जाग्रज्ज्ञानवत्स्वप्नज्ञानस्यापि स्वरूपसन्त्येव निमित्तानि तेषां च निमित्तानां वैचित्र्यादुपपद्यत एव ज्ञानेऽपि वैचित्र्यमित्यर्थः। स्वप्नवैचित्र्यस्य कादाचित्कत्वेन सहेतुकत्वात् निमित्तवैचित्र्यस्यावश्याभ्युपगन्तव्यत्वेन तेनैव विषयसत्तासिद्धेः सर्वशून्यता बाधितेत्याशयः ॥ ३३ ॥

स्वप्नज्ञानस्यापि सद्विषयत्वमेवेत्यत्र साधकमाह स्मृतिसङ्कल्पवदिति सूत्रम्। सूत्रशेषं पूरयति पूर्वेति। तथाच 'स्मृतिसङ्कल्पवत् स्वप्नविषयाभिमानोऽपि पूर्वोपलब्धविषय एवेति' सूत्रस्वरूम्। सूत्रार्थमाह यथेति। सङ्कल्प इति। इच्छेत्यर्थः। स्मृतिरिच्छा च पूर्वोपलब्धमेवार्थं

(भा०) एवं दृष्टविषयश्च स्वप्नान्तो जागरितान्तेन। यः सुप्तः स्वप्नं पश्यति स एव जाग्रत्स्वप्नदर्शनानि प्रतिसन्धत्ते—इदमद्राक्षम्—इति। तत्र जाग्रद्बुद्धिवृत्तिवशात्स्वप्नविषयाभिमानो मिथ्येति व्यवसायः। सति च प्रतिसन्धाने या जाग्रतो बुद्धिवृत्तिस्तद्वशादयं व्यवसायः—स्वप्नविषयाभिमानो मिथ्येति।

उभयाविशेषे तु साधनानर्थक्यम्। यस्य स्वप्नान्तजागरितान्तयोरविशेषस्तस्य स्वप्नविषयाभिमानवदिति साधनमनर्थकं तदाश्रयप्रत्याख्यानात्।

---

(ख०) विषयीकुरुत इत्युभयवादिसम्मतम् ततश्चानयोर्विषयौ न प्रतिषेद्धुं शक्येते एवं स्वप्नेऽपि ये विषया उपलभ्यन्ते तेऽपि पूर्वोपलब्धा एवेति स्वप्नज्ञानविषयोऽपि न प्रतिषेद्धुं शक्यत इत्यर्थः। फलितार्थमाह एवमिति। 'स्वप्नान्तः' स्वप्नज्ञानम्—'जागरितान्तेन' जाग्रज्ज्ञानेन—'दृष्टविषयः' दृष्टो विषयो यस्य स इत्यर्थः। स्वाशयं विवृणोति यः सुप्त इति। एवं च स्वप्नज्ञानविषयः जाग्रज्ज्ञानविषयोऽपि भवत्येवेत्यर्थः। कथं तर्हि स्वप्नज्ञाने मिथ्यात्वबुद्धिरित्यत आह तत्र जाग्रदिति। जाग्रदवस्थायां स्वप्नदृष्टं प्रतिसन्धाय यदा बुद्धिरुदेति—'पुरविमानादिकं यन्मया स्वप्ने दृष्टं तत्सर्वमधुना जागरितेन मया नैवोपलभ्यत' इति तदैव स्वप्नज्ञानं मिथ्येति निश्चयो जायत इत्यर्थः। तमेवार्थं स्पष्टयति सति चेति।

स्वप्नज्ञानवज्जागरितज्ञानस्यापि मिथ्यात्वे दोषमाह उभयेति। तस्याशयं विवृणोति यस्येति। स्वप्नज्ञानविषयसादृश्यमेव जाग्रत्प्रत्ययविषयाणां मिथ्यात्वे हेतुर्विवक्षितः—तस्य तु साधनभाव एव नास्ति यदि स्वप्नजागरितप्रत्यययोर्मिथ्यात्वे न कश्चिद्विशेष इति। तत्र हेतुमाह—तदाश्रयेति। सर्वस्य मिथ्याज्ञानस्य किञ्चित्सत्यज्ञानमाश्रयो भवति-

(भा०) अतस्मिँस्तदिति च व्यवसायः प्रधानाश्रयः । अपुरुषे स्थाणौ पुरुष इति व्यवसायः स प्रधानाश्रयः । न खलु पुरुषेऽनुपलब्धे पुरुष इत्यपुरुषे व्यवसायो भवति । एवं स्वप्नविषयस्य व्यवसायो—हस्तिनमद्राक्षं पर्वतमद्राक्षमिति—प्रधानाश्रयो भवितुमर्हति ॥ ३४ ॥

( भा० ) एवं च सति—

---

(ख०) यदपेक्षया तस्य मिथ्यात्वं यच्च तस्य 'प्रधान'मिति वर्ण्यते-जागरितप्रत्ययापेक्षयैव च स्वप्नज्ञानानां मिथ्यात्वम्—अतो यदि जागरितप्रत्ययानामपि स्वप्नज्ञानवदेव मिथ्यात्वं तर्हि स्वप्नज्ञानमिथ्यात्वस्याश्रयाभावादेव साधनसामर्थ्याभाव इति भावः ।

मिथ्याज्ञानस्य सत्यज्ञानापेक्षत्वमेव विवृणोति अतस्मिन्निति । अतस्मिंस्तदिति ज्ञानं मिथ्याज्ञानमभिप्रेतं सर्ववादिनाम्—तच्च सत्यं किञ्चित् 'प्रधानम्' आरोप्यमपेक्षते—यदारोपेण ज्ञानस्य मिथ्यात्वं भवतीत्यर्थः । दृष्टान्तमाह अपुरुष इति । अपुरुषभूते स्थाणौ यदा पुरुषबुद्धिर्भवति सा मिथ्याबुद्धिः—सा च किञ्चित् 'प्रधानम्' आरोप्यम् सत्यं पुरुषं अपेक्षते—यावत् सत्यः पुरुषो नोपलभ्यते यावच्च सत्ये पुरुषे पुरुषबुद्धिर्न जायते—तावत् अपुरुषे स्थाणौ 'पुरुषोऽयम्' इति मिथ्याज्ञानं नैव सम्भवति । एवमेव स्वप्नप्रत्यया अपि सत्यमारोप्यमपेक्षन्ते—यः कदापि सत्यं हस्तिनं पर्वतं वा न ददर्श तस्य हस्तिविषयं पर्वतविषयं वा स्वप्नज्ञानमपि नैव जायत इत्यर्थः । तथाच वार्त्तिकम्—'सर्व एव मिथ्याप्रत्यया भविष्यन्तीति' ब्रुवाणः प्रधानमनुयोक्तव्यः—न च निष्प्रधानं विपर्ययप्रत्ययं पश्याम इति ॥३४॥

ननु भ्रमस्यापि सद्विषयकत्वे तत्प्रतिरोधः कथं स्यादित्याशङ्कायां उत्तरमुपक्रमते—एवं चेति । मिथ्याज्ञानस्य सत्यज्ञानापेक्षत्वे सतीत्यर्थः ॥

( सू० ) मिथ्योपलब्धेर्विनाशस्तत्त्वज्ञानात्स्वप्नवि-
षयाभिमानप्रणाशवत्प्रतिबोधे ॥ ३५ ॥

( भा० ) स्थाणौ पुरुषोऽयमिति व्यवसायो मिथ्योपलब्धिः—अतस्मिँस्तदिति ज्ञानम् । स्थाणौ स्थाणुरिति व्यवसायस्तत्त्वज्ञानम् । तत्त्वज्ञानेन च मिथ्योपलब्धिर्निवर्त्यते, नार्थः स्थाणुपुरुषसामान्यलक्षणः । यथा प्रतिबोधे या ज्ञानवृत्तिस्तया स्वप्नविषयाभिमानो निवर्त्यते, नार्थो विषयसामान्यलक्षणः । तथा मायागन्धर्वनगरमृगतृष्णिकाणामपि या बुद्धयोऽतस्मिँस्तदिति व्यवसायास्तत्राप्यनेनैव कल्पेन मिथ्योपलब्धिविनाशस्तत्त्वज्ञानान्नार्थप्रतिषेध इति ।

उपादानवच्च मायादिषु मिथ्याज्ञानम् । प्रज्ञापनीयसरूपं च

---

(ख०)भ्रमज्ञानस्य प्रतिरोधप्रकारमाह मिथ्योपलब्धेरिति सूत्रम् । प्रतिबोधे स्वप्नविषयाभिमानप्रणाशवत्—यथा जागरितप्रत्ययेन स्वप्नज्ञानस्यैव विनाशः क्रियते न तद्विषयस्य तथैव 'तत्त्वज्ञानाद् बाधकात् 'मिथ्योपलब्धेः' एव विनाशो भवति न तु तदर्थस्य सामान्यस्यापीति शेषः ।

सूत्रार्थमाह स्थाणाविति । इदमत्राकूतम्—मिथ्योपलब्धीनां बाह्यानालम्बनत्वमास्थाय तत्त्वबुद्धीनां बाह्यानालम्बनत्वं साधनीयम् । तासां बाह्यानालम्बनत्वं च बाधकाधीनम् । बाधकं चात्र रजतादिभ्रमे समारोपितरजताद्यभिमानमेव निवर्तयति न तु पुरोऽवस्थितमर्थसामान्यमपि शुक्लभास्वरम् । तस्मान्न बाधकानुरोधादपि मिथ्याज्ञानं बाह्यानालम्बनमिति स्वप्नवदिति दृष्टान्तः साध्यविकल इति ।

स्वप्नज्ञानस्य सदाश्रयत्वमुपपाद्य मायाज्ञानस्यापि सदाश्रयत्वमुपपादयति उपादानवदिति । मायादिष्वपि यन्मिथ्याज्ञानं तस्यापि 'उ-

(भा०)द्रव्यमुपादाय साधनवान्परस्य मिथ्याध्यवसायं करोति सा माया। नीहारप्रभृतीनां नगरसरूपसन्निवेशे दूरान्नगरबुद्धिरुत्पद्यते, विपर्यये तदभावात्। सूर्यमरीचिषु भौमेनोष्मणा संसृष्टेषु स्पन्दमानेषूदकबुद्धिर्भवति सामान्यग्रहणात्, अन्तिकस्थस्य विपर्यये·

---

(ख०)पादानं' कारणं सदेवेत्यर्थः। एतदेव दृष्टान्तेन विशदयति प्रज्ञापनीयेति। मायिको यस्यार्थस्याभासमुत्पादयितुमिच्छति तत्सदृशं किञ्चित् सदेव वस्तु गृहीत्वा सम्पादितसामग्रीभिस्तस्मिन् वस्तुनि वस्त्वन्तरस्याभासरूपं मिथ्याज्ञानं जनयतीत्यत्रापि ज्ञानस्य मिथ्यात्वेऽपि तदाश्रयस्य वस्तुनः सत्त्वमेवेत्याशयः। मायिकं भ्रमस्य सदाश्रयत्वमुपपाद्य गन्धर्वनगरभ्रान्तेरपि तदुपपादयति नीहारेति। गन्धर्वनगरादिभ्रान्तिरपि तदैव भवति यदाऽऽकाशे नीहारो जलदपटलं वा तत्तदाकारेण सदेवावभासते—ततश्चात्रापि ज्ञानस्य मिथ्यात्वेऽपि नीहारादितदाश्रयस्य सत्त्वमेवेत्यर्थः। कथमेतज्ज्ञायते सत्येव नीहारादौ नगरादिभ्रान्तिरित्यत आह विपर्यय इति। यदा नीहाराद्याकाशे नास्ति तदा गन्धर्वनगरादिभ्रमो नैवोदेतीत्यर्थः, यदैव तु तदस्ति तदैव स भवतीत्यन्वयव्यतिरेकाभ्यां भ्रमस्य सदाश्रयत्वसिद्धिरिति भावः। मृगतृष्णाजलभ्रमस्य सदाश्रयत्वमुपपादयति सूर्यमरीचिष्विति। मरुप्रदेशेषु सूर्यरश्मयः भूमितो निर्गतेनोत्कटोष्णेन तेजसा संसृष्टाश्चञ्चलीक्रियन्ते—तेष्वेव स्पन्दमानेषु दूरस्थस्य चलज्जलबुद्धिरुदेतीत्यत्राप्याश्रयभूताः सूर्यरश्मयः सत्या एवेत्यर्थः। जलभ्रमस्य कारणमाह सामान्येति। यदा जलवीचयश्चलायमाना दृश्यन्ते तथैवोक्ताः सूर्यरश्मयोऽपीत्येतत्सादृश्यमूलिकैव तत्र जलभ्रान्तिरित्यर्थः। किमत्र प्रमाणमित्यत आह अन्तिकस्थस्येति। यदा द्रष्टा रश्मीनां समीपे वर्त्तते तदोक्ता भ्रान्तिर्नैवोदेति—यदा वोक्तावस्थाः सूर्यरश्मयो न सन्ति तदापि सा

(भा०)तदभावात्। क्वचित् कदाचित् कस्यचिच्च भावान्नानिमित्तं मिथ्याज्ञानम्। दृष्टं च बुद्धिद्वैतं मायाप्रयोक्तुः परस्य च दूरान्तिकस्थयोर्गन्धर्वनगरमृगतृष्णिकासु, सुप्तप्रतिबुद्धयोश्च स्वप्नविषये। तदेतत्सर्वस्याभावे निरुपाख्यतायां निरात्मकत्वे नोपपद्यते इति ॥ ३५ ॥

(सू०) बुद्धेश्चैवं निमित्तसद्भावोपलम्भात् ॥३६॥

(ख०) नोदेत्युदेति तु सा यदोक्तावस्थाः सूर्यरश्मयो वर्त्तन्ते तद्द्रष्टा च दूरस्थः—इत्यन्वयव्यतिरेकाभ्यां सिध्यति मरुमरीचिकाया सत्याश्रयत्वमित्यर्थः। मिथ्याज्ञानस्य सन्निमित्तत्वे हेत्वन्तरमाह क्वचिदिति। यद्यनिमित्तमत्यन्तासद्विषयमेव मिथ्याज्ञानं स्यात्सर्वत्र स्यात्-न तु तथा दृश्यते—क्वाचित्कं कादाचित्कं च मिथ्याज्ञानम्—अतोऽपि नात्यन्तं निर्निमित्तम्भवितुमर्हतीत्यर्थः। हेत्वन्तरमाह दृष्टमिति। अत्यन्तासद्विषयेषु सर्वस्यैव पुरुषस्यैकाकारमेव ज्ञानं भवति—मायादिज्ञानेषु तु न तथा—तथाहि—मायाजनितभ्रान्तिषु यद्यपि द्रष्टॄणां सत्यमेवेदं दृश्यत इति ज्ञानं तथापि मायिकस्य मिथ्यैवैतत्सर्वं मायोद्भावितमिति ज्ञानं भवति—एवं गन्धर्वनगरमृगतृष्णिकादिषु यद्यपि दूरस्थस्य नगरजलादि सत्यमेवेति ज्ञानं भवति तथापि अन्तिकस्थस्य न तथेति—एवं स्वप्नज्ञाने यद्यपि सुप्तस्य सत्यत्वज्ञानं तथापि प्रबुद्धस्य मिथ्यैव मे ज्ञानमभूदिति ॥

उपसंहरति तदेतदिति। यद्यत्यन्तमेव निरात्मकमसदेव सर्वथा सर्वमभविष्यत्तर्हीदृशबुद्धिद्वैतं न भवेदित्यर्थः ॥ ३५ ॥

बाह्यमात्रापलापिनं विज्ञानवादिनं निरस्य सर्वशून्यवादिनं निराकर्त्तुमुपक्रमते। माध्यमिको हि सर्वशून्यवादी मिथ्याबुद्धिदृष्टान्तेन बाह्यप-

( भा० ) मिथ्याबुद्धेश्चार्थवदप्रतिषेधः । कस्मात् ? निमित्तोपलम्भात् सद्भावोपलम्भाच्च । उपलभ्यते मिथ्याबुद्धिनिमित्तम् । मिथ्याबुद्धिश्च प्रत्यात्ममुत्पन्ना गृह्यते संवेद्यत्वात् । तस्मान्मिथ्याबुद्धिरप्यस्तीति ॥ ३६ ॥

( सू० ) तत्त्वप्रधानभेदाच्च मिथ्याबुद्धेर्द्वैविध्योपपत्तिः ॥ ३७ ॥

---

(ख०)एवं कृत्वा तेनैव दृष्टान्तेन विज्ञानस्याप्यभावं प्रसाध्य भावानां सर्वथा विचारासहत्वं व्यवस्थापयति—तम्प्रत्याह बुद्धेश्चेति सूत्रम् ॥ 'बुद्धेः' ज्ञानस्यापि 'एवम्' अप्रतिषेध एव—कुतः—'निमित्तसद्भावोपलम्भात्' । यस्मात्तस्य निमित्तं सद्भावश्चोपलभ्यते तस्मादित्यर्थः ।

सूत्रं व्याचष्टे मिथ्याबुद्धेरिति । यथा प्रदर्शितहेतुभिर्मिथ्याज्ञानानां विषयस्य सर्वथाऽसत्त्वं व्यवस्थापयितुं न शक्यते तथैव तासां बुद्धीनामप्यत्यन्तासत्त्वं नैवोपपादयितुं शक्यमित्यर्थः । पृच्छति कस्मादिति । तत्रोत्तरम् निमित्तोपलम्भात्—सद्भावोपलम्भादिति हेतुद्वयम् । प्रथमं हेतुं विभजते उपलभ्यत इति । मिथ्याबुद्धीनां निमित्तानि स्पष्टमुपलभ्यन्ते । द्वितीयं हेतुं विभजते मिथ्येति । यन्मिथ्याज्ञानमस्तीत्येतदपि प्रत्यात्मवेदनीयं स्वसंवेदनसिद्धमेव सर्वेषामित्यर्थः । उपसंहरति तस्मादिति । सोऽयं माध्यमिकः सर्वैरनुभूयमानां मिथ्याबुद्धिं नैवापह्नोतुमर्हति—मिथ्याबुद्धिं च प्रतिपद्यमानेन तदाश्रयभूतो बाह्योप्यर्थोऽभ्युपगन्तव्य इति हृदयम् ॥ ३६ ॥

ज्ञानमात्रस्यासद्विषयत्वस्य सद्विषयकत्वाभावस्य वा साधनाय मिथ्याज्ञानदृष्टान्तो न कल्पत इत्याह—तत्त्वेति सूत्रम् । 'तत्त्वं' धर्मिस्वरूपम् (स्थाणुः) 'प्रधानम्' आरोप्यम् (पुरुषः)-तयोर्भेदोस्ति यस्मात् तस्मात् 'मिथ्याबुद्धेः द्वैविध्योपपत्तिः' । धर्मिस्वरूपविषये प्रमात्व-

( भा० ) तत्त्वं स्थाणुरिति–प्रधानं पुरुष इति–तत्त्वप्रधानयोरलोपाद् भेदात् स्थाणौ पुरुष इति मिथ्याबुद्धिरुत्पद्यते सामान्यग्रहणात् । एवं पताकायां बलाकेति लोष्ठे कपोत इति । तत्र समाने विषये मिथ्याबुद्धीनां समावेशः सामान्यग्रहणव्यवस्थानात् । यस्य तु निरात्मकं निरुपाख्यं सर्वं तस्यासमावेशः प्रसज्यते ।

---

(ख०)मारोप्यांशे चाप्रमात्वमित्यर्थः ॥ प्रमाप्रमारूपत्वान्मिथ्याज्ञानस्य तद्दृष्टान्तेन ज्ञानानामत्यन्तासद्विषयकत्वं न साधयितुं शक्यमिति हृदयम् ।

सूत्रं व्याचष्टे तत्त्वमिति । यत्र स्थाणौ पुरुष इति ज्ञानं भवति तत्र तत्त्वं 'स्थाणुरिति' धर्मिस्वरूपम् । पुरुष इति च 'प्रधानम्' आरोप्यम् । अनयोरुभयोरपि ज्ञाने प्रतिभासमानत्वात् निमित्तद्वयमत्राभ्युपगन्तव्यम् । मिथ्याबुद्ध्या हि तन्निमित्तं लक्ष्यते–तेन बुद्धिद्वैविध्योक्त्या तत्तन्निमित्तद्वैविध्यमपि लक्ष्यते मिथ्याबुद्ध्युत्पत्तौ हेतुमाह–सामान्येति । स्थाणुपुरुषयोरारोहपरिणाहादिसादृश्यदर्शनजानितमेव मिथ्याज्ञानमित्यर्थः । भ्रमान्तरेष्वप्येवमेवेत्याह एवमिति । यदा श्वेतपताकायां बकपङ्क्तिबुद्धिर्लोष्ठे वा कपोतबुद्धिरुदेति तत्राप्युक्त एव न्याय इत्यर्थः । निष्कृष्टमर्थमाह तत्रेति । भ्रममात्रपरीक्षया स्पष्टं ज्ञायते यद् भ्रान्तिज्ञानं तस्मिन्नेव विषये भवति यत्र विषयान्तरसादृश्यं वर्त्तते–स्थाणौ पुरुषस्य सादृश्यं वर्त्तते शुक्तिकायां च रजतस्य सादृश्यम् । अत एव तत्र पुरुषभ्रान्तिः रजतभ्रान्तिर्वा जायते । कथमेतदित्यत आह सामान्येत । सामान्यस्य सादृश्यस्य ग्रहणेन व्यवस्थितत्वान्मिथ्याज्ञानानाम्–यत्रैव यस्य सादृश्यं तत्र तस्यैव मिथ्याज्ञानमिति–न भवति पुरुषसदृशे स्थाणौ शुक्तिकासदृशस्य रजतस्य भ्रान्तिरित्यर्थः । न चैतदुपपद्यते

(भा०)गन्धादौ च प्रमेये गन्धादिबुद्धयो मिथ्याभिमतास्तत्त्व-प्रधानयोः सामान्यग्रहणस्य चाभावात्तत्त्वबुद्धय एव भवन्ति। तस्मादयुक्तमेतत्—प्रमाणप्रमेयबुद्धयो मिथ्येति ॥ ३७ ॥

( ५ ) तत्त्वज्ञानविवृद्धिप्रकरणम् ।

( भा० ) दोषनिमित्तानां तत्त्वज्ञानादहङ्कारनिवृत्तिरित्यु-

---

(ख०)बाह्यापलापिन इत्याह यस्य त्विति । यदि वस्तुमात्रं निरात्मकं निःस्वभावं तदा न सम्भवति कस्यापि कुत्रापि सादृश्यं तद्ग्रहणं तद्ग्रहणजनिता मिथ्याबुद्धिर्वेति भावः ।

एवं तावद् रूपबुद्धीः प्रतिपाद्य गन्धादिबुद्धीरपि प्रतिपादयति गन्धादाविति । गन्धादौ प्रमेये यद् गन्धादिज्ञानं जायते तदपि परस्य मिथ्यात्वेनाभिमतम्—किन्तु तादृशे ज्ञाने उक्तप्रकारकप्रमाऽप्रमारूपद्वैविध्यं नास्ति, नास्ति च तत्रैकस्य विषयस्यापरेण सादृश्यं ज्ञाननिमित्तम्—अतोऽत्र स्थाणौ पुरुषज्ञानेन किमपि साधारण्यं नास्ति तथा चैतन्न मिथ्याज्ञानमपि तु सत्यमेव ज्ञानमित्यर्थः ।

प्रकरणार्थमुपसंहरति तस्मादिति ॥ ३७ ॥

एवं प्रासङ्गिकं बाह्यार्थप्रकरणं समर्थितम् । पूर्वस्मिंश्चाह्निकादौ दोषनिमित्ततांप्रकरणे तत्त्वज्ञानोत्पत्तये क्रमविशेषश्च दर्शितः । न चैतावता कृतार्थता । तस्य साक्षात्कारमोहोन्मूलनासमर्थत्वात् । अतस्तथाविधतत्त्वज्ञानसमुत्पादपर्यन्तमेतद् विवर्त्तनीयमिति तदर्थमिदं पञ्चमप्रकरणमिति परिशुद्धिकृतः ।

"ननु शास्त्राधीनं ज्ञानं क्षणिकम् । अतस्तन्नाशे पुनर्मिथ्याज्ञानं स्यादेव । न हि तादृशं किञ्चिदपि ज्ञानं सवासनमिथ्याज्ञानसमुन्मूलनक्षमम्" इतीमां शङ्कामुद्दिश्य तत्त्वज्ञानविवृद्धिप्रकरणमारम्भणीयम्प्राप्नोति । 'तत्त्वज्ञानविवृद्धिः' तत्त्वज्ञानवासना- तस्यां सत्यां भवत्येव मिथ्याज्ञानस्यात्यन्तिको नाशः—इति वृत्तिकाराः ॥

(भा०)क्तम् । अथ कथं तत्त्वज्ञानमुत्पद्यत इति ?–

( सू० ) समाधिविशेषाभ्यासात् ॥ ३८ ॥

( भा० ) स तु प्रत्याहृतस्येन्द्रियेभ्यो मनसो धारकेण प्रयत्नेन धार्यमाणस्यात्मना संयोगस्तत्त्वबुभुत्साविशिष्टः । सति हि तस्मिन्निन्द्रियार्थेषु बुद्धयो नोत्पद्यन्ते । तदभ्यासवशात्तत्त्वबुद्धिरुत्पद्यते ॥ ३८ ॥

( भा० ) "यदुक्तं–सति हि तस्मिन् इन्द्रियार्थेषु बुद्धयो

---

(ख०)प्रकरणार्थमवतारयितुं पूर्वोक्तं स्मारयति दोषनिमित्तानामिति। तत्र शङ्कते पूर्वपक्षी—अथ कथमिति । न तावदागमत उपपत्तितो वा तत्त्वज्ञानमहङ्कारनिवृत्तिं कर्तुमुत्सहते, दोषनिमित्तेषु च सत्सूत्पन्नज्ञानानामपि पूर्ववदहङ्कारदोषानुवृत्तेः । साक्षात्कारस्तु तत्त्वज्ञानस्योपायाभावादयुक्त एवेति प्राश्निकस्य हृदयम् ॥

अस्योत्तरं समाधीति सूत्रं तत्त्वज्ञानविवृद्धौ हेतुमाह ।

सूत्रं व्याचक्षाणः समाधिशब्दं व्याचष्टे स त्विति । इन्द्रियेभ्यः प्रतीपमाहृतस्य क्वचिद्हृदयपुण्डरीकादिदेशे [आत्मनो निजौकसि] धारकेण प्रयत्नेन धार्यमाणस्य मनसः आत्मना यः संयोगः स एव तत्त्वबुभुत्साविशिष्टः तत्त्वमेव ज्ञास्यामीति दृढसङ्कल्पसहितो निद्राविक्षेपादिदोषैर्विनिर्मुक्तः 'समाधि'रिति कथ्यत इति भावः ॥ सति समाधौ किं भवतीत्यत आह—सति हीति । समाध्युदये इन्द्रियार्थेषु नैवोत्पद्यते बुद्धिः समाधिस्थस्येत्यर्थः ॥ सूत्रस्थाभ्यासशब्दार्थमाह–तदभ्यासेति । 'तस्य' समाधेः 'अभ्यासः' तद्विषयप्रयत्नोत्पादपौनःपुन्यम्–तस्मात् आदरनैरन्तर्यदीर्घकालसेवितात् तत्त्वज्ञानमुत्पद्यत इत्यर्थः ॥ ३८ ॥

आक्षेपसूत्रमवतारयति यदुक्तमिति । यदुक्तं सिद्धान्तिना तत्

(भा०)नोत्पद्यन्ते—इत्येतत्

(सू० ) "न, अर्थविशेषप्राबल्यात्" ॥ ३९ ॥

( भा० ) "अनिच्छतोऽपि बुद्ध्युत्पत्तेर्नैतद्युक्तम् । कस्मात् ? अर्थविशेषप्राबल्याद् । अबुभुत्समानस्यापि बुद्ध्युत्पत्तिर्दृष्टा, यथा स्तनयित्नुशब्दप्रभृतिषु । तत्र समाधिविशेषो नोपपद्यते" ॥ ३९ ॥

( सू० ) "क्षुदादिभिः प्रवर्त्तनाच्च" ॥ ४० ॥

( भा० )"क्षुत्पिपासाभ्यां शीतोष्णाभ्यां व्याधिभिश्चानिच्छतोऽपि बुद्धयः प्रवर्त्तन्ते । तस्मादैकाग्र्यानुपपत्तिरिति" ॥४०॥

---

(ख०)'एतत्' नेति सूत्रेण सम्बन्धः ।

तत्राक्षेपसूत्रम् नार्थेति । यदुक्तं तन्न—कस्मात्—'अर्थविशेषप्राबल्यात्' । अर्थविशेषाणाम्प्राबल्यात् प्रबलैरिन्द्रियविषयैरपहृतमनसो धारणा नैव सम्भवति, तथा च समाध्यभ्यासाभावात् न तत्त्वसाक्षात्कार इति सूत्रार्थः ।

सूत्रार्थमाह—अनिच्छत इति । यद्यपि समाधिस्थः पुरुषो नेच्छतीन्द्रियार्थज्ञानं तथापि प्रबलास्तेऽर्था उत्पादयन्त्येव स्वज्ञानमतो यदुक्तं 'इन्द्रियार्थेषु बुद्धयो नोत्पद्यन्त' इति तदयुक्तम् । कस्मादयुक्तमिति पृच्छति कस्मादिति । तत्रोत्तरम् अर्थेति । अनिच्छतोऽपि पुरुषस्य ज्ञानोत्पत्तिर्दृश्यते मेघगर्जितश्रवणादिषु । तथा च इन्द्रियार्थज्ञानान्यनिवार्याण्येवेति नैव सम्भवति समाध्युत्कर्ष इत्याह तत्रेति ॥ ३९ ॥

अनिच्छतोऽपि बुद्ध्युत्पत्तेर्दृष्टान्तान्तराण्याह—क्षुदादिभिरिति सूत्रम् ।

सूत्रार्थमाह क्षुत्पिपासाभ्यामिति । याः सर्वा दुःखोत्पादिका बुद्धयस्ताः पुरुषस्यानिच्छयैवोत्पद्यन्ते । उपसंहरति तस्मादिति । समाधिस्थस्य पुरुषस्य इच्छां विनाऽपि ज्ञानान्युत्पद्येरन्नेव ततश्च तस्यैकाग्रयरूपः समाध्युत्कर्षो नैव सम्भवतीत्यर्थः ॥ ४० ॥

( भा० ) अस्त्वेतत्समाधिं विहाय व्युत्थानं, व्युत्थाननिमित्तं समाधिप्रत्यनीकं च, सति त्वेतस्मिन्—

( सू० ) पूर्वकृतफलानुबन्धात्तदुत्पत्तिः ॥ ४१ ॥

( भा० ) पूर्वकृतो—जन्मान्तरोपचितस्तत्त्वज्ञानहेतुर्धर्मप्रविवेकः। फलानुबन्धो—योगाभ्याससामर्थ्यम्। निष्फले ह्यभ्यासे नाभ्यासमाद्रियेरन्। दृष्टं हि लौकिकेषु कर्मस्वभ्याससामर्थ्यम् ॥४१॥

---

(ख०) समाधानसूत्रमवतारयति अस्त्वेतदिति। समाधिहानिस्तन्निमित्तको विक्षेपो भवतीत्येतन्न प्रतिषिध्यते सत्स्वप्येतेषु 'तदुत्पत्तिः' इति सूत्रेण सम्बन्धः।

सिद्धान्तमाह पूर्वकृतेति। 'पूर्वकृतः' पूर्वशरीराभ्यस्तः समाधिः—तस्य फलम्, धर्माख्यः संस्कारविशेषः, तस्य 'अनुवन्धः' स्थेमा–तस्मात्–'तस्य' समाध्युत्कर्षस्य 'उत्पत्तिः' भवत्येवेति शेषः॥

सूत्रं व्याचक्षाणः पूर्वकृतशब्दस्यार्थमाह—पूर्वकृत इति। धर्मप्रविवेक इति। प्रविविच्यते विशिष्यत इति 'प्रविवेकः' प्रकृष्टः संस्कारः। धर्मश्चासौ प्रविवेकश्चेति 'धर्मप्रविवेकः'॥ फलानुबन्धशब्दार्थमाह फलानुबन्ध इति॥ कस्मात् पुनरदृश्यमानः संस्कारः कल्प्यत इत्यत आह निष्फल इति। प्रयत्नविशेषा हि प्रतिक्षणप्रध्वंसशीला बहवोऽपि परस्परमसहभवन्तो न तत्त्वसाक्षात्काराय पर्याप्ता इति तज्जनिताः संस्काराः कल्पन्ते—तेषां च स्थेम्ना सम्भवत्येव सम्भूयकारितेत्यर्थः। उक्तेऽर्थे दृष्टमुपोद्बलकमाह दृष्टमिति। पुनः पुनरभ्यस्तं हि कर्म फलं जनयत्येवेति लौकिकेऽपि व्यवहारे दृष्टमेव—तेनानुमीयतेऽलौकिकेऽपि समाध्यादावभ्यासेन फलोत्पत्तिनिश्चयस्तद्दार्ढ्यं चेत्यर्थः॥ ४१॥

( भा० ) प्रत्यनीकपरिहारार्थं च—

(सू०) अरण्यगुहापुलिनादिषु योगाभ्यासोपदेशः ॥४२॥

( भा०) योगाभ्यासजनितो धर्मो जन्मान्तरेऽप्यनुवर्तते । प्रचयकाष्ठागते तत्त्वज्ञानहेतौ धर्मे प्रकृष्टायां समाधिभावनायां तत्त्वज्ञानमुत्पद्यत इति । दृष्टश्च समाधिनाऽर्थविशेषप्राबल्याभि-

---

(ख०) ननु भवतु समाध्यभ्यासेन तदुत्कर्षः रागादयस्तु तत्प्रत्यनीका वर्त्तन्त एव ते च प्रतिबध्नन्त्येव समाध्युत्कर्षमित्यत आह प्रत्यनीकेति । प्रत्यनीकानां निवारणायैव 'योगाभ्यासोपदेश' इति सूत्रेण सम्बन्धः ॥

प्रत्यनीकपरिहारोपायमाह अरण्येति सूत्रम् । समाधिविघ्नदूरीकरणायैव अरण्यादिषु विविक्तेषु देशेषु योगोऽभ्यसनीय इति शास्त्रोपदेश इत्यर्थः ।

सूत्रस्य तात्पर्यं व्याचक्षाणः उपदिष्टप्रकारेण योगाभ्यासेन किं साध्यत इत्याह योगाभ्यासेति । विघ्नेभ्यो रक्षायै एव विविक्तेषु स्थानेषु योगाभ्यासः कर्त्तव्य इति शास्त्रोपदेशः । तदनुसारेण योगाभ्यासे कृते सति तदभ्यासेनात्मनि धर्माख्यः संस्कारो जन्यते—स चाफलोदयमात्मानमागामिष्वपि जन्मान्तरेष्वनुवर्त्तते । अनेनैव धर्मेणान्ततो गत्वा तत्त्वज्ञानं जन्यते । यदा चायं धर्मः प्रचयस्य परां काष्ठां प्राप्नोति तदा तत्सहकारी समाधिप्रयत्नोप्युत्कृष्टां दशामवगाहते—तदैव च तत्त्वज्ञानमुत्पद्यत इत्यर्थः । उक्तेऽर्थे लौकिकानुभवं प्रमाणयति दृष्टश्चेति । लौकिकानुभवेऽपि यदैकाग्रेण मन एकस्मिन् कस्मिंश्चिद्विषये निवेश्यते तदा प्रबला अप्यन्ये विषया इन्द्रियेण संयुक्ता अपि न गृह्यन्ते—तथाहि कस्यचिद्दर्शनग्रन्थस्यातिकठिनपङ्क्तिसंलापनलग्नचित्तः परेण किञ्चिदुक्तस्तदुत्तरमदत्वा

(भा०) भवः—नाहमेतदश्रौषं नाहमेतदज्ञासिषमन्यत्र मे मनोऽभूदित्याह लौकिक–इति ॥ ४२ ॥

( भा० ) "यद्यर्थविशेषप्राबल्यादनिच्छतोऽपि बुद्ध्युत्पत्तिरनुज्ञायते—

( सू० )"अपवर्गेऽप्येवं प्रसङ्गः ॥ ४३ ॥

( भा० ) "मुक्तस्यापि बाह्यार्थसामर्थ्याद् बुद्धय उत्पद्येरन्निति" ॥ ४३ ॥

(सू०) न, निष्पन्नावश्यम्भावित्वात् ॥ ४४ ॥

---

(ख०)तद्वक्त्रोपालब्धः 'कथम्मद्वचनं तिरस्करोष्युत्तरं न ददासीति' सखेदं कथयति 'भवदुक्तं नाहमश्रौषम्—नाज्ञासिषं किं भवानुक्तवान्–यतो मे मनोन्यस्मिन् विषये लग्नमभूदिति' ॥ ४२ ॥

ननु भवदुक्तेरयमाशयः प्रतिभाति यत्तत्त्वतोऽनिच्छतोऽप्युत्पद्यन्त एव बुद्धयः केवलप्रबलेन समाधिना तास्तिरस्कृता एव वर्त्तमानाः पुरुषस्य विक्षेपं न जनयन्तीति । एवं सत्यभ्यनुज्ञायत एव भवताऽप्यनिच्छतोऽपि बुद्ध्युत्पत्तिः—तथाच सत्यपवर्गेऽप्यर्थविशेषस्य प्राबल्यादुत्पद्येरन्नेव बुद्धयः इत्यपवर्गानुपपत्तिरेवेति शङ्कते पूर्वपक्षी यद्यर्थेति ।

अस्मिन्नेवार्थे सूत्रम् अपवर्ग इति । तदर्थमाह मुक्तस्यापीति । मुक्तस्यापि बाह्यविषयोपनिपातो विद्यत एवेति बुद्ध्युत्पादप्रसङ्गः । स खल्वयमीदृशो बाह्यार्थस्य महिमा यत इन्द्रियाद्यनपेक्षादेवात्मनो बुद्धिर्जनिष्यत इत्यभिमानः पूर्वपक्षिणः ॥ ४३ ॥

पूर्वपक्षोक्तस्योत्तरे सिद्धान्तसूत्रम् न निष्पन्नेति । यदुक्तं पूर्वपक्षिणा तन्न–कस्मात्–यस्मात् 'निष्पन्ने' पूर्वकर्मवशादुत्पादिते एव शरीरे विषयैर्ज्ञानोत्पत्तिरवश्यम्भाविनीति सम्बन्धः । सत्येव चेष्टाद्याश्रये

( भा० ) कर्मवशान्निष्पन्ने शरीरे चेष्टेन्द्रियार्थाश्रये निमित्तभावादवश्यम्भावी बुद्धीनामुत्पादः । न च प्रबलोऽपि सन् बाह्योऽर्थ आत्मनो बुद्ध्युत्पादे समर्थो भवति। तस्येन्द्रियेण संयोगाद् बुद्ध्युत्पादे सामर्थ्यं दृष्टमिति ॥ ४४ ॥

( सू० ) तदभावश्चापवर्गे ॥ ४५ ॥

( भा० ) तस्य बुद्धिनिमित्ताश्रयस्य शरीरेन्द्रियस्य धर्माधर्माभावादभावोऽपवर्गे । तत्र यदुक्तमपवर्गेऽप्येवं प्रसङ्ग इति

---

(ख०) शरीरे बाह्यविषया ज्ञानकरणं भवन्ति नान्यथेति सूत्राशयः ।

सूत्रार्थमाह कर्मवशादिति । आत्मनः प्राक्तनकर्मवशादेव तस्य शरीरमुत्पद्यते—यत्तस्य चेष्टानामिन्द्रियाणामर्थानां चाश्रयो भवति । एवम्भूतमेव च शरीरं तस्य ज्ञानानां निमित्तं भवतीत्यर्थः । ततः किमायातम्प्रकृत इत्यत आह न चेति । एवं च सति यदाऽपवर्गे-शरीरेन्द्रियादिविनिर्मुक्तो भवत्यात्मा तदा प्रबलोप्यर्थो न तस्य ज्ञानमुत्पादयितुमलमित्यर्थः । तत्र हेतुमाह तस्येति । अर्था इन्द्रियेण संयुज्यैवात्मनो ज्ञानं जनयन्ति नान्यथेत्यर्थः ॥ ४४ ॥

ननु भवत्वेवमेव सामर्थ्यमर्थानाम् । तथाऽप्यपवर्गे बुद्ध्युत्पाद-प्रसङ्गस्तदवस्थ एवेत्यत आह तदभाव इति सूत्रम् । 'अपवर्गे' 'तस्य' बुद्धिकारणस्य शरीरादेः—'अभावः'—तस्मान्न तत्र बुद्ध्युत्पादप्रसङ्ग इत्यर्थः ।

सूत्रार्थमाह तस्येति । धर्माधर्मावेव शरीरेन्द्रियोत्पत्तिकारणम्—अपवर्गे च धर्माधर्मौ प्रक्षीणावेव तिष्ठतः—अतः कारणस्य धर्माधर्मादेः—अभावात् तत्कार्यस्य शरीरेन्द्रियादेरप्यभाव एव—शरीरेन्द्रियमेव च बुद्ध्युत्पादनिमित्ताश्रयीभूतम्- अतोऽपवर्गे निमित्तभूतस्य शरीरादेरेवा-

(भा०) तदयुक्तम् । तस्मात्सर्वदुःखविमोक्षोऽपवर्गः । यस्मात्सर्वदुःखबीजं सर्वदुःखायतनं चापवर्ग विच्छिद्यते, तस्मात्सर्वेण दुःखेन विमुक्तिरपवर्गः । न निर्बीजं निरायतनं च दुःखमुत्पद्यत—इति ॥ ४५ ॥

(सू०) तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः ॥४६॥

(भा०) तस्यापवर्गस्याधिगमाय यमनियमाभ्यामात्मसंस्कारः । यमः—समानमाश्रमिणां धर्मसाधनम् । नियमस्तु वि-

---

(ख०) भावात् बुद्ध्युत्पादो न सम्भवतीत्यर्थः ।

मुक्तस्य शरीराभावे प्रमाणान्तरमाह तस्मादिति । उक्तादेव हेतोः सर्वदुःखविमोक्षोऽपवर्ग इति वर्ण्यते । स्वाशयं विवृणोति यस्मादिति । शरीरमेव सर्वदुःखबीजं सर्वदुःखायतनं च—यस्माच्चैतदपवर्गे नास्ति न च बीजस्यायतनस्याभावे दुःखोत्पत्तिसम्भव इति—तस्मादेव कारणादपवर्गः सर्वदुःखविमोक्ष इति वर्ण्यते । अपवर्गे सर्वदुःखविमुक्तिप्रसिद्धिः शरीरेन्द्रियादिराहित्यमूलिकैवेत्याशयः ॥ ४५ ॥

न केवलं समाधिविशेष एव तत्त्वज्ञानस्यापवर्गस्य वा साधनम् अपि तु साधनान्तराण्यपि तस्य सन्तीति तानि साधनान्तराण्याह तदर्थमिति सूत्रम् । 'तदर्थम्' अपवर्गार्थम् 'यमनियमाभ्याम्'—'योगात्' योगशास्त्रप्रतिपाद्यैः 'अध्यात्मविध्युपायैः च'—'आत्मसंस्कारः' कर्तव्य इति शेषः ।

सूत्रार्थं वर्णयति तस्येति । यमनियमाभ्यां संपादित आत्मनः संस्कारोऽपवर्गसाधनमिति सूत्रप्रथमवाक्यार्थः । यमनियमयोर्भेदमाह यम इति । तथाच भगवान् पतञ्जलिः—अहिंसा सत्यमस्तेयं ब्रह्मचर्याप-

(भा०) शिष्टम् । आत्मसंस्कारः पुनरधर्महानं धर्मोपचयश्च । योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्यः । स पुनस्तपः प्राणायामः प्रत्याहारो ध्यानं धारणेति । इन्द्रियविषयेषु प्रसंख्यानाभ्यासो रागद्वेषप्रहाणार्थः । उपायस्तु योगाचारविधानमिति ॥ ४६ ॥

---

(ख०)रिग्रहा यमा–इति शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमा इति । अत्र च हिंसादयः सर्वेषामाश्रमिणां धर्मसाधनम्भवन्ति शौचादयस्तु न सर्वेषां साधारणा अपि तु प्रत्येकमाश्रमाणां विशिष्य विहिताः–तद्यथा स्वाध्यायो ब्रह्मचारिणस्तपो विशेषतस्तृतीयाश्रमस्येत्येवमन्यदपीत्यर्थः । आत्मसंस्कारशब्दार्थमाह आत्मसंस्कार इति । आत्मनोऽधर्मस्य नाशो धर्मस्य प्रचयस्ताभ्यां चापवर्गक्षमतेति भावः ।

योगाच्चाध्यात्मविध्युपायैरात्मसंस्कारः कर्त्तव्य इति द्वितीयं सूत्रवाक्यम्-तद्व्याचष्टे योगेति । 'योगात्' इत्यस्यार्थः 'योगशास्त्रप्रतिपाद्यैरिति' । कश्चासावध्यात्मविधिर्यो योगशास्त्रात्प्रतिपत्तव्य इत्याह स पुनरिति । तपः–प्राणायामः–प्रत्याहारो–ध्यानं–धारणेत्येतत्सर्वमेवात्राध्यात्मविधिशब्देन विवक्षितमित्यर्थः ।

किमर्थमेषोऽध्यात्मविधिरात्मसंस्कारं करोतीत्याह इन्द्रियेति । तपःप्राणायामादिभिरिन्द्रियार्थपरित्यागस्याभ्यासो दृढीक्रियते तेन च रागद्वेषौ प्रहीणौ भवतः प्रहीणरागद्वेषश्चात्माऽपवर्गक्षमो भवतीत्याशयः । सूत्रस्थोपायशब्दार्थमाह उपाय इति । योगाचारपदेन चात्र 'एकाकिता' आहारविशेषः-'एकत्रानवस्थानम्' इत्यादियतिधर्मोक्तं सर्वमभिप्रेतम् । एतदपि सर्वं तत्त्वज्ञानक्रमोत्पादक्रमेणात्मसंस्कारं सम्पाद्यापवर्गं साधयतीत्यर्थः ॥ ४६ ॥

ननु यद्द्वयमेव तत्त्वज्ञानोत्पादक्रमेणापवर्गोपायः कृतं तत्स्याम्वी-

(सू०) ज्ञानग्रहणाभ्यासस्तद्विद्यैश्च सह संवादः ॥४७॥

(भा०) तदर्थमिति प्रकृतम्। ज्ञायतेऽनेनेति ज्ञानमात्मविद्याशास्त्रं, तस्य ग्रहणमध्ययनधारणे। अभ्यासः सततक्रियाऽध्ययनश्रवणचिन्तनानि। तद्विद्यैश्च सह संवाद इति प्रज्ञापरिपाकार्थम्। परिपाकस्तु संशयच्छेदनमविज्ञातार्थबोधोऽध्यवसिताभ्यनुज्ञानमिति। समाय वादः—संवादः ॥ ४७ ॥

---

(ख०) क्षिक्येत्यत आह ज्ञानग्रहणेति सूत्रम्।

सूत्रार्थमाह तदर्थमितीति। तदर्थमिति पूर्वसूत्रादनुवर्त्तनीयम्। एवं च अपवर्गार्थं पूर्वसूत्रोक्तादन्यदप्यपेक्षितमित्याशयः। सूत्रस्थज्ञानग्रहणाभ्यासपदं व्याचष्टे ज्ञायत इति। ज्ञायतेऽनेनेति व्युत्पत्त्या ज्ञानपदेनात्र आत्मविद्या आन्विक्षिक्येवाभिप्रेता तस्य—'ग्रहणम्' अध्ययनं धारणं च—तस्य ग्रहणस्य 'अभ्यासः' सततक्रिया, तत्र प्रयत्न इत्यर्थः। एवं चान्वीक्षिकीशास्त्रस्य अध्ययनं श्रवणं चिन्तनं चापवर्गसाधनमिति। फलितमाह अध्ययनेति। एवं साधनान्तरमुक्त्वाऽपरमाह तद्विद्यैरिति। आन्वीक्षिकीविद्याविचक्षणैः सह शास्त्रविचारोऽपि साधनमपेक्षितम्। उक्तस्य संवादस्य प्रयोजनमाह प्रज्ञेति। 'प्रज्ञा' ज्ञानम्—तस्य 'परिपाकः' एव संवादस्य प्रयोजनमित्यर्थः। प्रज्ञापरिपाक इत्यत्र परिपाकशब्दस्यार्थमाह परिपाकस्त्विति। किं देहाद्यतिरिक्त आत्मोत नेति 'संशय'स्तस्य छेदनं निरासः 'अविज्ञातस्य' विशेषेणाज्ञातस्य 'अर्थस्य' 'बोधः' ज्ञानम्—'अध्यवसितस्य' प्रमाणेन सामान्यतो ज्ञातस्य 'अभ्यनुज्ञानम्' तर्केण परीक्ष्याभ्युपगमनम्—इत्येतत्त्रयमपि प्रज्ञापरिपाकपदेन विवक्षितमुक्तस्य संवादस्य प्रयोजनमिति भावः। संवादशब्दस्य व्युत्पत्तिमाह—समायेति। 'समाय' अनुमत्यर्थः 'वादः' तत्त्वबुभुत्सया कथाप्रवर्त्तनमित्यर्थः ॥४७॥

( भा० ) तद्विद्यैश्च सह संवाद इत्यविभक्तार्थं वचनं विभज्यते—

( सू० ) तं शिष्यगुरुसब्रह्मचारिविशिष्टश्रेयोऽर्थिभिरनसूयिभिरभ्युपेयात् ॥ ४८ ॥

( भा० ) एतन्निगदेनैव नीतार्थमिति ॥ ४८ ॥

---

(ख०)संवादपदार्थनिरूपणपरं सूत्रमवतारयति तद्विद्यैरिति । 'अविभक्तार्थमिति' अपरिस्फुटार्थमित्यर्थः । विभज्यत इति विशिष्य वर्ण्यत इत्यर्थः ॥

संवादपदार्थं विशिनष्टि तं शिष्येति सूत्रम् । 'सब्रह्मचारी' सहाध्यायी–'विशिष्टः' गुरुशिष्यसहाध्यायिभ्योऽन्यः शास्त्रेणानुशिष्टः–'श्रेयोऽर्थिनः' संवादोत्सुकस्य जिज्ञासोः 'श्रेयः' कल्याणम् 'अर्थयन्ते' अभिलषन्ति ये ते–अथवा श्रेयसि मोक्षलक्षणे श्रद्धावन्त इति । सर्वेषामेतेषां विशेषणम् 'अनसूयिभिरिति' । ये जिज्ञासोरपवर्गप्रयत्नानुष्ठानसम्पत्तावेर्ष्यां न भजन्ते तैरेव शिष्यादिभिः–'तं' संवादम् 'अभ्युपेयात्' कुर्यादित्यर्थः । तदनेन शिष्यादिभिर्वादं कृत्वा तत्त्वनिर्णयः कर्त्तव्य इत्युक्तं भवति ।

वृत्तिकारस्तु तमितिपदं तद्विद्यमिति व्याख्याय–शिष्यादिसाहाय्येन तद्विद्यं जानीयादित्येव सूत्रार्थं वर्णितवान् । तात्पर्यकृतस्तु 'अभ्युपेयात्' इत्येतस्य अभिमुखमुपेत्य जानीयादित्यर्थं वर्णयित्वाप्यग्रे 'गुर्वादिभिर्वादं कृत्वे'त्युक्त्वाऽस्माभिरुक्तमेवार्थमनुमोदयन्त इव प्रतिभान्ति ॥ वृत्तिकृतस्तु व्याख्याने सूत्रे तृतीयान्तपदयोः सम्बन्धस्य दुःखबोधत्वात्प्रकृताननुगुणत्वाच्च–'शिष्यादिभिः संवादं कुर्यादि'त्येवार्थः सम्यक् प्रतिभातीति सुधिय एवात्र प्रमाणम् । भाष्यकारस्तु सूत्रार्थं निगदेनैव 'नीतार्थम्' गतार्थमित्येतावदेवोक्तवान् ॥ ४८ ॥

(भा०) यदिदं मन्येत—"पक्षप्रतिपक्षपरिग्रहः प्रतिकूलः परस्येति"—

(सू०) प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे ॥४९॥

(भा०) तमभ्युपेयादिति वर्तते । परतः प्रज्ञामुपादित्समानस्तत्त्वबुभुत्साप्रकाशनेन स्वपक्षमनवस्थापयन् स्वदर्शनं परिशोधयेदिति । अन्योन्यप्रत्यनीकानि च प्रावादुकानां दर्शनानि ॥ ४९ ॥

---

(ख०) आक्षेपमवतारयति यदिदमिति । आक्षेपमाह पक्षेति । पक्षस्य परिग्रहः प्रतिपक्षस्य निरास इत्येवंरूप एव 'संवादो'ऽभिप्रेतः—स च 'परस्य' गुरुशिष्यादेः 'प्रतिकूलः' खेदकर एवेत्यनुचित इव प्रतिभातीत्याक्षेपाशयः ।

आक्षेपनिवारणं सूत्रम् प्रतिपक्षेति । 'अर्थित्वे' तत्त्वबुभुत्सायां सत्याम्—'प्रयोजनार्थम्' तत्त्वनिर्णयार्थम् 'प्रतिपक्षहीनम्' प्रतिकूलपक्षहीनं यथा स्यात्तथा अभ्युपेयादित्यर्थः ।

तदर्थं व्याचष्टे तमिति । वर्तत इति पूर्वसूत्रादनुवर्त्तते इत्यर्थः । एवं च प्रतिपक्षहीनमपि वा प्रयोजनार्थमर्थित्वे तमभ्युपेयादित्येवं पूर्णं सूत्रं सम्पन्नमित्यर्थः ।

फलितमुपदेशार्थमाह परत इति । 'परतो' गुर्वादेः प्रज्ञाम् उपादित्समानः—'तत्त्वबुभुत्साप्रकाशनेनात्मनः शरीरादिभ्यो भेदं बुभुत्से' इत्यभिदधानः—'स्वपक्षमनवस्थापयन्' स्वपक्षसाधनहेतूनाग्रहपुरस्सरमनुपन्यस्यन्नेव—'स्वदर्शनं' गुर्वादिकृताद् विचारात्पूर्वपक्षोच्छेदेन सिद्धान्तव्यवस्थापनेन च 'परिशोधयेत्'—अन्योन्याविरुद्धानि च प्रावादुकानां मतान्ययुक्तपरित्यागेन युक्तपरिग्रहेण च परिशोधयेदित्यर्थः ॥४९॥

( ६ ) तत्त्वज्ञानपरिपालनप्रकरणम् ।

( भा० ) स्वपक्षरागेण चैके न्यायमतिवर्तन्ते । तत्र—

(सू०)तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत् ॥ ५० ॥

( भा० ) अनुत्पन्नतत्त्वज्ञानानामप्रहीणदोषाणां तदर्थं घटमानानामेतदिति ॥ ५० ॥

---

(ख०) ननु यदि तत्त्वविनिर्णयायोक्तप्रकार एव वादोऽपेक्षितस्तर्हि निष्प्रयोजने जल्पवितण्डे दत्तजलाञ्जली एवेत्यतो जल्पवितण्डाप्रयोजननिरूपकम्प्रकरणमारभ्यते ।

जल्पवितण्डयोः प्रयोजननिरूपकं सूत्रमवतारयति स्वपक्षेति । अनुसूयिभ्यो गुरुशिष्यादिभ्योऽन्ये बहवो वादिनो भवन्ति ये तत्त्वबुभुत्सामात्रेण कथायां न प्रवर्त्तन्तेऽपि तु विजिगीषादिप्रयुक्ता एव सन्तः सद्विचारनियममप्रतिपालयन्तो दुस्तर्कादिकमपि प्रयुञ्जत इत्यर्थः । एवंविधे चावसरे जल्पवितण्डे अपि प्रयोक्तव्ये भवत इत्यर्थः ।

जल्पवितण्डाप्रयोजनमाह—तत्त्वेति सूत्रम् । यथाऽन्यत्रानुपादेयान्यपि कण्टकशाखावरणादीनि क्षेत्ररक्षणार्थमपेक्ष्यन्त एव—तथैवानुचिते अपि जल्पवितण्डे तत्त्वज्ञानसंरक्षणायापेक्ष्येते एवेति सूत्रार्थः ।

सूत्रार्थं सुगममनुक्त्वैव तत्र विशेषमाह—अनुत्पन्नेति । यैरद्यत्वेपि तत्त्वज्ञानं नासादितं ये चाधुना तदासादनाय यतमाना एव वर्त्तन्ते तेषामेव स्वपक्षरक्षार्थं जल्पवितण्डे आश्रयणीये न पुनः परिपक्वतत्त्वज्ञानानामित्याशयः ॥ ५० ॥

( भा० ) विद्यानिर्वेदादिभिश्च परेणावज्ञायमानस्य—

(सू०) ताभ्यां विगृह्य कथनम् ॥ ५१ ॥

( भा० ) विगृह्येति विजिगीषया, न तत्त्वबुभुत्सयेति । तदेतद्विद्यापालनार्थं न लाभपूजाख्यात्यर्थमिति ॥ ५१ ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये चतुर्थोऽध्यायः समाप्तः ॥ ४ ॥

---

(ख०) न केवलं तत्त्वज्ञानार्थं यतमानानामेव जल्पवितण्डाश्रयणमपि त्वन्यस्यापीत्येतत्तात्पर्यकं सूत्रमवतारयति विद्येति । अवज्ञायमानस्य कथनमिति सूत्रेणान्वयः । ताभ्यामिति सूत्रम् ॥ तदर्थमाह विगृह्येतीति । यस्तु 'विद्यया' स्वदर्शनविलसितमिथ्याज्ञानावलेपदुर्विदग्धतया—'निर्वेदेन' सद्विद्यावैराग्याद्वा कारणान्तरेण वा लाभपूजाख्यात्याद्यभिलाषादिना कुहेतुभिः ईश्वराणां पुरतो वेदब्राह्मणपरलोकादिदूषणप्रवृत्तः—तम्प्रति वादी अप्रतिभया समीचीनमुत्तरमपश्यन्—'विगृह्य' विजिगीषया, न पुनः सुहृद्बुद्ध्या, विवादमुद्भाव्य—'ताभ्याम्' जल्पवितण्डाभ्याम्—तत्त्वस्य 'कथनं' कुर्यात् । तत्र प्रयोजनमाह तदेतदिति । मा भूदीश्वराणामतिविभ्रमेण तच्चरितमनुवर्तिनीनां प्रजानां धर्मविप्लव इतीदमेवादृष्टं प्रयोजनं जल्पवितण्डयोः न लाभपूजादि दृष्टमित्याशयः॥५१॥

इति खद्योते चतुर्थाध्याये द्वितीयं स्फुरणम् ।

---

अथ पञ्चमाध्यायस्याऽऽद्यमाह्निकम् ॥

( १ ) सत्प्रतिपक्षदेशनाभासप्रकरणम् ।

( भा० ) साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पा-

---

## अथ पञ्चमोऽध्यायः ।

### प्रथमाह्निकम् ।

(ख०)पञ्चमाध्यायस्यास्य विषयसङ्गत्यादावाक्षेपः परैः कृतः । प्रथमाध्याये प्रथमे सूत्रे शास्त्रपदार्थानामुद्देशः—अवशिष्टे तदध्याये तेषां लक्षणम्—द्वितीयमारभ्य चतुर्थाध्यायपर्यन्तम्परीक्षा वृत्ता । अतः पुनर्लक्षणाभिधानस्य नास्त्यवसरः—लक्षणमेव चाध्यायार्थः इति बोधासिद्धावुदयनाचार्याः । अतोऽस्मिन्नध्याये यद्वर्णितं तस्य प्रथम एवाध्यायेऽवसरः समुचित आसीदिति । समाहितश्चायमाक्षेपस्तात्पर्यकृता । यद्यपि जातिनिग्रहस्थानभेदा जातिनिग्रहस्थानसामान्यलक्षणानन्तरं प्रथमेऽध्याये युक्ता लक्षयितुम्-तथाऽप्येषां बहुत्वात् प्रमेयपरीक्षायां विलम्बो मा भूद्—अपेक्षिता चासौ शिष्यैः । संशयादिपरीक्षां तु विना प्रमेयपरीक्षा न शक्यते । तस्मान्मुनिः शिष्यानुरोधेन परीक्षामेव तावद्वर्त्तयाम्बभूव द्वितीयादिषु त्रिष्वध्यायेषु । तदनन्तरमवशिष्टं जातिनिग्रहस्थानविशेषलक्षणमधुना पञ्चमे वर्त्तयति ।

समाधानान्तरं च तत्रैवोक्तम् । चतुर्थाध्यायसमाप्तौ जल्पवितण्डापरीक्षा वृत्ता—तदनन्तरं तदङ्गभूते जातिनिग्रहस्थाने युक्ते एव लक्षयितुमित्यवान्तरसङ्गतिरस्त्येवेति सर्वमवदातम् ॥

चतुर्विंशतिजातयः षोडशवर्गेषु विभक्ताः प्राचीनैः । एतत्षोडशधाविभागानुसार्येवाद्यानि षोडश प्रकरणानीत्यवधेयम् ।

अथ प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्च । तत्किमपरमवशिष्यते यदर्थं पञ्चमोऽध्याय आरभ्यते इत्यत आह साधर्म्ये-

(भा०) ज्जातिबहुत्वमिति सङ्क्षेपेणोक्तम् । तद्विस्तरेण विभज्यते। ताः खल्विमा जातयः स्थापनाहेतौ प्रयुक्ते चतुर्विंशतिः प्रतिषेधहेतवः—

(सू०) साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमाः ॥ १ ॥

(भा०) साधर्म्येण प्रत्यवस्थानमविशिष्यमाणं स्थापनाहे-

---

(ख०)ति । प्रथमाध्यायद्वितीयाह्निकस्थाष्टादशसूत्रे यदुक्तं तदतिसंक्षिप्तम्, तस्य विस्तरशो निरूपणं कर्त्तव्यमित्येवात्र पुनरारम्भ इत्यर्थः । जातेः सामान्यतः स्वरूपमाह ताः खल्विति । कस्याचित् पक्षस्य स्थापनाहेतौ वादिना प्रयुक्ते यो हेतुः तत्त्वतः प्रतिषेधासमर्थोऽपि प्रतिवादिना प्रतिषेधबुद्ध्या प्रयुज्यते स एव जातिपदार्थ इत्यर्थः । जातीनां संख्यामाह चतुर्विंशतिरिति । जातेः प्रयोगः समर्थितो वार्त्तिककृता । यदा प्रतिवादी वादिना प्रयुक्तं स्थापनाहेतुं साध्विति मन्यते लाभपूजाख्यातिकामस्तु जातिं प्रयुङ्क्ते—'कदाचिदयं जात्युत्तरेणाकुलीकृतो नोत्तरं प्रतिपद्यते उत्तराप्रतिपत्त्या च निगृह्यते ततश्च मे विजय एव स्यात् । जातेरनभिधाने तु मम पराजय एव स्यात् । पराजयाच्च वरमस्तु सन्देहोऽपीति' युक्त एव जातेः प्रयोगः ।

चतुर्विंशतिजातिपरिगणनपरं सूत्रं साधर्म्येति ।

सूत्रं व्याचष्टे साधर्म्येणेति । जातिनाम्नामन्ते समशब्दस्यार्थं विवृणोति अविशिष्यमाणमिति । यः प्रतिषेधहेतुः स्थापनाहेतुतः साध-

( भा० ) ततः साधर्म्यसमः । अविशेषं तत्र तत्रोदाहरिष्यामः । एवं वैधर्म्यसमप्रभृतयोऽपि निर्वक्तव्याः ॥ १ ॥

---

(ख०) र्म्येण 'अविशिष्यमाणः'—तेन 'साधर्म्यहेतुना' समः सन् 'साधर्म्यसम' इति कथ्यते । कश्चात्राविशेष उभयोर्हेत्वोरित्यपेक्षायामाह अविशेषमिति । प्रत्येकविधजात्युदाहरणे प्रदर्शयिष्यामः किं कुत्र समत्वं स्थापनाप्रतिषेधहेत्वोरित्यर्थः । उक्तमर्थं सर्वेषु जातिभेदेष्वतिदिशति एवमिति ।

अत्र 'सम'शब्दार्थो बहुधा व्याख्यातः । तद्यथा-(१)यद्यपि ममोत्तरं हेतुतो नोत्कृष्टतरं तथापि तेन समीकरिष्यामीतिप्रयोगः 'समः' तादर्थ्यात् तदभिप्रायपूर्वत्वाद्वेत्याचार्यः ( वार्तिककारः )—यदूचे 'समार्थः समीकरणार्थः प्रयोगो द्रष्टव्य' इति-एतेन बुद्धिपूर्वको जातिप्रयोगः साम्यापादनायेति सूचितम्भवति । यदि ह्ययं जात्युत्तरेणाकुलीकृतो निःप्रतिभःस्यात्—असद्वा ब्रूयात्—तदा मम निरनुयोज्यानुयोगवदेतस्यापि पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगो वा स्यादिति 'समौ' स्याव । अन्यथा त्वहमेवापकृष्टः स्यामिति बुद्धया प्रवृत्तेरिति । ( २ ) भाष्यकारस्तु प्रयोगगतं विशेषहेत्वभावं 'साम्य'माह । यदवोचत्—'साधर्म्येण प्रत्यवस्थानमविशिष्यमाणमिति' । यथाहि त्वदुपन्यस्तं साधर्म्यं तथा मदुक्तमपि—यथेदं वैधर्म्यं तथेदमपि-यथेदं तत्सहचरितमुपलब्धं तथेदमपि—इत्याकारेण जातिवादिनः प्रत्यवस्थानात् तेन प्रत्यवस्थानस्वरूपं सर्वजातिसाधारणं सूचितम् । एतच्च तत्र तत्र वक्ष्यते ॥ ( ३ ) अन्ये तु वक्तृधर्मं वचन उपचरन्ति । जातिवादी हि 'समः' साधारणः नोत्कृष्टोऽपकृष्टो वेत्यर्थः । स च साधर्म्याद्युत्तरद्वारैवोन्नीयत इति उत्तरमेव सममपकृष्टमित्यर्थः । तच्चापकृष्टमुत्तरं द्वेधा भवति-दूषणसमर्थमप्यसिद्धम् सिद्धमपि दूषणासमर्थम् ।

( भा० ) लक्षणं तु--

( सू० ) साधर्म्यवैधर्म्याभ्यामुपसंहारे तद्धर्मविपर्ययोपपत्तेः साधर्म्यवैधर्म्यसमौ ॥ २ ॥

( भा० ) साधर्म्येणोपसंहारे साध्यधर्मविपर्ययोपपत्तेः सा-

---

(ख०) प्रथममपि कल्पितदूष्यं यत् तच्छलमुक्तम्-अकल्पितदूष्यं तु केवलनिरनुयोज्यानुयोगो वक्ष्यते। शेषं जातिरिति। अनेन सामान्यलक्षणं सूचितं भवति। (४)उदयनाचार्यास्त्वेवम्-यज्जात्युत्तरं परसाधनमिव-स्वात्मानमपि व्याहन्तीत्यतः स्वपरसाम्यात् 'सम' मित्युच्यते। तथाच स्वात्मव्याघातकत्वं नाम सर्वसाधारणं दुष्टत्वमूलमस्य सूचितं भवति। एतच्च प्रत्युत्तरसूत्रे वक्ष्यते। एतदेव सर्वसाधारणसामर्थ्यम्। तदुपाधि-विशेषाः साधर्म्यादयः। एवं चान्वर्थसंज्ञानिरुक्तिरेवामीषां यद्यपि विशेषलक्षणम्, तथापि कारणादिप्रतिसन्धानाय पृथक्लक्षणारम्भः। ते हि प्रतिसंहिताः प्रतिदूषणाय प्रभवन्ति सदुत्तरापरिस्फूर्त्तौ जातिप्रयोगे चोपयोक्ष्यन्ते-इति ॥ १ ॥

जातिलक्षणसूत्राण्यवतारयति लक्षणं त्विति। साधर्म्यसम-वैधर्म्यसमयोर्जात्योर्लक्षणे आह-साधर्म्यवैधर्म्याभ्यामिति सूत्रम्। 'उपसंहारे' साध्यस्योपसंहरणे वादिना कृते-'तद्धर्मस्य' साध्यरूपधर्मस्य यो 'विपर्ययः' व्यतिरेकः-तस्य 'साधर्म्यवैधर्म्याभ्यां' केवलाभ्यां व्याप्त्यनपेक्षाभ्यां यदुपपादनं-ततो हेतोः साधर्म्यवैधर्म्यसमौ उच्येते। तदयमर्थः। वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिनः साधर्म्यमात्रप्रवृत्तहेतुना व्याप्त्यनपेक्षेण तदभावापादनं 'साधर्म्यसमः'-वैधर्म्यमात्रप्रवृत्तहेतुना तदभावापादनं 'वैधर्म्यसमः' इति ॥

सूत्रार्थंव्याचक्षाणः सम्पूर्णं साधर्म्यसमलक्षणमाह साधर्म्येणेति।

(भा०) धर्म्येणैव प्रत्यवस्थानमविशिष्यमाणं स्थापनाहेतुतः साधर्म्यसमः प्रतिषेधः । निदर्शनं 'क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगात् । द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान्, तथा चात्मा, तस्मात्क्रियावानिति' । एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते—'निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वाद् । विभु चाकाशं निष्क्रियं च, तथा चात्मा, तस्मान्निष्क्रिय इति' । न चास्ति

---

(ख०) साध्यधर्मविपर्ययोपपत्तेरिति । 'साध्यधर्मस्य विपर्ययः' तस्य 'उपपत्तिः' तदर्थम्—साध्यधर्मविपर्ययोपपत्त्यर्थमिति यावत् । तादर्थ्ये षष्ठयर्थः । प्रतिषेध इति पुल्लिङ्गपदप्रयोगः 'सम' इति पुंल्लिङ्गरूपोपपत्त्यर्थम् । बहुषु ग्रन्थेषु 'साधर्म्यसमा' 'वैधर्म्यसमा' इति स्त्रीलिङ्गरूपमेव दृश्यते तत्र जातिरित्येव लक्ष्यपदं ग्राह्यम् । अत्र चतस्रो जातयो भवन्ति (१) साधर्म्येणोपसंहारे साधर्म्येण प्रत्यवस्थानम् (२) साधर्म्येणोपसंहारे वैधर्म्येण प्रत्यवस्थानम् (३) वैधर्म्येणोपसंहारे वैधर्म्येण प्रत्यवस्थानम् (४) वैधर्म्येणोपसंहारे साधर्म्येण प्रत्यवस्थानमिति ॥

साधर्म्यसमस्योदाहरणमाह निदर्शनमिति ।। साधर्म्येणोपसंहारं प्रदर्शयति क्रियावानित्यारभ्य तस्मात् क्रियावानित्यन्तेन । वादिकृतः उपसंहारः क्रियाहेतुगुणयुक्तस्वरूपेण साधर्म्येण कृतः । अस्ति खल्वात्मनः क्रियाहेतुर्गुणः प्रयत्नोऽदृष्टं वा लोष्टस्यापि क्रियाहेतुर्गुणः स्पर्शवद्वेगद्द्रव्यसंयोग इति । एवं साधर्म्येणोपसंहारे वादिना कृते प्रतिवादिनः साधर्म्येणैव प्रत्यवस्थानं प्रदर्शयति निष्क्रिय आत्मेत्यारभ्य तस्मान्निष्क्रिय इत्यन्तेन । एतदपि साधर्म्येणैव विभुत्वरूपेण । उक्तोपसंहारप्रत्यवस्थानयोरविशिष्यमाणत्वं प्रदर्शयति न चास्तीति । उपसंहारे प्रत्यवस्थाने व्याप्त्यनुगमादिः कोपि विशेषो नास्ति येन एक

विशेषहेतुः-क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनरक्रियसाधर्म्याद् निष्क्रियेणेति । विशेषहेत्वभावात्साधर्म्यसमः प्रतिषेधो भवति ।

अथ वैधर्म्यसमः । 'क्रियाहेतुगुणयुक्तो लोष्टः परिच्छिन्नो दृष्टः । न च तथाऽऽत्मा । तस्मान्न लोष्टवत् क्रियावानिति' । न चास्ति विशेषहेतुः-क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनः क्रियावद्वैधर्म्यादक्रियेणेति । विशेषहेत्वभावाद्वैधर्म्यसमः ।

---

(ख०) एव प्रमाणीक्रियेत नान्य इत्यर्थः । एतदेव स्पष्टयति क्रियावदिति । यथा क्रियावता लोष्टेन साधर्म्यात् क्रियावानात्मा साध्यते तथैव निष्क्रियोऽपि साध्यते—न चात्र साधनद्वयस्य युक्तायुक्तत्वे कश्चिद्विशेष इत्यर्थः। क्रियावतेति निष्क्रियेणेति चात्मनेति शेषः । उपसंहरति विशेषेति । एकस्यान्यापेक्षया युक्ततरत्वेऽयुक्ततरत्वे वा यस्माद्विशेषः कश्चिन्नोपलभ्यते तस्मादयं साधर्म्यसमदृष्टान्तो भवतीत्यर्थः । अत्र साधर्म्येणोपसंहारे साधर्म्येणैव प्रत्यवस्थानम् । अत्रोदाहरणे वार्त्तिकारस्यारुचिः—यस्मादत्र स्थापनेमवासत् उत्तरं तु सदेव—एवमप्युक्तिदोषेणास्य जातित्वमित्याचार्याः ॥

वैधर्म्यसमस्योदाहरणमाह अथेति । अत्रापि 'उपसंहारः' स्थापना पूर्ववदेव, केवलं प्रत्यवस्थाने भेदः-तं दर्शयति क्रियाहेत्विति । पूर्वस्मिन् प्रत्यवस्थाने आकाशेन सह निष्क्रियत्वरूपसाधर्म्येणात्मनो निष्क्रियत्वं साधितमत्र तु परिच्छिन्नेन लोष्टेन सहापरिच्छिन्नत्वरूपवैधर्म्येणैव निष्क्रियत्वं साधितमिति भवत्ययं वैधर्म्यसमः प्रतिषेध इत्यर्थः । अत्रापि विशेषहेत्वभावं दर्शयति न चास्तीति । क्रियावता साधर्म्याद् यथाऽऽत्मनः क्रियावत्त्वं सिध्यति तथैव क्रियावता वैधर्म्येण निष्क्रियत्वमपीत्यर्थः ॥उपसंहरति विशेषेति । अत्र साधर्म्येणोपसंहारे

(भा०) वैधर्म्येण चोपसंहारे—निष्क्रिय आत्मा विभुत्वात्, क्रियावद्द्रव्यमविभु दृष्टं यथा लोष्टो—न च तथाऽऽत्मा—तस्मान्निष्क्रिय' इति । वैधर्म्येण प्रत्यवस्थानम्—'निष्क्रियं द्रव्यमाकाशं क्रियाहेतुगुणरहितं दृष्टम्—न तथाऽऽत्मा—तस्मान्न निष्क्रिय' इति । न चास्ति विशेषहेतुः—क्रियावद्वैधर्म्यान्निष्क्रियेण भवितव्यं न न पुनरक्रियवैधर्म्यात् क्रियावतेति । विशेषहेत्वभावाद्वैधर्म्यसमः ।

अथ साधर्म्यसमः—'क्रियावान् लोष्टः क्रियाहेतुगुणयुक्तो दृष्टः—तथा चाऽऽत्मा—तस्मात् क्रियावानिति' । न चास्ति विशेषहेतुः—क्रियावद्वैधर्म्यान्निष्क्रियो न पुनः क्रियावत्साधर्म्यात् क्रियावानिति । विशेषहेत्वभावात्साधर्म्यसमः ॥ २ ॥

---

(ख०) वैधर्म्येण प्रत्यवस्थानम् ॥

वैधर्म्येणोपसंहारे वैधर्म्येण प्रत्यवस्थानम् द्वितीयं वैधर्म्यसममुदाहरति वैधर्म्येणेति । आत्मा विभुः लोष्टः परिच्छिन्नोऽविभुः—तस्माल्लोष्टवत् क्रियावान्न भवत्यात्मेति प्रत्यवस्थानस्वरूपम् । अत्र वैधर्म्येणैव प्रत्यवस्थानम् । आकाशं क्रियाहेतुगुणरहितं निष्क्रियम्—आत्मा तु क्रियाहेतुसहितोऽतो न निष्क्रिय इति । विशेषहेत्वभावं दर्शयति न चेति । उपसंहरति विशेषेति ॥

वैधर्म्येणोपसंहारे साधर्म्येण प्रत्यवस्थानरूपं तृतीयसाधर्म्यसममुदाहरति अथ साधर्म्यसम इति । लोष्टः क्रियाहेतुगुणयुक्तोऽथ च क्रियावान्—आत्मा च क्रियाहेतुगुणयुक्तोऽतोऽयमपि क्रियावानिति प्रत्यवस्थानं साधर्म्येण । अत्र चोपसंहारो वैधर्म्येण पूर्ववत्—आत्मा विभुः लोष्टो न विभुस्तस्मात् लोष्टवत् क्रियावान् न भवत्यात्मेति । विशेषहेत्वभावं दर्शयति न चास्तीति । उपसंहरति विशेषेति ॥ इमे साधर्म्यसमवैधर्म्यसमे जाती प्रत्येकं त्रिधा ।

१०५

(भा०) अनयोरुत्तरम्—

(सू०) गोत्वाद्गोसिद्धिवत्तत्सिद्धिः ॥ ३ ॥

(भा०) साधर्म्यमात्रेण वैधर्म्यमात्रेण च साध्यसाधने प्रतिज्ञायमाने स्यादव्यवस्था। सा तु धर्मविशेषे नोपपद्यते। गोसाधर्म्याद् गोत्वाज्जातिविशेषाद्गौः सिध्यति। न तु सास्नादि-

---

(ख०) सद्विषये—असद्विषये—असदुक्तिके च। तत्राद्योदाहरणम्—अनित्यः शब्द उत्पत्तिधर्मकत्वात् उत्पत्तिधर्मकं कुम्भाद्यनित्यं दृष्टमित्युपसंहारे प्रत्यवस्थानम्—यद्यनित्यघटसाधर्म्यादनित्यः शब्दस्तर्हि नित्येनाप्याकाशेन साधर्म्यममूर्त्तत्वमस्तीति नित्योऽपि प्राप्त इति। द्वितीयोदाहरणं तु—नित्यः शब्दः स्पर्शशून्यत्वात् आकाशवदित्युपसंहारे नैतदेवम् —अस्ति ह्यनित्येनापि साधर्म्यं प्रमेयत्वम् ततः किन्नानित्यो घटवदिति। तृतीयोदाहरणं क्रियावानात्मेत्यादि भाष्ये॥ अत्र यत् प्रत्यवस्थानं तत् सदेवोत्तरं किन्तूक्तिदोषेणैव जातिरिति बोधसिद्धावुदयनाचार्याः॥२॥

अथ प्रकरणसमहेत्वाभासोद्भावनवदुक्ते प्रत्यवस्थाने सम्यगुत्तरे एव कस्मान्न भवत इत्यतोऽनयोरसम्यक्त्वप्रदर्शकं सूत्रमवतारयति अनयोरिति।

साधर्म्यसमवैधर्म्यसमयोरसदुत्तरत्वे हेतुमाह गोत्वादिति सूत्रम्॥

सूत्रं व्याचष्टे साधर्म्यमात्रेणेति। भवेदेवं यद्यन्वयव्यतिरेकमात्राद् हेतोर्गमकत्वं स्यात् ततो हि विशेषग्रहणाभावाद् प्रकरणसमत्वमुक्तयोरुत्तरयोर्भवेत्। नत्वेवं भवति—स्वाभाविकसम्बन्धभाज एव गमकत्वात्। स एव सम्बन्धो विशेषः—तस्य सत्त्वान्न प्रकरणसम इत्याशयः। धर्मविशेष इति। स्वाभाविकसम्बन्धे व्याप्ताविति यावत्। स्वाभाविकप्रतिबन्धेन सिद्धिमुदाहरति गोसाधर्म्यादिति। गोत्वादेव हि गौरयमिति सिध्यति—तच्च स्वाभाविकप्रतिबन्धादेव। गोसिद्धिरिति। गो-

(भा०)सम्बन्धात् । अश्वादिवैधर्म्याद्गोत्वादेव च गौः सिध्यति, न गुणादिभेदात् ।

तच्चैतत् कृतव्याख्यानमवयवप्रकरणे । प्रमाणानामभि-

---

(ख०)व्यवहारासिद्धिरित्यर्थः । स्वाभाविकप्रतिबन्धाभावेऽसिद्धिमुदाहरति न तु सास्नादीति । सास्नादिमत्त्वस्यास्त्येव स्वाभाविकप्रतिबन्धो गोत्वेनात इयमुक्तिर्भाष्यकारस्यासम्बद्धेव प्रतिभाति । तदर्थमेव हि तात्पर्यकारः सास्नादीतिपदमतद्गुणसंविज्ञानबहुव्रीहित्वेन वर्णयामास—तेन सास्ना आदिर्येषां ते सास्नादयः सास्नातिरिक्ता गोत्वव्यभिचारिणः शृङ्गादयो गृह्यन्ते । एवं च शृङ्गादिसत्त्वेन नैव गोत्वसिद्धिरित्यर्थः पर्यवसितः । साधर्म्येण स्वभावप्रतिबन्धात्सिद्धिमुदाहृत्य वैधर्म्येण स्वभावप्रतिबन्धात्सिद्धिमुदाहरति अश्वादीति । यदाऽश्वादिवैधर्म्यात् गोः सिध्यति तदा गोत्वमेव तद्वैधर्म्यम्—गोत्वरूपादेव अश्वादिवैधर्म्यात् गोसिद्धिः—तत्रापि कारणम् यद् अश्वादिवैधर्म्येष्वनेकेषु गोत्वमेव गवा स्वभावप्रतिबद्धमिति । न तु गवाश्वयोर्गुणादिभेदरूपवैधर्म्याद् गोसिद्धिरित्याह न गुणादीति । तथाच वार्त्तिकम्—यदन्वयव्यतिरेकि साधर्म्यं तस्माद् धर्मव्यवस्था—गोत्वं च तथा—तस्माद् गोत्वादेव गौः सिध्यतीति । एवं च यदुक्तं—नास्ति विशेष इति—तन्न युक्तम्—अन्वयव्यतिरेकरूपस्यैव विशेषस्य सर्वत्र सदनुमाने सत्त्वादित्याशयः । यत्र च वादिना स्वकीयस्थापनायामीदृशो विशेषः प्रदर्शयितुं शक्यते तत्र जातेरसदुत्तरं सुस्थिरमितरथा तु न तथेति ध्येयम् । उक्तेऽर्थे पूर्वोक्तं स्मारयति तच्चैदिति । अवयवप्रकरण इति । अनुमानावयवनिरूपणप्रकरणे प्रथमाध्यायप्रथमाह्निकस्थोनचत्वारिंशसूत्रभाष्य इत्यर्थः । 'अवयवसमुदाये च वाक्ये सम्भूयेतरेतराभिसम्बन्धात् प्रमाणान्यर्थं साधयन्तीति' तत्रस्थं वाक्यम् । तेन च सदनुमानेन भवत्येवार्थसिद्धिरिति सदसतोः साधनयोर्नास्ति कश्चिद् वि-

(भा०)सम्बन्धाच्चैकार्थकारित्वं समानं वाक्ये इति । हेत्वाभासाश्रया खल्वियमव्यवस्थेति ॥ ३ ॥

( २ ) साध्यदृष्टान्तधर्मविकल्पप्रभवोत्कर्षसमादिजातिषट्कप्रकरणम् ।

## ( सू० ) साध्यदृष्टान्तयोर्धर्मविकल्पादुभयसाध्यत्वाच्चोत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यसमाः ॥ ४ ॥

(ख०)शेष इति रिक्तं वचः । कुत्र तर्हि जातेः प्रयोगः सफल इत्यत आह हेत्वाभासाश्रया इति । जात्युद्भावनेन या 'अव्यवस्था' सन्देहोद्भावनं चिकीर्षिता तस्या अवकाशोऽसत्स्वेव साधनेषु ( हेत्वाभासेषु ) भवति, न पुनः सत्साधनेष्वित्यर्थः ॥ ३ ॥

उत्कर्षसमः—अपकर्षसमः—वर्ण्यसमः—अवर्ण्यसमः-विकल्पसमः-साध्यसम इति षण्णां जातीनां लक्षणमाह साध्येति सूत्रम् । अविद्यमानधर्मारोपः 'उत्कर्षः'—विद्यमानधर्मापचयः 'अपकर्षः'—साध्यः 'वर्ण्यः,—असाध्यः 'अवर्ण्यः' -विशेषः 'विकल्पः'—एतेषां धर्माणामुद्भावनार्थाः प्रयोगा यथाक्रममुत्कर्षसमाद्या जातयः । साध्यतेऽस्मिन्निति व्युत्पत्त्या साध्यपदेनात्र पक्षो विवक्षितः । 'साध्यदृष्टान्तयोः' पक्षदृष्टान्तयोः 'धर्मविकल्पात्' धर्मस्य वैचित्र्यात् अन्यथाभावात् सदसत्त्वादिना, उत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसमाः पञ्च जातयः—'उभयसाध्यत्वाच्च' साध्यसमा षष्ठा जातिरित्यर्थः । एवं च (१) दृष्टान्ते दृष्टस्य पक्षेऽनिष्टस्य धर्मस्य साध्येन सहापादनमुत्कर्षसमः (२)दृष्टान्तविद्यमानधर्माभावापादनमपकर्षसमः-(३)दृष्टान्तसादृश्यमात्रेण दृष्टान्ते साध्याभावापादनमवर्ण्यसमः (५)पक्षदृष्टान्तयोर्धर्मान्तरेण वैसादृश्यात् साध्यसाधनमसाध्यसाधनं वा विकल्पसमः (६)दृष्टान्ते दृष्टस्यापि साध्यत्वापादनं साध्यसम इति षड् जातयः ।

सूत्रं व्याचक्षाणः षण्णां जातीनां प्रत्येकं लक्षणमुपवर्णयितुम्प्रथममुत्क-

( भा० ) दृष्टान्तधर्मं साध्ये समासजतः उत्कर्षसमः । 'यदि क्रियाहेतुगुणयोगाल्लोष्टवत् क्रियावानात्मा लोष्टवदेव स्पर्शवानपि प्राप्नोति । अथ न स्पर्शवान् लोष्टवत् क्रियावानपि न प्राप्नोति । विपर्यये वा विशेषो वक्तव्य' इति ।

साध्ये धर्माभावं दृष्टान्तात् प्रसजतोऽपकर्षसमः । 'लोष्टः खलु क्रियावानविभुर्दृष्टः—काममात्माऽपि क्रियावानविभुरस्तु । विपर्यये वा विशेषो वक्तव्य' इति ।

ख्यापनीयो वर्ण्यो विपर्ययादवर्ण्यः । तावेतौ साध्यदृष्टान्तधर्मौ विपर्यस्यतो वर्ण्यावर्ण्यसमौ भवतः ।

---

(ख०)र्षसमस्य लक्षणं विवृणोति दृष्टान्तेति। यत्र जातौ साध्यदृष्टान्तयोर्धर्मवैचित्र्यात् साध्येऽविद्यमान एव दृष्टान्तधर्मस्तत्राध्यारोप्यते स 'उत्कर्षसम' इति फलितं लक्षणम् । उदाहरणमाह यदीति । अत्र दृष्टान्तस्य लोष्टस्य धर्मः स्पर्शवत्त्वं पक्षे आत्मनि अविद्यमानमपि तत्रारोप्यते ।

अपकर्षसमस्य लक्षणमाह साध्ये धर्माभावमिति । यत्र जातौ 'दृष्टान्तात्' दृष्टान्तबलात् साध्ये विद्यमानोऽपि धर्मोऽपकृष्यते स 'अपकर्षसमः' । उदाहरणमाह लोष्ट इति । अत्र दृष्टान्ते लोष्टे विभुत्वस्याभाव इत्यस्मात्कारणादात्मनि विद्यमानोऽपि विभुत्वधर्मस्तस्मादपकृष्यते ।

वर्ण्यावर्ण्यसमयोर्लक्षणमाह ख्यापनीय इति। 'वर्ण्यः' ख्यापनीयः साध्यः सन्दिग्ध इति यावत् । अवर्ण्यः सिद्धः असन्दिग्धो निश्चित इति यावत् । यत्र जात्योरेतौ धर्मौ विपर्यस्तौ क्रियेते—पक्षधर्मो दृष्टान्ते दृष्टान्तधर्मश्च पक्षे आरोप्यते—तौ वर्ण्यावर्ण्यसमाविति लक्षणम् । 'साध्यः' पक्षः—तस्य 'धर्मः' सन्दिग्धसाध्यधर्मत्वम् । दृष्टान्तस्तु निश्चितसाध्यधर्मः । एवं सन्दिग्धसाध्यधर्मत्वरूपस्य धर्मस्य पक्षे 'विक-

(भा०)साधनधर्मयुक्ते दृष्टान्ते धर्मान्तरविकल्पात्साध्यधर्मविकल्पं प्रसजतो विकल्पसमः । 'क्रियाहेतुगुणयुक्तं किञ्चिद् गुरु-यथा लोष्टः । किंचिल्लघु-यथा वायुः । एवं क्रियाहेतुगुण-

---

(ख०)ल्पात्' सत्त्वात् यदाऽयं धर्मः सन्दिग्धसाध्यधर्मत्वं (वर्ण्यत्वम्) दृष्टान्ते आरोप्यते स भवति 'वर्ण्यसम' इति। अवर्ण्यसमे तु दृष्टान्ते यो धर्मः निश्चितसाध्यत्वरूपः ( अवर्ण्यत्वम् ) स एव पक्षे ( सन्दिग्धसाध्यत्वे ) आरोप्यते ॥ अनयोरुदाहरणं यथा—कस्मिंश्चिदनुमाने वादिनोपन्यस्ते प्रतिवाद्याह यो दृष्टान्तो भवतोपन्यस्यते तेन पक्षसमानधर्मिणा भवितव्यम्—पक्षश्च सन्दिग्धसाध्यवानतो दृष्टान्तेनापि तथैव भवितव्यम् ( इत्यवर्ण्यसमः )—अथवा दृष्टान्तो निश्चितसाध्यवानतः पक्षेणापि निश्चितसाध्यवतैव भवितव्यम् ( इति वर्ण्यसमः ) इति ॥ साध्यदृष्टान्तयोर्धर्मवैचित्र्यात्स्वरूपेण साध्यसाधनत्वप्रसञ्जनेन वर्ण्यावर्ण्यसमाविति तात्पर्यकृतः ॥ अत्र वर्ण्यसमाजातिर्विरुद्धदेशनाभासाऽसाधारणादेशनाभासा वा अवर्ण्यसमा त्वसिद्धदेशानाभासेत्युदयनाचार्याः ॥

विकल्पसमलक्षणमाह साधनधर्मयुक्त इति । सदनुमाने सद्धेतौ यो धर्मः स एव दृष्टान्तेऽपि-अयमेव 'साधनधर्मः' इत्युच्यते—तेन युक्ते दृष्टान्ते वर्त्तमानस्य कस्याचिद् 'धर्मान्तरस्य विकल्पात्' साध्यव्यभिचारदर्शनेन यदि तद्दृष्टान्तसादृश्याद् 'साध्यविकल्पं' प्रकृतसाध्यं प्रति व्यभिचारः प्रसज्यते तदा भवति ।विकल्पसमा जातिरित्यर्थः । अत्र विकल्पशब्दो व्यभिचारपर्यायः व्यभिचारोऽपि हेतोर्धर्मान्तरं प्रति—धर्मान्तरस्य वा साध्यं प्रति—धर्मान्तरस्य वा धर्मान्तरम्प्रतीति ॥

उदाहरणमाह क्रियाहेत्विति । क्रियावानात्मा क्रियाहेतुगुणयुक्तत्वाद् यथा लोष्टः इति वादिनाऽनुमाने प्रयुक्ते प्रतिवाद्याह—दृष्टान्ते लोष्टे 'धर्मान्तरं' गुरुत्वं वर्त्तते अस्य च गुरुत्वस्य क्रियाहेतुगुणयुक्तत्व-

(भा०) युक्तं किञ्चित्क्रियावत्स्यात्—यथा लोष्टः । किञ्चिदक्रियं—यथाऽऽत्मा । विशेषो वा वाच्य इति ।

हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः । तं दृष्टान्ते प्रसजतः साध्यसमः । 'यदि यथा लोष्टस्तथाऽऽत्मा प्राप्तस्तर्हि यथाऽऽत्मा तथा लोष्ट इति । साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः । अथ नैवम्, न तर्हि यथा लोष्टः तथाऽऽत्मा' ॥ ४ ॥

---

(ख०)रूपेण हेतुना क्रियावत्त्वरूपेण साध्येन व्यभिचारो दृश्यते 'वायौ'-यस्माद् वायुः क्रियावानपि तु लघुर्न गुरुः—एवमेव लोष्टगतधर्मस्य क्रियाहेतुगुणयुक्तत्वस्यापि व्यभिचार आत्मनि भवेदिति । इयमेव विकल्पसमा जातिरित्यर्थः । इयं चानैकान्तिकत्वदेशनाभासेत्युदयनाचार्याः ॥

साध्यसमलक्षणमाह हेत्वादीति । साध्यसाधनधर्मयोस्तुल्यतया प्रत्यवस्थानं 'साध्यसमा' जातिरिति लक्षणमिति वार्त्तिके । पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादानं साध्यसमेति वृत्तिकृतः । अत्र साध्यस्वरूपमाह 'हेत्वाद्यवयवसामर्थ्ययोगी धर्म' इति । यस्मिन् धर्मणि हेतुपक्षदृष्टान्तादेः साधनशक्तिः सम्यग् व्यापृता भवति स एव साध्य इत्यर्थः ॥ पक्षहेतुदृष्टान्ता हि प्रमाणान्तरसिद्धा एवानुमानाङ्गम्—नासिद्धाः, न च तेनैवानुमानेन सिद्धाः । सिषाधयिषितस्तु पक्षेऽसिद्धस्तेनैवानुमानेन सेत्स्यति—तत्र सिषाधयिषितवत् सिद्धस्याप्यनुमेयत्वं—तस्माच्चानुमानप्रयोगप्रसञ्जनं साध्यसमेति भावः ॥ उदाहरणमाह यदि यथेति । लोष्टसादृश्येन यद्यात्मा क्रियावान् साध्यते—यस्माल्लोष्टः क्रियावान् तस्मादात्मापि तथेति—तर्हि यथाऽऽत्मनि क्रियावत्त्वं सन्दिग्धमथ च साध्यमेवं लोष्टेऽपि तत्तथैवेति—अन्यथा लोष्टात्मनोरसादृश्यप्रसङ्ग

(भा०) एतेषामुत्तरम्—

(सू०) किञ्चित्साधर्म्यादुपसंहारसिद्धेवैंधर्म्यादप्रतिषेधः ॥ ५ ॥

(भा०) अलभ्यः सिद्धस्य निह्नवः। सिद्धं च किञ्चित्साधर्म्यादुपमानं यथा गौस्तथा गवय इति। तत्र न लभ्यो गोगवययोर्धर्मविकल्पश्चोदयितुम्। एवं साधके धर्मे दृष्टान्तादि-

---

(ख०)इति साध्यसमोदाहरणम् ॥ साध्यविकल्पत्वसिद्धिदेशनाभासेयं जातिरित्युदयनाचार्याः ॥ ४ ॥

उक्तानां षण्णां जातीनामुत्तरप्रदर्शनसूत्रमवतारयति एतेषामिति।

उत्कर्षसमादिजातिषट्कस्योत्तरप्रकारं प्रदर्शयति किञ्चिदिति सूत्रम्। 'किञ्चित्साधर्म्यात्' साधर्म्यविशेषात् व्याप्तिसहितादेव 'उपसंहारसिद्धेः' सिद्धिर्यस्माद् भवति—तस्मात्—'वैधर्म्यात्' एतद्विपरीतात् व्याप्तिनिरपेक्षात् साधर्म्यमात्रात् भवता जातिवादिना कृतः प्रतिषेधो न युक्त इत्यर्थः।

सूत्रार्थमाह अलभ्य इति। यत् यादृशं लोके सिद्धं तत्तथैवाभ्युपगन्तव्यमित्यर्थः। प्रकृते किमतेनेत्यत आह सिद्धमिति। यदा यदा दृष्टान्त उपन्यस्यते तदा तदा यत्किञ्चित्सादृश्यमादायैव न त्वत्यन्तसादृश्यमादाय—तत्र दृष्टान्तो यथा गौस्तथा गवय इति। अत्रात्यन्तसादृश्यं न विवक्ष्यते। तथाच वार्त्तिकम्—यथा गौस्तथा गवय इत्युक्ते न गोधर्माः सर्व एव गवये न गवयधर्माः सर्व एव गवीति प्राप्नोति। तथा चात्रैवं पर्यनुयोगो न युज्यते यत् यदि गोसदृशो गवयस्तर्हि सास्नादिकमपि गवये कस्मान्न भवतीत्याह न लभ्य इति। उक्तं दृष्टान्तं दार्ष्टान्तिके योजयति एवमिति। यदा वयं लोष्टमात्मनः क्रियावत्त्वसाधने दृष्टान्तमुपन्यस्यामस्तदा न ब्रूमो वयम् 'यावन्तो लोष्टधर्मास्ते सर्वे

(भा०)सामर्थ्ययुक्ते न लभ्यः साध्यदृष्टान्तयोर्धर्मविकल्पाद्वैधर्म्या-त्प्रतिषेधो वक्तुमिति ॥ ५ ॥

( सू० ) साध्यातिदेशाच्च दृष्टान्तोपपत्तेः ॥ ६ ॥

( भा० ) यत्र लौकिकपरीक्षकाणां बुद्धिसाम्यं तेनाविपरीतोऽर्थोऽतिदिश्यते प्रज्ञापनार्थम् । एवं साध्यातिदेशाद् दृष्टान्ते उपपद्यमाने साध्यत्वमनुपपन्नमिति ॥ ६ ॥

---

(ख०)आत्मनि संभवन्तीति' किन्तु यो यस्य धर्मिणः साध्यधर्मेण स्वाभाविकसम्बद्धः साधको धर्म उपपन्नो भवति स धर्मस्तस्य साध्यधर्मस्य साधनं तत्र साध्यधर्मिण्युपसंह्रियते उपनयपदेनेत्यर्थः । एवंसति तद्विपरीतोऽस्वभावप्रतिबद्धोऽपि दृष्टान्तधर्मस्त्वत्र न भवतीति पर्यनुयोगस्तन्मूलकश्च प्रतिषेधः कर्तुं न युज्यत इत्यर्थः ॥ ५ ॥

षण्णां जातीनाम्प्रत्याख्यानमुक्त्वा वर्ण्यावर्ण्यसाध्यसमानामपरमपि प्रत्याख्यानमाह साध्यातिदेशादिति सूत्रम् । साध्यातिदेशाभ्युपगमात् दृष्टान्तस्य 'उपपत्तिः' अभ्युपगमो यस्मात् तस्मात् न प्रतिषेधोपपत्तिरिति—अथवा दृष्टान्तस्य 'उपपत्तेः' सिद्धेः साध्यातिदेशो यस्तस्मात् प्रतिषेधानुपपत्तिरित्यर्थः ।

सूत्रार्थमाह यत्रेति । यत्रार्थे यस्य साध्यधर्मस्यास्तित्वं निश्चितं सकलपरीक्षकसम्मतं स एवार्थो दृष्टान्तत्वेनाभ्युपगम्यते । साध्यस्त्वनिश्चितरूपः । अतो यत्किञ्चित्साध्यधर्म एवातिदिश्यते दृष्टान्ते न तु सर्वे साध्यगता धर्माः । उपसंहरति साध्यत्वमिति । दृष्टान्तस्य निश्चितधर्मत्वम् साध्यस्य च सन्दिग्धत्वमत एव दृष्टान्तस्य साध्यसमत्वापादनं सर्वथाऽनुपपन्नमित्यर्थः । अनेनैव पक्षादेरपि साध्यसमत्वं प्रत्युक्तं वेदितव्यम् ॥ ६ ॥

(३) प्राप्त्यप्राप्तियुगनद्धवाहिविकल्पोपक्रमजातिद्वयप्रकरणम् ।

**( सू० ) प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्याऽविशिष्टत्वादप्राप्त्याऽसाधकत्वाच्च प्राप्त्यप्राप्तिसमौ ॥ ७॥**

( भा० ) हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा ? न तावत्प्राप्य—प्राप्त्यामविशिष्टत्वादसाधकः । द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ।

अप्राप्य साधकं न भवति—नाप्राप्तः प्रदीपः प्रकाशय-

---

(ख०)प्राप्तिसमाप्राप्तिसमजातिद्वयलक्षणमाह प्राप्येति सूत्रम् । हेतोरिति—साधकत्वमिति शेषः ॥

सूत्रार्थं विवृण्वन् हेतोः साधकत्वे विकल्पयति हेतुरिति । यदा हेतुः साध्यं साधयति तदा तत् प्राप्नोति न वेत्यर्थः । तत्राद्यं दूषयति न तावदिति। हेतुः साध्यं प्राप्य साधयतीति न युज्यते—कुत इत्यत आह प्राप्त्येति । यदि हेतुः साध्यं प्राप्नोति तर्हि हेतुः साध्यादविशिष्टः—यथा हेतुः सन् तथैव साध्यमपि सत् , असतः प्राप्त्यसम्भवात् । तेन किमित्यत आह असाधक इति । एतदेव स्पष्टयति द्वयोरिति । यदि यथा हेतुः सन् तथैव साध्यमपि सदेव तर्हि सत् साधनं नैवापेक्षते—असदेव हि साधनीयं न सदेवेति प्राप्तिपक्षे साध्यत्वादेव हीयते साध्यमित्यर्थः । अपि च येन यस्य प्राप्तिस्तेन तस्यैक्यमेव—यथा गङ्गा सागरं प्राप्ता सागरेणाभिन्ना तद्वदेवाभिन्ने चेत्साध्यसाधने, नास्ति साध्यसाधनभावस्तस्य भेदाधिष्ठानत्वादित्यपि द्रष्टव्यम् ॥

एवं प्राप्तिपक्षेण प्राप्तिसमां जातिं वर्णयित्वाऽप्राप्तिपक्षेणाप्राप्तिसमां निरूपयितुमाह अप्राप्येति । अप्राप्यैव साध्यं हेतुः साधयतीति त्वत्सम्मतमेवेत्यर्थः । असंभवं दर्शयितुं दृष्टान्तमाह न प्राप्त इति । प्रदीपो यदाऽर्थं प्रकाशयति तदा तं प्राप्यैव नान्यथेत्यर्थः ॥

(भा०)तीति । प्राप्त्या प्रसवस्थानं प्राप्तिसमः । अप्राप्त्या प्रसवस्थानमप्राप्तिसमः ॥ ७ ॥

( भा० ) अनयोरुत्तरम्—

( सू० ) घटादिनिष्पत्तिदर्शनात् पीडने चाभिचारादप्रतिषेधः ॥ ८ ॥

---

(ख०)जातिद्वये विवेकमाह प्राप्त्येति । साध्यमत्र कार्यं ज्ञाप्यं च-'प्राप्तिः' प्रत्यासत्तिः । सा च संयोगसमवाय—विशेषणत्व—व्याप्यत्व—विषयित्वाद्यनेकप्रकारेष्वेकतमा । 'अविशेषः' सिद्धत्वम् । तच्च कार्यविषये सत्त्वम्, ज्ञाप्यविषये ज्ञातत्वम् । प्राप्तिसमा जातिस्त्वेवं प्रवर्त्तते—"लिङ्गतज्ज्ञानयोर्हि कार्यमनुमितिज्ञानम्—अप्राप्य च कार्यकरणे करणस्यातिप्रसङ्गात् प्राप्यकरणं वक्तव्यम्—सच्च प्राप्यते नासत्—सतोश्चाविशेषे किं कस्य कारणं कार्यं वेति निष्फलमनुमानम् । एवमप्राप्य ज्ञापनेऽतिप्रसङ्गात् प्राप्य ज्ञापनं वक्तव्यम्—लिङ्गवच्च ज्ञानमपि ज्ञापकम्-न च लिङ्गिना तस्य संयोगादिलक्षणा प्राप्तिरस्ति—ततो विषयित्वमेव वक्तव्यम्—तथाच लिङ्गपरामर्शे एव लिङ्गिनः स्फुरणे ज्ञातत्वाविशेषात् किं कस्य ज्ञापकं ज्ञाप्यं वेति निष्फलमनुमानम्" इति ॥ एते एव विपर्ययेणाप्राप्तिसमे । तथाहि प्राप्त्यविशेषात् अकरणेऽज्ञापने वाऽप्राप्यकरणं ज्ञापनं च वक्तव्यम्—तच्चायुक्तमतिप्रसङ्गात् । करणे उदाहरणम् न ह्यप्राप्य वह्निर्दहतीति । ज्ञापने उदाहरणम्—न ह्यप्राप्य प्रदीपो दहतीति ॥ एवं च प्राप्तावविशेषेणैव हेतोः प्रतिक्षेपः—अप्राप्तावतिप्रसङ्गेनैवेति सङ्क्षेपः ॥ विशेषणासिद्धिदेशनाभासे इमे जातीत्यवधेयम् ॥ ७ ॥

जातिद्वयस्योक्तस्य समाधानमवतारयति अनयोरिति ।

प्राप्तिसमाप्राप्तिसमयोः समाधानप्रदर्शकं सूत्रम्—घटादीति ॥

( भा० ) उभयथा खल्वयुक्तः प्रतिषेधः । कर्तृकरणाधिकरणानि प्राप्य मृदं घटादिकार्यं निष्पादयन्ति । अभिचाराच्च पीडने सति दृष्टमप्राप्य साधकत्वमिति ॥ ८ ॥

(४) युगनद्धवाहिप्रसङ्गप्रतिदृष्टान्तसमजातिद्वयप्रकरणम् ।

( सू० ) दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ ॥ ९ ॥

( भा० ) साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गेन प्र-

---

(ख०)सूत्रार्थमाह उभयथेति । प्राप्तावप्राप्तौ च यौ प्रतिषेधावुक्तौ तावुभावप्ययुक्तावेवेत्यर्थः । तत्र प्राप्तिपक्षे हेतुमाह–कर्तृकरणेति । घटस्योत्पादने 'कर्त्ता' कुलालः–'करणानि' दण्डादीनि–'अधिकरणम्' भूतलम्–इत्येतानि सर्वाण्यपि मृत्पिण्डं प्राप्यैव घटं निष्पादयन्तीति दृश्यते। अत्र प्राप्तावपि नाविशेषो साध्यात् घटात् साधनस्य कर्तृकरणादेः–न ग्र मृत्पिण्डं प्राप्तो दण्डः साधनत्वं जहाति नापि मृत्पिण्डो घटो वा साध्यत्वम् । न चाविद्यमानस्य घटस्य कथं साध्यत्वमिति वाच्यम्–विद्यमानस्यैव मृत्पिण्डस्य घटीक्रियमाणत्वादिति । तथा प्राप्तिपक्षे न साध्यसाधनभावविलोपप्रसङ्ग इत्यर्थः । अप्राप्तिपक्षे हेतुमाह–अभिचारादिति । श्येनाद्यभिचारप्रयोगे यद्यपि शत्रुरभिचारक्रियया न प्राप्यते तथाऽपि तस्य पीडा जन्यत एवेत्यप्राप्तस्यैव साधकत्वमिति भावः ॥ ८ ॥

प्रसङ्गसम–प्रतिदृष्टान्तसमयोर्लक्षणमाह दृष्टान्तस्येति सूत्रम् । 'दृष्टान्तस्य'–'कारणं' प्रमाणम्–तस्य 'अनपदेशात्'–अनभिधानात्–'प्रसङ्गसमः' । 'प्रातिदृष्टान्तेन प्रत्यवस्थानं' प्रतिदृष्टान्तसमः–इत्यर्थः ।

सूत्रार्थमाह साधनस्येति । दृष्टान्तगतो यो धर्मोऽन्यत्र तद्धर्मास्तित्वसाधनत्वेनोपन्यस्यते वादिना तस्यापि 'साधनं' प्रमाणं वक्तव्यम्–यथा क्रियाहेतुगुणवान् लोष्टोऽपि क्रियावानित्यस्यापि साधनं वक्तव्य-

(भा०)त्यवस्थानं प्रसङ्गसमः प्रतिषेधः । 'क्रियाहेतुगुणयोगी क्रियावान्' लोष्ट इति हेतुर्नापदिश्यते । न च हेतुमन्तरेण सिद्धिरस्तीति ।

प्रतिदृष्टान्तेन प्रत्यवस्थानं प्रतिदृष्टान्तसमः । 'क्रियावानात्मा क्रियाहेतुगुणयोगाद् लोष्टवदि'त्युक्ते प्रतिदृष्टान्त उपादायिते–

(ख०)म्-इत्येवं प्रत्यवस्थीयते भवति सा प्रसङ्गसमा जातिरिति ॥ यद्यप्येवं प्रत्यवस्थानं क्वचित् सदुत्तरमेव तथापि 'दृष्टान्ते प्रमाणं वाच्यम्' 'तत्रापि प्रमाणान्तरम्' इत्यनवस्थया यत् प्रत्यवस्थानं तस्यैवासदुत्तरत्वेन जातित्वमभीप्सितम् । अत एवानवस्थाभासप्रसङ्ग एव प्रसङ्गसमस्य लक्षणमुक्तमुदयनाचार्यैः । अनवस्था च कृतौ ज्ञप्तौ च । एवं च कृतिज्ञप्त्योर्व्यवस्थितस्य 'कारणं' व्यवस्थापकम्–तस्य 'अनपदेशात्' प्रत्यवस्थानं प्रसङ्गसम इत्यर्थः । तत्र ज्ञप्तौ 'प्रमाणेऽपि किम्प्रमाणम्' इति वा 'दृष्टान्तेऽपि को दृष्टान्त' इति वा प्रवर्तते–कृतौ च कारणस्यापि कारणन्तरं वाच्यम् इति च ॥ अत्र चानिश्चितस्यानिश्चायकत्वारोप एवोत्थानबीजम्–तथा च स्वरूपासिद्धिदेशनाभासेयं जातिरिति ॥

अस्य प्रसङ्गसमस्य साध्यसमाद्भेदः प्रदर्शितस्तात्पर्यकारैः । साध्यसमो हि दृष्टान्ते साध्यवद् हेत्वाद्यवयवं प्रसञ्जयति–पञ्चावयवसाध्यतां दृष्टान्तगतस्य धर्मस्य प्रसञ्जयतीत्यर्थः । प्रसङ्गसमस्तु दृष्टान्तगतस्य धर्मस्य प्रमाणमात्रसाध्यतां प्रसञ्जयतीति ॥

प्रतिदृष्टान्तसमस्य लक्षणमाह प्रतिदृष्टान्तेनेति । प्रतीपमवस्थानं 'प्रत्यवस्थानम्'—प्रतिपक्षावस्थानं स्थापनाहेतोः प्रतिषेध इति यावत् । तत्रोदाहरणमाह क्रियावानिति । एवं चात्र प्रत्यवस्थानस्यार्थः—'यदि लोष्टदृष्टान्तेन क्रियावानात्माऽथाकाशदृष्टान्तेन निष्क्रिय एव कस्मान्न भवतीति' अनेन प्रतिदृष्टान्तेन क्रियाहेतुगुणयोगो निष्क्रियत्व-

(भा०)'क्रियाहेतुगुणयुक्तमाकाशं निष्क्रियं दृष्टमिति'। कः पुनराकाशस्य क्रियाहेतुर्गुणः? वायुना संयोगः संस्कारापेक्षः वायुवनस्पतिसंयोगवदिति ॥ ९ ॥

(भा०) अनयोरुत्तरम्—

(सू०)प्रदीपोपादानप्रसङ्गविनिवृत्तिवत्तद्विनिवृत्तिः॥१०॥

(भा०) इदं तावदयं पृष्टो वक्तुमर्हति—अथ के प्रदीपमुपाददते, किमर्थं वेति। दिदृक्षमाणा दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते? अन्तरेणा-

---

(ख०)मेव कस्मान्न साधयतीत्यर्थः। लोष्टस्य क्रियाहेतुगुणयुक्तत्वादात्मनश्च तथात्वाल्लोष्टगुणः क्रियावत्त्वमाकाशेऽनुमीयते—आकाशे तु नास्ति क्रियाहेतुगुणयोगोऽतो विषम उपन्यास इत्याशयवान् पृच्छति कः पुनरिति। तत्रोत्तरम् वायुनेति। यथा वायुवनस्पतिसंयोगः क्रियाहेतुर्भवतीति दृश्यते—तथैवाकाशवायुसंयोगोऽपि क्रियाहेतुर्भवतीत्यनुमीयते। यत्त्वाकाशवायुसंयोगेन काचिदपि क्रिया नोत्पद्यते—तत् प्रतिबन्धादेवेति नाकाशवायुसंयोगे क्रियाहेतुत्वहानिरित्याशयः ॥ ९ ॥

अनयोः समाधानमवतारयति अनयोरिति।

प्रसङ्गसमजातेः समाधानमादावाह प्रदीपेति सूत्रम्। यथा प्रदीपे प्रदीपान्तरस्य नावश्यकता तथैव साधनेऽपि नास्ति साधनान्तरस्यावश्यकतेत्यर्थः।

सूत्रार्थमाह इदं तावदिति। 'अयं' वादी 'इदं' पूर्वसूत्रोक्तप्रसङ्गसमोत्तरभूतं प्रश्नं 'पृष्टः' सन् एवं वक्ष्यमाणं 'वक्तुं' प्रष्टुमर्हति। जातिवादिनमिति शेषः। किमित्यपेक्षायामाह अथेति। तत्र जातिवादिन उत्तरम् दिदृक्षमाणेति। किमपि द्रष्टुमिच्छन्तः पुरुषाः प्रदीपं उपाददते—दृश्यस्य दर्शनार्थं च प्रदीपमुपाददते इत्यर्थः॥ पुनर्जाति-

(भा०)पि प्रदीपान्तरं दृश्यते प्रदीपः । तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम् । अथ दृष्टान्तः किमर्थमुच्यत इति ? अप्रज्ञातस्य ज्ञापनार्थमिति । अथ दृष्टान्ते कारणापदेशः किमर्थं देश्यते । यदि प्रज्ञापनार्थं, प्रज्ञातो दृष्टान्तः । स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति । तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम् ॥ १० ॥

---

(ख०)वादिनः प्रश्नः अथ प्रदीपमिति । तत्र जातिवादिन उत्तरम् अन्तरेणेति । दीपान्तरं विनाऽपि दृश्यत एव प्रदीपोऽत एव प्रदीपदर्शनार्थं प्रदीपान्तरं नोपाददते निरर्थकत्वादित्यर्थः । एवं स्वाभिलषितमुत्तरं प्राप्य वादी पुनः पृच्छति अथ दृष्टान्त इति । अनुमानप्रयोगे यद् दृष्टान्त उपादीयते तत् किमर्थमित्यर्थः । तत्र जातिवादिन उत्तरम् प्रज्ञापनार्थमिति । अज्ञातस्य ज्ञापनमेव दृष्टान्तोपादानस्य प्रयोजनमित्यर्थः ॥ एवं प्रश्नोत्तरक्रमेण जातिवादिनं स्वमार्गमानीय वादी पृच्छति अथ दृष्टान्त इति । दृष्टान्तस्य कारणापदेशः कर्त्तव्य इति यद्भवता प्रसङ्गसमजातौ प्रत्यवस्थीयते तत्र दृष्टान्तप्रमाणापदेशं यद्भवानिच्छति तत् कस्मै प्रयोजनायेति प्रश्नार्थः । तत्र पूर्वप्रदत्तोत्तरानुसारेणैवमुत्तरमुद्भावयति यदीति । यथाऽज्ञातस्य ज्ञापनार्थं दृष्टान्तोपादानम्—तथैवाज्ञातस्य ज्ञापनार्थमेव तत्प्रमाणोपादानमावश्यकमित्यर्थः । सम्भावितमुत्तरं दूषयति प्रज्ञात इति । अज्ञातस्यैवं ज्ञापनमपेक्षितम् दृष्टान्तस्तु ज्ञात एव—ततश्च न तज्ज्ञापनार्थं प्रमाणोपादानस्यावश्यकतेत्याशयः । नैवाज्ञातो दृष्टान्तो भवति कदापीति प्रदर्शयति स खल्विति । यत्र विषये सर्वेषां जनानां सम्मतिः यश्चैकरूप एव सर्वैर्ज्ञायते स एव दृष्टान्तो भवितुमर्हतीत्यर्थः । उपसंहरति तत्प्रज्ञापनार्थ इति । दृष्टान्तस्य सर्वजनैर्ज्ञातत्वात्तज्ज्ञापनार्थं प्रमाणोपन्यासो व्यर्थ एव स्यादिति दृष्टान्तस्य कारणा-

(भा०) अथ प्रतिदृष्टान्तसमस्योत्तरम्—

(सू०) प्रतिदृष्टान्तहेतुत्वे च नाहेतुर्दृष्टान्तः ॥११॥

(भा०)प्रतिदृष्टान्तं ब्रुवता न विशेषहेतुरपदिश्यते। अनेन प्रकारेण प्रतिदृष्टान्तः साधकः न दृष्टान्त इति। एवं प्रतिदृष्टान्तहेतुत्वे नाहेतुर्दृष्टान्त इत्युपपद्यते। स च कथं हेतुर्न स्याद्? यद्यप्रतिषिद्धः साधकः स्यादिति ॥ ११ ॥

---

(ख०)नपदेशाद्यत्प्रत्यवस्थानं तत्सर्वथाऽसदेवेत्येतदेव समाधानम्प्रसङ्गसमजातेरित्यर्थः ॥ १० ॥

प्रतिदृष्टान्तसमजातेः समाधानमवतारयति अथेति। तत्समाधानमाह प्रतिदृष्टान्तेति सूत्रम्।

'प्रतिदृष्टान्तस्य हेतुत्वे' हेतुभावे समाधानसामर्थ्ये–तदुपन्यासकेन जातिवादिनाऽभ्युपगते–'दृष्टान्तः' वादिनोपन्यस्तः–'अहेतुः' असाधनम्–इति 'न' न युक्तमित्यर्थः ॥

सूत्रं व्याचष्टे प्रतिदृष्टान्तमिति। यदा भवान् प्रतिदृष्टान्तसमजातिवादी प्रतिदृष्टान्तमुपन्यस्यति तदा 'भवदुपन्यस्तः प्रतिदृष्टान्तो भवदभिमतस्यार्थस्य साधको मयोद्भावितस्तु दृष्टान्तो न मदभिमतस्यार्थस्य साधकः' इत्यत्र विशेषो हेतुर्भवता न प्रदर्श्यत इत्यर्थः। फलितमाह–एवमिति। प्रतिदृष्टान्तस्य साधकत्वम्प्रतिपद्यमानेन, दृष्टान्तस्यापि साधकत्वमभ्युपगन्तव्यमेवेत्यर्थः। जातिवादी पृच्छति स चेति। कथं हेतुः स्यादित्यर्थः। केन कारणेन भवदुक्तस्य दृष्टान्तस्य हेतुत्वमभ्युपगन्तव्यमेवेत्याशयः। तत्रोत्तरम् यदीति। यावत्कालपर्यन्तं मदीयो दृष्टान्तो बलवत्तरप्रमाणेन बाधितो न भवति तावत्कालपर्यन्तं प्रतिदृष्टान्तस्य सत्त्वेऽपि तस्य साधकत्वमवश्यमभ्युपगन्तव्यमेवेत्यर्थः। इहैवम्प्रत्युत्तरक्रमः। किम्प्रतिदृष्टान्तस्याधिकबलतामभिमन्यमानेन दृष्टा-

( ५ ) अनुत्पत्तिसमप्रकरणम् ।

( सू० ) प्रागुत्पत्तेः कारणाभावादनुत्पत्तिसमः ॥१२॥

( भा० ) अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते अपर आह—प्रागुत्पत्तेरनुत्पन्ने शब्दे प्रयत्नानन्तरीयकत्वमनित्यत्वकारणं नास्ति । तदभावान्नित्यत्वं प्राप्तम् । नित्यस्य चोत्पत्तिर्नास्ति । अनुत्पत्त्या प्रत्यवस्थानमनुत्पत्तिसमः ॥ १२ ॥

( भा० ) अस्योत्तरम्—

---

(ख०)न्तस्य बाधो दृश्यते अन्यथा वा । नाद्यः, साधनप्रयुक्तसाध्यधर्मवत्तामवधीर्य वादिप्रतिवादिविवक्षितधर्मवत्तामत्रेण दृष्टान्तप्रतिदृष्टान्तयोर्विशेषाभावात् ॥ नापि द्वितीयः । को हि तुल्यबलयोर्बाध्यो बाधको वा । तथा स्वीकारे वा दृष्टान्तेनैव कथन्न प्रतिदृष्टान्तस्य बाध इत्यादिबोधसिद्धावुदयनाचार्याः ॥ ११ ॥

अनुत्पत्तिसमजातेर्लक्षणमाह प्रागुत्पत्तेरिति सूत्रम् । यस्य कस्यचित्साधनाङ्गस्य 'उत्पत्तेः प्राक् कारणस्य'—हेतोः—अभावात् प्रत्यवस्थानम् 'अनुत्पत्तिसम' इत्यर्थः ।

उदाहरणप्रदर्शनेनैव सूत्रार्थं विवृणोति अनित्य इति । यावच्छब्दो नोत्पन्नस्तावत्तस्य प्रयत्नानन्तरीयकत्वं नास्ति—इदमेव च तस्यानित्यत्वकारणम्—अतोऽनित्यत्वकारणस्य प्रयत्नान्तरीयकत्वस्याभावान्नित्य एव शब्द—इति प्रत्यवस्थानमनुत्पत्तिसमा जातिरित्यर्थः । अनुत्पत्तिसम इति जातेर्नामविशेषमुपपादयति अनुत्पत्त्येति । यस्मात् साधनाङ्गस्य 'अनुत्पत्त्या' एवैतत् प्रत्यवस्थानं तस्मादेवास्य नाम 'अनुत्पत्तिसम' इति ॥ १२ ॥

अनुत्पत्तिसमजातेः समाधानमवतारयति अस्येति ।

(सू० ) तथाभावादुत्पन्नस्य कारणोपपत्तेर्न कारणप्रतिषेधः ॥ १३ ॥

(भा० ) तथाभावादुत्पन्नस्येति । उत्पन्नः खल्वयं शब्द इति भवति । प्रागुत्पत्तेः शब्द एव नास्ति । उत्पन्नस्य शब्दभावाच्छब्दस्य सतः प्रयत्नानन्तरीयकत्वमनित्यत्वकारणमुपपद्यते । कारणोपपत्तेरयुक्तोऽयं दोषः—प्रागुत्पत्तेः कारणाभावात् इति ॥ १३ ॥

---

(ख०)तदेव समाधानमाह तथाभावादिति । 'उत्पन्नस्य तथाभावात्'—उत्पन्न एवार्थः स्वात्मानमपि लभते—अतो यावत्कालं तस्य धर्मा न सन्ति तावत्कालं स स्वयमपि नास्त्येव—इत्यस्मात् कारणात्—अथ च 'कारणोपपत्तेः'—यदा सोऽर्थः स्वात्मानं लभते तदा तदीयधर्मस्य वादिनोपन्यस्तसाधनभूतस्यापि सत्त्वात्—'कारणस्य' तत्साधनस्य प्रतिषेधो—'न' युक्त इति शेषः ।

सूत्रार्थमाह तथाभावादिति । न चानुत्पन्नः 'शब्द' इति 'नित्य' इति च 'अनुत्पत्तिधर्मक' इति च सम्भवति—उत्पन्न 'स्तूत्पत्तिधर्मा' च 'शब्दश्च' 'अनित्य' इतिं चेति शक्यं प्रत्यवस्थातुमित्याह शब्दस्य इति । 'सत' इति उत्पन्नस्येत्यर्थः । यदा शब्द उत्पन्नस्तदोत्पत्तिधर्मको भवति-उत्पत्तिधर्मकत्वाच्चास्य प्रयत्नानन्तरीयकत्वमपि सिध्यत्येव—प्रयत्नानन्तरीयकत्वमेव चास्यानित्यत्वकारणमतोऽनित्यत्वस्य कारणस्य ज्ञापकस्य-प्रयत्नानन्तरीयकत्वरूपस्य 'उपपत्तेः' सत्त्वात् तस्य कारणस्य प्रयत्नानन्तरीयकत्वस्य प्रतिषेधः पूर्वसूत्रोक्तो न युक्त इत्यर्थः । अपि च प्रयत्नानन्तरीयकत्वमिति यदनित्यत्वस्य हेतुत्वेनोपन्यस्यते तत्र ज्ञापकत्वमेव हेत्वर्थो न कारकत्वम् । कारको हि हेतुर्निवर्तमानः स्वकार्यं निवर्त्तयति, न तु ज्ञापकः—तदभावेऽपि भूमौ चिरानिखातानां निध्यादीनामनिवृत्तेरिति ध्येयम् ॥ १३ ॥

( ६ ) संशयसमप्रकरणम्।

(सू०) सामान्यदृष्टान्तयोरैन्द्रियकत्वे समाने नित्यानित्यसाधर्म्यात्संशयसमः ॥ १४ ॥

( भा० ) अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदित्युक्ते हेतौ संशयेन प्रत्यवतिष्ठते-सति प्रयत्नानन्तरीयकत्वे अस्त्येवास्य नित्येन सामान्येन साधर्म्यमैन्द्रियकत्वम्, अस्ति च घटेनानित्येन। अतो नित्यानित्यसाधर्म्यादनिवृत्तः संशय इति ॥ १४ ॥

---

(ख०)संशयसमजातेर्लक्षणमाह सामान्येति सूत्रम्॥ 'सामान्ये' गोत्वादौ नित्ये-'दृष्टान्ते' घटादौ अनित्ये-च 'ऐन्द्रियकत्वं समानम्'-नित्यत्वानित्यत्वान्यतरसहचरितत्वेन तुल्यम्-एवंच सति-'नित्यानित्यसाधर्म्यात्'-नित्यत्वानित्यत्वसहचरितैन्द्रियकत्वरूपसाधर्म्यवत्त्वज्ञानात्-यत्र नित्यत्वानित्यत्वसंशयोत्थापनेन प्रत्यवस्थानं सा संशयसमा जातिरित्यर्थः ॥ अत्र समाने इत्यन्तमुदाहरणार्थं शेषस्तु लक्षणमिति विवेकः।

उदाहरणपुरस्सरं सूत्रार्थं व्याचष्टे अनित्य इति। प्रत्यवस्थानप्रकारमाह-सति प्रयत्नेति। 'सामान्यं' गोत्वादिजातिर्यथेन्द्रियगोचरापि नित्या-एवं घटादिरिन्द्रियगोचरोप्यनित्य इति-शब्दो यद्यपि प्रयत्नानन्तरीयकस्तथाऽपीन्द्रियगोचरत्वाद् भवत्येव नित्यस्य गोत्वादेरथ चानित्यस्य घटादेः सधर्मा-एवं च नित्यानित्यसाधर्म्यात्-किमयं नित्योऽनित्यो वेति भवत्येव संशय इत्यर्थः ॥ एवं चेयं जातिः प्रवर्तते। यथा निर्णयकारणमस्तीति निर्णयो भवति तथैव संशयकारणमस्तीति संशयेन भवितव्यम्। अस्ति च प्रकृते संशयकारणं समानानेकधर्मविप्रतिपत्तीनामन्यतमत्। अतः संशयो दुर्निवार इति ॥ इयं च जातिर्विशेषणासिद्धिदेशनाभासेत्युदयनाचार्याः॥ १४ ॥

( भा० ) अस्योत्तरम्—

( सू० ) साधर्म्यात्संशये न संशयो वैधर्म्यादुभयथा वा संशयेऽत्यन्तसंशयप्रसङ्गो नित्यत्वानभ्युपगमाच्च सामान्यस्याप्रतिषेधः ॥ १५ ॥

( भा० ) विशेषाद्वैधर्म्यादवधार्यमाणेऽर्थे पुरुष इति—न स्थाणुपुरुषसाधर्म्यात्संशयोऽवकाशं लभते । एवं वैधर्म्याद्विशेषात् प्रयत्नानन्तरीयकत्वादवधार्यमाणे शब्दस्यानित्यत्वे नित्यानित्यसाधर्म्यात्संशयोऽवकाशं न लभते । यदि वै लभेत ततः

---

(ख०)संशयसमजातेः प्रत्याख्यानमवतारयति अस्योत्तरमिति ।

तदेव प्रत्याख्यानमाह साधर्म्यादिति सूत्रम् । 'साधर्म्यात्' साधर्म्यदर्शनात्—'संशये' आपाद्यमानेऽपि 'वैधर्म्यात्' विशेषदर्शनानन्तरम्—'न संशयो' भवति—न साधर्म्यदर्शनमात्रं संशयकारणमपि तु विशेषादर्शनसहितमित्यर्थः—'उभयथा साधर्म्यदर्शनात् विशेषदर्शनाच्च, 'संशये' सति—'अत्यन्तसंशयप्रसङ्गः' संशयानुच्छेद एव स्यात्-अपि च 'सामान्यस्य' साधर्म्यस्य नित्यत्वानभ्युपगमाच्च' नित्यं संशयकारणत्वानभ्युपगमाच्च—'अप्रतिषेधः' प्रत्यवस्थानमयुक्तमित्यर्थः ।

सूत्रं व्याचष्टे विशेषादिति । 'वैधर्म्यं' 'विशेष' इत्यनर्थान्तरम् । यदा पुरुषस्य स्थाणोर्विशेषको गुणो मुखनासिकादिसत्त्वरूपो ज्ञायते तदा तस्य स्थाणुसाधर्म्ये दृष्टेऽपि 'स्थाणुर्वाऽयं पुरुषो वेति' न भवति संशयः—अपि तु पुरुषवएवायमिति निश्चितमेव ज्ञानं भवति । स्थाणुदृष्टान्तमापाद्य प्रकृते शब्दानित्यत्वेऽपि तमेव न्यायं योजयति एवमिति ॥

नित्येभ्यो विशेषकं प्रयत्नान्तरीयकत्वं शब्दे उपलभ्य तदनित्यत्वमेव निश्चीयते—सत्यपि च नित्यानित्यसाधारणे गुणान्तरे न तत्र नि-

(भा०)स्थाणुपुरुषसाधर्म्यानुच्छेदादत्यन्तं संशयः स्यात् । गृह्यमाणे च विशेषे नित्यं साधर्म्यं संशयहेतुरिति नाभ्युपगम्यते । न हि गृह्यमाणे पुरुषस्य विशेषे स्थाणुपुरुषसाधर्म्यं संशयहेतुर्भवति ॥ १५ ॥

( ७ ) प्रकरणसमप्रकरणम् ।

(सू०) उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः ॥ १६॥

( भा० ) उभयेन नित्येन चानित्येन च साधर्म्यात्पक्षप्रतिपक्षयोः प्रवृत्तिः प्रक्रिया । अनित्यः शब्दः प्रयत्नानन्तरी-

---

(ख०)त्यानित्यत्वसंशयो भवति ॥ विपक्षे बाधकमाह यदि वै लभेतेति । यदि विशेषदर्शनानन्तरमपि संशयोऽनुवर्त्तेत तर्हि कदापि न सोऽपेयात्—ततश्च स्थाणुर्वायं पुरुषो वेति संशयनित्यत्वप्रसङ्ग इत्यर्थः । एतच्च विशेषदर्शनानन्तरमपि नित्यसंशयकारणत्वं साधर्म्यस्य न केनापि परीक्षकेणाभ्युपगम्यत इत्याह गृह्यमाण इति । तत्रैव दृष्टान्तमाह न हीति ॥ १५ ॥

प्रकरणसमजातेर्लक्षणमाह उभयसाधर्म्यादिति सूत्रम् । स्थापनाहेतौ प्रयुक्तेऽभ्युपगततदनाधिकबलत्वेन प्रमाणान्तरेण हेतोर्बाधाभिधानं प्रकरणसमसूत्रार्थः ॥

सूत्रं व्याचक्षाण उभयसाधर्म्यादिति पदं व्याचष्टे उभयेनेति । साधर्म्यमत्र पक्षप्रतिपक्षोभयसाधकं विवक्षितम् । साधर्म्यादित्युपलक्षणम्—उभयवैधर्म्यादित्यपि द्रष्टव्यमिति तात्पर्यकृतः । प्रक्रियाशब्दार्थमाह पक्षेति । संशय इत्यर्थः । नित्यानित्यसाधर्म्यं शब्दे ज्ञातं तद्विषये पक्षद्वयं प्रवर्त्तयति । तत्र प्रथमं पक्षं प्रदर्शयति अनित्य इति । 'एकः'वादीत्यर्थः । प्रयत्नानन्तरीयकत्वं नित्यसाधर्म्यं दृष्टवतोऽयं पक्षः । द्वितीयःपक्षं प्रदर्शयति द्वितीय इति । द्वितीयश्च नित्यसाधर्म्यात् पक्षं प्रर्त्तयतीति

(भा०)यकत्वाद् घटवदित्येकः पक्षं प्रवर्त्तयति। द्वितीयश्च नित्यसाधर्म्यात्। एवं च सति प्रयत्नानन्तरीयकत्वादिति हेतुरनित्यसाधर्म्येणोच्यमानो न प्रकरणमतिवर्त्तते। प्रकरणानतिवृत्तेस्तर्णयानिर्वतिवर्तनम्।

समानं चैतन्नित्यसाधर्म्येणोच्यमाने हेतौ।
तदिदं प्रकरणानतिवृत्त्या प्रत्यवस्थानं प्रकरणसमः।
समानं चैतद्वैधर्म्येऽपि। उभयवैधर्म्यात् प्रक्रियासिद्धेः प्रकरणसम इति ॥ १६ ॥

(भा०) अस्योत्तरम्—

---

(ख०)शेषः। 'द्वितीयः' प्रतिवादी तत्रैव नित्यसाधर्म्यमस्पर्शवत्त्वादि ज्ञात्वा नित्यः शब्दः इति प्रतिपक्षं प्रवर्त्तयतीत्यर्थः। सूत्रस्थप्रक्रियासिद्धिशब्दार्थमाह एवं चेति। एवञ्च द्वितीयसाधनवृत्तौ सत्यामनित्यसाधर्म्यदर्शनबलेनोच्यमानः प्रयत्नानन्तरीयकत्वहेतुः प्रकरणं नातिवर्त्तते—सांशयिक एव वर्तत इत्यर्थः॥ ननु माऽतिवर्तिष्ट प्रकरणं को दोष इत्यत आह प्रकरणानतिवृत्तेरिति। निर्णयानिर्वर्त्तनमिति। निर्णयानिष्पत्तिरित्यर्थः। यदा संशयो नापैति तदा निर्णयो नैव निष्पद्यत इत्यर्थः॥

एवमनित्यसाधनवादिनं प्रति जात्युत्तरं दर्शयित्वा नित्यसाधनवादिनं प्रत्याह समानमिति। तत्रापि पक्षप्रतिपक्षप्रवृत्त्या संशयापादनेन निर्णयानिष्पत्तिरित्यर्थः।

सूत्रार्थमुपसंहरति तदिदमिति। एवमेवोभयवैधर्म्यादपि नित्याकाशवैधर्म्यात् कृतकत्वात्—अनित्यघटवैधर्म्याच्चास्पर्शवत्त्वादिति—भवति प्रकरणसम इति प्रदर्शयति समानं चैतद्वैधर्म्येपीति ॥ १६ ॥

प्रकरणसमजातेः समाधानमवतारयति अस्येति।

(सू०) प्रतिपक्षात्प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः ॥ १७ ॥

( भा० ) उभयसाधर्म्यात् प्रक्रियासिद्धिं ब्रुवता प्रतिपक्षात्प्रक्रियासिद्धिरुक्ता भवति । यद्युभयसाधर्म्यं तत्र एकतरः प्रतिपक्ष इत्येवं सत्युपपन्नः प्रतिपक्षो भवति । प्रतिपक्षोपपत्तेरनुपपन्नः प्रतिषेधः । यदि प्रतिपक्षोपपत्तिः प्रतिषेधो नोपपद्यते । अथ प्रतिषेधोपपत्तिः प्रतिपक्षो नोपपद्यते । प्रतिपक्षोपपत्तिः

---

(ख०)समाधानमाह—प्रतिपक्षादिति । 'प्रतिपक्षात्' जातिवादिपक्षापेक्षया स्थापनावादिपक्ष एव प्रतिपक्षः तस्मादेव—'प्रकरणस्य' प्रक्रियमाणस्य संशयस्य सिद्धेः सिद्धिर्भवति यस्मात् तस्मात्—'प्रतिषेधस्य' प्रकरणसिद्ध्या वादिपक्षप्रतिषेधस्य 'अनुपपत्तिः'—कस्मात्—'प्रतिपक्षोपपत्तेः'—प्रतिवादिपक्षापेक्षया यः 'प्रतिपक्षः' विरुद्धः पक्षः तस्योपपत्तिः साधकत्वं यस्मादभ्युपगतम्भवति तस्मादिति सूत्रयोजना ।

सूत्रार्थमाह उभयसाधर्म्यादिति । उभयसाधर्म्यात् प्रक्रियासिद्धिरित्यस्यायमेवार्थो यद्यस्मात् पक्षप्रतिपक्षयोर्वादिप्रतिवादीष्टयोः 'साधर्म्यं' समानसाधनत्वम् अस्ति तस्मात् प्रकृतविषयः संशयग्रस्त एवेति । अनेन चैतत्स्पष्टं सूचितं यत् प्रतिपक्षात् जातिवादिनो विरुद्धात् पक्षाद् वादिनोपन्यस्तस्वपक्षसाधनादपि प्रक्रियायाः संशयस्य सिद्धिर्भवतीति । ननु भवत्वेवं तेन किमित्यत आह यद्युभयेति । जातिवाद्युपन्यस्तसाधनवत् वादिनोपन्यस्तमपि साधनं स्वसाध्यसाधने समर्थमित्यभ्युपगतं भवतीति जातिवादिनः 'प्रतिपक्षः' ( वादिनः स्वपक्षः ) 'उपपन्नः' सिद्धतया स्वीकृतो भवतीत्यर्थः । ननु भवतूपपन्नः प्रतिपक्षस्तेनापि किमित्यत आह प्रतिपक्षेति । यदि 'प्रतिपक्षः' जातिवादिपक्षाद् विरुद्धः पक्ष उपपन्नस्तर्हि तस्य 'प्रतिषेधः' तम्प्रति प्रत्यवस्थानं-

(भा०) प्रतिषेधोपपत्तिश्चेति विप्रतिषिद्धमिति ।

तत्त्वानवधारणाच्च प्रक्रियासिद्धेर्विपर्यये प्रकरणावसानात् तत्त्वावधारणे ह्यवसितं प्रकरणं भवतीति ॥ १७ ॥

---

(ख०)कृतं स 'अनुपपन्नः' अयुक्त इत्यर्थः । कथमनुपपन्न इत्यत आह यदीति । प्रतिपक्षो यद्युपपन्नस्तर्हि तस्य प्रतिषेधो न युक्तः-यदि च प्रतिषेध एवोपपन्नस्तर्हि प्रतिपक्ष एव नोपपद्यते-कुतः-यस्मात् प्रतिपक्ष उपपन्नस्तत्प्रतिषेधोऽप्युपपन्न इति परस्परव्याहतं वच इत्यर्थः । इदमत्राकूतम् । द्वयोर्विरुद्धयोः साधनयोरगृह्यमाणविशेषयोः संशयजनकत्वेन प्रतिवादिनाऽभ्युपगततुल्यबलयोः कोऽयमभिमानः प्रतिवादिनो यन्मया स्वपक्षसाधनेनैव वादिनः साधनं दूषणीयमिति । समानबलयोश्चेदात्मीयादेव साधनात् स्वपक्षसिद्धिमिच्छति जातिवादी तर्ह्यनिच्छन्नपि वादिनोऽपि साधनात् वादिपक्षासिद्धिमभ्युपगमयितव्यः ॥ अन्यथा प्रागभ्युपगतस्य तुल्यबलवत्वस्यैव हानिरेकपक्षसिद्ध्या च संशयस्याप्यसम्भव इति प्रकरणसमजातेस्समूलं नाश एवेति ॥

नन्वेवं यदि वादे संशयोद्भावनं न सम्भवति तर्हि प्रकरणसमाख्यो हेत्वाभासोऽप्यनुद्भावनीयः प्राप्नोतीत्यत आह-तत्त्वानवधारणादिति । यदोभयपक्षसिद्ध्या संशयेन प्रत्यवस्थानं तदैवोक्तप्रकारेणासदुत्तरत्वम्-यदा तु प्रकृतविषये एकतरपक्षज्ञानाभावादेव संशयस्तत्र 'विपर्यये' एकतरपक्षनिश्चये 'प्रकरणस्य' संशयस्य 'अवसानम्' अपसरणं भवत्येवेत्यर्थः । पक्षप्रतिपक्षोभयसिद्धिमभ्युपगम्य यदा संशय उद्भाव्यते तदा भवत्यसदुत्तरं जातिः-यदा तु कतरः पक्षो ज्यायानित्यनवधारयन् केवलं सत्प्रतिपक्षतया परोक्तसाधनमनिश्चायकं करोमीति बुद्ध्या प्रतिवादी साधनं प्रयुङ्क्ते तदा नासदुत्तरमपि तु हेत्वाभासोद्भावनं सदेवोत्तरमित्याशयः ॥ १७ ॥

( ८ ) अहेतुसमप्रकरणम् ।

(सू०) त्रैकाल्यासिद्धेर्हेतोरहेतुसमः ॥ १८ ॥

( भा० ) हेतुः साधनम् । तत्साध्यात् पूर्वं पश्चात्सह वा भवेत् । यदि पूर्वं साधनम्, असति साध्ये कस्य साधनम् । अथ पश्चाद्, असति साधने कस्येदं साध्यम् । अथ युगपत्साध्यसाधने, द्वयोर्विद्यमानयोः किं कस्य साधनं किं कस्य साध्यमिति । हेतुरहेतुना न विशिष्यते । अहेतुना साधर्म्यात् प्र-
( भा० ) त्यवस्थानमहेतुसमः ॥ १८ ॥

---

(ख०)अहेतुसमजातिं लक्षयति त्रैकाल्येति । तदर्थमाह हेतुरिति । हेतुरत्र साधनमेव विवक्षितमित्यर्थः । त्रैकाल्यासिद्धिं विशदयितुं विकल्पयति तत्साध्यादिति । यस्य साध्यस्य साधनाय साधनमुपादीयते तस्मात् साध्यात् साधनं पूर्वं पश्चात् सह वा भवेदिति त्रयोऽत्र विकल्पाः सम्भवन्तीत्यर्थः । तत्र प्रथमं विकल्पं निरस्यति यदि पूर्वमिति । यदि साधनं साध्यात् प्रागेवास्ति तदा साधनकाले साध्याभावात् किं साधयेत् तत्साधनम्—तथाच साधनस्य साधनाभाववत्त्वप्रसङ्ग इत्यर्थः । द्वितीयं विकल्पं निरस्यति अथ पश्चादिति । यदि साध्यात् पश्चात् साधनं तर्हि साध्यकाले साधनस्याभावात् केन साधनेनेदं साध्यं सिद्धं स्यात्—तथाच साध्यस्य साध्यत्वाभावप्रसङ्ग इत्यर्थः । तृतीयं विकल्पं निरस्यति अथ युगपदिति । यदि साधनं साध्यं च सहैव भवतस्तर्हि तयोर्निर्विशेषयोः कतरत् साधनं कतरच्च साध्यमिति नियामकं न स्यात्—तथाच साध्यसाधनभावाभावप्रसङ्ग इत्यर्थः ॥ एवं च सहभावेऽविशेषादहेतुः, पूर्वापरभावे त्वेकतरसम्बन्ध्यनुपपत्तेरेव—साध्यसाधनत्वोपहितरूपत्वात् साधनसाध्ययोरिति निष्कर्षः ॥

अहेतुसम इति जातिनाम व्युत्पादयति हेतुरिति । स्थापनावादि-

( भा० ) अस्योत्तरम्—

(सू०) न हेतुतः साध्यसिद्धेस्त्रैकाल्यासिद्धिः ॥१९॥

( भा० ) न त्रैकाल्यासिद्धिः । कस्मात्—हेतुतः साध्यसिद्धेः । निर्वर्तनीयस्य निर्वृत्तिर्विज्ञेयस्य विज्ञानमुभयं कारणतो दृश्यते । सोऽयं महान्प्रत्यक्षविषय उदाहरणमिति । यत्तु खलूक्तम्—असति साध्ये कस्य साधनमिति—यत्तु निर्वर्त्यते यच्च

---

(ख०)नोपन्यस्तो यो हेतुः सोऽसाधकत्वात् 'अहेतु'रेवेति अहेतुसाधर्म्येण हेतुं दूषयतीयं जातिरित्यतोऽस्या नामाहेतुसमेति ।

अत्रोदयनाचार्या आहुः—कृतिज्ञप्तिसाधारणीयं जातिः । अस्याश्च प्राप्त्यप्राप्तिसमाभ्यामयं भेदः । तत्र स्वरूपतः सन्निकर्षासन्निकर्षचिन्ता—इह तु कारणतः । पुनः ते अर्थद्वारिके—इयं शब्दद्वारिका । पुनः ते द्विविकल्पोपक्रमे—इयं त्रिविकल्पोपक्रमा । पुनः तत्र सहकारिशक्तिर्दृष्टा इह स्वरूपशक्तिः । पुनः ते विशेषणासिद्धिदेशनाभासे इयं प्रतिकूलतर्कदेशनाभासेति ॥ १८ ॥

अहेतुसमजातेः प्रत्याख्यानमवतारयति अस्येति ।

प्रत्याख्यानमाह—न हेतुत इति सूत्रम् । सूत्रान्वयमाह नेति । तस्यार्थमाह निर्वर्तनीयस्येति । कार्यज्ञाप्यभेदेन द्विविधं 'साध्यम्'—तत्क्रमेण कारणज्ञापकभेदेन द्विविधं 'साधनम्' । उभयत्राऽपि 'न त्रैकाल्यासिद्धिः'—कस्मात्—यस्मात् कार्यस्य करणं ज्ञाप्यस्य ज्ञापनं च यदा भवति तदा तत्तत्कारणादेव भवतीति सर्वजनप्रत्यक्षसिद्धमेतत्—तथा च कारणस्योभयत्रापि साध्यात् प्रागेव सत्त्वं सुस्थिरम्—एवं च पूर्वकालयुक्त एव हेतुरुत्तरकालयुक्तमेव साध्यमिति पर्यवासितम् ॥ पूर्वसूत्रभाष्योक्तं 'यदि पूर्वं साधनमसति साध्ये कस्य साधनमिति' तर्कमुत्तरयितुमनुवदति यत्तु खल्विति । तस्योत्तरमाह यत्त्विति ।

विज्ञाप्यते तस्येति ॥ १९ ॥

(सू०) प्रतिषेधानुपपत्तेश्च प्रतिषेद्धव्याप्रतिषेधः ॥२०॥

( भा० ) पूर्वं पश्चाद्युगपद्वा प्रतिषेध इति नोपपद्यते । प्रतिषेधानुपपत्तेः स्थापनाहेतुः सिद्ध इति ॥ २० ॥

(९) अर्थापत्तिसमप्रकरणम् ।

(सू०) अर्थापत्तितः प्रतिपक्षसिद्धेरर्थापत्तिसमः ॥२१॥

(ख०)यत् क्रियते तस्यैव करणं यच्च ज्ञाप्यते तस्यैव ज्ञापकमिति—कृतिज्ञप्तिपक्षयोस्सर्वत्र यत् साध्यते तस्यैव साधनमित्यर्थः । असतः साध्यस्य कथंसाधनोपाधित्वमिति चेत्—व्यवहारं प्रति बुद्धिसिद्धत्वात् व्यापारं प्रति तूपधानानुपयोगः, स्वभावशक्तेः स्वत एव नियतत्वात् । भिन्नकालयोः कथं सम्बन्ध इति चेत्—सम्बन्धस्यैवास्यैवंस्वभावत्वात्—पौर्वापर्यनियमो हि कार्यकारणभाव इत्यादिबोधसिद्धावुदयनाचार्याः ॥ १९ ॥

अपरमपि समाधानं प्रतिवान्दिरूपमाह प्रतिषेधानुपपत्तेरिति सूत्रम् । यथा भवदुक्तानुसारेण साध्यसाधनयोः पूर्वपश्चात्सहभावानुपपत्त्या साध्यसाधनभावो नोपपद्यते--तथैव प्रतिषेधोऽपि प्रतिषेध्यस्य साधनमेव न भवतीति प्रतिषेधप्रतिषेध्यभावोऽप्युक्तादेव हेतोर्नोपपद्यते—तथाच भवदुक्तस्य प्रतिषेधस्यानुपपत्तिस्तस्माच्च प्रतिषेद्धव्यस्य प्रतिषेधो न युज्यत इत्यर्थः ॥

सूत्रार्थमाह पूर्वमिति । ननु भवतु प्रतिषेधानुपपत्तिः किन्तेनेत्यत आह स्थापनाहेतुरिति । स्थापनाहेतुप्रतिषेधो यद्यनुपपन्नस्तर्हि सुस्थापित एव भवति स्थापनाहेतुरिति जात्युत्तरस्य वैफल्यमित्याशयः ॥ २० ॥

अर्थापत्तिसमजातिलक्षणमाह अर्थापत्तित इति । स्थापनावादिना

( भा० ) अनित्यः शब्दः प्रयत्नानन्तरीयकत्वाद् घटवदिति स्थापिते पक्षे—अर्थापत्त्या प्रतिपक्षं साधयतोऽर्थापत्तिसमः। यदि प्रयत्नानन्तरीयकत्वादनित्यसाधर्म्यादनित्यः शब्द इत्यर्थादापद्यते—नित्यसाधर्म्यान्नित्य—इति । अस्ति चास्य नित्येन साधर्म्यमस्पर्शत्वमिति ॥ २१ ॥

( भा० ) अस्योत्तरम्—

**(सू०) अनुक्तस्यार्थापत्तेः पक्षहानेरुपपत्तिरनुक्तत्वादनैकान्तिकत्वाच्चार्थापत्तेः ॥ २२ ॥**

---

(ख०)उक्तस्य विपरीताक्षेपशक्तिरेवात्र—'अर्थापत्तिः'—'ततः' तदभासात—'प्रतिपक्षस्य' तद्विरुद्धपक्षस्य 'सिद्धेः' प्रत्यवस्थानात्—अर्थापत्तिसमा जातिरित्यर्थः । उदाहरणपुरस्सरं सूत्रं योजयति अनित्य इति । अत्र स्थापनाहेतौ प्रयत्नानन्तरीयकत्वं हेतुः शब्दानित्यत्वसाधनायोपन्यस्तस्तस्यैव विपरीताक्षेपशक्त्या यदा जातिवादी शब्दनित्यत्वं साधयितुं प्रत्यवतिष्ठते तदा भवत्यर्थापत्तिसमा जातिरित्यर्थः ॥ विपरीताक्षेपशक्तिं प्रदर्शयति यदीति । अनित्यसाधर्म्यादनित्यः शब्द इत्यनेनार्थादापाद्यते यत् यदि भवति तस्य नित्यसाधर्म्यं तदा स नित्य एवेति । भवति चास्य नित्यसाधर्म्यमित्याह अस्ति चेति । यथा नित्यमाकाशमस्पर्शवत् तथा शब्दोऽप्यस्पर्शवानिति भवति नित्यसाधर्म्यं शब्दस्य—तथाच नित्यत्वमित्यर्थः । 'अनित्यसाधर्म्यादनित्यं शब्दं ब्रुवाणो भवाननक्षरं नित्यसाधर्म्यान्नित्यत्वं शब्दस्य ब्रूते' इत्येवात्र प्रत्यवस्थानप्रकारः। साधर्म्यसमादौ तु न वाद्यभिप्रायवर्णनमित्यतो भेदः ॥२१॥

अर्थापत्तिसमजातिसमाधानमवतारयति अस्येति ।

समाधानमाह अनुक्तस्येति सूत्रम् । 'अनुक्तस्य' अनुक्तमात्रस्य सर्वस्य 'अर्थापत्तेः' अर्थापत्तित्वं यदि मन्यते भवान् ततः—भवतः 'पक्षहानेः'—

( भा० ) अनुपपाद्य सामर्थ्यमनुक्तमर्थादापद्यते इति ब्रुवतः पक्षहानेरुपपत्तिरनुक्तत्वात् । अनित्यपक्षसिद्धावर्थादापन्नं नित्यपक्षस्य हानिरिति ।

अनैकान्तिकत्वाच्चार्थापत्तेः । उभयपक्षसमा चेयमर्थापत्तिः । यदि नित्यसाधर्म्यादस्पर्शत्वादाकाशवच्च नित्यः शब्दोऽर्थादाप-

---

(ख०)'उपपत्तिः'—कुतः—'अनुक्तत्वात्'—भवत्पक्षहानिरनुक्ताऽतो यद्यनुक्तमोत्रणार्थापत्तिस्तदा भवत्पक्षहानिरप्यर्थादापद्यत एव। तत्रैव हेत्वन्तरम्—'अर्थापत्तेः' 'अनैकान्तिकत्वात्' व्यभिचरितत्वात् एकतरपक्षानुपपादकत्वादिति ।

सूत्रं व्याचष्टे अनुपपाद्येति । तदेव खल्वनुक्तं वचनाल्लभ्यते यत्कल्पनमन्तरेण वचनार्थो न घटते—यथा पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र रात्रिभोजनम् । न तु—अव्यभिचारिणः साधर्म्यात् साध्ये साध्यमाने—अर्थादुक्तं भवति 'व्यभिचारिणाऽपि साधर्म्येण साधयितव्यमिति'—तस्य वाक्यार्थोपपादनेऽसामर्थ्यात् , तदन्तरेणापि वाक्यार्थोपपत्तेः ॥ एवं सत्यपि यद्यनुपलब्धसामर्थ्यमनुक्तमात्रमर्थाद् गम्यते तर्हि भवता नित्यत्वापादने शब्दस्योच्यमानेऽनुच्यमानमनित्यत्वमपि प्रत्येतव्यम्—तथाच भवदाभिमतस्य 'पक्षस्य' नित्यत्वस्य 'हानिः' व्याहतिरित्यर्थः॥ तदेतत्सर्वमभिप्रेत्याह अनित्यपक्षेति ॥

अनैकान्तिकत्वाच्चार्थापत्तेरिति सूत्रांशं व्याचष्टे अनैकान्तिकत्वादिति । अर्थापत्तेर्जातिवादिनोऽपि पक्षहानिर्भवत्येवेत्यत्र हेत्वन्तरमिदम् । या किलार्थापत्तिर्भवतोपन्यस्ता सा यथा भवतः पक्षं साधयति तथा स्थापनावादिनोऽपि पक्षमित्याह उभयेति । कथमुभयपक्षसाधनमिति प्रदर्शयति यदि नित्येति । यद्यनित्यसाधर्म्यात्प्रयत्नानन्तरीयकत्वादनित्यः शब्द इत्युच्यते तदा नित्यसाधर्म्यान्नित्यः स इत्य-

( भा० ) ननु—अनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्य-इति। न चेयं विपर्ययमात्रादेकान्तेनार्थापत्तिः। न खलु वै घनस्य ग्राव्णः पतनमिति अर्थादापद्यते-द्रवाणामपां पतनाभाव-इति ॥ २२ ॥

(१०) अविशेषसमप्रकरणम्।

( सू० ) एकधर्मोपपत्तेरविशेषे सर्वाविशेषप्रसङ्गात्सद्भावोपपत्तेरविशेषसमः ॥ २३ ॥

---

(ख०)र्थादापाद्यते इत्येषाऽर्थापत्तिर्भवदभिप्रेता। एतस्या एवानुसारेण-'यदि नित्यसाधर्म्यादस्पर्शवत्त्वान्नित्यः शब्द इत्युच्यते तर्ह्यनित्यसाधर्म्यात् प्रयत्नानन्तरीयकत्वादनित्यः स इत्यर्थापाद्यते'—इत्यस्यापि सुवचत्वमित्यर्थः॥ व्यभिचाराच्चानैकान्तिकत्वमर्थापत्तेः प्रदर्शयति न चेयमिति। 'विपर्ययमात्रेण' निषेधमात्रेण 'एकान्तेन' सार्वत्रिकत्वेन। नहि भोजननिषेधादेव भोजनविपरीतं 'अभोजनम्' सार्वत्रिकं कल्प्यते। भाष्यकारोऽपि दृष्टान्तमाह न खल्विति। 'घनस्य ग्राव्णः पतन'मित्यस्य पूर्ववाक्यानुकूलं विपर्ययरूपत्वसम्पादनाय वाक्यं 'घनत्वरहितस्य ग्राव्णः न पतन'मित्येतत्परन्नेयम्। एवं ह्यस्य विपर्ययरूपता। तथाच घनत्वरहितग्राव्णोऽपतनमित्यनेन सर्वस्यैव घनत्वरहितस्य द्रव्यस्य पतनाभाव इत्यर्थादापादानं न युक्तम्—तथा सति घनत्वरहितस्य जलस्य पतनाभावप्रसङ्ग इति निर्गलितोऽर्थः। अस्मादेव कारणात् भाष्यकारीयोदाहरणेनातुष्यन्नुदाहरणान्तरमुपन्यस्तवन्तस्तात्पर्यकृत इत्यवधेयम् ॥ २२ ॥

अविशेषसमजातिलक्षणमाह—एकधर्मेति। 'एकधर्मस्य' कृतकत्वलक्षणस्य 'उपपत्तेः' दृष्टान्तपक्षयोर्घटशब्दयोर्वर्तमानत्वात्—'अविशेषे'

( भा० ) एको धर्मः प्रयत्नानन्तरीयकत्वं शब्दघटयोरुपपद्यत इत्यविशेषे उभयोरनित्यत्वे सर्वस्याविशेषः प्रसज्यते । कथम् ? सद्भावोपपत्तेः । एको धर्मः सद्भावः सर्वस्योपपद्यते ।

**सद्भावोपपत्तेः सर्वाविशेषप्रसङ्गात् प्रत्यवस्थानमविशेषसमः॥२३॥**

( भा० ) अस्योत्तरम्—

---

(ख०)यदि साधर्म्यम् अनित्यत्वलक्षणम् भवेत्तर्हि—'सद्भावस्य' सत्त्वरूपधर्मस्य 'उपपत्तेः' सर्वद्रव्येषु वर्त्तमानत्वात्—'सर्वाविशेषप्रसङ्गः' त्रैलोक्यस्याप्यविशेषः किन्न स्यादित्येवं प्रत्यवस्थानमाश्रित्य भवत्यविशेषसमा जातिरित्यर्थः ॥

उदाहरणपूर्वकं सूत्रं विवृणोति एको धर्म इति । यदि घटसाधर्म्यात् प्रयत्नानन्तरीयकत्वात् घटेनाविशेषेऽनित्यत्वाख्यः शब्दस्य—तर्हि सत्त्वात् साधर्म्यात् सर्वेषां सर्वाविशेषप्रसङ्ग इत्यर्थः । हेतुं पृच्छति कथमिति । तत्रोत्तरम् सद्भावेति । 'सद्भावः' सत्त्वम्–स सर्वेषु वर्त्ततेऽतः सर्वाविशेषप्रसङ्ग इत्यर्थः । न च भवति सर्वाविशेषः–तथैव प्रयत्नानन्तरीयकत्वादपि साधर्म्यादनित्यत्वरूपोऽप्यविशेषो न भवितुं युक्त इति प्रत्यवस्थानाशयः । असाधकत्वदेशनाभासा चेयं जातिः ॥ एकसाधर्म्यात्प्रत्यवस्थानं 'साधर्म्यसमः' सर्वद्रव्यसाधारणधर्मसत्त्वात्त्वविशेषसम इति विवेकः ॥

अन्ये त्विदं सूत्रमन्यथा व्याचक्षते । तथाहि—एकधर्मोपपत्तेः साधनधर्मस्य प्रयोजकत्वात् अविशेषसाध्यधर्मवत्तालक्षणे पक्षदृष्टान्तयोः सर्वाविशेषः सर्वप्रकारेणाविशेषः–प्रसज्येत । सद्भावोपपत्तेरिति साहित्यसद्भावोपपत्तेरिति । स च सर्वप्रकाराविशेषस्त्रिविधः—व्यक्तितो जातितः साध्यधर्मतश्चेत्यादिबोधसिद्धौ स्पष्टम् ॥ २३ ॥

अविशेषसमजातेः प्रत्याख्यानमवतारयति अस्येति ।

( सू० ) क्वचिद्धर्मानुपपत्तेः क्वचिच्चोपपत्तेः प्रतिषेधाभावः ॥ २४ ॥

( भा० ) यथा साध्यदृष्टान्तयोरेकधर्मस्य प्रयत्नानन्तरीयकत्वस्योपपत्तेरनित्यत्वं धर्मान्तरमविशेषो, नैवं सर्वभावानां सद्भावोपपत्तिनिमित्तं धर्मान्तरमस्ति येनाविशेषः स्यात् । अथ मतम्—"अनित्यत्वमेव धर्मान्तरं सद्भावोपपत्तिनिमित्तं भावानां सर्वत्र स्यात्"—इति—एवं खलु वै कल्प्यमाने "अनित्याः सर्वे भावाः सद्भावोपपत्तेरिति" पक्षः प्राप्नोति । तत्र प्रतिज्ञार्थव्यतिरिक्तमन्यदुदाहरणं नास्ति । अनुदाहरणश्च हेतुर्नास्तीति । प्रति-

---

(ख०)प्रत्याख्यानमाह क्वचिदिति सूत्रम् । 'क्वचित्' साधर्म्ये प्रयत्नानन्तरीयकत्वादौ सति शब्दस्य घटादिना सह — 'तद्धर्मस्य' घटधर्मस्य अनित्यत्वस्य—'उपपत्तेः—'क्वचिच्च' साधर्म्ये सत्त्वादौ शब्दस्य भावमात्रेण सह—'अनुपपत्तेः' तद्धर्मस्येति शेषः—भावमात्रधर्मस्यानुपपत्तेरित्यर्थः—'प्रतिषेधाभावः'—जातिवाद्युक्तः प्रतिषेधोऽयुक्त इति योजना । अविनाभावसम्पन्नमेव साधर्म्यं गमकं न तु साधर्म्यमात्रमित्याशयः ॥

अमुमेवार्थमाह भाष्यकारः यथा साध्येति । अनित्यत्वं धर्मान्तरमिति प्रयत्नानन्तरीयकत्वव्यापकमित्यर्थः । सद्भावोपपत्तिनिमित्तकमिति सद्भावव्यापकमिति यावत्—सत्त्वादेर्व्याप्यत्वासम्भवादिति हृदयम् ॥

अत्रान्तरे वैनाशिकः सत्ताव्यापकमनित्यत्वं मन्यमानो देशनमुत्थापयति अथ मतमनित्यत्वमिति । तन्निराकरोति एवं खल्विति । वैनाशिकाभिमतप्रयोगमुपन्यस्यति अनित्या इति । तत्र दूषणमाह—तत्रेति । सर्वस्यार्थजातस्य पक्षान्तःपतितत्वादुदाहरणासम्भव इत्यर्थः । ननु माभूदुदाहरणं किन्तेनेत्यत आह—अनुदाहरण इति ।

( भा० ) प्रतिज्ञैकदेशस्य चोदाहरणत्वमनुपपन्नम्–न हि साध्यमुदाहरणं भवति । सतश्च नित्यानित्यभावाद्दनित्यत्वानुपपत्तिः । तस्मात्–सद्भावोपपत्तेः सर्वाविशेषप्रसङ्ग–इति निरभिधेयमेतद्वाक्यमिति । सर्वभावानां सद्भावोपपत्तेरनित्यत्वमिति ब्रुवताऽनुज्ञातं शब्दस्यानित्यत्वम् । तत्रानुपपन्नः प्रतिषेध इति ॥ २४ ॥

---

(ख०)उदाहरणस्याप्यनुमानवाक्यावयवभूतत्वात्तद्रहितमनुमानवाक्यमङ्गविकलं स्यादित्याशयः । ननु सर्ववस्तूनां पक्षान्तःपतितत्वेऽपि किमिति तदन्तर्गतमेव किञ्चिदुदाहरणं न भवति–तथाच प्रयोगः 'अनित्याः सर्वे भावाः सद्भावोपपत्तेः घटवदिति'–इत्यत आह प्रतिज्ञैकदेशस्येति । तत्र हेतुमाह नहीति । यत् स्वयं साधनीयं तन्नोदाहरणं भवति सिद्धस्यैवोदाहरणत्वसम्भवात्–सर्वान्तःपतितत्वाच्च घटादीनां सर्वेषामेव साधनीयत्वमेवेति न भवति किमपि घटाद्युदाहरणमिति भावः ॥ वैनाशिकाभिमतानुमानवाक्ये उदाहरणासम्भवादङ्गवैकल्यं प्रदर्श्य तत्रत्यहेतोः सद्भावोपपत्तेरित्यस्यानैकान्तिकत्वादसाधकत्वं दर्शयति सतश्चेति । सन्तः केचन प्रमाणावधृतनित्यत्वाः—यथाऽऽकाशदिगात्मपरमाणवः–केचित्तु प्रमाणविनिश्चितानित्यभावाः–यथा घटादयः—तस्मात् सत्त्वमनैकान्तिकत्वादसाधकं नित्यत्वस्यानित्यत्वस्य वेत्यर्थः ॥ उपसंहरति तस्मादिति । निरभिधेयमिति । अर्थशून्यम् रिक्तमिति यावत् ॥

अपि च यदि शब्दानित्यत्ववादी पूर्वपक्षी उपरिनिर्दिष्टं वैनाशिकानुमानप्रयोगमभ्युपगच्छति तदा भवति तस्य स्वपक्षहानिरित्याह सर्वभावानामिति । सद्भावोपपत्तेस्सर्वेषां भावानामनित्यत्वं ब्रुवता शब्दस्याप्यनित्यत्वमभ्युपगतं भवतीत्यर्थः । जातिवादी प्रतिषेध्यं शब्दानित्यत्वं साधयत्येव न प्रतिषेधतीत्यर्थः ॥ २४ ॥

## (११) उपपत्तिसमप्रकरणम् ।

(सू०) उभयकारणोपपत्तेरुपपत्तिसमः ॥ २५ ॥

(भा०) यद्यनित्यत्वकारणमुपपद्यते शब्दस्येत्यनित्यः शब्दो नित्यत्वकारणमप्युपपद्यतेऽस्यास्पर्शत्वमिति नित्यत्वमप्युपपद्यते । उभयस्यानित्यत्वस्य नित्यत्वस्य च कारणोपपत्त्या प्रत्यवस्थानमुपपत्तिसमः ॥ २८ ॥

(भा०) अस्योत्तरम्—

(सू०) उपपत्तिकारणाभ्यनुज्ञानादप्रतिषेधः ॥२६॥

(भा०) उभयकारणोपपत्तेरिति ब्रुवता नानित्यत्वकारणोपपत्तेरनित्यत्वं प्रतिषिध्यते । यदि प्रतिषिध्यते—नोभयकार-

---

(ख०) उपपत्तिसमजातिलक्षणमाह उभयेति सूत्रम् । सूत्रार्थमाह यद्यनित्यत्वेति । यथा शब्दस्यानित्यत्वकारणं प्रयत्नानन्तरीयकत्वं वर्तते तथा तस्य नित्यत्वकारणमस्पर्शवत्त्वमपि वर्तत इत्याह उभयस्येति ।

प्रकरणसमायां जातौ पक्षप्रतिपक्षसाधनयोः समानबलत्वेऽपि प्रतिवादी साधनात् स्वपक्षसिद्ध्या वादिसाधनदूषणे प्रवर्त्तते—उपपत्तिसमायां तु स्वसाधनेनैवेति विवेकः । बाधदेशनाभासा चेयं जातिः ॥ २५ ॥

उपपत्तिसमजातिप्रत्याख्यानमवतारयति अस्येति ।

प्रत्याख्यानमाह उपपत्तीति सूत्रम् । 'उपपत्तिकारणस्य'—स्थापनावाद्यभिमतस्य साधनस्य 'उपपत्तौ' यत् 'कारणं' तस्य—प्रतिवादिना 'अभ्यनुज्ञानात्'—अप्रतिषेधः, तदुक्तप्रतिषेधोऽयुक्त इति योजना ।

सूत्रार्थमाह उभयकारणेति । उभयस्य नित्यानित्यत्वस्य उपपत्तिं ब्रुवता जातिवादिनाऽनित्यत्वमपि स्वीक्रियत एवेत्यर्थः । कथमेतदित्यपेक्षायामाह यदीति । यद्यनित्यत्वप्रतिषेधोऽपि तस्य विवक्षितः तर्हि

(भा०)णोपपत्तिः स्यात् । उभयकारणोपपत्तिवचनादनित्यत्व-कारणोपपत्तिरभ्यनुज्ञायते । अभ्यनुज्ञानादनुपपन्नः प्रतिषेधः ।

"व्याघातात्प्रतिषेध इति चेत्" समानो व्याघातः । "एकस्य नित्यत्वानित्यत्वप्रसङ्गं व्याहतं ब्रुवतोक्तः प्रतिषेध इति चेत्" स्वपक्षपरपक्षयोः समानो व्याघातः । स च नैकतरस्य साधक इति ॥२६॥

(१२) उपलब्धिसमप्रकरणम् ।

(सू०) निर्दिष्टकारणाभावेऽप्युपलम्भादुपलब्धिसमः ॥२७॥

---

(ख०)उभयकारणोपपत्तिरिति व्याहतं स्यादित्यर्थः । तत्र हेतुमाह उभयेति । उभयकारणोपपत्तिं ब्रुवता नित्यत्वस्येव अनित्यत्वस्याप्युपपत्ति-रनुज्ञायत एवेत्यर्थः । उपसंहरति अभ्यनुज्ञानादिति । अनित्यत्वस्य प्रतिषेधोऽयुक्त इत्यर्थः ॥

शङ्कते व्याघातादिति । परिहरति समान इति । शङ्कातात्पर्यमनुवदति एकस्येति । एकस्यैव शब्दस्य नित्यत्वानित्यत्वप्रसङ्गे व्याघात एवानित्यत्वप्रतिषेधहेतुतया उक्त इत्याशयः । परिहाराशयं विवृणोति स्वपक्षेति । उक्तो व्याघातो यथाऽनित्यत्वस्यायुक्तत्वं साधयति तथैव नित्यत्वस्यापीति तद्बलेनैकतरस्य नित्यत्वस्य साधनं न युक्त-मित्यर्थः । तदिदमनुत्तरम्—स्वात्मप्रतिक्षेपकत्वादिति हृदयम् ॥

प्रकरणसमप्रत्याख्यानवदेवास्यापि प्रत्याख्यानं द्रष्टव्यमिति तात्पर्यकृतः ॥ २६ ॥

उपलब्धिसमजातिलक्षणमाह निर्दिष्टेति सूत्रम् । वादिना निर्दिष्टस्य प्रमित्यङ्गस्य व्यापारवतः 'कारणस्य' अभावेऽपि साध्यस्य उपलम्भात् प्रत्यवस्थानमुपलब्धिसम इति सूत्रार्थः ॥

(भा०) निर्दिष्टस्य प्रयत्नानन्तरीयकत्वस्यानित्यत्वकारणस्याभावेऽपि वायुनोदनाद्वृक्षशाखाभङ्गजस्य शब्दस्यानित्यत्वमुपलभ्यते। निर्दिष्टस्य साधनस्याभावेऽपि साध्यधर्मोपलब्ध्या प्रत्यवस्थानमुपलब्धिसमः ॥ २७ ॥

(भा०) अस्योत्तरम्—

(सू०) कारणान्तरादपि तद्धर्मोपपत्तेरप्रतिषेधः ॥२८॥

(भा०)प्रयत्नानन्तरीयकत्वादिति ब्रुवता कारणत उत्पत्ति·

---

(ख०)सूत्रार्थं विभजते निर्दिष्टस्येति। स्थापनावादिना 'निर्दिष्टस्य-' अनित्यत्व'कारणस्य' ज्ञापकस्य प्रयत्नानन्तरीयकत्वरूपस्य-'अभावेऽपि'-साध्यस्य शब्दानित्यत्वस्य 'उपलम्भात्'-वायुनोदनादिजन्ये शब्दे-न युक्तः प्रयत्नानन्तरीयकत्वहेतुना शब्दानित्यत्वसाधनमित्येवं यत् प्रत्यवस्थानं तदेवोपलब्धिसमा जातिरित्यर्थः।

इयं च जातिः पञ्चधा प्रवर्त्तते। (१)साध्याभावेऽपि धर्म्युपलभ्यत इति बाधः। (२)साधनाभावेऽपि धर्म्युपलभ्यत इत्यासिद्धिः। (३)उभयाभावेऽपि धर्म्युपलभ्यत इत्युभयम्। (४)साधनाभावेऽपि साध्यधर्म उपलभ्यत इत्यव्याप्तिः। (५)साध्यधर्माभावेऽपि साधनधर्म उपलभ्यत इत्यतिव्याप्तिरित्यादि प्रपञ्चितं बोधसिद्धावुदनाचार्यैः ॥२७॥

उपलब्धिसमजातेः प्रत्यादेशमवतारयति अस्येति।

प्रत्यादेशमाह कारणान्तरादिति सूत्रम्। 'तद्धर्मस्य' साध्यधर्मस्य अनित्यत्वस्य-'कारणान्तरात्' ज्ञापकान्तरात् स्थापनावाद्युपन्यस्तादेकस्मात् प्रयत्ननान्तरीयकत्वरूपात् अन्यत् कारणं वायुनोदनादि ततोऽपि-'उपपत्तेः' अस्माभिरभ्युपगमात्-'अप्रतिषेधः' प्रतिषेधोऽयुक्त इति योजना।

उदाहरणपुरस्सरं सूत्रार्थं विवृणोति प्रयत्नेति। यदा स्थापनावादी

(भा०)रभिधीयते न कार्यस्य कारणनियमः । यदि च कारणान्तरादप्युत्पद्यमानस्य शब्दस्य तदनित्यत्वमुपपद्यते किमत्र प्रतिषिध्यत इति ॥ २८ ॥

(१३) अनुपलब्धिसमप्रकरणम् ।

( भा० ) न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिः । कस्मात् ? आवरणाद्यनुपलब्धेः । यथा विद्यमानस्योदकादेरर्थ-

---

(ख०)प्रयत्ननान्तरीयकत्वाद्धेतोः शब्दस्यानित्यत्वं साधयति तदा तस्येदमेव तात्पर्यं यत् कारणादुत्पद्यते शब्द इति—कारणं विना नैवोत्पद्यते—तावतैव ह्यस्यानित्यत्वसिद्धिः । न च प्रयत्नमात्रजन्यत्वं हेतुर्विवक्षितः । प्रयत्नस्य कारणमात्रोपलक्षकत्वात् । न तु 'प्रयत्नादेवोत्पद्यते शब्दो' नान्यस्मात्कारणादिति तात्पर्यमित्याह न कार्यस्येति । ननु भवत्वेवं तथाऽपि मम प्रत्यवस्थानमवतिष्ठत एवेत्यत आह यदि चेति । स्थापनावाद्युपन्यस्तकारणात्कारणान्तरेभ्योऽपि शब्दस्योत्पत्तौ सत्यां यद्यनित्यत्वं सिध्यत्येव—तर्हि निर्दिष्टकारणाभावेऽप्युपलम्भ इत्यत्र नास्माकं विरोधः । उत्पद्यमानत्वमात्रहेतोरानित्यत्वसाधन एवास्माकं तात्पर्यम् । अतः प्रतिषेध्यस्याभावात् कस्यायम्प्रतिषेधः ॥ २८ ॥

अनुपलब्धिसमजातेर्लक्षणं दर्शयितुमादौ तत्प्रतिषेध्यमेव स्थापनावादिपक्षमुपन्यस्यति भाष्यकारः न प्रागुच्चारणादिति । प्रागुच्चारणाच्छब्दस्यानुपलब्धिरेव तस्य तत्प्रागविद्यमानत्वं तत्पश्चात्प्रयत्ननिष्पन्नत्वं च सूचयतीत्युक्ते शब्दानित्यतात्राद्याह—उच्चारणात्प्रागपि विद्यत एव शब्दः तदनुपलब्धिमात्रं न तस्याविद्यमानत्वं साधयति विद्यमानस्याप्यनुपलब्धिसम्भवादिति । तत्रैव प्रत्युत्तरमिदं न प्रागुच्चारणादिति । प्रागुच्चारणाद् विद्यमानोऽपि शब्दो नोपलभ्यत इति न मृष्यामहे । पृच्छति कस्मादिति—तत्र उत्तरम् आवरणादीति । विद्यमान-

(भा०)स्याऽऽवरणादेरनुपलब्धिः नैवं शब्दस्याग्रहणकारणेनाऽऽवरणादिनाऽनुपलब्धिः। गृह्येत चैतदस्याग्रहणकारणमुदकादिवत्। न गृह्यते। तस्मादुदकादिविपरीतः शब्दोऽनुपलभ्यमान इति।

(सू०) तदनुपलब्धेरनुपलम्भादभावसिद्धौ तद्विपरीतोपपत्तेरनुपलब्धिसमः॥ २९॥

---

(ख०)स्यार्थस्य यदा यदाऽनुपलब्धिर्भवति तदा तदाऽऽवरणादिकारणविशेषमूलिकैव। न च प्रकृते किमप्यावरणादिकं दृश्यते। अमुमर्थं दृष्टान्तेन विशदयति यथेति। पृथिव्यन्तर्गर्भे वर्त्तमानमपि जलं न गृह्यते—तत्र किं कारणम्—तज्जलं पृथिव्यास्तलेनावृतं वर्तत इति—शब्दस्य तु नैतादृशमावरणं किञ्चिदुपलभामहे यत्तस्यानुपलब्धौ कारणं भवेदित्यर्थः। ननु कथं ज्ञायते नास्त्यावरणं शब्दस्येत्यत आह गृह्येतेति। उदकस्यावरणं पृथिवीतलरूपं सत् स्पष्टं गृह्यते सर्वैः- एवं यदि शब्दस्याप्यावरणं किञ्चित्स्याद् गृह्येतैवावश्यम्। न तु गृह्यते। तस्मात् 'उदकादिविपरीतः'—उदकादि सत् शब्दस्तु तद्विपरीतः असन् इति निष्कर्षः॥

एवं प्रतिषेध्यमुक्त्वा तत्प्रतिषेधरूपामनुपलब्धिसमजातिं लक्षयति—तदनुपलब्धेरिति सूत्रम्॥ 'तदनुपलब्धेः' आवरणानुपलब्धेः—'अनुपलम्भात्'—तस्या अनुपलब्धेरपि 'अभावसिद्धौ'' अनुपलब्धिर्नास्तीति सिद्धे 'तद्विपरीतस्य' आवरणानुपलब्धिविरुद्धस्य—आवरणोपलब्धेरिति यावत्—'उपपत्तौ' सिद्धेस्तन्मूलकः प्रतिषेधोऽनुपलब्धिसम इति योजना। यथावरणानुपलब्ध्याऽऽवरणाभावः सिध्यति तथावरणानुपलब्धेरप्यनुपलम्भादावरणानुपलब्धेरप्यभावः सिध्यति। तथा चावरणानुपलब्धिप्रमाणक आवरणाभावो न स्यात् अपि त्वावरणोपपत्तिरेव स्यादिति फलितोऽर्थः॥

( भा० ) तेषामावरणादीनामनुपलब्धिर्नोपलभ्यते। अनुपलम्भान्नास्तीत्यभावोऽस्याः सिध्यति। अभावसिद्धौ हेत्वभावात्तद्विपरीतमस्तित्वमावरणादीनामवधार्यते। तद्विपरीतोपपत्तेर्यत्प्रतिज्ञातं–न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिरिति-एतन्न सिध्यति। सोऽयं हेतुरावरणाद्यनुपलब्धेरित्यावरणादिषु चाऽऽवरणाद्यनुपलब्धौ च समयानुपलब्ध्या प्रत्यवस्थितोऽनुपलब्धिसमो भवति ॥ २९ ॥

---

(ख०)सूत्रं व्याचष्टे तेषामिति। अस्या इति। आवरणानुपलब्धेरित्यर्थः। ततः किमित्यत आह अभावसिद्धाविति। आवरणानुपलब्धेरभावस्य सिद्धौ सत्याम् आवरणानुपलब्धेरेवावरणासत्त्वप्रतिपादकहेतुतया वादिनोपन्यस्तत्वात् तादृशस्य हेतोरभावसिद्धाविति भावः–असत्त्वविपरीतम् अस्तित्वमेवावरणस्यावधार्यत इत्यर्थः। तस्यापि फलितमाह तद्विपरीतोपपत्तेरिति। 'तद्विपरीतस्य' आवरणादेः अस्तित्वस्य 'उपपत्तेः' सिद्धत्वात्–स्थापनावादिना प्रतिज्ञातोऽर्थः–न प्रागुच्चारणाद्विद्यमानस्य शब्दस्यानुपलब्धिरित्येतद्रूपः–'न सिद्ध्यति' प्रतिषिद्धो भवतीत्यर्थः ॥

अनुपलब्धिसमेति जातिनाम समर्थयते सोऽयमिति। योऽयं हेतुः 'अनुपलब्धे'रिति वादिनोपन्यस्तः स यथाऽऽवरणादेरभावं साधयति तथैवावरणाद्यनुपलब्धेरप्यभावमिति। आवरणाभावसाधने आवरणानुपलब्ध्यभावसाधने च 'समा' भवत्यनुपलब्धिरित्येवंरूपस्य जात्युत्तरस्य युक्तमेव नाम 'अनुपलब्धिसम' इति।

अनुपलब्धिरत्र विषयिणो धर्मस्योपलक्षणम्। तेनोपलब्ध्यनुपलब्धी–इच्छानिच्छे–द्वेषाद्वेषौ–कृत्यकृती–शक्त्यशक्ती–उत्पत्त्यनुत्पत्ती–व्यवहृत्यव्यवहृती इत्यादयः सङ्गृहीता भवन्तीति बोधसिद्धिः ॥ २९ ॥

( भा० ) अस्योत्तरम्—

(सू०) अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥३०॥

(भा०) आवरणाद्यनुपलब्धिर्नास्ति अनुपलम्भादित्यहेतुः। कस्मात् ? अनुपलम्भात्मकत्वादनुपलब्धेः। उपलम्भाभावमात्रत्वादनुपलब्धेः। यदस्ति तदुपलब्धेर्विषयः। उपलब्ध्या तदस्तीति प्रतिज्ञायते। यन्नास्ति तदनुपलब्धेर्विषयः। अनुपलभ्यमानं

---

(ख०)अनुपलब्धिसमजातेः प्रत्यादेशमवारयति अस्येति।

प्रत्यादेशमाह अनुपलम्भात्मकत्वादिति सूत्रम्। अनुपलब्धेरनुपलम्भात्मकत्वात् अहेतुः—'अनुपलब्धिः अनुपलब्ध्यभावसाधने' इति शेषः। 'अनुपलब्धेः' 'अनुपलम्भात्मकत्वात्'—अनुपलम्भस्वभावत्वात् उपलम्भप्रतिषेधार्थत्वादिति यावत्—'नास्त्यावरणाद्यनुपलब्धिः अनुपलब्धेः' इति यो हेतुर्जातिवादिनोपन्यस्तः स 'अहेतुः' अयुक्तो हेतुरित्यर्थः॥

सूत्रं व्याचक्षाणः सूत्रस्थप्रतिवाक्यमुपन्यस्यति आवरणेति। पृच्छति कस्मादिति। तत्र हेतुः अनुपलम्भात्मकत्वादिति। तस्यार्थमाह उपलम्भेति। मात्रग्रहणेन जातिवाद्यभिमतात्माभावरूपतां व्यवच्छिनत्ति—नन्वियमनुपलब्धिर्भवतूपलम्भाभावो, मा च भूदुपलभ्यस्य किमायातमावरणाद्यभावस्येत्यत आह यदस्तीति। यत् सत् तदुपलभ्यतेऽत उपलब्धिः सत्त्वव्यवस्थापिका न पुनरनुपलब्धेरनुपलम्भात्मतया तत्प्रतिज्ञेयमिति भावः॥ उपलब्धेः प्रज्ञेयमुक्त्वाऽनुपलब्धेः प्रज्ञेयमाह यन्नास्तीति। यदसत् तदनुपलब्धेर्विषयोऽतोऽनुपलब्धिरसत्त्वव्यवस्थापिकेति। तदुक्तम्—अस्तित्वनास्तित्वे हि भावानामुपलम्भानुपलम्भाभ्यां व्यवस्थाप्येते- यदुपलभ्यते तदस्ति शशवत्, यन्नोपलभ्यते तन्नास्ति तद्विषाणवदिति। वस्तुगतिमुपवर्ण्य ताम्प्रकृते योजयति सो-

(भा०)नास्तीति प्रतिज्ञायते । सोऽयमावरणाद्यनुपलब्धेरनुपलम्भ उपलब्ध्यभावेऽनुपलब्धौ स्वविषये प्रवर्त्तमानो न स्वं विषयं प्रतिषेधति । अप्रतिषिद्धा चाऽऽवरणाद्यनुपलब्धिर्हेतुत्वाय कल्पते । आवरणादीनि तु विद्यमानत्वादुपलब्धेर्विषयाः । तेषामुपलब्ध्या भवितव्यम् । यत्तानि नोपलभ्यन्ते तदुपलब्धेः स्वविषयप्रतिपादिकाया अभावादनुपलम्भादनुपलब्धेर्विषयो गम्यते—न स-

---

(ख०)ऽयमिति । त्वया हि जातिवादिना आवरणाद्यनुपलब्धेरनुपलम्भेन आवरणोपलम्भमावरणं च प्रसञ्जयताऽनुपलम्भस्य स्वविषयालोपेन प्रत्यवस्थेयम् । एवं चेद्वरमस्यावरणतदुपलम्भौ विषयौ । एवमनेन भावाभावबुद्धिव्यपदेशव्यवहाराः सकललोकयात्रावाहिनोऽनुकूलिता भवन्तीत्यर्थः । एवं च 'आवरणाद्यनुपलब्धेरनुपलम्भः' इत्येवं रूपमावरणोपलम्भनिषेधविषयं प्रमाणम्-'उपलब्ध्यभावेऽनुपलब्धौ स्वविषये प्रवर्त्तमानः स्वं विषयम्'—आवरणस्यानुपलब्धिम् —'न निषेधति' अपि तूपलब्धिमेव निषेधतीति तत्त्वम् । जातिवादिमतेन तु स्वविषयोऽपि निषिध्येत । तथाच सर्वलोकव्यवहारसमुच्छेदप्रसङ्ग इति हृदयम् ॥ आवरणाद्यनुपलब्ध्यापि किं साध्यत इत्यत आह अप्रतिषिद्धेति । हेतुत्वाय कल्पत इति । आवरणादीनामभावं प्रतीति शेषः ॥ अनुपलम्भो ह्ययमावरणविषयः, स आवरणस्यैवाभावं गमयति नानुपलब्धेरित्यनुपलब्धेर्भावादावरणमेव नास्तीति भावः ॥ ननु च नानुपलम्भमात्रमभावग्रहहेतुः—मा भूच्चन्द्रमसः परभागे हरिणसदसद्भावसंशय इत्यत आह आवरणादीनीति । आवरणादीन्युपलब्धियोग्यानि । अतो यदा तानि नोपलभ्यन्ते तदा भवति तेषामनुपलब्धिरभावव्यवस्थापिका । एवं च नानुपलब्धिमात्रमपि तु योग्यानुलब्धिरेवाभावं गमयतीति भावः ॥ ननूपलब्धेः स्वविषयस्य प्रतिपादिकाया अभा-

(भा०)न्त्यावरणादीनि शब्दस्याग्रहणकारणानि–इति। अनुप-
लम्भादनुपलब्धिः सिध्यति। विषयः स तस्येति ॥ ३० ॥

( सू० ) ज्ञानविकल्पानां च भावाभाव-
संवेदनादध्यात्मम् ॥ ३१ ॥

( भा० ) अहेतुरिति वर्त्तते। शरीरे शरीरिणां ज्ञानविक-
ल्पानां भावाभावौ संवेदनीयौ–अस्ति मे संशयज्ञानं नास्ति मे
संशयज्ञानम्–इति। एवं प्रत्यक्षानुमानागमस्मृतिज्ञानेषु। सेयमा-
वरणाद्यनुपलब्धिरुपलब्ध्यभावः स्वसंवेद्यो–नास्ति मे शब्दस्या-

---

(ख०)वादावरणादयो मा नामोपलभ्यन्ताम्–अभावस्तु तेषां कुतस्त्य इत्यत
आह अनुपलम्भादिति। 'अनुपलम्भात्' प्रतिषेधकात् प्रमाणात्–
'अनुपलब्धेर्यो विषयः' उपलभ्याभावः स गम्यत इत्यर्थः।
अवगतिस्वरूपमाह न सन्तीति। तत्किमिदानीं साक्षादेवोपल-
म्भनिषेधकं प्रमाणमुपलभ्याभावं गमयति–नेत्याह अनुपलम्भादिति।
उपलब्धिनिषेधकात् प्रमाणात् अनुपलब्धिरावरणस्य सिध्यति। कुत
इत्यत आह विषयः स इति। उपलब्धिनिषेधकस्य प्रमाणस्यानुपल-
ब्धिरेव विषयः ततश्चावरणाद्यभाव इति द्रष्टव्यम् ॥ ३० ॥

न केवलं निषेधविषयप्रमाणगम्यताऽनुपलब्धेरुपपत्तिगम्या–अपि
तु सर्वजनप्रत्यात्मवेदनीयापीत्याह सूत्रकारः ज्ञानविकल्पानामिति।
ज्ञानविकल्पानामध्यात्मं भावाभावसंवेदनादिति योजना। 'अस्ति -नास्ति'
'उपलम्भः–अनुपलम्भः' इति 'ज्ञानविकल्पाः'–तेषां भावाभावविषय-
त्वसंवेदनम्–'अध्यात्मम्' मनसा भवति यस्मात्–तस्मात् वाद्युक्तो हेतुः
'अहेतुः' इति पूर्वसूत्रस्थाहेतुरिति पदस्यानुवृत्त्या वाक्यपरिसमाप्तिरि-
त्याह भाष्यकारः अहेतुरितीति।

सूत्रार्थमाह शरीर इति। बाह्यपदार्थानां भावाभाववत् आन्तरज्ञा-

(भा०)ऽऽवरणाद्यनुपलब्धिः—इति—नोपलभ्यन्ते शब्दस्याग्रहणकारणान्यावरणादीनीति । तत्र यदुक्तं—तदनुपलब्धेरनुपलम्भादभावसिद्धिरिति—एतन्नोपपद्यते ॥ ३१ ॥

( १४ ) अनित्यसमप्रकरणम् ।

( सू० ) साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसमः ॥ ३२ ॥

( भा० ) अनित्येन घटेन साधर्म्यादनित्यः शब्द इति ब्रुवतोऽस्ति घटेनानित्येन सर्वभावानां साधर्म्यमिति सर्वस्यानित्यत्वमनिष्टं सम्पद्यते । सोऽयमनित्यत्वेन प्रत्यवस्थानादनित्यसम इति ॥ ३२ ॥

( भा० ) अस्योत्तरम्—

---

(ख०)नानामपि भावाभावयोः प्रत्यक्षवेद्यत्वात् अपर्यनुयोगोऽयम्—'अनुपलब्धेरनुपलम्भादावरणमस्ति शब्दस्येति' । तस्मात् प्रागुच्चारणादसन्नेव शब्द इति सिद्धमिति निर्गलितोऽर्थः ॥ ३१ ॥

अनित्यसमजातिलक्षणमाह साधर्म्यादिति । यदि साधर्म्यमात्रात् भावानां तुल्यधर्मता—अनित्यघटसाधर्म्यादेव यदि शब्दस्यानित्यता उपपद्यते—तर्हि सर्वेषां भावानामनित्येन घटेन सत्त्वरूपसाधर्म्योपपत्तेः भवत्येवानित्यत्वं सर्वेषामित्येतत् प्रत्यवस्थानमनित्यसम इत्यर्थः ॥

अमुमेवार्थमाह भाष्यकारः अनित्येनेति । अनित्यसमनाम समर्थयते सोऽयमिति । अस्त्यनित्येन घटेन सर्वभावानां सत्त्वं साधर्म्यमिति तात्पर्यकृतः ॥ अस्याप्युपलक्षणमर्थः साधर्म्यवद्वैधर्म्येणापि प्रत्यवस्थानसम्भवादित्युदयनाचार्याः ॥ ३२ ॥

अनित्यसमजातेः प्रत्याख्यानमवतारयति अस्येति ।

(सू० ) साधर्म्यादसिद्धेः प्रतिषेधासिद्धिः प्रतिषेध्यसाधर्म्यात् ॥ ३३ ॥

( भा० ) प्रतिज्ञाद्यवयवयुक्तं वाक्यं पक्षनिवर्त्तकम् प्रतिपक्षलक्षणं प्रतिषेधः। तस्य पक्षेण प्रतिषेध्येन साधर्म्यं प्रतिज्ञादियोगः। तद्यद्यनित्यसाधर्म्यादनित्यत्वस्यासिद्धिः साधर्म्यादसिद्धेः प्रतिषेधस्याप्यसिद्धिः-प्रतिषेध्येन साधर्म्यादिति ॥ ३३ ॥

(सू०) दृष्टान्ते च साध्यसाधनभावेन प्रज्ञातस्य धर्मस्य हेतुत्वात्तस्य चोभयथा भावान्नाविशेषः ॥३४॥

---

(ख०)प्रतिबन्द्या प्रत्याख्यानमाह साधर्म्यादिति सूत्रम्। अनित्य 'साधर्म्यात्' यदि 'असिद्धिः' शब्दानित्यत्वस्य-तर्हि 'प्रतिषेध्यसाधर्म्यात्'-'प्रतिषेध्येन' स्थापनावादिपक्षेण 'साधर्म्यात्' प्रतिज्ञाद्यवयवयोगरूपात्-'प्रतिषेधस्य' जातिवादिकृतस्थापनावाक्यनिषेधस्य 'असिद्धिः' इति योजना ॥

सूत्रार्थं व्याचक्षाणः तत्रत्यप्रतिषेधशब्दार्थमाह प्रतिज्ञादीति। जातिवादिना येन वाक्येन स्थापनावादिपक्षस्य निषेधः क्रियते तद्वाक्यमेवात्र 'प्रतिषेध' इति कथ्यते। उक्तस्य प्रतिषेधस्य प्रतिषेध्येन स्थापनावादिपक्षेण साधर्म्यं प्रदर्शयति तस्येति। यथा स्थापनावादिनः स्थापनावाक्यमवयवैः प्रतिज्ञाहेतूदाहरणोपनयनिगमनैर्युक्तं तथैव जातिवादिनः प्रतिषेधवाक्यमपीति भवत्यनयोः साधर्म्यम्। ननु भवतु साधर्म्यं किमायातं तेन प्रकृते इत्यत आह-तद्यदीति। अनित्येन घटेन साधर्म्यादनित्यः शब्द इति न सिध्यतीति यदुक्तं तस्यायमेवार्थो यदनित्यसाधर्म्यादनित्यत्वासिद्धिरिति-यद्येवं तर्हि जातिवादिनः प्रतिषेधवाक्यस्यापि स्थापनावादिवाक्येन साधर्म्यात् यथा स्थापनावाक्यस्यासिद्धिस्तथा प्रतिषेधवाक्यस्यापीति दुर्निवारमित्यर्थः ॥ ३३ ॥

( भा० ) दृष्टान्ते यः खलु धर्मः साध्यसाधनभावेन प्रज्ञायते स हेतुत्वेनाभिधीयते। स चोभयथा भवति—केन चित्समानः कुतश्चिद्विशिष्टः। सामान्यात्साधर्म्यं विशेषाच्च वैधर्म्यम्। एवं साधर्म्यविशेषो हेतुर्नाविशेषेण साधर्म्यमात्रं वैधर्म्यमात्रं वा। साधर्म्यमात्रं वैधर्म्यमात्रं चाऽऽश्रित्य भवानाह—साधर्म्यात्तुल्यधर्मोपपत्तेः सर्वानित्यत्वप्रसङ्गादनित्यसम इति—एतदयुक्तमिति। अविशेषसमप्रतिषेधे च यदुक्तं तदपि वेदितव्यम्॥ ३४॥

---

(ख०)तदेवं जातिवादिनः स्थापनावादिना साम्यमापाद्य जातेः परमार्थतः प्रत्याख्यानमाह दृष्टान्ते चेति सूत्रम्॥ यो धर्मः 'दृष्टान्ते'—साध्यसाधनभावेन व्याप्यव्यापकभावेन-'प्रज्ञायते' प्रमीयते—तस्यैव 'हेतुत्वात्'—स एव यस्मात् 'हेतुः' साधको भवति तस्मात्-तस्य च हेतोः 'उभयथा'-अन्वयेन व्यतिरेकेण च-'भावात्'—यः सत्त्वादिना 'अविशेषः' जातिवादिनोद्भावितः स 'न' युक्त इति योजना।

सूत्रार्थमाह दृष्टान्ते य इति। दृष्टान्तदृष्टसाध्यसाधनभावस्यैव हेतुत्वमित्यर्थः। उभयथेति सूत्रस्थपदं व्याचष्टे स चोभयथेति। दृष्टान्तसाधर्म्यात् दृष्टान्तवैधर्म्याच्चेति द्विविधो हेतुर्भवतीत्यर्थः। ननु भवत्वेतत् तथापि अस्त्येव सत्त्वेन साधर्म्यं सर्वभावानां तथाच तद्बलेन सर्वेषां भवत्येवानित्यत्वमिति मदुक्तं युक्तियुक्तमेवेत्यत आह साधर्म्यविशेष इति। साध्याविनाभावि यत् साधर्म्यं तेनैव सद्धेतुत्वमित्यर्थः। एतन्नियमनिरुद्धं तु जातिवादिनः प्रत्यवस्थानमिति दर्शयति साधर्म्यमात्रमिति। तत्र हि सत्त्वेनैव साधर्म्यं सर्वानित्यत्वसाधनत्वेनोक्तम्-सत्त्वं च साध्यस्यानित्यत्वस्य नाविनाभावि बहुष्वर्थेषु सत्त्वानित्यत्वयोर्व्यभिचारदर्शनादिति॥

अविशेषसमजातिप्रत्याख्याने चतुर्विंशसूत्रे यदुक्तं तदत्राप्यतिदिशति अविशेषसमप्रतिषेध इति॥ ३४॥

## ( १५ ) नित्यसमप्रकरणम् ।

### ( सू० ) नित्यमनित्यभावादनित्ये नित्यत्वोपपत्तेर्नित्यसमः ॥ ३५ ॥

( भा० ) अनित्यः शब्द इति प्रतिज्ञायते । तदनित्यत्वं किं शब्दे नित्यमथानित्यम् । यदि तावत्सर्वदा भवति धर्मस्य सदाभावाद्धर्मिणोऽपि सदाभाव इति नित्यः शब्द इति । अथ न सर्वदा भवति, अनित्यत्वस्याभावान्नित्यः शब्दः । एवं नित्यत्वेन प्रत्यवस्थानान्नित्यसमः ॥ ३५ ॥

---

(ख०)नित्यसमजातेर्लक्षणमाह नित्यमिति सूत्रम् । 'नित्यम्' सर्वदा-अनित्यस्यार्थस्य ( शब्दस्य ) 'अनित्यभावात्'—यस्मादनित्योऽर्थः सर्वदाऽनित्य एव तस्मात्'-अनित्ये' अनित्यत्ववति अर्थे-'नित्यत्वस्य' उपपत्तिरेव भवति—एवं चानित्योऽपि नित्य एवेति प्रत्यवस्थानं नित्यसम इति योजना ॥

सूत्रार्थमाह अनित्य इति । प्रतिज्ञायां विकल्पयति तदिति । यदनित्यत्वं शब्दे प्रतिज्ञायते तन्नित्यमनित्यं वा । आद्यं विकल्पं गृह्णाति यदीति । यदि शब्दगतमनित्यत्वधर्मो नित्यस्तर्हि धर्मिणः शब्दस्यापि नित्यत्वमायाति । ततश्च शब्दो नित्य इति प्राप्तम् । न ह्यस्ति सम्भवः सामान्यसमवायातिरिक्ता धर्मा नित्या धर्मी चानित्य इति तात्पर्यकृतः ॥ द्वितीयं विकल्पं गृह्णाति अथ नेति । यदि शब्दगतानित्यत्वमप्यनित्यमेव तर्हि अनित्यत्वस्यानित्यत्वेनैव कादाचित्कत्वात्कदाचिदसत्त्वमपि तस्य स्यात्—तथा यदाऽनित्यत्वस्याभावस्तदा नित्यत्वमेव शब्दस्य प्राप्नोतीत्यर्थः ॥ प्रत्यवस्थानमुपसंहरति एवमिति । उभयथापि शब्दस्य नित्यत्वमेव प्राप्तमित्येव प्रत्यवस्थानक्रम इत्यर्थः ॥ ३५ ॥

( भा० ) अस्योत्तरम्—

( सू० ) प्रतिषेध्ये नित्यमनित्यभावादनित्येऽनि-
त्यत्वोपपत्तेः प्रतिषेधाभावः ॥ ३६ ॥

( भा० ) प्रतिषेध्ये शब्दे नित्यमनित्यत्वस्य भावादित्यु-
च्यमानेऽनुज्ञातं शब्दस्यानित्यत्वम् । अनित्यत्वोपपत्तेश्च
नानित्यः शब्द इति प्रतिषेधो नोपपद्यते । अथ नाभ्युपगम्यते-
नित्यमनित्यत्वस्य भावात्–इति हेतुर्न भवतीति हेत्वभावात्प्रतिषे-
धानुपपत्तिरिति ।

---

(ख०)नित्यसमजातेः प्रत्यादेशमवतारयति अस्येति ।

प्रत्यादेशमाह प्रतिषेध्ये इति सूत्रम् । अनित्यतया 'प्रतिषेध्ये'
शब्दे–'नित्यमनित्यभावात्' इति जातिवाद्युक्तो हेतुर्यदि सिद्धः–
तर्हि 'अनित्ये' ( शब्दे ) 'अनित्यत्वमुपपन्नमेवेति' तस्मात् 'प्रति-
षेधस्य' जातिवादिकृतस्य शब्दानित्यत्वनिषेधस्य–'अभावः' अयुक्त-
त्वमिति योजना ॥ अथवा 'प्रतिषेध्ये' 'शब्दे' 'नित्यमनित्यभावात्'
अनित्यत्वस्य सदातनत्वमभ्युपगम्यते यस्मात् तस्मात्–'अनित्ये'
शब्दे 'नित्यत्वोपपत्तेः' शब्दे नित्यत्वारोपाद्धेतोः–यः 'प्रतिषेधः' कृतो
जातिवादिना तस्य 'अभावः' अयुक्तत्वमिति योजना ॥

सूत्रार्थं व्याचक्षाणो 'नित्यमनित्यभावा'दित्यस्य हेतोरभ्युपगमे-
ऽनभ्युपगमे च दोष इति प्रदर्शयन्नाह–प्रतिषेध्ये शब्द इति । यद्यभ्यु-
पगम्यतेऽन्यो हेतुस्तर्हि शब्दे अनित्यत्वं नित्यमित्येवार्थो 'नित्यमनित्यत्व-
स्य भावा'दित्यस्य हेतोः–तथाच शब्दस्य सर्वदाऽनित्यत्वमेवाभ्युपग-
तम्–एवं चाभ्युपगमे शब्दे 'अनित्यत्वस्योपपत्तेः' शब्दो नानित्य इति
यः प्रतिषेधो जातिवादिना कृतः तस्य नास्त्येवावकाश इत्यर्थः ॥
जातिवाद्युक्तहेतोरभ्युपगमे दोषमुक्त्वा तदनभ्युपगमे दोषमाह अथेति ।

(भा०)उत्पन्नस्य निरोधादभावः—शब्दस्यानित्यत्वम्। तत्र परिप्रश्नानुपपत्तिः। सोऽयं प्रश्नः—तदनित्यत्वं किं शब्दे सर्वदा भवति अथ न—इत्यनुपपन्नः। कस्मात्? उत्पन्नस्य यो निरोधादभावः शब्दस्य तदनित्यत्वम्। एवं च सत्यधिकरणाधेयविभागो व्याघातान्नास्तीति।

नित्यानित्यत्वविरोधाच्च। नित्यत्वमनित्यत्वं च एकस्यध-

---

(ख०)अथ जातिवादी नित्यमनित्यभावादिति हेतुं नैवाभ्युपगच्छति तर्ह्यनभ्युपगमादेव स हेतुस्तदीयप्रतिज्ञासाधनाय न प्रभवतीति व्यर्थस्तदुपन्यासः। एवमपि शब्देऽनित्यत्वप्रतिषेधस्यायुक्तत्वमेवेत्यर्थः॥

एवं जातिवाद्युपन्यस्तं हेतुम्पराहत्य तदुद्भावितस्य प्रश्नस्याप्यनुपपत्तिं प्रदर्शयितुमनित्यत्वस्य लक्षणमाह—उत्पन्नस्येति। एतदनित्यत्वविषये जातिवादिकृतः प्रश्नो नोपपद्यत इत्याह तत्रेति। अनुपपत्तिं प्रदर्शयितुं प्रश्नमनुवदति सोऽयमिति। कथमयम्प्रश्नोऽनुपपन्न इति पृच्छति कस्मादिति। तत्रोत्तरम् उत्पन्नस्य य इति। अनित्यत्वं हि नाम प्रध्वंसाभावः। एवं च सति शब्देऽनित्यत्वमिति योऽधिकरणाधेयभावो जातिवादिनोक्तः स न सम्भवति। न भवति शब्दोऽनित्यत्वस्याधिकरणम्—अनित्यत्वं वा शब्दस्याधेयम्। अनित्यत्वं हि शब्दावच्छिन्नन्न शब्दाधिकरणम्। न खलु घटाभावो घटाश्रितो भवति—भावस्वभावा हि धर्मा धर्म्याश्रिता भवन्ति नाभावः। अभावस्त्वाश्रितोऽपि न प्रतियोग्याश्रितो भवत्यपि त्वर्थान्तरवृत्तिरेव—भूप्रदेशमिव घटाभाव इत्याशयः। तदुक्तं तात्पर्यकृता—अनित्यत्वं हि शब्दस्यापरान्तावच्छिन्नसत्तासमवायः—न चासौ शब्दाधेयः—तस्य स्वतन्त्रत्वादिति। अपि चानित्यत्वं—नित्यमनित्यं वेति विकल्पोऽपि

(भा०)र्मिणो धर्माविति विरुध्येते—न सम्भवतः। तत्रयदुक्तं-नित्य-मनित्यत्वस्य भावाद् नित्य एव—तदवर्तमानार्थमुक्तमिति ॥३६॥

( १६ ) कार्यसमप्रकरणम् ।

(सू०) प्रयत्नकार्यानेकत्वात्कार्यसमः ॥ ३७ ॥

( भा० ) प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति । यस्य प्रयत्नानन्तरमात्मलाभः तत्खल्वभूत्वा भवति । यथा घटादि कार्यम् । अनित्यमिति च भूत्वा न भवतीत्येतद्विज्ञायते । एव-मवस्थिते प्रयत्नकार्यानेकत्वादिति प्रतिषेध उच्यते । प्रयत्नानन्त-

---

(ख०)नावतरति विरोधादित्याह नित्यानित्यत्वेति । अनित्ये शब्दे नि-त्यत्वमिति शङ्कैव नावतरितुं शक्नोतीति भावः । अवर्त्तमानार्थमिति । अर्थशून्यं रिक्तं वच इत्यर्थः ॥ ३६ ॥

कार्यसमजातिं लक्षयति प्रयत्नेति सूत्रम् । 'प्रयत्नकार्याणाम्' प्र-यत्नेन सम्पादितानां कार्याणाम्—'अनेकत्वात्' द्वैविध्यं भवति—किञ्चिदस-देव प्रयत्नेन उत्पाद्यते यथा घटादि । किञ्चित्तु सदेवावरणापनयनादिना प्रयत्नेन अभिव्यज्यते यथा मृदन्तरितमुदकादि । यस्मादेवं तस्मात् 'प्र-यत्नानन्तरीयकत्वाच्छब्दोऽनित्य' इत्ययुक्तमित्येवं प्रत्यवस्थाने कार्यस-म इति योजना ॥

उदाहरणपूर्वकं सूत्रार्थमाह प्रयत्नानन्तरीयकत्वादिति । शब्द इतीति । प्रयत्नानन्तरीयकत्वादनित्यः शब्द इति स्थापनाहेत्वनुवादः । स्थापनाया आशयं वर्णयति यस्येति । यद् यत् कार्यं प्रयत्नेनोत्पाद्यते तत्तत्प्रयत्नात् प्रागसत् प्रयत्नानन्तरमात्मानं लभत इति दृष्टम्—'अनित्य'मि-त्यस्याप्ययमेवार्थो यत् 'उत्पद्य नश्यतीति' । तस्मात्प्रयत्नानन्तरीयकं यत् कार्यं तदनित्यमित्यर्थः ॥ एवमुक्ते स्थापनाहेतौ जातिवाद्युक्तं प्रत्यवस्थानमवतारयति एवमवस्थित इति । प्रत्यवस्थानस्याशयं वर्ण-

(भा०)रमात्मलाभश्च दृष्टो घटादीनाम् । व्यवधानापोहाच्चाभिव्यक्तिर्व्यवहितानाम् । तत्किं प्रयत्नानन्तरमात्मलाभः शब्दस्याहो ऽभिव्यक्तिरिति विशेषो नाऽस्ति । कार्याविशेषेण प्रत्यवस्थानं कार्यसमः ॥ ३७ ॥

(भा०) अस्योत्तरम्—

(सू०) कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेः ॥ ३८ ॥

---

(ख०)यति प्रयत्नेति । प्रयत्नानन्तरीयकत्वं प्रयत्नानन्तरोत्पादो वा स्यात् प्रयत्नानन्तरोपलम्भो वा । न तावदाद्यः, असिद्धत्वात् । तस्मात्प्रयत्नानन्तरोपलम्भ आस्थेयः । एवं सति प्रयत्नानन्तरमुपलभ्यमानेष्वर्थेषु कस्यचित्प्रागसतः प्रयत्नानन्तरमात्मलाभ एव दृष्टो यथा घटस्य, कस्यचित्तु सत एव व्यवधानापनयनादभिव्यक्तिमात्रम्—यथा मूलकीलकोदकादि । एवं च प्रयत्नानन्तरीयकानां द्वैविध्यदर्शनात् शब्दे प्रयत्नानन्तरीयकत्वं दृष्ट्वाऽपि—किं घटादिवदसन् शब्दः प्रयत्नानन्तरमात्मानमेव लभते उत भूगर्भोदकमिव सदेवाभिव्यज्यते—इति निश्चयो न भवति—तस्मात्स्थापनाहेतुः सन्दिग्धत्वादहेतुरेवेति ॥

कार्यसमेति नाम व्युत्पादयति कार्याविशेषेणेति । द्विविधे कार्यत्वे किंविधं कार्यत्वं शब्द इति विशेषज्ञापकाभावेनैवैतत् प्रत्यवस्थानमत एव कार्यसममित्युच्यत इत्यर्थः ॥ उभयसाधर्म्यात्संशयसमः—अयं तु विशेषोपलब्धिमविवक्षित्वा प्रवर्तते इति संशयसमतोऽस्य भेदः । अत्र च प्रयत्नानन्तरीयकत्वादित्ययं प्रयत्नानन्तरमुपलब्धेरित्यर्थमारोप्य प्रतिषिध्यते साधर्म्यसमे तु नारोपणमित्येवास्य साधर्म्यसमतो भेदः॥३७॥

कार्यसमजातेः प्रत्यादेशमवतारयति अस्येति ।

प्रत्यादेशमाह कार्यान्यत्व इति सूत्रम् । 'कार्यान्यत्वे' कार्यद्वैविध्ये-

( भा० ) सति कार्यान्यत्वे अनुपलब्धिकारणोपपत्तेः प्रयत्नस्याहेतुत्वं शब्दस्याभिव्यक्तौ । यत्र प्रयत्नानन्तरमभिव्यक्तिस्तत्रानुपलब्धिकारणं व्यवधानमुपपद्यते । व्यवधानापोहाच्च प्रयत्नानन्तरभाविनोऽर्थस्योपलब्धिलक्षणाऽभिव्यक्तिर्भवतीति । न तु शब्दस्यानुपलब्धिकारणं किञ्चिदुपपद्यते । यस्य प्रयत्नानन्तरमपोहाच्छब्दस्योपलब्धिलक्षणाभिव्यक्तिर्भवतीति । तस्मादुत्पद्यते शब्दो नाभिव्यज्यते इति ॥ ३८ ॥

---

(ख०)सत्यपि 'प्रयत्नस्य 'अहेतुत्वम्'–शब्दस्याभिव्यक्तिं प्रति हेतुत्वं न भवति–कस्मात्–'अनुपलब्धिकारणोपपत्तेः'–यत्रानुपलब्धिकारणमावरणादिरूपमुपलभ्यते तत्रैवाभिव्यक्तिहेतुत्वमिति यस्माद् भवति–तस्मात्–शब्दे तु तादृशमनुपलब्धिकारणं नोपलभ्यते–तस्मात् शब्दे नाभिव्यक्तिरपि तूत्पत्तिरेवेत्याशयः ॥ यथाहुस्तात्पर्यकृतः–'अनुपलब्धिकारणस्यावरणादेरुपपत्तेरभिव्याक्तिहेतुत्वं स्यात्–एवं तु नास्तीति व्यतिरेकपरं द्रष्टव्यम्' इति ॥

न्यायमञ्जरीकारास्तु 'अनुपलब्धिकारणानुपपत्तेरिति' पठन्ति । अस्मिंश्च पाठे 'यस्माच्छब्दे आवरणादिरूपानुपलब्धिकारणं नोपपद्यते तस्मात्तत्र प्रयत्नस्य नाभिव्याक्तिहेतुत्वमिति–सरलमार्गेणैवार्थः सम्पद्यते ॥

सूत्रयोजनामाह सतीति । तस्याशयं वर्णयति यत्रेति । अत्र वाक्ये यत्रतत्रयोर्व्यत्यासः । एवं च 'तत्रैव प्रयत्नानन्तरमभिव्यक्तिर्यत्रानुपलब्धिकारणं व्यवधानमुपपद्यते' इति योजना । इदमत्राकूतम् । भूगर्भस्थोदकादौ हि आवरणं भूतलं वर्तते–तस्मात् तत्र मृत्पिण्डाद्यपसारणे कृते भूतलं यदाऽपावर्त्यते तदा जलमुपलभ्यते इति दृष्टाऽत्र सत एव जलस्याभिव्यक्तिरेव प्रयत्नेन कृतेति गृह्यते । शब्दे तु किञ्चिदप्यावरणादिकमनुपलब्धिकारणं यदा नोपलभ्यते–तदा कस्यापनयनादभि-

## ( १७ ) षट्पक्षीरूपकथाभासप्रकरणम् ।

( भा० ) हेतोश्चेदनैकान्तिकत्वमुपपाद्यते अनैकान्तिकत्वादसाधकः स्याद् इति । यदि चानैकान्तिकत्वादसाधकम्—

( सू० ) प्रतिषेधेऽपि समानो दोषः ॥ ३९ ॥

( भा० ) प्रतिषेधोऽप्यनैकान्तिकः । किञ्चित्प्रतिषेधति

---

(ख०)व्यक्तिर्भवेत्—एवं चाभिव्यक्तेरत्रासम्भवात् शब्दस्य नाभिव्यक्तिरपि तु प्रागसतः प्रयत्नेनोत्पत्तिरेवेति सिद्धम् ॥

तदेवमनेन चतुर्विंशतिजात्युदाहरणप्रतिसमाधानोपदेशवर्त्मना शब्दानित्यत्वसाधने परकीयोपालम्भजातमेवम्प्रायमन्यच्चाखिलमपकृतम्भवतीत्यवधेयम् ॥ ३८ ॥

तदेवं जात्युत्तरवादिनं प्रति स्थापनावादिना सर्वत्रैव सम्यक् समाधानं स्वसाधनस्य वक्तव्यम् । एवं सति निर्णये कथापर्यवसानं भवति । यदि पुनः स्थापनावाद्यपि जातिवादिनं प्रति साधनाभासेनैव प्रत्यवतिष्ठते ततः षट्पक्ष्यां सत्यां न तत्त्वनिर्णयावसाना कथा भवेदिति शिष्यहितः शास्त्रकारः समाधानाभासवादिनं प्रति वैफल्यप्रदर्शनार्थं षट्पक्षीमवतारयति हेतोरित्यादि । 'शब्दोऽनित्यः प्रयत्नानन्तरीयकत्वाद् घटवदिति' स्थापनावादिनः प्रतिज्ञाऽत्र प्रथमः पक्षः (१) । तद्विरुद्धं प्रतिवाद्युक्तिरूपं द्वितीयपक्षं प्रदर्शयति हेतोरिति । वादिनः हेतोः प्रयत्नानन्तरीयकत्वस्य प्रतिवाद्यनैकान्तिकत्वं उपपादयति प्रयत्नकार्यानेकत्वादिति । हेतुद्वारेण–सव्यभिचारत्वान्नायं शब्दानित्यत्वं साधयितुमर्हतीति भवत्ययं द्वितीयः पक्षः ( २ ) । तत्र वादिप्रत्युक्तिरूपं तृतीयपक्षमुत्थापयति यदीत्यादि 'समानो दोष' इति सूत्रान्तपर्यन्तम् ।

सूत्रार्थमाह भाष्यकारः प्रतिषेध इति । यदि प्रयत्नानन्तरीयकत्वादिति वादिनो हेतुरनैकान्तिकस्तर्हि प्रतिवादिनोऽपि प्रयत्नकार्यानेकत्वा-

(भा०)किंचिन्नेति । अनैकान्तिकत्वादसाधक इति ।

अथ वा शब्दस्यानित्यत्वपक्षे प्रयत्नानन्तरमुत्पादो नाभिव्यक्तिरिति विशेषहेत्वभावः । नित्यत्वपक्षेऽपि प्रयत्नानन्तरमभिव्यक्तिर्नोत्पाद इति विशेषहेत्वभावः । सोऽयमुभयपक्षसमो विशेषहेत्वभाव इत्युभयमप्यनैकान्तिकमिति ॥ ३९ ।

( सू० ) सर्वत्रैवम् ॥ ४० ॥

( भा० ) सर्वेषु साधर्म्यप्रभृतिषु प्रतिषेधहेतुषु यत्र यत्रावि-

---

(ख०)दिति ( ३७ सूत्रोक्तो ) हेतुरनैकान्तिक एवेत्यर्थः । प्रतिवादिनो हेतावनैकान्तिकत्वं प्रदर्शयति वादी किञ्चिदिति । प्रयत्नकार्यानेकत्वादिति ब्रुवन् प्रतिवादी कस्यचिदसतः प्रयत्नानान्तरीयकस्योत्पत्तिमभ्युपगच्छति—यथा घटस्य—कस्यचित्तु नाभ्युपगच्छति—यथा शब्दस्येति । एवं च यथा वादिना हेतुरनैकान्तिकत्वादसाधकस्तथैव प्रतिवादिनोऽपि हेतुरित्यर्थः । [इदमपि प्रतिवादिनो वचनमुत्तराभासः कार्यसमजातिरेवेत्यवधेयम् ।] (३) ॥ प्रकारान्तरेण द्वितीयतृतीयपक्षौ दर्शयति अथवेति । शब्दानित्यत्वपक्षेऽसत एव शब्दस्य प्रयत्नानन्तरमुत्पत्तिरेव भवति न च सतोऽप्यभिव्यक्तिरेवेति नात्रैकतरपक्षे विशेषहेतुरस्तीति प्रतिवादिनो वचनम्—शब्दनित्यत्वपक्षेऽपि सतः शब्दस्याभिव्यक्तिरेव न चासत उत्पत्तिरेवेत्येकतरपक्षे न विशेषहेतुरस्तीति विशेषहेत्वभावो वादिप्रतिवाद्युभयपक्षसमान इति द्वावपि हेतू अनैकान्तिकाविति तृतीयः पक्षः(२)। ॥३९॥

न केवलमुक्तायामेव प्रतिवाद्युद्भावितजातौ समाधानाभासः प्रतिवादिनोऽपि तु सर्वत्रैव जात्युत्तरेष्विति शिष्यान् शिक्षयति सूत्रकारः सर्वत्रैवमिति । तद्व्याचष्टे भाष्यकारः सर्वेष्विति । सर्वेषु जात्युत्तरेषु

(भा०)शेषो दृश्यते तत्रोभयोः पक्षयोः समः प्रसज्यत इति॥४०॥

( सू० ) प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोषः ॥४१॥

( भा० ) योऽयं प्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्व-

---

(ख०)यत्र यत्र विशेषः प्रतिषेधहेतुत्वेनोद्भाव्यते तत्र तत्राविशेषस्योभयपक्षसमानत्वप्रदर्शनं सम्भवति प्रतिवादिन इत्यर्थः। तथाहि(१) अनित्यः शब्दः कार्यत्वादैन्द्रियकत्वाद्वेति सदसत्प्रयोगे (२)तद्वदाकाशसाधर्म्यादस्पर्शवत्त्वान्नित्यः किं न स्यादिति साधर्म्यसमः। ( ३ ) अस्पर्शवदाकाशं नित्यं परममहद्दृष्टं—शब्देनापि नित्येन सता परममहता भवितव्यम् इत्युत्कर्षसमः। ( ४ ) ननु यथाऽऽकाशदृष्टान्तेन परममहत्त्वं शब्दस्योच्यते तद्वद्रूपदृष्टान्तेन तद्रहितत्वमेव किं न स्यादिति प्रतिदृष्टान्तसमः। (५)एवं तर्हि यथा निःस्पर्शमुभयथा दृष्टं - किंचिदश्रावणं रूपादिकं किंचिच्छ्रावणं शब्दादि तथा किंचिन्नित्यं भविष्यत्याकाशादि किंचिद् नित्यं शब्दादीति विकल्पसमः। ( ६ ) ननु तथापि कार्यत्वमैन्द्रियकत्वं वा साध्यमप्राप्य कथं साधयेदतिप्रसङ्गादिति प्राप्य वक्तव्यं तथाचाविशेषात् किं कस्य साधनं साध्यं वेति प्राप्तिसम इत्येवं षट् पक्षा भवन्ति ॥ एवमत्राप्यूहनीयम् ॥ यद्यप्येतत्सूत्रं षट्पक्षीसूत्रानन्तरमेव वक्तव्यमासीत् तथापि त्रिपक्ष्यपि भवति कथाभास इति प्रदर्शयितुमत्रैवोक्तम् ॥ ४० ॥

अस्मिन् समाधानाभासे वादिना प्रयुक्ते पुनः प्रतिवादी चतुर्थपक्षेण प्रत्यवतिष्ठते प्रतिषेधेति सूत्रम्। 'प्रतिषेधो' जातिवादिकृतो द्वितीयपक्षरूपः—तस्य 'विप्रतिषेधः' वादिना कृतस्तृतीयपक्षरूपः-तस्मिन्नपि 'प्रतिषेधदोषवदेव' प्रतिवादिनो द्वितीये पक्षे यो दोषो वादिना तृतीयपक्षे प्रदर्शितस्तद्वदेव तत्तुल्य एव 'दोष' इति योजना।

सूत्रार्थमाह योऽयमिति। उक्तमर्थं दृष्टान्तेन प्रतिपादयति तत्रानित्य

(भा०)मापद्यते सोऽयं प्रतिषेधस्य प्रतिषेधेऽपि समानः । तत्रा-नित्यः शब्दः प्रयत्नानन्तरीयकत्वादिति साधनवादिनः स्थापना प्रथमः पक्षः । 'प्रयत्नकार्यानेकत्वात् कार्यसम' इति दूषणवादिनः प्रतिषेधहेतुना द्वितीयः पक्षः । स च प्रतिषेध इत्युच्यते । तस्यास्य प्रतिषेधेऽपि समानो दोष इति तृतीयः पक्षो विप्रतिषेध उच्यते । तस्मिन् प्रतिषेधविप्रतिषेधेऽपि समानो दोषोऽनैकान्तिकत्वं चतुर्थः पक्षः ॥ ४१ ॥

( सू० ) प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गो मतानुज्ञा ॥ ४२ ॥

( भा० ) प्रतिषेधं द्वितीयं पक्षं सदोषमभ्युपेत्य तदुद्धारमनुक्त्वाऽनुज्ञाय प्रतिषेधविप्रतिषेधे तृतीयपक्षे समानमनैकान्तिकत्वमिति समानं दूषणं प्रसजतो दूषणवादिनो मतानुज्ञा प्रसज्यत इति पञ्चमः पक्षः ॥ ४२ ॥

---

(ख०)इति । द्वितीयपक्ष एव सूत्रकारेण प्रतिषेधकत्वेन विवक्षित इत्याह स च प्रतिषेध इति । तृतीयपक्ष एव सूत्रकारेण विप्रतिषेधशब्देनोच्यते इत्याह इति तृतीय इति ॥ अत्र षट्पक्ष्याश्चत्वारः पक्षाः स्पष्टमुक्ता भाष्यकारेण ॥ ४१ ॥

प्रतिवादिनश्चतुर्थपक्षं प्रति वादिनः पञ्चमं पक्षमाह प्रतिषेधमिति सूत्रम् । सूत्रार्थमाह प्रतिषेधं द्वितीयमिति । मतानुज्ञेति—स्वपक्षदोषाभ्युपगमात् परपक्षे दोषप्रसङ्ग इति मतानुज्ञानिग्रहस्थानलक्षणस्य वक्ष्यमाणत्वात् ॥ प्रतिवादी च 'प्रतिषेधं' स्वकीयं द्वितीयं पक्षं सदोषं अभ्युपगत्य तमेव दोषं वादिनस्तृतीयपक्षेऽपि प्रसञ्जयन्नात्मनः चतुर्थपक्षम्प्रवर्तयामासेति भवत्येवास्योक्तलक्षणं निग्रहस्थानमित्यर्थः ॥ अयं च षट्पक्ष्याः पञ्चमः पक्षः ॥ ४२ ॥

(सू०) स्वपक्षलक्षणापेक्षोपपत्त्युपसंहारे हेतुनिर्देशे परपक्षदोषाभ्युपगमात्समानो दोषः ॥४३॥

( भा० ) स्थापनापक्षे प्रयत्नकार्यानेकत्वादिति दोषः स्थापनाहेतुवादिनः स्वपक्षलक्षणो भवति । कस्मात् ? स्वपक्षसमुत्थत्वात् । सोऽयं स्वपक्षलक्षणं दोषमपेक्षमाणोऽनुद्धृत्यानुज्ञाय प्रतिषेधेऽपि समानो दोष इत्युपपद्यमानं दोषं परपक्षे उपसंहरति । इत्थं चानैकान्तिकः प्रतिषेध इति हेतुं निर्दिशति । तत्र स्वपक्षलक्षणापेक्षयोपपद्यमानदोषोपसंहारे हेतुनिर्देशे च सत्यनेन

---

(ख०)सेयं मतानुज्ञा पञ्चमपक्षवादिनोऽपि तृतीये पक्षे भवत्येवेति-प्रतिवादी षष्ठं पक्षमुत्थापयति स्वपक्षलक्षणेति सूत्रम् ॥ 'स्वपक्षः' वादिनः स्थापना 'प्रयत्नानन्तरीयकत्वादनित्यः शब्द'—इति 'तल्लक्षणः' तत्समुत्थानः तद्विषयः द्वितीयः पक्षो जात्युत्तरं प्रतिवाद्युक्तम् प्रयत्नकार्यानेकत्वादिति—तस्य 'अपेक्षया' उपेक्षया तमनुद्धृत्याभ्यनुज्ञाय प्रवृत्तः प्रतिषेधेऽपि समानोऽयं दोष—इति दोषस्य 'उपपत्तेः' 'उपसंहारः'—तस्मिंश्च उपसंहारे 'हेतुनिर्देशः' अनैकान्तिकत्वरूपस्य हेतोरुक्तिः-तस्मिन् कृते सति 'परपक्षे' प्रतिवादिनः पक्षे यो 'दोषः' वादिना स्वयमुद्भावितस्तस्याभ्युपगमात् समानो दोषः मतानुज्ञानिग्रहस्थानरूपः स्थापनावादिन इति योजना ॥ अयं च षट्पक्ष्यां षष्ठः पक्षः ॥

एत सर्वमाभिप्रेत्य सोदाहरणं सूत्रार्थं व्याचक्षाणः स्वपक्षलक्षणशब्दार्थमाह स्थापनापक्ष इति । स्वपक्षलक्षणपदेन कथम्प्रतिवादिपक्षः उच्यते इति पृच्छति कस्मादिति । तत्रोत्तरं स्वपक्षेति । यस्मात् प्रथमपक्षं लक्ष्यीकृत्यैव द्वितीयः पक्षः समुत्तिष्ठते तस्माद्भवत्येवास्य तल्लक्षणत्वमित्यर्थः । अपेक्षोपपत्त्युपसंहारशब्दार्थमाह सोऽयमिति । हेतुनिर्देशशब्दार्थमाह इत्थमिति । सूत्रार्थमुपसंहरति तत्रेति । कथं वादिनः स-

(भा०)परपक्षदोषोऽभ्युपगतो भवति । कथं कृत्वा ? यः परेण प्रयत्नकार्यानेकत्वादित्यादिनाऽनैकान्तिकदोष उक्तः तमनुद्धृत्य प्रतिषेधेऽपि समानो दोष इत्याह । एवं स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि समानं दोषं प्रसजतः परपक्षाभ्युपगमात् समानो दोषो भवति । यथा परस्य प्रतिषेधं सदोषमभ्युपेत्य प्रतिषेधविप्रतिषेधेऽपि समानो दोषप्रसङ्गो मतानुज्ञा प्रसज्यत इति तथाऽस्यापि स्थापनां सदोषामभ्युपेत्य प्रतिषेधेऽपि समानं दोषं प्रसजतो मतानुज्ञा प्रसज्यत इति ।

स खल्वयं षष्ठः पक्षः । तत्र खलु स्थापनाहेतुवादिनः प्रथमतृतीयपञ्चमपक्षाः । प्रतिषेधहेतुवादिनः द्वितीयचतुर्थषष्ठपक्षाः । तेषां सा-(ख०)मानो दोषो भवतीति पृच्छति कथं कृत्वेति । तत्रोत्तरम् यः परेणेति । वादिनोऽपि मतानुज्ञानिग्रहस्थानं कथं भवतीत्यत आह एवं स्थापनामिति । स्वपक्षे दोषमभ्युपगच्छतः परपक्षे च तमेव दोषं प्रसञ्जयतो भवत्येव मतानुज्ञेत्यर्थः ॥ प्रतिवादिना समानत्वम्प्रतिपादयति । पञ्चमपक्षे यथा प्रतिवादिनं प्रति मतानुज्ञोद्भाविता वादिना तथैव तम्प्रत्यपि साऽऽपतितेत्यर्थः ॥ उपसंहरति स खल्वयमिति । एवं विस्तीर्य सङ्कलय्याह तत्र खल्विति । एतत्प्रसङ्गेन षट्पक्ष्याः युक्तायुक्तत्वे विवेचयति तेषामिति । सेयं षट्पक्षी समानदोषापादनेनानिर्णायकत्वात् पौनरुक्त्याच्च न तत्त्वनिर्णयाय पर्याप्ता । तस्मात्समाधानाभासेन जातिवादिनं प्रति न प्रत्यवस्थेयम्—किन्तु सम्यक्साधनेन । तथाच षट्पक्षी उपहता नावतरति तत्त्वनिर्णयपर्यवसाना च कथा भवति । यदि त्वस्य कदाचित्सम्यक्साधनवादिनोऽपि प्रतिभाक्षयात् सम्यग् समाधानं न स्फुरति ततोऽत्यन्तपराजयाद्वरं संशयोऽपीति न्यायेन समाधानाभासेनापि प्रत्यवस्थेयमित्याशयः ॥ पुनरुक्तदोषं प्रदर्शयतिचतुर्थपक्ष इति । नार्थविशेष इति । नार्थभेदः, अतः पौनरुक्त्यमेवेत्यर्थः । षट्प-

(भा०)ध्वसाधुतायां मीमांस्यमानायां चतुर्थषष्ठयोरर्थाविशेषात् पुनरुक्तदोषप्रसङ्गः। चतुर्थपक्षे समानदोषत्वं परस्योच्यते प्रतिषेधविप्रतिषेधे प्रतिषेधदोषवद्दोष इति। षष्ठेऽपि परपक्षाभ्युपगमात् समानो दोष इति समानदोषत्वमेवोच्यते–इति नार्थविशेषः कश्चिदस्ति। समानस्तृतीयपञ्चमयोः पुनरुक्तदोषप्रसङ्गः। तृतीयपक्षेऽपि प्रतिषेधेऽपि समानो दोष इति समानत्वमभ्युपगम्यते। पञ्चमपक्षेऽपि प्रतिषेधविप्रतिषेधे समानो दोषप्रसङ्गोऽभ्युपगम्यते। नार्थविशेषः कश्चिदुच्यत इति। तत्र पञ्चमषष्ठपक्षयोः अर्थाविशेषात् पुनरुक्तदोषः। तृतीयचतुर्थयोर्मतानुज्ञा। प्रथमद्वितीययोर्विशेषहेत्वभाव इति षट्पक्ष्यामुभयोरसिद्धिः।

कदा षट्पक्षी? यदा प्रतिषेधेऽपि समानो दोष इत्येवं प्रवर्त्तते तदोभयोः पक्षयोरसिद्धिः। यदा तु कार्यान्यत्वे प्रयत्नाहेतुत्वमनुपलब्धिकारणोपपत्तेरित्यनेन तृतीयपक्षो युज्यते तदा विशेषहेतुवचनात् प्रयत्नानन्तरमात्मलाभः शब्दस्य नाभिव्यक्तिरिति सिद्धः प्रथमपक्षो न षट्पक्षी प्रवर्तते इति॥४३॥

इति श्रीवात्स्यायनीये न्यायभाष्ये पञ्चमाध्यायस्याद्यमाह्निकम्॥

---

(ख०)क्ष्या नैष्फल्यमाह षट्पक्ष्यामिति। उभयोरपि वादिप्रतिवादिनोरयुक्तवादित्वादित्यर्थः। षट्पक्ष्यामपि प्रभेदं दर्शयितुं पृच्छति कदेति। कदा षडेव पक्षा उत्तिष्ठन्तीति प्रश्नार्थः। तत्रोत्तरम् यदेति। यदा तत्रापि पक्षे समानो दोष इत्येव चोत्तरं वादिनो भवति तदा प्रवर्तन्ते एव षट् पक्षास्तथाच न सिध्यति कोऽपि पक्षः। कदा पुनर्न प्रवर्तते षट्पक्षीत्यत आह यदा त्विति। अत्र हि स्थापनावादिनस्तृतीयपक्षोक्तिः सदुत्तरमेव भवति–ततश्च तत्रैव तस्य पक्षस्य सिद्धत्वात् कथायाः पर्यवसानान्न भवत्यवसरः पक्षान्तरोद्भावनस्येति नैव प्रवर्तते षट्पक्षीत्यर्थः॥४३॥

इति पञ्चमाध्याये प्रथमं प्रस्फुरणम्।

## अथ पञ्चमाध्यायस्य द्वितीयमाह्निकम् ॥

( १ ) प्रतिज्ञाहेत्वन्यतराश्रितनिग्रहस्थानपञ्चकविशेषलक्षणप्रकरणम् ।

( भा० ) विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वमिति सङ्क्षेपेणोक्तं तदिदानीं विभजनीयम् । निग्रहस्थानानि खलु पराजयवस्तून्यपराधाधिकरणानि प्रायेण प्रतिज्ञाद्यवयवाश्रयाणि तत्त्ववादिनमतत्त्ववादिनं चाभिसंप्लवन्ते । तेषां विभागः—

---

## अथ पञ्चमाध्याये द्वितीयमाह्निकम् ।

(ख०)निग्रहस्थानविशेषलक्षणमाह्निकार्थमवतारयन् पूर्वोक्तं तत्सामान्यलक्षणं स्मारयति विप्रतिपत्तीति । संक्षेपेणोक्तस्याधुना विभज्य वचनावसर इत्याह तदिदानीमिति । य एवमाहुः 'सर्वोऽयं साधनदूषणप्रकारो बुद्ध्यारूढ एव, न वास्तव' इति तान् प्रत्याह निग्रहस्थानानीति । पराजयवस्तूनीति । पराजयो वसत्येष्विति व्युत्पत्त्येत्यर्थः । एतेषां काल्पनिकत्वे कल्पनायाः सर्वत्र सुलभत्वात् साधनदूषणव्यवस्था न स्यादिति भावः । कथायामखण्डिताहंकारेण परस्याहंकारखण्डनमिह पराजयो 'निग्रहः' । स एतेष्वियत्स्वेव तन्नामकेष्वेव तिष्ठन्तीत्यर्थः । निग्रहस्थानानि पर्यायान्तरेण स्पष्टयति अपराधेति ॥ किमाश्रितान्येतानीत्यत आह प्रायेणेति । कथायां हेतुवचनानामेव प्रयोगस्तेषां चानुमानाकारत्वात्तत्रत्यनिग्रहस्थानानि यदाऽऽपतन्ति तदा अनुमानवाक्यावयवेष्वेव प्रतिज्ञादिष्वित्यर्थः । के निग्राह्या इत्याह तत्त्ववादिनमिति । अत्यन्तजडोऽत्यन्तप्रेक्षावान् वा न भवति निग्राह्यः—मध्यम एव जनो निग्राह्यो भवति । तथाच लोकोक्तिः—

यश्च मूढतमो लोके यश्च पारंगतोऽपि सः ।
द्वाविमौ सुखमेधेते सीदत्यन्तरितो जनः ॥ इति ॥

निग्रहस्थानानां परिगणनमवतारयति तेषां विभाग इति ।

(सू०) प्रतिज्ञाहानिः प्रतिज्ञान्तरं प्रतिज्ञाविरोधः प्रतिज्ञासन्न्यासो हेत्वन्तरमर्थान्तरं निरर्थकमविज्ञातार्थमपार्थकमप्राप्तकालं न्यूनमधिकं पुनरुक्तमननुभाषणमज्ञानमप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणं निरनुयोज्यानुयोगोऽपसिद्धान्तो हेत्वाभासाश्च निग्रहस्थानानि ॥ १ ॥

( भा० ) तानीमानि द्वाविंशतिधा विभज्य लक्ष्यन्ते ॥१॥

(सू०) प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः ॥ २ ॥

( भा० ) साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः । निदर्शनम्—ऐन्द्रियकत्वादनित्यः शब्दो घटवदिति कृते,

---

(ख०)निग्रहस्थानानि परिगणयति प्रतिज्ञाहानिरिति सूत्रम् ॥ एकप्रयोजनानामप्यमीषां शिष्यहिततया व्यवहारोपयोगिप्रातिस्विकवैधर्म्यसूचनार्थं स्वकार्ये परस्परनिरपेक्षकथनार्थत्वं चासमासः ॥

प्रत्येकं लक्षणान्यवतारयति तानीमानीति । विभज्येति । पृथक् पृथगित्यर्थः ॥ लक्ष्यन्त इति वक्ष्यमाणेषु सूत्रेष्विति शेषः ॥ १ ॥

प्रतिज्ञाहानिलक्षणमाह प्रतिदृष्टान्तेति सूत्रम् । तदर्थमाह भाष्यकारः साध्येति । वादी स्थापनां प्रयुङ्क्ते प्रतिवादी वादिसाध्यधर्मविरुद्धेन धर्मेण प्रत्यवतिष्ठते- ततस्तृतीयकक्षायां वादी प्रतिवाद्युक्तप्रतिदृष्टान्तधर्मं यदि स्वदृष्टान्तेऽभ्यनुजानाति तदा भवति वादिनः प्रतिज्ञाहानिरित्यर्थः । उदाहरणमाह निदर्शनमिति । शब्दोऽनित्यः ऐन्द्रि-

(भा०) अपर आह- दृष्टमैन्द्रियकत्वं सामान्ये नित्ये, कस्मान्न तथा शब्द इति, प्रत्यवस्थिते इदमाह—यद्यैन्द्रियकं सामान्यं नित्यं कामं घटो नित्योऽस्त्विति । स खल्वयं साधकस्य दृष्टान्तस्य नित्यत्वं प्रसञ्जयन्निगमनान्तमेव पक्षं जहाति । पक्षं जहत्प्रतिज्ञां जहातीत्युच्यते प्रतिज्ञाश्रयत्वात्पक्षस्येति ॥ २ ॥

---

(ख०) यकत्वाद् घटवत् इति स्थापना वादिनः । 'ऐन्द्रियकत्वं नित्येऽपि सामान्ये दृश्यते तथाच यथाऽनित्यघटदृष्टान्तेन भवान् शब्दमनित्यं मन्यते तथैव सामान्यदृष्टान्तेन तं नित्यमेव कथन्न मन्यते' इति प्रत्यवस्थानं प्रतिवादिनः । तत्र तृतीयपक्षं प्रवर्तयन् वाद्याह—'यद्यैन्द्रियकं सामान्यं नित्यं तर्ह्यैन्द्रियको घटोऽपि नित्यो स्त्विति' । अत्रोदाहरणे लक्षणं योजयति स खल्विति । स्वपक्षसाधके स्वोक्ते दृष्टान्ते घटे वादी प्रतिवाद्युक्तप्रतिदृष्टान्तस्य सामान्यस्य धर्मं नित्यत्वमनुजानातीति भवत्यत्र सूत्रोक्तस्य प्रतिज्ञाहानिलक्षणस्य समावेश इत्याशयः ॥ ननु दृष्टान्तेऽनिष्टधर्ममनुजानतो भवति दृष्टान्तहानिर्न प्रतिज्ञाहानिरित्यत आह निगमनान्तमेवेति । स्वपक्षसाधकं दृष्टान्तधर्मं त्यजन् स्वपक्षमेव लघूकुरुते—पक्षदौर्बल्येन च प्रतिज्ञाऽपि हीयत एव—कुत इत्यत आह प्रतिज्ञाश्रयत्वादिति । वादिना स्थापनीयस्य पक्षस्य प्रतिज्ञैवाश्रयो यस्मात् तस्मादित्यर्थः ।

तदेतद्भाष्यकारीयं लक्षणसूत्रव्याख्यानं वार्त्तिककारो नानुमन्यते । इदं च वार्त्तिककारस्यारुचिबीजम् । एतत्तु न बुद्ध्यामहे कथमत्र प्रतिज्ञा हीयत इति । हेतोरनैकान्तिकत्वं सामान्यदृष्टान्तेन प्रतिवादी चोदयति । तमनैकान्तिकत्वदोषं स्वपक्षेऽनुद्धृत्य वादी स्वदृष्टान्तेऽपि प्रतिदृष्टान्तधर्मं प्रतिपद्यते । तत्प्रतिपत्तेश्चासिद्धता दृष्टान्ते दोषो भवति साध्यविकलतारूपः । सोऽयमेतद्दृष्टान्तदोषेणाथवा हेतुदोषेण विरुद्ध-

(ख०) त्वेन (घटादीनामपि नित्यत्वाभ्युपगमेनैन्द्रियकत्वस्य हेतोः साध्यानित्यत्वविरुद्धेन नित्यत्वेन व्याप्तत्वात्) निग्रहो वादिनो न प्रतिज्ञाहानिः। यद्ययं 'अस्तु शब्दो नित्य' इत्यवक्ष्यत् तदैवाभविष्यदस्य प्रतिज्ञाया (अनित्यः शब्द इत्यस्या) हानिः॥ यदि दृष्टान्तपरित्यागेन पक्षस्य परित्यागाद् भवत्येव प्रतिज्ञाया अपि हानिरिति मतं (यथा भाष्यकारेण व्याख्यातम्)–तदा सर्वे एव दोषाः प्रतिज्ञामेव दूषयन्तीति ते सर्वेऽपि प्रतिज्ञाहानिरेव स्युः॥ यद्यपि यथाकथञ्चित् दृष्टान्तपरित्यागेन प्रतिज्ञाहानिरुपचरितव्या भवति। यथोक्तं बोधसिद्धौ–दृष्टान्तशब्दोऽत्रोक्तसम्प्रतिपत्तिं लक्षयति तद्विपरीतोपगमः प्रतिज्ञाहानिरेव भवतीति तथाप्युपचारस्याश्रयणं सति गत्यन्तरे नोचितमित्यादि॥ भवति चात्र गत्यन्तरं सूत्रोक्तलक्षणव्याख्यानस्य। तद्यथा–दृष्टश्चासावन्ते व्यवस्थित इति 'दृष्टान्तः'–स्वश्चासौ दृष्टान्तश्चेति 'स्वदृष्टान्त'-शब्देन स्वपक्ष एवाभिधीयते–'प्रतिदृष्टान्त'शब्देन च प्रतिपक्ष उच्यते–प्रतिपक्षश्चासौ दृष्टान्तश्चेति। एवं चैतदुक्तं भवति–'परपक्षस्य यो धर्मस्तं स्वपक्ष एवानुजानातीति'। यथाऽनित्यः शब्द ऐन्द्रियकत्वादिति स्थापनायां–प्रतिवादिनि सामान्येन प्रत्यवस्थिते–'यदि सामान्यमैन्द्रियकं नित्यं दृष्टं तर्हि भवतु शब्दोऽपि नित्य' इति। भवत्येषा 'शब्दो नित्य' इत्यस्याः प्रतिज्ञाया हानिरिति॥

कथं सम्भवति वादिन एतादृशमुत्तरमिति तु नाशङ्कनीयम्। यतो हि मध्यमप्रज्ञा एव प्रायशो भवन्ति निग्राह्याः सम्भवन्ति च तेषामहिशाः प्रमादाः॥

अत्र बोधसिद्धावुदयनाचार्या आहुः–प्रतिज्ञाहानिरिति सूत्रार्थः। एवं च लक्ष्यपदनिरुक्त्यैव लक्षणसिद्धौ द्वितीयप्रकारसूचनार्थं लक्षणारम्भ' इति। एवं चास्य मतेन द्विविधा प्रतिज्ञाहानिरत्र निरुक्ताप्रतिज्ञाया एव परित्यागो वार्तिककारेण दर्शित इत्येका–अपरा च

( सू० ) प्रतिज्ञातार्थप्रतिषेधे धर्मविकल्पात्तद-
र्थनिर्देशः प्रतिज्ञान्तरम् ॥ ३ ॥

( भा० ) प्रतिज्ञातार्थः - अनित्यः शब्द ऐन्द्रियकत्वात् घट-
वदित्युक्ते योऽस्य प्रतिषेधः—प्रतिदृष्टान्तेन हेतुव्यभिचारः—सा-
मान्यमैन्द्रियकं नित्यमिति, तस्मिँश्च प्रतिज्ञातार्थप्रतिषेधे धर्मवि-
कल्पादिति—दृष्टान्तप्रतिदृष्टान्तयोः साधर्म्ययोगे धर्मभेदात्सामा-
न्यमैन्द्रियकं सर्वगतमैन्द्रियकस्त्वसर्वगतो घट इति—धर्मविकल्पा-
त्तदर्थनिर्देश इति साध्यसिद्ध्यर्थम् । कथम् ? यथा घटोऽसर्व-

---

(ख०)दृष्टान्तपरित्यागरूपा भाष्यकारेण दर्शिता । भवति चैवमेकवाक्यता भाष्यवार्त्तिकव्याख्यानयोरित्यवधेयम् ॥ २ ॥

प्रतिज्ञान्तरं नाम निग्रहस्थानं लक्षयति प्रतिज्ञातेतिसूत्रम् ॥ प्र-
तिज्ञातार्थे दूषिते तत्प्रतिचिकीर्षया विशेषणान्तरप्रक्षेपेण पुनस्तद्वचनं
प्रतिज्ञान्तरमिति सूत्रार्थः ॥ एतमेवार्थं व्याकुरुते प्रतिज्ञातार्थ इति भा-
ष्यम् । 'प्रतिज्ञातोऽर्थः' मीमांसकं प्रति वैशेषिकेण 'अनित्यः शब्द' इति—
तस्य साधनम् ऐन्द्रियकत्वाद् घटवदिति । तस्य 'प्रतिषेधः' हेतुर्व्यभिचा-
ररूपः क्रियते प्रतिदृष्टान्तेन 'सामान्यमैन्द्रियकं नित्यमिति' । एतस्मिन्
'प्रतिषेधे' मीमांसकेन कृते—'धर्मविकल्पात्' 'तदर्थं' प्रतिज्ञातार्थसिद्ध्य-
र्थम्—यदा निर्देशः' ( धर्मविकल्पाश्रितः ) क्रियते तदा भवति प्रति-
ज्ञान्तरमित्यर्थः । धर्मविकल्पादिति सूत्रस्थपदमनूद्य व्याचष्टे धर्मवि-
कल्पादिति । दृष्टान्तेति । 'दृष्टान्तप्रतिदृष्टान्तयोः' घटसामान्ययोः
'साधर्म्यम्' ऐन्द्रियकत्वं—तस्य 'योगो' 'तद्धर्मभेदात्'—सामान्यस्य
सर्वगतत्वं घटस्यासर्वगतत्वमित्येवंरूपाद् धर्मभेदादिति—धर्मविकल्पा-
दित्यस्यार्थ इत्यर्थः । तदर्थनिर्देशशब्दार्थमाह तदर्थेति । प्रतिज्ञाता-
र्थसिद्ध्यर्थं शब्दस्यासर्वगतत्वं मीमांसकं प्रति प्रतिपादयितुं निर्देश

(भा०)गत एवं शब्दोऽप्यसर्वगतो घटवदेवानित्य इति। तत्रानित्यः शब्द इति पूर्वा प्रतिज्ञा। असर्वगत इति द्वितीया प्रतिज्ञा-प्रतिज्ञान्तरम्। तत्कथं निग्रहस्थानमिति? न प्रतिज्ञायाः साधनं प्रतिज्ञान्तरम्, किन्तु हेतुदृष्टान्तौ साधनं प्रतिज्ञायाः। तदेतदसाधनोपादानमनर्थकमिति। आनर्थक्यान्निग्रहस्थानमिति॥ ३॥

( सू ) प्रतिज्ञाहेत्वोर्विरोधः प्रतिज्ञाविरोधः॥ ४॥

(ख०)इत्यर्थः॥ प्रश्नपूर्वकं निर्देशस्वरूपमाह कथमिति। यथा घटोऽसर्वगतोऽनित्य इत्येवं शब्दोऽप्यसर्वगतोऽनित्य इति। अस्य निर्देशस्य प्रतिज्ञान्तरमिति नाम समर्थयते तत्र नित्य इति। 'अनित्यः शब्द' इतिवत् 'असर्वगतः शब्द' इत्यपि प्रतिज्ञावाक्यमेव-विप्रतिपन्नं मीमांसकं प्रति निर्देशात्-न तु कृतकत्वादितिवदुदाहरणसाधर्म्यादस्य हेतुलक्षणमस्ति-साध्यनिर्देशः प्रतिज्ञेति तु प्रतिज्ञालक्षणयोगात् प्रतिज्ञान्तरमेवेदमित्यर्थः। प्रतिज्ञान्तरस्य निग्रहस्थानत्वं प्रदर्शयितुं पृच्छति कथमिति। उत्तरम् नेति। यद्यप्यस्य मनसि वर्तते असर्वगतत्वं साधयित्वा मयाऽसर्वगतत्वे सतीत्यैन्द्रियकत्वं हेतुर्विशेषणीयस्तथाच स्वसाधनस्यानैकान्तिकत्वमुद्धरणीयमिति-तथाऽप्येतदनेन न कृतमपि त्वसर्वगतः शब्दो घटवदित्युक्त्वैव विरत इति हेतुदृष्टान्तावनुक्त्वैव स्वपूर्वप्रतिज्ञासाधनासमर्थामन्याम्प्रातिज्ञामेवोपन्यस्तवान्-तच्च निष्प्रयोजनम्-एवं च निष्प्रयोजनवचनोपन्यासे भवत्येवास्य निग्रह इत्याशयः॥ ३॥

प्रतिज्ञाविरोधं निग्रहस्थानं लक्षयति प्रतिज्ञाहेत्वोरिति सूत्रम्। अत्र प्रतिज्ञाहेत्वोरिति प्रतियोगिद्वयमात्रोपलक्षणपरम्। तेन दृष्टान्तादयोऽपि प्रतियोगिन उन्नेयाः। एतदुक्तं भवति। येषां वाक्यगतानां पदार्थानां मिथो व्याघातः प्रतीयते-प्रमाणान्तरं च विरोधकं-स विरोधो

( भा० ) गुणव्यतिरिक्तं द्रव्यमिति प्रतिज्ञा, रूपादितोऽर्थान्तरस्यानुपलब्धेरिति हेतुः । सोऽयं प्रतिज्ञाहेत्वोर्विरोधः- कथम् ? यदि गुणव्यतिरिक्तं द्रव्यं-रूपादिभ्योऽर्थान्तरस्यानुपलब्धिर्नोपपद्यते । अथ रूपादिभ्योऽर्थान्तरस्यानुपलब्धिः- गुणव्यतिरिक्तं द्रव्यमिति नोपपद्यते । गुणव्यतिरिक्तं च द्रव्यं रूपादिभ्यश्चार्थान्तरस्यानुपलब्धिरिति विरुध्यते-व्याहन्यते-न सम्भवतीति ॥ ४ ॥

## ( सू० ) पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासन्न्यासः ॥ ५ ॥

---

(ख०)नाम निग्रहस्थानमिति पर्यवसितोऽर्थः ।एवं च यत्र प्रतिज्ञा हेतुना विरुध्यते-प्रतिज्ञा स्ववचनेनैव वा-हेतुर्वा दृष्टान्तेन प्रमाणान्तरेण वा-प्रतिज्ञाहेतू वा प्रमाणान्तरेण-तस्य सर्वस्यानेनैव सङ्ग्रहः ॥

उदाहरणमाह भाष्यकारः गुणव्यतिरिक्तमिति । उक्तोदाहरणे विरोधं दर्शयितुं पृच्छति कथमिति । उत्तरम् यदीति । रूपादयो गुणाः-अतो यदि द्रव्यं नाम गुणेभ्यो व्यतिरिक्तमस्ति बलवत्प्रमाणसिद्धं तर्हि अर्थान्तरस्यानुपलब्धिरित्यनुपपन्नम्-यदि गुणेभ्योऽर्थान्तरानुपलब्धिरेव बलवत्प्रमाणसिद्धा तर्हि तद्व्यतिरिक्तद्रव्यस्यैवाप्रसिद्धिरिति विरोधः । विरोधशब्दार्थं पर्यायेणाह व्याहन्यत इति । व्याघातोऽसम्भवश्च विरोधः इत्यर्थः ॥ अत्रोदाहरणे हि रूपादिभ्योऽर्थान्तरस्यानुपलब्धेरित्यस्य हेतावनुपलब्धिग्रहणेनोपलभ्याभाव एवोपलक्षितः । तथाचैवं हेत्वर्थो भवति-'गुणव्यतिरिक्तं द्रव्यम् अव्यतिरेकादिति' । सोऽयं प्रतिज्ञाहेत्वोर्व्याप्तिस्मरणानपेक्ष एव परस्परव्याघातः 'अस्ति नास्ति' पदयोरित्यवधेयम् ॥ ४ ॥

प्रतिज्ञासंन्यासं लक्षयति पक्षप्रतिषेध इति सूत्रम् । 'स्वपक्षस्य'

( भा० ) अनित्यः शब्द ऐन्द्रियकत्वादित्युक्ते परो ब्रूयात्-सामान्यमैन्द्रियकं न चानित्यमेवं शब्दोऽप्यैन्द्रियको न चानित्य-इति । एवं प्रतिषिद्धे पक्षे यदि ब्रूयात्-कः पुनराह अनित्यः शब्द-इति । सोऽयं प्रतिज्ञातार्थनिह्नवः-प्रतिज्ञासन्न्यास इति ॥ ५ ॥

( सू० ) अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषमिच्छतो हेत्वन्तरम् ॥ ६ ॥

( भा० ) निदर्शनम्-एकप्रकृतीदं व्यक्तमिति प्रतिज्ञा ।

---

(ख०)'प्रतिषेधे' अनैकान्तिकत्वादिना दूषिते तद्दोषपरिजिहीर्षया यदि वादी 'प्रतिज्ञातार्थं' अपनयति निह्नुते तदा भवति प्रतिज्ञासंन्यासो निग्रहस्थानमित्यर्थः ॥ प्रतिज्ञातस्यार्थस्य शब्दानित्यत्वस्य अपह्नवे अनित्यत्वपक्षे योऽनैकान्तिकत्वरूपदोषः प्रतिवादिनोद्भावितः स तावदुद्धृतः स्यादिति बुद्ध्या प्रतिज्ञामपह्नुते वादीति भावः ॥

उदाहरणमाह भाष्यकारः अनित्य इति । परो ब्रूयादिति । वाद्युक्तस्य हेतोरनैकान्तिकत्वप्रदर्शनार्थमिति भावः ॥ ५ ॥

हेत्वन्तरं नाम निग्रहस्थानं लक्षयति अविशेषोक्त इति सूत्रम् । हेतौ 'अविशेषेण' विशेषणरहितेन सामान्यरूपेण 'उक्ते' सति-यदा तादृशो हेतुः प्रतिषिद्धो दूषितो भवति तदा-यदि प्रतिवादी 'विशेषं' पूर्वमनुक्तमपि विशेषणं स्वोक्ते हेतावाकलयितुम् 'इच्छति' तथा वक्ति च तदा भवति हेतत्वरन्नाम निग्रहस्थानमित्यर्थः । अत्र हेतुपदेन वाक्यगतसाधकभागमुपलक्षयति । प्रथममविशिष्टं साधनभागमभिधाय प्रतिषेधोद्दिधीर्षया पुनर्विशेषणवत्तद्वचनं हेत्वन्तरमित्यर्थः ।

सूत्रार्थं वक्तुमुदाहरणमवतारयति भाष्यकारः निदर्शनमिति । तत्र स्थापनावादिनः साङ्ख्यस्य प्रतिज्ञां दर्शयति एकेति । यत्किञ्चिद्

(भा०)कस्माद्धेतोः? एकप्रकृतीनां विकाराणां परिमाणात्। मृत्पूर्वकाणां शरावादीनां दृष्टं परिमाणम्। यावान्प्रकृतेर्व्यूहो भवति तावान्विकार इति। दृष्टं च प्रतिविकारं परिमाणम्। अस्ति चेदं परिमाणं प्रतिव्यक्तम्। तदेकप्रकृतीनां विकाराणां परिमाणात् पश्यामो व्यक्तमिदमेकप्रकृतीति।

अस्य व्यभिचारेण प्रत्यवस्थानम्—नानाप्रकृतीनामेकप्रकृतीनां च विकाराणां दृष्टं परिमाणमिति।

---

(ख०)व्यक्तं भूतभौतिकेन्द्रियं तत्सर्वमेकप्रकृति—एकोपादानकारणकमिति यावत्। उक्तप्रतिज्ञायाः साधकं हेतुं प्रश्नपूर्वकमुपन्यस्यति कस्मादिति। यस्माद्धि एकप्रकृतीनामेव विकाराणां परिमाणविशेषो दृश्यत इति हेत्वर्थः। तत्रैव साधने दृष्टान्तमाह मृत्पूर्वकाणामिति। एकस्या एव मृदो विकारभूताः शरावादयः तत्र च परिमाणविशेषो गृह्यते। कीदृशं परिमाणमित्यपेक्षायामाह यावानिति। 'यावान्' यत्परिमाणकः 'प्रकृतेः' उपादानभूताया मृदः 'व्यूहः' संस्थानं भवति 'तावान्' तत्परिमाणक एव 'विकारः' शरावादिः भवति। न चैतदुदाहरणं साधनविकलमित्याह दृष्टं चेति। कोऽपि विकारो निष्परिमाणको न दृष्ट इत्यर्थः। उक्त एव साधने उपनयमाह अस्तीति। यत्किञ्चिद् व्यक्तं वर्तते तत्सर्वं परिमाणवदेव दृश्यत इति भावः॥ निगमनमाह तदेकेति। यस्मात् एकप्रकृतीनामेव विकाराणां परिमाणं दृश्यते—दृश्यते च सर्वस्मिन् व्यक्ते परिमाणम्—तस्मात् सर्वं व्यक्तमेकप्रकृतिकमेवेति सिद्धमित्यर्थः॥

एवं साधनवाक्ये साङ्ख्येन प्रयुक्ते तदुक्तस्य हेतोः सव्यभिचारतां प्रदर्शयन् प्रतिवादी प्रत्यवतिष्ठमानं व्यभिचारं प्रदर्शयति नानेति। यथैकप्रकृतीनां विकाराणां परिमाणविशेषो दृश्यते तथैव नानाप्रकृती-

(भा०) एवं प्रत्यवस्थिते आह—एकप्रकृतिसमन्वये सति शरावादिविकाराणां परिमाणदर्शनात् । सुखदुःखमोहसमन्वितं ह्रीदं व्यक्तं परिमितं गृह्यते । तत्र प्रकृत्यन्तररूपसमन्वयाभावे सत्येकप्रकृतित्वमिति ।

तदिदम्—अविशेषोक्ते हेतौ प्रतिषिद्धे विशेषं ब्रुवतो हे-

---

(ख०)नामपि घटरुचकादीनामिति भवति व्यभिचारः परिमितत्वैकप्रकृतिकत्वयोरिति भावः ।

एवं प्रत्यवस्थिते प्रतिवादिनि स्वहेतुं च प्रतिषिद्धं दृष्ट्वा वादी पुनः उक्तदोषपरिजिहीर्षया स्वहेतुं परिमितत्वं विशिनष्टि तद्दर्शयति एवमिति । भवतु व्यभिचारः परिमितत्वैकप्रकृतिकत्वयोः—मम तु एकप्रकृतिसमन्वये सतीति सविशेषणं परिमितत्वं हेतुत्वेन विवक्षितम् । तथाच 'सर्वं व्यक्तमेकप्रकृतिकम् एकप्रकृतिसमन्वये सति परिमितत्वात्' इति साधनवाक्यं पर्यवसितम् । 'एकप्रकृतिसमन्वयः' एकस्वभावानुगम इति यावत् । सर्वेषां व्यक्तानामेकस्वभावानुगमं स्फुटयति सुखदुःखेति । सुखदुःखमोहात्मकत्वमेवैकस्वभावस्तत्स्वभावकत्वादेव सर्वेषां व्यक्तानां परिमितानां सत्त्वरजस्तमोगुणविकाराणामिति हृदयम् । एवं च यत्रैकस्वभावसमन्वये सति परिमाणं तत्रैकप्रकृतित्वमेव—तद्यथैकमृत्पिण्डस्वभावेषु घटशरावोदञ्चनादिषु—घटरुचकादयस्तु नैकस्वभावाः तत्र मार्दसौवर्णादिस्वभावानां भिन्नानामेव सत्त्वादित्येवं प्रकारके साधने नास्ति व्यभिचारदोष इति वादिनो हृदयम् ।

उदाहरणं निर्दिश्य तत्र सूत्रोक्तं लक्षणं योजयति तदिदमिति । पूर्वमविशेषितं परिमितत्वमेव हेतुमुक्तवान् । पश्चात् 'एकप्रकृतिसमन्वय'रूपं विशेषणं प्रदत्तवानिति भावः ॥ ननु भवत्वेवं किन्तेने-

(भा०) त्वन्तरं भवति । सति च हेत्वन्तरभावे पूर्वस्य हेतोरसाधक-त्वान्निग्रहस्थानम् । हेत्वन्तरवचने सति यदि हेत्वर्थनिदर्शनो दृष्टा-न्त उपादीयते, नेदं व्यक्तमेकप्रकृति भवति—प्रकृत्यन्तरोपादा-नात् । अथ नोपादीयते—दृष्टान्ते हेत्वर्थस्यानिदर्शितस्य साधक-भावानुपपत्तेरानर्थक्याद्धेतोरानिवृत्तं निग्रहस्थानमिति ॥ ६ ॥

---

(ख०)त्यत आह सति चेति । विशेषितस्य हेत्वन्तरत्वे तदभिधाने च पू-र्वोक्तहेतोः सव्यभिचारत्वेनासाधकत्वमभ्युपगतं भवतीति भवत्येव नि-ग्रहो वादिन इत्यर्थः ।

हेत्वन्तरवचनेनापि यदि भवेत्प्रतिज्ञायाः सिद्धिस्तदा स्यादपि कि-ञ्चित्फलम् साऽपि तु नैव भवतीत्याह हेत्वन्तरवचने इति । यदि हेत्व-न्तरवचनेन विश्वमेवैकप्रकृति साध्यते तदा निदर्शनं नास्ति सर्वस्य प-क्षे एव निक्षेपात् । अथ निदर्शनसिद्ध्यर्थं किञ्चित् पक्षाद् व्यतिरिच्यते तर्हि तेनैव व्यतिरिक्तेन भवत्यनैकान्तिकत्वं हेतोः—अन्वितानां परिमि-तानां भिन्नप्रकृतित्वादित्यर्थः । अक्षरार्थस्तु—'हेतुः' साधनम्—'अर्थः' साध्यः—तौ हेत्वर्थौ निदर्शयति व्याप्यव्यापकभावेनेति । 'निदर्शनः' हेत्वर्थयोर्निदर्शनः 'हेत्वर्थनिदर्शनो' दृष्टान्तः । स यदि उपादीयते (पक्षव्यतिरिक्तरूपेण—) तदा तस्य दृष्टान्तस्यैवैकप्रकृतितो व्यतिरिक्त-त्वात् प्रकृत्यन्तरोपादानत्वाभ्युपगमादेव 'सर्वं व्यक्तमेकप्रकृतीति' प-क्षो न सिध्यतीत्यर्थः । ननु भवतु दृष्टान्तोपादाने दोषः दृष्टान्तं नै-वोपन्यसिष्यामीत्यत आह अथ नेति । यदि दृष्टान्तो नोपादीयते त-द्रहितो हेतुरसाधक एवेत्यर्थः । अनिदर्शितस्येति । दृष्टान्तरहितस्ये-त्यर्थः ॥ हेतोश्चासाधकत्वे निगृहीत एव भवति वादीति भावः ॥ ६ ॥

(२)प्रकृतोपयोगिवाक्यार्थप्रतिपत्तिफलशून्यनिग्रहस्थानचतुष्कप्रकरणम्।

( सू० ) प्रकृतादर्थादप्रतिसम्बद्धार्थमर्थान्तरम् ॥ ७ ॥

( भा० ) यथोक्तलक्षणे पक्षप्रतिपक्षपरिग्रहे हेतुतः साध्यसिद्धौ प्रकृतायां ब्रूयान्नित्यः शब्दोऽस्पर्शत्वादिति हेतुः। हेतुर्नाम हिनोतेर्धातोस्तुनि प्रत्यये कृदन्तपदम्। पदं च नामाख्यातोपसर्गनिपाताः। अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमा-

---

(ख०) अर्थान्तरं निग्रहस्थानं लक्षयति प्रकृतेति सूत्रम्। अर्थान्तरमिति लक्ष्यनिर्देशः। प्रकृतादर्थादित्यत्र अन्यदित्यध्याहारात् पञ्चमी। 'प्रकृतं' साधनं दूषणं वोपक्रम्य तदनङ्गाभिधानमर्थान्तरमिति फलितोऽर्थः॥

सूत्रार्थमाह यथोक्तेति। पक्षेति। वादे जल्पे वितण्डायां वेत्यर्थः। प्रकृतायामिति कर्त्तव्यत्वेनाभीप्सितायामित्यर्थः। ब्रूयादिति। शब्दानित्यत्वसाधनाय हेतुमिति शेषः। अस्पर्शवत्त्वादिति हेतोः सुखादिभिर्व्यभिचारेणासामर्थ्यं पश्यन् तत्प्रच्छादनार्थं प्रसक्तानुप्रसक्त्या तन्तमर्थमुपन्यस्यति हेतुर्नामेति। एवमुपन्यासेन चार्थान्तरेण निगृह्यत इति भावः॥ अस्पर्शवत्त्वादिति हेतुरित्युक्त्वा हेतुपदस्य व्युत्पत्तिमाह हिनोतेरिति। कृदन्तपदमिति पदपदप्रसक्त्या पदविभागमुपक्रमते पदं चेति। तत्र चतुर्षु नामलक्षणमाह अभिधेयस्येति। 'क्रियान्तरयोगात्' क्रियाविशेषयोगात्। आख्यातस्वरूपमाह क्रियाकारकेति। 'पचति पच्यते' इत्येवमादयः शब्दाः क्रियां कारकं कर्त्तारं कर्म चाभिवदन्तीत्यर्थः। तदेतल्लक्षणमसिद्धमतिव्यापकम्। नहि कर्त्ता कर्म वाऽऽख्यातेनाभिधीयते, क्रियाक्षेपेणैव तयोः प्रतिलम्भात् अनन्यलभ्यस्य च शब्दार्थत्वात्। अतिव्यापकं च पाचकः पाक्य इत्यादेर्ना-

(भा०)णरूपः शब्दो नाम । क्रियाकारकसमुदायः कारकसङ्ख्या-विशिष्टक्रियाकालयोगाभिधाय्याख्यातम् । धात्वर्थमात्रं च काला-भिधानविशिष्टम् । प्रयोगेष्वर्थादभिद्यमानरूपा निपाताः । उपसृज्यमानाः क्रियावद्योतका उपसर्गा इत्येवमादि । तदर्था-न्तरं वेदितव्यमिति ॥ ७ ॥

## ( सू० ) वर्णक्रमनिर्देशवन्निरर्थकम् ॥ ८ ॥

(ख०)म्नोऽपि क्रियाकारकसमुदायरूपत्वादित्यस्मिन् लक्षणेऽपारितुष्यन्नपरं लक्षणद्वयमाह–तत्र प्रथमं कारकेत्यादि । पचति–पच्यत इत्यादौ कर्त्तुः कर्मणो वा सङ्ख्याकालेन वर्त्तमानादिना विशिष्टा क्रिया प्रतीयते । कालश्च क्वचिदस्तीत्येतावतोक्तो न तु विवक्षितो लक्षणे–पचेत् यजेते-त्यादौ तद्योगाप्रतीतेः । अनेन लक्षणेन 'स्थीयते सुप्यते' इत्यादीना-माख्यातानामसङ्ग्रहः कारकतत्सङ्ख्ययोरप्रतीतेः । अतस्तत्सङ्ग्रहाय द्विती यं लक्षणमाह धात्वर्थमात्रमिति । अभिधीयते इत्यभिधानम् । निपातल-क्षणमाह प्रयोगेष्विति । नाम्नोवाऽऽख्यातस्य वा 'अर्थात्' अभिद्यमान-रूपा निपाताः । चादयो हि निपाताः न स्वार्थात् नामार्थादाख्यातार्थाद्वा भेदेन किंचिदभिदधति । रूप्यन्ते प्रतिपाद्यन्ते इति 'रूपाणि'–'अर्थात्' नामार्थात् आख्यातार्थाद्वा–'भिद्यमानं रूपं' प्रतिपाद्यमानं येषां निपा-तानां ते तथोक्ताः ॥ उपसर्गलक्षणमाह उपसृज्यमान इति । 'उपसृज्य-मानाः' समीपे प्राक् प्रयुज्यमानाः–क्रियावद्योतका इति । अवद्योतनं चोपलक्षणम् । अधिकार्था विपरीतार्थाश्चोपसर्गा गृह्यन्ते-यथा आग-च्छति–प्रतिष्ठत इत्यादिषु ॥

इदं च निग्रहस्थानं यथा साधनवादिनस्तथैव दूषणवादिनो-ऽपि द्रष्टव्यम् ॥ ७ ॥

निरर्थकं निग्रहस्थानं लक्षयति वर्णक्रमेति सूत्रम् । अत्र वर्णक्रम-

( भा० ) यथा नित्यः शब्दः कचटतपाः जबगडदशत्वात् झभञ्घढधषवद्दिति एवम्प्रकारं निरर्थकम् । अभिधानाभिधेयभावानुपपत्तौ अर्थगतेरभावाद् वर्णा एवं क्रमेण निर्दिश्यन्त इति ॥ ८ ॥

( सू० ) परिषत्प्रतिवादिभ्यां त्रिरभिहितमप्यविज्ञातमविज्ञातार्थम् ॥ ९ ॥

( भा० ) यद्वाक्यं परिषदा प्रतिवादिना च त्रिराभिहितमपि न विज्ञायते—श्लिष्टशब्दमप्रतीतप्रयोगमतिद्रुतोच्चारितमित्येव-

(ख०)वदित्यत्र वतिना अवाचकप्रयोगमुपमिनोति । तेनावाचकप्रयोगो निरर्थकमित्यर्थः ॥ सूत्रमुदाहरणप्रदर्शनेन व्याचष्टे यथेति । वर्णक्रमनिर्देशशब्दं व्युत्पादयति अभिधानेति । उक्तानां वर्णानामर्थाभावात् केवलं वर्णा एव क्रमेण निर्दिश्यन्त इत्यर्थः ॥ वादिनम्प्रत्यप्रतिपादकत्वमेवात्र विवक्षितमत एवाह भाष्यकार एवमिति । न पुनरिदमेवेत्यर्थः । एवं यदा स्वभाषया तद्भाषानभिज्ञमार्यं प्रति शब्दनित्यत्वं प्रतिपादयति तदाऽपि निरर्थकं निग्रहस्थानं भवत्येव ॥ ८ ॥

अविज्ञातार्थं नाम निग्रहस्थानं लक्षयति परिषादिति सूत्रम् । त्रिवारमभिहितमपि वादिना परिषत्प्रतिवादिभ्यां चार्थवत्तयाऽविज्ञातमविज्ञातार्थमित्यर्थः ।

सूत्रार्थमाह यद्वाक्यमिति । त्रिरिति—यावद्भिर्वारैः परिषत्प्रतिवादिनोरर्थप्रत्ययो भवेत्तावद्वारोपलक्षणम् । स प्रत्ययः प्रायशस्त्रिभिर्वारैर्भवत्येवेति तथैवोक्तम् । ननु समानसङ्केतेन वादिना त्रिरभिहितमविज्ञातार्थमिति न सम्भवति । सम्भवे वा परिषत्प्रतिवादिनौ जडौ न च जडानवबोधे प्रतिपादकस्य कश्चिदपराधः । नहि बधिरो गीतं न शृणोतीति गायनस्य कश्चिदपराध इत्यत आह श्लिष्टेति । 'श्लिष्टपदं' यथा

(भा०) मादिना कारणेन तदविज्ञातमविज्ञातार्थम्। असामर्थ्यसंवरणायप्रयुक्तमिति निग्रहस्थानमिति ॥ ९ ॥

( सू० ) पौर्वापर्यायोगादप्रतिसम्बद्धार्थमपार्थकम् ॥ १० ॥

( भा० ) यत्रानेकस्य पदस्य वाक्यस्य वा पौर्वापर्येणान्वययोगो नास्ति इत्यसम्बद्धार्थत्वं गृह्यते तत्समुदायार्थस्यापायादपार्थकम् । यथा—दश दाडिमानि, षडपूपाः, कुण्डम्, अजाजिनम्, पललपिण्डः, अथ रौरुकमेतत्, कुमार्याः पाय्यं, तस्याः पिता अप्रतिशील इति ॥ १० ॥

---

(ख०)'श्वेतो धावतीति' असति प्रकरणादौ नियामके दुर्बोधमेव भवति । 'अप्रतीतप्रयोगं' यथा जर्फरी तुर्फरीतू इत्यादि । 'अतिद्रुतोच्चारणम्' अस्पष्टत्वकारणमात्रोपलक्षकम् । अस्य निग्रहस्थानत्वं प्रकटयति असामर्थ्येति ॥ ९ ॥

अपार्थकन्नाम निग्रहस्थानं लक्षयति पौर्वापर्येति सूत्रम् ॥ 'पौर्वापर्यायोगात्' अश्लिष्टस्याद्रुतोच्चारितस्य प्रतीतियोग्यस्याप्यनेकपदस्य वाक्यस्य वा यत्र पौर्वापर्यसम्बन्धः नास्ति तस्मात् कारणात् यत् 'असम्बद्धार्थत्वम्' परस्परसाकाङ्क्षत्वराहितत्वम् तत् 'अपार्थकमिति' योजना ।

वाच्यार्थशून्यं 'निरर्थकम्'—समुदायार्थशून्यं च 'अपार्थकम्' इति विवेकः । सूत्रार्थमाह यत्रेति । 'अपार्थकमिति' नाम व्युत्पादयति तत्समुदायेति । समुदायार्थस्य वाक्यार्थस्य 'अपायात्' अभावात 'अपार्थकम्' इत्यस्य नामेत्यर्थः ॥

वाक्यानां पौर्वापर्यसम्बन्धाभावस्योदाहरणमाह यथा 'दश दडिमानि' 'षड़पूपा' इति । पदानां पौर्वापर्यसम्बन्धाभावस्योदाहरणमाह कुण्डमजाजिनमित्यादि । 'रौरुकं' रुरुसम्बन्धि । 'पाय्यं' पाययितव्यम् । 'अप्रतिशीलो' वृद्धः ॥ १० ॥

( ३ ) स्वसिद्धान्तानुरूपप्रयोगाभावनिग्रहस्थानत्रिकप्रकरणम् ।

( सू० ) अवयवविपर्यासवचनमप्राप्तकालम् ॥ ११ ॥

( भा० ) प्रतिज्ञादीनामवयवानां यथालक्षणमर्थवशात् क्रमः। तत्रावयवविपर्यासेन वचनमप्राप्तकालमसम्बद्धार्थं निग्रहस्थानमिति ॥ ११ ॥

( सू० ) हीनमन्यतमेनाप्यवयवेन न्यूनम् ॥ १२ ॥

---

(ख०) अप्राप्तकालन्नाम निग्रहस्थानं लक्षयति अवयवेति सूत्रम् ॥

सूत्रं व्याचष्टे प्रतिज्ञादीनामिति । प्रतिज्ञादीनामनुमानवाक्यावयवानामर्थानुरोधेन च कश्चिन्निर्धारितः क्रमोऽस्तीत्युपपादितम्प्रथमेऽध्याये । अपेक्षिताभिधायिन एव वचनात्परे प्रतिपद्यन्ते नान्यस्य । तत्र प्रथमं साध्यनिर्देशोऽपेक्षितः परैः न साधननिर्देशः । तत्र यदि वादी प्रथमं साधनमेव प्रयुञ्जीत कथमपेक्षितं ब्रूयात्—अनपेक्षिताभिधायी च कथं प्रतिपादको नाम । तदेवं सर्वाण्येव हेतुवचनादीनि क्रमवन्ति नाक्रमाणि प्रतिपादयितुमर्हन्तीति । सोऽयं प्रतिज्ञादीनामर्थ एतादृशो य एषां क्रममन्तरेण न शक्यो ज्ञातुमित्याशयः । उक्तस्य क्रमस्य विपर्यासे किम्भवतीत्यत आह तत्रेति । अवयवविपर्यासे आकाङ्क्षाभावात् तत्पूर्वकत्वाच्च पदार्थसम्बन्धस्यासम्बन्धं निग्रहस्थानमित्यर्थः ।

उदयनाचार्या अत्रावयवशब्दं समस्तकथाभागसङ्ग्रहार्थं मन्यन्ते । तथोक्तम् बोधसिद्धौ—वादिना हि प्रयोगोऽभिधेयः तदनन्तरं सङ्क्षेपतो विस्तरतो वा हेत्वाभासोद्धारः कार्यः प्रतिवादिनाऽपि जल्पे वादिप्रयुक्तं हेतुमुपालभ्य स्वपक्षे साधनं वक्तव्यम् अथ हेत्वाभासा उद्धरणीया इति क्रमः । तत्र यदि प्रथमत एव हेत्वाभासानुद्धरति पश्चाद्धेतुं प्रयुङ्क्ते तदा भवति क्रमस्य विपर्यास इत्यादि ॥ ११ ॥

न्यूनं नाम निग्रहस्थानं लक्षयति हीनमिति सूत्रम् । प्रतिज्ञादीनां

( भा० ) प्रतिज्ञादीनामवयवानामन्यतमेनाप्यवयवेन हीनं न्यूनं निग्रहस्थानम् । साधनाभावे साध्यासिद्धिरिति ॥ १२ ॥

( सू० ) हेतूदाहरणाधिकमधिकम् ॥ १३ ॥

( भा० ) एकेन कृतत्वाद् अन्यतरस्यानर्थक्यमिति । तदेतन्नियमाभ्युपगमे वेदितव्यमिति ॥ १३ ॥

---

(ख०)पञ्चावयवानां मिलितानां साधनत्वमुपपादितम् । अंशतोऽपि न्यूनत्वे साधनत्वं नास्ति । साधनत्वाभावे च न साध्यसिद्धिः । न हि सामग्रीनिष्पाद्यं कार्यं सामग्र्येकदेशाद् भवतीत्यर्थः । अमुमेवार्थं भाष्यकार आह प्रतिज्ञादीनामिति । निग्रहस्थानत्वमस्य प्रदर्शयति साधनाभाव इति ॥ १२ ॥

अधिकन्नाम निग्रहस्थानं लक्षयन्नाद्यं द्विप्रकारकं तल्लक्षयति हेत्विति सूत्रम् । अत्र 'अधिकम्' उपयुक्तमपुनरुक्तं कृतकर्त्तव्यमभिधीयमानं ग्राह्यम् । तेनैवानर्थकानां व्यवच्छेदः ।

निग्रहस्थानत्वमुपपादयन्नेव सूत्रार्थमाह एकेनेति । एकेनैव हेतुना दृष्टान्तेन वा साध्यसिद्धेः 'कृतत्वात्' निष्पन्नत्वात् हेत्वन्तरस्य दृष्टान्तान्तरस्य वाऽभिधानं व्यर्थमेवात एव भवति निग्रहस्थानमित्यर्थः ॥ अत्र विशेषमाह तदेतदिति । यत्र 'कथमेतत् साध्यं सिध्यतीति' जिज्ञासा तत्रैकेनैव साधनेन साध्यसिद्धेः साधनान्तराभिधानमनर्थकम् निष्पादितक्रिये कर्मण्यविशेषाभिधायिनः साधनस्य साधनन्यायातिपातात् । यत्र तु प्रतिवादिनः परिषदो वा जिज्ञासा भवति 'कति साधनानि भवन्त्यस्मिन् साध्ये' इति तत्र यावन्ति साधनानि तावन्ति सर्वाण्येव वाच्यान्येवेत्याशयः ॥ १३ ॥

(४) पुनरुक्तनिग्रहस्थानप्रकरणम् ।

॥ (सू०) शब्दार्थयोः पुनर्वचनं पुनरुक्तमन्यत्रानुवादात् ॥ १४ ॥

(भा०) अन्यत्रानुवादात् शब्दपुनरुक्तमर्थपुनरुक्तं वा। नित्यः शब्दो नित्यः शब्द इति शब्दपुनरुक्तम् । अर्थपुनरुक्तम्-अनित्यः शब्दो निरोधधर्मको ध्वनिरिति ॥

अनुवादे त्वपुनरुक्तं शब्दाभ्यासादर्थविशेषोपपत्तेः ।

यथा हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनमिति॥१४॥

---

(ख०) पुनरुक्तन्नाम निग्रहस्थानं लक्षयन्नाद्यं द्विप्रकारकं तल्लक्षयति शब्दार्थयोरिति सूत्रम् ।

सूत्रार्थमाह अन्यत्रेति । शब्दस्य पुनर्वचनमेकम्-पुनरुक्तम्-अर्थस्य पुनर्वचनं द्वितीयं-पुनरुक्तम् । उक्तस्यापि केनचित् प्रयोजनेन यत्रानुवादोऽपेक्षितस्तत्रैवंविधोऽनुवादः सार्थकत्वान्न भवति दोषायेत्याह अन्यत्रानुवादादिति । शब्दपुनरुक्तमुदाहरति ।नित्य इति । अर्थपुनरुक्तमुदाहरति अर्थेति । यदेवोक्तमनित्य इति तदेवोक्तं निरोधधर्मक इति-एवं शब्दो ध्वनिरिति पर्यायावेव ॥ नन्वनुवादः कुतो न दोषास्पदमित्यत आह अनुवादे त्विति । अनुवादे पुनर्वचनं न भवति 'पुनरुक्तं' निग्रहस्थानम्-कस्मात्-तत्र हि पुनरुक्त्या भवत्यर्थविशेषसिद्धिरतो न स निष्प्रयोजन इत्यर्थः । कुत्र दृष्टाऽर्थविशेषसिद्धिरनुवादेनेत्यपेक्षायामाह यथेति । अनुमानप्रयोगे प्रतिज्ञायामुक्तायामपि पुनर्निगमनरूपेण सैवोच्यते-भवति च तत्र प्रयोजनसिद्धिरिति दर्शितम्प्रथमेऽध्याये निगमनलक्षणसूत्रे ॥ १४ ॥

(सू० ) अर्थादापन्नस्य स्वशब्देन पुनर्वचनम् ॥१५॥

(भा० ) पुनरुक्तमिति प्रकृतम् । निदर्शनम्—उत्पत्तिधर्मकत्वादनित्यमित्युक्त्वा अर्थादापन्नस्य योऽभिधायकः शब्दस्तेन स्वशब्देन ब्रूयादनुत्पत्तिधर्मकं नित्यमिति । तच्च पुनरुक्तं वेदितव्यम् । अर्थसम्प्रत्ययार्थे शब्दप्रयोगे प्रतीतः सोऽर्थोऽर्थापत्त्येति ॥ १५ ॥

(५) उत्तरविरोधिनिग्रहस्थानचतुष्कप्रकरणम् ।

(सू० ) विज्ञातस्य परिषदा त्रिरभिहितस्याप्य-

---

(ख०) तृतीयप्रकारकं पुनरुक्तनिग्रहस्थानं लक्षयति अर्थादिति सूत्रम् । सूत्रापेक्षितमंशं पूर्वसूत्रानुवृत्त्या पूरयति पुनरुक्तमिति । एवं च यदपि प्रथमयोक्त्या शब्दैः साक्षान्नाभिहितमपि त्वर्थाक्षिप्तमेव—तस्यापि 'स्वशब्देन' तदभिधायकशब्देन पुनः प्रतिपादनं भवत्येव पुनरुक्तं नाम निग्रहस्थानमित्यर्थः । उदाहरणमाह निदर्शनमिति । शब्दोऽनित्य उत्पत्तिधर्मकत्वादित्युक्ते पुनरप्याह 'यदनुत्पत्तिधर्मकं तन्नित्यमिति । अत्र च अनुत्पत्तिधर्मकस्य नित्यत्वं पूर्ववचनेनैवार्थादाक्षिप्तम्—तथापि स एवार्थः स्वशब्देन साक्षादभिधायकेन द्वितीयवाक्येन पुनरुच्यते—भवत्येवैतत्पुनरुक्तं नाम निग्रहस्थानमित्यर्थः ॥ एवंविधस्य पुनर्वचनस्य दोषास्पदत्वं प्रदर्शयति अर्थसम्प्रत्ययार्थ इति । अर्थावबोधनायैव शब्दप्रयोगोऽपेक्ष्यते—तदवबोधनं च यथैव साक्षादभिधानेन भवति तथैवार्थादाक्षेपेण चेत्यादावाक्षिप्तस्यैव पुनर्वचनं नापेक्ष्यत इत्यनपाक्षेतिभिधाने भवत्येव निग्रहस्थानमिति भावः । तदनेन सूत्रद्वयेन पुनरुक्तमेकमेव निग्रहस्थानं कथंचिदवान्तरभेदविवक्षया त्रिविधमुक्तं प्रपञ्चार्थम् । तदेवं पुनरुक्तं क्वचिच्छब्दाभ्यासात् क्वचित्पर्यायान्तरात् क्वचिच्चार्थादिति ॥ १५ ॥

प्रत्युच्चारणमननुभाषणम् ॥ १६ ॥

( भा० ) विज्ञातस्य वाक्यार्थस्य परिषदा, प्रतिवादिना त्रिरभिहितस्य यदप्रत्युच्चारणं तदननुभाषणं नाम निग्रहस्थानमिति । अप्रत्युच्चारयन् किमाश्रयं परपक्षप्रतिषेधं ब्रूयात् ॥१६॥

( सू० ) अविज्ञातं चाज्ञानम् ॥ १७ ॥

( भा० ) विज्ञातार्थस्य परिषदा प्रतिवादिना त्रिरभिहित-

---

(ख०) अननुभाषणं नाम निग्रहस्थानं लक्षयति विज्ञानस्येति सूत्रम् ॥

प्रतिवादिना उक्तस्य—'परिषदा विज्ञातस्य' अवबुद्धस्य—पुनः प्रतिवादिना परिषदा वाऽनूदितस्य—एवं त्रिः अभिहितस्यापि—'अप्रत्युच्चारणम्'—अननुवादोऽननुभाषणं नाम निग्रहस्थानमिति योजना ॥

तदेतदाह भाष्यकारः विज्ञातस्येति । अस्य निग्रहस्थानत्वं प्रदर्शयति अप्रत्युच्चारयन्निति । यावत् परोक्तस्य साधनं नानुवदितुं शक्नोति तावत् तत्र दूषणादिकमपि वक्तुमसमर्थ एव भवतीति भवत्येवास्य निग्रह इत्यर्थः ।

अत्र यत् 'अप्रत्युच्चारणं' तद् योग्यस्वस्थेन—अनवबोधमनाविष्कुर्वता कथामविच्छिन्दता वादिनेति ध्येयम् । आद्यविशेषणद्वयमननुभाषणस्य अज्ञातनाम्नो निग्रहस्थानान्तराद् व्यवच्छेदाय—अन्त्यं चास्य विक्षेपसाङ्कर्यनिरासायेति—विवेकः ॥ १६ ॥

अज्ञानं नाम निग्रहस्थानं लक्षयत्यविज्ञातमिति सूत्रम् ।

सूत्रस्थचशब्देन सूचितमपेक्षितमंशं पूरयति पूर्वसूत्रानुवृत्त्या विज्ञातार्थस्येति । तदेतल्लक्षणं पर्यवसितम्—प्रतिवादिनोक्तस्य-परिषदा विज्ञातार्थस्य—पुनः प्रतिवादिना त्रिरभिहितस्य—यद् वादिना 'अविज्ञातम्' उपयुक्तज्ञानस्याभावः—तदेवाज्ञानन्नाम निग्रहस्थानमिति—एवं चास्याननुभाषणतो भेदः ॥

(भा०)स्य यदविज्ञातं तदज्ञानं निग्रहस्थानमिति । अयं खल्व-विज्ञाय कस्य प्रतिषेधं ब्रूयादिति ॥ १७ ॥

( सू० ) उत्तरस्याप्रतिपत्तिरप्रतिभा ॥ १८ ॥

( भा० ) परपक्षप्रतिषेध उत्तरम् । तद्यदा न प्रतिपद्यते तदा निगृहीतो भवति ॥ १८ ॥

( सू० ) कार्यव्यासङ्गात्कथाविच्छेदो विक्षेपः ॥१९॥

---

(ख०) अस्य निग्रहस्थानत्वमुपपादयति अयं खल्विति पूर्ववत् ॥१७॥

अप्रतिभानाम निग्रहस्थानं लक्ष्यति उत्तरस्येति । 'परपक्षस्य' प्रतिवादिनोपन्यस्तस्य स्थापनापक्षदूषणादिकस्य—'अप्रतिपत्तिः' अज्ञा-नमस्फूर्त्तिः भवति अप्रतिभा नाम निग्रहस्थानमिति योजना । तदे-तदाह भाष्यकारः परपक्षेति । इयं च 'अप्रतिभा' तदा भवति यदा प्रतिवादी सम्यक् साधनमुपन्यस्तवान्—प्रतिवादिनः साधनाभासे उत्त-रापरिस्फूर्त्या 'पर्यनुयोज्योपेक्षणं' निग्रहस्थानान्तरमेव भवतीति वि-वेकः ॥

वादिना कृतात् प्रतिपक्षानुवादादनन्तरमेवास्यावसरः । तथाहि नाज्ञानमुद्भाव्यं—सन्दिग्धत्वात् स्वयमनाविष्काराच्च । नाननुभाषणम्—तस्यानुवादक्रिययैवापास्तत्वात् । न विक्षेपः—कथाविच्छेदव्याजानुक्तेः । नार्थान्तरम्—प्रसक्तानुप्रसक्तेरभावात् । नापार्थकम् -अनुक्रमेणानन्वया-ग्रहणादिति । एतस्यां वेलायामुत्तरं श्रोतुमवहितायां परिषदि वादिनि चोत्सुके यदि प्रतिवादी श्लोकपाठादिभिरुत्तरावज्ञां प्रदर्शयति भवत्येवास्य निग्रह इति ॥ १८ ॥

विक्षेपं नाम निग्रहस्थानं लक्ष्यति कार्येति । साधनस्य दूषण-स्य चोपन्यासमभ्युपगम्य तदवस्थः प्रतीयमान एव प्रतिवादिना दार्ढ्य-सभ्यानां वा कठोरत्वमवगम्याकस्मात्—'कार्यव्यासङ्गात्' कार्य व्यास-

( भा० ) यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति इदं मे करणीयं विद्यते तस्मिन्नवसिते पश्चात्कथयामीति विक्षेपो नाम निग्रहस्थानम् । एकनिग्रहावसानायां कथायां स्वयमेव कथान्तरं प्रतिपद्यत इति ॥ १९ ॥

(६) दोषनिरूप्यमतानुज्ञादिनिग्रहस्थानात्रिकप्रकरणम् ।

( सू० ) स्वपक्षे दोषाभ्युपगमात् परपक्षे दोषप्र-

---

(ख०)ज्य 'अधुना मयेदं कार्यान्तरं करणियमस्ति—श्वः परश्वो वाव-दिष्याम्युत्तरम्' इत्याद्युक्त्वा—'कथाविच्छेदः'- कथां व्यवच्छिनत्ति तदा भवति विक्षेपो निग्रहस्थानमिति योजना ॥

कार्यव्यासङ्गस्यात्राभ्युपगतकथाविच्छेदमात्रोपलक्षणत्वमिति तात्पर्यंकृतः ॥

तदेतदाह भाष्यकारः—यत्रेति । अस्य निग्रहस्थानत्वमुपपादयति एकनिग्रहेति । यद्यपि कालान्तरे उत्तरं दास्यामीति वचनेन वादिनः सर्वथाऽनभिज्ञता न सूचिता—पुनरवसरेऽपेक्षितस्योत्तरस्य सम्भाव्यमानत्वात् तथाऽपि कालान्तरे सतोऽसतो वोत्तरस्य वचनेऽपि कथान्तन्तरमेव तत् स्यात्—पूर्वा तु कथा कार्यव्यासक्त्योत्तरादानादेव विच्छिन्ना—कथाविच्छेदस्य चैकतरनिग्रहमूलकत्वादित्यर्थः । न चेदं निग्रहस्थानमर्थान्तरमेव—तत्र प्रकृतमेव साधयामीति व्याजेन प्रसक्तानुप्रसक्तावतारेण कथाया विच्छेदाभावात् । न चास्य हेत्वाभासेष्वन्तर्भावः—न हि विक्षेपस्यान्यतमलिङ्गधर्मानुविधानं नापि प्रकृतसाध्यसिद्धये प्रयोगो येन हेत्वाभासः स्यात् । न चेदमनर्थकम्—न ह्यत्रासमानसङ्केतः प्रतिपादकः । न चापार्थकम्—नेह पदानि वाक्यानि वा पौर्वापर्येणासम्बद्धानि । न चात्राज्ञानं येनाप्रतिभा भवेत् । तस्मात् पृथगेव निग्रहस्थानमिदमिति सिद्धम् ॥ १९ ॥

सङ्गो मतानुज्ञा ॥ २० ॥

( भा० ) यः परेण चोदितं दोषं स्वपक्षेऽभ्युपगम्यानुद्धृत्य वदति—भवत्पक्षेऽपि समानो दोष इति—स स्वपक्षे दोषाभ्युपगमात्परपक्षे दोषं प्रसञ्जयन्परमतमनुजानातीति मतानुज्ञा नाम निग्रहस्थानमापद्यत इति ॥ २० ॥

( सू० ) निग्रहस्थानप्राप्तस्यानिग्रहः पर्यनुयोज्योपेक्षणम् ॥ २१ ॥

( भा० ) पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः । त-

---

(ख०) मतानुज्ञानाम निग्रहस्थानं लक्षयति स्वपक्षदोषेति—सूत्रम् । अत्र 'पक्षः' सिद्धान्तः—'दोषः' प्रतिकूलतामात्रम्—'अभ्युपगमः' अनुद्धारः । एवं च स्वसिद्धान्ते परोक्तं प्रतिकूलमनुद्धृत्य परसिद्धान्ते प्रतिकूलबुद्ध्या तत्प्रसञ्जनम् मतानुज्ञा नाम निग्रहस्थानमिति योजना ॥

सूत्रार्थमाह यः परेणेति । कथं ज्ञायते परोक्तदोषोऽनेनाभ्युपगत इत्यत आह अनुद्धृत्येति । यद्यसौ स्वपक्षदोषं नाभ्युपगच्छेत् तदुद्धरेदेव तमिति भावः ॥ मतानुज्ञानाम ब्युत्पादयन्नस्य निग्रहस्थानत्वमुपपादयति परमतमिति । 'परमतं' परेण दत्तं स्वपक्षदोषमित्यर्थः । एतदनुज्ञानादेव च भवत्यस्य निग्रह इत्यर्थः ॥ २० ॥

पर्यनुयोज्योपेक्षणं नाम निग्रहस्थानं लक्षयति निग्रहेति सूत्रम् ।

तदर्थमाह पर्यनुयोज्य इति । 'पर्यनुयोज्यः'—'निग्रहस्य' 'उपपत्त्या' इदमत्र तव निग्रहस्थानं भवतीति प्रदर्शनेन—'चोदनीयः' गर्हणीय एवात्र 'पर्यनुयोज्य'—शब्देनोच्यते । तस्य 'उपेक्षणं' उक्तवचनेनागर्हणं यदि क्रियते तदा भवत्येव निग्रह एवमुपेक्षणं कृतवत इत्यर्थः ।

नन्विदं पर्यनुयोज्योपेक्षणं निग्रहस्थानं केनोद्भावनीयम् । न तावद् वादिना—न ह्यसौ स्वसाधनदोषमुन्मत्तवदुद्भावयति । नापि प्रतिवा-

(भा०) स्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः । एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम् । न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयादिति ॥ २१ ॥

( सू० ) अनिग्रहस्थाने निग्रहस्थानाभियोगो निरनुयोज्यानुयोगः ॥ २२ ॥

---

(ख०) दिना- न ह्यनुन्मत्त आत्मानमात्मना निगृह्णातीत्यत आह एतच्चेति । अयं वादी प्रतिवादी वा स्वविपक्षं पर्यनुयोज्यं जानानोऽप्युपेक्षत इति सभापतिना परिषदा वा 'कस्यात्र कथायां पराजय' इति पृष्टया एतन्निग्रहस्थानमुद्भावनीयमित्यर्थः ॥ वादी प्रतिवादी वा कथं नोद्भावयेदिदमित्यत आह न खल्विति । 'स्वकौपीनं' स्वानिग्राह्यत्वम् । व्याख्यातार्थमेतत् ॥

तत्त्वनिर्णयावसाने वादे यदैतन्निग्रहस्थानमुद्भाव्यते तदा द्वयोरपि वादिप्रतिवादिनोर्निगृहीतत्वात् ( एकस्य निग्रहस्थानम्प्राप्तत्वादपरस्य च पर्यनुयोज्योपेक्षणादेव निगृहीतत्वात ) परिषदेव विजयते । जल्पवितण्डयोश्च तत्त्वानपेक्षं पुरुषसामर्थ्यपरीक्षणं प्रवृत्तयोर्वादिप्रतिवादिनोः प्रतिवाद्येव पराजीयते तेनैव पर्यनुयोज्योपेक्षणस्य कृतत्वात् वादिनो निग्रहस्य च तेनानुद्भावितत्वादिति विवेकः ॥

वादिना सम्यक् साधने प्रत्युक्ते प्रतिवादिना उत्तराप्रतिपत्तिरप्रतिभा- साधनाभासोपन्यासे चोत्तराप्रतिपत्तिः पर्यनुयोज्योपेक्षणमिति विशेषः ॥ २१ ॥

निरनुयोज्यानुयोगं नाम निग्रहस्थानं लक्षयति अनिग्रहस्थान इति ॥ 'अनिग्रहस्थाने' यत्रोक्तौ निग्रहस्थानत्वं नास्ति तत्र 'निग्रहस्थानाभियोगः' भवतीदमत्र निग्रहस्थानमिति परस्यानुयोगो भवति निरनुयोज्यानुयोग इति योजना ॥

( भा० ) निग्रहस्थानलक्षणस्य मिथ्याऽध्यवसायादनिग्रहस्थाने निगृहीतोऽसीति परं ब्रुवन् निरनुयोज्यानुयोगान्निगृहीतो वेदितव्य इति ॥ २२ ॥

(७) कथकान्योक्तिनिरूप्यनिग्रहस्थानद्वयप्रकरणम् ।

( सू० ) सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः ॥ २३ ॥

( भा० ) कस्यचिदर्थस्य तथाभावं प्रतिज्ञाय प्रतिज्ञातार्थविपर्ययाद् अनियमात् कथां प्रसञ्जयतोऽपसिद्धान्तो वेदितव्यः । यथा न सदात्मानं जहाति—न सतो विनाशो—नासदा-

(ख०)सूत्रं व्याचक्षाण उक्तस्य एवम्मिथ्यानुयोगस्य मूलं प्रदर्शयति-निग्रहस्थानलक्षणस्येति । निग्रहस्थानस्य लक्षणमविद्वानेवैवमभियोगं करोतीत्यर्थः । न चायमप्रतिभैव—सा ह्युत्तराप्रतिपत्तिरियं त्वनुत्तरस्यैवोत्तरत्वेन विरुद्धा प्रतिपत्तिरिति महान् विशेषः । न चास्य हेत्वाभासतैव—हेत्वाभासा हि वादिनो निग्रहस्थानमयं तु प्रतिवादिन इति भेदः ॥ अनेनैव च निग्रहस्थानेन सर्वा जातयो निग्रहस्थानत्वेन सङ्गृहीता भवन्तीत्यवगन्तव्यम् ॥ २२ ॥

अपसिद्धान्तं नाम निग्रहस्थानं लक्षयति सिद्धान्तमिति । 'सिद्धान्तम्' कंचिदेकं 'अभ्युपेत्य' प्रतिज्ञाय—'अनियमात्' अभ्युपगतसिद्धान्तातिक्रमेण 'कथाप्रसङ्गः' साधनदूषणयोरभिधानम्—अपसिद्धान्तो नाम निग्रहस्थानं भवतीति योजना ॥

सूत्रार्थं व्याचक्षाणोऽभ्युपेत्येत्यस्य व्याख्यानमाह कस्यचिदिति । कस्यचिदर्थस्य सर्वस्य व्यक्तस्य जगतः 'तथाभावं' एकप्रकृतिकत्वम् । अनियमादित्यस्यार्थमाह प्रतिज्ञातेति । अभ्युपेतार्थविपर्ययात् सिद्धान्तातिक्रमेणेति यावत् ॥ अत्रोदाहरणं साङ्ख्यीयसिद्धान्तमुपन्यस्यति यथा न

(भा०)त्मानं लभते—नासदुत्पद्यत—इति सिद्धान्तमभ्युपेत्य स्वपक्षं व्यवस्थापयति—एकप्रकृतीदं व्यक्तं विकाराणामन्वयदर्शनात्। मृदन्वितानां शरावादीनां दृष्टमेकप्रकृतित्वम्। तथा चायं व्यक्तभेदः सुखदुःखमोहान्वितो दृश्यते। तस्मात्समन्वयदर्शनात्सुखादिभिरेकप्रकृतीदं विश्वमिति।

एवमुक्तवाननुयुज्यते—अथ प्रकृतिर्विकारइति कथं लक्षितव्य-मिति।

यस्यावस्थितस्य धर्मान्तरानिवृत्तौ धर्मान्तरं प्रवर्तते सा प्रकृतिः। यद्धर्मान्तरं प्रवर्तते निवर्तते वा स विकार इति।

---

(ख०)सदिति।तस्यैव पर्यायान्तरेण कथनं न सत इति। अपरं तस्याभिमतमाह नासदात्मानमिति। तस्यैव पर्यायान्तरेण कथनं नासदुत्पद्यत इति। तमिमं साङ्ख्यानां सिद्धाताभ्युपगमं प्रदर्श्य तद्विपर्ययात् कथाप्रसङ्गमाह सिद्धान्तमभ्युपेत्येति।स्वपक्षव्यवस्थापनप्रकारं दर्शयति एकप्रकृतीदमिति। एका प्रकृतिर्व्यक्तस्योपलभ्यमानस्यार्थजातस्य युक्तेति प्रतिज्ञा। तत्र हेतुः विकाराणामिति। विकारो व्यक्तम्—तेषाम् 'अन्वयदर्शनात्'। तत्रैवोदाहरणं साधर्म्येण मृदन्वितानामिति। तत्रोपनयः तथा चायमिति। निगमनम् तस्मादिति।'विश्वस्य' सर्वस्य व्यक्तस्य कैः समन्वयोऽत्र विवक्षित इत्यपेक्षायामाह सुखादिभिरिति। एवं पूर्वोक्तं सिद्धान्तमभ्युपेत्य 'सर्वो विकार एकप्रकृतिक' इत्येवमुक्तवन्तम्प्रति नैयायिकस्यानुयोगमवतारयति एवमिति। 'अनुयुज्यते' दूषणाय पृच्छ्यत इति यावत्। प्रश्नमाह अथ प्रकृतिरिति। इयं प्रकृतिरयं विकार इति प्रकृतिविकारयोर्भेदः कथं निर्धारयितव्य इति प्रश्नार्थः। एवम्पृष्टः साङ्ख्य उत्तरमाह यस्यावस्थितस्येति। 'यस्यावस्थितस्य' मृदादेः—'धर्मान्तरानिवृत्तौ' शरावादिविनाशे—'धर्मान्तरम्' मणिकादि क्षुद्रमृत्खण्डम् पूर्वमसदेव—

(भा०) सोऽयं प्रतिज्ञातार्थविपर्यासादनियमात् कथां प्रसञ्जयति। प्रतिज्ञातं खल्वनेन—नासदाविर्भवति न सत्तिरोभवति—इति। सदसतोश्च तिरोभावाविर्भावमन्तरेण न कस्य चित्प्रवृत्तिः प्रवृत्त्युपरमश्च भवति। मृदि खल्ववस्थितायां भविष्यति शरावादिलक्षणं धर्मान्तरमिति प्रवृत्तिर्भवति। अभूदिति च

---

(ख०) 'प्रवर्त्तते' जायते सैव 'प्रकृति'र्मृदादि। यच्च धर्मान्तरं 'प्रवर्त्तते' (जायते) 'निवर्त्तते' (नश्यति) वा स एव 'विकार' इति सुस्पष्टोऽयं प्रकृतिविकारयोर्भेद इत्यर्थः॥ एतस्यां साङ्ख्यस्योक्तावपसिद्धान्तं योजयति सोऽयं प्रतिज्ञातेति। सोऽयं वादी सिद्धान्तार्थस्य विपर्ययादनियमात्कथां प्रसञ्जयतीति। तदेव प्रदर्शयति प्रतिज्ञातमिति। यदसत्तन्नाविर्भवत्युत्पद्यते—यच्च सत् तन्न तिरोभवति विनश्यतीति तेन प्रतिज्ञातोऽर्थः। तथापि प्रकृतिविकारभेदवर्णने प्रकृते धर्मान्तरस्यासत एव प्रवृत्तिं उत्पत्तिं तथाच उत्पन्नस्यापि सतो धर्मान्तरस्य 'निवृत्तिं' विनाशं वक्तीति भवत्येवास्य प्रतिज्ञातार्थविपर्यासः। कथमित्यत आह सदसतोरिति। सतो 'निवृत्तिः' तिरोभावो विनाश एव—असतश्च 'प्रवृत्तिः' आविर्भाव उत्पत्तिरेव। एवमसतो नोत्पत्तिस्सतो न नाश इत्यस्य सिद्धान्तस्य भवत्येवानयोक्त्या बाध इति भावः। इयं हि लौकिकप्रमाणसिद्धा सिद्धान्तस्त्वभ्युपगममात्रसिद्ध इति भवति सिद्धान्तस्यैव बाध इति प्रदर्शयितुमुदाहरणमाह मृदीति। प्रकृतौ मृदि असदेव शरावादि प्रवर्त्तते तदा तत्र 'भवति' शब्दप्रयोगस्तदर्थश्च 'उत्पद्यत' इति—एवमुत्पन्नस्य शरावादेर्यदोपरमो भवति तदा तत्र 'अभूत्' शब्दप्रयोगस्तस्य च विनश्यतीत्येवार्थः। लोकसिद्धेनानेन साङ्ख्यीयसिद्धान्तस्य विरोधं दर्शयति तदेतदिति। यद्यसत उत्पत्तिस्सतो विनाशो वा न स्यात्तर्हि मृद्धर्माणामुत्पादविनाशौ प्रवृत्त्युपरमौ दृश्यमानौ न स्यातामिति भवत्येत्र महान् विरोध इत्यर्थः।

(भा०) प्रवृत्त्युपरमः। तदेतन्मृद्धर्माणामपि न स्यात्। एवं प्रत्यवस्थितो यदि सतश्चात्महानमसतश्चात्मलाभमभ्युपैति तदस्यापसिद्धान्तो निग्रहस्थानं भवति। अथ नाभ्युपैति पक्षोऽस्य न सिध्यति ॥ २३ ॥

(सू०) हेत्वाभासाश्च यथोक्ताः ॥ २४ ॥

(भा०) हेत्वाभासाश्च निग्रहस्थानानि। किं पुनर्लक्षणान्तरयोगाद् हेत्वाभासा निग्रहस्थानत्वमापन्नाः यथा प्रमाणानि

---

(ख०) नैयायिकेनैवं पृष्टस्य साङ्ख्यस्य यथाऽपसिद्धान्तो भवति तथा प्रदर्शयति एवं प्रत्यस्थित इति। 'प्रत्यवस्थितः' पृष्ट इति यावत्। यद्युक्तलोकप्रमाणसिद्धार्थानुरोधेन साङ्ख्य 'असत आत्मलाभं' उत्पत्तिं 'ततश्चात्महानिं' विनाशम् अभ्युपगच्छति तदा भवत्यस्यापसिद्धान्त इत्यर्थः ॥ ननु भवत्वेम्—तद्वर्जनायैव नाभ्युगच्छाम्यनात्महानिं आत्मलाभं वा असत इत्यत आह अथ नाभ्युपैतीति। पक्षोऽस्य न सिध्यतीति। विकारो ह्यनेन पक्षीकृत एकप्रकृतिकत्वेन। तत्र विकारलक्षणाभावेन विकाराणामनिरूप्यत्वात् तदभावे न प्रतिज्ञार्थो न वा हेत्वर्थः सम्भवति आश्रयासिद्धत्वादित्यर्थः ॥ २३ ॥

हेत्वाभासं नाम निग्रहस्थानं लक्षयति हेत्वाभासा इति।

सूत्रं व्याचष्टे हेत्वाभासाश्चेति। हेत्वाभासाश्च निग्रहस्थानानि भवन्ति। तेषां निग्रहस्थानत्वे विचिकित्समानः पृच्छति किम्पुनरिति। यथा प्रमाणानि प्रमाणत्वादन्यस्य लक्षणस्य योगात् प्रमेयत्वमापद्यन्ते तथाहि प्रत्यक्षादीनामुपलब्धिसाधनत्वेन लक्ष्यमाणानां प्रमाणत्वम् प्रमाव्याप्यतया च प्रमेयत्वमिति तथैव—किन्तूक्तलक्षणात् अन्यस्य कस्यचिल्लक्षणस्य योगाद् हेत्वाभासा अपि निग्रहस्थानत्वमापद्यन्त इति।

(भा०) प्रमेयत्वमित्यत आह—यथोक्ता इति । हेत्वाभासलक्षणेनैव निग्रहस्थानभाव इति ।

त इमे प्रमाणादयः पदार्था उद्दिष्टा लक्षिताः परीक्षिताश्चेति ॥ २४ ॥

योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम् ।
तस्य वात्स्यायन इदं भाष्यजातमवर्तयत् ॥

इति श्रीवात्स्यायनीये न्यायभाष्ये पञ्चमोऽध्यायः समाप्तः ॥ ५ ॥

॥ समाप्तश्चेदं न्यायदर्शनम् ॥

---

(ख०)यद्येवं तर्हि तल्लक्षणं वक्तव्यमासीन्न चोक्तं सूत्रकृतेति प्राश्निकस्य हृदयम् ॥ तत्रोत्तरम् यथोक्ता इति । पूर्वोक्तहेत्वाभासलक्षणेनैवेषां निग्रहस्थानत्वमपीत्यर्थः ॥ २४ ॥

समस्तशास्त्रार्थमुपसंहरति त इमे प्रमाणादय इति । इति च शास्त्रपरिसमाप्तौ ॥

शास्त्रस्यार्षत्वं प्रदर्शयन् भाष्यकार आत्मनोऽपि नाम प्रदर्शयति योऽक्षपादमिति । यो न्यायः वदतां वरमक्षपादमृषिं प्रत्यभात् अलौकिकशक्त्या तज्ज्ञानगोचरीबभूव—तस्यैव न्यायस्य 'भाष्यजातं' व्याख्यानं वात्स्यायनोऽवर्तयत् व्यररचदिति योजना ॥

इति पञ्चमाध्याये द्वितीयं प्रस्फुरणम् ।

श्रीमच्छ्रोत्रियमैथिलेषु विदितः सत्कर्मचूडामणि—
र्गायत्रीचरणाम्बुजप्रणयधृक् श्रीतार्थनाथोऽभवत् ।
श्रीमन्मैथिलभूमहेन्द्रतनयश्रीवासुदेवात्मजा
पत्नी तस्य कुलद्वये शुभकरी श्रीरामकाशी परा ॥

(ख०) ज्येष्ठस्तत्तनयः सदाशिवरतः श्रीविन्ध्यनाथः सुधी-
स्तत्पश्चाद्‌गणनाथनामक इह श्रीतारणीतत्परः ।
गङ्गानाथ इह स्वतातजननीभक्तस्तदीयानुज-
स्तेनाकारि सताम्मुदे मृदुधिया सद्भाष्यखद्योतकः ॥
गहनस्यास्य भाष्यस्य व्याख्याने यत्प्रवर्त्तनम् ।
साहसस्यापराधोऽयं क्षन्तव्यो न्यायवेदिभिः ॥
पित्रोस्तीर्थलतातीर्थनाथयोः पादयोऽर्पितः ।
भ्रातुः श्रीविन्ध्यनाथस्य प्रभोर्लक्ष्मीश्वरस्य च ॥
इतिमहामहोपाध्यायमैथिलगङ्गानाथझाशर्मणा कृतः खद्योतः ॥

समाप्तश्चायं ग्रन्थः ।

॥ १९२२ ॥



ॐ तत्सत् ।

# सटीकन्यायभाष्यस्य भूमिका ।

## ( नवीनसंस्करणस्यावश्यकता )

अथेदमुपक्रम्यते श्रीमन्महर्षिगोतमप्रणीतानां न्यायसूत्राणां श्रीमन्महामुनिवात्स्यायनविरचितं टीकाद्वयसमलंकृतं भाष्यं मुद्रयित्वा प्रकाशितुम् । इदं ह्यनेकशो मुद्रितमप्यानुपूर्व्यव्याख्यानविरहादद्यावधि पठनपाठनादौ क्लेशजनकमेवेति नैयायिकविदुषां तच्छास्त्रे प्रवेशमिच्छताञ्चोपकारकं नव्यसंस्करणमावश्यकमेवासीत्संस्कृतवाङ्मयजगति प्रथितन्यायदर्शनापरपर्यायस्यास्य महतो न्यायशास्त्रस्य ॥

## ( न्यायशास्त्रस्य महत्त्वम् )

(१)अक्षपादेति प्रथितस्तुत्यनाम्ना गोतमेन मुनिना प्रणीतं न्यायदर्शनं निखिलविद्यासूत्कृष्टमिति प्रतिपादयन्ति श्रुतिस्मृतिपुराणानि । तथाहि—

'न्यायो मीमांसा धर्मशास्त्राणि' इति श्रुतौ ।

पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इति याज्ञवल्क्यस्मृतौ ।

अङ्गानि चतुरो वेदा मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ इति विष्णुपुराणे च ।

अस्यैव च शास्त्रस्य मनुना—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः ॥

---

(१) कदाचिद्वेदव्यासमुनिर्गौतममिदमूचे—यत्त्वया जीवब्रह्मणोर्भेदस्तर्केण साधितस्तत्ते मुखं न द्रक्ष्यामीति । ततो गोतमेन व्यासदर्शनाय प्रसारितः पादः सचक्षुर्जात इति तन्माहात्म्यपरितुष्टेन व्यासेन गोतमस्याक्षपादनाम्ना स्तवः कृत इति होचुर्वृद्धाः ।

इत्यादिना 'तर्क' संज्ञापि प्रदर्शिता । तार्किकरक्षायामपि अस्य सर्वप्रमाणानुग्राहकत्वं प्रसाधितम् । इमामेव च तर्कविद्यामध्यात्मविद्यारूपामलर्काय प्रल्हादाय च दत्तात्रेयो दत्तवानित्युक्तं श्रीमद्भागते महापुराणे । तर्कशास्त्रस्यैव न्यायशास्त्रत्वमिति तु 'आन्वीक्षिकी दण्डनीतिस्तर्कविद्याऽर्थशास्त्रयोः' इति अमरकोष एव प्रतिपादितम् । महर्षिगौतमोक्तान्वीक्षिकीत्यपरसंज्ञेऽस्मिन्न्यायशास्त्रे पदार्थनिरूपणपराणि यानि सूत्राणि तान्युपनिषत्स्वपि तत्र तत्रोपदेशप्रसङ्गेन स्वभावोक्त्या भङ्ग्यन्तरेण वा तत्तत्पदार्थबोधनपराणि वाक्यरूपेणोपलभ्यन्त एवेति सिद्धमेवास्य शास्त्रस्य महत्त्वम् ॥

## ( तर्कशास्त्रकर्तुर्गौतमस्य चरित्रम् )

स चायं न्यायशास्त्रप्रणेता भगवान् महर्षिर्गौतमः कस्मिन् देशे कदा चाविरासीदिति निर्धारणं दूरापेतम् यतस्तन्नाम्न्येव तावदस्ति विवादः कुत्रचित् 'गौतम' इति 'गोतम' इति चानेकत्रोपलभ्यमानत्वात् । परन्तु-'एषा मुनिप्रवरगोतमसूत्रवृत्तिः' इति न्यायसूत्रवृत्तौ, 'भगवता गोतमेन प्रमाणादिपदार्थनवकलक्षणनिरूपणं विधाय' इति च वेदादिभाष्यकर्त्रा माधवाचार्येण प्रणीते सर्वदर्शनसंग्रहे प्रतिपादितत्वात्, तारानाथतर्कवाचस्पतिना वाचस्पत्यकोषे न्यायशब्दे उक्तशास्त्रस्य गोतमप्रणीतत्वेनावधारणाच्च गोतम इत्येव तन्नाम निर्णीयते । अयमेव च गोतमः ऋग्वेदसंहिता-तद्भाष्य-शतपथब्राह्मणादिषु गोत्रप्रवरनिर्णयादिषु चोक्त इत्यस्य समयादिनिर्णये वेदा एव प्रमाणमिति विद्वांसः ।

ये तु पण्डितंमन्या वेदस्यापि समयनिर्धारणे बद्धपरिकरास्ते कदाचित् सार्धद्वयसहस्राब्दात्मको वेदसमयः कदाचिच्च पञ्चसहस्रसंवत्सरपरिमित इत्याद्युक्त्वा वेदप्राचीनत्वमाहात्म्यमपहर्तुं प्रयताः स्ववचोव्याघातेनैव प्रतिज्ञाहान्या निगृहीता भवन्ति । वेदसमयावधारणन्तु गगनोडुगणनमिवाशक्यमेव ।

यद्यप्येतदशक्यमेव समयावधारणं चर्मचक्षुषामल्पज्ञानानान्तथापि आधुनिकैः कतिपयैर्न्यायशास्त्रस्येतिहासान्वेषणपरैर्बुधप्रवरैरनुमानादिप्रमाणसाचिव्येन तन्निर्णयानुसरणे प्रयासः कृत एव । तथाहि—महामहोपाध्यायहरप्रसादशास्त्रिभिः बुद्धस्य पूर्वं गोतम-

स्य स्थितिर्बभूवेति प्रतिपादितम्। तथाचोपलभ्यमानन्यायदर्शनसूत्राणि बौद्धमहायानिकसमकालानि द्वितीयशताब्द्यामेवाभूवन्निति तेषां मतम्॥

महामहोपाध्यायडाक्टरसतीशचन्द्रविद्याभूषणमहोदयास्तु (History Indian Logic) पुस्तके न्यायदर्शनसमयनिश्चयं कुर्वन्तः—'शतपथब्राह्मणाद्युक्तो गोतमः—शाक्यसिंहो बुद्धगोतमः इन्द्रभूतिर्जैनगोतमश्चैककालावस्थायिनो खीष्टाब्दारम्भात् ६०० वर्षेभ्यः पूर्वं वर्तमाना इति' वदन्ति स्म। न्यायसूत्राणि तु तस्मिन् समये प्रणीतानि न वा, पञ्चाध्याय्यात्मकानि प्रणीतानि न वेत्यपि संदिग्धमेव। अस्मन्मतेन तु प्रथमाध्याय एवानेन रचितो वैशेषिकयोगमीमांसावेदान्तबौद्धादिदर्शनासिद्धान्तप्रदर्शनपरा द्वितीयादयोऽध्यायाः केनचिदन्येनैव समयान्तरे लिखिताः। वर्तते चैतेष्वध्यायेष्वनेकत्र लङ्कावतारसूत्रोक्तानां नागार्जुनकृतमाध्यमिकसूत्रोक्तानां च विषयाणामक्षरशः साम्यमिति खीष्टाब्दारम्भसमयनिकटवर्तिन एवैत' इति चामंसत।

(जर्मन) पंडित-जैकोबी (Jacobi) महाशयस्य मतेन सूत्रभाष्ययोर्द्वयोरपि परंपरा समानैव, द्वितीयशताब्द्यन्ते आविर्भूतस्य शून्यवादस्य पश्चात् पञ्चमशताब्द्यां जातस्य विज्ञानवादस्य पूर्वं चास्य सूत्रसमूहस्य भाष्यस्य चोत्पत्तिः। समग्रस्य न्यायभाष्यस्य वक्ता एक एव इति च तेषां मतम्।

तदन्ये नाङ्गीकुर्वन्ति। ब्रुवते च—सूत्रभाष्ययोर्बौद्धमतसंप्रदायस्योपलब्धेरीशातः प० ५०० शताब्द्यामक्षपादो बभूवेति।

पाश्चात्यमतानुयायिनोऽन्ये कृतधियस्त्विदमपि मतमाक्षिपन्तो वदन्ति—वात्स्यायनस्यायमुपरिनिर्दिष्टः समयो गोतमस्य महर्षेः कथं भवेत्, तथा च न्यायसूत्रे (२-२-३६) वैशेषिकसूत्रस्योल्लेखान्न्यायसूत्राण्यौलूक्यदर्शनसूत्रेभ्योऽर्वाचीनान्येव। शबरस्वामिगृहीतोपवर्षवाक्यं चोपवर्षस्य न्यायमतवेत्तृत्वमुपदिशत् ४०० ई० पूर्वकालीनानीमानि सूत्राणीति निर्धारयतीत्याहुः।

अन्ये तु तन्मतानुसारिणः—'तदर्थं यमनियमाभ्यामात्मसंस्कारो योगाच्चाध्यात्मविध्युपायैः' (४ अ० २ आ० ४६ सू०) इति सूत्रव्याख्याने 'योगशास्त्राच्चाध्यात्मविधिः प्रतिपत्तव्य' इति

भाष्यकारेणोक्तत्वात् योगशास्त्रस्य पतञ्जलिप्रणीतत्वात् पतञ्जलेश्च ख्रीष्टाब्दारम्भात् १४० वर्षेभ्यः पूर्वं तदासन्नसमयं वा वर्तमानत्वात् तत्पश्चात्काले न्यायसूत्राणां निर्माणं जातमिति वदन्ति। एवं रीत्या सर्वैरपि परीक्षकंमन्यैर्न्यायसूत्रकर्तुः समयविचारणा कृतापि न सिद्धान्तपक्षमवलम्बत इति पश्यामः।

महामहोपाध्यायगङ्गानाथशर्मभिः कृतस्य न्यायवात्स्यायनभाष्यांग्लानुवादग्रन्थस्य भूमिकायां काशीस्थगवर्नमेन्टसंस्कृतकालेजाध्यक्ष गोपीनाथकविराजएम०ए०महोदयैः कृतेपि सर्वेषां पूर्वमतानां निरासे विवेचने चाधुनापि सूत्रकारसमयनिर्धारणं संशयदोलाधिरूढमेवेति प्रतिभाति। अंशतस्तु तेषां मतानामालोचने प्रवृत्ता भूतपूर्वगवर्नमेन्टसंस्कृतपुस्तकालयाध्यक्षा म०म०विन्ध्येश्वरीप्रसादद्विवेदिनोपि न्यायवार्तिकभूमिकायां वैदिकसमयपक्षमेव सिद्धान्तयन्ति स्म। तथाप्याधुनिकैरांग्लमतानुयायिभिः सर्वैरपि विचक्षणैर्बौद्धसमयमारभ्य ईशोत्पत्त्यनन्तरकालः बौद्धसमय एव वा सूत्रकारसमय इति यत् निर्धारितं तत्रानुक्रमशो विचार्यते। तत्र हरप्रसादशास्त्रिभिर्या शून्यवादमतानां गौतमसूत्रेषूपलब्धिः स्वमतपुष्ट्यै उपात्ता सा वस्तुतत्त्वे विचार्यमाणे अयुक्तैवेति प्रतिभाति—भाष्यस्थशून्यवाद एव नागार्जुनस्येत्यत्र सर्वेषां शून्यवादानामेककालीनत्वमेककर्तृकत्वं चेत्यत्रापि नियामकाभावात्।

विद्याभूषणमहोदयमतं समालोचयन्तो वयमिदं ब्रूमः—'शतपथब्राह्मणादुयुक्तो गोतम' इत्यत्रादिपदेन ऋग्वेदादिसंहितानां ग्राह्यत्वात् उक्तगोतमत्रयस्य चैककालीनत्वात् संहिताग्रन्था अपि बुद्धगोतमात्पूर्वं नव भवेयुः। यच्चोक्तं तैः—'गोतमेन न्यायदर्शनस्य प्रथमाध्याय एव प्रणीतः द्वितीयादयस्त्वन्येन प्रणीताः बौद्धादिदर्शनानां तत्र समालोचनात्' इति—एष्वध्यायेषु लङ्कावतारसूत्रेभ्यो नागार्जुनकृतमाध्यमिकसूत्रेभ्यश्चाक्षरशो विषयाः समुद्धृतास्तस्मात् २।३।४। अध्याया नवीना' इति च। तत्र पञ्चमाध्यायविषये नवीनतार्किकैः समालोचनं किमिति परित्यक्तमिति न बुध्यते। एवं तेष्वध्यायेषु योगं विहायान्यदर्शनशास्त्रस्य नामापि न दृश्यते इति कस्माज्ज्ञायते बौद्धस्यैवेदं मतं मीमांसकस्यैवेदं मतमिति। यदि च संवादात्तदाऽऽधुनिकब्राह्म-आर्य-परमार्थदर्शनादि

ग्रन्थेषु संवादादभिनवमेवेदं न्यायशास्त्रं कथं न कल्पनीयम् । यदि च भाष्यकारानुमतव्याख्यानेन शास्त्रान्तरसंवादादर्वाचीनत्वनिष्कर्षस्तदा 'आप्तोपदेशः शब्दः' इति सूत्रव्याख्याने 'तदेतल्लक्षणमृष्यार्यम्लेच्छानां समान'मिति व्याख्यातत्वात् प्रथमाध्यायोऽपि गौतमहस्तपतित इति सर्वमेवेदं न्यायदर्शनं गौतमेन न कृतमिति स्यात् । अवशिष्टा युक्तिस्तु-अक्षरशो विषयाणां समुद्धरणात्मिका-नानुभवपथमधिरोहति । शङ्कासमाधिपरिशीलनमात्रेण तत्तत्सूत्राणां मूले प्रक्षेपस्वीकारे किमपराद्धमध्यायत्रयेणेति न बुद्ध्यामहे ? कस्माच्च ज्ञायते शाक्यबुद्धादीनामेवेदं मतं गृहीतं न उपनिषदादिलिखितम् । तथाहि बृहदारण्यकोपनिषद्यपि 'नैवेह किञ्चनाग्र आसीत् मृत्युनैवेदमावृतमासी'दित्युपलभ्यते । तद्व्याख्याने च शङ्कराचार्येण तट्टीकायामानन्दज्ञानेनापि शून्यवादि-क्षणिकवादि—बौद्धमतयोरुद्भावनं कृतम्, तच्च तत्तत्संप्रदायधूरवहत्वेन तत्तन्नाम्ना तत्तत्संप्रदायनिराकरणार्थमेवाविष्कृतम्, यतस्तथाविधशङ्कासमाधयोऽनादिकालप्रवृत्ता एव । अपि च लङ्कावतारसूत्रमाध्यमिकसूत्रस्थविषया एवैव सूत्रेषु नान्यत्रेत्यत्रापि किं प्रमाणम् ? बौद्धसूत्रीयविषयाणामुपनिषत्स्वपि उपलम्भात्तत्रस्था एव विषया गौतमेन परिगृहीता इति वाचोयुक्तेः सम्भवात् । तस्मात् विद्याभूषणमहोदयमतमप्यसमीचीनमेव सूत्रकारसमयनिर्धारण इति प्राञ्चः ।

यत्तु वात्स्यायनसमयनिर्धारणहेतुना सूत्रसमयपरिशीलनं तद्वात्स्यायनसमयानिर्धारणेनैव परास्तमित्यग्रे तच्चरितवर्णने वक्ष्यामः । यच्च पातञ्जलसूत्रव्याख्यानान्न्यायसूत्रकारस्य समयनिर्धारणम् । तदपि न चारु । पातञ्जले व्याकरणभाष्य एव 'सप्तद्वीपा वसुमती त्रयो लोकाश्चत्वारो वेदाः साङ्गाः सरहस्या बहुधा भिन्ना एकशतमध्वर्युशाखाः सहस्रवर्त्मा सामवेदः एकविंशतिधा बाह्वृच्यं नवधाऽथर्वणो वेदः वाकोवाक्यं इतिहासः पुराणं न्यायो मीमांसा धर्मशास्त्राणि वैद्यकमित्येतावान् शब्दस्य प्रयोगविषयः' इत्याद्युक्तत्वाद्योगापेक्षया न्यायदर्शनस्य प्राचीनत्वसिद्धेः । पतञ्जलिश्च व्याकरणयोगयोः कर्ताऽभिन्न एव—

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

इत्यादावनेकत्र तयोरभेदस्य प्रतिपादित्वात् । तथा च वास्तविकसमयानिर्धारणस्यासंभवाद्वैदिकसमय एव न्यायसूत्रकारस्येति सामान्यतोऽनुमीयते । सूत्रपाठनिर्णयविषयेपि वाचस्पतिमिश्रकृत-न्यायसूत्रोद्धार-न्यायसूचीनिबंधयोः संवादसमालोचनमादाय विप्लवः प्रदर्श्यते समालोचकंमन्यैः, किन्तु तत्र को विप्लवः कुत्र वा विप्लव इति निरूपणस्य कुत्राप्यनुपलब्धेरकिंचित्करमेतत् । उपलभ्यते च न्यायदर्शनस्य द्विविधा व्याख्यानशैली सूत्रपाठभेदाद्यथा 'तात्पर्यपरिशुद्धिः' 'न्यायपरिशिष्टं' च उदयनाचार्येण-'परिशुद्धिप्रकाशः' 'अन्वीक्षानयतत्त्वबोधश्च' वर्धमानोपाध्यायेन-कृता तथा वाचस्पतिमिश्रेणापि 'तात्पर्यटीका' 'न्यायसूचीनिबंधश्च' रचित इति नैतदाश्चर्यकरम् । सूत्रपाठनिर्णयविषये मतद्वयस्याखिलटीकाकारसंमतत्वात्तद्विषये प्रयत्नो व्यर्थ एवेति मन्यामहे । यद्यप्यस्मिन्नूतने संस्करणे खद्योतकारैः सूत्रनिर्णयः प्रदर्शितस्तथापि सर्वमतसाधारण्येन तन्निर्णयस्यासंभवादयं विषयोऽधुनापि परीक्ष्य एवेति केचित् ॥

## न्यायदर्शनभाष्यकर्तुर्महामुनेर्वात्स्यायनस्य चारित्रम् ।

न्यायदर्शनसूत्रेषु साक्षात् व्याख्यानानां बहुत्वेपि भाष्यस्यैव महत्त्वं वरीवर्तत इति नाव्यक्तं विदुषाम् । तत्र तावन्न्यायभाष्यकर्ता भगवान् वात्स्यायनः कस्मिन् देशे काले वाऽऽविर्भूत इति निर्णयोपि तादृगेव दुर्लभो यादृग् गौतमस्य । 'यदक्षपादप्रतिभ' इति वार्तिककारोक्त्या तस्याप्यार्षत्वमाहात्म्येनावगम्यते महर्षित्वम् । अस्यैव च मुनेः पक्षिलस्वामीति नामान्तरं वेदादिभाष्यकारेण माधवाचार्येण सर्वदर्शनसंग्रहेऽक्षपाददर्शने 'पक्षिलस्वामिना च सेयमान्वीक्षिकी विद्या प्रमाणादिभिः पदार्थैः प्रविभज्यमाने'त्याद्युक्त्या—तात्पर्यटीकामुखवाक्येन च 'व्याख्याते च पक्षिलस्वामिना किमपरवशिष्यत' इत्यादिना संभाव्यते । तथा मत्स्यपुराणादौ तच्चर्चाया दर्शनादस्य चिरन्तनमुनित्वं सिद्धमेव । अस्यापि भाष्यकारस्य समयनिर्धारणे बहु प्रयातत समयालोचकंमन्यैराधुनिकपाश्चात्यमतानुयायिभिः किन्तु तदप्युक्तरीत्या संशयास्पदमेवेति विवेचयिष्यामः ।

अत्र केचिदाहुः—'महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये' इति सूत्रभाष्ये 'अन्य'पदं बौद्धमतप्रद

र्शनपरम्, तथाच खीष्टाब्दारंभात् ४८७ वर्षेभ्यः पूर्वस्थितिकस्य बुद्धस्य पूर्वं न्यायभाष्यमिदं नासीदेवेति । तदसत् । वेदधर्मशास्त्रपुराणेषु आस्तिकनास्तिकभेदेन बहूनि मतानि दृश्यन्ते, भाष्यकारेण च कण्ठतो बौद्धनामानुल्लेखात् कथमवगम्यते बौद्धमतमेवेदमिति । यदि च ग्रन्थसंवादोऽत्र निदानं तर्हि आधुनिकमतसंवाददभिनवमेवेदं न्यायभाष्यमिति कुतो न स्यात् ।

अन्ये तु-दशावयववादी बौद्ध इति तत्पश्चाद्भावी भाष्यकार इति कल्पयन्ति । तदप्यनिर्मूलम् । यदि स बौद्धो भवेत्तदा भाष्यकारेण नैयायिकनाम्ना कदापि न गृहीतः स्यादपि तु वेदभाष्यकर्त्रैव नास्तिकादिनाम्नेति द्विवेदिमहोदयाः ।

यदि मतम्-आत्मवादानात्मवादास्तिकनास्तिकसांख्ययोगक्षणिकवादभूतचेतनवादादिमतानामुपन्यासेन भाष्यकर्ताऽर्वाचीन एवेति । तदोपनिषदादिषु तेषां मतानामुल्लेखदर्शनात् तेषामप्यर्वाचीनत्वं भवेत् किं पुनर्वात्स्यायनतद्भाष्ययोरिति ।

अन्ये आधुनिकतार्किकास्तु एवं तर्कयन्ति-न्यायभाष्यकर्ता वात्स्यायनश्चन्द्रगुप्तराज्ञो मन्त्री कौटिल्यश्चैक एव तेनैव च कृतमेतद्भाष्यं खीष्टाब्दारम्भात् पूर्वं ३२१ वर्षेभ्यः पुराणं कथमपि भवितुं नार्हतीति । अत्राहुर्विद्वांसः-त्रिकाण्डकोशटीकायां 'विष्णुगुप्तस्तु कौण्डिन्यः कौटिल्यो वा चाणक्यो द्रामिलः अंशुल इति पञ्च नामानि चाणक्यस्य । वात्स्यायनः मल्लिनागः पक्षिस्वामी पक्षिलमुनिर्वा इति त्रीणि वात्स्यायनमुनेरिति' व्याख्यातत्वात् चाणक्यभिन्न एव वात्स्यायन इति सिद्ध्यति । 'मल्लिनागपक्षिलस्वामिनावपीत्यत्र' त्रिकाण्डशेषकोशे समुच्चयार्थकापीशब्देनापि व्यक्तिभेदसिद्धेः । चन्द्रगुप्तसमयावधारणमप्यनेकेषामनेकमतप्रदर्शनेनाशक्यमेवेति ॥

परे तु तृतीयाध्यायोक्तसूत्रभाष्ययोर्वादप्रकरणान्येव न्यायभाष्यकर्तुः सूत्रकर्तुश्चार्वाचीनत्वसाधकानि तदीयपूर्वपक्षाणां बौद्धादिग्रन्थेभ्य एव उद्धारादिति प्राहुः ।

अत्रेदं तत्त्वसमालोचका वदन्ति-प्रथमस्तावदभाववादः-शून्यवाद इत्युच्यते भन्दतेन स खलु बौद्धानां वाद इति च । तत्रायं प्रष्टव्यः-किन्तावत् अयं वादो बौद्धग्रन्थोक्त एव नोपनिषदाद्युक्त इत्यत्र प्रमाणम्? किं वा असद्वादे किमपि बौद्धानां मुद्राङ्कनं यत

स्यैव नान्यस्येति भदन्तवाक्यमङ्गीकुर्मः । ईश्वरानिमित्तवादो- ऽप्युक्तरीत्या निषिद्धः सर्वदर्शनसङ्ग्रहस्य नकुलीपाशुपतदर्शनेऽप्युप- लभ्यत इति नास्याप्यर्वाचीनत्वसाधकत्वम् । स्वभाववादस्तु बाह्यमतस्य ब्रह्मजालसूत्रेऽपलभ्यमानोऽहेतुकवादे शून्यवादे च पर्य- वस्यति तत्र च दत्तमेवोत्तरम् । वस्तुतोऽयं वादः सर्वेष्वेव दर्शनेषु साक्षात्परंपरया वा पर्यवस्यत्येव किन्तूत्पत्त्यादिक्रमे नायं सर्वत्र स्थितो भवतीति पूर्वपक्षीयस्वभाववादोद्देशः । सर्वानित्यतावा- दस्तु क्षणिकवाद एव । एष च बौद्धानां प्राचीनो वादः । किन्तु वेदा- न्तदर्शनस्यापि ब्रह्माद्वैतज्ञानरूपमुक्तिहेतुप्रपञ्चमिथ्यात्वज्ञानरूपतया पारमार्थिकसत्त्वाभावे पर्यवसित इति । तथाच कथं बौद्धानामेवेति सर्गः । शाश्वतवादापरपर्यायः सर्वनित्यतावादस्तु सर्वास्तित्ववाद एव । स च सांख्ये 'सदेवेदमग्र आसीदि'त्याद्युपनिषदि चो- पलभ्यत एव अथावशिष्टः सर्वपृथक्त्ववादोपि पुञ्जवादेऽ- वयवावयविवादो वा बौद्धमतेन गृह्यते, पातंजले चायमेव 'गुण- समवायो द्रव्यम्' इत्यादिनोपात्त इति नैषां दर्शनाद्बौद्धानामनन्तरं सूत्रनिर्माणमिति वक्तुं शक्यम् ।

बौद्धसमयस्त्वेवं निर्धार्यते ऐतिहासिकवृत्तशोधने निपुणंमन्यैस्त- थाहि–ईसवीयवर्षारम्भात् ४८७ वर्षेभ्यः पूर्वं सुगताद्यन्वर्थनामविशि- ष्टो बुद्धो निर्वाणं गत इति । तत्र च प्रोफेसरबुलरमहाशयाः (Buhler) तथा डाक्टर फ्लीट (Fleet) महोदयाः पाषाणस्तम्भ- लिखिताशोकराजस्य शासने २५६ संख्यां दृष्ट्वा बुद्धमरणाशोक- जीवनसमययोरेतावद्वर्षपरिमितमन्तरमिति कल्पयन्ति । अपि च परमार्थाभिधबौद्धकृते वसुबन्धुचरितपुस्तके बुद्धदेवनिर्वाणानन्तरं १०० वर्षेभ्यः पश्चात् 'वृश्यप' 'विन्ध्यवस' नामानौ बौद्धावास्ताम् इति लेखदर्शनादेतौ ख्रीष्टाब्दारम्भात्परं पञ्चमशताब्द्यामेव वर्तमाना- विति उपात्तसमय एव बुद्धनिर्वाणस्येति प्रमाणान्तरमपि तत्रोपाद- दते । अपरे तु २५०० वर्षात्पूर्वं शाक्यसिंहस्य पुत्रो बुद्धगोतमो बभू- वेति निर्धारयन्ति । केचित्तु ख्रीष्टाब्दारम्भात् ६०० पूर्वं बुद्धावतार इति प्राहुः । यदि चैतादृशैः प्रमाणैर्वस्तुसत्त्वनिर्णयस्तदा किमपराद्धं वेद- धर्मशास्त्रपुराणैर्भारतरामायणादीतिहासैः सहृदयहृदयावगम्यैरिति न बुद्ध्यामहे ।

केचित्तु 'समानतन्त्रासिद्धः प्रतितन्त्रासिद्धान्त' इति १।१।२९ सूत्रव्याख्यानभाष्ये 'पुरुषकर्मादिनिमित्त' इत्यारभ्य–'असदुत्पद्यते उत्पन्नं निरुद्ध्यत इति योगानाम्' इत्यन्तेन व्याख्यानेन योगमतप्रदर्शनात्, तथा 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध' इति १।२।६ सूत्रव्याख्यायां भाष्योक्तस्य 'यथा सोऽयं विकारो व्यक्तेरपैति नित्यत्वप्रतिषेधात् अपेतोऽप्यस्ति विनाशप्रतिषेधादिति' ग्रन्थस्य पातञ्जलयोगदर्शनस्य विभूतिपादे 'एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः' इति सूत्रे व्याख्यातानां 'तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात् अपेतमप्यस्ति विनाशप्रतिषेधादिति' पंक्तीनामक्षरशः साम्यदर्शनात्पतञ्जलिमतनिदर्शक एवायं न्यायवात्स्यायनभाष्यकर्ता तत्पश्चात्कालीन इति सिध्यति। पतञ्जलिश्च स्वग्रंथे मौर्यनामग्रहणात् मौर्यसमकालीन इत्यनुमीयते मौर्यसमयस्तु ख्रीष्टसमयात् १४० वर्षेभ्यः पूर्वकालीन इति वदन्ति।

तदप्यसमीचीनम्। योगानामित्यनेन पतञ्जलेरेव ग्रहणं न शिवसंहिताशिवस्वरोदयादिकर्तुः शिवस्येत्यत्र प्रमाणाभावात्। योगवासिष्ठादिकर्तुर्वसिष्ठस्य वा कुतोऽग्रहणमेतेष्वप्युक्तविषयाणामुक्तिवैचित्र्येण प्रतिपादनात्। मौर्यसमयनिर्धारणस्य वाऽसम्भवाच्चेति विद्वांसः। एतेनानुमानतो वात्स्यायनः ख्रीष्टाब्दारम्भात् पूर्वं द्वितीयशताब्द्यां तृतीयशताब्द्यां वाऽऽसीदित्यपि प्रत्युक्तम्। मतान्तरेणानेकेषां समयानां सम्भवेनैकस्य निर्धारयितुमशक्यत्वात्। यत्तु सूत्रकारभाष्यकारयोर्मध्ये त्रिशताब्दमितकालस्य व्यवधानं चतुःशताब्दपरिमितस्य वेति मतं तदपि कल्पनामात्रम्। इत्थं च भाष्यकारस्यार्वाचीनत्वावगमकतया गृहीतानां युक्तीनामसत्कल्पत्वात् महर्षित्वसाधकप्रमाणसद्भावाच्च तस्य प्राचीनमहर्षिसमकालीनत्वं सिद्धमेवेति राद्धान्तः॥

## भाष्यचन्द्रकर्तुः खद्योतकारस्य च परिचयः॥

अस्य खलु न्यायवात्स्यायनभाष्यव्याख्यानस्य कर्ता रघूत्तमः। स च कदा कस्मिन् देशेऽभूदिति जिज्ञासानिवर्तकं किमपि प्रमाणं नोपलभ्यते। किन्तूपलब्धस्यैकमात्रस्यास्य तृतीयाध्यायद्वितीयाह्निकस्थसप्तदशसूत्रपर्यन्तस्यासम्पूर्णस्य पुस्तकस्य मैथिलाक्षरेषूपलम्भादनुमीयते मिथिलादेशोद्भवोऽयं पण्डितप्रवरो भाष्यव्या-

ख्यानं कुर्वन्नेवास्तमित इति । पुस्तकान्तरं च नोपलब्धं न श्रुतं वान्यत्र । व्याख्यानशैल्यां व्याकरणविषयेऽस्य व्याख्यातुः बहुधा प्रयासदर्शनाद्वार्तिकमृते दार्शनिकपदार्थानां कुत्रापि स्वयं विवेचनाभावाच्च रघूत्तमपण्डितो न दार्शनिकतत्त्ववेत्तेत्यनुमीयते । रघूत्तमसमयविषये तु तत्कृतव्याख्याने भाष्यवार्तिकपंक्तीनामनेकत्रोद्धारदर्शनात्तात्पर्यसंवादस्य कुत्राप्यदर्शनाच्च न्यायवार्तिककर्तुर्भारद्वाजसमयादुत्तरकालवर्ती वाचस्पतिसमकालीनस्तत्पश्चात्कालीनो वा भाष्यचन्द्रकार इति कल्प्यते ।

भाष्यचन्द्रपूर्तिकरखद्योतटीकाकारास्तु महामहोपाध्याया एम. ए. डाक्टर इत्यादि गवर्नमेण्टप्राप्तविविधबिरुदावलीभाजो मिथिलादेशकुलमण्डना गङ्गानाथझामहोदया अधीतांग्लसमस्तविद्या अपि संस्कृतविद्यापारदृश्वान इति तेषां दुरूहन्यायदर्शनव्याख्यानप्रतिभानैर्मल्येनैव व्यक्तीभविष्यति समस्तभुवनव्यापिनां पण्डितानाम् । तैश्च कृतं व्याख्यानं सर्वेषां न्यायदर्शनरसिकाणामुपकारकं भविष्यतीत्यलं दिवाकरवत्सर्वत्र द्योतमानानां तेषां मादृशवागगोचरेण प्रशंसाप्रपञ्चेन ॥

## न्यायदर्शनविषयसंक्षेपः ।

अस्मिन्खलु प्रथिते दर्शने समानतन्त्ररीत्या तत्त्वज्ञानोदयात् निःश्रेयसमिति प्रतिपादितम् 'प्रमाणे'त्यादिशास्त्रारम्भसूत्रे । तत्र तावत्त्रिविधः शास्त्रनिरूपणप्रकारः-उद्देशलक्षणपरीक्षात्मकः । तत्र प्रथमाध्यायस्य प्रथमाह्निके प्रेक्षावत्प्रवृत्त्यङ्गानामभिधेयप्रयोजनसम्बन्धानां निरूपणान्ते प्रमाणादिशोडषपदार्थोद्देशानन्तरं 'मानाधीना मेयसिद्धि'रिति न्यायेन प्रथमोद्दिष्टस्य प्रमाणस्य समाख्याशब्दलब्धसामान्यलक्षणपूर्वकं प्रत्यक्षानुमानोपमानशब्दानां तद्विशेषाणां लक्षणमभिहितम् । एतेन 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति' प्रतितन्त्रसिद्धान्तसिद्धमीश्वरप्रामाण्यं सङ्गृहीतमिति माधवाचार्याः । तथा चोक्तमुदयनाचार्यैः—

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेषादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलाङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥ इति ।

ततः—आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गाख्यं द्वादशविधं प्रमेयजातं प्रतिपादितम् । तत्रात्मा बुद्ध्याद्यनुमेयः । चेष्टाद्याश्रयं शरीरम् । घ्राणादीनि भूतप्रकृतीनीन्द्रियाणि । गन्धादयः पृथिव्यादिगुणा अर्थाः । बुद्धिर्ज्ञानापरपर्याय आत्मगुणो न तु सांख्यानामिव प्रकृतिकार्यं द्रव्यम् । ज्ञानायौगपद्यहेतुरन्तःकरणं सुखाद्युपलब्धिसाधनं समानतन्त्रसिद्धेन्द्रियभावं मनः । प्रवृत्तिर्धर्माधर्मौ । दोषा रागद्वेषमोहाख्याः संसारहेतवः । फलं प्रवृत्त्युद्देश्यं सुखं दुःखाभावश्च । दुःखं प्रतिकूलवेदनीयं प्राणभृन्मात्रस्य । अपवर्गस्सर्वेषामभीष्टतयाऽऽत्यन्तिकी दुःखनिवृत्तिर्निःश्रेयसापरपर्याया तत्त्वज्ञानसाध्या । ननु तत्त्वज्ञानोत्तरमेवैषा जायते कालान्तरेण वा ? नाद्यः तस्यादर्शनात्, जायेत वा सर्वेषां न्यायदर्शनाध्यायिनाम् । न द्वितीयः कालान्तरेण तु जायमानाप्यनेनैव जायते जायत एवेत्यत्रापि प्रमाणाभावात् इति । मैवम् प्रमाणादिपदार्थतत्त्वज्ञानाद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरस्याभावे तदनन्तरस्याभावादपवर्ग इति । तत्क्रमस्तु—अनात्मनि शरीरादौ आत्मबुद्धिरूपमिथ्याज्ञानात्तदनुकूलेषु रागः तत्प्रतिकूलेषु च द्वेषः प्रियेषु च मोहः । परस्परानुबन्धित्वाच्च रागादीनां मूढो रज्यति रक्तो मुह्यति मूढः कुप्यति कुपितो मुह्यति च । एवं जातैर्दोषैः प्रेरितो जन्तुः प्रतिषिद्धानि हिंसादीनि कायिकानि अनृतादीनि वाचिकानि परद्रोहादीनि मानसानि कर्माणि करोति । सैषा पापा प्रवृत्तिरधर्ममावहति । एवं दानरक्षणादीनि शारीराणि हितसत्यादीनि वाचिकानि अहिंसादीनि मानसानि च कर्माणि यत्करोति सैषा पुण्या प्रवृत्तिर्धर्ममावहतीत्युभयविधा प्रवृत्तिः । ततश्च तदनुरूपं प्रशस्तं गर्ह्यं वा जन्म शरीरादिसम्बन्धः । तस्मिंश्च सति उक्तरूपं वासनात्मकं दुःखं जायते । एते च मिथ्याज्ञानादयो दुःखान्ता अविच्छेदेन प्रवर्तमानाः संसारः । यदा चायं कश्चिद्विरलः प्राणिभृतां सुकृतपरिपाकवशादाचार्योपदेशेन शास्त्रमननदार्ढ्येन वा सर्वमिदं दुःखायतनं दुःखानुषक्तं च पश्यति तदा सर्वं हेयत्वेन बुद्ध्वा संसारनिर्वर्तकाविद्यानिवृत्त्युपायभूततत्त्वज्ञानं शास्त्रोक्तप्रमेयवर्गज्ञानात्प्राप्नोति । तेन चानात्मादावनात्मादिरूपेणोक्तविधमिथ्याज्ञाननाशे दोषापाये प्रवृत्तिरपैति प्रवृत्त्यपाये च जन्मापायस्तेन चात्यन्तं दुःखनिवृत्तिरिति । सैव चात्यन्तिकी दुःखनिवृ-

त्तिरपवर्गो निःश्रेयसमिति चोच्यते। आत्यन्तिकत्वं च निवर्त्यसजातीयस्य पुनरनुत्पादः। सर्वेषाञ्च मोक्षवादिनामपवर्गदशायामात्यन्तिकी दुःखनिवृत्तिरस्त्येवेति सर्वतन्त्रसिद्धान्तसिद्धोऽयमर्थो घण्टापथवर्ती, न ह्यप्रवृत्तस्य दुःखं प्राप्यत इति कश्चिन्मन्यते। तथाहि माध्यमिकोऽपि तावदात्मोच्छेदो मोक्ष इति वदन् दुःखोच्छेदं मुक्तिदशायामङ्गीकरोत्येव। 'मुक्तिदशायां शरीरादिवद्दुःखहेतुत्वादात्माप्युच्छेद्य' इति तन्मतं तु न सम्यक्—विकल्पानुपपत्तेः। किमात्मा ज्ञानसन्तानो विवक्षितस्तदतिरिक्तो वा? प्रथमे नास्माकमापत्तिस्तादृशात्मनोऽस्माभिरगृहीतत्वात्। द्वितीये तस्य नित्यत्वेऽशक्यैव तन्निवृत्तिः, प्रवृत्त्यनुपपत्तिश्च न खलु कश्चिदपि जन्तुरात्मनः प्रियतमस्योच्छेदाय प्रवर्तमानो दृष्टः 'आत्मनस्तु कामाय सर्वं प्रियं भवतीति श्रुतेः' ॥

'आवरणमोक्षो मोक्ष' इति जैनसंमतेऽपि मार्गो न निरर्गलः। तत्र तावदयं प्रष्टव्यः? किमावरणं धर्माधर्मादिभ्रान्तिः अथ देह एव? आद्ये इष्टापत्तिरेव। द्वितीये किमयमात्मा पञ्जरमध्यवर्ती शुक इव मूर्तोऽमूर्तो वा? मूर्तोऽपि सावयवो वा निरवयवो वा? आद्ये सावयवत्वेनानित्यत्वापत्तौ कृतप्रणाशाकृताभ्यागमप्रसङ्गपातात्। द्वितीये निरवयत्वेन मूर्तत्वात्परमाणुलक्षणाक्रान्तत्वेनातीन्द्रियत्वापातस्तद्धर्माणामिति ॥

'पारतन्त्र्यं बन्धः स्वातन्त्र्यं मोक्ष' इति चार्वाकमतेऽपि स्वातन्त्र्यं दुःखनिवृत्तिश्चेदस्माकं का क्षतिः। ऐश्वर्यविशेषश्चेत्सातिशयतया सदृशातिशयाच्च न सर्वेषामिष्टः स्यात्। प्रकृतिपुरुषान्यताख्यातौ प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति सांख्यमतेऽपि दुःखोच्छेदोऽभ्युपेयते एव। विवेकज्ञानं तूक्तविधं पुरुषाश्रयं वेत्यन्यदेतत् ॥

'नित्यनिरतिशयसुखाभिव्यक्तिर्मुक्तिः' इति भट्टसर्वज्ञादिमतेऽपि दुःखनिवृत्तिरिष्टैव नित्यसुखं तु नैयायिकैर्न मन्यत इति विशेषः। आरोग्यागमे सुखी संवृत्तोऽहमितिवन्मुक्तिकाले सुखित्वप्रत्ययात्। ननु श्रुतिस्तत्र प्रमाणमिति चेन्न। योग्यानुपलब्धिबाधिते तदनवकाशात् अवकाशे वा ग्रावप्लवे तथाभावप्रसङ्गात्, 'मुच्लृ मोचने' इत्यस्माद्धातोर्निष्पन्नस्य मुक्तिपदार्थस्य दुःखबन्धनविश्लेषरूपस्यैव मुख्यत्वाच्चेति संक्षेपः।

प्रमेयानन्तरं अनवधारणात्मकज्ञानरूपः संशयः साधारणासाधारणधर्मविप्रतिपत्तिलक्षणनिमित्तभेदात्त्रिविधः कथितः। ततो दृष्टादृष्टभेदेन द्विविधं पुरुषप्रवृत्त्युद्देश्यरूपं प्रयोजनम्–साधर्म्यवैधर्म्यभेदाद्द्विप्रकारो व्याप्तिसंवेदनभूमिर्दृष्टान्तः–सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमभेदाच्चतुर्विधः सिद्धान्तः—प्रतिज्ञाहेतूदाहरणोपनयनिगमनभेदात्पञ्चविधः परार्थानुमानवाक्यैकदेशरूपोऽवयवः–व्याघातात्माश्रयेतरेतराश्रयचक्रकानवस्थाप्रतिबन्दिकल्पनालाघवकल्पनागौरवोत्सर्गापवादवैजात्यभेदादेकादशविधो व्याप्यारोपेण व्यापकारोपस्तर्कोऽ–र्थावधारणात्मको निर्णयश्च प्रतिपादितः। प्रथमस्य द्वितीयाह्निके तु तत्त्वनिर्णयफलकः कथाविशेषो वादः(१)–उभयसाधनवती विजिगीषुकथा जल्पः(२)–स्वपक्षस्थापनाहीनः कथाविशेषो वितण्डा(३)चेति कथात्रयं प्रतिपाद्य सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकालभेदात्पञ्चविधो हेतुत्वेनाभिमतोऽप्यसाधको हेत्वाभासः कथितः। ततोऽभिधानतात्पर्योपचारव्यत्ययप्रवृत्तिभेदात्त्रिविधं शब्दावृत्तिव्यत्ययेन प्रतिषेधहेतुश्छलम्—साधर्म्यवैधर्म्यादिभेदाच्चतुर्विंशतिविधा स्वव्याघातकोत्तररूपा जातिः–पराजयनिमित्तं प्रतिज्ञाहान्यादिभेदाद्द्वाविंशतिप्रकारं निग्रहस्थानं चेति सप्तपदार्थलक्षणनिरूपणं कृतम्॥

द्वितीयाध्यायस्य प्रथमाह्निके संशयपरीक्षणं प्रमाणचतुष्ट्याप्रामाण्यशङ्कानिराकरणं अवयविपरीक्षणं च। द्वितीये तु अर्थापत्त्यादेरन्तर्भावकथनं शब्दानित्यत्वपरीक्षणं शब्दपरिणामनिरूपणं शब्दशक्तिविचारश्चेति निरूपितम्। तृतीयाध्यायस्य प्रथमे आह्निके आत्मशरीरेन्द्रियार्थपरीक्षा–द्वितीये बुद्धिमनसोः परीक्षा वर्णिता। प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गपरीक्षणं शून्यतोपादानादिवादखण्डनं च चतुर्थाध्यायस्य प्रथमाह्निकेन, द्वितीयेन तु दोषनिमित्तत्वनिरूपणम् अवयवव्यादिनिरूपणं च कृतम्। पञ्चमाध्यायस्य प्रथमे आह्निके साधर्म्यवैधर्म्योत्कर्षापकर्षवर्ण्यावर्ण्यविकल्पसाध्यप्राप्त्यप्राप्तिप्रसङ्गप्रतिदृष्टान्तानुत्पत्तिसंशयप्रकरणहेत्वर्थापत्त्यविशेषोपपत्त्युपलब्ध्यनुपलब्धिनित्यानित्यकार्यसमभेदाच्चतुर्विंशतिविधजातिभेदनिरूपणम्, द्वितीये प्रतिज्ञाहानिप्रतिज्ञान्तरप्रतिज्ञाविरोधप्रतिज्ञासंन्यासहेत्वन्तरार्थान्तरनिरर्थकाविज्ञातार्थापार्थकाप्राप्तकालन्यूनाधिकपुनरुक्ता-

